* ओ३म् *

# व्याकरण-महाभाष्यम्

[ प्रदीप-उद्द्योत-विमर्शैः समलङ्कृतम् ]

## चतुर्थो भागः

( पञ्चमषष्ठाध्यायात्मकः )

प्रकाशकः—
हरयाणा-साहित्य-संस्थानम्
गुरुकुल झज्जर ( रोहतक )






* ओ३म् *

श्रीभगवत्पतञ्जलिविरचितं

# व्याकरण-महाभाष्यम्

[ श्रीकैय्यटकृतप्रदीपेन नागोजीभट्टकृतेन भाष्यप्रदीपोद्द्योतेन च विभूषितम् ]

तस्याऽयं

## चतुर्थो भागः

( पञ्चम-षष्ठाऽध्यायात्मकः )

स च—

परमतपस्विनां श्रीमताम्भगवान्देवाचार्याणामन्तेवासिना महाविद्यालय-गुरुकुलझज्जरस्योपाचार्येण वेद-व्याकरण-साहित्य-दर्शन-आयुर्वेदाचार्येण पण्डितवेदव्रतेन वर्णिना सम्पादितो 'विमर्श'टिप्पण्या च संयोजितः ।

प्रकाशकः—

हरयाणा-साहित्य-संस्थानम्
गुरुकुल झज्जर ( रोहतक )




| | | |
|---|---|---|
| प्रथमं संस्करणम् | २०२० विक्रमाब्दे | मूल्यम् |
| द्विसहस्रम् | १८८५ शकाब्दे | |
| २००० | १९६३ खिस्ताब्दे | |

प्रकाशकः—

हरयाणा-साहित्य-संस्थानम्

पो० गुरुकुल झज्जर, जि० रोहतक

सम्पादकः—

श्री वेदव्रतः स्नातकः सिद्धान्तशिरोमणिः

वेद-व्याकरण-साहित्य-दर्शन-आयुर्वेदाचार्यः

( उपाचार्यः—महाविद्यालयगुरुकुलझज्जरस्य )

मुद्रकः—

श्रीयुत्पण्डितभगवान्स्वरूपो न्यायभूषणम्

प्रबन्धकर्त्ता

वैदिक यन्त्रालय, अजमेर ( राजस्थान )




* ओ३म् *

श्रीभगवत्पतञ्जलिविरचितं

# व्याकरण-महाभाष्यम्

[ प्रदीप-उद्द्योत-विमर्शैः समलङ्कृतम् ]

तस्याऽयं—

## चतुर्थो भागः

( पञ्चम-षष्ठाऽध्यायात्मकः )

### प्राक् क्रीताच्छः ॥ ५ । १ । १ ॥

प्राग्वचनं किमर्थम् ?

**प्राग्वचन उक्तम् ॥ १ ॥**

किमुक्तम् ? तत्र† तावदुक्तम्—"प्राग्वचनं सकृद्विधानार्थमधिकारात्सिद्धमिति चेदपवादविषयेऽप्रसङ्गः" इति । इहापि प्राग्वचनं क्रियते सकृद्विधानार्थम् । सकृद्विहितः प्रत्ययो विहितो यथा स्यात्, योगे योगे तस्य ग्रहणं मा कार्षमिति ।

प्रदीपः—प्राक्क्रीताच्छः । प्राग्वचनमिति । छ इत्येवाधिकारोऽस्त्विति प्रश्नः । प्राग्वचन उक्तमिति । अस्मिन् प्राग्वचने यद्वक्तव्यं तदन्यत्रोक्तम् । न्यायस्य तुल्यत्वात्—'प्राग्दीव्यतोऽ' णित्यत्र यदुक्तं तदेवेहाऽपि द्रष्टव्यमित्यर्थः । सकृद्विधानार्थमिति । प्राक्क्रीताद्येऽर्थास्तानपेक्ष्य सकृदेवाऽनेन तेष्वर्थेषु च्छस्य विधानं यथा स्यादित्यर्थः । विहितो यथा स्यादिति । पुनः श्रुत्या

उद्द्योतः—प्राक्क्री । ननु प्राक्पदाऽभावे'क्रीता'दित्यस्याऽपि व्यर्थत्वेन भाष्ये 'प्राग्वचनं किमर्थं'मिति तन्मात्रोल्लेखे न बीजमिति चेन्न, अवयवाद्येपद्वाराऽवधिनिर्देशाद्येपे एव तात्पर्यादित्याह—इत्येवेति । ननु 'छ' इत्येव नानावाक्यत्वाऽभावात्सकृद्विधानं सिद्धमेवेत्यत आह—प्राक्क्रीतादिति । ननु विहितो विहित इति पुनरुक्तमत आह—पुनरिति । प्रकर्षमेव दर्शयति—सुष्ठ्विति । नन्वधिकारत्वेऽपि कियद्दूरम-

† ४ । १ । ८३ वा० १—२

नैतदस्ति प्रयोजनम् । अधिकारादप्येतत्सिद्धम् 'अधिकारः प्रतियोगं तस्याऽनिर्देशार्थ' इति* योगे योग उपतिष्ठते ।

'अधिकारात्सिद्धमिति चेदपादविषये छप्रसङ्गः' । अधिकारात्सिद्धमिति चेदपवादविषये छः प्राप्नोति । 'उगवादिभ्यो यत्' [ ५ । १ । २ ] 'छश्चे'ति च्छोऽपि प्राप्नोति । तस्मात्प्राग्वचनं कर्त्तव्यम् ।

अथ क्रियमाणेऽपि प्राग्वचने कथमिदं विज्ञायते—प्राक्क्रीताद्याः प्रकृतयः, आहोस्वित्प्राक्क्रीताद्येऽर्था इति ? किञ्चाऽतः ? यदि विज्ञायते प्राक्क्रीताद्याः प्रकृतय इति, स एव दोषः—'अपवादविषये च्छप्रसङ्ग' इति । अथ विज्ञायते—'प्राक्क्रीताद्येऽर्था' इति न दोषो भवति । समानेऽर्थे प्रकृतिविशेषादुत्पद्यमानो यच्छं बाधिष्यते† । यथा न दोषस्तथाऽस्तु ।

प्र०—प्रकर्षप्रतिपत्तिः—सुष्ठु—लाघवेन—विहितो यथा स्यादित्यर्थः । योगे योग इति । असति सकृद्विधाने 'तस्मै हितम्' 'छ' इत्येवं प्रत्यर्थनिर्देशसूत्रं छो वक्तव्यस्तथा च शास्त्रगौरवप्रसङ्गः । अधिकारादिति । 'छ' इत्येतावदेव सूत्रमस्तु, नार्थः 'प्राक्क्रीता' दित्यनेन । यथैव प्रत्ययादयोऽधिकारा अवधिविशेषोपादानमन्तरेणेष्टं साधयन्त्येवमयमपि साधयिष्यतीत्यर्थः । प्रतियोगमित्यनेन लाघवार्थत्वमधिकारस्य दर्शयति । 'योगे योग उपतिष्ठते' इत्यनेन त्वधिकारस्य व्यापारः प्रदर्श्यते ।

उगवादिभ्यो यच्छश्चेतीति । नदीस्रोतोन्यायेन प्रतिसूत्रमधिकारस्योपस्थानादुत्सर्गापवादयोः सन्निधानाऽविशेषात्तव्यत्तव्याऽनीयरामिव विकल्पः स्यादित्यर्थः ।

केचिदाहुः—'उगवादिभ्यो य'दित्ययमप्यधिकारस्ततो द्वयोरपि पारार्थ्यात्परस्पराऽसम्बन्धादुपलक्षणमेतत् । इदन्तु प्रदर्शनीयं—'शरीरावयवाद्यच्छश्चे'ति ।

स एव दोष इति । 'तस्मै हित'मित्यादिष्वर्थनिर्देशेषु 'ङ्याप्प्रातिपदिका'दिति सामान्यप्रकृतिरधिकारात्सन्निहिता । 'शरीरावयवाद्य'दित्यादौ तु विशेषप्रकृतिस्तत्र प्राक्क्रीतात्प्रकृतिभ्यो विधीयमानश्छो विशेषप्रकृतेरपि प्राप्नोतीत्यर्थः । समानेऽर्थे इति । 'तस्मै हित'मित्यस्मिन्नर्थे

उ०—धिकार इत्येतज्ज्ञानायाऽवधिनिर्देशाऽवश्यकत्वे किं तत्र लाघवमत आह—छ इतीति । ननु 'प्रतियोग'-मिति 'योगे योगे'इति च पुनरुक्तमत आह—प्रतियोगमिति । व्यापार इति । उत्तरत्रोपस्थितिरूपः । नन्वत्र यतैव निराकाङ्क्षत्वा'च्छ' इत्यस्याऽसम्बन्धोऽत आह—नदीति । एतेन 'श्रौतसम्बन्धेन निराकाङ्क्षत्वाप्रकरणलभ्यस्य कथं सम्बन्ध' इत्यपास्तम् । स्वरितत्वरूपयत्नेन तस्याऽपि सम्बन्धसम्भवादिति भावः । केचिदाहुरिति । संज्ञापरिभाषयोः परार्थयोः परस्परसम्बन्धदर्शनादत्राऽपि स्यादित्यत्राऽरुचिः । ननु 'तस्मै

* १ । ३ । ११ वा० १ † शरीरावयवाद्यत्; तस्मै हितम् ५ । १ । ६; ५






'प्राक्क्रीताद्येऽर्था' इति विज्ञायते । कुत एतत् ? तथा ह्ययं प्राधान्येनाऽर्थं प्रतिनिर्दिशति । इतरथा हि बह्वयस्तत्र प्रकृतयः पठ्यन्ते ततो यां काञ्चिदेव प्रकृतिमवधित्वेनोपाददीत‡ ।

अथवा पुनरस्तु 'प्राक्क्रीताद्याः प्रकृतय'इति । ननु चोक्तमपवादविषये च्छप्रसङ्ग इति । 'न वा क्वचिद्वावचनात्' । न वैष दोषः । किं कारणम् ? क्वचिद्वावचनात् । यदयं क्वचिद्वावचनं करोति—'विभाषा हविरपूपादिभ्यः' [ ५ । १ । ४ ] इति, तज्ज्ञापयत्याचार्यो—'नापवादविषये छो भवती'ति ।

यद्येवं, नार्थः प्राग्वचनेन, अधिकारात्सिद्धम् । ननु चोक्तमधिकारात्सिद्धमिति चेदपवादविषये च्छप्रसङ्ग इति । परिहृतमेतत्—न वा क्वचिद्वावचनादिति ।

अथ किमर्थमियानवधिर्गृह्यते न 'प्राक्ठञ'× इत्येवोच्येत ? एतज्ज्ञापयत्या-

प्र०—शरीरावयवाद्यद्विधीयमानः प्रकृत्यन्तरे सावकाशं छं बाधते तक्रमिव कौण्डिन्ये दधीत्यर्थः । तथा हीति । यथाजातीयोऽवधिस्तथाजातीयेनावधिमता भाव्यम् । यथा 'मासात्पर' इत्युक्ते कालः प्रतीयते, 'ग्रामात्पूर्व' इत्युक्ते देशः । 'अलोन्त्यात्पूर्व' इत्यलेव । यां कांचिदिति । 'आ परिखायाश्छ'इत्येवं वाच्यं स्यादित्यर्थः ।

अथवेति—अभ्युपगम्य वादोऽयम् । न स्वयं पक्षो युक्तोऽवधिविजातीयत्वात् । नन्वस्मिन्पक्षे छस्यार्थो न निर्दिष्टः स्यात्ततश्च स्वार्थे प्राप्नोति । नैष दोषः । 'तस्मै हित'मित्यादीनामर्थनिर्देशानां प्रत्ययं प्रति साकाङ्क्षत्वात्सन्निहितेन च्छेन निराकाङ्क्षीकरणादर्थस्य लाभात्स्वार्थे प्रत्ययाऽप्रसङ्गात् । वावचनादिति । विकल्पवचनादित्यर्थः । अथेति । ठञः परोऽर्थः प्रकृतिर्वा प्राक्क्रीतान्नास्तीति लाघवार्थं 'प्राक्ठञ'इति वक्तव्यम् । 'प्राग्वतेष्ठ'ञिति प्रात्यासन्नष्ठञ्ग्रहीष्यत इत्यर्थः । अर्थेष्विति । तेन ज्ञापकाश्रयणमन्तरेण न्यायेनापवादविषये छस्याऽप्रवृत्तिः सिध्यति ।

उ०—हित'मित्यादौ सामान्यप्रकृतिविषये चरितार्थश्छो विशेषप्रकृतिभ्यस्तैस्तैर्बाध्येतेत्यत आह—तस्मै इत्यादि । ननु 'क्रीता'दित्यस्य प्राग्विशेषणत्वेन कथं प्राधान्यमत आह—यथेति । प्राधान्येनेत्यस्याऽवधित्वेनेत्यर्थ इति भावः । स ह्यवधिमदपेक्षया प्रधानं, तत्प्रतिपादनतात्पर्येणाऽवधिनिर्देशादिति बोध्यम् । नन्वस्मिन्पक्ष इति । प्रकृतियुक्ते सूत्रेऽर्थानिर्देशादित्यभिमानः ।

ननु 'वा वचन'मित्यस्य 'विभाषा हवि'रित्युदाहरणमसङ्गतमत आह—विकल्पेति । वाशब्दोऽर्थपर इति भावः । नन्वेवं 'लोकसर्वलोके'ति ठञोऽप्यवधित्वं सम्भाव्येतेत्यत आह—प्राग्वतेरिति । न्यायेनेति । न्यायश्च यच्छयोः सामान्यविशेषभाव एव ।

अवधिमतोऽभावादिति । सर्वत्राऽन्वयप्रयोजकस्येत्यर्थः । प्रकृतयो वेति । वाशब्दश्चाऽर्थे ।

‡ परिखाया ढञ् ५ । १ । १७ १—'आचार्यः' इति क्वचिन्न । × प्राग्वतेष्ठञ् ५ । १ । १८

चार्यः—'अर्थेष्वयं भवती'ति । किमेतस्य ज्ञापने प्रयोजनम् ? समानेऽर्थे प्रकृतिविशेषादुत्पद्यमानो यच्छं बाधते ॥ १ ॥

## उगवादिभ्यो यत् ॥ ५ । १ । २ ॥

### यञ्ञ्यावञः पूर्वविप्रतिषिद्धं सनङ्गूपानहौ प्रयोजनम् ॥ १ ॥

यञ्ञ्यौ भवतोऽञः पूर्वविप्रतिषेधेन* । किं प्रयोजनम् ? 'सनङ्गूपानहौ प्रयोजनम्' । यतोऽवकाशः—शङ्कव्यं दारु, पिचव्यः कार्प्पासः । अञोऽवकाशः—वार्ध्रम् वारत्रम् । सनङ्गुर्नाम चर्मविकारस्तस्मादुभयं प्राप्नोति—सनङ्गव्यं चर्म । ञ्यस्यावकाशः—औपानह्यं दारु । अञः स एव । उपानन्नाम चर्मविकारस्तस्मादुभयं प्राप्नोति औपानह्यं चर्म [ यञ्ञ्यौ भवतः पूर्वविप्रतिषेधेन ][1] ।

### ढञ्च ॥ २ ॥

ढञ्+ भवत्यञः पूर्वविप्रतिषेधेन । ढञोऽवकाशः—छादिषेयं तृणम् । अञः स एव । छदिर्नाम चर्मविकारस्तस्मादुभयं प्राप्नोति—छादिषेयं चर्म । ढञ्भवति पूर्वविप्रतिषेधेन ।

प्र०—'प्राक्ठञ'इति तूच्यमाने तुल्यजातीयस्याऽवधिमतोऽभावादर्थाः प्रकृतयो वाऽवधिमत्त्वेन संगृह्येरन् ॥ १ ॥

उगवा । यञ्ञ्याविति । छापवादानां परविप्रतिषेधबाधनायेदम् । छदिर्नामेति । छादनं छदिस्तच्च चर्मविकारोऽपि सम्भवति । अत्राहुः—छदिरुपानहोः प्रतिपदं प्रत्ययविधानादयुक्तो विप्रतिषेधः । तथा चोक्तम्—'परनित्यान्तरङ्गप्रतिपदविधयो विरोधिसन्निपाते तेषां मिथः प्रसङ्गे परबलीयस्त्व'मिति, नार्थः पूर्वविप्रतिषेधेनेति चिन्त्यमेतत् । हविरपूपादिभ्य इति

उ०—प्रकृतिनाम्नाऽवधित्वे यच्छयोः समावेशः स्यात् । तद्वारणायोक्तज्ञापकाश्रयणे गौरवं स्यादिति तत्परिहाराय सूत्रकृताऽर्थोवधित्वेनाऽऽश्रित इति भावः । अनेन च भाष्येण 'अथवा पुन'रित्यस्य प्रौढिवादत्वं सूचितम् ॥ १ ॥

उगवादि वार्ध्रे—चर्मणोऽञ् । औपानह्ये—'ऋषभोपानहोर्ञ्यः' । नन्वञश्छाऽपवादत्वाद्बाध्यसामान्यचिन्तया यतोऽप्यपवादत्वादयुक्तो विप्रतिषेधोऽत आह—छाऽपवादानामिति । येन नाप्राप्तिन्यायेन छापवादत्वमेव न तु यदपवादत्वम् । यदपि छापवाद इति अपवादविप्रतिषेध इति भावः । छादनमिति—करणे ल्युट् । छदिरित्यत्र 'इस्मन्त्रे'ति ह्रस्वः । तच्च तृणविकारः, क्वचिच्चर्मविकारोऽपि । अत्राहुरिति । अत्राऽरुचिबीजं निरवकाशत्वे सत्येव प्रतिपदविधित्वं बाधकत्वे प्रयोजकं नाऽन्यथेति । ननु हविर्विषयस्यैवोदाहरणादपूपादिग्रहणं व्यर्थमत आह—सूत्रपाठेति । असम्भवोऽपि तद्विषये विप्रतिषेधस्येत्याह—न हीति ।

* उगवादिभ्यो यत्; ऋषभोपानहोर्ञ्यः; चर्म्मणोऽञ् ५ । १ । २; १४; १५

१ कोष्ठान्तर्गतः पाठः क्वाचित्कः ।

\+ छदिरुपधिबलेर्ढञ् ५ । १ । १३

## हविरपूपादिभ्यो विभाषाया यत् ॥ ३ ॥

हविरपूपादिभ्यो विभाषाया† यद्भवति पूर्वविप्रतिषेधेन । हविरपूपपादिभ्यो विभाषाया अवकाशः—आमिक्ष्यम् आमिक्षीयम् । पुरोडाश्यम् पुरोडाशीयम् । यतः स एव । इहोभयं प्राप्नोति—चरव्यास्तण्डुलाः । यद्भवति पूर्वविप्रतिषेधेन ।

## अन्नविकारेभ्यश्च ॥ ४ ॥

अन्नविकारेभ्यश्च‡ विभाषाया यद्भवति पूर्वविप्रतिषेधेन । अन्नविकारेभ्यो विभाषाया अवकाशः—सुर्याः सुरीयाः । यतः स एव । इहोभयं प्राप्नोति—सक्तव्या धाना इति । यद्भवति पूर्वविप्रतिषेधेन ।

स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ? न वक्तव्यः । इष्टवाची परशब्दः× । विप्रतिषेधे परं यदिष्टं तद्भवती'ति ॥ अयं नाभिशब्दो गवादिषु पठ्यते । तत्रैवोच्यते—'नाभि नभञ्चे'ति* । तत्र चोद्यते—

प्र०—सूत्रपाठानुपूर्वीप्रदर्शनार्थमपूपादिग्रहणम् । न ह्यपूपादिषु प्रतिपदं कश्चिदुकारान्तः पठ्यते । पाठेऽपि वाऽपवादोऽसौ भवति, उत्सर्गापवादयोश्चायुक्तो विप्रतिषेधस्तस्माद्धविर्विशेषवाचिविषय एव विप्रतिषेधोऽभिमतः । गवादिगणे हविः शब्दस्य पाठात्स्वरूपग्रहणाच्च 'विभाषाहवि'रित्यत्र हविर्विशेषवाचिग्रहणम् । चरव्या इति । चर्वधिकरणं हविरूपचाराच्चरुशब्देनोच्यते । अन्नविकारेभ्यश्चेति । अपूपादिष्वन्नविकारेभ्यश्चेति पठ्यते । तद्विषयोऽयं विप्रतिषेध उच्यते ।

उ०—पाठेऽपि वेत्यभ्युपगमवादः । ननु 'हविः'शब्दस्य ग्रहणात्कथं तत्राऽपि विप्रतिषेधप्रसक्तिरत आह—गवादीति । स्वरूपेति । असञ्जातविरोधन्यायेन तत्रैव स्वरूपग्रहणमिति भावः । ननु चरुशब्दस्य स्थाल्यां प्रसिद्धेः कथमत्रोभयप्राप्तिरत आह—चर्वधीति । ननु 'हविरपूपादिभ्य' इति वार्तिकेऽपूपादिग्रहणं व्यर्थमन्नविकाराऽतिरिक्ताऽपूपादिषूवर्णान्ताऽभावादत आह—तत्रेति । विप्रतिषेधवार्त्तिके इत्यर्थः ।

सामर्थ्यादिति । अपूपादिषु तद्भिन्नोवर्णान्तपाठाऽभावादिति भावः । अनिर्द्धारितविशेषा इति । तत्स्वरूपा अन्नविकारवाचकाः शब्दा इत्यर्थः । तस्य क्वचित्सुरादौ चारितार्थ्याद्विप्रतिषेधसङ्गतिरिति भावः । पूर्वम'न्नविकारेभ्यश्चे'त्यस्याऽपूर्वत्वं मत्वा अपूपादिग्रहणं सूत्रपाठाऽनुपूर्वीप्रदर्शनार्थमुक्तम् । इह त्वस्य तत्प्रपञ्चार्थत्वमुच्यते ।

ननु हिताद्यर्थे प्रत्ययविधानोपपत्तेः 'किमुच्यते प्रत्ययाऽनुत्पत्ति'रित्यत आह—यद्यपीत्यादि । तैलं स्नेहनत्वाल्लोहबन्धनमशैथिल्यकारकत्वान्नाभये हितमिति बोध्यम् । अवयव इति । छिद्रवत्प्रदेशरूप इत्यर्थः । यच्छिद्राऽनुप्रविष्टः काष्ठविशेषोऽक्ष इत्युच्यते । अवयवार्थत्वाऽभावादिति । आरम्भकत्वेनाऽवयवा-

† विभाषा हविरपूपादिभ्यः ५ । १ । ४ ‡ ५ । १ । ४ गणसूत्रम् ।
× विप्रतिषेधे परं कार्यम् १ । ४ । २ * ५ । १ । २ गणसूत्रम् ।

**नाभेर्नभभावे प्रत्ययानुपपत्तिः प्रकृत्यभावात् ॥ ५ ॥**

नाभेर्नभभावे प्रत्ययस्यानुपपत्तिः[1] । किङ्कारणम् ? 'प्रकृत्यभावात्' । विकृतेः प्रकृतावभिधेयायां प्रत्ययेन भवितव्यम्†, न च नाभिसंज्ञिकाया विकृतेः प्रकृतिरस्ति । यदेव हि तन्मण्डलचक्राणां मण्डलचक्रं तन्नभ्यमित्युच्यते ।

**सिद्धं तु शाखादिषु वचनाद्ध्रस्वत्वं च ॥ ६ ॥**

सिद्धमेतत् । कथम् ? शाखादिषु‡ नाभिशब्दः पठितव्यो ह्रस्वत्वं च वक्तव्यम् । नाभिरिव नभ्यमिति । कः पुनरिहोपमार्थः ? यत्तदक्षधारणं परिवर्त्तनं वा । अपर आह—यत्तदञ्जनोपाञ्जनमिति ।

प्र०—प्रपञ्चार्थश्चायं पाठो 'हविरपूपादिभ्यो विभाषाया य'दित्युक्तत्वात् । तत्र सामर्थ्यादपूपादिग्रहणे-नानिर्द्धारितविशेषा अन्नविकारा एव ग्रहीष्यन्ते । प्रकृत्यभावादिति । यद्यपि हितार्थे 'नभ्यं तैलं नभ्यं लोहबन्धनमिति सिध्यति । तथापि 'नभ्यं चक्र'मिति न सिध्यति, न हि चक्रस्य नाभिर्विकृतिः, अपि त्ववयवः । नापि तादर्थ्यमस्ति, अवयविनोऽवयवार्थत्वाभावादिति पर्यनुयोगः । यस्तु शरीरावयवो नाभिस्ततः परत्वाद्धितार्थे 'शरीरावयवाद्य'दिति यता भाव्यं—'नाभ्यं तैल'मिति । गवादियता सन्नियुक्तो नभभावोऽन्यत्र यति न भवति ।

न चेति । यद्यपि दारुलक्षणा प्रकृतिर्नाभेरस्ति तथापि नभ्यशब्दवाच्यं चक्रं नाभेः प्रकृतिर्नास्तीत्यर्थः । मण्डलचक्राणामिति । नेयं निर्द्धारणे षष्ठी, सामान्यविशेषाभावात् । न हि भवति 'गवां गौः सम्पन्नक्षीरतमे'ति । तस्मादवयवावयविभावे षष्ठी । मण्डलाकारं चक्रं येषां तानि मण्डलचक्राणि—शकटानि । तेषां मण्डलाकारं यच्चक्रं तन्नभ्यमुच्यते । तच्च नाभेः प्रकृतिर्न भवतीति तत्र प्रत्ययो न प्राप्नोतीत्यर्थः ।

उ०—नाभेवाऽवयव्यर्थत्वादिति भावः । नन्वेवं 'नाभ्यं तैल'मिति न सिध्येदत आह—यस्त्विति । 'मण्डलचक्राणां मण्डलचक्र'मित्यन्वयाऽनुपपत्तिं परिहरति—नेयमित्यादिना । सामान्यविशेषाऽभावादिति । तत्त्वाऽभावादित्यर्थः । क्वचित्तु 'सामान्ये विशेषाऽभावा'दिति पाठः । तत्राऽयमर्थः—सामान्यबोधके विशेषबोधकत्वाऽभावादित्यर्थः । 'सामान्यविशेषभावाभावा'दिति क्वचित्पाठः । भाष्ये—सिद्धन्तु शाखादिष्विति । 'शाखादिभ्यो य' इति पाठस्त्वसाम्प्रदायिक इति भावः ।

सादृश्याऽभावादिति । संस्थानकृतसादृश्याऽभावादित्यर्थः । रथाङ्गविशेष इति । रथाङ्गस्य—चक्रस्य विशेषोऽवयवविशेष इत्यर्थः । एवं चक्रमिति । अवयविनो धारणाद्यभावेऽवयवस्याऽपि तदभावप्रसङ्ग इति भावः । समीपेति । नाभिसमीपवर्त्तिदेशाऽभ्यञ्ज इत्यर्थः । यथा नाभेरिदं तथा चक्रस्याऽपीति सादृश्यमिति भावः । अरवस्तु को विशेषोऽत आह—अरवस्त्विति । पृथग्व्यवस्थितेभ्य इति । अरनिर्माणसौकर्यार्थमिति

१—'प्रत्ययविधानानुपपत्तिः पा० ।
† तदर्थं विकृतेः प्रकृतौ ५ । १ । १२
‡ शाखादिभ्यो यत् ५ । ३ । १०३






न तर्हीदानीमिदं वक्तव्यं—नाभि नभञ्चेति ? वक्तव्यञ्च । किं प्रयोजनम् ? यान्येतान्यरवन्ति चक्राणि तदर्थम् । तत्र नाभिसञ्ज्ञिकाया विकृतेः प्रकृतिरस्ति । यानि चाऽनरवन्ति चक्राणि तदर्थमपीदं वक्तव्यम् । दृश्यते हि समुदायादवयवस्य पृथक्त्वम् । तद्यथा—वार्क्षी शाखेति । गुणान्तरयोगाच्च विकारशब्दो दृश्यते । तद्यथा—वैभीतको यूपः, खादिरं चषालमिति । तत्रावयवात्समुदाये वृत्तिर्भविष्यति ।

अथ यो नभ्यार्थो वृक्षः कथं तत्र भवितव्यम् ? नभ्यो वृक्षो नभ्या शिंशपेति ।

## नभ्यात्तु लुग्वचनम् ॥ ७ ॥

नभ्यात्तु लुग्वक्तव्यः ॥ स तर्हि लुग्वक्तव्यः ? न वक्तव्यः । तादर्थ्यात्ता-

प्र०—कः पुनरिति । अवयवावयविनोः सादृश्याभावादिति प्रश्नः । इतरः क्रियाद्वारकं सादृश्यं प्रतिपादयति—यत्तदिति । छिद्रवान् रथाङ्गविशेषो नाभिशब्दवाच्यः, स यथाऽक्षाख्यं काष्ठविशेषं धारयति परिवर्त्तते चैवं चक्रमपीति तत्सादृश्यान्नभ्यशब्देनाभिधास्यत इत्यर्थः । अञ्जनोपाञ्जनमिति । अञ्जनं—तैलाभ्यङ्गः । उपाञ्जनं—समीपाऽभ्यङ्गः । यान्येतानीति । एतच्चोपलक्षणं नभ्यो लोहबन्धो नभ्योऽक्ष इत्याद्यर्थमपि पठितव्यमेव । अरवत्सु चक्रेषु पृथग्व्यवस्थितेभ्यः काष्ठेभ्यः पृथग्भूता एव नाभ्यादयोऽवयवा उत्पद्यन्ते । तत्र नाभिप्रकृतिः काष्ठं नभ्यं भवत्येव । अररहितं तु चक्रमेकस्मादेव काष्ठादुत्पद्यत इति पृथङ्नाभेः प्रकृतिभूतकाष्ठाभावात् प्रत्ययाऽप्रसङ्गः स्यादित्यर्थः । यानि चापीति । अनराणीतोति वक्तव्ये चक्रजातिविशेषप्रतिपत्त्यर्थो मतुन्निर्देशः । 'अनराणी'त्युक्ते भग्नाराण्यपि चक्राणि प्रतीयेरन्, तस्मादरवत्पर्युदासेनानुपजातारचक्रप्रतीतिरनरवन्तीत्यनेन भवति ।

ननु यथा वृक्षा एव बहवो वनं न तु तद्व्यतिरिक्तम्, एवं नाभ्यादय एव चक्रं, तत्र भेदनिबन्धनोः नाभिचक्रयोः प्रकृतिविकारभावो न स्यादित्याशङ्क्य भेदं तावदवयवावयविनोः साधयति—दृश्यत इति । भेदेनाऽपि व्यवहारोऽवयवावयविनोर्दृश्यते न केवलमभेदेनैवेत्यर्थः । ननु प्रकृत्युच्छेदे विकारस्य दर्शनं,—यथा—काष्ठोच्छेदे भस्मनः । न चेह चक्रोच्छेदे नाभिदर्शनमित्याशङ्क्याह—गुणान्तरयोगादिति । तत्रावयवो यश्चक्रस्य नाभिसञ्ज्ञकः सोऽञ्जनादिगुणयुक्तनाभिसञ्ज्ञावयवप्रकृतिस्तद्द्वारेण चक्रमपि प्रकृतिः । दृश्यते ह्यवयवनिबन्धनो व्यपदेशः

उ०—भावः । तत्र नाभेरिति । तत्प्रकृतिभूतकाष्ठस्य पृथगभावादित्यर्थः । विकारद्वारा तद्योगाच्च चक्रमपि नभ्यमिति भावः । ननु वृत्तिद्वयकल्पनागौरवेण बहुव्रीहिणा'ऽनराणी'त्येव युक्तमत आह—चक्रजातीति । अनरवचक्रार्थत्वमुपपादयति—भाष्ये—दृश्यते हीति । समुदायादिति । अपृथगुत्पन्नादपीत्यर्थः । ननु गुणान्तरयोगाद्विकृतित्वेऽपि चक्रस्य नाभिः कथं विकृतिरत आह—भाष्ये—तत्राऽवयवादिति । तद्व्याचष्टे—तत्रेति । सोऽञ्जनादीति । अञ्जनादिगुणयुक्तनाभिसंज्ञकस्य स्वात्मकाऽवयवस्य तद्रहितः स्वयं प्रकृतिरित्यर्थः । नन्वेवमवयवस्य नाभेर्नभ्यत्वेऽप्यवयविनि चक्रे कथं तद्व्यपदेशोऽत आह—दृश्यते हीति । भाविविकारोऽ-

च्छन्द्यं भविष्यति—नभ्यार्थो नभ्य इति ॥ २ ॥

## कम्बलाच्च संज्ञायाम् ॥ ५ । १ । ३ ॥

अयं योगः शक्योऽवक्तुम् । कथमशीतिशतं कम्बल्यमिति ? निपातनादेतत्सिद्धम् । किं निपातनम् ? 'अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि' [ ४ । १ । २२ ] इति ।

इदं तर्हि प्रयोजनं 'संज्ञायामिति वक्ष्यामी'ति । इह मा भूत्—कम्बलीया ऊर्णाः । एतदपि नास्ति प्रयोजनम् । परिमाणपर्युदासेन पर्युदासे प्राप्ते तत्र कम्बल्यग्रहणं क्रियते परिमाणार्थम्, परिमाणञ्च सञ्ज्ञैव ॥ ३ ॥

## विभाषा हविरपूपादिभ्यः ॥ ५ । १ । ४ ॥

किमियं प्राप्ते विभाषा, आहोस्विदप्राप्ते । कथञ्च प्राप्ते कथं वाऽप्राप्ते ?

प्र०—समुदाये, यथा—'पटो दग्ध'इत्यादौ । तत्र बुद्धिपरिगृहीतभाविविकारापेक्षालब्धप्रकृतिव्यपदेशनाभिलक्षणावयवद्वारकश्चक्रस्य नभ्यव्यपदेशः ।

तादर्थ्यादिति । अनेनैव न्यायेन चरव्यतण्डुलार्था व्रीहयोऽपि चरव्याः । अङ्गारीयकाष्ठार्थो वृक्षोऽप्यङ्गारीय एवेति प्रकृतौ छो न भवतीति वेदितव्यम् ॥ २ ॥

कम्बलात् । निपातनादिति । अन्तस्वरितपाठाच्च यदन्तत्वं विज्ञास्यते । परिमाणपर्युदासेनेति । अपरिमाणान्ताद्द्विगोस्तद्धितलुकि पञ्चाश्वेत्यादौ लुकि प्रतिषिद्धे कम्बल्यग्रहणं तत्र परिमाणार्थमेवेत्यर्थः । परिमाणञ्च सञ्ज्ञैवेति । सञ्ज्ञायत इति सञ्ज्ञा ॥ ३ ॥

विभाषा । किमियमिति । यद्यपि 'हविरपूपादिभ्यो विभाषाया य'दिति पूर्वविप्रतिषेधप्रदर्शनादप्राप्तविभाषात्वमिहावगतन्तथापि शिष्याणां सुखावबोधनायोपन्यासः ॥ ४ ॥

उ०—अनादिमुख्ययोगस्तदपेक्षया लब्धः प्रकृतिव्यपदेशो येनेदृशनाभिलक्षणाऽवयवद्वारेणेत्यर्थः । प्रकृताविति । प्रकृतेः प्रकृतावित्यर्थः । अनभिधानादिति भावः ॥ २ ॥

कम्बलाच्च । ननु तेन कम्बल्यशब्दसाधुत्वबोधनेऽपि स्वरार्थं यद्विधिरत आह—अन्तेति । 'लोके वेदे चे'ति शेषः । ननु परिमाणमर्थः, सञ्ज्ञा तु शब्द इति कथं तयोः सामानाधिकरण्यमत आह—सञ्ज्ञायत इति । परिमाणं रूढ्या कम्बल्यशब्देन गम्यत इत्यर्थः ॥ ३ ॥

१—'कम्बल्यमूर्णापलशत'मिति काशिकायां वै० सि० कौमुद्यां च । 'पलं कर्षचतुष्टय'मित्यमरः । तोलकचतुष्टयं पलमित्यर्थः ।

१०० पल=४००तोले=५ सेर । पांच सेर ऊन का एक कम्बल बनता था, उसकी संज्ञा 'कम्बल्य' थी ।

'उवर्णान्ता'दिति* वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते ।

हविरपूपादिभ्योऽप्राप्ते ॥ १ ॥

हविरपूपादिभ्योऽप्राप्ते विभाषा, प्राप्ते नित्यो विधिः । चरव्यास्तण्डुलाः ॥ ४ ॥

## शरीरावयवाद्यत् ॥ ५ ।१ । ६ ॥

यत्प्रकरणे रथाच्च ॥ १ ॥

यत्प्रकरणे रथाच्चोपसङ्ख्यानं कर्त्तव्यम् । रथाय हिता रथ्या ॥ ६ ॥

## खलयवमाषातिलवृषब्रह्मणश्च ॥ ५ । १ । ७ ॥

वृषशब्दोऽयमकारान्तो गृह्यते । वृषन्शब्दोऽपि नकारान्तोऽस्ति तस्योपसङ्ख्यानं कर्त्तव्यम्, वृषशब्दश्चादेशो वक्तव्यो वृष्णे हितमिति विगृह्य वृष्यमित्येव यथा स्यात् । तथा ब्रह्मन्शब्दो नकारान्तो गृह्यते, ब्राह्मणशब्दश्चाकारान्तोऽस्ति तस्योपसङ्ख्यानं कर्त्तव्यम्, ब्रह्मन्शब्दश्चादेशो वक्तव्यो ब्राह्मणेभ्यो हितमिति विगृह्य 'ब्रह्मण्य'-मित्येव यथा स्यात् ।

प्र०—शरीरा । रथायेति । हितार्थे एव रथाद्यथा स्यादर्थान्तरे मा भूदित्येवमर्थमुगवादिभ्यो यदित्यत्रोपसङ्ख्यानं न कृतम् । केचिद्द 'रथसीताहलेभ्यो यद्विधा'विति तदन्तविधिमिच्छन्ति । अन्ये तुं हलसीताशब्दयोः साहचर्याच्चतुर्थाध्यायविहित एव यति तदन्तविधिर्न त्वस्मिन्नित्याहुः ॥ ६ ॥

खलयव । वृषशब्दोऽयमिति । न तु कृतनलोपोऽकारान्तः, अन्यथाऽसन्देहायाऽकृतनलोपो निर्दिश्येतेति भावः । वृषन्शब्द इति । उच्चारणादेव नान्तत्वे ज्ञाते 'नकारान्त' इति वचनं स्वरूपनिरूपणार्थम् । तस्येति । अन्यथा ततश्छः प्रसज्येत । वृषशब्दादेश इति । अन्यथा 'ये चाऽभावकर्मणो'रिति प्रकृतिभावाद्वृषण्यमिति स्यात् । कुतोनुचरसीति—ब्रह्मन्शब्दस्याने-

उ०—शरीराऽवयवा । इत्याहुरिति । अत्राऽरुचिस्त्वसमासग्रहणज्ञापकसिद्धतदन्तविधेः 'कृष्णतिल्यं' 'राजमाष्य'मित्यादाविवेहाऽपि दुर्वारत्वमिति ॥ ६ ॥

खलयव । भाष्ये—अकारान्त इति । अत एव वृष्यमिति सिध्यति । अन्यथेति । 'आत्मन्विश्वजने'तिवत् । किञ्च नान्तग्रहणे तस्य वृषादेशवचनं, वृषस्य वृषीयमिति स्यादिति ततो यद्वचनञ्चावश्यकमेव । स्वरूपनिरूपणं-स्वरूपस्य साक्षाच्छब्देन बोधनम् । ननु ब्रह्मन्शब्दस्य ब्राह्मणपर्यायत्वे इव वृषस्य वृषन्पर्यायत्वे कुतो

* उगवादिभ्यो यत् ५ । १ । २

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । समानार्थावेतौ वृषशब्दो वृषन्शब्दश्च, ब्रह्मन्शब्दो ब्राह्मणशब्दश्च । आतश्च समानार्थौ, एवं ह्याह—कुतो नु चरसि ब्रह्मन् ! कुतो नु चरसि ब्राह्मणेति । तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रहोऽपरस्मादुत्पत्तिर्भविष्यत्यविरविकन्यायेन । तद्यथा—अवेर्मांसमिति विग्रह्याऽविकशब्दादुत्पत्तिर्भवति—आविकमिति । एवमिहापि वृषाय हितमिति विगृह्य वृष्ण्यमिति भविष्यति, वृष्णे हितमिति विगृह्य वाक्यमेव । तथा ब्रह्मणे हितमिति विगृह्य ब्रह्मण्यमिति भविष्यति, ब्राह्मणेभ्यो हितमिति विगृह्य वाक्यमेव भविष्यति । त्रैशब्द्यं चेह साध्यं तच्चैवं सति सिद्धं भवति ॥ ७ ॥

## आत्मन्विश्वजनभोगोत्तरपदात्खः ॥ ५ । १ । ९ ॥

## भोगोत्तरपदात्खविधानेऽनिर्देशः पूर्वपदार्थहितत्वात् ॥ १ ॥

भोगोत्तरपदात्खविधानेऽनिर्देशः । अगमको निर्देशोऽनिर्देशः । किं कारणम् ? 'पूर्वपदार्थहितत्वात्' । उत्तरपदार्थप्रधानस्तत्पुरुषः पूर्वपदार्थप्रधाने च प्रत्यय इष्यते । पितृभोगाय हिते प्राप्नोति पित्रे चैव हित इष्यते ॥ एवं तर्हि भोगीनर्प्रत्ययो विधास्यते ।

प्र०—कार्थत्वाद्ब्राह्मणशब्दपर्यायत्वं नातिप्रसक्तमिति व्युत्पादयति । एकेन विग्रह इति । एकेन विग्रह एवेत्यर्थः । विग्रहस्तु द्वाभ्यामपि भवतीति नासौ नियम्यते । विगृह्येति—भिन्नकर्तृकत्वात्क्त्वानुपपत्तिः । नैष दोषः । उत्पत्तिशब्देनोत्पादनमुच्यते, अन्तर्भावितण्यर्थत्वात्पदेः 'परावरयोगे चे'ति वा क्त्वाप्रत्ययः । वृषन्ब्राह्मणशब्दाभ्यामनभिधानाच्छप्रत्ययो न भवतीत्यर्थः ॥ ७ ॥

आत्मन् । अनिर्देश इति । योऽयं हितमिति प्रत्ययार्थनिर्देशः स भोगोत्तरपदात्खविधाने विवक्षितार्थप्रत्यायनाऽसामर्थ्यादनिर्देशः । तत्कार्याऽकरणात् । तथाहि लोके पितृभोगीणादिशब्दैः

उ०—युक्तिर्न दर्शितेत्यत आह-ब्रह्मन्शब्दस्येति । अनेकाऽर्थत्वञ्च-कमलासनादावपि वृत्तेः । वृषन्वृषयोस्तु नाऽन्यतरस्याऽप्यनेकार्थत्वमिति भावः । नाऽसौ नियम्यत इति । एकेनैव विग्रह इत्येवमित्यर्थः । तथा च सति त्रैशब्द्यसिद्धिर्न स्यादिति भावः । भिन्नेति । विग्रहे प्रयोक्ता कर्त्ता, भवने उत्पत्तिः, उत्पत्तौ च प्रत्ययः कर्त्तेति भावः । एवमपि 'वृष्णे हितमिति विगृह्य वाक्यमेवे'त्यनुपपन्नमेवाऽत आह—परावरेति । कालकृतोऽत्र परावरयोगः, विग्रहज्ञानोत्तरकालिकत्वात्प्रत्ययतदभावज्ञानस्य । इदमप्यतिबाललोकदृष्ट्येति बोध्यम् ॥ ७ ॥

आत्मन् । कस्य निर्देशस्याऽगमकत्वमत आह—योऽयमिति । विवक्षितार्थेति । पितृभोगीणशब्दाद्विवक्षितार्थेत्यर्थः । तत्कार्येति । निर्देशकार्येत्यर्थः । प्रत्ययार्थनिर्देशकार्यञ्च प्रयोगतस्तदर्थप्रतीतिः । भाष्ये—पूर्वपदार्थप्रधाने इति । पूर्वपदार्थनिरूपितप्राधान्यवति हितरूपेऽर्थे प्रत्यय इष्यते । 'लोके' इति

भोगीनरिति चेद्वावचनम् ॥ २ ॥

भोगीनरिति यदि प्रत्ययो विधीयते वावचनं कर्त्तव्यम्, मात्रीयः पित्रीय इत्यपि यथा स्यादिति ।

राजाचार्याभ्यां नित्यम् ॥ ३ ॥

राजाचार्याभ्यां नित्यमिति वक्तव्यम् । राजभोगीनः । आचार्यादणत्वञ्च । आचार्यभोगीनः ।

किं भोगीनर्प्रत्ययो विधीयत इत्यतो राजाचार्याभ्यां नित्यमिति वक्तव्यम् ? नेत्याह । सर्वथा राजाचार्याभ्यां नित्यमिति वक्तव्यम् ।

इह च ग्रामणिभोगीन सेनानिभोगीन इत्युत्तरपद इति ह्रस्वत्वं† न प्राप्नोति । इह चाऽभ्भोगीन इत्य'पो भि' [ ७ । ४ । ४८ ] इति । तत्वं प्राप्नोति । सूत्रं च भिद्यते ।

यथान्यासमेवाऽस्तु । ननु चोक्तं—'भोगोत्तरपदात्खविधानेऽनिर्देशः पूर्वपदार्थहितत्वा'दिति । नैष दोषः । अयं भोगशब्दोऽस्त्येव द्रव्यपदार्थकः । तद्यथा—'भोगवानयं देश' इत्युच्यते यस्मिन् गावः सस्यानि च वर्त्तन्ते । अस्ति क्रियापदार्थकः ।

प्र०—पित्रादिहितस्याऽर्थस्य प्रतिपत्तिः । पित्रादिभोगहितस्य तु प्रतिपत्तिप्रसङ्गः । वावचनमिति । अन्यथा भोगीनराच्छो बाध्येत । भोगोत्तरपदात्खविधाने केवलेभ्यः पित्रादिभ्यो बाधकाभावाच्छः सिध्यति । किं भोगीनरिति । प्रत्यासत्त्याश्रयेण प्रश्नः ।

सर्वथेति । सामर्थ्यं बलवदित्युत्तरम् । ननु भोगोत्तरपदात्खविधाने क्रियमाणेऽपि नित्यग्रहणे केवलाभ्यां राजाचार्याभ्यां छस्य निवृत्तिर्न सिध्यति । एवं तर्हि तथा पाठः कर्त्तव्यो यथेष्टं सिध्यति । राजाचार्याभ्यां नित्यं भोगोत्तरपदाभ्यामेव हिते प्रत्यय इति । ग्रामणिभोगीन इति । ग्रामण्यो भोग इति षष्ठीसमासः । 'इको ह्रस्वोऽङ्यो गालवस्ये'ति ह्रस्वः । तत्वं प्राप्नोतीति । भकारादौ प्रत्ययेऽङ्गस्य विधीयमानमिति भावः । द्रव्यपदार्थक इति । भोगो धनमुच्यते । भोगवानयं ब्राह्मण इति । धनवानपि कृपणो निर्भोग उच्यते, तस्मादत्र क्रिया भोगशब्दवाच्या ।

उ०—शेषः । तदेव व्युत्पादयति—पितृभोगायेत्यादिना । निवृत्तिर्न सिध्यतीति । 'नित्य'मित्यस्य प्रत्ययेन सम्बन्धान्महाविभाषानिवृत्तिरेव स्यादिति भावः । राजेति । 'राजाचार्याभ्यां यदि हिते प्रत्ययस्तर्हि भोगोत्तरपदाभ्यामेवे'त्यर्थादिष्टसिद्धिरिति भावः । नित्यमित्यस्यैव विवरणं—भोगोत्तरपदाभ्यामेवेति । भाष्ये—इह चेत्यादिना प्रत्ययान्तरविधाने दोषान्तरमाह—इह चेति । यथान्यासे यथा सिध्यति तदाह—ग्रामण्य इत्यादि । भोगो धनमिति । कर्मणि घञिति भावः । नन्वत्रापि धनमेव भोगपदार्थोऽस्त्वत आह-धनवानपीति ।

† इको ह्रस्वोऽङ्यो गालवस्य ६ । ३ । ६१

तद्यथा—'भोगवानयं ब्राह्मण' इत्युच्यते यः सम्यक्स्नानादीः क्रिया अनुभवति । तद्यः क्रियापदार्थकस्तस्येदङ्ग्रहणम् । यश्च पितृस्थाभ्यः क्रियाभ्यो हितः सम्बन्धादसौ पित्रेऽपि हितो भवति ।

यदि सम्बन्धात्, अस्तु द्रव्यपदार्थकस्याऽपि ग्रहणम् । योऽपि हि पितृद्रव्याय हितः सम्बन्धादसौ पित्रे हितो भवति । अथवा भोगशब्दः शरीरवाच्यपि दृश्यते । तद्यथा—अहिरिव भोगैः पर्येति बाहुम्‡ । अहिरिव शरीरैरिति गम्यते । एवं पितृशरीराय हितः पितृभोगीण इति ।

**खविधाने पञ्चजनादुपसङ्ख्यानम् ॥ ४ ॥**

खविधाने पञ्चजनादुपसङ्ख्यानं कर्तव्यम् । पञ्चजनाय हितः पञ्चजनीनः । समानाधिकरण इति वक्तव्यम् । यो हि पञ्चानां जनाय हितः पञ्चजनीयः स भवति ।

प्र०—सम्बन्धादिति । यस्तु पितृधनाय हितो नाऽसाववश्यं पितृहितो भवति । 'ममैतद्धनं भविष्यती'त्येवं बुद्धया पितृधनरक्षणादिति भावः । यो हीति । यस्तु 'ममैतद्भविष्यती'ति मन्यते नाऽसौ पितुरेतद्धन'मिति रक्षति, किन्तर्हि 'ममैत'दित्यभिमानेन । अहिरिवेति । समुदाये वृत्तो भोगशब्द एकदेशेषु फणेषु प्रयुज्यते । केचिदाहुः—भुजङ्गाङ्गमेव भोगशब्देनोच्यते, न तु सर्वं शरीरमिति । तदयुक्तम्, अनन्तत्वात्प्रयोगविषयस्यावधारणस्य कर्तुमशक्यत्वात् ।

पञ्चजनादिति । मनुष्याः पञ्च[१]जना उच्यन्ते चत्वारो वर्णाः रथकारपञ्चमाः । पञ्चजनायेति । 'दिक्सङ्ख्ये संज्ञाया'मिति समासः । समुदाये वृत्तस्याऽवयवेऽपि वृत्त्या एकवचनं यथा सप्तर्षिरिति । यो हि पञ्चानामिति । ननु सापेक्षत्वादत्र समासेन न भाव्यम् ।

उ०—ननु द्रव्यपदार्थेऽप्येतत्तुल्यमत आह—यस्त्विति । मन्यते नासाविति । एवं हि पित्रादिना धनस्य विशेषणमयुक्तं स्यादिति भावः ।

ननु भोगशब्दस्य शरीरवाचकत्वे एकदेशे फणे प्रयोगो न स्यादत आह—समुदाये इति । भुजङ्गाऽङ्गमेवेति । भुजङ्गशरीरमेवेत्यर्थः । न तु सर्वमिति । अत एव 'अहेश्च फणकाययो'रिति कोशः सङ्गच्छत इति भावः । अनन्तत्वादिति । भाष्यप्रामाण्यात्कोशः प्रसिद्धतरार्थविषय इति भावः । नन्वेवं

‡ अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिं परिबाधमानः । हस्तघ्नो विश्वा वयुनानि विद्वान् पुमान् पुमांसं परि पातु विश्वतः ॥

( ऋग्वेदे ६ । ७५ । १४; यजुर्वेदे २९ । ५१; तै० सं० ४ । ६ । ६ । ५; निरुक्ते ९ । १५ )

१—'पञ्च जना मम होत्रं जुषध्वम्' १० । ५३ । ४ इति ऋग्वेदे पठ्यते । अत्र यास्काचार्य आह—"गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके । चत्वारो वर्णा निषादः पञ्चम इत्यौपमन्यवः ।" ( निरुक्ते ३ । २ । ७ ) "मनुष्याः पञ्चजना उच्यन्ते—चत्वारो वर्णाः, रथकारपञ्चमाः ।" इति कैयटः ।

सर्वजनाट्ठञ्च ॥ ५ ॥

सर्वजनाट्ठञ्च वक्तव्यः खश्च । सर्वजनाय हितः सार्वजनिकः । सर्वजनीनः ।

समानाधिकरण इति च वक्तव्यम् । यो हि सर्वेषां जनाय हितः सर्वजनीयः स भवति ।

महाजनान्नित्यम् ॥ ६ ॥

महजनान्नित्यं ठञ्वक्तव्यः । महाजनाय हितो माहाजनिकः ।

तत्पुरुष इति वक्तव्यम्, बहुव्रीहौ मा भूदिति । महान् जनोऽस्य महाजनः, महाजनाय हितो महाजनीयः ।

यदि तर्ह्यतिप्रसङ्गाः सन्तीत्युपाधिः क्रियते, आद्यन्यासेऽप्युपाधिः कर्त्तव्यः । 'आत्मन्विश्वजन' समानाधिकरण इति वक्तव्यम् । यो हि विश्वेषां जनाय हितो विश्वजनीयः स भवति । अथ मतमेतदनभिधानादाद्यन्यासे न भविष्यतीति, इहापि नार्थ उपाधिग्रहणेन । इहाप्यनभिधानान्न भविष्यति ॥ ६ ॥

सर्वपुरुषाभ्यां णढञौ ॥ ५ । १ । १० ॥

सर्वाण्णस्य वावचनम् ॥ १ ॥

सर्वाण्णस्य वेति वक्तव्यम् । सार्वः सर्वीयः ।

प्र०—सङ्ख्या हि सङ्ख्येयविशेषमपेक्षते । सङ्ख्येयस्यैव जनापेक्षया व्यतिरेकस्तद्द्वारेण तु सङ्ख्याया गुणस्येति साक्षात्सम्बन्धाभावात्समासाऽप्रसङ्गः । नैष दोषः । प्रकरणादिवशाद्यदा विशिष्टसङ्ख्येयवृत्तित्वावसायः सङ्ख्याशब्दानां तदा जनादिना साक्षात्सम्बन्धाद्भवति वृत्तिः ।

सर्वजनायेति । सर्वो जन इति 'पूर्वकालैकसर्वे'ति समासः । सर्वेषां जनायेति । सर्वसाधारणाय वेश्यादिजनायेत्यर्थः । महाजनादिति । नित्यग्रहणं सर्वजनादुक्तः खो मा भूदित्येवमर्थम् । महाजनशब्दश्च समानाधिकरणपदः, आत्वनिर्देशादेवावसीयते ॥ ९ ॥

सर्वपु । सर्वादिति । अनुकरणत्वात्सर्वनामकार्याभावः, 'सर्वनामानी'त्यन्वर्थसंज्ञाविज्ञा-

उ०—बहुवचनं स्यादत आह–समुदाये वृत्तस्येति । एवञ्चैकस्मिन् यदा वृत्तिस्तदैकवचनम् । संख्या हीति । पञ्चादयः केवलसङ्ख्याबोधका इत्यभिमानः । व्यतिरेकः—भेदपूर्वकः सम्बन्धः । साक्षात्सम्बन्धाऽभावात्–सङ्ख्येयमनपेक्ष्य सम्बन्धाऽभावात् । अनेन साऽपेक्षत्वादसामर्थ्य दृढं कृतम् । वस्तुतः सङ्ख्येयवृत्तित्वेऽपि तद्विशेषाऽपेक्षत्वेन साऽपेक्षत्वं बोध्यम् । ध्वनितञ्चेदं 'सङ्ख्येयविशेषमपेक्षते' इत्युक्त्या, सिद्धान्ते 'विशिष्टसङ्ख्येयवृत्तित्वाऽवसाय' इत्युक्त्या चेति बोध्यम् । नेदं नित्यग्रहणं महाविभाषानिवृत्त्यर्थमित्याह—नित्यग्रहणमिति । अन्यथा खाऽनुवृत्तिरप्यत्र सम्भाव्येतेति भावः । अत्र 'समानाऽधिकरण' इत्यनुक्तौ बीजमाह–महाजनशब्दश्चेति ॥ ६ ॥

सर्वपुरुषाभ्यां । भाष्ये—सर्वाण्णस्य वेति वक्तव्यमिति । सर्वाण्णविधायकांऽशस्य वेति वक्तव्यम् ।

पुरुषाद्वधे ॥ २ ॥

पुरुषाद्वध इति वक्तव्यम् । पौरुषेयो वधः ।

अत्यल्पमिदमुच्यते 'पुरुषाद्वध' इति । 'पुरुषाद्वधविकारसमूहतेनकृते'ष्विति वक्तव्यम् । पौरुषेयो वधः । पौरुषेयो विकारः । पौरुषेयस्समूहः । तेन कृतं—पौरुषेयम् ॥ १० ॥

तदर्थं विकृतेः प्रकृतौ ॥ ५ । १ । १२ ॥

तदर्थमिति कृत्यनामभ्यष्छञ् ॥ १ ॥

तदर्थमिति कृत्यनामभ्यष्ठञ्वक्तव्यः । इन्द्रमहार्थमैन्द्रमहिकम्, गाङ्गामहिकम्, काशेरुयज्ञिकम् ।

न वा प्रयोजनेन कृतत्वात् ॥ २ ॥

न वा वक्तव्यम् । किं कारणम् ? 'प्रयोजनेन कृतत्वात्' यद्धीन्द्रमहार्थम्—इन्द्रमहस्तस्य प्रयोजनं भवति, तत्र 'प्रयोजनम्' [ ५ । १ । १०९ ] इत्येव सिद्धम् ॥ १२ ॥

---

प्र०—नात् । अनाश्रितार्थस्य च शब्दरूपस्यानुकरणमिति प्रकृतिवद्भावादपि सर्वनामत्वं न भवति । पुरुषाद्वधेति । प्रत्ययार्थसामर्थ्येन षष्ठी समर्थविभक्तिर्लभ्यते । कृते तु तेनेति तृतीयोपात्तैव । पुरुषश्च लोकप्रसिद्धः पाण्यादियुक्त इह गृह्यते न तु साङ्ख्यादिशास्त्रप्रसिद्धस्तत्र प्रत्ययस्यादर्शनादित्याहुः ॥ १० ॥

तदर्थं । कृत्यनामभ्य इति । अवश्यकर्त्तव्यत्वात्करणार्हत्वाद्वा कृत्या उत्सवास्तन्नामभ्य इत्यर्थः । नवेति । प्रयुज्यतेऽनेनेति प्रयोजनं—फलमप्यभिधीयते, कारणमपीति भावः ॥ १२ ॥

---

उ०—अधिकरणस्य शेषत्वविवक्षायां षष्ठी । अनाश्रितार्थस्य शब्दरूपस्येति । शब्दस्वरूपपरस्येत्यर्थः । एवञ्च–प्रकृतेरेव सर्वनामत्वाऽभावेन तदतिदेशोऽशक्य इति भावः । तस्याऽनित्यत्वादिति तु तत्त्वम् । ननु समर्थविभक्तिर्न निर्दिष्टेत्यत आह—प्रत्ययाऽर्थेति । तेनेति तृतीयेति । सौत्रत्वाद्द्वन्द्व इति भावः । तत्र प्रत्ययस्येति । तस्य वधविकाराद्यसम्भवाच्चेत्यपि बोध्यम् । अनेकार्थत्वाच्च वधादिशब्दप्रयोगोऽपि ॥ १० ॥

तदर्थं विकृतेः । ननु प्रकृतिविकृतिभावस्थले कार्यत्वरूपकृत्यत्वाऽव्यभिचारादाह—अवश्येति । ननु कार्यस्येन्द्रमहस्य कथं कारणत्वरूपं प्रयोजनत्वं, तत्र चैकागारिकाऽनुरोधेन कारणपर्यायस्य ग्रहणमत आह—प्रयुज्यतेऽनेनेति । ऐकागारिकाऽनुप्रवचनीयाद्यनुरोधेनोभयमपि तत्र गृह्यत इति भावः ॥ १२ ॥

## छदिरुपधिबलेर्ढञ् ॥ ५ । १ । १३ ॥

### उपध्यर्थमिति प्रत्ययानुपपत्तिरुपध्यभावात् ॥ १ ॥

उपध्यर्थमिति प्रत्ययस्येहाऽनुपपत्तिः । किं कारणम् ? 'उपध्यभावात्' । विकृतेः प्रकृतावभिधेयायां प्रत्ययेन भवितव्यं न चोपधिसंज्ञिकाया विकृतेः प्रकृतिरस्ति । यद्धि तद्रथाङ्गं तदौपधेयमित्युच्यते ।

### सिद्धन्तु कृदन्तस्य स्वार्थेऽवचनात् ॥ २ ॥

सिद्धमेतत् । कथम् ? कृदन्तस्य स्वार्थेऽञ्वक्तव्यः । उपधीयते—उपधेयम्, उपधेयमेवौपधेयम् । सिध्यति । सूत्रं तर्हि भिद्यते ।

यथान्यासमेवास्तु । ननु चोक्तम्—'उपध्यर्थमिति प्रत्यायानुपपत्तिरुपध्यभावा'-दिति । नैतदस्ति । अयमुपधिशब्दोऽस्त्येव कर्मसाधनः, उपधीयते—उपधिरिति । अस्ति भावसाधनः, उपधानमुपधिरिति । तद्यो भावसाधनस्तस्येदं ग्रहणम् ।

---

प्र०—छदिरु । उपध्यभावादिति । उपधिशब्दो विकृतिवाची नास्ति, एकस्यैव रथाङ्ग-विशेषस्योपध्यौपधेयशब्दाभ्यामभिधानात्प्रकृतिप्रत्ययार्थयोश्च प्रकृतिविकारभावाभावादित्यर्थः ।

सिद्धं त्विति । उपधेयशब्दात्कर्मसाधनयदन्तात्स्वार्थेऽञ्वक्तव्य इत्यर्थः । तद्यो भाव-साधन इति । तत्र हि तादर्थ्यं संभवति उपधानक्रियार्थत्वाद्रथाङ्गविशेषस्य । एवमपीति । यद्यपि लोके क्रिया विकारत्वेन क्वचिन्निर्दिश्यते—'बहुविकारोऽयं मनुष्यो हसति गायति नृत्य-ती'ति, तथापि प्रत्ययविधौ विशिष्ट एव प्रकृतिविकारभावो गृह्यते-यत्र प्रकृत्युच्छेदो यत्र वा प्रकृते रूपान्तरापत्तिः । बालेया इति । अत्र तण्डुलानां तादर्थ्यमस्ति न तु प्रकृतिविकारभावो,

---

उ०—छदिरुपधि । भाष्ये—उपध्यर्थमितीति । 'उपध्यर्थमेषा प्रकृति'रित्यर्थे प्रत्ययाऽनुपपत्तिरित्यर्थः । ननूपध्यभावादित्यस्य—'उपाधिशब्दाऽभावा'दिति नार्थः, तस्य किप्रत्ययान्तस्य शास्त्रसिद्धत्वादत आह—उपधीत्यादि । औपधेयपदस्य योऽर्थस्तद्विकृतिवाची नास्तीत्यर्थः । तदेवाह—एकस्यैवेति । एवञ्च तादर्थ्यस्याऽप्यभाव इत्यपि ध्वनितम् । भाष्ये—न चेति । औपधेयपदवाच्योऽर्थः प्रकृतिर्नास्तीत्यर्थः । तदेवाह—यद्धि तद्रथाङ्गमिति । यद्रथाङ्गमुपधिशब्दवाच्यन्तदेवौपधेयशब्देनोच्यत इत्यर्थः । ननूपधीत्यस्य कृदन्तत्वेऽपि ततोऽञि नेष्टसिद्धिरत आह—उपधेयेति । कृत्पदेन सामर्थ्यात्कृत्यो गृह्यत इत्यर्थः । एवञ्च स्वार्थिकप्रकरणे 'आग्नीध्रसाधारणाद'ञित्यत्रोपधेयशब्दः पाठ्य इति भावः । विशिष्ट इति । उभयोपादान-सामर्थ्यादिति भावः ।

ननु वत्सर्षभयोरवस्थाभेदेन प्रकृतिविकारभावः स्पष्ट एवेत्यत आह—यथेति । ननु भाष्यानुरोधे-नाऽनुवृत्तिरेव न्याय्या बहूनामनुग्रहात्, न त्वेकोपध्यर्थमाननुवृत्तिः, 'त्यजेदेक'मिति न्यायादत आह—

एवमपि न सिध्यति । किं कारणम् ? विकृतेः प्रकृताविति* वर्त्तते । प्रकृतिविकृतिग्रहणं निवर्त्तिष्यते । तच्चाऽवश्यं निवर्त्त्यमिहार्थमुत्तरार्थं च । इहार्थन्तावत्—बालेयास्तण्डुलाः । उत्तरार्थम्—'ऋषभोपानहोर्ञ्यः' [ ५ । १ । ४ ] आर्षभ्यो वत्स इति ।

अथ तदर्थमित्यनुवर्त्तते उताहो न ? किं चाऽर्थोऽनुवृत्त्या ? बाढमर्थः, 'तदस्य तदस्मिन्स्यादिति' [ ५ । १ । १६ ] तदर्थे तथा स्यादिह मा भूत्—'प्रासादो देवदत्तस्य स्यादिति' 'प्राकारो नगरस्य स्या'दिति । यदि 'तदर्थ'मित्यनुवर्त्तते 'ऋषभोपानहोर्ञ्यः' ऋषभार्थो घासः, उपानदर्थस्तिलकल्क इत्यत्रापि प्राप्नोति ।

एवं तर्ह्यनुवर्त्तते प्रकृतिविकृतिग्रहणम् । ननु चोक्तं—'बल्यृषभयोर्न सिध्यती'ति । कं पुनर्भवान् विकारं मत्वाऽऽह—'बल्यृषभयोर्न सिध्यती'ति । यदि तावद्यः प्रकृत्युपमर्देन भवति स विकारः—बैभीतको यूपः, खादिरं चषालमिति न सिध्यति ।

प्र०—बल्यवस्थायामपि तण्डुलानां तदवस्थत्वादिति भावः । आर्षभ्य इति । यथा पक्वमाम्रफलमाम्रफलविकारत्वेन न प्रसिद्धमपि तु प्रत्यभिज्ञावशात्तत्त्वेन, एवमृषभोऽपि न वत्सविकारः । अथेति । तदर्थग्रहणाननुवृत्तौ स्वार्थे प्रत्यय उपधिशब्दात्सिध्यतीति भावः । ऋषभोपानद्वरत्रादयश्च शब्दास्तादर्थ्याद्वत्सादिषु वर्त्तमानाः स्वार्थ एव प्रत्ययमुत्पादयिष्यन्ति । प्रासाद इति । अत्र सम्भावनामात्रं गम्यते न तु तादर्थ्यमिति प्रत्ययो नेष्यते । इतिकरणाऽपरामर्शेनेदमुच्यते । यदि तर्हि तदस्येत्यनेन तादर्थ्ये प्रत्ययः क्रियते तदा योग्यतामात्रविवक्षायां प्रत्ययाऽप्रसङ्गः—अरणीयं सूनाकाष्ठमिति । अत्रापि बुद्धिपरिकल्पितारोपिततादर्थ्याश्रयणे प्रत्ययो भविष्यतीत्याहुः ।

गुणान्तरयुक्ता हीति । बल्यवस्थायां यो गुणः सन्निवेशलक्षणो, लाक्षादिकृतलौहित्यादिलक्षणो वा तदपेक्षया प्राक्तनगुणयुक्ता इत्यर्थः । गुणान्तरयुक्तश्च वत्स इति । सुजातावयवः संहननवान्महाप्राण ऋषभावस्थाप्राप्तये यदा परिपोष्यते न तु दानविक्रयार्थं तदा तादर्थ्यस्य सम्भवः । आम्रन्तु पक्वं यद्यप्याम्रविकारो गुणभेदात्तथापि तत्त्वबुद्ध्युत्पादाल्लोके प्रकृतिविकारभावस्याऽप्रसिद्धत्वात्तत्र प्रत्ययाऽभावः । आमपक्वाऽवस्थयोराम्रशब्द एव वाचकत्वेन प्रवर्त्तते न

उ०—ऋषभेति । मुख्याऽर्थेभ्यस्त्वनभिधानान्न प्रत्यय इति भावः । नन्वितिकरणेनैवाऽनतिप्रसङ्गे 'तदर्थ'मित्यनुवृत्तिर्व्यर्थेत्यत आह—इतिकरणेति । अरणीयं सूनाकाष्ठमिति । अरणिः सूनाकाष्ठस्य स्यादित्यर्थ इत्यभिमानः । अत्राऽपीति । अन्यथा सूनाकाष्ठमेवाऽरणिरिति भेदनिबन्धना षष्ठी न स्यात् । आरोपितभेदेन सूनाकाष्ठस्याऽरणिरिति षष्ठ्यान्तु तादर्थ्यमपि तथैवेति भावः । ननु प्राक्तनगुणाऽपेक्षया भिन्नगुणयुक्ता हि बलिरूपा एव, न बालेया अत आह—बल्यवस्थायामिति । गुणः कुङ्कुमादिकृतलौहित्यादिरूपः, सन्निवेशलक्षणो वा । ननु दानविक्रयाद्यर्थं वत्सपोषणे तादर्थ्याऽभावोऽत आह—सुजातेति । संहननम्—अशिथि-

* तदर्थं विकृतेः प्रकृतौ ५ । १ । १२

अथ मतमेतत्तदेव गुणान्तरयुक्तं विकार इति, बल्यृषभयोरपि सिद्धं भवति । गुणान्तरयुक्ता हि तण्डुला बालेयाः, गुणान्तरयुक्तश्च वत्स आर्षभ्यः । औपधेयन्तु न सिध्यति । वचनात्स्वार्थिको भविष्यति ॥ १३ ॥

## तदस्य तदस्मिन्स्यादिति ॥ ५ । १ । १६ ॥

स्याद्ग्रहणं किमर्थम् ? इह मा भूत्—प्रासादो देवदत्तस्य, प्राकारो नगरस्येति । अथ क्रियमाणेऽपि स्याद्ग्रहण इह कस्मान्न भवति—प्रासादो देवदत्तस्य

प्र०—तु शब्दान्तरं वत्सर्षभशब्दवत् । औपधेयन्त्विति । सत्यपि क्रियापेक्षद्रव्यस्य तादर्थ्ये प्रकृतिविकारभावाभावात् । वचनादिति । कर्मसाधनकिप्रत्ययान्तादुपधिशब्दात्स्वार्थे ढञ्प्रत्ययः, उपध्यौपधेयशब्दयोर्लोके पर्यायत्वादेकस्यार्थस्यात्मापेक्षया तादर्थ्यं, प्रकृतिविकारभावात् ॥ १३ ॥

तदस्य । स्याद्ग्रहणमिति । क्रियमाणेऽपि स्याद्ग्रहणे नैवातिप्रसङ्गनिवृत्तिः, इतिकरणादेव च सर्वातिप्रसङ्गनिवृत्तिः सेत्स्यतीति प्रश्नः । प्रासादो देवदत्तस्येति । अक्रियमाणे स्याद्ग्रहणे स्वस्वामिसम्बन्धादावतिप्रसङ्ग उक्तः । अस्येति षष्ठ्या सम्बन्धमात्रस्य प्रतिपादनात्, सामान्ये च सर्वविशेषान्तर्भावात् । ननु तदर्थग्रहणानुवृत्त्याऽत्र न भविष्यति, तथा च'छदिरुपधिबलेर्ढ'ञित्यत्र भाष्यं—"बाढमर्थं" इत्यादि । एवं तर्हि सति, स्याद्ग्रहणे प्रासादार्थोऽयं देवदत्त उत्पन्नो योग्योऽयं प्रासादलाभ इति तादर्थ्यसम्भवात्प्रत्ययप्रसङ्गः ।

अथेति । यदा देवदत्तनामा केन चिदीश्वरो दृष्टस्ततः प्रासादं विस्तीर्णं दृष्ट्वाऽसौ सम्भावयति—नाऽयं प्रासादोऽन्यस्य सम्भवति देवदत्तस्यायं प्रासादः स्यादिति तदा प्रत्ययः प्राप्नोतीत्यर्थः । नन्वत्र तादर्थ्यं न प्रतीयत इति प्रत्ययो न भविष्यति । एवं तर्हि 'प्रासादलाभयोग्योऽसौ देवदत्तः प्रासादार्थ' इत्येवं विवक्षायामिदमुदाहरणम् । अथवा तदर्थग्रहणमत्र नानुवर्त्तते इतिकरणेनानिष्टनिवृत्तेः साधयिष्यमाणत्वात् । पूर्वसूत्रे तु भाष्यकारेणेतिकरणापरामर्शेन प्रसङ्गा-

उ०—लबन्धता । यत्त्वाम्रफलदृष्टान्तेन प्रकृतिविकृतिभावाऽभाव इत्युक्तं, तत्राह—आम्रन्त्विति । तत्त्वबुद्धिः—प्रत्यभिज्ञारूपा । वैषम्यान्तरमप्याह—आमपक्वे ति । एवञ्च पक्वाम्रे प्रख्याभेदाऽभावात्प्रकृतिविकारभावाऽभाव इति भावः ॥ १३ ॥

तदस्य तद । ननु स्याद्ग्रहणं सम्भावनार्थकत्वेन स्वस्वामिभावादिसम्बन्धव्यावृत्त्यर्थमत आह—क्रियमाणेऽपीति । 'प्रासादो नगरस्य स्या'दित्यादावतिप्रसङ्गस्त्वादिति भावः । सर्वेति । एवञ्च व्यापकत्वात्तदेव कार्यमिति भावः । नन्वत्र स्वस्वामिभावोऽवयवावयविभावश्च तत्वेन विवक्षितो न तु सम्बन्धसामान्यम्, अस्येति च सामान्यार्थकमतो न दोषोऽत आह—अस्येति षष्ठ्येति । तादर्थ्यसम्भवादिति । 'तदस्ये'त्यर्थे प्रत्ययो भवति, सम्बन्धी चेत्तदर्थो भवतीति तदर्थः । प्रासादार्थस्य देवदत्तस्याऽयं प्रासाद इत्यर्थे 'प्रासादीय' इति स्यादिति,—इह मा भूदित्यादेरर्थः । ननु तत्स्वामिकत्वेन निर्णीते प्रासादे कथं सम्भावनाविषयत्वमत आह—यदेति । स्वस्वामिभावविषयेऽपि सम्भावनासत्वेन न तेन तादृशसम्बन्धव्या-

स्यात्, प्राकारो नगरस्य स्यादिति । 'शक्यार्थे लि'ङिति वक्तव्यम् । नैवं शक्यम् । इदानीमेव ह्युक्तं—'न ह्युपाधेरुपाधिर्भवति विशेषणस्य वा विशेषण'मिति† ।

एवं तर्हीतिकरणः क्रियते । ततश्चेद्विवक्षा भवति । विवक्षा च द्वयी । अस्त्येव प्रायोक्त्री विवक्षा, अस्ति लौकिकी । प्रायोक्त्री विवक्षा,—प्रयोक्ता हि मृद्वया स्निग्धया

प्र०—न्तरेण तदर्थग्रहणस्यैवानुवृत्तिर्दर्शिता, न त्वसौ सिद्धान्तस्तथा चान्यार्थमपि दारु योग्यता मात्रेण 'प्रासादीय'मुच्यते । न च तत्र तादर्थ्यलेशोऽप्यस्ति, न च प्रतीयते येनाऽसदपि तादर्थ्यं बुद्धया परिकल्प्य प्रयोगः क्रियेत । **शक्यार्थ इति** । स्याच्छक्यार्थ इति पठितव्यमित्यर्थः । **इदानीमेवेति** । चिरवृत्तमपि वस्तु बुद्धया भावितत्वात्प्रत्यासन्नमिव प्रतीयते, 'उपदेशेऽजनुनासिक इ'दित्यत्रेदमुक्तम्—'प्रायग्रहणादसंज्ञायामपि घञ्भवति, प्रायवचनात्संज्ञायामेव घञ्स्याद्वा न वा, न ह्युपाधेरुपाधिर्भवति विशेषणस्य वा विशेषण'मिति । तत्र हि घञ्विधेयत्वात्प्रधानं तस्यैव प्रायग्रहणं सञ्ज्ञाग्रहणञ्च विशेषणं न्याय्यम्, न तु संज्ञायाः प्रायग्रहणं विशेषणं, परार्थस्य स्वसंस्कारप्रतिपत्तावयोग्यत्वाच्छब्देन पारार्थ्यापन्नस्यैव प्रत्यायनादेकवाक्यत्वाच्च । उपाधिविशेषणशब्दयोश्च क्वचित्पर्यायत्वं क्रियाभावशब्दयोरिव, क्वचित्तु भेदेन व्यवहारः । तदुक्तम्—

**अर्थविशेष उपाधिस्तदन्तवाच्यः समानशब्दो यः ।**
**अनुपाधिरतोऽन्यः स्याच्छ्लाघादिविशेषणं यद्वत् ॥'** इति ।

तत्र स्यादित्येतत्प्रकृत्यर्थविशेषणायोपात्तं परतन्त्रमयोग्यं शक्यार्थ इत्यनेन विशेषणेन संबन्धानुभवे । ननु विशेषणसंबन्धमनुभूय प्रकृत्यर्थं विशेषयिष्यति । नैतदस्ति । विशेषणसंबन्धा-

उ०—वृत्तिरिति भावः । भाष्योदाहरणाऽन्तरेभ्यः 'प्रासादार्थे' इत्यादेरलाभादाह—**अथवेति** । **भाष्यकारेणेति** । तदेकदेशिनेत्यर्थः । न हि सिद्धान्तिनोऽज्ञानकल्पना युक्ता । **प्रसङ्गान्तरेणेति** । औपधेये तदर्थग्रहणाऽनुवृत्तावपि प्रत्ययस्य स्वार्थिकत्वव्युत्पादनप्रसङ्गे नेत्यर्थः । ननु शक्यार्थे लिङः 'शकि लिङ्चे'ति सूत्रेणैव सिद्धेर्वक्तव्यत्वोक्तिरसङ्गतेत्यत आह—**स्याच्छक्यार्थ इति** । यत्प्रथमासमर्थं तच्चेच्छक्यार्थकस्यात्पदत्रोध्यमित्यर्थः । तदस्य शक्यमित्यर्थे प्रत्ययो वक्तव्य इत्यर्थः । एवञ्चाऽविकारिकारण एवाऽयम्प्रत्यय इति नोक्तदोष इति भावः । तत्र सम्भावनाविषयस्वस्वामिभावस्यैव प्रतीतिर्न तु कारणत्वस्येति तात्पर्यम् । नन्विदं प्रथमे उक्तं, तत्कथमिदानीमेवेत्युच्यतेऽत आह—**चिरेति** । **परार्थस्येति** । परविशेषणत्वेन प्रतीतस्येत्यर्थः । यथा राजसेवकस्य राजसेवाकरणकाले स्वसेवककृतसेवया संस्काराऽभाव इति भावः । तदेवाह—**शब्देन पारार्थ्येति** । सप्तम्येत्यर्थ । **एकेति** । घञ्विध्येकवाक्यतापन्नत्वादिति भावः । एतेन 'अवान्तरवाक्यार्थात्तदर्थः प्रागिति तत्र तस्य स्वातन्त्र्यमेवे'ति परास्तम् ।

**तदन्तवाच्यः**—प्रत्ययान्तशब्दवाच्यः । **समानशब्दः**—समानाऽधिकरणशब्दः । यथा 'दृतिहरिः पशु'रिति,—कर्त्तुः प्रत्ययेनाऽभिधानात्पशोरुपाधित्वम् । **अतोऽन्यः**—प्रत्ययाऽवाच्यो व्यधिकरणश्चेत्यर्थः, यथा 'गार्गिकया श्लाघते' इति श्लाघा । **तत्रेति** । प्रथमासमर्थात् षष्ठ्याद्यर्थे प्रत्यय इत्येकं वाक्यं, यत्तत्प्रथमा-

† १ । ३ । २ वा० २ व्याख्याभाष्ये ।

श्लक्ष्णया जिह्वया मृदून्स्निग्धान्श्लक्ष्णान्शब्दान् प्रयुङ्क्ते । लौकिकी विवक्षा,—यत्र प्रायस्य संप्रत्ययः । प्राय इति लोको व्यपदिश्यते । न च 'प्रासादो देवदत्तस्य स्यात्' 'प्राकारो नगरस्य स्या'दित्यत्रोत्पद्यमानेन प्रत्ययेन प्रायस्य संप्रत्ययः स्यात् ।

यद्येवं, नार्थः स्याद्ग्रहणेन । न हि प्रासादो देवदत्तस्य प्राकारो नगरस्येत्यत्रोत्पद्यमानेन प्रायस्य संप्रत्ययः स्यात् ॥ १६ ॥

प्र०—नुभवे प्रधानत्वं तस्य स्यात्, नतूपाधित्वं प्रतीतिकाल एव तस्य पारार्थ्यमवगतमिति कुतो विशेषणसम्बन्धः । अथोपाधिद्वयेन प्रकृत्यर्थः संबध्येत, तदिहापि प्रसज्येत—'शक्यः प्रासादो देवदत्तस्य स्या'दिति । तत्र ज्ञातुमुपभोक्तुं वा शक्य इति प्रकृत्यर्थस्य शक्यार्थत्वविशेषणसंबन्धसंभवः । मृदूनिति । अपभ्रंशानित्यर्थः । तस्मात्प्रयोक्तृविवक्षा नाश्रीयते, प्रयोक्तुः स्वातन्त्र्यान्नियमाभावात् । प्रायस्येति । समग्रकल्पस्येत्यर्थ । तस्माद्यत्रार्थे लोकाः शब्दान्प्रयुञ्जते तदर्थाभिधायिन एव शास्त्रेणानुविधीयन्ते, प्रयोगमूलत्वाद्व्याकरणस्मृतेः । अयमेव न्यायः क्वचिदितिकरणेनोपसंगृह्यते । तत्रेतिशब्दो हेत्वर्थः सन्विवक्षामनुसारयति । योऽयमर्थस्तदस्य तदस्मिन् स्यादिति तदर्थप्रत्यायनाय यदा विवक्षा भवत्यतो हेतोरयमर्थः—प्रत्ययोत्पत्तिनिमित्तत्वेनाश्रीयत इति । अथवा एवमर्थवृत्तिरितिशब्दो विवक्षामनुसारयति । एवं यदि लोकस्य विवक्षा भवति तत्र प्रत्यय इत्यर्थः । न च लोकस्य प्रासादो देवदत्तस्य स्यादित्यर्थप्रतिपादनाय प्रासादीयो देवदत्त इति शब्दप्रयोगेच्छा भवति, भवाद्यर्थप्रतिपादनायैवैतच्छब्दप्रयोगात् ॥ १६ ॥

उ०—समर्थं तच्चेत्स्यादिति द्वितीयम् । तत्र द्वितीये प्रकृत्यर्थः प्रधानम्, विशेष्यत्वात्, 'स्या'दित्येतच्च विशेषणत्वेन प्रतीयमानत्वादप्रधानमिति न तस्य विशेषणान्तरेण सम्बन्ध इति भावः । नन्विति । 'गुणः कृतात्मसंस्कार' इति न्यायादिति भावः । नन्वन्यनिरूपितप्रधानत्वेऽप्यन्यनिरूपितविशेषणत्वं स्यात्को विरोधोऽत आह—प्रतीतिकाल एवेति । अयं भावः—

'आख्यातं तद्धितार्थस्य यत्किञ्चिदुपदर्शकम् ।
गुणप्रधानभावस्य तत्र दृष्टो विपर्ययः ॥' इति ।

'तदर्हति' इति सूत्रस्थभाष्यसंमतन्यायेन शक्योत्पत्तिकर्तृवाचकप्रथमान्तादस्येत्यर्थे प्रत्यय इत्यर्थो वाच्यः, तत्र च शक्यत्वमसधात्वर्थोत्पत्तिविशेषणं, तस्याश्चोपस्थितिकाले एव कर्तृविशेषणतयोपस्थितेर्न तत्र विशेषणाऽन्वय इति । ननु कथं प्रासादस्य शक्यार्थरूपविशेषणसम्बन्धः, स्वरूपेणाऽशक्यत्वादत आह—तत्र ज्ञातुमिति । शक्यार्थविशेषणसम्बन्धेति । शक्यार्थः शक्यत्वं तद्रूपविशेषेणेत्यर्थः । तस्मादिति । यतः प्रयोक्तारो मार्दवगुणाऽऽदरेणाऽसाधूनपि प्रयुञ्जत इत्यर्थः । समग्रेति । 'समग्र'शब्दार्थविषये समर्थः समग्रकल्पः स 'प्राय'शब्देनोच्यत इत्यर्थः । लोकाः शब्दानिति । साधुप्रयोगादरशालिनः शिष्टलोका इत्यर्थः । अनुसरणप्रकारमाह—योऽयमिति । भवादीति । आदिना जातः ॥ १६ ॥

## आर्हादगोपुच्छसंख्यापरिमाणाट्ठक् ॥ ५ । १ । १९ ॥

किमर्थं सङ्ख्यायाः पृथग्ग्रहणं क्रियते, न संख्याऽपि परिमाणमेव, तत्र परिमाणपर्युदासेन पर्युदासो भविष्यति । एवं तर्हि सिद्धे सति यत्सङ्ख्यायाः पृथग्ग्रहणं करोति तज्ज्ञापयत्याचार्य्योऽन्या सङ्ख्याऽन्यत्परिमाणमिति । किमेतस्य ज्ञापने प्रयोजनम् ? 'अपरिमाणविस्ताचितकम्बल्येभ्यो न तद्धितलुकि' [ ४ । १ । २२ ] इति द्वाभ्यां शताभ्यां क्रीता द्विशता त्रिशता,—परिमाणपर्युदासेन पर्युदासो न भवतीति ।

यद्येतज्ज्ञाप्यते—'तदस्य परिमाणम्' 'संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु' [ ५ । १ । ५७; ५८ ] इति विशेषणं न प्रकल्पते,—'परिमाणं या सङ्ख्ये'ति । इह च 'क्रीतवत्परिमाणात्' [ ४ । ३ । १५६ ] इति सङ्ख्याविहितस्य प्रत्ययस्याऽतिदेशो न प्रकल्पते,—शतस्य विकारः शत्यः शतिकः साहस्र इति‡ ।

यत्तावदुच्यते—'एतज्ज्ञापयत्याचार्य्योऽन्या सङ्ख्याऽन्यत्परिमाण'मिति, नैतज्ज्ञापकसाध्यमन्या सङ्ख्याऽन्यत्परिमाणमिति । न्यायसिद्धमेवैतत् । भेदमात्रं

प्र०—आर्हाद । किमर्थमिति । परिमीयतेऽनेनेति परिमाणमिति क्रियाशब्दत्वात्परिमाणशब्दस्य संख्याया अपि परिच्छेदहेतुत्वात् पृथग्ग्रहणं न कर्त्तव्यमिति मत्वा प्रश्नः । एवंतर्हीति । आचार्य्यदेशीयः परिहरति । यथा प्राच्यत्वाद्भरतानां ग्रहणे सिद्धे 'बह्वच' इत्यत्र भेदेनोपादानमन्यत्र प्राच्यग्रहणे भरतग्रहणनिवारणार्थं, तेने'ञः प्राचा'मिति भरतेभ्यो युवप्रत्ययस्य लुङ्न भवति—औद्दालकिः पिता, औद्दालकायनः पुत्र इति । एवमिहापि संख्याग्रहणमन्यत्र परिमाणग्रहणे संख्याया अग्रहणार्थं, तेन द्वाभ्यां शताभ्यां क्रीता द्विशतेत्यत्र द्विगुलक्षणस्य ङीपोऽपरिमाणान्तत्वात्प्रतिषेधः सिध्यति । यथा पञ्चाश्वेति । 'पणपादे'ति नित्ये यति प्राप्ते 'शाणाद्वे'त्यत्र 'शतशाणाभ्यां वे'ति वचनाद्यत्प्रत्ययाभावात्पक्षे 'शताच्च ठन्यतावशते'इत्यत्राऽसमासग्रहणानुवृत्त्या

उ०—आर्हाद । ननु 'परिमाणन्तु सर्वत' इत्युक्तेः सङ्ख्या कथम्परिमाणमत आह—परिमीयतेऽनेनेति । रूढेरग्राऽप्यज्ञानादिति भावः । ननु वास्तवे भेदे ज्ञापकं व्यर्थम्, असति तु तस्मिन् ज्ञापकेन कथं तत्त्वमत आह—यद्येति । द्विशतेत्येतदुपपादयति—पणपादेति नित्ये यतीति । तस्य च विधानसामर्थ्याल्लुगभाव इत्यर्थः । ननु ठन्यतोरपि विधानसामर्थ्याल्लुगभाव इत्यत आह—असमासेति । एवञ्च समासे तदप्राप्तिरेवेति भावः ।

ननु 'परिमाण'शब्दस्य यौगिकत्वात्कथमन्या सङ्ख्येत्यत आह—परिमाणशब्द इति । योगरूढोऽयमिति भावः । द्रोणादौ—सर्वतो मानत्वविशिष्टे । वैलक्षण्यं—सङ्ख्यान्तरप्रयोजकवस्तुसाहित्याऽभावरूपं,

‡ शताच्च ठन्यतावशते; शतमानविंशतिकसहस्रवसनादण् ५ । १ । २१; २७

सङ्ख्याह । यच्चेषीकान्तं यच्चाऽपरिमाणं तस्य सर्वस्य सङ्ख्या भेदमात्रं ब्रवीति । 'परिमाणन्तु सर्वतः' । सर्वतो मानमिति चाऽऽतः परिमाणमिति । प्रस्थस्य च समानाकृतेर्न कुतश्चिद्विशेषो गम्यते, न चोन्मानतो न परिमाणतो न प्रमाणतः ।

किं पुनरुन्मानं, किं परिमाणं, किं प्रमाणम् ?

ऊर्ध्वमानं किलोन्मानम्

ऊर्ध्वं यन्मीयते तदुन्मानम् ।

परिमाणन्तु सर्वतः ।

सर्वतो मानमिति चाऽऽतः परिमाणम् । कुत एतत् ? परिः सर्वतो भावे वर्त्तते ।

प्र०—संख्यालक्षणस्य कनोऽ'ध्यर्द्धपूर्वे'ति लुकि कृते द्विशतेति भवति । यद्येतदिति—शिष्य आचार्यदेशीयेनोक्तं दूषणमुद्भावयति । इदानीमाचार्य आह-यत्तावदिति । परिमाणशब्दः क्रियाशब्दत्वेऽपि विशिष्टपरिच्छेदहेतौ द्रोणादौ रूढो न संख्यामभिधेयत्वेन गृह्णाति । यथा पङ्कजशब्दः पद्ममेवाभिदधाति न तु कुमुदादिकमपीत्यर्थः । भेदमात्रमिति । भेदः पदार्थानां वैलक्षण्यं तन्मात्रं संख्याशब्दः प्रतिपादयति । मूर्त्तामूर्त्तगणनात्मकत्वात्संख्यायाः । एको घट इत्यत्रापि द्व्यादिनिरासाद्भेदावगतिरस्त्येव । यच्चेषीकान्तमिति । अपचितपरिमाणोपलक्षणमिषीकान्तग्रहणम् । तेनायमर्थः—हिमवदादि महापरिमाणमपि संख्यया गण्यते-सप्त कुलाचला इति । अपचितपरिमाणमपि—त्रयः परमाणव इति । यच्चापरिमाणमिति । अमूर्त्तमप्यात्मादि गण्यते इत्यर्थः । उन्मानप्रमाणपरिमाणानि तु मूर्त्तद्रव्यविषयाण्येव । क्वचित्पाठः—'यच्च परिमाण'-मिति । तत्रायमर्थः—द्रोणादिपरिमाणमपि संख्यया परिच्छिद्यते—द्वौ द्रोणाविति । परिमाण-

उ०—सङ्ख्यान्तरनिवर्त्तकवस्तुसाहित्यरूपञ्च । सङ्ख्याशब्दइत्यस्य—सङ्ख्याशब्दवाच्यत्वेन प्रसिद्धः शब्द इत्यर्थः । तदाह-मूर्त्तेत्यादि । तत्राऽन्त्यभेदो द्व्यादिशब्दवाच्यः । आद्यस्त्वेकशब्दे इत्याह-एको घट इति । भाष्ये—भेदमात्रमित्यस्य-भेदसहचरितमितरसाहित्यं, तत्सहचरितेतरसाहित्याऽभावश्चेत्यर्थः । यच्चेषीकान्तमिति । चोऽप्यर्थे, तेन—'यदल्पपरिमाणं यच्च महापरिमाणं यच्चाऽपरिमाणं रूपक्रियादि, तत्सर्वं सङ्ख्यया गण्यत इत्यर्थ इत्येके । मूर्त्तिः—असर्वगतद्रव्यपरिमाणम् । अमूर्त्तमप्यात्मादीति । नन्वात्मन्यपि परममहत्परिमाणसत्त्वात्कथमपरिमाणमिति भाष्ये उक्तिः, द्रव्यस्य परिमाणवत्त्वनियमादिति चेन्न; नियमस्य मूर्त्तद्रव्यविषयत्वात्सर्वपरिमाणाऽभाववत्त्वेनैव तत्र परममहदादिव्यवहारस्य गौणत्वादिति कैयटाशयः । मूर्त्तद्रव्यविषयाण्येवेति । तदपि न सर्वमूर्त्तद्रव्यविषयमित्यपि बोध्यम् । सर्वस्य-मूर्त्ताऽमूर्त्तस्य । आरोहः—उच्छ्रायः । परिणाहो—विस्तारः । एतौ च न मेयगतावित्याह—स्वगताभ्यामिति । परिमाणशब्दस्य प्रस्थादिमात्रवृत्तियोगमाह-भाष्ये—सर्वतो मानमिति चात इति । परिमाणभेदकत्वादपि न सङ्ख्या परिमाणमित्याह—प्रस्थस्य चेति । सङ्ख्ययैवेति । 'न कुतश्चि'दिति भाष्यस्य-सङ्ख्याया अन्यतः कुतश्चिद्विशेषो न गम्यत इत्यर्थः । भिन्नसन्निवेशस्येति । प्रस्थान्तराद्भिन्नसन्निवेशस्य प्रस्थस्येत्यर्थः ।

**आयामस्तु प्रमाणं स्यात्**

आयामविवक्षायां प्रमाणमित्येतद्भवति ।

**सङ्ख्या बाह्या तु सर्वतः ॥**

आतश्च सर्वतः सङ्ख्या बाह्या ।

**भेदमात्रं ब्रवीत्येषा नैषा मानं कुतश्चन ॥**

एवञ्च कृत्वा सङ्ख्यायाः पृथग्ग्रहणं क्रियते ।

यदप्युच्यते 'तदस्य परिमाणम्' 'संख्यायाः संज्ञासङ्घसूत्राध्ययने'ष्विति विशेषणं न प्रकल्पत' इति, आहायं 'परिमाणं या संख्ये'ति, न चाऽस्ति संख्या परिमाणं, तत्र वचनादियती विवक्षा भविष्यति ।

---

प्र०—ग्रहणं चोपलक्षणं, सर्वस्य संख्यापरिच्छेद्यत्वात् । तदुक्तम्—

दिष्टिप्रस्थसुवर्णादि मूर्त्तिभेदाय कल्पते ।
क्रियाभेदाय कालस्तु सङ्ख्या सर्वस्य भेदिका' ॥ इति ।

**सर्वत इति** । आरोहपरिणाहाभ्यां स्वगताभ्यां धान्यादि येन मीयते काष्ठादिमयेन तत्परिमाणं प्रस्थादिकमुच्यते । **प्रस्थस्य चेति** । सङ्ख्ययैव विशेषो गण्यते—द्वौ प्रस्थौ त्रयः प्रस्था इति न त्वन्यत इत्यर्थः । भिन्नसन्निवेशस्य हस्तादिनापि परिच्छेदो भवतीति समानाकृतिग्रहणं समानसन्निवेशप्रतिपादनार्थम् ।

प्रसङ्गेन उन्मानप्रमाणयोरपि स्वरूपप्रतिपादनं प्रश्नपूर्वकं करोति—**किं पुनरिति** । **ऊर्ध्वमिति** । ऊर्ध्वदिगवस्थितं परिच्छेदकमुन्मानमुच्यते । यथा हास्तिनमुदकमित्यत्र हस्तीति केचिदाहुः । अन्ये तु—हस्त्यादेः प्रमाणे एवाऽन्तर्भावात्तुलादण्डादावारोप्य येन द्रव्यान्तरपरिच्छिन्नगुरुत्वेन पलादिशब्दवाच्येन पाषाणादिना सुवर्णादेर्गुरुत्वं मीयते तदुन्मानं, तच्चोर्ध्वारोपणादूर्ध्वमुच्यत इत्याहुः । **आयाम इति** । विस्तारो येन मीयते दारुवस्त्रादीनां तत्प्रमाणं हस्तादि, तच्चायामपरिच्छेदित्वादुपचारादायामशब्देनोच्यते । **नैषेति** । न **कुतश्चित्**—संनिवेशादेः संख्या

---

उ०—पूर्वग्रन्थेनाऽसङ्गतिमाशङ्क्याह—प्रसङ्गेनेति । 'न चोन्मानत' इत्याद्युक्तिरप्येवं प्रश्नपूर्वकं तत्स्वरूपनिरूपणायैवेति बोध्यम् । भाष्ये–यन्मीयते इति । मीङो दैवादिकस्य रूपम् । परिच्छेदं करोतीत्यर्थः । तदाह—ऊर्ध्वदिगवस्थितमिति । हस्त्यादेरिति । द्विविधायामस्याऽपि प्रमाणत्वादिति भावः । आहुरिति । अत्राऽरुचिबीजन्त्वेवम्—'पुरुषद्वयसम्' 'हस्तिनीद्वयस'मित्यादौ 'प्रमाणे ल' इति नित्यलुगापत्तिः । अयं नित्यो लुगिति तत्रैव भाष्यकैयटयोः स्पष्टमित्याहुः । तस्माद्द्विविधमपि तदुन्मानमेवेति बोध्यम् । तिर्यग्विस्तारपरिच्छेदकमेव च प्रमाणमिति । विस्तारो—दैर्घ्यम् । नन्वायामपरिच्छेदके आयामशब्दः कथमत आह—तच्चायामेति । न कुतश्चिदिति । एषा सङ्ख्या कुतश्चित्सन्निवेशादेर्न मानमपि तु तन्निरपेक्षं मानमित्यन्वयः । अनेन सन्निवेशनिरपेक्षत्वसापेक्षत्वाभ्यां सङ्ख्यापरिमाणयोर्भेद उक्तः । किञ्चाऽनेन ग्रन्थेन सङ्ख्यायाः

यदप्युच्यते—'क्रीतवत्परिमाणादिति च सङ्ख्याविहितस्य प्रत्ययस्यातिदेशो न प्रकल्पत' इति, सङ्ख्याया इति च तत्र वक्तव्यम् ।

किं पुनरिमे ठगादयः प्रागर्हाद्भवन्त्याहोस्वित्सहार्हेण* । कश्चात्र विशेषः ?

**ठगादयः प्रागर्हाच्चेदर्हे तद्विधिः ॥ १ ॥**

ठगादयः प्रागर्हाच्चेदर्हे तद्विधिः । अर्हे ठगादयो विधेयाः । शतमर्हति शत्यः शतिकः, साहस्र इति† ।

'वस्ने वचनात्सिद्धम्' । इह यः शतमर्हति शतं तस्य वस्नो भवति, तत्र 'सोऽस्यांशवस्नभृतयः' [ ५ । १ । ५६ ] इत्येव सिद्धम् ।

**वस्ने वचनात्सिद्धमिति चेन्मांसौदनिकादिष्वप्राप्तिः ॥ २ ॥**

वस्ने वचनात्सिद्धमिति चेन्मांसौदनिकादिष्वप्राप्तिः । मांसौदनिकोऽतिथिः । श्वैतच्छत्रिकः कालायसूपिकः ।

तथा गुणानां परिप्रश्नो भवति—किमयं ब्राह्मणोऽर्हति ? शतमर्हति शत्यः शतिकः साहस्रः नैष्किकः‡ इति न सिध्यति ॥ सन्तु तर्हि सहाऽर्हेण ।

प्र०—मानं–सन्निवेशादिनिरपेक्षं मानमित्यर्थः । तथाहि—द्वौ मेरुसर्षपावित्यपि भवति । इयतीयिवक्षेति । रूढिपरित्यागेन परिच्छेदकत्वमात्रमाश्रयिष्यते इत्यर्थः । नन्वेवमप्यव्यभिचारात्संख्याया विशेषणमनर्थकम् । नैष दोषः । प्रत्ययार्थस्य यदा परिच्छेदिका संख्या तदा प्रत्ययो यथा स्यात्पञ्चको गोसङ्घ इति । यदा तु प्रकृत्यर्थस्यैव परिच्छेदिका संख्या पञ्चगावोऽस्य सङ्घस्येति तदा मा भूदित्येवमर्थं संख्या परिमाणग्रहणेन विशेष्यते । संख्या इति तत्रेति । लक्ष्यसिद्धये संख्याग्रहणं तत्राधिकं कर्त्तव्यमित्यर्थः ।

किं पुनरिति । किं मर्यादायामाङ्, अथाभिविधाविति प्रश्न । अर्हतिशब्दैकदेशानु-

उ०—सर्वंबाह्यत्वोक्त्या तेषामबाह्यत्वमपि परस्परं सूचितम् । अत एवाऽ'परिमाणविस्ते'ति सूत्रे, 'परिमाणान्तस्ये'ति सूत्रे च परिमाणग्रहणेनोन्मानग्रहणमपि । अतएव ङीप्प्रतिषेधे विस्ताचितग्रहणं, द्वितीये शाणपर्युदासश्च सङ्गच्छते । भाष्ये—इयतीति । यौगिकार्थमात्रविषयेत्यर्थः । तदाह—रूढिपरित्यागेनेति । योग्यतावशाच्च विशिष्टस्योपस्थितावपि तावन्मात्रस्यैव शाब्दबोधविषयतेत्याशयः । ईदृशे विषये लक्षणेत्यन्ये । पञ्चको गोसङ्घ इत्यस्य पञ्चसङ्ख्यापरिच्छेद्यो गोसङ्घ इत्यर्थः । तत्राऽधिकमिति । लक्षणैकचक्षुषां योगार्थमात्रतात्पर्यग्रहस्य वक्तुमशक्यत्वाद्वचनमेव कार्यमिति भावः । अर्हतिशब्देति । 'तदर्ह'मिति सूत्रस्थाऽजन्तग्रहे स्वार्हो-

* तदर्हति ५ । १ । ६३  † शताच्च ठन्यतावशते; शतमानविंशतिकसहस्रवसनादण् ५ । १ । २१; २७  ‡ असमासे निष्कादिभ्यः ५ । १ । २०

## आर्हाच्चेद्भोजनादिष्वतिप्रसङ्गः ॥ ३ ॥

आर्हाच्चेद्भोजनादिष्वतिप्रसङ्गो भवति । भोजनमर्हति पानमर्हतीति ॥ किमुच्यते—'भोजनादिष्वतिप्रसङ्ग'इति, यदा छेदादिभ्य इत्युच्यते × । अवश्यं मांसौदनिकाद्यर्थं योगविभागः कर्त्तव्यः+ । 'तदर्हति' ततः—'छेदादिभ्योनित्य'मिति । तस्मिन् क्रियमाणे भोजनादिष्वतिप्रसङ्गो भवति ।

## उक्तं वा ॥ ४ ॥

किमुक्तम् ? अनभिधानादिति* । अनभिधानाद्भोजनादिष्वतिप्रसङ्गो न भविष्यति ।

अथवा योगविभागो न करिष्यते । कथं मांसौदनिकोऽतिथिः श्वैच्छत्रिकः कालायसूपिकः । 'अस्मिन्दीयतेऽस्मा इति च'† एवमेतत्सिद्धम् ।

अथवा पुनः सन्तु प्रागर्हात् । ननु चोक्तं 'ठगादयः प्रागर्हाच्चेदर्हे तद्विधि'-रिति । परिहृतमेतद्वस्ने वचनात्सिद्धमिति । ननु चोक्तं "वस्ने वचनात्सिद्धमिति चेन्मांसौदनिकादिष्वप्राप्तिरिति । तथा गुणानां परिप्रश्नो भवति—किमयं ब्राह्मणोऽ-

प्र०—करणञ्चात्रार्हशब्दः । वस्नेवचनादिति । पटादेरर्थस्य शत्यादिशब्दैरभिधानादिति भावः । मांसौदनिक इति । नहि मांसौदनोऽतिथेर्मूल्यमिति भावः । अस्मिन्दीयत इति । अधिकरणत्वं सम्प्रदानत्वं वा विवक्षित्वा प्रत्ययो विधास्यत इति विकल्पप्रदर्शनार्थमुभयोरुपादानम् । तत्र 'तदस्मिन्वृद्ध्यायलाभशुल्कोपदादीयते' इति योगविभागः क्रियते । 'तदस्मिन्नि'त्येको योगः । 'वृद्ध्यायलाभशुल्कोपदा' इति द्वितीयः, पूर्वयोगस्याऽसर्वविषयत्वज्ञापनार्थः । 'दीयते' इति तृतीयो योग उभयोर्योगयोः शेषः । ततो दीयते तदस्मिन्निति सप्तम्यर्थे ठगादयः प्रत्यया भवन्ति । 'तदस्मिन्दीयते तदस्मा इति चोपसङ्ख्यान'मितिवचनाच्चतुर्थ्यर्थेपि भवन्तीति सर्वेष्टसिद्धिः । यद्यप्यर्हतेऽपि

उ०—दित्यस्य वैयर्थ्यापत्तिः, 'प्राग्वते'रित्येव सिद्धेः । न चाऽभिविध्यर्थतया वत्यर्थेऽपि एतदधिकारार्थन्तत्, वत्यर्थमभिव्याप्त्याऽधिकाराऽनिष्टेः । विशेषविहितकना वतेर्बाधापत्त्या'वेकवचाऽस्याऽन्यतरस्या'मिति प्रयोगविरोधापत्तेरिति भावः । वस्ने इति । वस्नो—मूल्यम् । विकल्प इति । भाष्ये चशब्दो वाऽर्थ इति भावः । ननु 'तदस्मि'न्निति सूत्रस्य 'वृद्ध्याये'त्यादिवाक्यशेषात्कथमन्यत्र प्रत्ययोऽत आह—तत्रेति । इति योगविभाग इति । इत्यत्र योगविभाग इत्यर्थः । नन्वेवं चतुर्थ्यर्थे न स्यादत आह—तदस्मिन्दीयते

× छेदादिभ्यो नित्यम् ५ । १ । ६४ + तदर्हति; छेदादिभ्यो नित्यम् ५ । १ । ६३; ६४
* ३ । २ । १ वा० ५ १—'भवति' पा० । † ५ । १ । ४७ वा० १

र्हति ? शतमर्हति—शत्यः शतिकः साहस्रः नैष्किक इति न सिध्यती''ति । नैष दोषः । 'अस्मिन्दीयतेऽस्मा इति च' एवमेतत्सिद्धम् ॥ १६ ॥

## असमासे निष्कादिभ्यः ॥ ५ । १ । २० ॥

असमास इति किमर्थम् ? परमनिष्केण क्रीतं परमनैष्किकम्* । नैतदस्ति । निष्कशब्दात्प्रत्ययो विधीयते तत्र कः प्रसङ्गो यत्परमनिष्कशब्दात्स्यात् । नैव प्राप्नोति नाऽर्थः प्रतिषेधेन । तदन्तविधिना† प्राप्नोति । ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते ॥ अत उत्तरं पठति—

प्र०—न दीयते तथापि योग्यतया संभावितदानाश्रयप्रत्ययोत्पादनेन विशिष्टस्वरूपनित्यशब्दव्युत्पत्तिरविरुद्धेति मन्यते ॥ १६ ॥

असमा । असमास इति । वक्ष्यमाणः प्रष्टुरभिप्रायः । परमनैष्किकमिति । ठञेवाऽत्र भवति । निष्कशब्दस्य परिमाणवाचित्वात्पूर्वेणाप्राप्तोऽनेन ठग्विधीयते । निष्कादिष्विति । पूर्वत्रग्रहणं वार्त्तिककारः पठन्कृष्णतिल्यादिसिद्धिमेव प्रयोजनं मेने । भाष्यकारस्तु न्यायव्युत्पादनाय पूर्वत्रग्रहणमविवक्षितार्थं मत्वा प्रयोजनानि प्रदर्श्य दूषयित्वा च कृष्णतिल्याद्यर्थत्वमेव ज्ञापकस्य स्थापयिष्यति । प्राग्वतेष्ठञित्यत्रेति । तेन परमनिष्कशब्दाट्ठञ्सिद्धो भवति । केवला-

उ०—तदस्मा इति । एवं च 'प्राक्'पदाऽनुवृत्त्यैव सिद्धे आङ्ग्रहणसामर्थ्यादभिविध्यर्थक एवाऽयमत्रेति निष्कर्षः ॥ १६ ॥

असमासे । ठञेवाऽत्रेति । 'असमास' इति पर्युदासेनाऽस्याऽप्राप्तेः । ननु निष्कस्योन्मानत्वेनाऽपरिमाणत्वात्पूर्वेणैव ठकि सिद्धेऽस्य नियमार्थत्वेन निष्कशब्दात्प्रत्ययो विधीयत इत्यादिभाष्याऽसङ्गतिरत आह—परिमाणवाचित्वादिति । एतद्भाष्यप्रामाण्येनाऽत्र परिमाणविशेषवाचकानामेव निष्कादीनां ग्रहणमिति भावः । तेषां तद्वाचित्वेऽपीदमेव भाष्यं मानम्, असमासग्रहणस्य तदन्तविधिज्ञापकतापरं भाष्यञ्च मानम् । अन्यथा पणपादादिविषये पूर्वसूत्रप्राप्तठको निवृत्त्या तच्चारितार्थ्यं स्पष्टमेव । यद्वा पूर्वेण ठकि सिद्धे इदं व्यर्थमत आह—परिमाणवाचित्वादिति । पूर्वसूत्रे उन्मानस्याऽपि परिमाणग्रहणेन ग्रहणादिति भावः । पणपादादयोऽप्युन्मानमेवेति बोध्यम् । 'परिमाणान्तस्याऽसंज्ञाशाणयो'रित्युत्तरपदवृद्धिः । शाणपर्युदासाच्च तत्रोन्मानमपि गृह्यते । परिमाणविशेषा एव वा निष्कादयः । यद्यपि 'उत्तरपदस्ये'ति सूत्रभाष्येऽत्र सूत्रे 'संख्यायाः' इत्यनुवृत्तिरुक्ता, तथाऽप्यत्रत्यप्रयोगरूपभाष्यविरोधेनोत्तरपदाऽधिकारप्रयोजनखण्डकपूर्वपक्ष्युक्तिरूपतद्भाष्यं प्रौढिवाद इति भावः । अत एव 'परिमाणान्तस्ये'त्यन्तग्रहणं चरितार्थम् । 'संख्यायाः' इत्यनुवृत्तौ तु तद्वैयर्थ्यं स्पष्टमेव । यद्वा 'संख्यायाः' इत्यनुवर्त्य तत्र वाक्यभेदेन व्याख्येयम् । तेन 'परिमाणान्तस्ये'त्यस्याऽसंख्यापूर्वपदे क्वाचित्कत्वम् । अत एवाऽस्याऽप्युत्तरपदे एव प्रवृत्तिरिति न तत्राऽधिकारप्रयोजन-

* प्राग्वतेष्ठञ् ५ । १ । १८ परिमाणान्तस्यासंज्ञाशाणयोः ७ । ३ । १७

† येनविधिस्तदन्तस्य १ । १ । ७२

## निष्कादिष्वसमासग्रहणं ज्ञापकं पूर्वत्र तदन्ताऽप्रतिषेधस्य ॥ १ ॥

निष्कादिष्वसमासग्रहणं क्रियते ज्ञापकार्थम् । किं ज्ञाप्यम् ? एतज्ज्ञापयत्याचार्य्यः 'पूर्वत्र तदन्तविधेः प्रतिषेधो न भवती'ति । किमेतस्य ज्ञापने प्रयोजनम् ? 'प्राग्वतेष्ठञ्' [ ५ । १ । १८ ] इत्यत्र तदन्तविधिः सिद्धो भवति । नैतदस्ति प्रयोजनम् । ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते, न च ठञ्विधौ काचित्प्रकृतिर्गृह्यते ।

इदं तर्हि प्रयोजनम्—'आर्हादगोपुच्छसङ्ख्यापरिमाणाट्ठक्', [ ५ । १ । १९ ] परमगोपुच्छेन क्रीतं पारमगोपुच्छिकम्‡ । अत्र तदन्तविधिः सिद्धो भवति । एतदपि नास्ति प्रयोजनम् । विधौ प्रतिषेधः, प्रतिषेधश्चाऽयम् ।

प्र०—त्प्रातिपदिकाट्ठञ्विधीयमानः समासान्न स्यादित्याभासमात्रेणेदमुक्तम् । न च ठञ्विधाविति । यत्र विशिष्टा प्रकृतिरुपादीयते तत्र तदन्तविधेः प्रतिषेधः । ठञ्विधौ तु ङ्याप्प्रातिपदिकाधिकारात्प्रातिपदिकमात्रं प्रकृतित्वेनाश्रीयते । तत्र समासस्याऽपि प्रातिपदिकत्वात्तदन्तविधेर्न विधिर्न प्रतिषेध इति ठञ्सिद्ध्यतीति भावः । पारमगोपुच्छिकमिति । ठक्प्रतिषेधाट्ठञ्भवति । यद्येवं केवलस्य प्रतिषेधो न प्राप्नोति—गौपुच्छिक इति । नैष दोषः । यस्यां परिभाषायां प्रातिपदिकस्य श्रुतिरस्ति सेह नोपतिष्ठत इति सामान्यापेक्षं ज्ञापकमाश्रीयते । तेन 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' 'व्यपदेशिवद्भावोऽप्रातिपदिकेने'ति द्वयोरप्यत्रानुपस्थानात्तदन्तविधिना तदन्तस्यकार्यं, केवलस्यापि व्यपदेशिवद्भावेन । विधौ प्रतिषेध इति । 'पूर्वादिनिः' 'सपूर्वाच्चे'ति प्रत्ययविधौ 'ग्रहणवते'त्येतस्याः परिभाषाया ज्ञापितत्वाद्यत्रैव प्रत्ययो विधीयते तत्रैवाऽनया तदन्तविधिः प्रतिषिध्यते । 'अगोपुच्छसंख्यापरिमाणा'दित्यनेन तु ठक् प्रतिषिध्यत इति न तदन्त-

उ०—मिति तदाशयः । एतेन 'संख्यायाः संवत्सरसंख्यस्य चे'त्यत्र संवत्सरग्रहणमन्यत्र परिमाणग्रहणे कालाऽग्रहणज्ञापकमिति भाष्य उक्तम् । तत्प्रामाण्याच्च 'परिमाणाऽन्तस्ये'त्यत्र 'संख्याया' इत्यनुवृत्तिरवश्यवाच्या । अन्यथा 'संवत्सरस्य चेत्संख्याया' इति नियमार्थतासम्भवेनोक्तार्थज्ञापकता न स्यादित्यपास्तम् । 'परिमाणन्तु सर्वत' इति लक्षणलक्षितपरिमाणत्वस्य संख्यायामिव कालेऽभावाल्लक्ष्याऽनुरोधेनाऽसञ्जातविरोधन्यायेन च विधित्वमङ्गीकृत्य तज्ज्ञापनमेव युक्तमित्यभिप्रायाच्चेत्याहुः । अत एव—'विभाषा कार्षापणे'ति सूत्रे 'अध्यर्द्धसौवर्णिक'मित्यादिष्वनेन वृद्धिर्वर्ण्यते कैयटेन । अन्यथा समासकन्विध्योरेव तस्य संख्यात्वेन तदसङ्गतिः स्पष्टैव ।

ननु वार्त्तिके 'पूर्वत्रे'त्युक्तेर्भाष्ये 'पारायण' इत्यादेरुदाहरणत्वं कथमत आह—पूर्वत्रेति । प्रयोजनानीति । 'पारायणे'ति सूत्रविषयाण्यपीत्यर्थः । आभासमात्रेणेति । तद्बीजन्तु 'ग्रहणवते'ति सिद्धान्त्युक्तिः । ननु प्रातिपदिकरूपा प्रकृतिस्तत्राऽस्त्येवेत्यत आह—यत्र विशिष्टेति । तत्रैव विशेष्यसन्निधानात्तदन्तविधि-

‡ प्राग्वतेष्ठञ् ५ । १ । १८

एवं तर्हि ज्ञापयत्याचार्यः—'इत उत्तरं तदन्तविधेः प्रतिषेधो न भवती'ति । किमेतस्य ज्ञापने प्रयोजनम् ? 'पारायणतुरायणचान्द्रायणं वर्त्तयति' [ ५ । १ । ७२ ] द्वैपारायणिकः त्रैपारायणिकः । अत्र तदन्तविधिः सिद्धो भवति । एतदपि नास्ति प्रयोजनम् । वक्ष्यत्येतत्—'प्राग्वतेः सङ्ख्यापूर्वपदानां तदन्तग्रहणमलुकी'ति × ।

पूर्वत्रैव तर्हि प्रयोजनम् । 'खलयवमाषतिलवृषब्रह्मणश्च' [ ५ । १ । ७ ] इति । कृष्णतिलेभ्यो हितः कृष्णतिल्यः । राजमाषेभ्यो हितं राजमाष्यम् ।

**प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकि ॥ २ ॥**

प्राग्वतेः सङ्ख्यापूर्वपदानां तदन्तग्रहणमलुकि कर्त्तव्यम् । 'पारायणतुरायण-

प्र०—विधिप्रतिषेधो, नापि व्यपदेशिवद्भावप्रतिषेधः । अन्ये त्वाहुः—गोपुच्छात्परष्ठक् साधुर्न भवतीत्येवं प्रतिषेधे विज्ञायमाने गोपुच्छश्रुतेः सर्वत्राऽविशेषात्केवलात्तदन्ताच्च ठकोऽसाधुत्वं सिध्यतीति नाऽत्र तदन्तविधिना प्रयोजनमिति तदभावे तत्प्रतिषेधस्याऽप्यप्रसङ्ग इति ज्ञापनस्यापि न प्रयोजनम् । वक्ष्यत्येतदिति । तच्चावश्यं वक्तव्यमसत्यस्मिन् ज्ञापके । विध्यर्थं सति तु नियमार्थं संख्यापूर्वपदानामेव यथा स्यादिह माभूत्—परमपारायणं वर्त्तयतीति । तथा लुगन्तायाः प्रकृतेर्माभूत्—द्विशूर्पेण क्रीतं द्विशौर्पिकमिति ।

राजमाष्यमिति । ननु राजमाषशब्दस्य जात्यन्तरवाचित्वान्माषशब्दस्यानर्थक्यादत्र प्रत्ययो न प्राप्नोति । नैष दोषः । यथैकविंशतिर्नरसिंहो गौरखरो लोहितशालिरित्यादीनां समुदायानामर्थान्तराभिधायित्वेऽपि नावयवानामानर्थक्यं तथास्यापि । शब्दसंस्काराय हि शास्त्रे सर्वत्र परिकल्पितार्थवत्ताश्रीयते । तात्त्विकी तु वाक्यस्यैव, तस्यैवार्थस्यप्रत्यायनाय प्रयोगात् । द्वाभ्या-

उ०—प्रसक्तेरिति भावः । यद्येवमिति । व्यपदेशिवद्भावस्त्वप्रातिपदिकेनेति निषिद्ध इति भावः । सामान्यापेक्षमिति । स निषेधः सूत्रोपात्ताऽन्तादिशब्दविषयक इत्यपि बोध्यम् । इदञ्च'येन विधि'रित्यत्र कैयटे स्पष्टम् । विधावेव प्रतिषेध इत्यर्थे मानमाह—पूर्वादित्यादि । अन्यथा 'पूर्वादिनि'रित्येव तदन्तविधिना सिद्धे 'सपूर्वाच्चे'ति वैयर्थ्यं स्पष्टमेव । अत्रैव 'पूर्वात्सपूर्वादिनि'रित्येकसूत्रे कर्त्तव्ये योगविभागो 'व्यपदेशिवद्भावोऽप्रातिपदिकेने'त्यस्य ज्ञापको बोध्यः । अन्ये त्वाहुरिति । अत्राऽरुचिबीजन्तु विधावप्येवमेवाऽर्थापत्तौ 'ग्रहणवते'त्यस्य निर्विषयत्वापत्तिर्भाष्यविरोधश्च । आनर्थक्यादिति । अनर्थकेन तदन्तविधेरभावादिति भावः । नाऽवयवानामानर्थक्यमिति । अत एव सुबन्तत्वसमानाऽधिकरणत्वप्रयुक्तसमाससिद्धिरिति भावः ।

नन्वेतत्काल्पनिकं न वास्तवं तत्राह—शब्दसंस्काराय हीति । भाष्ये—प्राग्वतेरिति । इत ऊर्द्ध्वमार्हीयेऽनार्हीये चेति शेषः । 'अलुकी'त्युक्तेः फलं दर्शयति—समासे कृते इति । अन्नभावे इति ।

× ५ । १ । २० वा० २

चान्द्रायणं वर्त्तयति' । द्वैपारायणिकः त्रैपारायणिकः । अलुकीति किमर्थम् ? द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम् त्रिशूर्पम्+ । द्विशूर्पेण क्रीतं द्विशौर्पिकम् त्रिशौर्पिकम्* ॥२०॥

## शताच्च ठन्यतावशते ॥ ५ । १ । २१ ॥

### शतप्रतिषेधेऽन्यशतत्वेऽप्रतिषेधः ॥ १ ॥

शतप्रतिषेधेऽन्यशतत्वे प्रतिषेधो न भवतीति वक्तव्यम् । इह मा भूत्—शतेन

प्र०—मिति । तद्धितार्थेति समासे कृते 'शूर्पादञन्यतरस्या'मित्यञ्ठञोरन्यतरस्याऽध्यर्द्धेति लुक् । ततो द्विशूर्पेण क्रीतमित्यत्रभावे सामान्यविहितष्ठञ्भवति । तस्य द्विगुनिमित्तत्वाभावाल्लुगभावः । 'परिमाणान्तस्ये'त्युत्तरपदवृद्धिः ॥ २० ॥

शताच्च । 'संख्याया' इति कनि प्राप्ते ठन्यतौ विधीयेते । तत्राऽशत इति प्रत्ययार्थस्य विशेषणं, न प्रकृतेरसंभवात् । नहि शतशब्दस्याऽशते वृत्तिः सम्भवति । तत्र प्रत्ययार्थस्य द्विविधं शतत्वम्—प्रकृत्यर्थव्यतिरिक्तसंख्येयान्तरविषयं, प्रकृत्यर्थविषयं च । तत्र पूर्वं यथाशतेन क्रीतं शत्यं शाटकशतमिति । अपरन्तु शतमध्यायाः परिमाणमस्य ग्रन्थस्य शतक इति । अत्र हि केवलं प्रत्ययोत्पादनाय प्रकृतिप्रत्ययार्थयोर्भेदविवक्षा, तात्त्विकस्त्वभेद इति प्रत्ययार्थस्यैकत्वेऽपि शतत्वमस्त्येव । यथा शतमित्येकत्वे विभक्तिवाच्ये सत्यपि शतत्वं न निवर्त्तते । तत्राद्यस्य निषेधो मा भूदित्याह—शतप्रतिषेध इति । तत्र केचिदाहुः—न्यायसिद्ध एवार्थो वार्त्तिककारेण प्रतिपादितः । प्रकृत्यर्थस्य शतस्य यत्र प्रत्ययार्थत्वं तत्रान्तरङ्गमहेयं संख्यान्तरा-

उ०—लुगन्तायाः प्रकृतेस्तदन्तविधिना ग्रहणाऽभावादिति भावः । अलुकीत्यस्य लुगन्ता या प्रकृतिस्तद्विषयस्तदन्तविधिर्नेति वाच्योऽर्थः ॥ २० ॥

शताच्च ठ । वार्तिकोत्थानायाह—संख्याया इति । प्रकृत्यर्थेति । तद्व्यतिरिक्तं यत्संख्येयान्तरं संख्येयविशेषस्तद्विषयं—तदाश्रितमित्यर्थः । यथा शतेनेति । अत्र च प्रत्ययार्थस्य शतत्वं शाटकशतादिपदान्तरसमभिव्याहारगम्यमिति बोध्यम् । अपरन्त्विति । इदञ्च पदान्तराऽनपेक्षं प्रत्ययान्तशब्दश्रवणमात्रेणैव गम्यते प्रत्ययाऽर्थोऽपि शतमिति ।

नन्वत्र प्रकृतिप्रत्ययार्थयोर्भेदाऽभावात्कथं 'तदस्य परिमाण'मिति प्रत्ययः, अपि च प्रत्ययार्थस्यैकत्वात्कथं शतत्वमत आह—अत्र हीति । आरोपितभेदमादायैव प्रत्ययोत्पत्तिरिति भावः । अन्त्यं समाधत्ते—प्रत्ययार्थस्यैकत्वेऽपीति । इत्याहेति । इतिर्हेतौ । भाष्ये—अन्यशतत्वे इति । प्रकृत्यर्थाऽतिरिक्तगतशतत्वस्य प्रत्ययाऽर्थत्वे इत्यर्थः । तत्राऽन्तरङ्गमिति । पदाऽन्तरसमभिव्याहाराऽनपेक्षत्वादन्तरङ्गत्वम् । अहेयमिति । 'शत्यं शाटकशत'मित्यादौ 'शत्यं शाटकद्वय'मित्यस्याऽपि सम्भवात्तस्य हेयत्वम् । अत एव तत्संख्यान्तरसाधारणमित्याहुः । अन्ये त्वाहुरिति । शब्दमर्यादाऽनुसारिण इत्यर्थः । अनुमीयत इति ।

+ तद्धितार्थोत्तरपदसमाहारे च २ । १ । ५१; शूर्पादञन्यतरस्याम्; अध्यर्धपूर्वद्विगोर्लुगसञ्ज्ञायाम् ५ । १ । २६; २८ * प्राग्वतेष्ठञ् ५ । १ । १८; परिमाणान्तस्यासंज्ञाशाणयोः ७ । ३ । १७

क्रीतं शत्यं शाटकशतमिति ॥ अन्यशतत्व इति किम् ? शतकं निदानम् ॥ २१ ॥

## संख्याया अतिशदन्तायाः कन् ॥ ५ । १ । २२ ॥

डतेश्चेति वक्तव्यम् । इहापि यथा स्यात्—कतिभिः* क्रीतं कतिकम् । किं पुनः कारणं न सिध्यति ? 'त्यन्ताया ने'ति प्रतिषेधः प्राप्नोति ।

### तिप्रतिषेधाड्डतिग्रहणमिति चेदर्थवद्ग्रहणात्सिद्धम् ॥ १ ॥

अर्थवतस्तिशब्दस्य ग्रहणं न च डतेस्तिशब्दोऽर्थवान् ।

नैषा परिभाषेह शक्या विज्ञातुम् । न हि केवलेन प्रत्ययेनाऽर्थो गम्यते । केन तर्हि ? सप्रकृतिकेन । क्व तर्ह्येषा परिभाषा भवति । यान्येतानि शब्दसङ्घातग्रहणानि ।

प्र०—साधारणं च शतत्वम्, अन्यत्र तु शत्यं शाटकशतमित्यादौ शब्दान्तरप्रयोगसमधिगम्यत्वाद्बहिरङ्गमिति तत्र प्रतिषेधाप्रसङ्गः । अन्ये त्वाहुः—शतको ग्रन्थ इत्यत्र ग्रन्थस्यैकसंख्यत्वाच्छतत्वमनुमीयते । तत्र यथा वृक्ष इत्यत्र मूलाद्यवयवसमवेतबहुत्वसंख्याश्रयं बहुवचनं न भवति, एवमशत इति प्रतिषेधो ग्रन्थे न प्राप्नोतीति वार्तिकारम्भः । ततोऽन्यशतत्वे प्रतिषेधाऽभावात्सामर्थ्यादनुमीयमानशतत्वविषयः प्रतिषेधः संपद्यते । एवञ्च सति शतं गावः परिमाणमस्य गोसङ्घस्य शतको गोसङ्घ इत्यत्रापि प्रतिषेधो भवति । 'आपिशलकाशकृत्स्नयोस्त्वग्रन्थ' इति वचनादन्यत्र प्रतिषेधाभावो नियतकालाश्च स्मृतयो व्यवस्थाहेतव इति मुनित्रयमतेनाऽद्यत्वे साध्वसाधुप्रविभागः ॥२१॥

**संख्यायाः ।** डतेश्चेति । विंशतिशब्दात्तु 'विंशतिकात्ख' इति ज्ञापकात्कन्भवति । न च डतेरिति । समुदायस्यार्थवत्त्वात्तदवयवस्तिशब्दोऽनर्थकोऽत एव विंशतिशब्दे शतिचः प्रत्ययत्वात्तिशब्दस्यानर्थक्याज्ज्ञापकमन्तरेणापि कन्सिद्धः ।

**नैषेति ।** लौकिक्यर्थवत्ता प्रकृतीनां प्रत्ययानां च नास्ति, केवलानां प्रयोगाभावादिति भावः । यान्येतानीति । यद्यपि प्रत्यया अपि शब्दसङ्घातास्तथापि तेषामानर्थक्यादर्थवन्तः शब्द-

उ०—अवयवगतं तदारोप्य शब्दजन्योधोत्तरप्रतीतिविषयीक्रियत इत्यर्थः । बहुवचनं न भवतीति । तस्य बहुत्वस्य शब्दजप्रतीतिविषयत्वाऽभावादिति भावः । एवमिति । अस्य शतत्वस्य प्रत्ययार्थवृत्तितया शब्देनाऽप्रतीतेरिति भावः । अन्यशतत्वे इति । तत्र हि प्रत्ययार्थस्य शब्देनैव प्रतीयते शतत्वमिति तत्रैव स्यादिति भावः । नियतकालाश्चेति । 'कलौ पाराशरी स्मृति'रितिवदिति भावः ॥ २१ ॥

संख्याया अ । ननु डतेरुपसंख्यानेऽपि विंशतेः कन्न स्यात्तस्याऽपि त्यन्तत्वादत आह—विंशतीति । ज्ञापकमन्तरेणाऽपीति । यदा विंशादेशस्तिप्रत्ययश्च तदा तु ज्ञापकादेव सिद्धिर्बोध्या । ननु शास्त्रेणाऽर्थवत्तावोधनात्कथमेतदत आह—लौकिकीति । संग्रहणे इति । समादेर्लौकिकीमर्थवत्तां मन्यते । अन्वय-

* किंमः सङ्ख्यापरिमाणे डति च ५ । २ । ४१; बहुगणवतुडति सङ्ख्या १ । १ । २३

तर्हि वक्तव्यम् ? न वक्तव्यम्—'अर्थवद्ग्रहणात्सिद्धम्'। ननु चोक्तं 'नैषा परिभाषेह शक्या विज्ञातुं न हि केवलेन प्रत्ययेनार्थो गम्यते, केन तर्हि सप्रकृतिकेने'ति। केवलेनाऽपि प्रत्ययेनाऽर्थो गम्यते। कथम् ? उक्तमन्वयव्यतिरेकाभ्याम्† ॥ २२ ॥

## वतोरिड्वा ॥ ५ । १ । २३ ॥

कस्याऽयमिड्विधीयते ? कन इत्याह। तत्कनो ग्रहणं कर्त्तव्यम्, अक्रियमाणे हि प्रत्ययाधिकारात्प्रत्ययोऽयं विज्ञायेत‡। टित्करणसामर्थ्यादादिर्भविष्यति ×। अस्त्यन्यट्टित्करणस्य प्रयोजनं 'टित' इतीकारो यथा स्यात्+। अकारान्तप्रकरण ईकारो न चैषोऽकारान्तः। एवमपि कुत एतत्—टित्करणसामर्थ्यादादिर्भविष्यति न पुनरकारान्तप्रकरणे सत्यनकारान्तादपीकारः स्यात्। तस्मात्कनो ग्रहणं कर्त्तव्यम्।

प्र०—सङ्घाता इह विवक्षिताः। यथोक्तं—'सङ्ग्रहणे पायसं करोतीति सुगन भवति। उद्ग्रहणे गर्मुद्ग्रहणं न भवति—गर्मुत्स्यास्यतीति। हन्ग्रहणे प्लीहन्ग्रहणं न भवति—प्लीहानाविति'। केवलेनापीति। शास्त्रव्यवस्थाहेतुरन्वयव्यतिरेकगम्यार्थवत्ताश्रीयत इत्यर्थः। अत एव शेऽर्थवद्ग्रहणात्काशे कुशे वंशे इत्यादौ शेशब्दस्य ग्रहणाभावः। उपसर्गाणामपि केवलानां प्रयोगाभावाल्लौकिक्या अर्थवत्ताया अभावादन्वयव्यतिरेकव्यवस्थाप्यैवाऽसावाश्रीयते ॥ २२ ॥

वतोरि। कस्यायमिति। टित्त्वादस्यागमत्वं निश्चितम्, आगमी तु न निर्दिष्ट इति तद्विषयः प्रश्नः। वतोरिति पञ्चमीनिर्देशाद्वत्वन्तस्यागमित्वमयुक्तम्। कन इति। वत्वन्तरस्य संख्यात्वात्पूर्वेण विहितस्येति भावः। आनन्तर्याच्च कनमागमिनं मन्यते। तदिति। संख्यायास्तावदनेकस्य प्रत्ययस्य विधानादागमिविशेषो दुर्लभः। प्रत्ययाधिकाराच्च 'चरेष्ट'इत्यादिवदिटः प्रत्ययत्वप्रसङ्गः। अनकारान्तादिति। यथा डित्यभस्यापि टिलोपः। अथ प्रयोजनाभावाट्टकार-

उ०—व्यतिरेकगम्येति। शास्त्रवासनाकल्पिताऽन्वयव्यतिरेकगम्येत्यर्थः। उपसर्गाणामपीति। धातोरप्युपलक्षणम्। लौकिक्या अर्थवत्ताया ग्रहणे तु उपसर्गादीनामपि तदभावात्तदसङ्गतिः स्पष्टैवेति दिक्। अन्वयव्यतिरेकेति। ताभ्यां व्यवस्थापनीयैवेत्यर्थः ॥ २२ ॥

वतोरिड्वा। ननु 'वत्वन्तादि'डित्यर्थोऽप्रत्ययविधेश्च'कस्याऽयमि'डित्यनुपपन्नमत आह—टित्वादिति। पञ्चमीति। व्याख्यानादिति भावः। सङ्ख्यात्वात्—संख्यासंज्ञत्वात्। ननु सङ्ख्यावाचकेभ्यः 'पाञ्चि'रित्यादाविञादिरपि विहित इति कन एवेति कुतस्तत्राह—आनन्तर्याच्चेति। सङ्ख्यायास्तावदिति। व्याप्तिन्यायाश्रयणादानन्तर्याऽनादरं मन्यते।

† अर्थवदधातुः [ १ । २ । ४५ ] इति सूत्रे ६ वार्तिके; १ । ३ । १ वा० ६.
‡ प्रत्ययः ३ । १ । १ × आद्यन्तौ टकितौ १ । १ । ४६ + टिड्ढाणञ्द्वयसच्० ४ । १ । १५

न कर्त्तव्यम् । प्रकृतमनुवर्त्तते । क्व प्रकृतम् ? 'सङ्ख्याया अतिशदन्तायाः कन्' [ ५ । १ । २२ ] इति । तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः । 'वतो'रित्येषा पञ्चमी कनिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति—'तस्मादित्युत्तरस्य' [ १ । १ । ६७ ] इति । प्रत्ययविधिरयं न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका भवन्ति । नायं प्रत्ययविधिः । विहितः प्रत्ययः । प्रकृतश्चानुवर्त्तते ॥ २३ ॥

## विंशतित्रिंशद्भ्यां ड्वुनसंज्ञायाम् ॥ ५ । १ । २४ ॥

असंज्ञायामिति किमर्थम् ? त्रिंशत्कः विंशतिकः । कथं चाऽत्र कन्भवति ? 'सङ्ख्यायाः कन्भवती'ति+ । 'अतिशदन्ताया' इति प्रतिषेधः प्राप्नोति । एवं तर्ह्या-

प्र०—स्येत्संज्ञा न भवतीति कस्मान्न कल्पयते । नैतदस्ति । 'हलन्त्य'मिति श्रुतेर्बलीयस्त्वादत इति प्रकरणस्य दुर्बलस्य बाधोपपत्तौ प्रयोजनलाभात् । नचेति । पञ्चमी हि प्रत्ययस्वरूपमुत्पादयति । यथा 'गुप्तिज्किद्भ्यः स'निति, न तु षष्ठीं प्रकल्पयति, असतः षष्ठीप्रकल्पनाभावादिति भावः । प्रकृतश्चेति । स्वरितत्वप्रतिज्ञानादिति भावः । ननु विधानार्थाऽपि कनोऽनुवृत्तिः संभवति इटा मा बाधीति तत्रेट्कनौ वा भवतः पक्षे ठञिति प्रत्ययत्रयं स्यात् । नैष दोषः । पूर्वसूत्रेण तावत्कन्विहित इति तस्येहानुवृत्तिर्विधानार्था न भवतीति प्रतीतिरुपजायते । तस्मादित्युत्तरस्येत्येषा च परिभाषात्रतिष्ठते, तत्र किमनिष्टप्रकल्पनयाऽनेकबाधोऽस्तु, अथेष्टप्रकल्पनया सर्वानुग्रह इति ? तत्र सर्वानुग्रहो न्याय्यः, लक्ष्यस्य तथावस्थानाच ॥ २३ ॥

विंशति । प्रत्ययान्तनिपातनमिति । कन्प्रत्ययान्तोच्चारणमित्यर्थः । ननु विंशतिशब्दे शतिचः प्रत्ययत्वात्तिशब्दस्यानर्थक्यात्प्रतिषेधप्रसङ्गाभावात्किं ज्ञापकाश्रयणेन । उच्यते—द्विदशशब्दस्य विंशादेशस्तिप्रत्यय इत्येषा प्रक्रियाऽऽश्रीयते । एवं हि ज्ञापकाश्रयेण त्रिंशच्छब्दोऽपि

उ०—युक्त्यन्तरमाह—प्रत्ययाऽधिकाराच्चेति । प्रत्ययविधौ पञ्चम्याः प्रकल्पकत्वाऽभावे बीजमाह—पञ्चमी हीति । प्रत्ययसंज्ञाविशिष्टस्य तद्योगे विधानात्तस्याऽप्रत्ययस्वरूपोत्पादकत्वं बोध्यम् । प्रकृताऽनुवृत्तौ तु पूर्वसूत्रविहितत्वेन सत्त्वात्तत्र षष्ठीप्रकल्पनं युक्तमित्युत्तरम् । अनेकेति । विधानार्थत्वाऽभावपूर्वकनियामकत्वप्रतीतेस्तस्मादिति परिभाषायाश्चेत्यर्थः । तथाऽवस्थानाच्चेति । 'तावतिकस्तावत्क' इत्येवमेवाऽवस्थानादित्यर्थः । एवञ्च लक्ष्याऽनुसारि व्याख्यानमेवाऽत्र शरणमिति भावः ॥ २३ ॥

विंशतित्रिं । ननु निपातनत्वे ज्ञापकत्वोक्तिरसङ्गतेत्यत आह—कन्प्रत्ययान्तेति । एषा प्रक्रियेति । भाष्यानुगुण्यादेतत्प्रक्रियाश्रयणमेव युक्तमिति भावः । तत्प्रक्रियाश्रयणे युक्त्यन्तरमप्याह—एवं हीति । निर्देशः स्यादिति । विंशत्यादिनवत्यन्तानां स्त्रीत्वात्स्वार्थिकानामप्रकृतिलिङ्गाऽनतिवर्त्तनादितिभावः ।

+ सङ्ख्याया अतिशदन्तायाः कन् ५ । १ । २२

चार्य्यप्रवृत्तिर्ज्ञापयति—'भवत्यत्र क'निति, यदयं 'विंशतिकात्खः' [ ५ । १ । ३२ ] इति प्रत्ययान्तनिपातनं करोति । विंशतेरेतज्ज्ञापकं स्यात् । नेत्याह योगापेक्षं ज्ञापकम् ॥ अथवा योगविभागः करिष्यते । 'विंशतित्रिंशद्भ्यां' कन्भवतीति । ततो 'ड्वुनसंज्ञाया'मिति ॥ २४ ॥

## कंसाट्टिठन् ॥ ५ । १ । २५ ॥

### टिठन्नर्धाच्च ॥ १ ॥

टिठन्नर्धाच्चेति वक्तव्यम् । अर्धिकः अर्धिकी ।

### कार्षापणाद्वा प्रतिश्च ॥ २ ॥

कार्षापणाट्टिठन्वक्तव्यो वा च प्रतिरादेशो वक्तव्यः । कार्षापणिकः कार्षापणिकी । प्रतिकः प्रतिकी ॥ २५ ॥

प्र०—सिध्यति । अन्यथा त्रिंशच्छब्दे शतोऽर्थवत्त्वादशदन्ताया इति प्रतिषेधः स्यात् । ननु विंशतिशब्दादज्ञाताद्यर्थविवक्षायां कन्प्रत्यये विंशतिकशब्दः स्यादिति कथं ज्ञापकम् । नैतदस्ति । स्वार्थिके कन्प्रत्यये विंशतिकाया इति निर्देश. स्यात् । असंज्ञायां ड्वुनो विधानात्संज्ञाविषयमेव ज्ञापकमाश्रीयणीयम् । योगापेक्षमिति । यथा पुंवदितियोगापेक्षत्वाज्ज्ञापकस्य वत्यर्थे नञ्स्नञोरप्रवृत्तौ 'स्त्रीव'दित्यपि भवति, एवमेतद्योगापेक्षं 'विंशतिका'दिति ज्ञापकमिति त्रिंशत्कशब्दोपि संज्ञायां भवतीत्यर्थः ॥ २४ ॥

कंसात् । अर्धिकइति । अर्द्धशब्दः कार्षापणस्यार्द्धे रूढ इति भागवदपेक्षायामसामर्थ्यं नाशङ्कनीयमिति केचिदाहुः । अन्ये तु प्रकरणादिवशाद्यदा निर्ज्ञातो भागवद्विशेषो भवति तदा नास्त्यसामर्थ्यमिति सर्वस्यैवाऽर्द्धस्य ग्रहणेन भाव्यमित्याहुः ॥ २५ ॥

उ०—सूत्रेऽस्य शब्दपरत्वादिदमयुक्तम् । व्याख्यानात्तस्याऽग्रहणमिति वक्तुं युक्तम् । नन्वेवमसंज्ञायामप्येतस्माज्ज्ञापकाद् 'विंशतिक'इति स्यादत आह—असंज्ञायामिति । एतद्योगेति । 'विंशतित्रिंशद्भ्यामिति' योगेत्यर्थः ॥ २४ ॥

कंसाट्टिठन् । कंसाट्टिठनिति पाठान्तरम् । भागवदपेक्षयेति । अर्द्धशब्दस्य भागवाचित्वादिति भावः । इत्याहुरिति । वस्तुतो नित्यसापेक्षत्वेन गमकत्वान्नाऽसामर्थ्यमिति बोध्यम् । कंसशब्दोऽत्र पूर्वोत्तरसाहचर्यात्परिमाणवाच्येव गृह्यते, न लौहविशेषादि वाचीत्याहुः ॥ २५ ॥

## अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम् ॥ ५ । १ । २८ ॥

### द्विगोर्लुक्युक्तम् ॥ १ ॥

किमुक्तम् ? तत्र* तावदुक्तं—'द्विगोर्लुकि तन्निमित्तग्रहणमर्थविशेषाऽसम्प्रत्ययेऽतन्निमित्तादपी'ति । इहापि द्विगोर्लुकि तन्निमित्तग्रहणं कर्त्तव्यम् । 'द्विगोर्निमित्तं यस्तद्धितस्तस्य लुग्भवती'ति वक्तव्यम् । इह मा भूत्–द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम्† द्विशूर्पेण क्रीतं द्विशौर्पिकम् त्रिशौर्पिकम्‡ ।

### 'अर्थविशेषाऽसम्प्रत्ययेऽतन्निमित्तादपि' ।

अर्थविशेषस्याऽसम्प्रत्ययेऽतन्निमित्तादपीति वक्तव्यम् । किं प्रयोजनम् ? द्वयोः शूर्पयोः समाहारो द्विशूर्पी, द्विशूर्प्या क्रीतमिति विगृह्य द्विशूर्पमित्येव यथा स्यात् ।

अथ क्रियमाणेऽपि तन्निमित्तग्रहणे कथमिदं विज्ञायते—तस्य निमित्तं तन्निमित्तम् तन्निमित्तादिति ? आहोस्वित्स निमित्तं यस्य सोऽयं तन्निमित्तः तन्निमित्तादिति ? किं चातः ? यदि विज्ञायते—तस्य निमित्तं तन्निमित्तम् तन्निमित्तादिति, क्रियमाणेऽपि हि तन्निमित्तग्रहणेऽत्र प्राप्नोति–द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम्, द्विशूर्पेण क्रीतं द्विशौर्पिकम् त्रिशौर्पिकम् । अथ विज्ञायते—स निमित्तमस्य सोऽयं तन्नि-

---

प्र०—अध्यर्द्ध । द्विगोर्लुक्युक्तमिति । 'द्विगोर्लुगनपत्य'इत्यत्र भाष्ये व्याख्यातमिति तत एव बोद्धव्यम् । संज्ञाप्रतिषेधानर्थक्यमिति । इह वृत्तिकारा असंज्ञाग्रहणं प्रत्ययान्तविशेषणं व्याचक्षते,–न चेत्प्रत्ययान्तं संज्ञेति । पाञ्चलोहितिकपाञ्चकलापिकशब्दौ च परिमाणविशेषस्य संज्ञे इति लुङ्न भवति । वार्तिककारस्तु–द्विगुविशेषणमसंज्ञाग्रहणं संनिधानादवगम्य प्रत्याचष्टे–तन्निमित्तत्वादिति । तस्याः संज्ञाया लोप एव निमित्तमित्यर्थः । पञ्चलोहितपञ्चकलापशब्दौ

---

उ०—अध्यर्द्धपूर्व । समाहारे द्वन्द्वः, सौत्रं पुंस्त्वम् । भाष्ये–द्विशौर्पिकमिति । अत्र द्वितीयस्य ठको लुङ्मा भूदिति भावः । अर्थविशेषेति । तद्धितार्थद्विगुना सह यत्रार्थो न भिद्यते तत्राऽतन्निमित्तद्विगोरपि परस्य लुगित्यर्थः । इति विगृह्य द्विशूर्पमिति । विग्रहो वृत्तिश्चेत्युभयमत्रेष्यते । भाष्ये—इति विगृह्य वाक्यमेवेति । न तु वृत्तिः, अनभिधानादिति भावः । ननु द्विगोः संज्ञात्वाऽभावात्कथमेतत्प्रत्युदाहरणमत आह–इहेति । प्रत्ययान्तविशेषणमिति । सप्तमीनिर्देशादिदं द्विगोर्न विशेषणं, किन्तु प्रत्ययान्तस्याऽ संज्ञात्वे

---

* ४ । १ । ८८ वा० १; २　　† तद्धितार्थोत्तरपदसमाहारे च २ । १ । ५१; शूर्पाद-न्यतरस्याम्; अध्यर्धपूर्वद्विगोर्लुगसञ्ज्ञायाम् ५ । १ । २६ ; २८　　‡ प्राग्वतेष्ठञ् ५ । १ । १८; परिमाणान्तस्यासञ्ज्ञाशाणयोः ७ । ३ । १७　　१—'अस्य' पा० ।

मित्तः तन्निमित्तादिति, न दोषो भवति । यथा न दोषस्तथाऽस्तु । स निमित्तमस्य सोऽयं तन्निमित्तस्तन्निमित्तादिति विज्ञायते । कुत एतत् ? यदयमाह—'अर्थविशेषासम्प्रत्ययेऽतन्निमित्तादपी'ति ।

तत्तर्हि तन्निमित्तग्रहणं कर्त्तव्यम् ? न कर्त्तव्यम् । 'द्विगो'रिति नैषा पञ्चमी । का तर्हि ? सम्बन्धषष्ठी । द्विगोस्तद्धितस्य लुग्भवति । द्विगोर्यस्तद्धितः । किं च द्विगोस्तद्धितः ? निमित्तम् । यस्मिन्द्विगुरित्येतद्भवति । कस्मिंश्चैतद्भवति ? प्रत्यये ।

इदं तर्हि वक्तव्यम्—'अर्थविशेषाऽसम्प्रत्ययेऽतन्निमित्तादपी'ति । एतच्च न वक्तव्यम् । इहास्माभिस्त्रैशब्द्यं साध्यम् । द्वाभ्यां शूर्पाभ्यां क्रीतम् । द्विशूर्प्या क्रीतम् । द्विशूर्पम् त्रिशूर्पमिति । तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रहः करिष्यतेऽपरस्मादुत्पत्तिर्भविष्यत्यविरविकन्यायेन । तद्यथा—अवेर्मांसमिति विगृह्य—अविकशब्दादुत्पत्तिर्भवत्याविकमिति । एवमिहाऽपि द्वाभ्यां शूर्पाभ्यां क्रीतमिति विगृह्य द्विशूर्पमिति भविष्यति, द्विशूर्प्या क्रीतमिति विगृह्य वाक्यमेव भविष्यति ।

असंज्ञायामिति किमर्थम् ? पाञ्चलोहितिकम् । पाञ्चकलापिकम् × ।

**संज्ञाप्रतिषेधानर्थक्यञ्च तन्निमित्तत्वाल्लोपस्य ॥ २ ॥**

संज्ञाप्रतिषेधश्चानर्थकः । किं कारणम् ? तन्निमित्तत्वाल्लोपस्य । नाऽन्तरेण तद्धितं तद्धितस्य च लुकं द्विगुसञ्ज्ञाऽस्ति, यस्तस्मादुत्पद्यते नाऽसौ तन्निमित्तः स्यात् । एवं तर्हीदं स्यात्पञ्चानां लोहितानां समाहारः पञ्चलोहिती, पञ्चलोहित्या क्रीतमिति । अत्रापि पञ्चलोहितमित्येव भवितव्यम् । कथम् ? उक्तं ह्येतत्—'अर्थ-

प्र०—द्विगूक्ततद्धितलुकावेव संज्ञे ततो नार्थः प्रतिषेधेनेत्यर्थः । पञ्चलोहितीति । समाहारद्विगुं संज्ञां मन्यते । ततश्च नलोपनिमित्तैव संज्ञा । अत्रापीति । अव्यविकन्यायेन वाक्यविषय एव समाहारद्विगुरित्यर्थः । अध्यर्द्धग्रहणं चेति । बहुगणादिसूत्र इदमुक्तम् । न च सङ्ख्याकार्याभावज्ञापनमध्यर्द्धग्रहणस्येह प्रयोजनम्, कन्समासाभावप्रसङ्गात् । तस्मात्तत्रत्यं वार्तिकमेव कर्त्तव्यं, तस्मिंश्च

उ०—लुगित्यर्थ इति भावः । पञ्चलोहिन्यः पञ्चकलापाः परिमाणमस्येति 'तद्धितार्थ' इति समासः । 'तदस्य परिमाण'मिति ठञि 'भस्याऽढे' इति पुंवत्त्वाल्लोहिनीशब्देकारनकारयोर्निवृत्तिः । परिमाणविशेषस्येति । तत्सङ्ख्याकगुञ्जाकलापादिपरिच्छिन्नस्येत्यर्थः । द्विगुविशेषणमिति । विषयत्वं सप्तम्यर्थः, संख्याविषयो द्विगुर्न चेदित्यर्थः । तस्याः संज्ञाया इति । सत्येव लुकि संज्ञाप्रतीतेरिति भावः । न चेति । तेन कृत्वसुजभाव इति

× तदस्य परिमाणम्; प्राग्वतेष्ठञ् ५ । १ । ५७; १८   १ 'तन्निमित्तं' पा० ।

विशेषाऽसम्प्रत्ययेऽतन्निमित्तादपी'ति ।

**उक्तंसङ्ख्यात्वे प्रयोजनं तस्मादिहाध्यर्धग्रहणानर्थक्यम् ॥ ३ ॥**

उक्तं सङ्ख्यात्वेऽध्यर्धग्रहणस्य प्रयोजनम् । किमुक्तम् ? 'अध्यर्धग्रहणञ्च समासकन्विध्यर्थं लुकि चाऽग्रहण'मिति* । 'तस्मादिहाध्यर्धग्रहणानर्थक्यम्' । तस्मादिहाऽध्यर्धग्रहणमनर्थकम् । द्विगोरित्येव लुक्सिद्धः ॥ २८ ॥

## विभाषा कार्षापणसहस्राभ्याम् ॥ ५ । १ । २९ ॥

**कार्षापणसहस्राभ्यां सुवर्णशतमानयोरुपसङ्ख्यानम् ॥ १ ॥**

कार्षापणसहस्राभ्यां सुवर्णशतमानयोरुपसङ्ख्यानं कर्त्तव्यम् । अध्यर्धसुवर्णम् अध्यर्धसौवर्णिकम्† । अध्यर्धशतमानम् अध्यर्धशातमानम् । द्विशतमानम् द्विशातमानम्‡ ॥ २९ ॥

## द्वित्रिपूर्वान्निष्कात् ॥ ५ । १ । ३० ॥

## त्रिस्ताच्च ॥ ५ । १ । ३१ ॥

**द्वित्रिभ्यां द्वैयोग्यम् ॥ १ ॥**

'द्वित्रिभ्या'मिति यदुच्यते द्वैयोग्यमेतद् द्रष्टव्यम् । किमिदं द्वैयोग्यमिति ?

प्र०—सतीहाध्यर्द्धग्रहणमनर्थकं द्विगुत्वाल्लुकः सिद्धत्वात् ॥ २८ ॥

विभाषा कार्षापण । अध्यर्द्धसुवर्णमिति । अध्यर्द्धेन सुवर्णेन क्रीतमिति द्विगौ कृते ठञो लुक् । अलुक्पक्षे 'परिमाणान्तस्ये'त्युत्तरपदवृद्धिः । उन्मानस्यापि वृद्धौ शाणप्रतिषेधग्रहणात् । द्विशातमानमिति । शतमानादिसूत्रेणाऽण् ॥ २९ ॥

द्वित्रिपू । द्वयोर्योगयोरिति । तद्धितार्थे द्विगौ कृते'बह्वचोऽन्तोदात्ताट्ठञ्' । 'द्विगोर्लुगन-

उ०—भावः । तस्मादिति । वार्तिके च कृते समासकनोरेव सङ्ख्यात्वोपसङ्ख्यानात् कृत्वसुजभावः सिद्ध एवेति भावः ॥ २८ ॥

विभाषा कार्षा । ठञो लुगिति । सहस्रादन्यस्यैव लुक् । कार्षापणस्य परिमाणत्वे ततोऽन्यस्यैव लुक् । अन्यथा ततष्ठको लुगिति बोध्यम् । शाणप्रतिषेधाद्धेतोरुन्मानस्यापि वृद्धौ ग्रहणादित्यन्वयः ॥ २९ ॥

द्वित्रिपूर्वा । अत्राऽध्यर्द्धग्रहणं न सम्बध्यते, विरोधात्, चस्याऽभावाच्च । द्विगोरिति तु सम्बध्यते ।

* १ । १ । २३ वा० ५; ६ † प्राग्वतेष्ठञ् ५ । १ । १८; परिमाणान्तस्यासंज्ञाशाणयोः ७ । ३ । १७ ‡ शतमानविंशतिकसहस्रवसनादण् ५ । १ । २७ परिमाणान्तस्या० ७ । ३ । १७

द्वयोर्योगयोर्भवं द्वियोगम् द्वियोगस्यभावो द्वैयोग्यमिति ॥ द्वैष्यं विजानीयात्—अविशेषेणेत उत्तरं द्वित्रिभ्यामिति । तदाचार्यः सुहृद्भूत्वाऽन्वाचष्टे 'द्वित्रिभ्यां द्वैयोग्य'मिति ।

**तत्र च बहुग्रहणम् ॥ २ ॥**

तत्र च बहुग्रहणं कर्त्तव्यम् । बहुनिष्कम् बहुनैष्किकम् । बहुविस्तम् । बहुवैस्तिकम् ॥ ३० ॥ ३१ ॥

## खार्या ईकन् ॥ ५ । १ । ३३ ॥

**खार्या ईकन् केवलायाश्च ॥ १ ॥**

खार्या ईकन्केवलायाश्चेति वक्तव्यम् । खारीकम् ।

**काकिण्याश्चोपसङ्ख्यानम् ॥ २ ॥**

काकिण्याश्चोपसङ्ख्यानं कर्त्तव्यम् । अध्यर्धकाकिणीकम् द्विकाकिणीकम् ।

**केवलायाश्च ॥ ३ ॥**

केवलायाश्चेति वक्तव्यम् । काकिणीकम् ॥ ३३ ॥

## शाणाद्वा ॥ ५ । १ । ३५ ॥

**शतशाणाभ्यां वा ॥ १ ॥**

शतशाणाभ्यां वेति वक्तव्यम् । अध्यर्धशतम् अध्यर्धशत्यम् । पञ्चशतम्

प्र०—पत्ये'इति लुक् । अथ द्विगुर्न व्याख्यातव्यनाम तदा अण एव लुक् । द्वैयोग्यशब्देन चाधाराधेयभाव उच्यते । 'समासकृत्तद्धितेषु सम्बन्धाभिधान'मिति वचनात् ॥ ३० ॥ ३१ ॥

खार्या । केवलायाश्चेति । 'अध्यर्द्धपूर्वद्विगो'रित्यधिकारात्केवलाया न प्राप्नोतीति वचनम् ॥ ३३ ॥

उ०—षष्ठीसमासव्यावृत्तय इति बोध्यम् । उत्तरत्र त्वनुवर्त्तत एव । भाष्ये—द्वित्रिभ्यामिति । अनेन सूत्रे 'पूर्वग्रहणं चिन्त्यप्रयोजन'मिति ध्वनयति । आधाराधेयभाव इति । तेन च स्वाश्रयो लक्ष्यत इति 'एतद्द्वैयोग्य'मिति सामानाऽधिकरण्योपपत्तिः । तद्धितप्रयोगस्तु 'प्रियतद्धिता दाक्षिणात्या' इति न्यायेनेति दिक् ॥ ३० ॥ ३१ ॥

खार्या ई । अध्यर्द्धेति । तदसम्बन्धे तु केवले ईकनश्चरितार्थस्य अध्यर्द्धपूर्वद्विगुविषये लुक् स्यादिति बोध्यम् ॥ ३३ ॥

पञ्चशत्यम् । अध्यर्धशाणम् अध्यर्धशाण्यम् । पञ्चशाणम् पञ्चशाण्यम् ।

द्वित्रिपूर्वादण्च ॥ २ ॥

द्वित्रिपूर्वादण्चेति वक्तव्यम् । द्विशाणम् त्रिशाणम् । द्वैशाणम् त्रैशाणम् । द्विशाण्यम् त्रिशाण्यम् ॥ ३५ ॥

## तेन क्रीतम् ॥ ५ । १ । ३७ ॥

तेन क्रीतमिति करणात् ॥ १ ॥

तेन क्रीतमित्यत्र करणादिति वक्तव्यम् । इह माभूद्—देवदत्तेन क्रीतम् यज्ञदत्तेन क्रीतमिति ।

अकर्त्रेकान्तात् ॥ २ ॥

अकर्त्रेकान्तादिति वक्तव्यम् । इह मा भूत्—देवदत्तेन पाणिना क्रीतमिति ।

सङ्ख्यैकवचनाद्द्विगोश्चोपसङ्ख्यानम् ॥ ३ ॥

सङ्ख्याया इति वक्तव्यम् । इहापि यथा स्यात्—पञ्चभिः क्रीतं पञ्चकम् । किं पुनः कारणं न सिध्यति ? एकवचनान्तादिति वक्ष्यति तस्यायं पुरस्तादपकर्षः ।

'एकवचनात्' । एकवचनान्तादिति वक्तव्यम् । इह माभूत्—शूर्पाभ्यां क्रीतं शूर्पैः क्रीतमिति ॥ 'द्विगोश्च' । द्विगोश्चेति वक्तव्यम् । इहापि यथा स्यात्—द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम् त्रिशूर्पमिति ।

यद्येकवचनान्तादित्युच्यते—मुद्गैः क्रीतं मौद्गिकम्, माषैः क्रीतं माषिकमिति न सिध्यति । परिमाणस्य सङ्ख्याया यदेकवचनं तदन्तादिति वक्तव्यम् ॥ तत्तर्ह्येक-

प्र०—शाण । शतशाणाभ्यामिति । शतान्तात्पूर्वेण नित्ये यति प्राप्ते विकल्पार्थं वचनम् । यदभावपक्षे कनो लुक् । 'द्वित्रिपूर्वादण्चे'ति । सूत्रेष्वनार्षः पाठ इति वार्त्तिकारम्भः ॥ ३५ ॥

तेन क्रीतम् । सङ्ख्यैकवचनादिति । समाहारे द्वन्द्वः । परिमाणस्येति । परिमाणस्य या सङ्ख्या तस्या यद्वाचकं द्योतकं वैकवचनं तदन्तादिति वक्तव्यमिति वचनान्मुद्गादीनां द्व्यादीनां चाऽप्रतिषेधः । अनभिधानादिति । वृत्तौ सङ्ख्याविशेषानवगमात्परिमाणशब्देभ्यो द्विवचनबहुवचनान्तेभ्यः प्रत्ययाभावः । एकत्वसङ्ख्यायुक्ते चार्थे तेषां स्वभावतो वृत्त्यैकवचनान्तेभ्य एव प्रत्ययः । द्व्यादयस्तु शब्दा लुप्तायामपि विभक्तौ स्वप्रवृत्तिनिमित्तभूतां सङ्ख्यामव-

उ०—तेन क्रीतम् । भाष्ये—करणादिति । करणत्वञ्च वाक्याऽवस्थायां बोध्यम् । अकर्त्रेकान्तादिति । कर्त्रनवयवादित्यर्थः । द्वन्द्वे द्विवचनं स्यात्समासान्तरन्तु भाष्ये विरुद्धमत आह—समाहारे इति । भाष्ये—अपकर्षः । अपवाद इत्यर्थः । एकवचनान्तत्वाऽभावादप्राप्तौ वचनम् । 'द्विगोश्चे'त्यपि 'एकवचनान्ता'दित्य-

वचनान्तादिति वक्तव्यम् ? तस्मिंश्च क्रियमाणे बहु वक्तव्यं भवति । न वक्तव्यम् ? कस्मान्न भवति—शूर्पाभ्यां क्रीतम् शूर्पैः क्रीतमिति ।

उक्तं वा ॥ ४ ॥

किमुक्तम् ? अनभिधानादिति, ॥ यद्येवं 'करणादकर्त्रेकान्ता'दित्यपि न वक्तव्यम् । कर्तुः कर्त्रेकान्ताद्वा कस्मान्न भवति ? अनभिधानात् ॥ ३७ ॥

## तस्य निमित्तं संयोगोत्पातौ ॥ ५ । १ । ३८ ॥

संयोगोत्पातयोः को विशेषः ? संयोगो नाम स भवति इदं कृत्वेदमवाप्यत इति । उत्पातो नाम स भवति—यादृच्छिको भेदो वा छेदो वा पद्मं वा पर्णं वा ।

**तस्य निमित्तप्रकरणे वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसङ्ख्यानम् ॥ १ ॥**

तस्य निमित्तप्रकरणे वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसङ्ख्यानं कर्त्तव्यम् । वातस्य शमनं कोपनं वा वातिकम् । पैत्तिकम् । श्लैष्मिकम् ।

प्र०—गमयन्तीति तेभ्यः प्रत्ययो भवत्येव । एकयाच मुद्गादिव्यक्त्या क्रयासंभवाद्बहुवचनान्तादेव प्रत्ययः । यदा तु जातिशब्दत्वं मुद्गादीनामभ्युपेयते तदैकवचनान्तेभ्योपि प्रत्ययः । ननु यन्निष्केण क्रीतं तस्य निष्को वस्नो भवतीति 'सोऽस्यांशवस्नभृतय' इत्यनेन प्रत्ययः सिद्ध इति नार्थोऽनेन योगेन । अत्राहुः—यस्य शतं मूल्यं न भवति अथ च तेन क्रीतं कार्यवशात्तदर्थमिदम् ॥ ३७ ॥

तस्यनि । संयोगोत्पातयोरिति । कोऽनयोः शब्दयोरर्थ इति प्रश्नः । नन्वेकार्थत्वं मन्यमानस्य प्रश्नः । कोऽसौ विशेषो येन संयोगोत्पातौ प्रतिपद्यामहे । इदंकृत्वेति । यथा काम्यैर्यागैः पुत्रादयोऽवाप्यन्ते तत्र संयुज्यते फलविशेषेण येन यागादिना करणेन स यागादिरर्थः संयोगः । यादृच्छिक इति । अतर्कितोपनतः । भेद इति ।—वस्त्रादेः । छेद इति ।—उपानदादेः । भाविनः शुभस्याऽशुभस्य वा सूचकोऽर्थ उत्पात इत्यर्थः । तस्य च निमित्तत्वं फलविशेषविषयबुद्ध्युत्पत्तिहेतुत्वात्, न तु फलं प्रति कारणत्वात् । वातिकमिति । शमनकोपने एवात्र प्रत्यया-

उ०—स्याऽपकर्षः । तद्ध्वनयन्नाह द्वाभ्यां शूर्पाभ्यामिति । परिमाणशब्देभ्य इति । वस्तुतोऽनभिधानादिति भाष्योक्तमेव साधु । नन्वेवं द्व्यादिभ्योऽपि न स्यादत आह—द्व्यादयस्त्विति ॥ ३७ ॥

तस्य निमित्तं । न त्वेकार्थत्वमिति । अर्थभेदस्य स्पष्टत्वादिति भावः । यदवाप्यते स संयोग इति भ्रमं वारयति—यथेति । भाष्ये—पद्मं वा पर्णं वेति । पात्रादावकस्मादुपगतम्पद्मादि ताम्बूलादिपर्णं वा

† ३ । २ । १ वा० ५.

## संनिपाताच्च ॥ २ ॥

सन्निपाताच्चेति वक्तव्यम् । सान्निपातिकम् ॥ ३८ ॥

## गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत् ॥ ५ । १ । ३९ ॥

### यत्प्रकरणे ब्रह्मवर्चसाच्च ॥ १ ॥

यत्प्रकरणे ब्रह्मवर्चसाच्चोपसङ्ख्यानं कर्त्तव्यम् । ब्रह्मवर्चसस्य निमित्तं संयोगो ब्रह्मवर्चस्यः । उत्पातो वा ॥ ३९ ॥

## तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते ॥ ५ । १ । ४७ ॥

### तदस्मिन्दीयतेऽस्मा इति च ॥ १ ॥

तदस्मिन्दीयतेऽस्मा इति चेति वक्तव्यम् । पञ्च वृद्धिर्वा आयो वा लाभो वा शुल्को वा उपदा वा दीयतेऽस्मै पञ्चकः । सप्तकः । अष्टकः । नवकः । दशकः ।

तत्तर्हि उपसङ्ख्यानं कर्त्तव्यम् ? न कर्त्तव्यम् । यद्धि यस्मै दीयते तस्मिन्नपि तद्दीयते, तत्र तदस्मिन्दीयत इत्येव सिद्धम् ॥ ४७ ॥

## पूरणार्धाट्ठन् ॥ ५ । १ । ४८ ॥

### ठन्प्रकरणेऽनन्तादुपसङ्ख्यानम् ॥ १ ॥

ठन्प्रकरणेऽनन्तादुपसङ्ख्यानं कर्त्तव्यम् । द्वितीयिकः तृतीयिकः । किं पुनः

---

प्र०—यार्थो न तु निमित्तम् । ठगत्र प्रत्ययः । प्रकरणादिवशाच्च क्वचिच्छमनं प्रतीयते क्वचित्कोपनम् ॥ ३८ ॥

गोद्व्यचो । ब्रह्मवर्चस्यइति । ब्रह्मणो वर्चो ब्रह्मवर्चसम् । वृत्तस्वाध्यायसंपदुच्यते । 'ब्रह्महस्तिभ्यां वर्चस' इत्यच्समासान्तः ॥ ३९ ॥

तदस्मिन् । यत्र नदीद्वारादौ शुल्कादि दीयते तत्र प्रत्ययो विधीयमानः संप्रदाने न प्राप्नोतीत्याह—तदस्मिन्निति । तस्मिन्नपीति । संप्रदानमेव दानक्रियापेक्षयाऽधिकरणत्वेन विवक्ष्यते । 'यथा सममब्राह्मणे दान'मिति ॥ ४७ ॥

---

उ०—शुभसूचक उत्पात इत्यर्थः । ननु तस्य फलकारणत्वाऽभावात्कथं निमित्तत्वमत आह—तस्य चेति ॥ ३८ ॥

गोद्व्यचो । ब्रह्मणः=ब्राह्मणस्य । वृत्तम्=आचारः । स्वाध्यायो=वेदाऽध्ययनम् ॥ ३९ ॥

तदस्मिन् वृद्ध्या । यथा सममिति । अब्राह्मणे दानमदानेन समं निष्फलमित्यर्थः । कालान्तरीणाब्राह्मणसम्प्रदानकदानेन ग्रहणादिकालिकब्राह्मणब्रुवादिदानं सममित्यर्थो वा ॥ ४७ ॥

कारणं न सिध्यति ? 'पूरणा'दित्युच्यते न चैतत्पूरणान्तम् । अनैतत्पर्यवपन्नम्† ।

पूरणं नामार्थस्तमर्थमाह तीयशब्दः—पूरणं सोऽसौ भवति । पूरणान्तात्स्वार्थे भागेऽन्, सोऽपि पूरणं भवत्येव ॥ ४८ ॥

**सम्भवत्यवहरति पचति ॥ ५ । १ । ५२ ॥**

**तत्पचतीति द्रोणादण्च ॥ १ ॥**

तत्पचतीति द्रोणादण्चेति वक्तव्यम् । द्रोणं पचति द्रौणी द्रौणिकी ॥ ५२ ॥

**कुलिजाल्लुक्खौ च ॥ ५ । १ । ५५ ॥**

**कुलिजाच्चेति सिद्धे लुक्खग्रहणानर्थक्यं पूर्वस्मिंस्त्रिकभावात् ॥ १ ॥**

कुलिजाच्चेत्येव सिद्धं, नाऽर्थो लुक्खग्रहणेन । किं कारणम् ? 'पूर्वस्मिंस्त्रिक-

---

प्र०—पूरणा । अनन्तादिति । यथा गोस्त्रियोरित्यत्र स्त्रीशब्देन स्त्र्यधिकारविहितानां टाबादीनां ग्रहणमेवमिहाऽपि पूरणाधिकारविहिता एव डडादयो गृह्येरन्निति वचनम् ।

द्वितीयिक इति । द्वयोः पूरणो भाग इति द्वेस्तीयस्तदन्तात् 'पूरणाद्भागे तीयाद'न्निति स्वार्थेऽन्प्रत्ययः । ततो द्वितीयो वृद्धादिरस्मिन्दीयत इति ठन्प्रत्ययः । पर्यवपन्नमिति । व्यवहितमित्यर्थः । पूरणं नामेति । अर्थग्रहणमिह न तु पूरणाधिकारविहितप्रत्ययग्रहणमिति भावः । स्वार्थ इति । स्वस्याः प्रकृतेरर्थः—स्वार्थः । सा हि प्रत्ययस्यात्मीया । तदर्थे चाऽन्विधीयमानः पूरणाभिधायित्वात्पूरणव्यपदेशमासादयतीत्यर्थः ॥ ४८ ॥

सम्भव । द्रोणादिति । द्रोणपरिमिते व्रीह्यादौ वर्त्तमानाद्द्रोणशब्दात्प्रत्ययस्तस्यैव पाकसंभवात् ॥ ५२ ॥

कुलिजा । कुलिजाच्चेति सिद्ध इति । 'कुलिजाच्चे'त्येव सूत्रमस्तु, तत्र 'द्विगोष्ठंश्चे'त्यनुवर्त्तते 'खोऽन्यतरस्या'मिति च, तत्र ष्ठन्खाभ्यां मुक्ते पक्षे ठञ्, तस्याऽध्यर्द्धपूर्वेति लुक् । एवं रूपत्रयं सिद्धम् । न च ठञः पक्षे लुगभावेन तुरीयं रूपमिष्यत इति लुक्खग्रहणं वार्तिककृता

---

उ०—पूरणाऽर्था । ननु स्वार्थिकाऽन्प्रत्ययान्तत्वेन तस्याऽपि पूरणार्थत्वमस्त्येवेत्यत आह—यथेति । भाष्ये—तमर्थमिति । यतस्तमर्थं तीयशब्द आह अतः सोऽसौ तीयशब्दः पूरणम्भवति । यतश्च तदन्तात्स्वार्थे ततः सोऽनपि पूरणमित्यर्थः । ननु सर्वोऽपि प्रत्ययः स्वस्यैवार्थे, किञ्चानोऽर्थाऽभावात्स्वार्थे इत्यनुपपन्नमत आह—स्वस्या इति ॥ ४८ ॥

कुलिजा । भाष्ये—पूर्वस्मिन्योग इति । 'आढकाचिते'ति सूत्रे । न च ठन इति । अत्र सूत्रेऽन्य-

---

† पूरणाद् भागे तीयादन् ५ । ३ । ४८

भावात्' । पूर्वस्मिन्योगे‡ सर्व एष त्रिको निर्दिश्यते—द्व्याढकी द्व्याढकिकी द्व्याढकाना ॥ ५५ ॥

## तदस्य परिमाणं सङ्ख्यायाः सञ्ज्ञासङ्घसूत्राध्ययनेषु

॥ ५ । १ । ५७—५८ ॥

### संज्ञायां स्वार्थे ॥ १ ॥

संज्ञायां स्वार्थे प्रत्यय उत्पाद्यः । पञ्चैव पञ्चकाः शकुनयः । त्रिकाः शालङ्कायनाः । सप्तका ब्रह्मबृचाः ।

### ततःपरिमाणिनि ॥ २ ॥

ततः परः प्रत्ययः परिमाणिनीति वक्तव्यम् । पञ्चकः सङ्घः । दशक सङ्घः ।

### जीवितपरिमाणे चोपसङ्ख्यानम् ॥ ३ ॥

जीवितपरिमाणे चोपसङ्ख्यानं कर्त्तव्यम् । षष्टिर्जीवितपरिमाणमस्य षाष्टिकः । साप्ततिकः ।

प्र०—प्रत्याख्यातम् ॥ ५५ ॥

तदस्य । संज्ञायां स्वार्थ इति । इहाऽऽदशभ्यः सङ्ख्याः सङ्ख्येये वर्त्तन्ते न तु सङ्ख्यानमात्रे । ततः परा तु सङ्ख्या सङ्ख्याने सङ्ख्येये च । तत्र य एव शकुनयः पञ्चत्वसङ्ख्यायुक्ताः पञ्चशब्दस्य वाच्यास्त एव पञ्चकशब्दस्यापि । ततश्च परिमाणपरिमाणिभावाभावात्स्वार्थे एव प्रत्ययो वक्तव्यः । यदा तु वृत्तिविषये संख्यामात्रवृत्तित्वं पञ्चादीनामाश्रीयते, तथा च 'द्व्येकयो'रितिसूत्रकारेण द्वित्वैकत्वे द्व्येकशब्दवाच्ये आश्रित्य निर्देशः कृतः । सङ्ख्येयार्थत्वे हि द्व्येकेष्विति स्यात्तदा परिमाणपरिमाणिभावाश्रयेणापि शक्यः प्रत्यय उत्पादयितुम् । जीवितपरिमाणे चेति । पूर्वपित्तः समुच्चयः । सङ्घादिषु प्रत्ययो विधीयमानोऽन्यत्र न प्राप्नोतीति

उ०—तदस्यांग्रहणाऽनुवृत्त्येति भावः । वृत्तिस्तु भाष्यविरोधाच्चिन्त्यैव ॥ ५५ ॥

तदस्य प । संख्यायाः । ननु सङ्ख्यामात्रवृत्तेः पञ्चादिशब्दात्सङ्ख्येये परिमाणिनि प्रत्ययसम्भवात्किं वार्त्तिकेनेत्यत आह—इहेति । सङ्ख्यानेति । करणे ल्युट् । तेनैकत्वद्वित्वादावित्यर्थः । शक्य उत्पादयितुमिति । एवं हि 'पञ्चसङ्ख्यः सङ्घ' 'इत्यर्थे पञ्चक' इत्यपि स्यादिति सङ्ख्येयवृत्तेरेवाऽनेन प्रत्यय एष्टव्य इत्यपरे । ततः 'परिमाणिनी'त्यस्य भाष्यस्य तदूर्ध्वम्पठ्यमानसङ्घादिष्वित्यर्थः । जीवितपरिमाणे इत्यस्य—

‡ द्विगोष्ठंश्च ५ । १ । ५४ नागेशस्तु 'आढकाचिते'ति सूत्रे ( ५ । १ । ५३ ) इत्याह । तन्न । तत्र त्रिकाऽभावात् ।

**जीवितपरिमाणे चेत्यनर्थकं वचनं कालादिति सिद्धत्वात् ॥ ४ ॥**

जीवितपरिमाणे चेत्यनर्थकं वचनम् । किं कारणम् ? 'कालादिति सिद्धत्वात्' । 'कालात्' [ ५ । १ । ७८ ] इत्येव सिद्धम् । इह यस्य षष्टिर्जीवितपरिमाणं षष्टिमसौ भूतो भवति, तत्र 'तमधीष्टो भृतो भूतो भावी' [ ५ । १ । ८० ] इत्येव सिद्धम् ।

अवश्यं चैतदेवं विज्ञेयम् ।

**इह वचने हि लुक्प्रसङ्गः ॥ ५ ॥**

इह हि क्रियमाणे लुक्प्रसज्येत—द्विषाष्टिकः† त्रिषाष्टिकः । अनेन सति लुग्भवति । तेन सति कस्मान्न भवति ? आर्हादित्युच्यते‡ ।

न सिध्यति । किं कारणम् ? न हीमे कालशब्दाः । किं तर्हि ? सङ्ख्याशब्दा इमे । इमेऽपि कालशब्दाः । कथम् ? सङ्ख्या सङ्ख्येये वर्त्तते । यदि तर्हि यो यः काले वर्त्तते स स कालशब्दो रमणीयादिष्वतिप्रसङ्गो भवति—रमणीयं कालं भूतः, शोभनं कालं भूतः । अथ मतमेतत्काले दृष्टः शब्दः कालशब्दः कालं

प्र०—वचनम् । द्विषाष्टिक इति । 'सङ्ख्यायाः संवत्सरसंख्यस्य चे'त्युत्तरपदवृद्धिः । आर्हादिति । 'अध्यर्धपूर्वे'त्यत्रार्हादित्यनुवर्त्तनादार्हीयस्य लुका भाव्यम् । 'तमधीष्ट'इत्यनेन प्रत्ययोऽर्हात्पर इति तस्य लुगभावः । न हीम इति । मासादय एव कालशब्दा न तु निमित्तान्तरेण काले प्रयोगमात्रेणेति भावः । संख्या संख्येय इति । काले सङ्ख्येये वर्त्तमानस्य सङ्ख्यावाचिनः कालाभिधायित्वमुपपन्नमिति भावः । वार्षशतिक इति । संख्यायाः प्रत्ययो विधीयमानस्तदन्तान्न प्राप्नोति । संख्यापूर्वपदानामेव प्राग्वतेस्तदन्तविधिरिष्यते ।

उ०—तत्र वर्त्तमानात्प्रथमान्तादस्येत्यर्थे प्रत्यय इत्यर्थः । पूर्वोऽपेक्ष इति । 'संज्ञायां स्वार्थे'इत्येतदपेक्ष इत्यर्थः । एतद्वचनारम्भे बीजमाह—सङ्ख्यादिष्विति । परिमाणेष्वित्यर्थः । अत्र हि षष्टिसङ्ख्या सङ्ख्येयस्य परिमाणि-जीवितद्वारा देवदत्तादिः, न तु सङ्ख्यादिरित्यप्राप्तिरिति भावः । नन्वेतेऽपि कालबोधका विशेष्यतश्चेत्यत आह—मासादय एवेति । कालेतराऽवृत्तिकालत्वव्याप्यधर्मप्रवृत्तिनिमित्तका इति भावः । सङ्ख्येयवृत्तित्वेऽपि पञ्चादिवत्सङ्ख्यात्वमक्षतमत आह—सङ्ख्याया इति । ननु तदन्तविधिना भविष्यतीत्यतः—सङ्ख्या-पूर्वेति । परे तु 'ठञ्विधौ सङ्ख्यायाः' इति तदन्तविधिसूत्रभाष्योक्तेस्तदारम्भसामर्थ्येनाऽत्राऽन्यपूर्वपदस्याऽपि तदन्तस्य ग्रहणाच्चिन्त्यमिदम् । तस्माद्वर्षशतशब्दादौ 'शतं वर्षाणि'त्याद्यर्थे मयूरव्यंसकादित्वात्पूर्वपदार्थ-प्रधानः समासः । सङ्ख्येये वर्त्तते इत्यस्य वर्षादिरूपसङ्ख्येये वर्त्तते शतब्राह्मणशब्दवत् । सङ्ख्याशब्द-

† सङ्ख्यायाः संवत्सरसङ्ख्यस्य च ७ । ३ । १५ ‡ अध्यर्धपूर्वद्विगोर्लुगसञ्ज्ञायाम्; आर्हादगोपुच्छसङ्ख्यापरिमाणाट्ठक्; तदर्हति ५ । १ । २८; १९; ६३

यो न व्यभिचरतीति, न रमणीयादिष्वतिप्रसङ्गो भवति, जीवितपरिमाणे तूपसङ्ख्यानं कर्त्तव्यम् । इह चोपसङ्ख्यानं कर्त्तव्यम् । वार्षशतिकः वार्षसहस्रिक इति । किं पुनः कारणं न सिध्यति ? न हि वर्षशतशब्दः सङ्ख्या । किं तर्हि ? सङ्ख्येये वर्त्तते वर्षशतशब्दः ।। एवं तर्हि—

अन्येभ्योऽपि दृश्यते खारशताद्यर्थम् ।। ६ ।।

अन्येभ्योऽपि दृश्यत इति वक्तव्यम् । किं प्रयोजनम् ? खारशताद्यर्थम् । खारशतिको राशिः खारसहस्रिको राशिः ।

अयं तर्हि दोषः—'इह वचने हि लुक्प्रसङ्ग' इति । न ब्रूमो यत्र क्रियमाणे दोषस्तत्र कर्त्तव्यमिति । किं तर्हि ? यत्र क्रियमाणे न दोषस्तत्र कर्त्तव्यम् । क्व च क्रियमाणे न दोषः ? परमार्हात्[1] ।

तत्तर्ह्युपसङ्ख्यानं कर्त्तव्यम् ? न कर्त्तव्यम् । 'काला'दित्येव सिद्धम् । ननु चोक्तं—'नेमे कालशब्दाः किं तर्हि सङ्ख्याशब्दा' इति । ननु चोक्तम् 'इमेऽपि कालशब्दाः । कथम् ? सङ्ख्या सङ्ख्येये वर्त्तते' । ननु चोक्तं 'यदि तर्हि यो यः शब्दः काले वर्त्तते स स कालशब्दो रमणीयादिष्वतिप्रसङ्गो भवतीति' ।

प्र०—खारशताद्यर्थमिति । खारशब्दोऽकारान्तो वार्तिककारवचनात्साधुः । 'तदस्य परिमाण'मिति योगविभागः कर्त्तव्य इत्युक्तं भवति । अनभिधानादिति । नहि रमणीयादयो वृत्तिविषये काले वर्तन्ते । षष्ट्यादयस्तु वृत्तौ सङ्ख्येयेषु संवत्सरेषु स्वभावतो वर्तन्त इति युक्तं तेषां कालवाचित्वम् । लोके च संवत्सरसङ्ख्यया जीवितं प्रायेण परिच्छिद्यत इति संवत्सरवृत्तित्वं षष्ट्या-

उ०—त्वञ्च—सङ्ख्याप्रवृत्तिनिमित्तकत्वम् । द्वे षष्टी संवत्सरा जीवितपरिमाणमस्येत्यर्थे द्विषष्टिशब्दस्य सङ्ख्याप्रवृत्तिनिमित्तकत्वमेव । प्रकरणादिवशात्तु संवत्सररूपसङ्ख्येयस्य तादृशसङ्ख्यात्वेनैव शाब्दबोधे भानमित्यन्यदित्याहुः । खारशब्द इति । खारीशब्दपर्याय इत्यर्थः । अन्येभ्योऽपीत्यस्य—सङ्ख्याभिन्नेभ्य इत्यर्थः । दृशेः सर्वोपाधिव्यभिचारार्थत्वादन्येष्वपीत्यर्थोऽपि द्रष्टव्यः । योगविभाग इति । द्विषाष्टिकवार्षशतिकादिसिद्धये इति भावः । भाष्ये—लुक्प्रसङ्ग इति । 'द्विषाष्टिक' इत्यत्रेति भावः । परमार्हादिति । 'तदस्य परिमाण'मिति तत्र पठितव्यमित्यर्थः । तत्तर्हीति । 'परमार्हात्तदस्य परिमाण'मित्येतन्न कर्त्तव्यमिति खारशतिकवार्षशतिकार्थमत्र योगविभागः कार्यः, द्विषाष्टिकादिश्च 'काला'दित्येव सिद्ध इति न तदर्थः स आर्हात्परः कार्य इति भावः । इमेऽपि कालशब्दा इत्यनेन—कालग्रहणे यथाकथञ्चित्कालवृत्तीनां ग्रहणमिति सूचयति । अतिप्रसङ्गाऽभावस्त्वनभिधानात् । तदेवाह—न हीति । ननु संवत्सरेष्विति कुतो मासादीनामपि सङ्ख्येयत्व-

१—'परमर्हात्' इति कीलहार्नपाठः । 'परमार्हा'दिति पाठ उद्द्योतसम्मतः ।

उक्तं वा ॥ ७ ॥

किमुक्तम् ? 'अनभिधाना'दिति† । अनभिधानाद्रमणीयादिषूत्पत्तिर्न भविष्यति

स्तोमे डविधिः पञ्चदशाद्यर्थः ॥ ८ ॥

स्तोमे डो विधेयः । किं प्रयोजनम् ? 'पञ्चदशाद्यर्थः' । पञ्चदशः स्तोमः, सप्तदशः स्तोम इति ॥ ५७—५८ ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये पञ्चमस्याध्यायस्य
प्रथमे पादे प्रथममाह्निकम् ।

पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् ॥ ५ । १ । ५९ ॥

इमे विंशत्यादयः सप्रकृतिकाः सप्रत्ययकाश्च निपात्यन्ते, तत्र न ज्ञायते का प्रकृतिः कः प्रत्ययः कः प्रत्ययार्थ इति । तत्र वक्तव्यमियं प्रकृतिरयं प्रत्ययोऽयं

प्र०—दीनामुच्यते । स्तोमे डविधिरिति । डित्करणं विंशः स्तोमस्त्रिंशःस्तोमइत्यादौ टिलोपार्थम् । पञ्चदश इत्यत्र तु 'नस्तद्धित' इति टिलोपः सिध्यति । स्तोमो मन्त्रसमूहः ॥५७-५८॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते महाभाष्यप्रदीपे पञ्चमस्याध्यायस्य
प्रथमे पादे प्रथममाह्निकम् ।

पङ्क्तिविं । इमे विंशत्यादय इति । सूत्रे पठितानां प्रत्यक्षत्वादिदमा परामर्शः । पङ्क्तिशब्दश्छन्दोविशेषे सन्निवेशविशेषे च रूढो नैवावयवार्थानुसारेण प्रवर्त्तत इति तत्परित्यागेन विंशत्यादय एव विचार्यन्ते । वक्ष्यमाणवार्त्तिकावतारणार्थं चायं भाष्य उपक्षेपः। सप्रकृ-

उ०—सम्भवादत आह—लोके चेति । डित्करणमिति । विंशे तिलोपार्थं त्रयस्त्रिंशादौ टिलोपार्थमित्यर्थः । 'तिट्टिलोपार्थ'मिति पाठः ॥ ५७—५८ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते पञ्चमाध्यायस्य
प्रथमेपादे प्रथममाह्निकम् ।

पङ्क्तिविंशति । प्रथमोपस्थितपङ्क्तित्यागे बीजमाह—पङ्क्तिशब्द इति । बीजान्तरमप्याह—वक्ष्यमाणेति । तच्च विंशत्यादिविषयमेवेति भावः । ननु कथमेतदवगतं सप्रकृतिका इत्याद्यत आह—प्रकृतीति । ननु प्रकृतिप्रत्ययाऽतिरिक्तनिपात्याऽभावात्केन साहित्यमत आह—सङ्घशब्दोऽत्रेति । अथेति । पङ्क्तथा-

† ३ । २ । १ वा० ५.

प्रत्ययार्थ इति । इमे ब्रूमो द्विशब्दादयं दशदर्थाभिधायिनः स्वार्थे शतिच्प्रत्ययो निपात्यते विन्भावश्च । द्वौ दशतौ विंशतिः ।

**विंशत्याद्यो दशदर्थे चेत्समासवचनानुपपत्तिः ॥ १ ॥**

विंशत्यादयो दशदर्थे चेत्समासो नोपपद्यते—विंशतिगवमिति । किं कारणम् ? द्रव्यमनभिहितं तस्यानभिहितत्वात्षष्ठी प्राप्नोति—षष्ठ्यन्तं च समासे पूर्वं निपतति* तत्र गोविंशतिरिति प्राप्नोति । न चैवं भवितव्यम् । भवितव्यञ्च,—विंशतिगवं तु न सिध्यति । इह च—त्रिंशत्पूली चत्वारिंशत्पूली समानाधिकरणलक्षणः समासो† न

प्र०—तिका इति । प्रकृतिप्रत्ययप्रकरणे उच्चारणादिति भावः । सहशब्दोऽत्र विद्यमानार्थो न तुल्ययोगार्थः । तेन विद्यमानप्रकृतिकाः प्रत्यया इत्यर्थः । निपात्यन्त इति । अथ प्रकृतित्वमेषां कस्मान्न विज्ञायते ? पञ्चम्याः प्रत्ययस्य चानुपादानादनिष्पन्नस्य च प्रकृतित्वाभावात् । प्रत्ययत्वं तर्हि कस्मादेषां न भवति ? लोके केवलानां प्रयोगदर्शनात् । 'शताच्च ठन्यतावशते' 'विंशत्यादिभ्य' इति । शास्त्रे च केवलानामुच्चारणात् । विधिनिपातनयोश्चाऽयं भेदो यत्रावयवा निर्दिश्यन्ते समुदायोऽनुमीयते स विधिः । यत्र तु समुदायः श्रूयतेऽवयवाश्चानुमीयन्ते तन्निपातनम् ।

**का प्रकृतिरिति** । प्रकृतिप्रत्ययविशेषविषयः **प्रश्नः** । प्रकृत्यर्थं तु न पृच्छति,—प्रकृतौ विज्ञातायां तदर्थस्यापि विज्ञानात् । **कः प्रत्ययार्थ इति** । लोके विंशत्यादीनां सङ्ख्यायां संख्येये च प्रयोगो दृश्यते तत्र लौकिकार्थानुगुणकं प्रत्ययार्थमाश्रित्य साधुत्वायैषामन्वाख्यानं क्रियत इत्यर्थः । **इमे ब्रूम इति** । वचनक्रियायामाभिमुख्यं प्रतिपादयितुं प्रत्यक्षार्थसर्वनामोपादानम् । वचनमात्रं चेह विवक्षितं न तु कर्त्रभिप्रायं क्रियाफलमित्यात्मनेपदं न कृतम् । **द्विशब्दादिति** । दशद्वर्गलक्षणसंख्येयवाचिन इत्यर्थः । समुदाये च निपात्यमाने नान्तरीयकमवयवानां निपातनमित्यभिप्रायेण 'शतिच्प्रत्ययो निपात्यत' इत्युच्यते । **स्वार्थे इति** । प्रत्ययस्य स्वात्मीया

उ०—दिभ्योऽधिकृतः प्रत्ययो भवतीति ह्यर्थः स्यादिति भावः । प्रत्ययस्याऽधिकारलब्धत्वाद् 'गापोष्ट' गित्यादौ पञ्चम्या अभावाच्च युक्त्यन्तरमाह—**अनिष्पन्नस्य चेति** । अन्यत एषामनिष्पत्तेः । **शताच्चेति** । तत्र तदन्तविधिसम्भवाच्चिन्त्यमिदम् । विधीयन्त इति त्यक्त्वा 'निपात्यन्त' इत्युक्तौ बीजमाह—**विधीत्यादि** । **विशेषविषय इति** । प्रकृतिसामान्यस्य प्रकरणादेव ज्ञातत्वादिति भावः । ननु प्रकृतावुक्तायां तदर्थेऽवगतेऽवशिष्टः प्रत्ययार्थ इति ज्ञातुं शक्यत इति किं तत्प्रश्नेनेत्यत आह—**लोके इति** । **सङ्ख्याने इति** । सङ्ख्यायतेऽनेनेति सङ्ख्यानं—सङ्ख्या । **साधुत्वाय**—तद्बोधनाय । **आभिमुख्यमिति** । उत्तरदानोद्यतत्वमित्यर्थः । **प्रतिपादयितुमिति** । प्रतिवचनस्य सुशकत्वद्योतनायेति भावः । नन्वाचार्यः स्वोक्तदूषणपरिहारमाहेति क्रियाफलस्य कर्तृगामित्वादात्मनेपदापत्तिरत आह—**वचनमात्रञ्चेति** । वस्तुतः कथनफलस्य तन्निर्णयस्य

* षष्ठी; उपसर्जनं पूर्वम् २ । २ । ८; ३०   † तद्धितार्थोत्तरपदसमाहारे च २ । १ । ५१

प्राप्नोति ॥ वचनञ्च विधेयम् । विंशतिः । द्वित्वाद्दशतोर्द्वयोर्द्विवचनमिति‡ द्विवचनं प्राप्नोति ॥ एवं तर्हि परिमाणिनि विंशत्यादयो भविष्यन्ति ।

**परिमाणिनि चेत्पुनः स्वार्थे प्रत्ययविधानम् ॥ २ ॥**

परिमाणिनि चेत्पुनः स्वार्थे प्रत्ययो विधेयः—विंशकः सङ्घः× ।

**षष्ठीवचनाविधिश्च ॥ ३ ॥**

षष्ठी च विधेया । गवां विंशतिः । द्रव्यमभिहितं तस्याऽभिहितत्वात्षष्ठी न प्राप्नोति ॥ एकवचनञ्च विधेयम्—विंशतिर्गावः । गोभिः सामानाधिकरण्याद् 'बहुषु बहुवचनम्' [ १ । ४ । २१ ] इति बहुवचनं प्राप्नोति ।

प्र०—प्रकृतिस्तस्या अर्थ इत्यर्थः । अथवा यः प्रकृतेरर्थः स एव प्रत्ययानां स्वार्थः—पितृधनमिव पुत्रस्य, तत्रैवार्थे प्रत्यासत्त्याऽनिर्दिष्टार्थप्रत्ययस्योत्पत्तेर्न्याय्यत्वात् ।

**समासवचनानुपपत्तिरिति** । इष्टयोः समासवचनयोरनुपपत्तिरित्ययमर्थोऽभिमतः । नहि समासमात्रं वचनमात्रं वा न सिध्यति । **विंशतिगवमिति** । विंशतिशब्देन द्वयोर्दशतोरभिधानं न तु दशत्सम्बन्धिनां द्रव्याणाम् । ततश्च दशदपेक्षया गवां व्यतिरेकोपजननात् षष्ठ्या भाव्यं–गवां विंशतिरिति । ततः समानाधिकरणपदनिबन्धनद्विगुसमासाऽप्रसङ्गः । **षष्ठ्यन्तं चेति** । 'उपसर्जनं पूर्व'मिति लक्षणेन । 'गुणेन षष्ठी न समस्यत' इति प्रतिषेधः संख्यायां न भवति, 'शतसहस्रान्ताच्च निष्का'दिति प्रत्ययविधानाज्ज्ञापकात्, 'क्रोशशतयोजनशतयो'रिति वार्त्तिककारवचनाच्च । **द्विवचनं प्राप्नोतीति** । स्वार्थिकाः प्राकृतं लिङ्गमेव केचिदतिवर्त्तन्ते न तु सङ्ख्यामपि,सङ्ख्यान्तरयुक्तस्य सङ्ख्यान्तरविरोधात् । लिङ्गानान्तु विरोधाभावः स्त्रीसूत्रे प्रतिपादितः । **एवं तर्हीति** ।

उ०—शिष्यगामित्वात्तत्त्वेनैव विवक्षणाच्च कथमत्रात्मनेपदप्राप्तिरिति चिन्त्यम् । **दशद्वर्गेति** । दश द्रव्याणि परिमाणमस्य वर्गस्य स दशद्वर्गः । वर्गः—सङ्घ इत्युच्यते ।

ननु समुदायस्यैव निपातनात्कथम्प्रत्ययो निपात्यत इत्युक्तिरत आह–समुदाये चेति । स्वार्थशब्दे षष्ठीतत्पुरुषः कर्मधारयो वेत्याह–प्रत्ययस्येत्यादिना । ननु षष्ठीसमासादेः सिद्धेः कथं समासाऽनुपपत्तिरत आह—इष्टयोरिति । ननु विंशतिशब्दस्य सङ्ख्येयवाचित्वात्समानाऽधिकरणसमासोऽपि सेत्स्यतीत्यत आह–विंशतिशब्देनेति । दशतोः—दशाऽवयवकसमूहयोः । नत्विति । तादृशसमूहसम्बन्धिनां दशसङ्ख्यद्रव्याणामित्यर्थः ।

‡ द्व्येकयोर्द्विवचनैकवचने १ । ४ । २२

× तदस्य परिमाणं सङ्ख्यायाः०; विंशतित्रिंशद्भ्यां ५ । १ । ५७—५८; २४

## अनारम्भो वा प्रातिपदिकविज्ञानाद्यथा सहस्रादिषु ॥ ४ ॥

अनारम्भो वा पुनर्विंशत्यादीनां न्याय्यः । कथं सिध्यति ? 'प्रातिपदिकविज्ञानात्' । कथं प्रातिपदिकविज्ञानम् ? विंशत्यादयोऽव्युत्पन्नानि प्रातिपदिकानि । 'यथा सहस्रादिषु' । तद्यथा—सहस्रम् अयुतम् अर्बुदमिति न चानुगमः क्रियते भवति चाभिधानम् ।

'यथा सहस्रादि'ष्वित्युच्यते । अथ सहस्रादिष्वपि कथं भवितव्यम्,—सहस्रं गवाम्, सहस्रं गावः, सहस्रगवम्, गोसहस्रमिति ? यावताऽत्रापि सन्देहो नासूया कर्त्तव्या यत्रानुगमः क्रियते ।

प्र० —'तदस्य परिमाण'मित्यधिकारात्परिमाणोपाधेः सङ्ख्याया 'अस्ये'ति परिमाणिनि प्रत्ययः । परिमाणी च द्विविधः—द्रव्यसङ्घातो, भिन्नानि वा द्रव्याणि । तत्र सङ्घस्यैकत्वाद्विंशतिरित्येकवचनं सिध्यति । द्रव्याणान्तु परिमाणित्वे विंशतिगवं त्रिंशत्पूलीति समानाधिकरणसमाससिद्धिरिति भावः । परिमाणिनि चेदिति । द्वौ दशतौ परिमाणं यस्य स सङ्घ विंशतिरित्यभिधीयते । तत्र विंशतिः परिमाणं यस्य सङ्घस्येति सङ्घान्तरस्य परिमाणिनोऽसंभवाद्विंशकः सङ्घ इति सिद्धये 'विंशतित्रिंशद्भ्यां ड्वुन्स्वार्थेऽसंज्ञाया'मिति ड्वुन्प्रत्ययः स्वार्थे वक्तव्यः । ननु यदा द्रव्याणि परिमाणीनि विंशतिशब्दाभिधेयानि तदा सङ्घे परिमाणिनि प्रत्ययः सिध्यत्येव—विंशतिर्गावः परिमाणमस्य विंशकः सङ्घ इति । एवं तर्हि विंशतिशब्देन सङ्घस्याभिधानं प्राप्नोति । न चेष्यते–विंशतिर्गोसङ्घ इति । तस्माद्यदा सङ्घेपरिमाणिनि विंशत्यादयो निपात्यन्ते तदा तत्र तेषां केवलानां प्रयोगो मा भूदिति पुनः स्वार्थे नित्यं प्रत्ययो विधेयः । षष्ठीवचनविधिश्चेति । सङ्घेपरिमाणिनि विंशत्यादीनां केवलानां नित्यं प्रयोगो नेष्यते, भिन्नेषु तु द्रव्येषु परिमाणिषु प्रत्ययोत्पत्तावाश्रीयमाणायां विंशतिशब्देन द्रव्याणामभिधानाद्व्यतिरेकाभावाद्गवां विंशतिरिति षष्ठी न प्राप्नोति, द्रव्यसामानाधिकरण्याद्बहुवचनप्रसङ्गश्च ।

उ०—गवां व्यतिरेकोपजननादिति । गवां द्वौ दशतावित्यर्थादिति भावः । ननु गुणेन षष्ठीसमासनिषेधात्समास एव तावद्दुर्लभः किं पूर्वनिपातदूषणेनेत्यत आह—गुणेनेति । सङ्ख्यामात्रपरत्वेऽस्य प्रयोगस्येष्टत्वादाह भाष्ये—न चैवमिति । उत्तरयति—भवितव्यञ्चेति । ननु'स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते'इत्यस्याऽपि सत्त्वात्कथमिदं दूषणमत आह—स्वार्थिका इति । न तु सङ्ख्यामपीति । सङ्ख्याबोधकप्रकृत्युपात्तसङ्ख्यामपीत्यर्थः । स्त्रीसूत्रे इति । 'इयं व्यक्तिरयम्पदार्थ इदं वस्त्वि'ति त्रिविधव्यवहारस्य प्रतिवस्तु सत्त्वान्नपुंसक इति व्यवहाराच्च तेषामविरोध इति भावः । ननु किं 'परिमाणिनी'ति वक्तव्यं, नेत्याह—तदस्येति । द्विविध इति । द्वौ दशतौ परिमाणमस्यैषामिति वा विग्रहः ।

ननु परिमाणिनि विहितस्य पुनः स्वार्थे विधानमनुपपन्नमत आह—द्वौ दशताविति । भाष्ये—पुनरित्यस्य—तदन्तादित्यर्थो बोध्यः । स्वार्थे इति । अन्यथाऽधिकारादार्हीयेष्वेव स्यादिति भावः । न चेष्यते विंशतिरिति । किन्तु 'विंशको गोसङ्घ' इत्येवेष्यत इति भावः । ननु सङ्घस्य विंशत्यर्थत्वेन 'गवां सङ्घ'

ननु चोक्तं 'विंशत्यादयो दशदर्थे चेत्समासवचनानुपपत्तिः, परिमाणिनि चेत्पुनः स्वार्थे प्रत्ययविधानं, षष्ठी वचनविधिश्चे'ति ? नैष दोषः । समुदाये विंशत्यादयो भविष्यन्ति । किं वक्तव्यमेतत् ? न हि । कथमनुच्यमानं गंस्यते ? सङ्घ इति* वर्त्तते, सङ्घः समूहः समुदाय इत्यनर्थान्तरम् । त एते विंशत्यादयः समुदाये

प्र०—तदेवं व्युत्पत्तिपक्षे दूषणान्यभिधायाऽव्युत्पत्तिपक्षं निर्दोषमाश्रित्यारम्भं प्रत्याख्यातुमाह—अनारम्भो वेति । वाशब्दस्तद्यर्थे । सहस्रादिवदव्युत्पन्ना एव विंशत्यादयोऽर्थवदधातुरिति लब्धप्रातिपदिकसंज्ञा अर्थवत्सूत्रेणानुज्ञातसाधिमानः सङ्ख्यायां सङ्ख्येये च प्रयोगभेदेनाऽक्षादिपदवदनेकार्थतया स्वभावतो वर्त्तमाना रूढिशब्दत्वाच्च नियतलिङ्गसङ्ख्याः, यथा आपो दारा इति भावः ।

इदानीं भाष्यकार आरम्भं समर्थयमान आह—यथेति । अयमत्रार्थः—अक्षादयः परस्पराऽनन्वितानेकार्थाभिधायिनो भिन्नासु जातिषु रूढशब्दा एव न तु यौगिकाः । विंशत्यादयः सहस्रादयश्च शुक्लादिवद्गुणिनि यौगिका एव, नहि सङ्ख्यानिरपेक्षाः सङ्ख्येयविशेषमेते प्रत्याययन्ति येनैषां रूढिशब्दत्वमुच्येत । अत्रापि सन्देह इति । क एषां मुख्योऽर्थः को वा सोऽयमिति सम्बन्धादौपचारिक इति सन्देहः । नासूयेति । अननुगमो हि दोषाय । अशक्यों वानन्त्यात्सर्वशब्दानुगमः । नत्वनुगम एव स्वप्रज्ञापराधादशक्यार्थविशेषनिश्चयत्वाद्दोषत्वेनोद्भावनीय इत्यर्थः ।

उ०—इतिवत्षष्ठ्युपपन्नैवेत्यत आह—सङ्घे इति । नित्यमिति । सर्वथेत्यर्थः । व्युत्पत्तिपक्षस्य दुष्टत्वाद्विकल्पार्थो वाशब्दो न युज्यतेऽत आह—तद्यर्थं इति । अर्थवत्सूत्रेणाऽनुज्ञातेति । अन्यथा सर्वत्र 'कृत्तद्धिते'त्येव सिद्धेऽर्थवत्सूत्रं व्यर्थं स्यादिति भावः । 'बहुपटव' इत्याद्यर्थं तदावश्यकत्वाच्चिन्त्यमिदमिति केचित् । तन्न; 'बहुजकज्व'दिति न्यासेनैव सिद्धेरित्याशयात् । स्वभावत इत्यस्यैव व्याख्या—रूढिशब्दत्वाच्चेति । चो हेतौ । अनेन योगनिरपेक्षमेवाऽनेकार्थवृत्तित्वमुक्तं, नत्विदं नियतलिङ्गत्वे हेतुस्तादृशानामपि पद्मादीनामनेकलिङ्गत्वदर्शनात् । नियतलिङ्गत्वन्तु स्वभावतो दृष्टान्तमात्रेणेति बोध्यम् । भाष्ये—न चाऽनुगम इति । प्रकृतिप्रत्यययोरित्यर्थः । भवति चाऽभिधानमिति । अर्थस्येति भावः । ननु स्वभावत एवाऽनेकार्थत्वात्कथम्भवितव्यमिति प्रश्नाऽनुपपत्तिरत आह—अयमत्रेति । शुक्लादिवदिति । 'गुणवचनेभ्यो मतुपो लुगिष्ट' इति वार्त्तिकरीत्येदम् । न हि सङ्ख्येति । किन्तु सङ्ख्याप्रकारकसङ्ख्येयबोधजनका एवेति भावः । रूढिशब्दत्वमुच्येतेति । शुक्लादीनां यौगिकत्वं वदता वार्तिककृतेदं वक्तुमनुचितमितिभावः । ननु स्वभावत उभयत्राऽपि वृत्तेः सन्देहाऽनुपपत्तिरत आह—क एषामिति । सोऽयमिति सम्बन्धादिति । सोऽयमस्याऽस्तीति सम्बन्धेनोत्पन्नस्य मतोर्लोपाद्विलम्बोपस्थितिक इत्यर्थः । यद्वा 'गुणवचनेभ्य' इत्येतत्प्रत्याख्यानरीत्येदम् । दोषायेति । अनुगमनमन्तरेण मन्दबुद्धीनामनुग्रहाऽसम्भवादिति भावः । वस्तुतो न सोऽप्याचार्यस्य दोष इत्याह—अशक्यो वेति । अनुगमस्तु सर्वथा नाचार्यस्य दोषायेत्याह—नत्विति । अनुगमनविषयेषु विंशत्यादिष्वर्थविशेषाऽनिश्चयः स्वप्रज्ञाऽपराधजो न तु तत्र सूत्रकृदपराध इति भावः । अशक्यार्थविशेषनिश्चयत्वादिति । बहुव्रीहेस्त्वप्रत्ययः । दोषत्वेनेति । अयमाचार्यदोषत्वेन सर्वथा नोद्भावनीय इत्यर्थः । न तु भिन्ना-

* सङ्ख्यायाः संज्ञासंघसूत्राध्ययनेषु ५ । १ । ५८

सन्तो भाववचना भवन्ति, भाववचनाः सन्तो गुणवचना भवन्ति, गुणवचनाः सन्तोऽविशिष्टा भवन्त्यन्यैर्गुणवचनैः । अन्येषु च गुणवचनेषु कदाचिद्गुणो गुणविशेषको भवति । तद्यथा—शुक्लः पट इति । कदाचिद्गुणिना गुणो व्यपदिश्यते । तद्यथा—पटस्य शुक्ल इति । तद्यदा तावदुच्यते—'विंशत्यादयो दशदर्थे चेत्समासवचनानुप-

प्र०—समुदाय इति । अस्येति प्रत्ययार्थस्यानुवर्तनात्समुदायः परिमाणी प्रत्ययार्थत्वेनाश्रीयते न तु भिन्नानि द्रव्याणीत्यर्थः । किं वक्तव्यमिति । अस्येत्यनुवर्त्तनात्परिमाणिमात्रे प्रत्ययो लभ्यते न तु तद्विशेष इति मत्वा प्रश्नः । संघ इति वर्तत इति । पूर्वसूत्रे द्वन्द्वनिर्दिष्टस्यापि सङ्घशब्दस्यैव स्वरितत्वादिहानुवृत्तिः ।

ननु प्राणिसमूहः सङ्घः ततश्च 'वृक्षाणां विंशति'रिति न प्राप्नोतीत्याह—सङ्घः समूह इति । सामान्येन प्राणिनामप्राणिनां च समुदायः सङ्घ इत्यर्थः । ननु चोक्तं 'परिमाणिनि चेत्पुनः स्वार्थे प्रत्ययविधान'मिति । नैष दोषः । द्रव्यसङ्घयोर्दशतोः सङ्घे प्रत्ययो निपात्यते न तु द्रव्यसङ्घे । इह द्रव्याणां द्रव्यसङ्घस्य दशतां दशत्सङ्घस्य च पारमार्थिको भेदो नास्ति, केवलं बुद्धया परिकल्प्यते । बुद्धिव्यवस्थापितार्थनिबन्धनाश्च शब्दा बुद्धिमेवार्थाकारामुपजनयन्तोऽसत्यपि वास्तवे भेदे तमवगमयन्ति । त एत इति । निपातनसामर्थ्याद्विशिष्टे दाशते सङ्घे वर्तमाना भाववचना भवन्ति । भावशब्देनाऽत्र धर्ममात्रमुच्यते । भाव इव भावः । यथा पाकादिभावः । पराश्रय एवमन्योपि धर्मः पराश्रयत्वाद्भावः । गुणवचना इति । गुणमुक्तवन्तो गुणवचनाः । गुणमुक्त्वा द्रव्यमभिदधतीत्यर्थः । अन्यैरिति । शुक्लादिभिरुभयवचनैस्तुल्या इत्यर्थः । गुणिविशेषक इति । भाष्यकारवचनात्कर्तरि चेत्यनित्यः षष्ठीसमासनिषेधः । शेषषष्ठ्या वा

उ०—नीति । एवञ्च सङ्घस्यैकत्वादेकवचनं, सामानाधिकरण्यनिबन्धनद्विगुसमासश्चोपपन्न इति भावः । सामान्येनेति । 'संघोद्घा'विति निपातनबललभ्यमेतत् । ननु चोक्तमिति । अन्यथा 'विंशतिर्गोसङ्घ' इति प्राप्नोति, 'विंशक' इति चेष्यत इति भावः । द्रव्यसङ्घयोरिति । दशच्छब्दो दशसङ्ख्यापरिच्छिन्नद्रव्यसंघे इति भावः । न तु द्रव्यसंघे इति । तत्र दशतोः संघस्य विंशतिशब्देनाऽभिधानात् गोसंघे विवक्षिते दशत्संघद्वयात्मिका विंशतिः परिमाणमस्येत्यर्थे 'विंशको गोसंघ' इति भविष्यति, 'विंशतिर्गोसंघ' इति च । न गवां विंशतिर्गोविंशतिरिति च सिध्यतीति भावः । नन्वेवमपि दशतोः संघस्य दशतौ गुणिनौ न गावस्तेन दशतोर्विंशतिरिति प्राप्नोति, गवां विंशतिरिति च न सिध्यत्यत आह—इहेति । एवञ्च गवां दशतोश्च तात्त्विकभेदाऽभावाद्दशत्संघमपि प्रति गवां गुणत्वमुपपद्यते, व्यभिचाराऽभावात्तु दशद्भ्यां विंशतिर्न विशेष्यते, तत एव च सामानाऽधिकरण्यमपि विंशतिर्गाव इतीति भावः ।

नन्वेवमपि भेदाऽभावात्षष्ठ्यनुपपन्नेत्यत आह—केवलं बुद्ध्येति । बुद्धिव्यवस्थापितेत्यादि । बुद्धिपरिकल्पितार्थाऽभिधायिन एव शब्दा न तु बाह्याऽर्थाभिधायिन इति मञ्जूषायां शक्तिवादे निरूपितम् । प्रकारान्तरेणाऽपि 'विंशतिर्गाव' इति समानाधिकरणप्रयोगोपपादनायाह—भाष्ये—त एत इति । विशिष्टे

१—क्वचिन्न ।

पत्ति'रिति,—सामानाधिकरण्यन्तदा गुणगुणिनोः। वचनपरिहारस्तिष्ठतु तावत्। 'परिमाणिनि चेत्पुनः स्वार्थे प्रत्ययविधान'मिति,—संहनने वृत्तः संहनने वर्त्तिष्यते, संख्या संहनने वृत्तो द्रव्यसहनने वर्त्तिष्यते। अथ षष्ठी तदा गुणिना गुणो विशेष्यते।

वचनपरिहार उभयोरेवं[1]। यदि तर्हीमे विंशत्यादयो गुणवचनाः स्युः सधर्मभिरन्यैर्गुणवचनैर्भवितव्यम्। अन्ये च गुणवचना द्रव्यस्य लिङ्गसङ्ख्ये अनुवर्तन्ते।

प्र०—समासः। अथवा गुणिनं विशिनष्टीति कर्मण्यण्। ततः स्वार्थे कन्प्रत्ययः। पटःशुक्ल इति। गुणगुणिनोरव्यतिरेकविवक्षया मतुब्लोपाद्वा सामानाधिकरण्यमेवं विंशत्यादीनामपि द्रव्येण सामानाधिकरण्यम्। कदाचिदिति। आधारान्तरव्यवच्छेदायोगजातव्यतिरेकेण गुणिना गुणो विशेष्यते। पटस्य शुक्लो न शङ्खादेरित्यर्थः। दशदर्थे चेदित्यस्मिन् पक्षे यो दोषः स पक्षान्तराश्रयेण परिह्रियत इत्यर्थः। वचनपरिहार इति। समुदायाभिधाने वचनदोषो नावतरति। सामानाधिकरण्ये त्ववतरति स च पश्चात् परिहरिष्यिते। तिष्ठत्विति। परस्ताद्वक्ष्यमाणत्वात्। संहनन इति। सङ्घः संहननं, तत्र दशतोः सङ्घे प्रवृत्तो विंशतिशब्दो गवादिद्रव्यसङ्घे परिमाणिनि प्रत्ययमुत्पादयिष्यतीत्यर्थः। विंशतिः परिमाणस्य गोसङ्घस्य विंशको गोसङ्घ इति। वर्त्तिष्यत इति। परार्थाभिधानं वृत्तिर्विवक्षिता, नतु विंशतिशब्दः कदाचिदपि गोसंघे वर्त्तते। गुणिनेति। गवादिनेत्यर्थः। ननु दाशतस्य सङ्घस्य गवादिर्गुणी न भवति दशतौ हि तस्य

उ०—दाशते इति। दशद्वयात्मके इत्यर्थः। नन्वेते न धात्वर्थरूपभाववचना अत आह—भावशब्देनेति। वस्तुत एते क्रियारूपा एव, बुद्धिसम्बद्धस्वरूपस्यैकदेशसम्बद्धस्वरूपस्य वा समूहस्य बन्धनक्रियारूपत्वात्, तादृशाश्च सन्तो गुणवचनास्तत्सदृशा भवन्ति। तत्सादृश्यमेवाह—तत्सदृशाः सन्तोऽन्यैर्गुणवचनैरविशिष्टा अविलक्षणा इति। अत एव 'शतसहस्रादौ षष्ठीसमास' इति परे। गुणबोधकरूपादितुल्यत्वेऽपि नेष्टसिद्धिरत आह—शुक्लादिभिरिति।

नन्वत्र षष्ठीसमासनिषेधः प्राप्नोतीत्यत आह—भाष्येति। ननु भेदकल्पने किं बीजमत आह—आधारान्तरेति। भाष्ये—तद्यदा तावदिति। दशदर्थाऽभिधायिनो 'द्वि'शब्दात्स्वार्थे प्रत्यय इति पक्षे यद्दूषणमुच्यते 'दशदर्थे चे'दित्यादिना,—तस्मिन् पक्षे तद्दूषणं न भवति, यतस्तदा गुणगुणिनोः सामानाऽधिकरण्यमिति' भाष्याक्षरार्थस्तदाह—यो दोष इति। समासानुपपत्तिरूप इत्यर्थः। पक्षान्तरेति। पूर्वं दाशते संघे वृत्तिं समुदायसमुदायिनोश्चाऽभेदमाश्रित्य परिहृतम्, इदानीन्तु दशदर्थे एव वृत्तिं गुणगुणिनोरिव समूहसमूहिनोः सामानाधिकरण्यमाश्रित्य परिह्रियते इत्यर्थः। तदेत्यनेन—यदा भेदविवक्षा तदा गवां विंशतिरिति वैयधिकरण्यमित्यपि सूचितम्। दशतोः संघे इति। दशसमुदाययोः संघे इत्यर्थः। भाष्ये—संहनने वर्त्तिष्यते इति। संहनने द्रव्यसंघे स्वप्रकृतिकप्रत्ययघटितं वृत्त्यन्तरं प्राप्स्यत इत्यर्थः। तदाह—पराऽर्थेति। भाष्ये—सङ्ख्यासंहनने इति। सङ्ख्यारूपे समुदाये वृत्त इत्यर्थः। कदाचिदपीति। अत एव 'विंशतिर्गोसंघ' इति न।

१—'उभयोरवम्' पा०।

तद्यथा—शुक्लं वस्त्रम्, शुक्ला शाटी, शुक्लः कम्बलः, शुक्लौ कम्बलौ, शुक्लाः कम्बला इति । यदसौ द्रव्यं श्रितो गुणस्तस्य यल्लिङ्गं वचनं च तद्गुणस्यापि भवति । विंशत्यादयः पुनर्नानुवर्त्तन्ते ।

अन्येऽपि वै गुणवचना नावश्यं द्रव्यस्य लिङ्गसङ्ख्ये अनुवर्त्तन्ते । तद्यथा—गावो धनम् । पुत्त्रा अपत्यम् । इन्द्राग्नी देवता । विश्वेदेवा देवता । यावन्तस्ते तां वाशितामनुयन्ति सर्वे ते दक्षिणा समृद्धया इति । अथात्राऽननुवृत्तौ हेतुः शक्यो वक्तुम् ? बाढं शक्यो वक्तुम् । कामं तर्ह्युच्यताम् । इह कदाचिद्गुणः प्राधान्येन विवक्षितो भवति ।

प्र०—गुणिनौ । नैष दोषः । गवां दशतश्च तात्त्विकभेदाभावाद्गवामपि गुणित्वात् । तत्राव्यभिचाराद्दशता विंशतिर्न विशेष्यते—दशतोर्विंशतिरिति । गोभिस्त्वश्वादिव्यावृत्तये विशेष्यते—गवां विंशतिरिति । यथा 'पटस्य शौक्ल्य'मिति पटेन शङ्खादिव्यावृत्तये शौक्ल्यं विशेष्यते न तु शुक्लेन गुणेन स्वसमवेतं गुणसामान्यं—शुक्लस्य शौक्ल्यमिति, व्यभिचाराभावात् । वचनपरिहार उभयोरिति । समुदायाभिधाने गुण्यभिधाने चेत्यर्थः । तत्र समुदायाभिधाने तस्यैकत्वात्सिद्धमेकवचनमिति सामर्थ्यात्परिहृत एव वचनदोषः । सामानाधिकरण्ये तु परिहार उच्यते इति भावः । तं—वचनदोषं यदि तर्हीत्यनुभाष्य परिहरति विंशत्यादयः पुनरिति । प्राक्शतात्तेषां स्त्रीलिङ्गत्वादेकवचनान्तत्वाच्च, शतस्य नपुंसकत्वादेकवचनान्तत्वाच्चेति भावः । विंशती विंशतयः शते शतानीति तु प्रचयविवक्षायामेकशेषो भवति । गावो धनमिति । धनादीनां साकाङ्क्षत्वाद्भेदकत्वात्क्रियायां पारतन्त्र्याच्च गुणत्वम् । यथा शुक्लमित्युक्ते किं तदिति नित्यं द्रव्यमाकाङ्क्षति । शुक्लं च वस्त्रमिति द्रव्यस्य भेदकम् । शुक्लमानयेति क्रियायां द्रव्यपरतन्त्रं; द्रव्यानयनमन्तरेण गुणानयनासंभवादिति शौक्ल्यं गुणः । एवं धनमित्युक्ते 'किं त'दिति च गवाद्याकाङ्क्षति, गावो धनमिति गवां प्रीतिहेतुत्वावगमाद्भेदकं, धनमानयेत्युक्ते गवादिद्रव्यानयनात्क्रियायां

उ०—भाष्ये-गुणो विशेष्यते इति । भेदेनेत्यर्थः । नन्विति । एवञ्च दशतोविंशतिरिति प्राप्नोतीति भावः । गवां गोसमूहेन दशतश्च दशत्संघेन न पारमार्थिको भेदः किन्तु बुद्धिकल्पित इति न दोष इत्याशयेनाह—गवां दशतोश्चेति । गवामपि दशत्संघम्प्रति गुणित्वादित्यर्थः । न तु शुक्लेन गुणेनेति । स्वाश्रयद्वारेत्यर्थः । समुदायेति । वर्गद्वयसमुदायेत्यर्थः । गुण्यभिधाने चेति । तादृशसंघगुणकद्रव्याऽभिधाने चेत्यर्थः । तादृशसंघ एव विंशतित्वमिति बोध्यम् । एवं द्व्यादिसंघ एव द्वित्वादिकमित्याहुः ।

यदि तर्हीत्यनुभाष्येति । 'यदि तर्हीत्यादि तद्गुणस्याऽपि भवती'त्यन्तेन ग्रन्थेनाऽनूद्येत्यर्थः । विंशत्यादयो गुणवचना इत्यस्य—तत्सदृशा इत्यर्थः । प्रचयविवक्षायामिति । समुदायभेदविवक्षायामित्यर्थः । विंशत्यादिभिस्तदननुवृत्तिं दृष्टान्तसिद्धयुक्त्योपपादयितुमाह–भाष्ये–अन्येऽपि वै गुणेत्यादि । ननु धनादीनां द्रव्यवचनत्वात्कथं गुणवचनत्वमत आह—धनादीनामिति । हेतुत्रयमपि दृष्टान्ते उपपादनपूर्वं प्रकृते उपपादयति—यथेत्यादि । भेदकमिति । प्रीतिहेतुत्वेनेतरेभ्यो भेदकमित्यर्थः ।

यद्यथा—पञ्चोडुपशतानि तीर्णानि, पञ्चफलकशतानि तीर्णानि। अश्वैर्युद्धम्। असिभिर्युद्धमिति। न चाऽसयो युध्यन्ते। असिगुणाः पुरुषा युध्यन्ते। गुणस्तु खलु प्राधान्येन विवक्षितो भवति। इह तावद्गावो धनमिति,—धिनोतेर्धनम्, एको गुणः स च प्राधान्येन विवक्षितः। पुत्रा अपत्यमित्यपतनादपत्यम्, एको गुणः स प्राधान्येन विवक्षितः। इन्द्राग्नी देवता विश्वेदेवा देवतेति, दिवेरैश्वर्यकर्मणो देवस्तस्मात्स्वार्थे तल्, एको गुणः स प्राधान्येन विवक्षितः। यावन्तस्ते तां वाशितामनुयन्ति सर्वे ते दक्षिणा समृद्ध्या इति। दक्षेर्वृद्धिकर्मणो दक्षिणा, एको गुणः स प्राधान्येन विवक्षितस्तस्यैकत्वादेकवचनं भविष्यति। विंशत्यादिषु चाऽप्येको गुणः स प्राधान्येन विवक्षितस्तस्यैकत्वादेकवचनं भविष्यति।

प्र०—पारन्त्र्यमिति धनं गुणः। उडुपशतानीति। अत्र सङ्ख्यालक्षणस्य गुणस्य तरणे प्राधान्यं विवक्षितम्। तीर्णानीति कर्त्तरि निष्ठाभिधानात्। तत्त्वतस्तु सङ्ख्येयानामुडुपानां प्लवने कर्तृत्वम्। अथवोडुपानां करणानामेव कर्तृत्वविवक्षायामिदमुदाहरणम्। अश्वैरिति। अश्वा असयश्चाधिकरणत्वात्करणत्वाच्चोपकारित्वाद्गुणा अपि सन्तः प्रहारे प्राधान्येन विवक्षिताः, कर्त्तरि तृतीयाविधानात्। धिनोतेर्धनमिति। समुदायस्य प्रीतिहेतुत्वाद्धनत्वं न त्वेकैकस्य गोपिण्डस्येति धनमेकं गोभिर्विशेष्यते। आश्रितसङ्ख्याविशेषाश्च गोपिण्डा धनं विशेषन्तः समुदायस्य प्रीतिहेतुत्वं प्रत्याययन्तीति गावोऽपि धनसङ्ख्यां नानुवर्त्तन्ते, गोर्धनमित्युक्ते विवक्षितार्थानवगमात्। अपतनादिति। बहूनां चापतनहेतुत्वं न त्वेकैकस्य। तथा चोच्यते 'वरमपुत्रत्वं नत्वेकपुत्रते'ति। लोकाश्रयत्वाल्लिङ्गस्याऽपत्यशब्दो नपुंसकलिङ्ग एव प्रयुज्यते। प्रत्येकं त्वपतनहेतुत्वे विवक्षिते 'पुत्रा अपत्यानी'ति बहुवचनं भवत्येव। इन्द्राग्नी देवते इति। सङ्घस्य

उ०—भाष्ये–अथाऽत्राऽननुवृत्ताविति। गुणिलिङ्गाद्यननुवृत्तावित्यर्थः। उडुपशतनीत्यादि–षष्ठीतत्पुरुषः। कर्त्तरि निष्ठेति। प्लवनार्थस्य तरतेरकर्मकत्वादिति भावः। तरणे च तेषां कर्तृत्वात्प्राधान्यमिति तात्पर्यम्। ननु तेषां करणत्वेन कथं कर्तृत्वमिति चेन्न, यदा स्वत एव तानि जले प्लवन्ते तदोदाहरणत्वमित्याशयात्। इत एव वाऽस्वरसादाह—अथवेति। एवञ्च करणत्वेन गुणानामेवोडुपानां प्राधान्यविवक्षेति भावः। कर्त्तरि तृतीयेति। कर्त्रन्तराऽनुपादानात्क्रियाया नियमेन कर्त्राकाङ्क्षत्वाच्च तेषामेव कर्तृत्वप्रतीतिरिति तात्पर्यम्। समुदायस्येति। अयम्भावः,—यस्य धर्मस्य धर्म्मिणा सहाऽभेदः प्रतिपाद्यते, स चेत्तेषु प्रत्येकं परिसमाप्तस्तदा तस्याऽपि धर्मिवदेव भिन्नत्वाद् द्विवचनादि। यथा—शुक्लौ शुक्ला इति। न चैवं प्रकृते, धनाकारे भेदाऽभावाद्बहुवचनाऽप्रसङ्ग इति। धनमेकमिति। प्रीतिहेतुत्वमेकं समुदाये पर्याप्तमित्यर्थः। एकरूपप्रीतिहेतुत्वस्य प्रतिपिपादयिषितत्वादिति भावः। भाष्ये—स च प्राधान्येन विवक्षित इति। एतदेव चाऽस्य प्राधान्यं यत्तद्गतसंख्यावत्त्वेनैव ततस्तदाश्रयद्रव्यप्रतीतिरिति बोध्यम्। केवलधर्मप्रतीतिस्तु नैतेभ्योऽनभिधानादिति 'गवां धन'मित्यादि नापाद्यम्। द्रव्यवचनानामप्येषां गुणवचनसादृश्याद्गुणवचनव्यवहारो भाष्ये। सादृश्यञ्चोपपादितमेव कैयटेन। यथा च लोके यद्धनादिना यो धनकार्यादीनि लभते,

अयं तर्हि विंशत्यादिषु भाववचनेषु दोषः। गोविंशतिरानीयतामिति भावानयने चोदिते द्रव्यानयनं न प्राप्नोति।

नैष दोषः। इदं तावदयं प्रष्टव्यः—अथेह गौरनूबन्ध्यो[1]ऽजोऽग्नीषोमीय इति, कथमाकृतौ चोदितायां द्रव्ये आरम्भणालम्भनप्रोक्षणविशसनादीनि क्रियन्त इति?

प्र०—देवतात्वमेकं हविष्प्रतीति द्विवचनाभावः। देवते इत्युच्यमाने प्रत्येकं देवतात्वं प्रतीयते, ततश्च विकल्पेन देवताकार्यं स्यात्। यथा 'खादिरे बध्नाति' 'पालाशे बध्नाती'ति बध्नातावेवार्थत्वादधिकरणविकल्पः। सर्वे ते दक्षिणेति। अत्रापि समुदायस्य दक्षिणात्वमित्येकवचनम्। दक्षिणा इति तु बहुवचने दाने विकल्पः स्यात्। विंशत्यादिष्वति। विंशतिसङ्ख्या समुदितद्रव्यसमवायिनी न तु प्रत्येकं शुक्लादिवत्परिसमाप्तेति द्रव्यगते लिङ्गसङ्ख्ये नानुवर्तते। पञ्चादयस्तु नित्यं सङ्ख्येयवचना इति सङ्ख्येयलिङ्गसङ्ख्यानुविधायिनः। भावानयन इति। न ह्यन्यस्मिंश्चोदितेऽन्यस्यानुष्ठानं युक्तम्। न हि 'दण्डं छिन्धी'त्युक्ते कश्चिद्दण्डिनं छिनत्तीति भावः।

उ०—स तदपेक्षया प्रधानत्वेन व्यवह्रियते, तद्वदत्र प्राधान्येन विवक्षेति भाष्यतात्पर्यम्। यत्तु प्रकृत्यर्थताऽवच्छेदकेऽत्र संख्याऽन्वयः, संख्याऽन्वयित्वमेव च प्राधान्यमिति, तन्न, तस्याऽप्रकृत्यर्थत्वेन 'प्रकृत्यर्थाऽन्विते'ति व्युत्पत्तिविरोधात्। नन्वेवं गावो धनं संख्यां कुतो नाऽनुवर्त्तन्त इत्यत आह—आश्रितेति। प्रत्येकं त्विति। अनया रीत्या 'गावो धनानी'त्यपि भवतीति द्रष्टव्यम्। दक्षिणात्वमिति। कर्मफलसमृद्धिहेतुत्वमित्यर्थः। तदुक्तम्—'दक्षिणा दक्षतेः समृद्धिकर्मणो व्यृद्धं समर्द्धयती'ति। विकल्पः स्यादिति। 'कदाचिद्द्वौ, कदाचित्सर्वे' इत्येवं विकल्पः स्यादित्यर्थः। विंशतिसंख्येति। दशद्वयसंघरूपैव सेत्याहुः। नाऽनुवर्त्तते इति। 'विंशतिर्गाव' इत्यादाविति भावः। नन्वेवं 'त्रयः' 'पञ्चे'त्यादावपि एकवचनापत्तिः, त्रित्वादीनामपि प्रत्येकमपरिसमाप्तत्वादत आह—पञ्चादयस्त्विति। अत्र वदन्ति,—विंशतिशब्दद्व्यादिशब्दयोः को विशेषः। समुदितद्रव्यसमवायित्वस्योभयत्राऽपि तुल्यत्वात्, 'द्व्येकयो'रित्यादौ तेषामपि संख्यामात्रवचनताया इष्टत्वाच्च। तस्मादयमत्र भाष्यार्थः—'विंशत्यादयो द्व्यादयश्च धर्मशक्ता एव, धर्मधर्मिणोरभेदाच्च व्यक्तौ कार्याणि, तयोश्च भेदाऽभेदौ। विंशत्यादयः कदाचिद्भेदेन संख्यां वदन्ति—'गवां विंशति'रिति। कदाचिदभेदेन—'विंशतिर्गाव' इति। यदाऽप्यभेदेन तदापि धर्मगतसंख्यावैशिष्ट्येनैव ततो द्रव्यप्रतीतिः शब्दशक्तिस्वभावात्। यथा 'गावो धन'मित्यादौ प्रीतिहेतुत्वगुणगतसंख्यावैशिष्ट्येन द्रव्यप्रतीतिर्धनशब्दात्। इयांस्तु विशेषः,—तत्र कदाचित्स्वगतसंख्यावैशिष्ट्येनापि प्रतीतिः। अन्यगतसंख्यावैशिष्ट्यमन्यस्य कथमिति चेदारोपेणेति गृहाण। द्व्यादयस्तु स्वगतवाच्यसंख्याविशिष्टद्रव्याऽभेदेन तद्गतसंख्याविशिष्टमेव धर्मम्प्रतिपादयन्ति, शब्दशक्तिस्वभावादिति न कदाचिदपि तत्रैकवचनम्, नाऽपि विंशत्यादिभ्यो बहुवचनम्। विंशतिप्रचये तु बहुवचनमिष्टमेव। 'द्व्येकयो'रित्यादौ तु विंशतिवदेव धर्मगतसंख्याविशिष्टद्रव्यस्यैव प्रतीतिरिति द्विवचनम्। एवम्प्रतीतिरीदृशवृत्तिविषयैवेति नाऽतिप्रसङ्गः। 'न ब्राह्मणं हन्या'दित्यादौ 'जातावेकवचन'मित्यस्याऽप्ययमेवाऽर्थः—जातिसंख्यारोपवद्द्रव्यस्यैव प्रतीतिरिति। तद्गतसंख्या-

१ 'अनुबन्ध्यः' पा०।

असम्भवात् । आकृतावारम्भणादीनां सम्भवो नास्तीति कृत्वाऽऽकृतिसहचरिते द्रव्य-आरम्भणादीनि क्रियन्ते । इदमप्येवं जातीयकमेव । असम्भवाद्भावानयनस्य द्रव्यानयनं भविष्यति । अथवाऽव्यतिरेकात् ॥ ५९ ॥

छेदादिभ्यो नित्यम् ॥ ५ । १ । ६४ ॥

पन्थो ण नित्यम् ॥ ५ । १ । ७६ ॥

छेदादिपथिभ्यो विग्रहदर्शनान्नित्यग्रहणानर्थक्यम् ॥ १ ॥

छेदादिपथिभ्यो नित्यग्रहणमनर्थकम् । किं कारणम् ? 'विग्रहदर्शनात्' ।

प्र०—इदं तावदिति । अन्यस्मिंश्चोदितेऽन्यत्रापि तदव्यभिचारिणि कार्यं दृश्यत इति मत्वा प्रश्नः । असंभवादिति । आकृतौ साक्षात्कार्याणामसम्भवाद्द्रव्येषु कार्याणि क्रियन्त इत्यर्थः । येषां तावद्व्यतिरिक्ता जातिस्तेषामेतदेव जातौ कार्यं चोद्यमानं द्रव्यविषयमेवोपतिष्ठते । यथा चाग्निमानयेति चोदिते नाऽन्तरीयकत्वादचोदितमपि पात्रमानीयते । तथा जातौ चोदितायां द्रव्ये क्रियाप्रवृत्तिः । अव्यतिरेकादिति । जातितद्वतोर्गुणगुणिनोश्च तात्त्विकभेदाभावाद्द्रव्यमेव तेन द्वारेण तासु तासु क्रियासु चोद्यत इत्यर्थः । सहस्रादयस्तु पृषोदरादित्वादनुज्ञातसाधिमानः ॥ ५९ ॥

छेदादि । छेदादिपथिभ्य इति । नित्यग्रहणं प्रत्ययान्तरनिवृत्त्यर्थं तावदिह न भवति, तस्याऽप्राप्तत्वात् । यथैकगोपूर्वाट्ठञ्नित्यमित्यत्र नित्यग्रहणं मतुब्निवृत्त्यर्थम् । तथा हि छेदादिभ्य इति ठग्विधीयते न च तेभ्यः प्रत्ययान्तरप्रसङ्गः । पथिशब्दात्ष्कन्प्रत्ययो विधानसामर्थ्याद्भवत्येव प्रत्ययान्तरस्य तु प्रसङ्गाभावः । नापि तद्विषयार्थं नित्यग्रहणम्—यथा 'क्त्रेर्मम्नित्य'मिति मप्प्रत्ययादन्यत्र श्यन्तप्रयोगनिवारणफलं नित्यग्रहणम्, छेदादीनामन्यत्र प्रयोगस्येष्टत्वात् । नापि प्रत्ययार्थे-

उ०—रोपश्च विनिगमनाविरहात्सर्वव्यक्तिष्विति सकलव्यक्तिप्रतीतिः । 'जातिप्राधान्यविवक्षे'त्यस्याऽव्ययमेवार्थः । तद्ध्वनयन् वक्ष्यति—अथवाऽव्यतिरेकादिति । भाष्ये—भाववचनेष्विति । वैयधिकरण्ये इत्यर्थः । आकृतौ चोदितायामिति । आकृतिरेव शक्या सैव तज्जन्यबोधविषयेति मत इदम् । तदव्यभिचारिणीति । अनेनाऽतिप्रसङ्गनिरासः । अव्यभिचारश्च शक्तिग्रहे नियमेन विषयतया बोध्यः, तत्पक्षेऽपि 'गौर्गोपदशक्य' इत्येव शक्तिग्रहात् । तदुक्तं भाष्ये—आकृतिसहचरित इति । व्यतिरिक्तेति । व्यतिरिक्तैवेत्यर्थः । तेषामेतदेवेति । एतदेव समाधानमित्यर्थः । तदेवाह—जातौ कार्यमित्यादिना । असम्भवादिति भावः । अव्यतिरेकादिति । एवञ्च सामानाधिकरण्यमपि मतुब्लोपं विनैवेत्यादि ध्वनितम् । नन्वेवं सहस्रादीनामननुगमोऽत आह—पृषोदरादित्वादिति । केषाञ्चिद्ग्रहणन्तूदाहरणमात्रमित्याहुः ॥ ५९ ॥

छेदादि । अन्यार्थत्वमाशङ्क्य नित्यग्रहणस्य निराचष्टे—नित्यग्रहणमित्यादिना । यथा 'एकगोपूर्वा'दित्यत्र नित्यग्रहणं मतुब्निवृत्त्यर्थं, तथेह न भवति,–कुतः,–तस्याऽप्राप्तत्वादित्यन्वयः । अप्राप्तिमेवोपपादयति—तथा हीति । विधानसामर्थ्यादिति । अन्यथा 'पथः ष्क'न्निति व्यर्थं स्यादिति भावः ।

विग्रहो दृश्यते—छेदमर्हति, पन्थानं गच्छतीति ॥ विकारार्थं तर्हीदं नित्यग्रहणं क्रियते, विकारेण विग्रहो मा भूदिति । 'विराग विरङ्गं च'* । 'पन्थो ण नित्य'मिति ।

## विकारार्थमिति चेदकङादिभिस्तुल्यम् ॥ २ ॥

विकारार्थमिति चेदकङादिभिस्तुल्यमेतत्† । यथाऽकङादिभिर्विकारैर्विग्रहो न भवत्येवमाभ्यामपि न भविष्यति ।

किं पुनरिहाऽकर्त्तव्यं नित्यग्रहणं क्रियते, आहोस्विदन्यत्र कर्त्तव्यं न क्रियते ? इहाऽकर्त्तव्यं क्रियते । एष एव न्यायो यदुत 'सन्नियोगशिष्टानामन्यतरापाये उभयो-

प्र०—विशेषणम्, नित्यं छेदमर्हतीत्यस्यार्थस्याऽसम्भवात् । न हि कश्चित्पदार्थो नित्यं छेदमर्हति । योऽपि वेतसादिरर्थश्छिन्नः प्ररोहति सोपि न नित्यं छेदमर्हति, कालान्तरे तस्य छेदप्रवर्त्तनात् । नित्यं पन्थानं गच्छतीति यद्यप्यर्थः सम्भवति तथापि नाऽत्रैवार्थे पान्थशब्दस्य प्रयोग इष्यते, कदाचिदगच्छत्यपि प्रयोगात् । वाक्यनिवृत्त्यर्थं नित्यग्रहणं स्यात् । यथा—'नित्यं क्रीडाजीविकयो'रिति । एतदप्यप्रयोजनम्–शिष्टप्रयोगे वाक्यस्य दर्शनात् । विकारेणेति । नित्यग्रहणं विकारेण सम्बध्यते । विरङ्गादेशः पन्थादेशश्च नित्यं ठण्प्रत्ययविषयौ भवतो न तु ताभ्यां वाक्यं कर्त्तव्यमित्यर्थः । अन्यथा तयोः साधुत्वं सर्वविषयमित्याशङ्केत । प्रत्ययविधानं त्वन्वाचीयमानं विज्ञायेतेति भावः । अकङादिभिरिति । 'सुधातुरकङ्च' 'कल्याण्यादीनामिनङ्' 'परस्त्री परशु' चे'ति प्रत्ययसंनियोगेन विधीयमानानामादेशानां तदभावे प्रसङ्ग एव नास्तीति नार्थो विकारेण वाक्यनिषेधार्थेन नित्यग्रहणेन । संनियोगशिष्टानामिति । विशिष्टप्रयोगसिद्धये ययोरेकस्मिन्विषये विधिस्तयोस्तद्विषयादन्यत्रैकस्याऽप्रयोगे परोऽपि न प्रयुज्यते । यथा 'श्रुवः शृ चे'ति 'शृ'सन्नियोगेन विधीयमानस्य श्नुभावस्य विषयान्तरे प्रयोगाभावः । अस्यैव न्यायसिद्धस्यार्थस्य 'बिल्वकादिभ्यश्छस्य

उ०—प्रत्ययान्तरस्येति । कना बाधादिति भावः । इष्टत्वादिति । अत एव छेदादिपठितसम्प्रश्नशब्दस्य विधिनिमन्त्रणादिसूत्रे स्वतन्त्रप्रयोगः । वाक्यदर्शनादिति । न च 'नित्यं कौटिल्ये गता'वित्यत्र यथाऽर्थान्तरनिवृत्त्यर्थं नित्यग्रहणं वृत्तिमते, तथेहाऽपि स्यादिति वाच्यम्, अर्थान्तरेऽपि छेदादिभ्य आर्हीयप्रत्ययेष्टेरिति बोध्यम् । ननु 'नित्यं विकार उत्पद्यते' इत्येव लभ्यते, न तु तेन वाक्यनिवृत्तिरत आह—नित्यं प्रत्ययेति । वा श्रुत्यभावादेव विकारस्य नित्यत्वे लब्धे नित्यश्रुतिरेतदर्थेति भावः । ननु प्रत्ययसन्नियोगशिष्टत्वात्कथं सर्वविषयस्य साधुत्वमत आह—अन्वाचीयमानमिति । विकारेण वाक्येति । विकारेण प्राप्तस्य वाक्यस्य निषेधार्थेनेत्यर्थः । अकङादिभिस्तुल्यमित्यनेन किमकङादिषु कर्त्तव्यताऽऽपाद्यते, किं वा तद्वदिहाऽकर्त्तव्यतोच्यते इति पृच्छति भाष्ये—किम्पुनरिति । सन्नियोगशिष्टत्वं सहविधानमित्याह—विशिष्टेति । सन्नियोगपदार्थः—एकस्मिन् विषये इति । ननूभाभ्यां कर्त्तव्यत्वेन नोदितस्याऽपि भारवहनादेरेकेनाऽपि शक्तेन करणं भवतीत्यत आह—

* ५ । १ । ६४ गणसूत्रम् । † सुधातुरकङ् च ४ । १ । ९७

रप्यभावः' । तद्यथा—देवदत्तयज्ञदत्ताभ्यामिदं कर्त्तव्यमिति देवदत्तापाये यज्ञदत्तोऽपि न करोति ॥ ६४ ॥ ७६ ॥

## यज्ञर्त्विग्भ्यां घखञौ ॥ ५ । १ । ७१ ॥

### यज्ञर्त्विग्भ्यां तत्कर्मार्हतीत्युपसङ्ख्यानम् ॥ १ ॥

यज्ञर्त्विग्भ्यां तत्कर्मार्हतीत्युपसङ्ख्यानं कर्त्तव्यम् । यज्ञकर्मार्हतीति यज्ञियो देशः । ऋत्विक्कर्मार्हत्यार्त्विजीनं ब्राह्मणकुलमिति ॥ ७१ ॥

## पारायणतुरायणचान्द्रायणं वर्त्तयति ॥ ५ । १ । ७२ ॥

### तद्वर्त्तयतीत्यनिर्देशस्तत्राऽदर्शनात् ॥ १ ॥

तद्वर्त्तयतीत्यनिर्देशः । अगमको निर्देशोऽनिर्देशः । पारायणं को वर्त्तयति—

प्र०—लु'गित्यत्र लिङ्गं वक्ष्यते । इदं कर्त्तव्यमिति । धर्मनिर्णयादिकम् । तत्र ह्येकस्य सन्देहसम्भवादनधिकारः ॥ ६४ ॥ ७६ ॥

यज्ञर्त्विक् । तत्कर्मार्हति । ननु वृत्तिविषये यज्ञार्थव्यापारे यज्ञशब्दस्य वृत्त्या सिद्धः सूत्रेणैव प्रत्ययो यथा मृदङ्गवादनवृत्तेर्मृदङ्गशब्दाट्ठग्भवति,—मार्दङ्गिक इति । नैतदस्ति । यत्र हि गौणार्थवृत्तिभ्य एव प्रत्यय इष्यते न तु मुख्यार्थवृत्तिभ्यस्ततश्च गौणमुख्यपरिभाषा तत्र नाश्रीयते । इह तु यश्च यज्ञमर्हति यश्च तत्कर्मार्हति तयोरपि प्रत्यय इष्यते । तत्र मुख्यार्थसम्भवे गौणपरिग्रहस्याऽन्याय्यत्वात्सूत्रेण न सिध्यतीति वार्त्तिकारम्भः । ननु यो देशो यज्ञकर्मार्हति स यज्ञमर्हतीति नार्थो वार्त्तिकारम्भेण । नैतदस्ति । यस्य यज्ञेऽधिकारः स यज्ञमर्हति, अधिकारश्च कर्त्तुरर्थिनो विदुषः शास्त्रेणाऽपर्युदस्तस्य न तु देशादेस्तस्य तु योग्यत्वाद्यज्ञार्थव्यापारार्हत्वमुच्यते ॥ ७१ ॥

पारायण । अनिर्देश इति । इष्टार्थसाधनत्वाभावान्निर्देशकार्याकरणादनिर्देशः । परस्येति । शिष्यस्य । करोतीति । उच्चारयति । अध्यापक इत्यर्थः । शिष्यस्तु केवलं प्रतिपद्यते न तु निष्पा-

उ०—धर्मेति । यत्तु 'नित्यग्रहणं पौनःपुन्यार्थकं छिन्नप्ररूढो वेतसादिश्चोदाहरण'मिति वृत्तिकृतः, तद्भाष्यविरुद्धम् । एवं च 'छेदादिभ्य'इत्यपि व्यर्थमेवेति 'छेदादिभ्यो नित्य'मिति सूत्रस्यैव प्रत्याख्यानं बोध्यम् ॥ ६४ ॥ ७६ ॥

यज्ञर्त्वि । यज्ञार्थेति । यज्ञशब्देन प्रधानज्योतिष्टोमादिर्यागरूपः । गौणेति । अप्रसिद्धत्वमत्र गौणत्वम् । वार्त्तिकारम्भ इति । गौणादपि प्रत्ययसिध्यर्थं वार्त्तिकारम्भ इति भावः । यज्ञेऽधिकार इति । शब्दशक्तिस्वभावात्तत्रैवाऽर्हे प्रत्यय इष्यते ॥ ७१ ॥

पारायणतु । ननु गुरुकृत्वविषये निर्देशस्य गमकत्वादनिर्देश इत्ययुक्तमत आह—इष्टार्थेति । निर्देशकार्याऽकरणेऽयं हेतुः । शिष्यस्येति । 'अर्थबोधार्थ'मिति शेषः । प्रतिपद्यते—तदुच्चारितं वस्तु

यः परस्य करोति । तुरायणं को वर्त्तयति यश्चरुपुरोडाशान्निर्वपति[1]। 'तत्राऽदर्शनात्' । न च तत्र प्रत्ययो दृश्यते ।

इञ्यञ्योश्च दर्शनात् ॥ २ ॥

इञ्यञ्योश्च प्रत्ययो दृश्यते । यः पारायणमधीते स पारायणिक इत्युच्यते । यस्तुरायणेन यजते स तौरायणिक इत्युच्यते ।

यश्चैवाऽधीते यश्च परस्य करोत्युभौ तौ वर्त्तयतः । यश्च यजते यश्च चरुपुरोडाशान्निर्वपत्युभौ तौ वर्त्तयतः ॥ उभयत्र कस्मान्न भवति ? अनभिधानात् ॥७२॥

## योजनं गच्छति ॥ ५ । १ । ७४ ॥

योजनं गच्छतीति क्रोशशतयोजनशतयोरुपसंख्यानम् ॥ १ ॥

योजनं गच्छतीत्यत्र क्रोशशतयोजनशतयोरुपसङ्ख्यानं कर्त्तव्यम् । क्रोशशतं गच्छतीति क्रौशशतिकः । योजनशतं गच्छतीति यौजनशतिक इति ।

ततोऽभिगमनमर्हतीति च ॥ २ ॥

ततोऽभिगमनमर्हतीति च क्रोशशतयोजनशतयोरुपसङ्ख्यानं कर्त्तव्यम् । क्रोशशतादभिगमनमर्हति क्रौशशतिको भिक्षुः । योजनशतादभिगमनमर्हति यौजनशतिको गुरुः ॥ ७४ ॥

प्र०—दयति, अध्यापकाधीनत्वात्तन्निष्पत्तेरिति भावः । तुरायणमिति । यज्ञविशेषमृत्विगेव सव्यापारत्वान्निष्पादयति । यजमानस्तूष्णीमास्त इति भावः । उभौ ताविति । अन्यतराऽसंनिधौ क्रियाया अनुत्पादादुभयोः कर्तृत्वम् । यश्चेति । यजमानो देवतोद्देशेन स्वद्रव्यं त्यजतीति तस्याऽपि तुरायणनिर्वर्त्तने कर्त्तृत्वम् । तदेवं भाष्यकारेण यथान्यासं सूत्रं समर्थितम् । अनभिधानादिति । अध्यापके याजके च प्रयोगाभावात् ॥ ७२ ॥

उ०—प्राप्नोति । न तु निष्पादयति । 'तद्वस्तुविषयमुच्चारण'मिति शेषः । यज्ञविशेषमिति । संवत्सरसाध्यं यज्ञविशेषमित्यर्थः । अन्यतराऽसन्निधाविति । आदित आरभ्य आऽन्तादविच्छेदेनाऽध्ययनं पारायणम् । तच्चोभाभ्यां निर्वर्त्यत इति भावः ॥ ७२ ॥

उत्तरपथेना । ननु 'गच्छती'त्यर्थे पूर्वत्र द्वितीयायाः समर्थविभक्तित्वस्य क्लृप्ततया 'उत्तरपथेन 'गच्छती'त्ययुक्तमित्यत आह—चकार इति । प्रत्ययार्थमेवेति । न तु समर्थविभक्तियुक्तं वाक्यार्थमित्यर्थः ।

१—'यश्च पुरोडाशान्निर्वर्त्तयति' पा० । २—'यश्च पुरोडाशान्निर्वपति' पा० ।

## उत्तरपथेनाहृतं च ॥ ५ । १ । ७७ ॥

### आहृतप्रकरणे वारिजङ्गलस्थलकान्तारपूर्वपदादुपसङ्ख्यानम् ॥ १ ॥

आहृतप्रकरणे वारिजङ्गलस्थलकान्तारपूर्वपदादुपसङ्ख्यानं कर्त्तव्यम् । वारिपथेन गच्छति वारिपथिकः । वारिपथेनाहृतं वारिपथिकम् । वारि ॥ जङ्गल—जङ्गलपथेन गच्छति जाङ्गलपथिकः । जाङ्गलपथेनाहृतं जाङ्गलपथिकम् । जङ्गल ॥ स्थल—स्थलपथेन गच्छति स्थालपथिकः । स्थलपथेनाहृतं स्थालपथिकम् । स्थल ॥ कान्तार—कान्तारपथेन गच्छति कान्तारपथिकः । कान्तारपथेनाहृतं कान्तारपथिकम् ।

### अजपथशङ्कुपथाभ्यां च ॥ २ ॥

अजपथशङ्कुपथाभ्यां चेति वक्तव्यम् । अजपथेन गच्छति आजपथिकः । अजपथेनाहृतमाजपथिकम् । शङ्कुपथेन गच्छति शाङ्कुपथिकः । शङ्कुपथेनाहृतं शाङ्कुपथिकम् ।

### मधुकमरिचयोरण्स्थलात् ॥ ३ ॥

मधुकमरिचयोरण्स्थलाद्वक्तव्यः । स्थालपथं मधुकम् । स्थालपथं मरिचम् ॥७७॥

## तमधीष्टो भृतो भूतो भावी ॥ ५ । १ । ८० ॥

### अधीष्टभृतयोर्द्वितीयानिर्देशोऽनर्थकस्तत्राऽदर्शनात् ॥ १ ॥

अधीष्टभृतयोर्द्वितीयानिर्देशोऽनर्थकः । किं कारणम् ? 'तत्रादर्शनात्' । न ह्यसौ

प्र०—उत्तरप । चकारः प्रत्ययार्थसमीपे श्रूयमाणः प्रत्ययार्थमेव गच्छतीत्येतं समुच्चिनोति । समर्थविभक्तिस्तु तत्रापि सूत्रोपात्ता तृतीयैव । तेन वारिपथेन गच्छतीत्यादिः पाठो युक्तो न द्वितीयान्तपाठः । द्वितीयापक्षे आक्रान्तेऽनाक्रान्ते च प्रकृत्यर्थे प्रत्ययः स्यादाक्रान्ते एवेष्यते । मधुकमरिचयोरिति । अत्र मुख्यगमनासंभवात्, आहृत एव च प्रत्ययमिच्छन्ति । अन्ये तु गौणगमनाश्रयेण गच्छतीत्यत्राप्यर्थे प्रत्ययमाहुः । प्रत्ययार्थोपाधित्वाच्च द्वयोरसन्देहार्थोऽन्यतरप्रयोगः ॥ ७७ ॥

उ०—'तस्य व्याख्यान'—इत्यत्रेव वाक्यार्थपरामर्शीति शब्दाऽभावादिति भावः । 'आक्रान्त' इत्यादेः 'कर्त्रे'-त्यादिः । आक्रान्त इवेष्यत इति । तादृशस्य करणताया युक्तत्वादिति भावः । वार्यादिपूर्वपदकञ्च प्रकरणात्पथिशब्दान्तमेव गृह्यते । ( भाष्ये ) स्थलादिति । ततः परो यः पथिशब्दस्तदन्तादित्यर्थः । गौणगमनेति । अन्याऽधिष्ठितस्य रथादिवद्गौणगमनसम्भवादित्यर्थः ॥ ७७ ॥

मासमधीष्यते[1] । किं तर्हि ? मुहूर्त्तमसावधीष्टो मासं तत्कर्म करोति ।

## सिद्धं तु चतुर्थीनिर्देशात् ॥ २ ॥

सिद्धमेतत् । कथम् ? 'चतुर्थीनिर्देशात्' । चतुर्थीनिर्देशः कर्त्तव्यः,—तस्मा अधीष्ट[2] इति ॥ स तर्हि चतुर्थीनिर्देशः कर्त्तव्यः ? न कर्त्तव्यः । तादर्थ्यात्ताच्छब्द्यं भविष्यति,—मासार्थो मुहूर्तो मासः ॥ ८० ॥

## अवयसि ठंश्च ॥ ५ । १ । ८४ ॥

### अवयसि ठंश्चेत्यनन्तरस्यानुकर्षः ॥ १ ॥

अवयसि ठंश्चेत्यनन्तरस्यानुकर्षो द्रष्टव्यः† ॥ द्वेष्यं विजानीया'द्यवप्यनुव-

प्र०—तमधी । अधीष्टभृतयोरिति । यावन्तं कालमध्येषणं भरणं च क्रियते ततः प्रत्ययो नेष्यते । अध्येषणभरणफलव्यापारव्याप्यात्तु कालादिष्यते । ततो न प्राप्नोति । तस्याध्येषण-भरणाभ्यामव्याप्तया द्वितीयानुपपत्तिरिति निष्प्रयोजनो द्वितीयानिर्देशः । सिद्धं त्विति । तेन मासायाधीष्टो भृतो वेति तादर्थ्यचतुर्थ्यन्तात्प्रत्ययः । मासव्यापिव्यापारार्थमधीष्ट इत्यर्थः । तादर्थ्यादिति । मासादिशब्दा अध्येषणभरणव्याप्तमुहूर्त्तादिकालवाचिन एवाश्रीयन्ते भूतभाविनोस्तु प्रत्ययविधौ मुख्यार्थवृत्तय इति विभागो लक्ष्यपरतन्त्रत्वाल्लक्षणस्य ॥ ८० ॥

अवय । अनन्तरस्येति । एयतः । द्वेष्यमिति । विपरीतमित्यर्थः । व्यवहितस्यापि क्वचिदनुवृत्तिर्दृष्टा । यथा 'द्वितीयाटौस्स्वेन' इत्यत्रैतद इव इदम इति दर्शनादिहापि कश्चिद्भ्राम्ये-

उ०—तमधीष्टो । अधीष्टः—सत्कृत्य व्यापारितः । भृतो—वेतनेन क्रीतः । भूतः—सत्तया व्याप्तकालः । भावी—तादृश एवाऽनागतः । ननु क्वचिन्मासमप्यध्येषणादि क्रियतेऽत आह—यावन्तमिति । फलव्यापारेति । अध्येषणादिफलभूतो यो व्यापारः कर्मकरणरूपस्तद्व्याप्यात्—तेनाऽत्यन्तसंयुक्तादित्यर्थः । ननु मासस्य सम्प्रदानत्वाऽभावात्कथं चतुर्थीत्यत आह—तादर्थ्येति । ननु न मासस्वरूपार्थमध्येषणमत आह—मासव्यापीति । अध्येषणेति । मासव्यापिव्यापारफलकाऽध्येषणेत्यर्थः ॥ ८० ॥

अवयसि । इहाऽपि कश्चिदिति । 'अवयसि ठ'न्निति योगद्वयेनैव सिद्धौ चकारादिति तदाशयः । भाष्ये—यवप्यनुवर्त्तेत इति । 'पूर्वसूत्रे' इति शेषः । अन्यथा पूर्वसूत्रे उभयोरप्युपस्थितत्वाऽविशेषात्तस्यापि समुच्चयः स्यात् । 'अनन्तरस्याऽनुकर्ष' इत्युक्त्या तस्याऽनन्तरत्वं सूचितम् । तच्च पूर्वसूत्राऽननुवृत्तौ भवतीति साऽन्वाख्यायत इति भावः । कैयटेनाऽपि 'व्यवहितस्याऽपी'त्यादि व्याचक्षाणेन दृष्टान्ते च पूर्वसूत्रेऽप्यंननुवृत्तिरित्युक्तप्रायमेव । एवञ्च पूर्वसूत्रे 'चेनाधिकारप्राप्तठक एव समुच्चय इति बोध्यम् । अनन्तरस्येति भाष्यस्य

[1] 'मासमध्यष्यते' पा० । [2] 'तस्मायधीष्ट' पा० । † षण्मासाण्ण्यच्च ५ । १ । ८३

र्त' इति‡ । तदाचार्यः सुहृद्भूत्वाऽन्वाचष्टेऽवयसि ठंश्चेत्यनन्तरस्यानुकर्ष इति ॥ ८४ ॥

## षष्टिकाः षष्टिरात्रेण पच्यन्ते ॥ ५ । १ । ९० ॥

### षष्टिके संज्ञाग्रहणम् ॥ १ ॥

षष्टिके संज्ञाग्रहणं कर्त्तव्यम् । मुद्गा अपि हि षष्टिरात्रेण पच्यन्ते तत्र मा भूदिति ।

### उक्तं वा ॥ २ ॥

किमुक्तम् ? अनभिधानादिति* ॥ ९० ॥

## तदस्य ब्रह्मचर्यम् ॥ ५ । १ । ९४ ॥

### तदस्य ब्रह्मचर्यमिति महानाम्न्यादिभ्य उपसङ्ख्यानम् ॥ १ ॥

'तदस्य ब्रह्मचर्य'मिति महानाम्न्यादिभ्य उपसङ्ख्यानं कर्त्तव्यम् । महानाम्नीनां ब्रह्मचर्यं माहानाम्निकम् । आदित्यव्रतिकम् ।

प्र०—दित्यर्थः ॥ ८४ ॥

षष्टिकाः । बहुवचनमतन्त्रम् । एकवचनान्तस्यापि षष्टिकशब्दस्य लोके प्रयोगात् । संज्ञाग्रहणमिति । षष्टिरात्रेण पच्यन्ते इत्यत्रार्थे निपात्यमानस्य धान्यविशेष एव प्रयोगार्थम् । अनभिधानादिति । लोके तु स्वार्थे प्रयुज्यमानानां शब्दानां साधुत्वमात्रमनेन प्रतिपाद्यते न त्वर्थे नियोगः क्रियते ॥ ९० ॥

तदस्य । द्विधेदं सूत्रं व्याख्यायते—तदिति द्वितीयासमर्थात्कालवाचिनोऽस्येति षष्ठ्यर्थे ठञ्भवति ब्रह्मचर्यं चेद्गम्यते । मासं ब्रह्मचर्यमस्य मासिको ब्रह्मचारी । तथा—तदिति प्रथमा-

उ०—ण्यचेत्यस्येत्यर्थः । अत एव 'दत्तः षाण्मासिकोऽवधि'रित्यादिसिद्धमित्यन्ये ॥ ८४ ॥

षष्टिकाः । ननु सूत्रे 'षष्टिका' इति बहुवचननिर्देशाद्बहुवचन एवाऽस्य साधुत्वमवगम्यते, तत्कथं 'षष्टिके' इति वार्त्तिके एकवचननिर्देशोऽत आह—बहुवचनमिति । सूत्रे तु प्रयोगबाहुल्याऽभिप्रायेण तदिति भावः । 'षष्टिके' इति वार्त्तिके प्रयोगः शब्दपरतयाऽपि साधुः स्यादत आह—लोक इति । अयमन्वेष्यो बहुदर्शिभिः । सूत्रस्वरसात्तु तस्याऽसाधुत्वं प्रतीयत इति केचित् । निपात्यमानस्येति । रात्रशब्दलोपः क प्रत्ययश्च निपात्यत इत्यर्थः । धान्यविशेषो-व्रीहयः । ननु तदर्थे शास्त्रेण विधानात्कथमनभिधानमत आह—लोक इति । शिष्टलोकव्यवहारे इत्यर्थः । नियोगोऽपूर्वविधानम् ॥ ९० ॥

तदस्य । ननु 'तदस्ये'त्यर्थे विधानान्महानाम्नीनां ब्रह्मचर्यमिति विग्रहोऽसङ्गतोऽत आह—द्विधेति । ननु द्वितीयपक्षेऽपि 'मासो ब्रह्मचर्यमस्ये'त्यादावत्यन्तसंयोगप्रतीतेरत्यन्तसंयोग इति द्वितीया स्यादत

‡ द्विगोर्यप् ५ । १ । ८२ * ३ । २ । १ वा० ५

## तच्चरतीति च ॥ २ ॥

तच्चरतीति च महानाम्न्यादिभ्य उपसङ्ख्यानं कर्त्तव्यम् । महानाम्नीश्चरति माहानाम्निकः । आदित्यव्रतिकः ॥ नैष युक्तो निर्देशस्तच्चरतीति । महानाम्न्यो नामर्चः, न च ताश्चर्यन्ते, व्रतं तासां चर्यते । नैष दोषः । साहचर्यात्ताच्छब्द्यं भविष्यति—महानाम्नीसहचरितं व्रतं महानाम्न्यो व्रतमिति ।

## अवान्तरदीक्षादिभ्यो डिनिः ॥ ३ ॥

अवान्तरदीक्षादिभ्यो डिनिर्वक्तव्यः । अवान्तरदीक्षी तिलव्रती ।

## अष्टाचत्वारिंशतो ड्वुंश्च ॥ ४ ॥

अष्टाचत्वारिंशतो ड्वुंश्च डिनिश्च वक्तव्यः । अष्टाचत्वारिंशकः अष्टाचत्वारिंशी ।

## चातुर्मास्यानां यलोपश्च ॥ ५ ॥

चातुर्मास्यानां यलोपश्च ड्वुंश्च डिनिश्च वक्तव्यः । चातुर्मासकः चातुर्मासी ।
अथ किमिदं चातुर्मास्यानामिति ?

प्र०—समर्थात्कालवाचिनोऽस्येति षष्ठ्यर्थे ठञ्भवति यत्तदस्येति षष्ठीनिर्दिष्टं ब्रह्मचर्यं चेत्तद्भवति। मासो ब्रह्मचर्यमस्य मासिकं ब्रह्मचर्यमिति वाक्ये मासस्य प्राधान्यात्प्रथमैव न तु द्वितीया, तस्याः षष्ठीविषये विधानात् । महानाम्न्यादिभ्य इति । ब्रह्मचर्यस्य प्रत्ययार्थत्वात्सामर्थ्यलभ्या षष्ठी समर्थविभक्तिः । न च ता इति । चरणमनुष्ठानं, तच्च क्रियाविषयमिति भावः । महानाम्न्यो व्रतमिति । लिङ्गसंख्ये अजहदेव महानाम्नीशब्दो व्रते वर्त्तते । डिनेर्डित्करणमष्टाचत्वारिंशदर्थम् । अन्येषां यस्येति लोपेन रूपस्य सिद्धत्वात् । अष्टाचत्वारिंशक इति । वृत्तिविषये वर्षेष्वेव संख्येयेष्वष्टाचत्वारिंशच्छब्दो वर्त्तते । चतुर्षु वेदेष्वष्टाचत्वारिंशतं वर्षाणि व्रतं चरति । प्रतिवेदं द्वादशवर्षाणि व्रतचरणात् । चातुर्मासीति । तत्र भव इत्येवाऽणिसद्धः । तस्य तु द्विगोर्लुगन-

उ०—आह–तस्या इति । एवञ्च विशेषणादेव द्वितीयाविधिरिति भावः । नन्वेवमपि 'महानाम्न्योऽस्य ब्रह्मचर्य'-स्येत्येवं विग्रह उचितोऽत आह—सामर्थ्यलभ्येति । अयं भावः–सूत्रेऽपि द्वितीयपदे 'तदस्ये'ति व्यर्थ, 'तस्य ब्रह्मचर्य'मित्येव सिद्धेः । यस्य मासः सम्बन्धी, तन्मासस्याऽपि सम्बन्धि भवत्येवेति । एवञ्च तदस्येत्येतत्सामर्थ्यादाद्यव्याख्यानेऽपि सूत्रतात्पर्यं, भाष्यप्रामाण्येन द्वितीयेऽपीति । एवञ्च द्वितीयव्याख्याने तदित्यस्याऽन्वयो नेति तात्पर्यम् । ननु 'महानाम्न्यो व्रत'मित्यसङ्गतं, व्रतस्य नपुंसकत्वेन 'महानाम व्रत'मित्यस्यैवौचित्यादत आह–लिङ्गसङ्ख्ये इति । अत एव महानाम्नीशब्दस्याऽभाषितपुंस्कत्वाद् 'भस्याऽढे' इति पुंवत्त्वं न।

**चतुर्मासाण्ण्यो यज्ञे तत्र भवे ॥ ६ ॥**

चतुर्मासाण्ण्यो वक्तव्यो यज्ञे 'तत्र भव' इत्येतस्मिन्नर्थे । चतुर्षु मासेषु भवानि चातुर्मास्यानि यज्ञाः ।

**संज्ञायामण् ॥ ७ ॥**

संज्ञायामण् वक्तव्यः । चतुर्षु मासेषु भवा चातुर्मासी पौर्णमासी ॥ ६४ ॥

**तस्य दक्षिणा यज्ञाख्येभ्यः ॥ ५ । १ । ६५ ॥**

आख्याग्रहणं किमर्थम् ? 'तस्य दक्षिणा यज्ञेभ्य' इतीयत्युच्यमाने य एव सञ्ज्ञीभूतका यज्ञास्तत उत्पत्तिः स्यात्—आग्निष्टोमिक्यः राजसूयिक्यः वाजपेयिक्यः । यत्र वा यज्ञशब्दोऽस्ति—नावयज्ञिक्यः पावयज्ञिक्यः । इह न स्यात्पाञ्चौदनिक्यः दाशौदनिक्यः । आख्याग्रहणे पुनः क्रियमाणे न दोषो भवति । ये च संज्ञीभूतका यज्ञा ये च न संज्ञीभूतका यत्र च यज्ञशब्दोऽस्ति यत्र च नास्ति तदाख्यामात्रात्सिद्धं भवति ॥ ६५ ॥

---

प्र०—पत्य इति लुक्प्राप्नोतीति पुनरण्विधिः । 'कालाट्ठ'ञित्यस्याऽप्राप्तिः, समुदायस्याऽकालवाचित्वात्तदन्तविध्यभावाच्च । केचित्तु यथाकथंचित्कालवृत्तोऽत्र इष्टत्वाट्ठञ्येव प्राप्ते तस्य च लुकि इदमण्विधानमित्याहुः ॥ ६४ ॥

तस्य । आख्याग्रहणमिति । 'यज्ञेभ्य' इति बहुवचननिर्देशात्स्वरूपग्रहणाभावात्तदर्थाभिधायिभ्यः प्रत्ययो लभ्यत इति प्रश्नः । संज्ञीभूतकाः—सर्वलोकप्रसिद्धाः । प्रसिद्धत्वादेव ते यज्ञा मुख्या इति भावः । यत्र वेति । बहुवचननिर्देशाद्यज्ञशब्दान्ता एव गृह्येरन्नान्ये । एवं यज्ञशब्दश्रुतिर्बहुवचनं चानुगृहीतं भवतीति भावः । आख्याग्रहण इति । ये यज्ञं प्रसिद्धमप्रसिद्धं वाऽऽचक्षते सर्वेभ्यष्ठञ्भवति ॥ ६५ ॥

---

उ०—नन्वष्टाचत्वारिंशद्वर्षव्रतचारिण्येव प्रयोग इष्यते, अष्टचत्वारिंशत्सङ्ख्यव्रतचारिणि प्राप्नोतीत्यत आह— वृत्तिविषये इति । तस्य च लुकीति । अत्राऽपि 'प्राप्ते' इति बोध्यम् ॥ ६४ ॥

तस्य दक्षिणा । यज्ञमाचक्षते यज्ञाख्याः । मूलविभुजादित्वात्कः, सोपसर्गत्वात्सूत्रेणाऽप्राप्तेः । भाष्ये—आख्याग्रहणमिति । आङ्पूर्वख्याधातोर्ग्रहणं किमर्थमित्यर्थः । ह्रस्वपाठस्तु युक्तः पर्यायेभ्यो विशेषेभ्यश्च कथं सिद्धिरत आह—बहुवचनेति । अविशेषादुभयेभ्यः सिध्यतीति भावः । आख्याग्रहणसामर्थ्यादेव चाऽत्र 'काला'दित्यस्याऽसम्बन्ध इति बोध्यम् ॥ ६५ ॥

# तत्र च दीयते कार्यं भववत् ॥ ५ । १ । ६६ ॥

## कार्यग्रहणमनर्थकं तत्र भवेन कृतत्वात् ॥ १ ॥

कार्यग्रहणमनर्थकम् । किं कारणम् ? 'तत्र भवेन कृतत्वात्' । यद्धि मासे कार्यं मासे भवं तद्भवति, तत्र 'तत्र भवः' [ ४ । ३ । ५३ ] इत्येव सिद्धम् ।

किमिदं भवान्कार्यग्रहणमेव प्रत्याचष्टे न पुनर्दीयतेग्रहणमपि । यथैव हि यन्मासे कार्यं तन्मासे भवं भवत्येवं यदपि मासे दीयते तदपि मासे भवं भवति तत्र 'तत्र भव' इत्येव सिद्धम् । न सिध्यति । न तन्मासे दीयते । किं तर्हि ? मासे गते । एवं तद्यौपश्लेषिकमधिकरणं विज्ञास्यते । एवं तर्हि योगविभागोत्तरकालमिदं पठितव्यम्— 'तस्य दक्षिणा यज्ञाख्येभ्यः' [ ६५ ] 'तत्र च दीयते' । ततः कार्यं भववत् काला-

प्र०—तत्र च दीयते । दीयते कार्यमित्येतयोरर्थयोः कालवाचिभ्यो भववत्प्रत्यया भवन्तीति सूत्रार्थस्तत्र कार्यस्य भवेऽन्तर्भावादेवात्र प्रत्ययानां सिद्धिं मत्वाह—कार्यग्रहणमिति । मासे गते इति । मासे दीयत इति नैषाऽधिकरणसप्तमी, का तर्हि—यस्य च भावेनेति । तत्र भव इत्यत्र चाधिकरणसप्तम्याश्रिता, उपपदविभक्तेः कारकविभक्तिर्बलीयसीति न्यायादिह त्वतिदेश-सामर्थ्याद्भावलक्षणसप्तमीपरिग्रहः । औपश्लेषिकमिति । मासेऽतिक्रान्ते यद्दीयते तस्य औप-श्लेषिकमधिकरणमिति तत्र भव इत्यनेनैव सिद्धमित्यर्थः । कारकप्रकरणे च गौणस्यापि संज्ञा भवतीत्युक्तम् । एवं तर्हीति । प्रत्ययविध्यर्थं दीयत इत्युपात्तं न त्वतिदेशार्थं, तेनाग्निष्टोमे दीयते आग्निष्टोमिकं भक्तमित्येवमादि सिद्धम् । केचिदाहुः-दीयमानस्य भवत्वात्क्रतुयज्ञेभ्यश्चेति ठञ्सिद्ध इति । तदयुक्तम् । 'व्याख्यातव्यनाम्न' इति तत्रानुवर्तनात् । तदेवं कार्यग्रहणमेव वार्त्तिककृता

उ०—तत्र च दीयते । सूत्रार्थं इति । 'वृत्तिसंमत इति शेषः । सिद्धमिति । 'तत्र भव इत्यनेने'त्यादिः । नन्वेवमनेनाऽपि सूत्रेण न सिध्यतीत्यत आह—नैषेति । यस्य च भावेनेति । मासगमनेन दानक्रियाकालो लक्ष्यत इति तत्प्राप्तिरिति भावः । कारकविभक्तिरिति । कारकाऽधिकारपठितसंज्ञानिमित्तिका हि विभक्तिः कारकविभक्तिपदेनोच्यत इति भावः । औपश्लेषिकमिति । उप—समीपे श्लेषः—सम्बन्धः । तेन 'वटे गाव' इतिवत्सामीपिकमिदमधिकरणमित्यर्थः । नन्वयं गौण आधारस्तत्र कथं सप्तमीत्यत आह—कारकेति । प्रत्ययविध्यर्थमिति । चो 'दीयत' इत्यस्याऽनन्तरं योज्यः, वाक्यभेदश्च । तत्राद्ये यज्ञाख्येभ्य इति वर्त्तत इति भावः । प्रत्याख्यातमिति । वस्तुतस्तु कर्त्तुयोग्यस्याऽकृतस्यापि कार्यपदार्थत्वेन तत्र तत्र भवत्वाऽभावा-त्तदप्यावश्यकमेव । अत एवाऽन्त्यभाष्ये उपसंहारे तस्याऽप्युल्लेखः । 'तत्र भव' इत्यत्र हि भूधातुः सत्तार्थक एवेत्याहुः ।

योगविभागे फलान्तरमप्याह—प्रावतेरिति । एवं 'द्वयोर्मासयोर्भवं द्वैमासिक'मित्येतत्सिद्धिः कार्या'-शऽस्य फलम् । कालाट्ठञा तु न सिध्यति,'द्विगोर्लु'गित्यस्य प्रसङ्गात् । अनेन प्रत्यये तु न लुक्, अनार्हीय-

दिति† ॥ ९६ ॥

## व्युष्टादिभ्योऽण् ॥ ५ । १ । ९७ ॥

### अण्प्रकरणेऽग्निपदादिभ्य उपसङ्ख्यानम् ॥ १ ॥

अण्प्रकरणेऽग्निपदादिभ्य उपसङ्ख्यानं कर्त्तव्यम् ॥ त्रीण्यमान्यणग्रहणानि,—'व्युष्टादिभ्योऽण्' । 'समयस्तदस्य प्राप्तमृतोरण्' [ ५ । १ । १०४; १०५ ] । 'प्रयोजनं विशाखाषाढादणमन्थदण्डयोः' [ १०६; ११० ] इति । तत्र न ज्ञायते कतरस्मिन्नण्प्रकरणेऽग्निपदादिभ्य उपसङ्ख्यानम् । अविशेषात्सर्वत्र ।

'व्युष्टादिभ्योऽण्भवती'त्युक्त्वाऽग्निपदादिभ्यश्चेति वक्तव्यम् । अग्निपदे दीयते कार्यं वा—आग्निपदम् । पैलुमूलम् ॥ 'समयस्तदस्य प्राप्तमृतोरण्' । 'अग्निपदादिभ्यश्चे'ति वक्तव्यम् । उपवस्ता प्राप्तोऽस्यौपवस्त्रम् । प्राशिता प्राप्तोऽस्य प्राशित्रम् । 'प्रयोजनं विशाखाषाढादणमन्थदण्डयोः' । 'अग्निपदादिभ्यश्चे'ति वक्तव्यम् । चूडा प्रयोजनमस्य चौडम् । श्रद्धा प्रयोजनमस्य श्राद्धम् ॥ ९७ ॥

## अनुप्रवचनादिभ्यश्छः ॥ ५ । १ । १११ ॥

### छप्रकरणे विशिपूरिपदिरुहिप्रकृतेरनात्सपूर्वपदादुपसङ्ख्यानम् ॥ १ ॥

छप्रकरणे विशिपूरिपदिरुहिप्रकृतेरनात्सपूर्वपदादुपसङ्ख्यानं कर्त्तव्यम् । विशि—गेहानुप्रवेशनीयम् । पूरि—प्रपापूरणीयम् । पदि—गोप्रपदनीयम् अश्वप्रपदनीयम् । रुहि—प्रासादारोहणीयम् ।

प्र०—प्रत्याख्यातम् । 'प्राग्वतेः संख्यापूर्वपदानामिति वचनाद्द्वयोर्वाजपेययोर्दीयते द्वैवाजपेयिकमित्यत्रापि योगविभागाट्ठञ्भवति ॥ ९६ ॥

व्युष्टा । अण्प्रकरण इति । प्रकरणं—प्रस्तावः । अग्निपदादिभ्य इति । आदिशब्दः प्रकारे । तत्र कचिदर्थे कुतश्चिदण्प्रत्ययो भवति तत्राऽण्दर्शनमात्रकृतं सादृश्यमाश्रीयते ॥ ९७ ॥

अनुप्र । अनादिति । अनस्य केवलस्य पूर्वपदेन संबन्धाभावात्सामर्थ्यात्तदन्तग्रहणम् ।

उ०—स्वादप्राग्दीव्यतीयत्वाच्चेत्याहुः ॥ ९६ ॥

व्युष्टादिभ्यो । नन्वेवं सर्वत्राऽर्थे सर्वेभ्यः प्रत्ययः प्राप्नोतीत्यत आह—आदिशब्द इति । क्वचिदर्थे इति । तच्च भाष्य एव स्पष्टम् ॥ ९७ ॥

अनुप्रव । विशिपूरीत्यादि—ठञ्बाधनार्थम् । भाष्ये—गेहानुप्रवेशनीयमिति । अनुप्रवेशनशब्द-

† कालात् ५ । १ । ७८

स्वर्गादिभ्यो यत् ॥ २ ॥

स्वर्गादिभ्यो यत्प्रत्ययो भवति । स्वर्ग्यम् धन्यम् यशस्यम् आयुष्यम् ।

पुण्याहवाचनादिभ्यो लुक् ॥ ३ ॥

पुण्याहवाचनादिभ्यो लुग्वक्तव्यः । पुण्याहवाचनम् शान्तिवाचनम् स्वस्तिवाचनम् ॥ १११ ॥

ऐकागारिकट् चौरे ॥ ५ । १ । ११३ ॥

एकागारान्निपातनानर्थक्यं ठञ्प्रकरणात् ॥ १ ॥

एकागारान्निपातनमनर्थकम् । किङ्कारणम् ? 'ठञ्प्रकरणात्' । ठञ्प्रकृतः सोऽनुवर्त्तिष्यते† ॥ इदं तर्हि प्रयोजनं 'चौर'इति वक्ष्यामीति । इह मा भूत्—एकागारं प्रयोजनमस्य भिक्षोरिति ।

यद्येतावत्प्रयोजनं स्यात्—'एकागाराच्चौर' इत्येव ब्रूयात् ॥ ११३ ॥

प्र०—स्वर्ग्यमिति । स्वर्गः प्रयोजनमस्येति ठञि प्राप्ते यद्विधिः । पुण्याहवाचनादिभ्य इति । साहचर्यादभिधाने सिद्धे भेदविवक्षायां प्रत्ययश्रवणनिवृत्त्यर्थं लुग्विधानम् ॥ १११ ॥

ऐका । एकागारादिति । 'प्रयोजन'मित्यनेनैव ठञः सिद्धत्वात्सूत्रं निपातनार्थं न कर्त्तव्यमित्यर्थः । ठञ्प्रकरणादिति । 'प्रयोजन'मित्यत्र ठञ्प्रकृतस्तेनैवैकागारिकशब्दः सिद्ध इत्यर्थः । एकशब्दोऽसहायवाची । असहायं गृहमस्य मुमुषिषोः प्रयोजनं स ऐकागारिकः । ससहायं तु गृहमनेकपुरुषाधिष्ठानान्मोषितुमशक्यम् । ठञ्प्रकृत इति । 'प्राग्वतेष्ठ'ञित्यत्र ठञ्प्रत्ययः 'प्रयोजन'मित्यत्रानुवर्त्तिष्यते । इदं तर्हीति । नियमार्थमेतदित्यर्थः । भिक्षोरिति । एकामेव यो भिक्षां गृह्णीते न द्वितीयां तस्याभिधानं मा भूदित्यर्थः । यद्येतावदिति । अनभिधानाद्भिक्षोर्न भविष्यतीति नियमार्थमप्येतन्नोपयुज्यते इति भावः । न च ञित्स्वरनिवृत्त्यर्थं निपातनं, ञित्स्वरस्येष्टत्वात् । एतच्च भाष्यवार्त्तिकाभ्यां निराकरणाज्ज्ञायते ॥ ११३ ॥

उ०—स्याऽनान्तत्वं 'कृद्ग्रहणे गतिकारकपूर्वस्याऽपी'ति न्यायेन बोध्यम् । अस्य प्रयोजनमित्यर्थे प्रत्ययः ॥१११॥

ऐकागा । सूत्रप्रत्याख्यानपरमेव भाष्यं, न तु निपातनमात्रप्रत्याख्यानपरमित्याह—प्रयोजनमित्यनेनैवेति । ननु एतत्सूत्राऽभावे प्रकरणात्क ठञा सम्बन्धः स्यादत आह—प्रयोजनमित्यत्रेति । ननु न चौरोऽप्येकमेव गृहं मुष्णातीत्यत आह—एकशब्द इति । एकामेवेति । 'एकागारे चरेद्ग्रामे तत्पुराणं मुनेर्व्रत'मित्युक्तेः । यद्यन्तर्भावोक्तेरेवं सूत्रकरणेन तात्पर्यमित्याह—अनभिधानादिति । अत्रत्यवृत्तिर्भाष्यविरुद्धेत्याह—न चेत्यादिना । एवञ्च सूत्रारम्भेऽप्याद्युदात्तनिपातनं बोध्यम् ॥ ११३ ॥

† प्राग्वतेष्ठञ्; प्रयोजनम् ५ । १ । १८; १०९

## आकालिकडाद्यन्तवचने ॥ ५ । १ । ११४ ॥

### आकालान्निपातनानर्थक्यं ठञ्प्रकरणात् ॥ १ ॥

आकालान्निपातनमनर्थकम् । किं कारणम् ? 'ठञ्प्रकरणात्' । ठञ्प्रकृतः‡ सोऽनुवर्तिष्यते ॥ इदं तर्हि प्रयोजनम्—एतस्मिन्विशेषे निपातनं करिष्यामि समानकालस्याद्यन्तविवक्षायामिति ।

प्र०—आकालि । आकालादिति । आकालशब्दात्प्रत्ययनिपातनमनर्थकं, प्रकृतिमुच्चार्य प्रकृतष्ठञ्विधेय इत्यर्थः । तत्राऽऽवृत्तः कालो यस्यासावाकालः, न च कालस्यावृत्तिः संभवतीत्ययमर्थो भवति—उत्पत्तिकालेन समानो यस्य विनाशकालः । एवंहि तस्योत्पत्तिकालो विनाश आवृत्तो भवति यदि य एवोत्पत्तिकालः स एव विनाशकालः । न चोत्पादविनाशयोरेककालता संभवतीति निरन्तरविनाशकालप्रतीतिर्भवति । निरन्तरो हि कालो भेदाग्रहणात् 'स एव काल'इति लोके व्यवह्रियते । ततः स्वार्थे ठञ्विधेयः । आद्यन्तवचने विषय इति भावः । भाष्यकारो निपातनं समर्थयितुमाह—इदं तर्हीति । निपातने हि समानकालशब्दः प्रकृतित्वेनाश्रीयते तस्य चाकाल आदेशो निपात्यते । समानशब्द एकवाची । एककालावाद्यन्तौ यस्यासावाकालिकः । आदिर्जन्म । अन्तो विनाशः । जन्मविनाशयोश्चाव्यवहितकालत्वादेककालत्वम् । विधौ त्वयमर्थः क्लेशेन प्रतीयत इति निपातनाश्रयणम् । उक्तञ्च—

'धातुसाधनकालानां प्राप्त्यर्थं नियमस्य च ।
अनुबन्धविकाराणां रूढ्यर्थं च निपातनम्' ॥ इति ।

अन्ये वर्षादिष्वप्याकालिकशब्दमिच्छन्ति । यस्मिन्नेव काले मध्याह्नादावुत्पत्तिर्येषां तस्मिन्नेव द्वितीयादिदिवससंबन्धिनि विनाशस्तान्याकालिकानि । आकालाट्ठश्चेति । आकाल-

उ०—आकालिकडा । अत्रत्यभाष्यस्य सूत्रप्रत्याख्यानपरत्वेनाऽव्याख्याने बीजभूतां सूत्रान्तरेणाऽसिद्धिं दर्शयति— तत्रावृत्त इति । तत्र कालस्य मुख्यावृत्तेरसम्भवाद्गौणी वृत्तिरित्याह—अयमर्थ इति । समानशब्दोऽनैकपर्यायः । 'एवं ही'त्यादि 'स एव विनाशकाल' इत्यन्तमेकं वाक्यम् । निरन्तरत्वम्—अव्यवहितत्वम् । नन्वेवं प्रत्ययार्थः कोऽत आह—ततः स्वार्थे इति । आद्यन्तवचने विषय इति । आद्यन्तयोरुत्पत्तिविनाशयोरेककालत्ववचने विषये इत्यर्थः । यद्वाऽऽदिकालस्याऽन्तरकालत्ववचने इत्यर्थः । एवं हि डीनाद्युदात्तत्वञ्चेत्युभयमपि सिध्यतीति वार्त्तिकाशयः । भाष्ये—समानकालस्येति । एककालस्याद्यन्तकालत्वविवक्षायामित्यक्षरार्थः । निपातने हीति । समानकालावाद्यन्तौ यस्येति विग्रहः । यस्येत्यधिकारात्स प्रत्ययार्थः । अत्र पक्षे आद्युदात्तत्वमपि निपात्यमतः प्रत्याख्यानवार्त्तिकेन विरोधः । अन्ये इति । समानपदोपादानेन भाष्येऽप्ययमर्थः सूचितः । चकाराट्ठञ्चेति । इदञ्च सूत्रप्रत्याख्यानवार्त्तिकरीत्या, भाष्यरीत्या

‡ प्राग्वतेष्ठञ् ५ । १ । १८

## आकालाट्ठंश्च ॥ २ ॥

आकालाट्ठंश्च वक्तव्यः । आकालिकी × आकालिका ॥ ११४ ॥

## तेन तुल्यं क्रिया चेद्वतिः ॥ ५ । १ । ११५ ॥

इदमयुक्तं वर्त्तते । किमत्राऽयुक्तम् ? 'यत्तत्तृतीयासमर्थं क्रिया चेत्सा भवती'-त्युच्यते कथं च तृतीयासमर्थं नाम क्रिया स्यात् ?

प्र०—शब्दव्युत्पत्तिः प्रदर्शिता-ततः स्वार्थे ठन्प्रत्ययश्चकाराट्ठञ्च । अर्थस्तु पूर्वं प्रदर्शितः ॥११४॥

तेन । इदमयुक्तमिति । सूत्रोपात्तं वस्तु इदमा परामृश्यते । यत्तत्तृतीयासमर्थमिति । 'तेन तुल्य'मित्यनेन क्रमेण प्रकृतिप्रत्ययार्थौ निर्दिष्टौ, तत्र क्रियाग्रहणं प्रकृत्यर्थस्यैव प्राथम्या-द्व्यतिक्रमहेत्वभावाद्विशेषणं न्याय्यम्, एतच्चासंभवादयुक्तमित्यर्थः ।

ननु तेनेत्यस्य विविभक्तिकेन क्रियाग्रहणेन कथं संबन्धः । सोपस्कारत्वात्सूत्राणां यत्तत्तृ-तीयासमर्थं क्रिया चेत्सा भवतीत्येवं संबन्धसम्भवाददोषः । कथं चेति । तृतीया सत्त्ववाचिनः प्रातिपदिकाद्विधीयते । क्रिया तु साध्यरूपत्वादसत्त्वभूता । ततो विशेषणविशेष्यभावोऽसंभवाद-युक्तः । पाकादयो घञाद्यन्तवाच्याः सत्त्वधर्मसमन्वयात्क्रियाधर्मातीतास्तथा च तत्र क्त्वोऽर्थ-प्रत्ययाऽभावः । 'भोक्तुं पाक'इत्यादौ धातुवाच्यक्रियापेक्षस्तुमुन्प्रत्ययः, विभक्तिस्तु तृतीयादिः

उ०—तु चान्निपातनं बोध्यम् । निपातनपक्षेऽपि प्रकरणाट्ठञन्तनिपातनसम्भवाट्टित्वफलं चिन्त्यम् ॥११४॥

तेन तुल्यं । सर्वेषां पदानां साधुत्वादर्थस्य च तत्त्वादिदमयुक्तमिति न युक्तमत आह—सूत्रोपात्त-मिति । सूत्रबोध्यवाक्यार्थस्वरूपमित्यर्थः । ननु 'क्रिया चे'दित्येतत्सन्निहितत्वात्तुल्यस्यैव विशेषणं न्याय्यमिति नेदं सूत्रबोध्यमत आह—तेनेत्यादि । प्राथम्यादिति । तुल्यपदार्थाऽन्वये चेद्ग्रहणं व्यर्थं, तृतीयासमर्थात्तुल्यं क्रियेत्यर्थे प्रत्यय इत्यर्थेन सिद्धेः । तस्माच्चेद्ग्रहणात्तृतीया समर्थविशेषणमिति परे । विविभक्तित्वेनेति । विरुद्धविभक्तित्वे कथं सामानाधिकरण्येन सम्बन्ध इत्यर्थः । सोपस्कारत्वात्—अध्याहारादिसापेक्षत्वा-दित्यर्थः । अध्याह्रियमाणं दर्शयति—यत्तत्तृतीयासमर्थमिति ।

ननु रोदनेन तुल्यं गायतीत्यादौ सम्भवतीत्यत आह—तृतीयेति । असम्भवादिति । एकस्यैव वस्तुनः सत्त्वभूतत्वाऽसत्त्वभूतत्वयोर्विरोधादित्यर्थः । ननु पाकादिषु कारकाऽन्वयेन तदर्थस्य क्रियात्वमा-वश्यकं, लिङ्गसङ्ख्याऽन्वयात्सत्त्वभूतत्वञ्चेति ते तत्र दृष्टे अत आह—पाकादय इति । कारकाऽन्वयस्तु धातु-वाच्यांऽशमादाय । तमादाय क्त्वसुन्तु न. क्रियाग्रहणसामर्थ्यात्साध्यत्वेनैव भासमानक्रियायास्तत्र ग्रहणादिति भावः । वस्तुत इदं चिन्त्यं, 'द्विर्वचनेऽची'त्यादिप्रयोगात् । वतिस्तु यथा न प्राप्नोति तथाऽनुपदमेव वक्ष्यते । नन्वेवं 'भोक्तुं पाक' इति न स्यादत आह—धातुवाच्येति । तत्र क्त्वसुन्सूत्रोक्तार्थग्रहणे माना-भावादिति भावः । कारकान्वयोऽप्येतदादायैवेत्युक्तमेव । किञ्च 'उपपदमति'ङिति सूत्रभाष्यरीत्या पाकादि-

× टिड्ढाणञ्० ४ । १ । १५

नैतदयुक्तम् । सर्व एते शब्दा गुणसमुदायेषु वर्त्तन्ते ब्राह्मणः क्षत्रियो वैश्यः शूद्र इति । अतश्च गुणसमुदाये, एवं ह्याह—

प्र०—पाकादेः सत्त्वरूपाश्रया न क्रियारूपताश्रया । पचत्यादीनां तु क्रियावाचिनामप्रातिपदिकत्वादसत्त्वभूतार्थाभिधानाच्च तृतीयाद्यभावः । कृत्वा हृत्वा कर्त्तुं हर्त्तुमित्यादीनामव्ययकृतां यद्यपि क्रिया वाचित्वं तथा च 'पञ्चकृत्वः कृत्वे'ति कृत्वोर्थोत्पत्तिर्भवति तथाप्यसत्त्ववाचित्वात्तेभ्यस्तृतीयाद्यभावः । प्रातिपदिकार्थमात्रे तु प्रथमाया एवोत्पत्तिः । शयितव्यादयो यद्यपि क्रियावचनाः'पञ्चकृत्वः शयितव्य'मिति कृत्वोऽर्थप्रत्ययदर्शनात्तथापि तत्रोपमानोपमेयभावासम्भवो, न हि भवति शयितव्येन तुल्यो देवदत्तः शयितव्येन तुल्य शुक्लः इति । उपमानं हि प्रसिद्धगुणक्रियाहेतुकं भवति । यथाऽस्याश्चन्द्र इव मुखमिति । नापि शयितव्येन तुल्यः शायक इति क्रियावतः क्रियोपमानं संभवति, क्रियातद्वतोरत्यन्तभेदात् । क्रियाणामपि भिन्नजातीयानां नास्त्युपमानोपमेयभावः—शयितव्येन तुल्यमासितव्यमिति, अत्यन्तभेदात् । नाप्येकजातीयानां,—शयितव्येन तुल्यं शयितव्यमिति, यथा गौरिव गौरिति । येनैव हेतुनैको गौस्तेनैवाऽपरोपीति क उपमानोपमेयभावः ।

नन्वाधारभेदादेकजातीयानामपि भेदाश्रय उपमानोपमेयभावो भवति,—यथा राज्ञः शयितव्येन तुल्यं देवदत्तस्य शयितव्यमिति । सापेक्षत्वादत्र प्रत्ययेन न भाव्यमित्यदोषः[1] । ननु यदा प्रकरणादिवशादपेक्ष्यं निर्ज्ञातं भवति तदा प्रत्ययप्रसङ्गः । तथा राजशयितव्येन तुल्यं देवदत्तशयितव्यमित्यत्र सापेक्षत्वात्तथा स्थातव्येन तुल्यं गमनं मन्दत्वान्नृत्येन तुल्यं गमनं बहुविकारत्वादिति । भोक्तुं पाक इत्यादौ च क्रियानिबन्धनकार्यदर्शनात्तैलपाकेन तुल्यो घृतपाक इत्यादावस्ति तृतीयासमर्थस्यापि क्रियावाचित्वं, तत्किमुच्यते 'कथं च तृतीयासमर्थं नाम क्रिया

उ०—योगे कारकविभक्तिवत् कृत्वसुजादयो भवन्त्येवेति तत्रैव निरूपितम् । 'तुमुन्ने'त्यपि तत्रैव निरूपितमितीदं चिन्त्यम् । नन्वेवं तद्वदेव वतिः स्यादत आह– विभक्तिस्त्विति । 'द्व्येकयो'रित्यादिभिस्तस्यैकवाक्यत्वादित्यर्थः । साध्यत्वाख्यवैजात्येन पाकप्रकारकः, सिद्धत्वाख्यवैजात्येन तद्विशेष्यको बोधो घञन्तात् । वस्तुत एकनिष्ठत्वाच्च प्रकारताविशेष्यतयोर्न स्फुटं ग्रहो बोधे । एवञ्च 'तेने'त्यनेनोपस्थापितपाकादिविशेष्यांशे तदन्वयबाधः, प्रत्ययानां प्रकृत्यर्थविशेष्यान्वयित्वस्यौत्सर्गिकत्वादिति भावः । एवञ्च तृतीयासमर्थत्वं नाम तृतीयार्थान्वितत्वम् । न च तत्क्रियारूपे, सङ्ख्याया अपि विभक्त्यर्थत्वेन तदन्वययोग्य एव विभक्त्यर्थान्वयाङ्गीकारादिति तत्त्वम् । प्रथमाया इति । तदेकवचनस्येत्यर्थः । प्रसिद्धेति । न हि देवदत्तशयितव्ययोः सादृश्यप्रयोजकं गुणाद्यस्तीति भावः । क्रियातद्वतोरिति । उक्त एव भावः । अत्यन्तभेदे च सादृश्याऽभावः । येनैव हेतुनेति । गोत्वादिनेत्यर्थः । एवञ्च तेन रूपेणाऽभेद एव, न केनाऽपि भेद इति नोपमानोपमेयभाव इति ।

ननु व्यक्तिभेदेन तत्रेवाऽत्राप्यस्त्विति शङ्कते—नन्विति । सापेक्षत्वादिति । नित्यसापेक्षत्वे गमकत्वे च भवत्येव 'विष्णोः पुत्रवच्छिवस्य पुत्र' इति । तैलपाकेनेति । घञन्ते सिद्धत्वसाध्यत्वोभयविशिष्टस्य पच्यर्थस्य बोध इत्युभयरूपताऽस्ति । न च विरोधः, भाष्यादिप्रामाण्येन वैजात्यद्वये विरोधाऽ-

१—'नैष दोषः ।' पा०

'तपः श्रुतं च योनिश्च एतद्ब्राह्मणकारकम् ।
तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः' ॥

तथा गौरः शुच्याचारः पिङ्गलः कपिलकेश इत्येतानप्यभ्यन्तरान्ब्राह्मण्ये गुणान्कुर्वन्ति । समुदायेषु च शब्दा वृत्ता अवयवेष्वपि वर्त्तन्ते । तद्यथा—पूर्वे पञ्चालाः, उत्तरे पञ्चालाः । तैलं भुक्तम्, घृतं भुक्तम् । शुक्लः नीलः कृष्ण इति । एवमयं

प्र०—स्या'दिति । अत्रोच्यते—उपमानोपमेयभावस्त्रितयसंनिधानायत्तः,-येनोपमीयते यच्चोपमीयते यश्च तयोः साधारणोऽर्थः । एतत्त्रयमवश्यापेक्ष्यम् । तत्र यदा क्रियोपमानत्वेन विवक्ष्यते तदासावश्यापेक्ष्यसाधारणधर्माधारत्वात्क्रियारूपतां हित्वा सत्त्वरूपतां प्रतिपद्यत इति मत्वा भाष्यकृतैतदुक्तम् ।

सर्व एत इति । उपमानोपमेयभावविषयाः शब्दा एतच्छब्देन परामृश्यन्ते । तप इति । चान्द्रायणादि । श्रुतमिति । वेदवेदाङ्गादीनाम् । योनिरिति । ब्राह्मणाद्ब्राह्मण्यां जन्म । ब्राह्मणकारकमिति—शेषषष्ठीसमासः । 'तृजकाभ्यां कर्त्तरि' 'कर्त्तरि चे'त्येताभ्यां तु कर्त्तरि या षष्ठी या च तृजकनिमित्ता कर्मणि तस्या एव समासनिषेधो न तु शेषषष्ठ्याः । न हि सा तृजकसम्बन्धनिमित्ता । ब्राह्मणव्यपदेशस्य निमित्तमेतदित्यर्थः । तपःश्रुताभ्यामिति । नासौ परिपूर्णो ब्राह्मणः, जातिलक्षणैकदेशाश्रयस्तु तत्र ब्राह्मणशब्दप्रयोगः । अत एव च तस्य सर्वासु ब्राह्मणक्रियासु नास्त्यधिकारः ।

शुच्याचारः—अनुपहताचारः । एतानिति । गौरत्वादयो ब्राह्मण्यस्य पुराकल्पदर्शनेनाऽव्यत्वेपि क्वचित्तदन्वयदर्शनेन व्यञ्जका इति तानपि शब्दार्थान्तर्भूतत्वेनाश्रयन्तीत्यर्थः । पूर्वे पञ्चाला इति । समुदायरूपारोपादवयवे समुदायवृत्तिशब्दवृत्तिर्न तूपात्तार्थत्यागेनार्थान्तराभिधानं शब्दानामुपपद्यते । शब्दार्थसम्बन्धस्याऽनित्यत्वप्रसङ्गात् । पूर्वादिशब्दसामानाधिकरण्याच्चावयववृत्तित्वावसायः । समुदायवृत्तित्वे हि 'पञ्चालानां पूर्वे' इति षष्ठ्या भाव्यम् । तैलं भुक्तमिति । यदा द्रव्यसंस्कृते विशिष्टमात्रायुक्तेऽर्थे तैलादयो वर्त्तन्ते तदैषां समुदायशब्दत्वम्, एकदेशोपयोगे च

उ०—भावस्यैवाङ्गीकारादिति भावः । साधारणधर्माधारत्वादिति । साधारणधर्मान्वयित्वादित्यर्थः । परे त्ववश्यापेक्ष्यसाधारणधर्माधारत्वादित्यादिव्याख्या न भाष्याऽनुगुणा, तृतीयासमर्थत्वस्यैव क्रियात्वाऽभावे हेतुताया भाष्याल्लाभात् । किञ्च साधारणधर्मान्वयेऽपि यथा तत्र कारकान्वयस्तथा वतिरपि स्यात् । तस्मादयमत्र भाष्यार्थः—उपमानोपमेयभावविषयं प्रकृतं तृतीयसमर्थमुपमानं क्रिया नेति । तथा हि 'न वै तिङन्तेनोपमानमस्ती'ति सन्सूत्रस्थभाष्ये तिङन्तग्रहणस्य क्रियोपलक्षणत्वादसत्त्वभूतशयितव्याद्यर्थानामुपमानत्वमेव न । एवञ्च तेषां तुल्यादियोगाऽभावात्तेभ्यस्तृतीयैव न, पाकादिपदार्थस्य तृतीयार्थान्वितस्य सत्त्वमेव, न क्रियात्वं, ब्राह्मणादिपदार्थस्य चेति ।

उपमानोपमेयेत्यादि । एवं व्याख्याने बीजं चिन्त्यम् । एतत्—तपःश्रुतादि । ब्राह्मणकारकम्—ब्राह्मणव्यवहारकारणम् । ननु ब्राह्मणलक्षणाऽभावे कथं ब्राह्मणपदप्रयोगोऽत आह—जातिलक्षणेति । अयमेव भाष्ये जातिब्राह्मणपदस्यार्थः । गौरादिपदार्था नञ्सूत्रे व्याख्याताः । ननु गौरत्वादि न ब्राह्मण्यव्यञ्जकं, व्यभिचारादत आह—ब्राह्मण्यस्येति । पुराकल्पे ते तस्य व्यञ्जकत्वेन दृष्टा इत्यर्थः । भाष्ये—

ब्राह्मणशब्दः समुदाये वृत्तोऽवयवेष्वपि वर्त्तते ।

यदि तर्हि तृतीयासमर्थं विशेष्यते प्रत्ययार्थोऽविशेषितो भवति । तत्र को दोषः ? तृतीयासमर्थात्क्रियावाचिनो गुणतुल्येऽपि प्रत्ययः स्यात् । पुत्त्रेण तुल्यः स्थूलः,

प्र०—यदा 'तैलं भुक्त'मिति प्रयोगस्तदावयववृत्तित्वमवसेयम् । यदा तु जातिशब्दास्तैलादयस्तदा संस्थानप्रमाणनिरपेक्षा जातिसमाश्रयेण वर्त्तन्त इत्यनुदाहरणमेतत् । शुक्ल इति । स्वयमशुक्लोऽप्यवयवः शुक्लसमुदायसम्बन्धात्तद्रूपारोपाच्छुक्ल इत्युच्यते । एवमयमिति । यैव क्रियोपमेये श्रूयते तस्यामेव ब्राह्मणादिशब्दो वर्त्तते इत्यर्थः । ब्राह्मणेन तुल्यमधीते ब्राह्मणवदधीते क्षत्त्रिय इति । अध्ययनक्रियाविशेषणत्वात्तुल्यमिति द्वितीया नपुंसकत्वं च । ब्राह्मणाध्ययनेन च क्षत्त्रियाध्ययनस्य तुल्यत्वसंभवात्सामर्थ्याद्ब्राह्मणशब्दस्य वृत्तिरित्युपपद्यते तृतीयासमर्थस्य क्रियावाचित्वम् । ननु भिन्नकर्तृकयोरध्ययनयोस्तुल्यत्वे आश्रीयमाणेऽन्यः साधारणो धर्मोऽपेक्षणीयः, कर्त्रोरिव तूपमानोपमेयत्वेऽध्ययनमेव साधारणो धर्म इति नास्ति धर्मान्तरापेक्षा । उच्यते—शब्दानुपात्ता अपि यथा चन्द्र इव मुखमस्या इत्यादौ कान्त्यादयः प्रतीयन्ते तथात्राऽपि सौष्ठवादयः प्रत्येष्यन्ते ।

ननु चोक्तं साधारणधर्माधारत्वात्सत्त्वरूपापत्त्या क्रियारूपहानिरिति । एवं तर्हि सामर्थ्याद्भूतपूर्वगत्याश्रयणं,—यस्याऽर्थस्यक्रियारूपताऽभूत् सम्प्रति क्रियारूपाऽतीतोपि सत्त्वभावापन्नस्तृतीयान्तशब्दवाच्यः परिग्रहीष्यते । अत एव ब्राह्मणादयः शयितव्यादयश्च भूतपूर्वक्रियारूपार्थवाचित्वेन तुल्या इति संप्रति क्रियारूपार्थवाच्यसंभवाद्भूतपूर्वगतिरभ्युपेयते । अविशेषित इति ।

उ०—अभ्यन्तरान् ब्राह्मण्ये इति । एते सर्वे ब्राह्मणशब्दजन्यबोधप्रकारतया भासन्त इत्यर्थः । नन्वन्यत्राऽन्यशब्दस्य वृत्तौ शब्दार्थसम्बन्धनित्यत्वहानिरत आह—समुदायरूपेति । 'पूर्वे पञ्चाला' इत्यादावारोपे गमकमाह—पूर्वादिशब्देति । ननु तैलादीनामवयवाऽवयविसाधारणजातिशब्दत्वात्कथमिदमत आह—यदेति । मात्रा—परिमाणम् । संस्थानप्रमाणनिरपेक्षा इति । अवयवाऽवयविसाधारणा इत्यर्थः । ननु देवदत्तवत्पचतीति तदनभ्यन्तरक्रिययोरप्युपमादर्शनादाह—यैवेति । यथा समुदायप्रवृत्तस्य तदन्तर्गतयत्किञ्चिदवयवे वृत्तिः, एवमन्यक्रियायामपि तद्वृत्तिस्तस्यामभ्यन्तरत्वारोपेणेति भाष्याशयः । सामर्थ्यादिति । द्रव्येण क्रियाया उपमाऽसम्भवादित्यर्थः । कर्त्रोरिव त्विति । न च तयोः सादृश्येऽर्थे वत्यन्तस्याऽव्ययत्वं न स्यात्, ब्राह्मणेन तुल्यः क्षत्त्रियः' इत्यादाविव द्रव्याऽभिधानादिति वाच्यम्, अव्ययप्रकरणे पाठेन, शब्दशक्तिस्वभावेन च वस्तुपात्तस्य लिङ्गाद्यनन्वयित्वसम्भवाच्चादिवदित्याशयः । साधारणधर्माधारत्वात्सत्त्वरूपापत्त्येति । तृतीयार्थान्वितत्वेन सत्त्वरूपतापत्तिरित्यपि बोध्यम् । सामर्थ्यादिति । मुख्यक्रियायास्तिङन्तकृत्यप्रत्ययान्तादिवाच्यायाः सादृश्यान्वयाऽभावात् । अन्यस्याश्च लिङ्गाद्यन्वयित्वेन सत्त्वभूतत्वादिति भावः । अत एवेति । गौणमुख्यन्यायस्य तु नाऽयं विषयः, सादृश्यसम्बन्धमूलगौणलाक्षणिकत्वरूपस्य गौणत्वस्य तत्राश्रयणात् । न चैवं ब्राह्मणपदादि । लाक्षणिकत्वमात्रेण तु न गौणता, ईदृशानामप्रसिद्धत्वमपि गौणत्वं नाऽत्र, अस्य लोकप्रसिद्धत्वादित्याशयः । शयितव्यादयश्चेति । तैलपाकादयश्चेति वक्तुं युक्तम् । 'सम्प्रति क्रियारूपार्थवाच्यसम्भवा'दिति

पुत्त्रेण तुल्यः पिङ्गल इति । अस्तु तर्हि प्रत्ययार्थविशेषणं—'यत्तत्तुल्यं क्रिया चेत्सा भवती'ति ।

एवमपि तृतीयासमर्थमविशेषितं भवति । तत्र को दोषः ? तृतीयासमर्थादक्रियावाचिनः क्रियातुल्येऽपि प्रत्ययः प्राप्नोति ।

नैष दोषः । 'यत्तत्तुल्यं क्रिया चेत्सा भवती'त्युच्यते, तुलया च संमितं तुल्यम्, यदि च तृतीयासमर्थमपि क्रिया प्रत्ययार्थोऽपि क्रिया ततस्तुल्यं भवति ।

प्र०—एकेन विशेषणेन द्वयोः सम्बन्धाभावादिति भावः । गुणतुल्य इति । गुणैस्तुल्य इति तृतीयासमासः । पुत्त्रेण तुल्यः स्थूल इति । पुत्त्रशब्दोऽत्र श्रुताध्ययननिदेशस्थानादिप्रसिद्धक्रियान्तर्भावेण स्वार्थमभिदधातीति संभवति क्रियावाची । अस्तु तर्हीति । समानविभक्तित्वात्प्रधानत्वाच्च प्रत्ययार्थः क्रमबाधेन विशेष्यत इति भावः । क्रियातुल्येऽपीति । अत्रोदाहरणमूह्यम् । क्वचित्तु पुस्तके भाष्य एव पठ्यते—'स्थूलेन तुल्यः पुत्त्रः स्थूलेन तुल्यो याती'ति । तत्र पुत्त्रादयो निदेशस्थानादिभिः क्रियावन्तः स्थौल्यगुणयुक्तेन पित्रादिना स्थौल्येनैव गुणेन तुल्या इति विवक्षायामपि वतिप्रसङ्गः । क्रियाग्रहणं च क्रियावत उपलक्षणं निष्क्रियनिवृत्तिफलत्वात्तस्येत्यभिप्रायेण पक्षद्वयेऽप्यतिप्रसङ्गचोदना । नैष दोष इति । एकस्मिन्नप्यर्थे विशेषिते सामर्थ्यादुभयोर्विशेषितत्वात् । तुलया च संमितमिति । सदृशमित्यर्थः । यथा तुला परिच्छिनत्ति द्रव्यविशेषमेवं यत्सादृश्येन वस्त्वन्तरं परिच्छिनत्ति तत्तुल्यमुच्यते । ततः प्रत्ययार्थे विशेषिते सामर्थ्यात्प्रकृत्यर्थोऽपि विशेषितो भवति । न ह्यक्रियया क्रिया तुल्या भवतीति सामर्थ्यात्क्रियावाचिन एव प्रत्ययो विज्ञायते । न च क्रियाशब्देन क्रियावान्गृह्यते, मुख्यार्थसंभवे गौणग्रहणस्याऽयुक्तत्वात् । न च 'स्थूलेन तुल्यः पुत्त्र'इत्यादौ क्रिययोस्तुल्यत्वप्रतीतिः, क्रियापदानुपादानात् ।

उ०—पाठे—तद्वाचिनः शब्दस्याऽभावादित्यर्थः । 'वाच्यासम्भवा'दिति पाठे बहुव्रीहिः । 'वाचकत्वाऽसम्भवा'दिति पाठस्तु युक्त एव । तृतीयासमास इति । 'पूर्वसदृशे'त्यनेनेति भावः । श्रुताऽध्ययनं—श्रुतमात्रस्याऽध्ययनं ग्रहणम् । निदेशस्थानं–पित्राद्याज्ञायां स्थितिः । क्रियावाचीति । क्रियाघटितार्थवाचकत्वादिति भावः । प्रधानत्वाच्चेति । सन्निहितत्वाच्चेत्यपि बोध्यम् । चेच्छब्दस्त्वत्र पदे यथाकथञ्चिद्योजयितुं शक्यते इति भावः । नन्वेवं क्रियावतस्तुल्यत्वेऽपि न क्रियायास्तौल्यमत आह—क्रियाग्रहणञ्चेति । तदुपादाने तर्हि किं फलमत आह—निष्क्रियेति । पक्षद्वयेऽपीति । पक्षद्वयेऽपि क्रियाग्रहणं क्रियावदुपलक्षणमिति पुत्रेण तुल्यः, स्थूलः स्थूलेन तुल्यः पुत्र इत्यत्राऽतिप्रसङ्गोद्भावनमिति भावः । सामर्थ्यादुभयोरिति । अत्यन्तभेदे उपमाया असम्भवादिति भावः । नन्वध्ययनादि न तुलया संमितमत आह–यथेति । क्रियावाचिन एवेति । क्रियोपमानत्वयोग्यार्थवाचिन एवेत्यर्थः । क्रियात्वलाभे दृढतरमानाऽभावात् । एवं हि प्रागुक्ताऽतिप्रसङ्गोऽपि नेत्याह—न च स्थूलेनेति । क्रियावानित्यर्थेऽपि वस्तुतो नाऽतिप्रसङ्ग इत्याह—अत एवेति । क्रियापदाऽनुपादानादेवेत्यर्थः । निदेशस्थानादयो न पुत्त्रशब्दप्रवृत्तिनिमित्तमिति भावः । ननु क्रियापदो-

अथवा पुनरस्तु 'यत्तत्तृतीयासमर्थं क्रिया चेत्सा भवती'त्येव। ननु चोक्तं 'प्रत्ययार्थोऽविशेषित' इति। तत्र को दोषः? तृतीयासमर्थात् क्रियावाचिनो गुण-तुल्येऽपि प्रत्ययः प्राप्नोति—पुत्रेण तुल्यः स्थूलः, पुत्रेण तुल्यः पिङ्गल इति। नैष दोषः। 'यत्तत्तृतीयासमर्थं क्रिया चेत्सा भवती'त्युच्यते। तुलया च संमितं तुल्यम्, यदि च तृतीयासमर्थमपि क्रिया प्रत्ययार्थोऽपि क्रिया ततस्तुल्यं भवति।

किं पुनरत्र ज्यायः? प्रत्ययार्थविशेषणमेव ज्यायः। कुत एतत्? एवं चैव हि कृत्वाऽऽचार्येण सूत्रं पठितम्। वतिना सामानाधिकरण्यं कृतम्। अपि च वतेर-

प्र०—अतएव पुत्रादेर्न क्रियावत्त्वप्रतीतिः। स्थूलेन तुल्यो यातीत्यत्रापि न क्रिया तुल्या। स्थूलेन यस्तुल्य स्थौल्येन गुणेन स यातीत्यर्थावगमात्। यदा तु स्थूलेन तुल्यं यातीति क्रियातुल्यत्वविवक्षा तदा वतिर्भवत्येव 'स्थूलवद्याती'ति।

अथवेति। पूर्वोक्तेनैव न्यायेन प्रकृत्यर्थे विशेषिते प्रत्ययार्थोऽपि विशेषित इत्यर्थः। किं पुनरिति। उक्तदोषपरिहाराद् द्वयोरपि प्रशस्यत्वादन्यतरप्रकर्षविषयः प्रश्नः। वतिनेति। वति-शब्देन वत्यर्थ उच्यते। तेनायमर्थः—प्रकृत्यर्थविशेषणपक्षे वाक्याध्याहारेण समर्थनीयम्। 'तेन' 'क्रिये'त्यनयोः पदयोर्भिन्नविभक्तित्वा'त्तुल्यं' 'क्रिये'त्यनयोस्तु पदयोरेकविभक्तिकत्वात्श्रुत्यैव सामानाधिकरण्योपपत्तिः। अन्ये तु—वतिप्रत्ययेनैव सामानाधिकरण्यं व्याचक्षते—वतिर्भवति स च क्रियावाची। एवञ्च क्रियायां तुल्यायां वतिर्भवतीत्यर्थः संपद्यते।

अपि चेति। प्रत्ययार्थविशेषणपक्षे मुख्या क्रिया साध्यमानस्वभावाऽसत्त्वभूता संभवति। तस्यां वतिर्विधीयमानो विनाऽपि गणपाठेनाऽव्ययसंज्ञां प्रतिपद्यते। यन्न व्येति—लिङ्गसंख्या-नुपादानात्तदव्ययमिति अव्ययलक्षणं, गणपाठस्तु प्रपञ्चार्थ इति भाष्यकाराभिप्रायः। क्रियामात्रं चेह वतिनाऽभिधीयत इति तद्विशेषप्रतिपत्तये क्रियाशब्दप्रयोग। प्रकृत्यर्थविशेषणपक्षे तु भूतपूर्व-

उ०—पादाने तर्ह्यतिप्रसङ्गः स्यादत आह—स्थूलेनेत्यादि। 'स्थौल्येन गुणेने'ति तुल्यपदान्वयि। आतिशाय-निकोपपत्तये आह—उक्तदोषेति। ननु सूत्रे वतेर्विधेयतया स्वरूपपरत्वेन कथं क्रियापदेन सामानाधिकरण्य-मत आह—वतिशब्देनेति। 'तुल्य'मिति च सूत्रे प्रथमान्तं सामान्ये नपुंसकम्। चेदित्युच्चारणन्तु पूर्वाचार्या-ऽनुरोधेनेति बोध्यम्।

अन्ये त्विति। अध्याहारसापेक्षत्वमत्रारुचिः। मुख्यक्रियेति। उपमेयभूतेत्यर्थः। नन्वेवं वतेरेव क्रियार्थत्वे क्रियापदप्रयोगो न स्यादत आह—क्रियामात्रञ्चे ति। ननु प्रकृत्यर्थविशेषणपक्षेऽप्यनया रीत्याऽव्यय-त्वस्य सुलभत्वात्कथं प्रत्ययार्थविशेषणपक्षे साधकत्वेनाऽस्योपन्यासोऽत आह—प्रकृत्यर्थविशेषणपक्षे त्विति। भूत-पूर्वगतिरिति। प्रकृत्यर्थस्येव प्रत्यार्थस्याऽपि संप्रत्यक्रियारूपस्य भूतपूर्वक्रियारूपस्य ग्रहणं स्यादिति नियमेनाऽ-

व्ययेषु† पाठो न कर्त्तव्यो भवति । क्रियायामयं भवँल्लिङ्गसङ्ख्याभ्यां न योक्ष्यते ॥ ११५ ॥

## तत्र तस्येव ॥ ५ । १ । ११६ ॥

किमर्थमिदमुच्यते न 'तेन तुल्यं क्रिया चेद्वतिः' [ ११५ ] इत्येव सिद्धम् ?

प्र०—गतिर्वाऽऽश्रयणीया क्रियाग्रहणेन वा क्रियावत उपलक्षणे क्रियाद्वारकं क्रियावतः सादृश्यमाश्रयणीयम् । तत्र गत्यन्तरसंभवे भूतपूर्वाश्रयणमयुक्तम् । द्वितीये तु पक्षे क्रियावान्प्रत्ययार्थः स्यात्— 'ब्राह्मणेन तुल्योऽध्येते'ति । तथा च लिङ्गसंख्यावदर्थाभिधायित्वादव्ययसंज्ञार्थो वतेः पाठः कर्त्तव्यः स्यात् । पाठसामर्थ्याच्च सत्त्ववाचित्वेऽव्ययसंज्ञाप्रवृत्तिः । तदेवं स्थितमेतत्प्रत्ययार्थविशेषणं क्रिया । 'ब्राह्मणेन तुल्योऽध्येते'त्येवमादौ क्रियावतोः सादृश्यं विवक्षितं न तु क्रिययोरिति प्रत्ययाभावः । उत्तरसूत्रेणापि वतेर्विहितस्याऽसत्त्वभूतार्थाभिधायित्वमिवशब्दस्येव । 'तदर्ह'मित्यनेनापि क्रियायां वतिर्विधीयत इति तदर्थोऽप्यव्ययेषु वतेः पाठो न कर्त्तव्यः ॥११५॥

तत्र । किमर्थमिति । 'तुल्यार्थै'रिति या तृतीया तयैवेवयोगे सर्वविभक्त्यर्था व्याप्ताः । यथा ब्राह्मण इवाधीते, ब्राह्मणेन तुल्यमधीते । ब्राह्मणमिव पश्यति, ब्राह्मणेन तुल्यं पश्यति । ब्राह्मणेनेवाधीतं, ब्राह्मणेन तुल्यमधीतम् । ब्राह्मणायेव वैश्याय ददाति, ब्राह्मणेन तुल्यं वैश्याय ददाति । ब्राह्मणादिव वैश्यादधीते, ब्राह्मणेन तुल्यं वैश्यादधीते । ब्राह्मणस्येव क्षत्रियस्य स्वं ब्राह्मणेन तुल्यं क्षत्रियस्य स्वम् । ब्राह्मण इव क्षत्रिये वर्त्तते, ब्राह्मणेन तुल्यं क्षत्रिये वर्त्तते इति ।

उ०—व्यर्थत्वाऽसिद्धिरिति भावः । अत्र पक्षे दोषान्तरमप्याह—गत्यन्तरेति । परेतु प्रत्ययार्थविशेषणेऽपि ब्राह्मणवदधीत इत्यत्रैव स्यान्न तु नृत्यवद्गमनमित्यादौ, गमनपदवाच्यस्य सत्त्वरूपत्वात् । तस्मात्तत्राऽपि व्याख्यानेन, स्वरितपाठाश्रयेण वा भूतपूर्वस्याऽपि ग्रहणमावश्यकमिति वदन्ति, तन्न, अस्तिक्रियाऽध्याहारेण तत्राऽपि क्रियाया एव तुल्यत्वमित्याशयात् । द्वितीये त्विति । क्रियावदुपलक्षणत्वमिति पक्षे इत्यर्थः । क्रियावान्प्रत्ययार्थः स्यादिति । क्रियावता क्रियावत एव सादृश्यसम्भवादिति भावः । पाठः कर्त्तव्यः स्यादिति । यद्यपि शब्दशक्तिस्वभावेनेदम्परिहर्त्तुं शक्यं, तथाऽपि तद्द्योतनार्थमेव पाठः कर्त्तव्य इत्याशयः । न तु क्रिययोरिति । अस्तिक्रियामादाय तु भवत्येव वतिरिति बोध्यम् । अनेन च क्रियावदुपलक्षणत्वपक्षो दुष्ट इति बोधितम् । अत एव 'अध्येतृब्राह्मणतुल्योऽसौ क्षत्रियोऽध्येते'त्यादावपि न वतिरिति बोध्यम् । ननूत्तरसूत्रविहितवत्यन्तस्य संज्ञार्थं पाठ आवश्यकोऽत आह—उत्तरसूत्रेणाऽपीति ॥ ११५ ॥

तत्र तस्येव । ननु तृतीयासमर्थात्क्रियातुल्यत्वे तेन प्रत्ययोऽनेन तु द्रव्यगुणादितुल्ये षष्ठ्याद्यन्तादिति कथं तेन सिद्धिरत आह—तुल्यार्थैरितीति ! इवयोगे ये सर्वे विभक्त्यर्थास्ते तुल्ययोगे 'तुल्यार्थै'रिति तृतीयया व्याप्ताः—सम्बद्धा इत्यन्वयः । यथेति । ब्राह्मण इवाऽधीत इत्यादितोऽपि ब्राह्मणेन तुल्यमधीत इत्यादित इव ब्राह्मणकर्तृकाध्ययनतुल्यमध्ययनमित्यादिक्रमेणैव बोध इत्यभिमानः । पूर्वेण प्रत्यय इति ।

† स्वरादिनिपातमव्ययम् १ । १ । ३७ इत्यत्र गणे ।

**न सिध्यति । तृतीयासमर्थात्तत्र प्रत्ययः । यदाऽन्येन कर्त्तव्यां क्रियामन्यः करोति तदा प्रत्यय उत्पाद्यते । न च काचिदिवशब्देन योगे तृतीया विधीयते ।**

प्र०—तत्र तृतीयया षष्ठीसप्तम्यर्थस्य व्याप्तत्वात्तृतीयान्तादेव पूर्वेण प्रत्ययो विधास्यते, क्रियाग्रहणं च न करिष्यते, य एव चार्थो मथुरायामिव पाटलिपुत्रे प्राकारा इति स एव मथुरया तुल्याः पाटलिपुत्रे प्राकारा इति । तथा देवदत्तस्येव यज्ञदत्तस्य शुक्ला दन्ताः, देवदत्तेन तुल्या यज्ञदत्तस्य शुक्ला दन्ता इति । मथुराशब्देन च तदवयवाः प्राकारा उच्यन्ते देवदत्तशब्देनापि दन्ता इति प्रश्नः । **न सिध्यतीति ।** पूर्वसूत्रेऽवश्यं कर्त्तव्यं क्रियाग्रहणं गवा तुल्यो गवय इत्यादौ प्रत्ययनिवृत्त्यर्थं, तस्मिन्क्रियमाणे गुणद्रव्ययोस्तुल्यत्वे प्रत्ययो न प्राप्नोतीति षष्ठीसप्तम्यन्तादिवार्थे वतिर्विधीयत इत्यर्थः । इवशब्दश्च द्योतकत्वान्न व्यतिरेकहेतुः—गौरिव गवय इति । यथा चशब्दो 'धवश्च खदिरश्चे'ति । तुल्यशब्दस्तु वाचकत्वादुपमाने व्यतिरेकहेतुर्देवदत्तेन तुल्यो देवदत्तस्य तुल्य इति वा । तत्र दन्तप्राकारादिसम्बन्धोपजनितषष्ठीसप्तम्यन्तादिवार्थेऽनेन प्रत्ययः ।

ननु 'इवे'त्येव सूत्रमस्तु, पूर्वसूत्राच्च तेनेत्यनुवर्तिष्यते, तदनुवृत्त्या च शेषविषये सर्वा विभक्तय इवशब्दप्रयोगे उपमानाद्भवन्तीत्यनुमास्यते इत्याशङ्क्याह—**न च काचिदिति ।** अयमर्थः—इवशब्दस्तावदसत्त्ववाचित्वान्न व्यतिरेकहेतुरिति तद्योगे लक्षणेन तृतीया नास्ति नापि तद्योगे शेषविषये ज्ञापयितुमिष्टेति हित्वा तृतीयां विभक्त्यन्तरमाश्रितम् । **ननु चेति ।**

उ०—अत एव 'पूर्ववत्सन' इत्यादौ पञ्चम्यन्तार्थकाद्वतिर्विधीयते । **न करिष्यत इति ।** अतिप्रसङ्गस्त्वनभिधानात्परिहरणीय इत्यर्थः । ननु प्राकारादीनां मथुरादिभिः कथं तुल्यत्वमत आह—**मथुराशब्देन चेति ।** भाष्ये—तृतीयासमर्थात्तत्र प्रत्यय इत्यस्य—तृतीयासमर्थात्तत्र क्रियातुल्यत्वे प्रत्यय इत्यर्थः । तदेवाह—यदाऽन्येनेति । क्रियाम्—तत्सदृशीमित्यर्थः । तदाह—पूर्वसूत्रे इत्यादि । नन्विवयोगेऽपि 'तुल्यार्थै'रिति तृतीया सुलभाऽतः 'तत्र तस्ये'ति व्यर्थं, 'तेने'त्यनुवृत्त्यैव सिद्धेरत आह—द्योतकत्वादिति । समभिव्याहृतस्यैव तदर्थकतेति भेदाऽभाव इत्यर्थः । व्यतिरेकहेतुरिति । भेदनिबन्धनषष्ठ्यादिहेतुरित्यर्थः । अपरे तु—इवादिर्यदनन्तरमुपात्तस्तद्गतोपमानत्वस्य, तद्गतसाधारणधर्मसम्बन्धस्योपमानोपमेयभावसम्बन्धस्य च बोधकः। एवञ्च 'चन्द्र इव मुख'मित्यत उपमानचन्द्राऽभिन्नमाह्लादकं मुखमिति धीः । एवञ्चेवार्थस्योपमानत्वस्य विशेषणतया चन्द्रादेश्चविशेष्यतया न तत्रोपपदविभक्तिरिति वाचकत्वेऽपि न दोषः । तदुक्तं भाष्ये—न च काचिदिवशब्देन योग इति । तदर्थनिरूपितसम्बन्धे इत्यर्थः । एवञ्च बोधे भेदायेदं सार्थकमिति भावः । एतच्च न चेति चेन सूचितम् । तेन ह्यस्य प्रयोजनान्तरत्वं सूचितम् । द्रव्यगुणादितुल्यार्थमित्यपि 'यदाऽन्येने'त्यादिनोक्तम् । इवार्थस्योपमानविशेषणतयोपमानस्योपमेयेऽभेदाऽन्वयेनोपमेयसमाने षष्ठीसप्तम्यौ स्त एवेति तात्पर्यम् । एतदाशयाऽनभिज्ञ एकदेशी शङ्कते—ननु चेति । सिद्धान्त्येकदेश्याह—एवं तर्हीति । अन्यथैवार्थनिरूपितसम्बन्धे षष्ठ्या अपि दुर्लभत्वाच्छङ्कोत्तरयोरसङ्गतिः, न हि भवति चन्द्रस्येव मुखमिति । 'देवेष्विवे'त्यस्योपमेयं नामेतीति भाष्यार्थमाहुः । कैयटव्याख्या तु चिन्त्या । अथ कैयटाक्षराणि व्याख्यायन्ते—यथा च शब्द

ननु च सप्तम्यपि न विधीयते । एवं तर्हि सिद्धे सति यदिवशब्देन योगे सप्तमीसमर्थाद्वतिं शास्ति तज्ज्ञापयत्याचार्यो 'भवतीवशब्देन योगे सप्तमी'ति । किमेतस्य ज्ञापने प्रयोजनम् ? 'देवेष्विव नाम' 'ब्राह्मणेष्विव नाम' एष प्रयोग उपपन्नो भवति ॥ ११६ ॥

## तदर्हम् ॥ ५ । १ । ११७ ॥

किमर्थमिदमुच्यते† न 'तेन तुल्यं क्रिया चेद्वतिः' [ ११५ ] इत्येव सिद्धम् ?

प्र०—तत्र यथा शेषविषये ज्ञापकात्सप्तमी भवत्येवं तृतीयाऽपि भविष्यतीति भावः । एवं तर्हीति । तृतीयाऽनुवृत्त्यैवेवयोगेऽस्मादेव ज्ञापकादनुमिततृतीयान्ताद्वतौ सिद्धे तत्रेति सप्तमीनिर्देशो ज्ञापयति—'शेषविषये भवतीवयोगे सप्तमी'ति । तृतीया तु नेष्यत इति नासौ ज्ञाप्यते ।

देवेष्विति । देवानामिवेत्यर्थः । नन्वसति प्रयोजने ज्ञापकं भवति । अस्ति च सप्तम्युपादानस्य प्रयोजनं—मथुरायामिव मथुरावत्पाटलिपुत्रे प्राकार इत्यादौ प्राकाराद्याधेयापेक्षाधिकरणविहितसप्तम्यन्तात्प्रत्ययविधानम् । किञ्च ज्ञापकात्सप्तम्यनुमानेऽधिकरणसप्तम्यन्ताद्वतेरनुत्पत्तिः स्यात् । एवं तर्हि तन्त्रेण सूत्रद्वयमुच्चारितमितिभाष्यकाराभिप्रायः । तत्रैकेन सूत्रेण स्वलक्षणविहितषष्ठीसप्तम्यन्ताद्वतिर्विधीयते, द्वितीयेन त्विवशब्दयोगे तस्येत्यस्यार्थे तत्रेति सप्तमी विधीयते । सप्तम्या षष्ठी मा बाधीति 'तस्ये'त्यनेन प्रतिप्रसूयते । महाविभाषाधिकाराद्वा षष्ठी न बाध्यते ॥ ११६ ॥

उ०—इति । इतरसमुच्चयवान्धवस्तथा खदिर इति बोधादिति भावः । वाचकत्वादिति । सत्त्वभूतार्थवाचकत्वेन विशेष्यत्वादित्यर्थः । नन्वेवं कथं षष्ठ्याद्यन्तादिवार्थे प्रत्ययोऽत आह—तत्र दन्तेति । अयं भावः—वाक्ये प्राकारादिपदाऽध्याहारेणैव बोधः । प्राकारयोरेव च सादृश्यम् । वृत्तौ तु मथुरादिपदानां तत्सम्बन्धिप्राकारादौ लक्षणेति ।

ननु तुल्यार्थैरिति सूत्रमस्त्वेवेत्यत आह—इवशब्द इति । असत्त्ववाचित्वादिति । द्योतकत्वादित्यर्थः । एवञ्च तद्योगे न तत्प्राप्तिरिति भावः । इष्टेतीति । किन्तु प्राकारादिजनितव्यतिरेके एव षष्ठीष्टेति भावः । शेषविषये प्राकारादिजनितसम्बन्धे क्रियासम्बन्धाऽभावात्सप्तम्यप्राप्तेरिति भावः । देवानामिति । देवानां नामेवेत्यर्थः । नन्वसतीति । आधारस्याधेयद्वारैव क्रियान्वय इति नाऽसामर्थ्यम् । परे त्वधिकरणसप्तम्यन्तात्प्रत्ययो नेष्ट एव भगवत, उपमानमथुरासम्बन्धिप्राकाराऽभिन्नः पाटलिपुत्रसम्बन्धी प्राकार इत्येव बोधः । भवतीवयोगे सप्तमीत्यस्योपमानविशेषणे उपमेयविशेषणे चेत्यर्थः । एवञ्च—आवृत्तिर्व्यर्थैव, देवेष्विवेत्यस्य—देवेष्विव मनुष्येषु नामेत्यर्थः । महाविभाषाऽधिकाराद्वेत्यपि चिन्त्यमेव, तस्यास्तद्धितप्रत्ययाऽन्वयित्वादित्याहुः ॥ ११६ ॥

† 'तदर्हमिति नारब्धं सूत्रं व्याकरणान्तरे ।'
( वाक्यपदीये तृतीयकाण्डे ५६१ कारिका, ट्राव० सं०, काशीसंस्करणे ५६६ )
'आपिशलाः काशकृत्स्नाश्च सूत्रमेतन्नाधीयते । अतोऽवसीयते प्रत्याख्यानमस्य । तथा हि—भाष्य-

न सिध्यति। तृतीयासमर्थात्तत्र यदाऽन्येन कर्त्तव्यां क्रियामन्यः करोति तदा प्रत्यय उत्पाद्यते, इह पुनर्द्वितीयासमर्थादात्मार्हायां क्रियायामर्हतिकर्त्तरि निश्चितबलाधाने

प्र०—तदर्हम्। किमर्थमिति। इह क्रियाग्रहणमनुवर्त्तते तेन द्वितीयान्तादर्हस्य कर्त्र्यां क्रियायां वतिर्विधीयते-राजानमर्हति वृत्तं, ब्राह्मणमर्हति वृत्तं, राजवद्वर्त्तते, ब्राह्मणवद्वर्तत इति। तत्र राज्ञा तुल्यं वर्त्तते इति विग्रहाश्रयेण पूर्वेण वतिः सिद्धः। राजानमर्हतिच्छत्रमित्यादौ क्रियाऽनुवर्त्तनात्प्रत्ययेन न भाव्यम्। 'राजवद्वृत्तमस्ये'त्यादावपि 'तत्र तस्येवे'ति सिद्धो वतिः। 'तेन तुल्य'मित्येतत्तु चोदकेनोपलक्षणायोपात्तम्। इह तर्हि 'राजवद्वर्तते राजे'ति भेदाभावाद्भेदनिबन्धनसादृश्याभावादप्राप्तो वतिरनेन विधीयते। अत्रापि राजत्वेन प्रसिद्धा ये पृथुभरतभगीरथादयस्त इदानीन्तनानां राज्ञामुपमानानीति सिद्धो वतिरिति **प्रश्नः**। **न सिध्यतीति**। यदा राजशब्दः सामान्यवचनः, प्रसिद्धविशेषविषयो वा 'राजवदयं वर्त्तते पृथु'रिति तदा सादृश्याभावाद्वतेरप्राप्तिः। तथा 'चिच्छेद कृतहस्तव'दिति,—कृतहस्तमर्हति च्छेदनमित्यर्हणं गम्यते न तु सादृश्यम्। **आत्मार्हायामिति**। द्वितीयान्तवाच्यस्यार्थस्यात्मनोऽर्हा या क्रिया तस्यामित्यर्थः। **अर्हतिकर्त्तरीति**। अर्हतेः कर्त्तरि क्रियारूपे वृत्तादिक इत्यर्थः। **निश्चितबलाधान इति**। निश्चितस्यार्थस्यान्ययोगनिवृत्तर्थं बलाधानं—पुनरुपादानेन निश्चयनमित्यर्थः। यदा राज्ञ किञ्चन

उ०—तदर्हम्। ननु पूर्वसूत्रवदक्रियार्थमेतत्स्यादत आह—**इहेति**। द्वितीयान्तादर्हमित्यर्थे प्रत्ययो भवति, यदर्हं सा क्रिया चेदित्यर्थः। **अर्हमिति**। पचाद्यजन्तम्। राजानमर्हतीत्यादेः राजनिष्ठयोग्यतानिरूपकस्वकर्त्रेतद्वृत्तमिति बोधः। एवं तर्हि अर्हणक्रियाकर्त्तृ वृत्तं भवति। एवञ्च राजवृत्ततुल्यमेतद्वृत्तमिति फलति। तदाह—**राज्ञातुल्यमिति**। राजवृत्तेन तुल्यं वर्त्तनमित्यर्थः। क्रियानुवृत्तेः फलं दर्शयति—**राजानमिति**। राजवद्वृत्तमस्येत्यादौ तृतीयासमर्थत्वाऽभावाद् वृत्तपदार्थस्याऽक्रियात्वाच्च 'तेन तुल्य'मित्यस्याऽप्राप्तेराह—तत्र तस्येवेति। शङ्कते—**इहेति**। राजपदद्वयमप्येकस्यैव वाचकं, तदाह—**भेदाऽभावादिति**। सामान्यस्य विशेषाऽनालिङ्गितस्याऽभावादाह—**प्रसिद्धविशेषेति**। **राजवदयमिति** पृथुकर्त्तृकवर्त्तनं पृथुराजयोग्यमित्यर्थः, न तु सादृश्यमिति। तदुक्तं—

युक्तमौपयिकं राज्ञ इत्यर्थस्य निदर्शनम्।
उपमानाऽविवक्षायां तदर्हमिति पठ्यते॥' इति।

**चिच्छेद कृतहस्तवदित्यस्याऽपि**—कृतहस्तयोग्यमेतदीयं छेदनमिति बोधः। एवञ्चाऽयमपि कुशल इति फलति। नन्वात्मार्हायामित्यत्राव्ययपदेन क्रियाग्रहणेऽसङ्गतिं मत्वा आह—**द्वितीयान्तेति**।

कारस्तन्त्रान्तरादेवावसितमर्थं स्ववचनेनादिदेश।' इत्यत्र हेलाराजः प्रकीर्णप्रकाशे।

भाष्यकारेण 'किमर्थमिदमुच्यते' इत्याशङ्क्य येषां पाणिनीयसूत्राणां सार्थक्यं प्रतिपादितं न तानि पूर्वव्याकरणेषु बभूवुरिति कैश्चिदनुमीयते।

प्रत्यय उत्पाद्यते । 'ब्राह्मणवद्भवान् वर्त्तते' । 'एतद्वृत्तं ब्राह्मणमर्हती'ति ॥ ११७ ॥

## उपसर्गाच्छन्दसि धात्वर्थे ॥ ५ । १ । ११८ ॥

अर्थग्रहणं किमर्थं नोपसर्गाच्छन्दसि धातावित्येवोच्येत ? धातुर्वै शब्दः । शब्दे कार्यस्याऽसम्भवादर्थे कार्यं विज्ञास्यते । कः पुनर्धात्वर्थः ? क्रिया ।

इदं तर्हि प्रयोजनम्—उत्तरपदलोपो यथा विज्ञायेत, धातुकृतोऽर्थो धात्वर्थ इति । कः पुनर्धातुकृतोऽर्थः । साधनम् । किं प्रयोजनम् ? साधनेऽयं भवँल्लिङ्ग-सङ्ख्याभ्यां योक्ष्यते—उद्गतानि उद्वतः । निगतानि निवत इति ।

प्र०—वृत्त' प्रसिद्धमेवान्यनिवृत्त्यर्थं पुनरुपादीयते—'राजानमेतदर्हति वृत्त' न त्वराजान'मिति तदाऽर्थवदेतत्सूत्रम् । यदा त्वेकमेव वस्त्ववस्थाभेदपरिकल्पितभेदमुपमानोपमेयत्वेन विवक्ष्यते तदा नार्थोऽनेन योगेन । तथा चेवशब्दस्याऽपि प्रयोगो दृश्यते—'राजेवायं राजा युध्यते' 'वैयाकरण इवायं वैयाकरणो ब्रूते' 'त्वमिव त्वं बुध्यस्वे'ति । तथा'सदृशस्त्वं तवैवे'ति ॥ ११७ ॥

उपसर्गात् । अर्थग्रहणमिति । धातावित्येव धात्वर्थो लभ्यत इति भावः । धातुर्वै शब्द इति । तत्रार्थग्रहणमन्तरेणार्थस्य ग्रहणं न स्यादिति भावः । येनाभिप्रायेण प्रश्नस्तमेवाविष्कर्त्तु-माह–शब्दे कार्यस्येति । नहि वतिप्रत्ययस्य धातुर्वाच्य उपपद्यत इति सामर्थ्याद्धातुसह-चरितोऽर्थ आश्रयिष्यत इत्यर्थः । अथवा 'धातुर्वै शब्दः, शब्दे कार्यस्ये'त्येकग्रन्थ एवायम् । उत्तर-पदलोप इति । गम्यमानार्थत्वादप्रयोग एव शब्दस्य लोपः । धातुकृत इति । धातुशब्देनाऽत्र

उ०—द्वितीयान्तवाच्यार्थस्यात्मपदेन ग्रहणमिति भावः । अर्हतेरिति । अर्हधातोश्च योग्यतानिरूपकत्वमर्थः । तत्र वृत्तस्य कर्तृत्वम्, ब्राह्मणस्य योग्यताश्रयत्वात्कर्मत्वम् । ननु सर्वेणाऽपि स्वयोग्यक्रियाकरणादीदृशप्रयोगो निष्फलोऽत उक्तं—निश्चितबलाधान इति । तद्व्याचष्टे—निश्चितस्येति । तदेवोपपादयति—यदेति । तदा नाऽर्थ इति । तदुक्तम्—

तदर्हमिति नारब्धं सूत्रं व्याकरणान्तरे ।
सम्भवत्युपमाऽन्नाऽपि भेदस्य परिकल्पनात् ॥' इति ।

इदं चिन्त्यम् । 'त्वमिव त्व'मित्यत्र द्वितीयसदृशव्यवच्छेदप्रतीतिरेव, न तु सादृश्यमिति सूत्रभाष्य-कृतोरभिप्रायात् ॥ ११७ ॥

उपसर्गाच्छ । धातावित्येवेति । वक्ष्यमाणरीत्येत्यर्थः । 'वाररुचं काव्य'मित्यादौ शब्देऽपि कार्य-दर्शनादाह–न हीति । एकग्रन्थ इति । एकवक्तृको ग्रन्थ इत्यर्थः । लोपविधायकाऽभावादाह-गम्यमानेति । ननु धातुकृतोऽर्थः क्रियैवेति पूर्वस्मादविशेष इत्यत आह—धातुशब्देनेति । ननु साधनकृता क्रिया, न तु






## स्त्रीपुंसाभ्यां वत्युपसङ्ख्यानम् ॥ १ ॥

स्त्रीपुंसाभ्यां वत्युपसङ्ख्यानं कर्त्तव्यम् । स्त्रीवत् पुंवदिति । किं पुनः कारणं न सिध्यति ? इमौ नञ्स्नञौ 'प्राग्भवना'दित्युच्येते† तौ विशेषविहितौ सामान्यविहितं वतिं बाधेयाताम् ।

नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति 'न वत्यर्थे नञ्स्नञौ भवत' इति, यदयं 'स्त्रियाः पुंव'दिति‡ निर्देशं करोति । एवमपि 'स्त्रीव'दिति न सिध्यति । योगापेक्षं ज्ञापकम् ॥ ११८ ॥

प्र०—धात्वर्थ उच्यते । क्रियाकृतोऽर्थ आश्रयिष्यत इत्यर्थः । क्रियया कारकं कर्मादिव्यपदेशयुक्तं क्रियते, क्रियापेक्षत्वात्कर्मादिव्यपदेशस्य । बहुव्रीह्याश्रयाच्चायमर्थो गृह्यते । धातुर्धात्वर्थः क्रिया, सा अर्थः प्रयोजनं यस्य साधनस्य तस्मिन्वर्त्तमानादुपसर्गात्स्वार्थे वतिप्रत्ययः । वृत्तिविषये चोपसर्गः क्रियाविशेषे विशिष्टशक्त्याधारे च द्रव्ये वर्त्तते इति तस्यार्थे विधीयमानस्य वतेः सत्त्ववाचित्वाद्धन्वर्थसंज्ञाविज्ञानादलिङ्गाऽसंख्यस्य विधीयमानाऽव्ययसञ्ज्ञा न प्रवर्त्तते । साधनशब्देनाऽत्र शक्त्याधारो द्रव्यं विवक्षितम् । उद्गतान्युद्वत इति । पुंस्त्वमत्र नपुंसकप्रसङ्गे च्छान्दसम् । वत्युपसङ्ख्यानमिति । वतिप्रत्यये विधीयमान इत्यर्थः । इमौ नञ्स्नञाविति । प्राग्भवनाद्येऽर्थास्तानपेक्ष्य प्रकृतिविशेषाद्विधीयमानौ प्रकृतिसामान्याद्विधीयमानस्य पूर्वस्य सर्वस्य प्रत्ययस्य सर्वेष्वर्थेषु नञ्स्नञौ बाधकौ, ततो वत्यर्थे वतिरुपसङ्ख्यायते । तेन चोपसङ्ख्यानेन विशिष्टार्थविषयेणाऽर्थान्तरे सावकाशौ नञ्स्नञौ बाध्येते । योगापेक्षमिति । 'स्त्रीपुंसाभ्या'मिति योगो वत्यर्थे न प्रवर्त्तते इत्यस्यार्थस्य 'पुंव'दिति ज्ञापकमित्यर्थः ॥ ११८ ॥

उ०—क्रियाकृतं साधनमत आह—क्रियेति । धातुशब्दस्य धात्वर्थकने लक्षणायां बीजाऽभावादाह—बहुव्रीह्याश्रयाच्चेति । क्रियाविशेषशक्तीति । क्रियाविशेषनिरूपितशक्त्याधार इत्यर्थः । क्वचित्तु 'क्रियाविशेषे विशिष्टशक्त्याधारद्रव्ये'चेति पाठः । तत्र क्रियाविशेषे—उद्गमनरूपे, तन्निरूपितशक्त्याधारद्रव्ये चेत्यर्थः । ननु साधनं शक्तिरिति पर्यायौ तत्कथं लिङ्गादियोगोऽत आह—साधनशब्देनेति । ननु 'वतेरुपसङ्ख्यान'मित्यनेन विहितो वतिः सर्वार्थे स्वार्थे एव वा स्यादत आह—वतिप्रत्यये इति । ननु नञ्स्नञावप्यर्थमादाय सामान्यौ, वतिरपि प्रकृतिमादायेति कथं बाध्यबाधकभावोऽत आह—प्राग्भवनादिति । तान्सर्वानिति । तत्तद्रूपेणेत्यर्थः ॥ ११८ ॥

† स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ४ । १ । ८७; धान्यानां भवने क्षेत्रे खञ् ५ । २ । १

‡ स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ६ । ३ । ३४

## तस्य भावस्त्वतलौ ॥ ५ । १ । ११९ ॥

### स्त्रीपुंसाभ्यां त्वतलोरुपसङ्ख्यानम् ॥ १ ॥

स्त्रीपुंसाभ्यां त्वतलोरुपसङ्ख्यानं कर्त्तव्यम् । स्त्रीभावः स्त्रीत्वं स्त्रीता । पुंभावः पुंस्त्वं पुंस्तेति । किं पुनः कारणं न सिध्यति ? इमौ नञ्स्नञौ 'प्राग्भवना'दित्युच्येते† तौ विशेषविहितौ सामान्यविहितौ त्वतलौ बाधेयाताम् ।

### वावचनं च ॥ २ ॥

वावचनं च कर्त्तव्यम् । किं प्रयोजनम् ? नञ्स्नञावपि यथा स्याताम् । स्त्रीभावः स्त्रैणम्, पुंभावः पौंस्नमिति ।

### अपवादसमावेशाद्वा सिद्धम् ॥ ३ ॥

अपवादसमावेशाद्वा सिद्धमेतत् । तद्यथा—इमनिच्प्रभृतिभिरपवादैः समावेशो भवत्येवमाभ्यामपि भविष्यति ।

नैवेश्वर आज्ञापयति नाऽपि धर्मसूत्रकाराः पठन्तीमनिच्प्रभृतिभिरपवादैः समावेशो भवतीति । किं तर्हि ? 'आ च त्वात्' [ ५ । १ । १२० ] इत्यस्माद्यत्नादि-

---

प्र०—तस्यभा । वावचनं चेति । अन्यथाऽर्थान्तरे सावकाशयोर्नञ्स्नञोरुपसङ्ख्यानविहिताभ्यां विशिष्टार्थविषयाभ्यां बाधः स्यात् । अपवादसमावेशाद्वेति । वाशब्दः पूर्वोक्तवचनव्यावृत्त्यर्थः । वावचनं न कर्त्तव्यमपवादसमावेशात्सिद्धत्वादित्यर्थः । यथा प्रकृतिविशेषाद्विधीयमानैरिमनिजादिभिस्त्वतलौ समाविशत एवं नञ्स्नञ्भ्यामित्यर्थः । नैवेश्वर इति । ईश्वरभयाद्विरुद्धमप्यनुष्ठीयते । नापीति । तेषां हि वचनमदृष्टेऽर्थे प्रमाणम् । एतेन दृष्टाऽदृष्टार्थाऽभाव उक्तः । यत्नादिति । नञ्स्नञोश्चासौ यत्नो न व्याप्रियते, 'आ चत्वा'दित्यस्मात्सूत्रादूर्ध्वमेमा त्वसंशब्दनान्न-

---

उ०—तस्य भावस्त्व । ननूपसङ्ख्यानसूत्राभ्यामुभयोः सिद्धौ वावचनं व्यर्थमत आह—अन्यथेति । ननु युक्तिवचनयोः समत्वाऽभावाद्विकल्पार्थो वाशब्दोऽनुपपन्नोऽत आह—वाशब्द इति । निपातानामनेकार्थत्वात्त्वर्थो वाशब्द इति भावः । पूर्वोक्तवचनं—'स्त्रीपुंसाभ्यां त्वतलो'रित्येतत् । ईश्वरो–राजा । 'ब्रह्मणस्त्व'-इत्येतत्पर्यन्तं त्वलोरधिकार इ'त्या च त्वा'दित्यस्याऽर्थः ।

नन्वस्य विधित्वादिमनिजादिसमानदेशत्वमसिद्धमत आह—प्राग्भवनादिति । अधिकारत्वादिति भावः । ननु नदीस्रोतोन्यायेनाऽधिकारे निश्चिते 'एतच्चैव न जानीम' इत्ययुक्तमत आह—विध्यधिकारेति । एवञ्च विधित्वस्याऽपि सम्भवान्न जानीम इत्युक्तिः—न निश्चिनुम इत्यर्थिकेति भावः । प्रतिसूत्रं प्रत्यर्थञ्चेति । भवनात्प्राक्तनोऽर्थो यत्र यत्र सन्निहितस्तत्र तत्र परिभाषापद्धेऽप्युपस्थानादित्यर्थः । यथोद्देशं वेति । 'स्त्रीपुंसाभ्यां नञ्स्नञा'वित्यनेन तौ विधाय 'प्राग्भवना'दित्यंशो नञ्स्नञनुवृत्त्याऽर्थनियमार्थतया

---

† स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ४ । १ । ८७; धान्यानां भवने क्षेत्रे खञ् ५ । २ । १

मनिच्प्रभृतिभिरपवादैः समावेशो भवति, न चैतावत्राभ्यन्तरौ। एतावप्यत्राऽभ्यन्तरौ। कथम्? 'अपवादसदेशा अपवादा भवन्ती'ति।

एतच्चैव न जानीमोऽपवादसदेशा अप्यपवादा भवन्तीति। अपि च कुत एतत्—एतावप्यत्राभ्यन्तराविति, न पुनः पूर्वौ वा स्यातां परौ वा॥ एवं तर्हि वक्ष्यति—'आ च त्वा'दित्यत्र चकारकरणस्य प्रयोजनं नञ्स्नञ्भ्यामपि समावेशो भवतीति ×।

प्र०—नञ्स्नञोरसंनिधानात्। एतावप्यत्रेति। प्राग्भवनात् प्रतिसूत्रमुपस्थानात्त्वतलापवादैरिमनिजादिभिः समानदेशौ नञ्स्नञावित्यर्थः। एतच्चैव न जानीम इति। विध्यधिकारपरिभाषारूपसंभवादन्यतमरूपनिश्चयाभावात्। तत्राऽधिकारपक्षे कार्यकालपरिभाषापक्षे च प्रतिसूत्रं प्रत्यर्थं चोपस्थानात्स्यादनयोरभ्यन्तरत्वम्। यदा तु प्राग्भवनाद्येऽर्थास्तानपेक्ष्य नञ्स्नञौ विधीयेते यथोद्देशं वा परिभाषाऽऽश्रीयते तदा नास्त्यनयोरभ्यन्तरत्वम्। तथा च 'ण्यादयोऽर्थविशेषलक्षणादणपवादात्पूर्वविप्रतिषिद्ध'मिति पूर्वविप्रतिषेधो विधियथोद्देशपरिभाषापक्षयोरेव संभवति न तु प्रतिसूत्रमुपस्थाने।

न पुनरिति। कार्यकालपरिभाषापक्षेऽपि प्राग्भवनाद्येऽर्थास्तत्र नञ्स्नञ्भ्यामुपस्थातव्यम्। तत्र यदि तावद्भाव इत्यर्थनिर्ज्ञानमात्र एव नञ्स्नञावुपतिष्ठेते—'तस्यभावस्त्वतलौ' 'स्त्रीपुंसाभ्यां भावे नञ्स्नञा'विति, तदाऽस्मिन्प्रदेशे संनिधाना'दाचत्वा'दित्येतस्मात्सूत्रात्पूर्वौ नञ्स्नञौ भवतो नाभ्यन्तरौ। अथ तूत्सर्गापवादविधानोपयोगविज्ञानानन्तरं नञ्स्नञोरुपस्थानं तदा 'ब्रह्मणस्त्व' इत्येतस्मात्परौ नञ्स्नञौ भवतः—तथापि नाभ्यन्तरौ। 'गुणवचनब्राह्मणादिभ्यः कर्मणि चे'त्यत्र तु प्रकृतिविशेषसम्बद्धस्य कर्मार्थस्योपादानात्प्रकृत्यन्तरेण तस्याऽसम्बन्धात्कर्मणि नञ्स्नञोरनुपस्थानादभ्यन्तरत्वं नाशङ्कनीयम्। एवं तर्हीति। 'च'शब्देन यत्नेन समावेशः सिध्यति। एतच्च तत्रैव व्याख्यास्यते।

उ०—परिभाषात्वेन व्याख्येय इति भावः। ण्यादय इति। दित्यदित्यादिसूत्रविहिता ण्यादयः। प्रतिसूत्रमनुवृत्तौ हि उपस्थितिसामर्थ्यादेव बाधसम्भव इति तस्याऽऽनर्थक्यमिति भावः। यथोद्देशेति। इदञ्चिन्त्यमि'तीको गुणवृद्धी'इत्यत्र निरूपितम्। विधित्वमेव तूचितं, सर्वतस्तस्य लघुत्वात्। अभ्युपेत्याऽपि परिभाषात्वं भाष्ये दूषणाऽन्तरमाह—अपि चेति। तद्व्याचष्टे—कार्यकालपरिभाषापक्षेऽपीति। 'अर्थनिर्ज्ञानमात्र एवे'ति पाठे निर्ज्ञानमपि ज्ञानमेव, सामान्यतो ज्ञानं वा। अत एवाऽग्रे 'विज्ञाने'त्युक्तं,—विशिष्टज्ञानेत्यर्थकम्। तत्तत्प्रकृत्याद्यपवादाद्याकाङ्क्षानिवृत्त्यनन्तरमन्यस्मरणाऽवकाशः। उपयोगो—लक्ष्यम्। ननु कर्मणि तयोरुपस्थित्याऽभ्यन्तरत्वमत आह—गुणवचनेति। भावशब्दोऽस्त्यभिप्रायवाची, यथा 'अयम्भाव' इति। पदार्थमात्रेऽपि यथा—'विचित्रा भावशक्तय' इति। अस्ति च शृङ्गारादिस्थायिसञ्चारिषु स्थायीभावः, 'सञ्चारीभाव' इति। [ घञन्तस्तु ] कर्तृवर्जितकारके च। 'यस्य चभावेने'त्यादौ धात्वर्थवचनः। प्रवृत्ति-

× ५। १। १२० वा० १

## तस्य भाव इत्यभिप्रायादिष्वतिप्रसङ्गः ॥ ४ ॥

तस्य भाव इत्यभिप्रायादिष्वतिप्रसङ्गो भवति । इहापि प्राप्नोति—'अभिप्रायो देवदत्तस्य मोदकेषु भोजने' । ये नो भावास्ते नो भावाः—पुत्राः पुत्रैश्चेष्टन्त इति ।

## सिद्धं तु यस्य गुणस्य भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलौ ॥५॥

सिद्धमेतत् । कथम् ? 'यस्य गुणस्य भावाद्द्रव्ये शब्दनिवेशस्तदभिधाने—

प्र०—अभिप्रायादिष्विति । अनाश्रितप्रवृत्तिनिमित्तविशेषो भावशब्दवाच्यो यावान्कश्चिदर्थस्तस्य सर्वस्य विशेषानुपादानाद्ग्रहणस्य न्याय्यत्वादतिप्रसङ्गः । ये नो भावा इति । अस्माकं येऽभिप्रायास्ते नित्यमेवास्माकं भवन्तीत्यर्थः । भवन्तीति भावा । 'भवतेश्चेति वक्तव्य'मिति कर्त्तरि णः । यस्य गुणस्येति । गुणशब्देन यावान्कश्चित्पराश्रयो भेदको जात्यादिरर्थः स सर्व इह गृह्यते । 'यस्य भावा'दित्येतावत्युच्यमाने पुत्रस्य भावात्पितरि पितृशब्दप्रवर्त्तनात्पितृत्वमिति पुत्रेभावप्रत्ययः स्यात्; पुत्रत्वमिति च पितरीति,—गुणग्रहणम् । भावात्—विद्यमानत्वादित्यर्थः । द्रव्यशब्देन विशेष्यभूतस्सत्त्वभावापन्नोऽर्थ उच्यते । तस्मिन्द्रव्ये शब्दनिवेशः—शब्दस्य प्रवृत्तिर्यस्य गुणस्य—शब्देन वाच्यस्याऽवाच्यस्य वा—भावात्स त्वतलाद्यभिधेय इत्यर्थः । तत्र ये रूपादयः शब्दा गुणमात्रवृत्तयस्तेभ्यो गुणसमवायिनि सामान्ये भावप्रत्ययः—रूपत्वमिति । ये तु शुक्लादयो गुणगुणिवृत्तयो गुणगुणिनोरभेदोपचारान्मतुब्लोपाद्वा,—तेभ्यो गुणवृत्तिभ्यो गुणसमवायिनि सामान्ये भावप्रत्ययः, गुणिवृत्तिभ्यस्तु गुणे । अणुमहद्दीर्घादयो नित्यं परिमाणिनि वर्त्तन्ते न तु परिमाणमात्रे, तेन तेभ्यः परिमाणे गुणे भावप्रत्ययः । षत्वं णत्वमिति भिन्नवर्णव्यक्तिसमवेते

उ०—निमित्तवाची चेत्यभिप्रायेणाह भाष्ये—अभिप्रायादिष्विति । तद्व्याचष्टे—अनाश्रितेति । 'ये नो भावा' इति भाष्येण 'भाव'शब्दस्याऽभिप्रायवाचित्वे लौकिकः प्रयोगः प्रमाणत्वेन दर्शितः । अभिप्रायभवनमेव दर्शयति भाष्ये—पुत्राः पुत्रैश्चेष्टन्त इति ।

ननु घटत्वमित्यादौ त्वाऽनापत्तिः नाऽयं गुणप्रवृत्तिनिमित्तकोऽत आह—गुणशब्देनेति । न तु नैयायिकादिसम्मत एवेति भावः । विद्यमानत्वादिति । बुद्धावित्यादिः । तान्त्रिकद्रव्यग्रहणे रूपत्वमिति भावप्रत्ययाऽनुपपत्तिरत आह—द्रव्यशब्देनेति । विशेष्यभूतत्वस्य क्रियायामपि सत्त्वात्तद्व्याचष्टे—सत्त्वभावापन्न इति । लिङ्गसङ्ख्यादिविशेष्यभूतइत्यर्थः । प्रवृत्तिः । 'तद्बोधनार्थ'मिति शेषः । वाच्यस्येति । इदञ्च 'विशिष्टे शक्ति'रिति मते, 'धर्मे एव शक्ति'रिति मते च । व्यक्तिमात्रं पदार्थ इति मत आह—अवाच्यस्य चेति । तत्र तत्र शब्दे प्रवृत्तिनिमित्तानि स्पष्टप्रतिपत्तये दर्शयति—तत्र ये इति । सामान्ये—रूपत्वादौ । गुणवृत्तित्वमुपपादयति—अभेदेति । सामान्ये—गुणगतशुक्लत्वादिजातौ । नित्यं परिमाणिनीति । परिमाणं चतुर्द्धा,—अणु महद्ध्रस्वं दीर्घञ्चेत्यादावणवादयः शब्दा अणवादिवृत्तौ लाक्षणिका बोध्याः । भिन्नवर्णेति । उच्चारणभेदेन भेदं वर्णानां मन्यते, औपाधिकभेदेन वा । जातिमात्रेति । 'जात्याख्याया'मिति सूत्रबलात्तद्वा-

तस्मिन् गुणे वक्तव्ये प्रत्ययेन भवितव्यं न चाऽभिप्रायादीनां भावाद्द्रव्ये देवदत्त-शब्दो वर्त्तते ।

प्र०—सामान्यविशेषे प्रत्ययः । गवादयो यदा जातिमात्रवाचिनस्तदा तेभ्यः शब्दस्वरूपे प्रत्ययः । तथा हि–अर्थे जातौ शब्दस्वरूपमध्यस्यते,–यो गोंशब्दः स एवार्थ इति,–ततः शब्दस्वरूपमेव तत्र प्रवृत्तिनिमित्तं नान्यत् । द्रव्यवाचिभ्यस्तु गवादिभ्यो जातौ प्रत्ययः । समासकृत्तद्धितास्तु यद्यपि केवलं सम्बन्धं नाभिदधति तथापि सम्बन्धिनि वर्त्तमानाः सम्बन्धं प्रवृत्तिनिमित्तमपेक्षन्त इति तेभ्यः सम्बन्धे भावप्रत्ययः । तथा च—'राजपुरुषत्व'मिति स्वस्वामिभावः प्रतीयते । 'पाचकत्व'मिति क्रियाकारकसम्बन्धः । 'औपगवत्व'मिति—अपत्यापत्यवत्सम्बन्धः ।

केचिदौपगवत्वमित्यपत्यप्रत्ययान्ताद्भावप्रत्ययस्य जातिमभिधेयामिच्छन्ति, तन्मतेऽर्थान्तरवृत्तिस्तद्धित उदाहार्यः । उक्तञ्च—'समासकृत्तद्धितेषु सम्बन्धाभिधानमन्यत्ररूढ्यभिन्नरूपाऽव्यभिचरितसम्बन्धेभ्य' इति । **रूढिशब्दा** गौरखरसप्तपर्णलोहितशाल्यादयो जातिविशेषावच्छिन्नद्रव्यवाचिन इति तेभ्यो जातावेव भावप्रत्ययः । एवं कुम्भकारत्वं हस्तित्वमिति । **अभिन्नरूपाः**—शुक्लादयो मतुब्लुकि विज्ञायमाने यद्यपि तद्धितान्तास्तथापि तेभ्यो भावप्रत्ययो गुण एव भवति न तु सम्बन्धे । गुणगुणिनोर्जातितद्वतोरिव सोऽयमित्यभिसम्बन्धेन लोकनिरूढेन भेदसम्बन्धस्य न्यग्भावाद्गुणवचनेभ्यो लुगिति लुग्विधानद्वारेणाऽभेदेनैव गुणिनोऽभिधानं न तु भेदं कृत्वा मत्वर्थोत्पत्तिरित्याख्यायते । **अव्यभिचरितसम्बन्धात्**—सतो भावः सत्तेति जातावेव भावप्रत्ययः । नहि सद्वस्तु सत्तासम्बन्धं व्यभिचरितीति सत्तासम्ब-

उ०—चिता बोध्या । **अध्यस्यत इति** । अनादिलोकपरम्परयेत्यर्थः । अध्यासमेव दर्शयति–**यो गोशब्दः स एवार्थ इति** । प्रवृत्तिनिमित्ततदाश्रययोश्च सर्वत्राध्यासिकं तादात्म्यमेव सम्बन्ध इति भावः । **केवलमिति** । जातिगुणप्रवृत्तिनिमित्तकशब्देषु यथा केवलौ जातिगुणौ वाच्यौ, आश्रयस्य त्वाक्षेपादिना लाभस्तथा नाऽत्र, सम्बन्ध्यनालिङ्गितसम्बन्धमानाऽभावादिति भावः । **सम्बन्धं प्रवृत्तिनिमित्तमिति** । राजसम्बन्धज्ञानादेव पुरुषे राजपुरुषपदप्रवृत्तिरिति तस्य प्रवृत्तिनिमित्तत्वम् । एवं नामवाच्यक्रियाय भेदस्यैव प्रतीतेस्तत्र सम्बन्धज्ञानादेव शब्दस्य प्रवृत्तिः । जातिगुणयोस्तु स्वरूपज्ञानादेवेति भावः । **क्रियाकारकसम्बन्धः**—कर्तृत्वादिरूपः । 'पाचकपदं पाकसम्बद्धकर्त्तरि शक्त'मिति–-शक्तिग्रहात्कृत्स्वेकार्थीभावाङ्गीकारात् । न चैषां क्रियाप्रवृत्तिनिमित्तकत्वव्यवहाराऽनापत्तिः; क्रियासम्बन्धप्रवृत्तिनिमित्तक इत्येव तदर्थात् । क्रियापदञ्च सम्बन्धप्रवृत्तिनिमित्तकशब्दमात्रोपलक्षणं, तेन 'चतुष्टयी शब्दानां प्रवृत्ति'रित्यस्य न हानिरिति बोध्यम् ।

**केचिदिति** । 'गोत्रञ्च चरणैः सहे'त्यनेन तस्यापि जातित्वबोधनादिति तद्भावः । तथा च 'जात्याख्याया'मिति सूत्रे औपगवादयोऽप्युदाहृता भाष्यकैयटयोः । **जातावेवेति** । सम्बन्धस्याऽभावात् । जातेस्तु व्यक्त्यभेदेनैव भानमिति न तत्सम्बन्धस्याऽपि प्रतीतिरिति भावः । **जातितद्वतोरिवेति** दृष्टान्तः । **भेदसम्बन्धस्य**—तन्मूलकसम्बन्धस्येत्यर्थः । **न्यग्भावादिति** । नीलोत्पलमित्यादावपि तन्न्यग्भावेन तदुत्तर'त्व'-प्रत्ययेन नीलरूपमुत्पलत्वं चोच्यत इति बोध्यम् । ननु 'पटस्य शुक्ल' इतिवद्भेदविवक्षायां मत्वर्थीयोऽपि तेभ्यः स्यादिति वार्त्तिकमते सम्बन्धाऽभिधानमेव स्यादत आह—**लुग्विधानद्वारेणेति** । न **हीति** । 'सत्'पदं हि

किं पुनर्द्रव्यं के गुणाः ? शब्दस्पर्शरूपरसगन्धा गुणास्ततोऽन्यद्द्रव्यम् ॥ किं पुनरन्यच्छब्दादिभ्यो द्रव्यमाहोस्विदनन्यत् ? गुणस्याऽयं भावाद्द्रव्ये शब्दनिवेशं कुर्वन् ख्यापयत्यन्यच्छब्दादिभ्यो द्रव्यमिति ॥ अनन्यच्छब्दादिभ्यो द्रव्यं, न ह्यन्यदुपलभ्यते । पशोः खल्वपि विशसितस्य पर्णशते न्यस्तस्य नाऽन्यच्छब्दादिभ्य उपलभ्यते ।

प्र०—न्धानपेक्षणान्न सम्बन्धे प्रत्ययः। राजपुरुषयोस्तु सम्बन्धस्य कादाचित्कत्वात्तदपेक्षो राजपुरुषशब्दः स्वार्थमभिधत्त इति ततः सम्बन्धे प्रत्ययो युक्तः । तस्मात्सत्सु सर्वेषु पदार्थेषु नित्यसमवायिनी शब्दप्रवृत्तिहेतुः सत्तैव भावप्रत्ययवाच्या न तु सत्सत्तयोः सम्बन्धः समवायाख्यः । 'धवखदिरत्व'मिति जातिद्वन्द्वाज्जातिसमुदाये । 'कुत्व'मित्यादौ सञ्ज्ञास्वरूपे सञ्ज्ञिष्वध्यस्ते प्रत्ययः । अन्ये तु सञ्ज्ञासञ्ज्ञिसम्बन्ध इत्याहुः ।

किं पुनरिति । प्रकृतिप्रत्ययार्थयोर्भेदप्रतिपत्त्यर्थः प्रश्नः । शब्दस्पर्शेति । एतच्चोपलक्षणं—पराश्रयस्य सर्वस्य भेदकस्य जात्यादेरिह गुणत्वेनाभिमतत्वात् । विशेष्यस्य सर्वनाम्ना प्रत्यवमृश्यस्य द्रव्यत्वेनाऽभिमतत्वात् । तत एतदुक्तं भवति,—यथा शब्दादय आश्रिताः संसर्गिणो गुणा एवमन्योपि जात्यादिधर्मो गुण इति । किं पुनरन्यदिति—भेदावगतिहेतुप्रमाणप्रश्नः । अयमिति । तात्त्विकभेदाभेदचिन्तापरिहारेण लोकप्रसिद्धं भेदमाश्रित्य प्रत्ययार्थ आचार्येण व्यवस्थापित इत्यर्थः । न ह्यन्यदिति । असत्यपि भेदे लोके भेदव्यवहारदर्शनान्नास्ति ततो भेदनिश्चयः । न च रूपादिव्यतिरेकेण द्रव्यं प्रत्यक्षेणोपलभ्यते, रूपादिसन्निवेशमात्रे घटादिव्यवहारात् । पशोः खल्वपीति । उपलब्धिलक्षणप्राप्तस्य द्रव्यस्यानुपलम्भादसत्त्वनिश्चयो युक्त इति भावः । पर्णशते

उ०—सत्ताऽभेदेनैव बोधकं, न तु सत्तासम्बन्धेन । शतृप्रत्ययस्तु कर्तृत्वारोपेणोपपाद्य इति भावः । तस्मात्सर्वेष्विति । सत्पदार्थेष्वित्यर्थः । क्वचित्तु 'सत्सु सर्वेष्वित्येव पाठः । जातिसमुदाये इति । तस्याऽनुद्भूताऽवयवभेदत्वविवक्षयैकवचनम्, उद्भूताऽवयवभेदत्वे तु द्विवचनादिकमपि बोध्यम् । संज्ञिष्वध्यस्ते इति । शब्दार्थयोरभेदाऽध्यवसायाज्जातिवद्विशेषणतया भासमाने इत्यपि बोध्यम् । तदभेदज्ञानादेव हि तत्र तत्र क्वादिशब्दप्रवृत्तिरिति तस्य प्रवृत्तिनिमित्ततेति भावः । इत्याहुरिति । शब्दार्थयोर्भेदवादिमत इदम् । वाचकत्वमेव सम्बन्धस्तज्ज्ञानाद्वाच्यकत्वग्रहाऽसम्भव इत्यत्राऽरुचिः । 'नानात्वं' 'सहत्वं' 'यौगपद्य'मित्यादौ 'नाना'शब्दोऽसहभूते, 'सह'शब्दः सहभूते वृत्तौ वर्त्ततेऽतोऽसहभावादौ प्रत्यय इति बोध्यम् । एवञ्च यज्ज्ञानादर्थे शब्दस्य प्रवृत्तिः स प्रत्ययार्थः । प्रकृतिरर्थपरैव । प्रवृत्तिनिमित्तत्वेन च तच्छक्यम् । बोधस्तु समभिव्याहाराद्विशिष्यैव, तथैवाऽनुभवात्, वार्त्तिकस्वारस्याच्च, शक्तताऽवच्छेदकञ्च त्वतल्त्वादीत्यादि बोध्यम् । भेदप्रतिपत्त्यर्थ इति । 'क्रिया'मिति सूत्रभाष्योक्ते 'गुणसमूहो द्रव्य'मिति मते समूहसमूहिनोर्भेदाऽभावादिति भावः । भाष्ये—ततोऽन्यदिति । प्रत्येकाऽतिरिक्तसमूहरूपमित्यर्थः । एतदुक्तमिति । 'शब्दे'त्यादिभाष्यं संसर्गिभेदकपरमिति तात्पर्यम् । 'ततोऽन्यद्द्रव्य'मित्युक्ते पुनरन्यत्वाऽनन्यत्वविषये प्रश्नोऽयुक्तोऽत आह—हेतुप्रमाणेति । तेभ्योऽन्यद्द्रव्यमिति प्रमाणसिद्धं वोताऽनन्यदिति प्रमाणसिद्धं वेति प्रश्नभाष्यार्थं इति भावः । भाष्ये—गुणस्याऽयम्भावादिति । अयम्—वार्त्तिककारः । कुर्वन्—वदन् ।

अन्यच्छब्दादिभ्यो द्रव्यं तत्त्वनुमानगम्यम् । तद्यथा,—ओषधिवनस्पतीनां वृद्धिह्रासौ, ज्योतिषां गतिरिति । कोऽसावनुमानः ? इह समाने वर्ष्मणि परिणाहे चाऽन्यत्तुलाग्रं भवति लोहस्याऽन्यत्कार्पासानां यत्कृतो विशेषस्तद्द्रव्यम् । तथा

प्र०—न्यस्तस्येति । बहुधा विभक्तस्येत्यर्थः । एतेन भागानां परस्पराव्यवधानेन व्यवधानस्याऽनुपलब्धिकारणस्याऽभावः प्रतिपादितः । नन्वयवविभागात्संयोगनिमित्तावयविद्रव्यस्य विनाशादनुपलम्भः स्यात् । एवं तर्ह्युपलब्धिलक्षणप्राप्तस्य सर्वदाऽनुपलम्भादसत्त्वनिश्चयोऽस्तु । अनुमानगम्यमिति । यद्यपि गुणव्यतिरिक्तद्रव्यवादिभिः प्रत्यक्षप्रमाणग्राह्यं द्रव्यमभ्युपगतं, रूपाद्यालम्बनप्रत्ययविलक्षणपदार्थालम्बनप्रत्ययोत्पादात्, तथापि प्रत्यक्षे विप्रतिपन्नं प्रति साक्षिस्थानीयानुमानोपन्यासः । प्रत्यक्षापलापिनं प्रति प्रत्यक्षपूर्वकानुमानासम्भवात्सामान्यतोदृष्टमनुमानमुपन्यस्यते—ओषधिवनस्पतीनामिति । भाष्यकारवचना'ज्जातिरप्राणिना'मित्येकवद्भावो न भवति । ओषध्यादीनामुपचयापचयपूर्वको देशविशेषसम्बन्धो दृष्ट इति वनस्पत्यादीनामङ्कुराद्यवस्थासु दृष्टानां कालान्तरे देशविशेषसम्बन्धदर्शनादुपचयापचयानुमानम् । ज्योतिषां गतिरिति । गतिपूर्विकां देशान्तरप्राप्तिमश्वादीनामुपलभ्याऽऽदित्यादीनां देशान्तरप्राप्त्या गत्यनुमानम् । कोऽसावनुमान इति । अनुमीयतेऽनेनेत्यनुमानशब्देन हेतुरुच्यते । समान इति । वर्ष्म—उच्छ्रायः ।

उ०—ननु तद्वाक्याऽवगतेऽर्थे प्रमाणं पृच्छन्तम्प्रति तद्वाक्यस्यैव प्रमाणत्वेनोपन्यासोऽयुक्तोऽत आह—तात्त्विकेति । एवञ्च त्वदीयोऽयम्प्रश्नो निर्विषय इति भावः । लोकप्रसिद्धमिति । लोकव्यवहारार्थे शास्त्रे लोकप्रसिद्धपदार्थस्यैवाश्रयणं युक्तमिति भावः । वास्तवभेदस्तु नास्त्येवेति तात्पर्यम् । असत्यपीति । यथा मृद्घटयोर्वास्तवभेदाऽभावेऽपि लोके 'मृदो घट' इति भेदव्यवहार इत्यर्थः । एवञ्च भ्रान्तलोकव्यवहारेण कथं शास्त्रार्थनिर्णय इति भावः । न च रूपादीति । एवञ्चाऽनुपलब्धिप्रमाणेनाऽन्यत्वाऽभावनिश्चय इत्यर्थः ।

अनुपलब्धिप्रमाणमेव द्रढयति भाष्ये—पशोरिति । तद्व्याचष्टे—उपलब्धीति । एवञ्च विविक्ततया ग्रहणाभावादसत्त्वनिश्चय इत्यर्थः । उपलब्धिलक्षणं प्रमाणमेव सत्त्वनिश्चायकम्, उपलब्धिलक्षणाप्रमाणाप्राप्तस्य प्राप्तसत्त्वनिश्चययोग्यस्याऽनुपलम्भादसत्त्वनिश्चय इत्यर्थः । एतेनेति । भागानां मेलने हि तत्कृतव्यवधानादनुपलब्धिः सम्भाव्यत इति भावः । एवन्तर्हीति । अतिरिक्तद्रव्यस्य तन्नाशस्य च कल्पनाऽपेक्षयाऽनन्यत्वं लघमिति भावः । विलक्षणेति । 'रूपं' 'रस' इत्यादितो विलक्षणरूपवद्रसवदित्यादिद्रव्यरूपपदार्थविषयप्रत्ययेत्यर्थः । विप्रतिपन्नमिति । पुरुषप्रतीतेर्भ्रान्तत्वसम्भवादिति भावः ।

सामान्यतो दृष्टमिति । 'द्रव्यं गुणेभ्योऽन्यत्, विशेषवत्त्वात्, यद्यतो विशेषवत्तत्ततोऽन्यत्, यथा लोहकार्पासे परस्परस्मात्' । यदि प्रत्येकं द्रव्यत्वं स्यात्, उच्छ्रायविस्तारयोः साम्यात्तयोरेकत्वात्तस्या तुलाग्रादिविशेषाऽनुपपत्तेः । प्रत्येकाऽतिरिक्तस्य तत्तद्गुणविशेषघटितगुणसमूहरूपस्य नानागुरुत्वादिभिरधिकगुरुत्वादिमत्त्वेन भाष्यप्रदर्शितविशेषसिद्धिरित्यतिरिक्तसमूहरूपद्रव्यसिद्धिरिति भाष्याऽभिप्रायः । भाष्यकारेति । द्रव्यप्राधान्यविवक्षयेत्याशयः । 'कुडयादीनामुपचयाऽपचयपूर्वक' इति पाठः । 'ओषध्यादीना'मित्यपपाठः । तेषामपि पक्षत्वेन भाष्ये उपन्यासात् । येऽश्वादिक्रियायाः प्रत्यक्षत्वं मन्यन्ते, तन्मतेऽप्यनुमानविषयत्वं 'ज्योतिषां गते'रिति तदुपन्यासः । प्रमाणवाच्यनुमानशब्दस्य नपुंसकत्वा-

कश्चित्स्पृशन्नेव छिनत्ति कश्चिल्लम्बमानोऽपि न छिनत्ति यत्कृतो विशेषस्तद्द्रव्यम् । तथा कश्चिदेकेनैव प्रहारेण व्यपवर्गं करोति कश्चिद्द्वाभ्यामपि न करोति यत्कृतो विशेषस्तद् द्रव्यम् ॥ अथवा यस्य गुणान्तरेष्वपि प्रादुर्भवत्सु तत्त्वं न विहन्यते तद्द्रव्यम् । किं पुनस्तत्त्वम् ? तद्भावस्तत्त्वम् । तद्यथा—आमलकादीनां फलानां रक्तादयः पीतादयश्च गुणाः प्रादुर्भवन्ति, 'आमलकं' 'बदर'मित्येव भवति ।

अन्वर्थं खल्वपि निर्वचनं—गुणसंद्रावो द्रव्यमिति ।

प्र०—परिमाणं-पारिमाण्डल्यम् । क्वचित्परिणाह इति पाठः । परिणाहः-पारिमाण्डल्यमेव । अन्यत्तुलाग्रमिति । तुलाग्रस्यान्यथात्वं नामोन्नामलक्षणं, गुरुत्वभेदात् । गुरुत्वस्य च समवायिकारणं द्रव्यमिति रूपादिव्यतिरिक्तद्रव्यसिद्धिः । विशेष इति । तुलाग्रस्य नामोन्नामलक्षणो भेद इत्यर्थः । स्पृशन्नेवेति । खड्गादिः । लम्बमानोऽपीति । कार्पासादिः । व्यपवर्गमिति । विभागम् । तत्त्वमिति । एकाकारबुद्धिः । निमित्तत्वमित्यर्थः । यदि रूपाद्यालम्बनैवामालकादिबुद्धिः स्यात्तदा पूर्वरूपादिविनाशादपूर्वरूपादिप्रादुर्भावाच्च 'तदेवेदमामलक'मिति प्रत्यभिज्ञाप्रत्ययो नोत्पद्येत, अस्ति च भिन्नाकारबुद्ध्युत्पत्तिस्तस्मादस्ति रूपाश्रयो द्रव्यम् । एतच्च पाकजरूपाद्युत्पत्तौ ये द्रव्यविनाशं नेच्छन्ति तन्मतेन द्रव्यप्रत्यभिज्ञाश्रयेणोक्तम् । ये तु पाकजरूपाद्युत्पत्तौ पूर्वद्रव्यविनाशमपूर्वद्रव्या-

उ०—स्पृष्ट्वाऽनुपपत्तेराह—अनुमीयतेऽनेनेति । प्रकृते को हेतुरिति भाष्याक्षरार्थः । पारिमाण्डल्यं—विस्तारः । ननु तुलाग्रस्य भेदाऽभावादाह—नामोन्नामेति । नमनोन्नमनेत्यर्थः । गुरुत्वभेदादिति । तद्भेदश्च समवायिकारणभेदाऽधीन इति द्रव्यमतिरिक्तं सिध्यति । भाष्ये—तद्द्रव्यमित्यस्य तदाश्रयो द्रव्यमिति भावः । अत्र वदन्ति—एवं हि रूपादिसमवायिकारणतयैव द्रव्यसिद्धावेतत्पर्यन्तधावनवैफल्यापत्तिः । किञ्चाऽतिरिक्तस्यैकगुरुत्वाश्रयस्याऽभावेऽपि दशगुञ्जाभिरल्पगुञ्जाभ्योऽधिकाभ्यश्च नामोन्नामोऽनेकगुरुत्वैरेव दृष्टः, तद्वदत्राऽपि तैरेव द्रव्याऽनतिरिक्तैस्तदुपपत्तौ न तदतिरिक्तद्रव्यसिद्धाविदं मानम् । किञ्चैवं पटादौ सूत्रादिभ्योऽधिकगुरुत्वाद्युपलम्भापत्तिः । तस्माद्यत्कृतो विशेष इति भाष्यस्यं कार्पासादधिकगुरुत्वसमूहकृतो विशेषः, तत्समूहो द्रव्यमित्यक्षरार्थः । एवञ्च तुल्यन्यायाद्रूपादिसमूह एव द्रव्यम् । प्रत्येकञ्च गुणत्वमिति द्रव्यगुणयोर्भेदसिद्धौ प्रकृतिप्रत्ययार्थयोर्भेदोपपत्तिरिति भावः । किञ्च तेषामेव प्रत्येकं द्रव्यत्वेऽनेकद्रव्यप्रतीत्यापत्तिरिति । एवञ्चाऽयुतसिद्धरूपादिपरमाणुरूपाऽवयवाऽनुगतः समूहो द्रव्यमतो वनादेर्न द्रव्यत्वम् । स्पष्टञ्च 'स्त्रियामि'ति सूत्रे भाष्ये उक्तं—'द्रव्ये च भवतः कः सम्प्रत्ययः ?, गुणसमुदायो द्रव्य'मिति । तथा तपरसूत्रेऽपि भाष्ये—'कं च प्रत्यवयवो गुणः ? समुदायमिती'ति दिक् ।

नन्वत्र पक्षे आमलकादौ पाके पूर्वरूपादिविनाशे तत्तद्घटितसमुदायस्याऽपि नाशात्तदेवेदमामलकमिति प्रतीत्यनापत्तिरिति चेन्न, केषाञ्चिद्गुणानां नाशेऽपि बहोर्गुणसमुदायस्य सत्त्वेन प्रत्यभिज्ञोपपत्तेः । तदेवाह—अथवा यस्येति । 'सद्भावा'दिति शेषः । यस्याऽवयवसमूहस्य सद्भावादित्यर्थः । कैयटस्तु वैशेषिकादिनयाऽनुसारेण भाष्यं व्याचक्षाणः—कथं 'स्त्रिया'मिति सूत्रस्थभाष्येण न विरुध्यत इति चिन्त्यम्; कथं च 'किं पुनर्द्रव्यम्, के गुणा' इति प्रश्नस्य न निर्दलतेति च चिन्त्यम् । तन्मतेनेति । ते हि व्यक्ति-

यदि तर्हि षष्ठीसमर्थाद्गुणे प्रत्यया उत्पद्यन्ते किमियता सूत्रेण । एतावद्वक्तव्यं 'षष्ठीसमर्थाद्गुण' इति ।। 'षष्ठीसमर्थाद्गुण' इतीयत्युच्यमाने द्विगुणा रज्जुस्त्रिगुणा रज्जुः—अत्रापि प्राप्नोति ।। नैष दोषः । गुणशब्दोऽयं बह्वर्थः । अस्त्येव समेष्ववयवेषु वर्त्तते । तद्यथा,—द्विगुणा रज्जुस्त्रिगुणारज्जुरिति । अस्ति द्रव्यपदार्थकः । तद्यथा,—'गुणवानयं देश'इत्युच्यते यस्मिन् गावः सस्यानि च वर्त्तन्ते । अस्त्यप्रधाने[1] वर्त्तते । तद्यथा—यो यत्राऽप्रधानं भवति स आह—'गुणभूता वयमत्रे'ति । अस्त्याचारे वर्त्तते । तद्यथा—'गुणवानयं ब्राह्मण' इत्युच्यते यः सम्यगाचारं करोति । अस्ति संस्कारे वर्त्तते । तद्यथा—संस्कृतमन्नं 'गुणव'दित्युच्यते ।

अथवा सर्वत्रैवाऽयं गुणशब्दः समेष्ववयवेषु वर्त्तते । तद्यथा—द्विगुणमध्ययनं त्रिगुणमध्ययनमित्युच्यते । चर्चागुणान्क्रमगुणांश्चाऽपेक्ष्य भवति, न संहितागुणांश्चर्चागुणांश्च ।

प्र०—रम्भञ्चाभ्युपगच्छन्ति तन्मतेन द्रव्यभेदेऽपि जातेरेकत्वाज्जातिप्रत्यभिज्ञाश्रयेणोक्तम् । जातेश्चाधारो द्रव्यं, ततो जातिमन्तरेण प्रत्यभिज्ञाया अभावाद्द्रव्यमन्तरेण जात्युपलम्भाभावाद्द्रव्यस्य सद्भावनिश्चयः । अन्वर्थमिति । अर्थान्विताद्द्रव्यव्यपदेशादेव रूपादिव्यतिरिक्तं द्रव्यं सिद्धमित्यर्थः । गुणसंद्राव इति । संद्रूयते—सङ्क्रम्यते—आश्रीयते इति संद्रावः । 'समि युद्रुदुवः' इति घञ् । गुणानामाश्रयो द्रव्यमित्यर्थः ।

किमियतेति । 'यस्य गुणस्य भावा'दित्यादिना गुरुणा सूत्रेणेत्यर्थः । द्विगुणा रज्जुरिति । विषयप्रदर्शनमात्रमेतत् । रज्जुशब्दात्तु षष्ठ्यन्तादवयवलक्षणे गुणे त्वतलप्रसङ्गः । कथं प्रसङ्ग इत्याह गुणशब्दोऽयमिति । क्वचित्तु पाठः-'नैष दोषो गुणशब्दोऽय'मिति । तत्रायमर्थः-यतोऽयं गुणशब्दो बह्वर्थस्ततो 'यस्य गुणस्य भावा'दित्यस्मिन्न्यासेऽतिप्रसङ्गो न भवति, गुणशब्देन विशिष्टस्य गुणशब्दप्रवृत्तिनिमित्तरूपस्योपादानात् ।

उ०—विषयामेव प्रत्यभिज्ञां मन्यन्ते । ये त्विति । ते हि परमाणुपर्यन्तद्रव्यनाशे परमाणुष्वेव पाकजरूपाद्युत्पत्तौ पुनः पूर्ववद्द्रव्यारम्भं वदन्ति । जातेश्चाधारो द्रव्यमिति । यद्यपि गुणोऽपि जात्याधारस्तथापि प्रकृताऽभिप्रायेणेदम् । गुणानामश्रय इति । समूहस्य भेदकल्पनयैव चाऽश्रयत्वव्यवहारोऽपीति भावः । एवञ्च 'गुणसमूहो द्रव्यमिति पतञ्जलि'रिति योगभाष्येण न विरोध इति मञ्जूषायां निरूपितम् । भाष्ये—षष्ठीसमर्थाद्गुणे इति । 'तस्य गुणे'इति वक्तव्यमिति भावः । ननु 'द्विगुणा रज्जु'रित्यत्र गुणशब्देनैवाऽभिधानादुक्तार्थानामिति न्यायेन षष्ठीसमर्थाऽभावेन च प्रत्ययाऽनुत्पत्तिरत आह—विषयेति । कथम्प्रसङ्ग इति । पराश्रयस्य भेदकस्य गुणपदार्थत्वादिति भावः । क्वचित्त्विति । तद्रहितपाठ एव युक्तः, अत्र पाठेऽर्थसामञ्जस्याऽभावादित्याहुः । संहितामधीत्य यः पदान्यधीते तदीयमध्ययनं द्विगुणमित्युच्यते । ते अधीत्य यः क्रममध्यधीते तस्य त्रिगुणम् । संहिताऽध्ययनकालेऽपि नान्तरीयकतया पदाऽध्ययनसत्त्वादाह—पदविच्छेदेति ।

१—'अस्त्यप्राधान्ये' इति कीलहार्नपाठः ।

यद्येवं 'गुणवदन्न'मिति गुणशब्दो नोपपद्यते, न ह्यन्नस्य सूपादयो गुणाः समा भवन्ति । नाऽवश्यं वर्ष्मतः परिमाणत एव वा साम्यं भवति । किं तर्हि ? युक्तितोऽपि । अतश्च युक्तितो यो हि मुद्गप्रस्थे लवणप्रस्थं प्रक्षिपेन्नाऽदो युक्तं स्यात् । यदि तावददेरन्नं नादोऽत्तव्यं स्यात् । अथाऽनितेरन्नं नाऽदो जग्ध्वा प्राणयात् ।

शुक्लादिषु तर्हि वर्त्यभावाद्वृत्तिर्न प्राप्नोति,—शुक्लत्वं शुक्लतेति ॥ किं पुनः कारणं शुक्लादय एवोदाह्रियन्ते न पुनर्वृत्तादयोऽपि,—वृत्तत्वं वृत्ततेति ? अस्त्यत्र विशेषः । उभयवचना ह्येते द्रव्यं चाहुर्गुणञ्च, यतो द्रव्यवचनास्ततो वृत्तिर्भविष्यति ।

प्र०—अथवेति । पूर्वोक्तविषये सर्वस्मिन्नित्यर्थः । त्रिगुणमध्ययनमिति । पदक्रमसंहितालक्षणावयवत्रययोगात् । चर्चागुणाः-पदविच्छेदगुणाः । पदक्रमाध्यायी 'द्विगुणमधीत' इत्युच्यते । न संहितागुणांश्चर्चागुणांश्चेति । वेदान्तरसंहितां वेदान्तरपदानि वाधीयानो द्विगुणमधीत इति नोच्यते । अध्ययनक्रमभेदादेकस्याऽध्ययनस्य द्विगुणत्वाभावात् । यद्यपि क्रमपाठे पदावृत्त्याधिक्यं भवति तथापि युक्तितः साम्योपपत्तिः । 'गुणवानयं देश'इत्यत्रापि गोसस्यादयो युक्तितःसमा देशावयवत्वाद्गुणा उच्यन्ते । गवादीनां देशावयवत्वमुपचरितम् । गुणभूतावयवमित्यत्रापि गृहाद्यवयवसदृशात्मनिर्देशः । 'गुणवानयं ब्राह्मण' इत्यादावपि ब्राह्मणादिशब्दार्थगुणसमुदायैकदेशाचारवाची गुणशब्दः । युक्तितश्चाचारस्य साम्यम् । यद्येवमिति । यथा 'द्विगुणा रज्जु'रित्यादौ प्रमाणतोऽवयवस्य साम्यं न तथाऽत्रेति प्रश्नः । युक्तित इति । अर्थक्रियायां यद्योग्यं तत्सममित्यर्थः । यदि तावदिति । युक्तितः साम्याभावेऽन्नमेव तन्न स्यात् कुतः पुनस्तस्य गुणवत्त्वमित्यर्थः । तदेवं षष्ठीसमर्थाद्गुण इत्युच्यमानेऽतिप्रसङ्गाद्यस्य गुणस्य भावादित्याश्रयितव्यम् । अत्राप्यव्याप्तिं चोदयति—शुक्लादिष्विति । 'पटस्य शुक्ल' इति व्यतिरेकदर्शनाद्गुणमात्रवचनाः शुक्लादयः । 'पटस्य शुक्लत्व'मित्यादौ गुण एव त्वतलादिप्रत्ययो दृश्यते न च गुणे वर्त्तमानानां तेषां गुण एव प्रवृत्तिनिमित्तमिति मत्वा प्रश्नः । गुणसमवायिनि तु सामान्ये स्यात् प्रत्ययः, किन्तु 'पटस्य

उ०—भाष्ये—'चर्चागुणा'नित्यादेः 'समा'नित्यादिः । पदक्रमाध्यायीति । पदानां क्रमेण विच्छेदेनाध्यायीत्यर्थः । भाष्ये समाऽवयवेषु वृत्तौ युक्तिमाह—न संहितेति । अस्य'विषमा'नित्यादिः । तद्भावनयन्नाह—वेदान्तरेति । अध्ययनक्रमभेदादिति । अध्ययनविषयवर्णाऽनुपूर्वीभेदादित्यर्थः । युक्तित इति । बोध्यमानपदस्वरूपभेदाभावादिति भावः । युक्तितः समा इति । देशस्य समा अवयवा इत्यर्थः । तदाह—देशाऽवयवत्वादिति । 'समानदेशाऽवयवत्वा'दिति पाठेऽवयवान्तरेण तुल्यतया देशावयवत्वादित्यर्थः । ननु तेषां देशाऽवयवत्वं कथमत आह—गवादीनामिति । यथा देशाऽवयवोऽर्थक्रियाकारी तथा गोसस्यादिकमपीत्यर्थः । युक्तितः—ब्राह्मणव्यवहारप्रयोजकत्वेनेत्यर्थः । ननूक्तरीत्या युक्तितः साम्यादेव 'गुणवदन्न'-मित्यादयः प्रयोगा अत आह—यथेति । अर्थक्रियायामिति । सा च प्रकृते भोजनरूपा । ननु गुणिपरेषु शुक्लादिषु गुण एव वर्त्ती, गुणपरेषु तद्गतजातिरिति किमुच्यते 'वर्त्यभावा'दित्यत आह—पटस्य शुक्ल

इमेऽपि तर्हि उभयवचनाः। कथम्? आरभ्यते मतुब्लोपो 'गुणवचनेभ्यो मतुपो लुग्भवती'ति+। यतो द्रव्यवचनास्ततो वृत्तिर्भविष्यति।

डित्थादिषु तर्हि वर्त्यभावाद्वृत्तिर्न प्राप्नोति—डित्थत्वं डित्थता डाम्भिट्टत्वमिति। तत्रापि—कश्चित्प्राथमकल्पिको डित्थो डाम्भिट्टश्चेति। तेन कृतां क्रियां गुणं वा यः कश्चित्करोति स उच्यते—डित्थत्वं त एतड्डाम्भिट्टत्वं त एतत्। एवं डित्थाः कुर्वन्ति, एवं डाम्भिट्टाः कुर्वन्ति।

यस्तर्हि प्राथमकल्पिको डित्थो डाम्भिट्टश्च तस्य वर्त्यभावाद्वृत्तिर्न प्राप्नोति। नैष दोषः। यथैव तस्य कार्थंचित्कः प्रयोग एवं वृत्तिरपि भविष्यति।

प्र०—शुक्लत्व'मिति पटेन सम्बन्धाभावप्रसङ्गः। वर्त्यभावादिति। वर्त्तनं वर्त्तो वृत्तिरित्यर्थः। वर्त्तोऽस्मिन्नस्तीति वर्त्ती प्रत्ययार्थः, प्रकृत्यर्थव्यतिरिक्तप्रत्ययार्थाभावादित्यर्थः। न पुनर्वृक्षादय इति। तेऽपि जातिमात्रवचनास्ततो जातौ प्रत्ययाऽप्रसङ्गः। द्रव्यं चाहुरिति। विशिष्टजातियुक्तमित्यर्थः। गुणं चेति। जातिलक्षणम्। यतोद्रव्यवचना इति। यस्माद्द्रव्यवचनास्तस्माज्जातौ प्रवृत्तिनिमित्ते प्रत्ययः। आरभ्यते मतुब्लोप इति। वृक्षादयो जातितद्वतोरभेदविवक्षायां द्रव्यमाहुः। नहि यथा 'पटस्य शुक्ल' इति व्यतिरेको दृश्यते तथा 'धवस्य वृक्ष' इति। तत्र गुणद्रव्ययोर्व्यतिरेकदर्शनान्मतुश्श्रवणनिवृत्त्यर्थो लुगारम्भः।

डित्थादिष्विति। डित्थादयो यदृच्छाशब्दा अर्थगतं न किंचित्प्रवृत्तिनिमित्तमपेक्षन्ते, पुरुषेच्छावशेन प्रवर्त्तनात्। तेन कृतामिति। डित्थसहचरितगुणक्रियादर्शनादन्यत्राप्युपचारात्प्रवर्त्तमानस्य डित्थशब्दस्य गुणक्रिये एव प्रवृत्तिनिमित्तमित्यर्थः। कार्थंचित्क इति। विनयादिषु कथंचिच्छब्दस्य पाठात्स्वार्थे ठक्प्रत्ययः। शब्दस्वरूपमर्थेऽध्यस्याऽयं डित्थ इति संज्ञासंज्ञि-

उ०—इति। पटेन सम्बन्धाऽभावेति। प्रकृत्यर्थस्य पटेन सम्बन्धे च सापेक्षत्वाद्वृत्त्यभावप्रसङ्ग इति भावः। ननु यथा वृक्षशब्दे मतुब्लोपं विनैव जातिविशिष्टद्रव्यमाह, तथा शुक्लादयोऽपि गुणविशिष्टं द्रव्यं वक्ष्यन्तीति किं मतुब्लोपेनेत्यत आह—वृक्षादय इति। जातिप्रवृत्तिनिमित्तकशब्दबोध्यजातेः स्वाश्रयेणाऽभेदविवक्षैवेति भावः। अत्रत्यं तत्त्वं प्रागेवोक्तम्। ननु तत्राऽपि शब्दरूपं प्रवृत्तिनिमित्तमस्तीत्यत आह—डित्थादय इति। भाष्ये—तत्राऽपि कश्चिदिति। 'तत्रापी'त्यस्योत्तरमाहेति शेषः। 'कश्चि'दित्यादि 'इती'त्यन्तं वार्त्तिकोक्तमुत्तरम्। तद्व्याचष्टे—तेन कृतामित्यादि। शब्दस्वरूपमर्थेऽध्यस्येति। तादात्म्याऽध्यासोऽत्र बोध्यः। तदेवाह—अयं डित्थ इति संज्ञासंज्ञिसम्बन्धः क्रियत इति। यथा डित्थशब्दस्येति। अन्यथा शब्दान्निर्विकल्पकाऽभावेन, निर्धर्मितावच्छेदकशक्तिग्रहाऽभावेन च प्रयोग एव न स्यादित्यर्थः। जात्यतिरिक्तपदार्थे विशेष्यताप्रकारतयोः सावच्छिन्नत्वनियमादिति भावः। अन्ये त्वेवं व्याख्याने घटादिपद-

+ ५।२।६४ वा० ३

**यद्वा सर्वे भावाः स्वेन भावेन भवन्ति स तेषां भावस्तदभिधाने ॥६॥**

**किमेभिस्त्रिभिर्भावग्रहणैः क्रियते ? एकेन शब्दः प्रतिनिर्दिश्यते द्वाभ्यामर्थः । यद्वा सर्वे शब्दाः स्वेनार्थेन भवन्ति स तेषामर्थ इति, तदभिधाने वा त्वतलौ भवत इति**

प्र०—सम्बन्धः क्रियते । ततः शब्दस्वरूपासञ्ज्ञाद्यथा डित्थशब्दस्याऽर्थे प्रयोगस्तथैव शब्दस्वरूपेऽर्थेऽध्यस्ते प्रत्यय इत्यर्थः । अन्ये तूत्पत्तिप्रभृत्याविनाशात्कौमाराद्यवस्थाभेदभिन्नद्रव्यसमवायिनीं जातिमिच्छन्ति । यद्दर्शनादवस्थान्तरेऽपि स एवायं डित्थ इति प्रत्यभिज्ञाप्रत्यय उत्पद्यते तस्यां प्रत्ययः ।

यद्वेति । पूर्वत्र लक्षणे जातिगुणद्रव्यलक्षणार्थाभिधायिभ्यो गवादिभ्यः शब्दस्वरूपगुणसामान्यादिषु प्रत्ययः । इह तु शब्दाभिधायिभ्यः पूर्वोक्तेष्वेवार्थेष्विति प्रकृत्यर्थभेदेऽपि प्रधानप्रत्ययार्थाऽभेदापेक्षो विकल्पः । किमेभिरिति । भावशब्दत्रयस्याऽर्थभेदं पृच्छति । एकेनेति । भवन्तीति भावाः शब्दाः । 'भवतेश्चेति वक्तव्य'मिति कर्त्तरि णः । द्वाभ्यामिति । स च द्विविधो वाच्यप्रवृत्तिनिमित्तरूपः । अत्र तु करणसाधनो घञ् । तत्र शुक्लस्य भावः शुक्लत्वमिति शुक्लशब्दस्य गुणे वर्त्तमानस्य भावो गुणसमवायिसामान्यं, तस्माद्धि निमित्ताच्छुक्लशब्दः स्वस्मिन्नर्थे गुणलक्षणे भवति प्रवर्त्तत इत्यर्थः । द्रव्ये तु वर्त्तमानस्य शुक्लशब्दस्य गुणो भावः । तथा गोशब्दस्य द्रव्ये वर्त्तमानस्य जातिर्भावो, राजपुरुषशब्दस्य सम्बन्ध इत्यादि बोद्धव्यम् । स्वेनार्थेनेति । शब्दानां स्वार्थो वाच्यस्तेन भवन्ति—तत्र वाचकत्वेन प्रवर्त्तन्त इत्यर्थः । वाच्योऽर्थः शब्दभवने करणत्वेन विवक्षितः । अर्थप्रत्यायनाय शब्दप्रयोगाद्भवत्यर्थस्य करणत्वम् । स तेषामर्थ इति । यत्तदोर्नित्याऽभिसम्बन्धाद्यस्मादित्यपेक्षते । यस्मात्—यत्प्रवृत्तिनिमित्तात्स्वेनार्थेन प्रयुज्यन्ते सोऽर्थस्तेषां प्रवृत्तिनिमित्ततया सम्बन्धीत्यर्थः । एतेन प्रकृतिप्रत्ययार्थयोः सम्बन्धो

उ०—सदृशत्वादस्य कथञ्चित्पदप्रयोगाऽसामञ्जस्यमतो व्यक्तेरेव प्रकारताविशेष्यताख्यविषयताद्वयेन भानमिति शक्तिग्रहप्रयोगयोरुपपत्तिः । एवं प्रकारस्य चाऽन्यत्राऽदृष्टत्वात्कथञ्चिदित्युक्तिः समञ्जसा । एवञ्च प्रकारताविशिष्टा व्यक्तिस्त्वप्रत्ययार्थ इत्याहुः । जातिमिच्छन्तीति । अत एवाऽत्राऽतिप्रसङ्गवारणाय 'आकृतिग्रहणे'त्यादिपरिभाषा स्वशास्त्रे आश्रिता । पूर्वन्यासादत्र पक्षे विशेषमाह—पूर्वत्र लक्षणे इति । शब्दस्वरूपेत्यादि । यदा गोशब्दो गोत्वमात्रवचनस्तदा शब्दस्वरूपे, डित्थादयोऽपि शब्दस्वरूपे उदाहरणम् । गुणिवाचकेभ्यः शुक्लादिभ्यो गुणे । गुणवचनेभ्यस्तद्गते सामान्ये इत्यर्थः । गवादिभ्यश्च सामान्ये । शब्दाऽभिधायिभ्यः—शब्दस्वरूपमात्रपरेभ्यः । गोत्वमित्यादौ गोशब्दसम्बन्धी धर्म इत्यादिप्रकारेण बोधः । नन्वर्थभेदे विकल्पोऽयुक्तः, एकार्थानां विकल्पादत आह—प्रकृत्यर्थभेदेऽपीति । भवन्तीति । उच्चारणविषया भवन्तीत्यर्थः । द्विविध इति । वाच्यो—विशेष्यरूपः । प्रवृत्तिनिमित्तम्—प्रकाररूपम् । अयमत्र वार्त्तिकार्थः—सर्वे शब्दाः स्वेन अर्थेन—वाच्येन करणेन यस्मात्प्रवृत्तिनिमित्ताद्भवन्ति—वाच्यार्थबोधनाय प्रयोगं प्राप्नुवन्ति स प्रवृत्तिनिमित्तरूपोऽर्थस्तेषां शब्दानां भावः । अतस्तदभिधानेऽर्थाच्छब्दपरेभ्यः प्रत्यय इत्यर्थः । प्रथमभावशब्दस्य शब्दपरतायां 'यद्वा सर्वे भावा' इत्यादिनोक्तं लक्षणं यादृशं सम्पद्यते तदनुवदति भाष्ये—यद्वा सर्वे शब्दा-

वक्तव्यम् ॥ नैवमन्यत्र भवति । नहि 'तेन रक्तं रागात्' [ ४ । २ । १ ] इत्यत्र शब्देन रक्ते प्रत्यया उत्पद्यन्ते । शब्देऽसम्भवादर्थेन रक्ते प्रत्यया भविष्यन्ति ।

तत्तर्ह्यन्यतरत्कर्त्तव्यं सूत्रं च भिद्यते ॥ यथान्यासमेवास्तु । ननु चोक्तं 'तस्य भाव इत्यभिप्रायादिष्वतिप्रसङ्ग' इति ?

प्र०—दर्शितः । नैवमन्यत्रेति । अन्यत्र शब्दार्थसम्बन्धी प्रत्ययार्थो निर्दिश्यते । न तु शब्दसम्बन्धीत्यर्थः । अत्रोत्तरं-शब्देऽसम्भवादिति । शब्दसम्बन्धित्वं प्रत्ययार्थस्य नोपपद्यते । कषायादिशब्देन रागाद्यसम्भवात्ततः शब्दार्थसम्बन्धित्वं प्रत्ययार्थस्याश्रीयते । इह तु शब्दस्य तदर्थस्येव भावसम्बन्धसम्भवात्तद्वाचिनी कामचारात्प्रकृतिराश्रीयते । तथा हि—शुक्लस्य द्रव्यस्य गुणो भावस्तद्वशाद्धि शुक्लं द्रव्यं भवति । गोत्वसम्बन्धाच्च गौर्द्रव्यम् । एवं शुक्लशब्दस्याऽपि द्रव्ये वर्त्तमानस्य गुणो भावः । तद्वशात्तस्य द्रव्ये प्रवर्त्तनात् । गोत्ववशाच्च गोशब्दस्येत्येवं सर्वत्रावसेयम् । 'नानात्वं' 'यौगपद्य'मित्यादौ पूर्वत्र लक्षणे नानाभूतार्थाभिधायिनो युगपद्भूतार्थाभिधायिनश्च द्रव्यधर्मे असहभावे युगपद्भावे च प्रत्ययः । उत्तरत्र तु शब्दाभिधायिभ्यां पूर्वोक्त एव भावे प्रत्ययः । तत्तर्ह्यन्यतरदिति । 'यस्य गुणस्य भावा'दिति वा, 'यद्वा सर्वे भावा' इति वेत्यर्थः । अनभिधानादिति । न हि गोत्वमश्वत्वमित्याद्युक्तेऽभिप्रायाद्यवगम्यते किं तु जात्यादीत्यर्थः । तत्र भवत्यनेनेति करणसाधनेन घञन्तेन भावशब्देन जात्यादिके उच्यमाने वाच्य-

उ०—इति । नन्वर्थस्य शब्दभवने कथं कारणत्वमत आह—अर्थप्रत्यायनायेति । प्रवृत्तिनिमित्ततयेति । प्रवृत्तिनिमित्ते न शक्तिरित्यभिप्रायः । सम्बन्ध इति । प्रवृत्तिनिमित्तत्वरूपः । प्रकृतिश्चाऽत्र पक्षे शब्दस्वरूपपरा । प्रवृत्तिनिमित्तत्वञ्च स्वजन्यबोधीयमुख्यविशेष्यतानिरूपितविषयतावत्त्वम् ।

भाष्ये शङ्कते—नैवमन्यत्रेति । अन्यत्र—अर्थे । क्वचिदपि लक्ष्ये एवं प्रकारो न भवतीत्यर्थः । यथा हीति । गुणादेर्द्रव्यभावत्वं तद्वृत्तिधर्मत्वात् । तद्वशात्—गुणवशात् । तद्—द्रव्यम् । शुक्लं—तद्व्यपदेशवत् । एवं गोत्वसम्बन्धाद्-द्रव्यं गौः—तद्व्यपदेशवत् । अतो गुणादेर्द्रव्यभावत्वम् । एवं तत्तच्छब्दानां द्रव्ये वृत्तौ तेषामेव निमित्तत्वादौपचारिकं शब्दधर्मत्वमिति शब्दभावोऽपि स इति भावः । परे तु संज्ञाशब्दे प्रवृत्तिनिमित्ताऽनङ्गीकारेऽपि प्रत्ययोपपादनायेदम् । अयं भावः—शब्दस्य योऽर्थो वाच्यप्रवृत्तिनिमित्ताऽन्यतररूपस्तद्वाचकत्वं प्रत्ययस्य । तत्र 'घटत्व'मित्यादौ जात्यादिरूपं प्रवृत्तिनिमित्तं तदर्थः । 'डित्थत्व'मित्यादौ त्वन्यस्याऽसम्भवाद्विशेष्यभूतोऽर्थ एव त्वाऽर्थः । एवञ्च डित्थडित्थत्वशब्दयोः पर्यायता । ईदृशे स्थले एव प्रकृतिः शब्दपरा 'त्व'स्य साधुत्वाय कल्पते । एवञ्च 'कुत्व'मित्यादेः कवर्ग इत्यादिरेवार्थः । तत्र 'कुत्वं कस्मान्न भवती'त्यादौ कुत्वशब्दार्थकुशब्दस्य प्राप्त्यभावात्तस्य स्वार्थाश्रये लक्षणाऽऽश्रयणीया स्यात् । किञ्चैवं 'डित्थत्व'मित्यादौ प्रकृतिप्रत्ययार्थयोर्भेदाऽभावः । किञ्च सर्वत्र प्रकृतेर्लक्षणायां न मानम् । 'डित्थत्व'मित्यादौ तु प्रकृतिप्रत्ययार्थाऽनुपपत्त्या तत्कल्पनम् । शब्देऽसम्भवादित्यादेरयमर्थः,—यथा तत्र शब्देऽसम्भवादर्थेन रक्ते प्रत्ययास्तथैतद्विषये डित्थत्वादावर्थस्य भावेऽसम्भवात्प्रकृतेः शब्दपरत्वं कुत्वाऽर्थे

**उक्तं वा ॥ ७ ॥**

किमुक्तम् ? 'अनभिधाना'दिति† । अनभिधानादभिप्रायादिषूत्पत्तिर्न भविष्यति ।

**त्वतल्भ्यां नञ्समासः पूर्वविप्रतिषिद्धं त्वतलोः स्वरसिद्ध्यर्थम् ॥ ८ ॥**

त्वतल्भ्यां नञ्समासो‡ भवति पूर्वविप्रतिषेधेन । किं प्रयोजनम् ? 'त्वतलोः स्वरसिध्यर्थम्' । त्वतलोः स्वरसिद्धिर्यथा स्यात् × । त्वतलोरवकाशः—भावस्य वचनं प्रतिषेधस्याऽवचनम्, ब्राह्मणत्वम् ब्राह्मणता । नञ्समासस्यावकाशः—प्रतिषेधस्य वचनं भावस्याऽवचनम्—अब्राह्मणः अवृषलः । उभयवचन उभयं प्राप्नोति—अब्राह्मणत्वम् अब्राह्मणता । नञ्समासो भवति पूर्वविप्रतिषेधेन ।

स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ? न वक्तव्यः । नाऽत्र त्वतलौ प्राप्नुतः । किं कारणम् ? असामर्थ्यात् । कथमसामर्थ्यम् ? 'सापेक्षमसमर्थं भवती'ति । यावता ब्राह्मणशब्दः प्रतिषेधमपेक्षते ।

नञ्समासोऽपि तर्हि न प्राप्नोति । किं कारणम् ? असामर्थ्यादेव । कथमसामर्थ्यम् ? 'सापेक्षमसमर्थं भवती'ति । यावता ब्राह्मणशब्दो भावमपेक्षते ।

प्र०—सम्बन्धिनि शब्दसम्बन्धिनि च पूर्वोक्तन्यायाद्द्रव्यादिवाचिनः शब्दाभिधायिनो वा शुक्लादेस्त्वतलादय इति स्थितम् । त्वतल्भ्यामिति । न ब्राह्मणस्य भाव इति युगपद्भावनञर्थसम्बन्धविवक्षायां यदि परत्वात्त्वतलोः कृतयोर्नञ्समासः स्यात्तदाऽव्ययपूर्वपदप्रकृतिस्वरेणाऽऽद्युदात्तत्वं प्रसज्येत । नञ्समासात्तु त्वप्रत्यये प्रत्ययस्वरेणान्तोदात्तं पदं भवति । तलि तु लित्स्वरेण मध्योदात्तमिति तदर्थं पूर्वविप्रतिषेध आश्रीयते । यावता ब्राह्मणशब्द इति । प्रत्ययार्थस्य प्राधान्याद्ब्राह्मणार्थस्य नञर्थापेक्षत्वादसामर्थ्यादप्रधानस्य सापेक्षत्वे सति ऋद्धस्य राजपुरुष-

उ०—वाच्य एव भावप्रत्ययः । सम्भवे स्वर्थपरायाः प्रकृतेः शब्दबोध्यप्रवृत्तिनिमित्ते प्रत्यय इत्याहुः । गुणसमुदायस्य द्रव्यत्वेऽपि तत्तच्छब्दस्वभावात्क्वचिद्गुणः क्वचित्प्रकार इतरे विशेष्या इति निमित्तत्वरूपसम्बन्धस्य न हानिः । भाष्ये—तत्तद्धं न्यतरदिति । कादिपदानां ककारादिवृत्तिधर्म्मान् कत्वादीनुपलक्षणीकृत्य 'यः शुक्लवासाः स देवदत्त' इत्यादाविव शक्तिग्रहो बोध्य इत्याहुः । वार्तिकद्वयलभ्यमर्थं सूत्रान्तरैः साधयति—तत्र भवत्यनेनेति । पूर्वविप्रतिषेधारम्भे फलं दर्शयति—न ब्राह्मणस्येति । युगपदुभाभ्यामेकार्थीभावविवक्षायामित्यर्थः । त्वतलोः कृतयोरिति । ततः समासस्त्वाद्यन्तेन, एकदेशद्वारकं च सामर्थ्यं त्वाद्यन्तेनापि नञ

† ३ । २ । १ वा० ५ ‡ नञ् २ । २ । ६ × आद्युदात्तश्च ३ । १ । ३; लिति ६ । १ । १९३

प्रधानमत्र तदा ब्राह्मणशब्दो भवति च प्रधानस्य सापेक्षस्याऽपि समासः । इदं तर्हि प्रयोजनम् । 'नञ्समासादन्यो भाववचनः स्वरोत्तरपदवृद्ध्यर्थ'मिति वक्ष्यति* तत्र व्यवस्थार्थमिदं वक्तव्यम् ।

## वा छन्दसि ॥ ६ ॥

वा छन्दसि नञ्समासो वक्तव्यः । 'निर्वीर्यतां वै यजमान आशास्ते अपशुताम् । अयोनित्वाय । अशिथिलत्वाय । अगोतामनपत्यताम्' ॥ भवेदिदं युक्तमुदाहरणम्—'अयोनित्वाय' 'अशिथिलत्वाये'ति । इदं त्वयुक्तम्—'अपशुता'मिति न ह्यसौ समासभावमाशास्ते । किं तर्हि ? उत्तरपदाभावमाशास्ते—न पशोर्भाव इति ।

प्र०—इत्यादाविव वृत्त्यभावात्त्वतलोरप्रसङ्गः । **प्रधानमत्रे**ति । उत्तरपदार्थप्रधानत्वात्तत्पुरुषस्य । यथा 'राजपुरुषोऽभिरूप' इति प्रधानस्य सापेक्षत्वेऽपि वृत्तिर्भवत्येवं भावमपेक्षमाणस्यापि ब्राह्मणस्य नञ्समासो भवतीत्यर्थः ।

**इदं तर्ही**ति । न्यायेनैव पूर्वं नञ्समासे सिद्धे'त्वतलभ्या'मिति वचनं नियमार्थम्,—'त्वतलोरेव कर्त्तव्ययोः पूर्वं नञ्समासो नान्यत्र भावप्रत्यये' इत्यन्यो भावप्रत्ययः प्राग्भवति पश्चान्नञ्समासः । न्यायस्य नियमार्थेन वचनेन बाधनात् । ततश्च सति शिष्टत्वादप्रथिमेत्यादौ नञ्स्वरो भवति । अशौक्ल्यमित्यादौ च नञः प्रकृत्यनेकदेशत्वादुत्तरपदवृद्धिः सिध्यति । यदि तु पूर्वं नञ्समासः स्यात्ततो 'न नञ्पूर्वा'दिति प्रतिषेधात्ष्यञोऽप्रसङ्गादशौक्लचमित्यादि न सिध्येत् ।

**वा छन्दसी**ति । छन्दोविषये क्वचित्पूर्वं त्वतलौ पश्चान्नञ्समास', क्वचित्तु विपर्ययः । **अयोनित्वाये**ति । प्रत्ययस्य पश्चान्नञ्समासे सति नञ्स्वरो भवति । **भवेदिद**मिति । अत्र हि नञ्समासभावप्रत्यययोर्युगपत्प्राप्तिः । **नह्यसौ समासभाव**मिति । समासशब्देन समासाऽर्थो जात्यन्तरयुक्तं वस्तूच्यते । तद्भावमसौ नाशास्ते—'अपशुः—पशुसदृशो भूयास'मिति । **किं तर्हि–उत्तरपदाभाव**मिति । उत्तरपदार्थस्य पशुत्वस्याऽभावमाशास्ते–पशुर्मा भूवमिति । ततश्च

उ०—इति बोध्यम् । उपसर्जनस्यैव सापेक्षत्वे वृत्त्यभावेन ब्राह्मणपदार्थस्य यथोपसर्जनत्वं तथा दर्शयति–प्रत्यार्थस्येति । ननु ब्राह्मणभिन्न इति बोधादुत्तरपदार्थोऽप्रधानमेवेत्यत आह–उत्तरपदार्थेति । आरोपितो ब्राह्मण इति बोध इति भावः । राजपुरुषोऽभिरूप इति । 'राज्ञः सुन्दरोऽश्व' इत्यर्थे राजसुन्दरोऽश्व इतिवच्चेत्यपि बोध्यम् । नन्वनेन वचनेनाऽन्यभावप्रत्ययस्य पूर्वं प्रवृत्तिः कथं बोधयितुं शक्याऽशब्दार्थत्वादत आह—न्यायेनैवेति । तत्र व्यवस्थार्थमिति—भाष्यस्य तत्राऽन्यत्वे प्रतियोगिसमर्पणार्थमित्यर्थः । एवञ्चैतन्नियमसिद्धार्थोऽनुवाद एव स इति भावः । 'तद्व्यवस्थार्थ'मिति पाठे तदर्थलाभार्थमित्यर्थः । कैयटस्वरसस्त्वत्रैव

* ५ । १ । ११६ वा० १०

नञ्समासादन्यो भाववचनः स्वरोत्तरपदवृद्ध्यर्थम् ॥ १० ॥

नञ्समासादन्यो भाववचनो भवति विप्रतिषेधेन । किं प्रयोजनम् ? 'स्वरोत्तरपदवृद्ध्यर्थम् ।' स्वरार्थमुत्तरपदवृद्ध्यर्थञ्च । स्वरार्थं तावत्—अप्रथिमा अम्रदिमा† । उत्तरपदवृद्ध्यर्थम्—अशौक्ल्यम् अकार्ष्ण्यम्‡ ॥ ११६ ॥

आ च त्वात् ॥ ५ । १ । १२० ॥

किमर्थश्चकारः ? अनुकर्षणार्थः,—त्वतलावनुकृष्येते × । नैतदस्ति प्रयोजनम् । प्रकृतौ त्वतलावनुवर्त्तिष्येते ॥ अत उत्तरं पठति—

आ च त्वादिति चकारकरणमपवादसमावेशार्थम् ॥ १ ॥

आ च त्वादिति चकारकरणं क्रियतेऽपवादसमावेशार्थम् । इमनिच्प्रभृतिभिरपवादैः+ समावेशो यथा स्यात् ॥ नैतदस्ति प्रयोजनम् । आ त्वादित्येवेमनिच्प्रभृति-

प्र०—पूर्वं भावप्रत्ययः पश्चान्नञ्समासो विनापि 'वा छन्दसी'ति वचनेन सिध्यति । न पशोर्भाव इति—भावस्य नञ्सम्बन्धात्, पशोरसम्बन्धात् ॥ ११९ ॥

आ च त्वात् । वक्ष्यमाणैर्विशेषविहितैस्त्वतलौ मा बाधिषातां, गुणवचनादिभ्यः कर्मणि च यथा स्यातामिति सूत्रम् । किमर्थश्चकार इति । वक्ष्यमाणोऽभिप्रायः । अथ त्वतलोरुत्तरत्राधिकारादेव सिद्धत्वात्सूत्रमेव कस्मान्नाक्षिप्तम् ?, नैतदस्ति, गुणवचनादिभ्यः कर्मणि विधानार्थत्वादनुवृत्तेरपवादैरसन्दिग्धैः सन्दिग्धतदर्थोपस्थानौ त्वतलौ बाध्येयातामिति सूत्रमवश्यं कर्त्तव्यम् । किञ्चाऽसत्यस्मिन्सूत्रे त्वतलोरुत्तरस्मिन्ननुवृत्तिर्दुर्ज्ञाना, उत्तरेषां प्रत्ययनिर्देशान्निराकाङ्क्षत्वात्त्वतलोरपि पूर्वसूत्रेण प्रातिपदिकसामान्याद्भावे विधानादाकाङ्क्षाया अभावात् । अनुकर्षणार्थ इति । अन्यथा विधेयानुपादानादवधिमात्रनिर्देशोऽनर्थकः स्यात् । प्रकृताविति । विधेयमन्त-

उ०—पाठेऽर्थे च । दूषणान्तरमप्याह—यदि तु पूर्वमिति । ननु समासत्वाऽऽशासनस्य क्वापि न सत्त्वमत आह—समासशब्देनेति । पशोरिति । पशोर्नञाऽसम्बन्धादित्यर्थः ॥ ११६ ॥

आ च त्वात् । 'ब्रह्मणस्त्व' इत्यन्तं त्वतलावधिक्रियेते इति सूत्रार्थः । तत्फलमाह—वक्ष्यमाणैरिति । इमनिजादिभिरपवादैरित्यर्थः । गुणवचनादिभ्य इति । येभ्य एव कर्मणि ष्यञादयो विहितास्तेभ्य एव त्वतलावपि कर्मणि यथा स्यातामित्येतदर्थमिदं सूत्रमित्यर्थः । सन्दिग्धतदर्थोपस्थानाविति । सन्दिग्धं

† पृथ्वादिभ्य इमनिज्वा ५ । १ । १२२; तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः ६ । २ । २ ‡ वर्णदृढादिभ्यः ष्यञ् च ५ । १ । १२३; तद्धितेष्वचामादेः ७ । २ । ११७
× तस्य भावस्त्वतलौ ५ । १ । ११९ + पृथ्वादिभ्य इमनिज्वा ५ । १ । १२२

भिरपवादैः समावेशो भविष्यति ॥ इदं तर्हि प्रयोजनम्—आ त्वाद्याः प्रकृतयस्ताभ्यश्च त्वतलौ यथा स्यातां यतश्चोच्येते । एतदपि नास्ति प्रयोजनम् । आ त्वादित्येव आ त्वाद्याः प्रकृतयः ताभ्यस्त्वतलौ भविष्यतो यतश्चोच्येते ॥ इदं तर्हि प्रयोजनम्—आ त्वाद्येऽर्थास्तत्र त्वतलौ यथा स्यातां यत्र चोच्येते । एतदपि नास्ति प्रयोजनम् । आ त्वादित्येव—आ त्वाद्येऽर्थास्तत्र त्वतलौ भविष्यतो यत्र चोच्येते ।

---

प्र०—रेणाऽवध्युपादानस्यानर्थक्यादेव साकाङ्क्षत्वात्प्रकृतौ त्वतलावपेक्षिष्येते इत्यर्थः । अपवादसमावेशार्थमिति । नञ्स्नञ्समावेशार्थमित्यर्थः । भाष्यकारस्तु न्यायव्युत्पादनाय वक्ष्यमाणापवादसमावेशार्थत्वमुपन्यस्य दूषयित्वा च नञ्स्नञ्समावेशार्थत्वं विवरिष्यते । इमनिच्प्रभृतिभिरिति । असति चकारे प्राक्त्वादर्थे त्वतलौ भवत इत्ययमेवार्थः स्यादिति कर्मण्येव गुणवचनादिभ्यस्त्वतलोर्विधिः स्यान्न त्वपवादेन समावेशः । चशब्दात्सोऽपि भवतीति भाव । नैतदस्तीति । 'आ त्वाद्याः प्रकृतयस्ताभ्यस्त्वतलौ भवत' इति विज्ञायमाने सूत्रार्थे सिद्धोऽपवादैः समावेशः । आ त्वाद्याः प्रकृतय इति । गुणवचनब्राह्मणादिप्रकृतयः । ताभ्यश्चेति । कर्मणीति भावः । अनेन सूत्रार्थो व्याख्यातः । यतश्चोच्येते इति । अनेन चशब्दस्य प्रयोजनमाख्यायते । 'यतो विशेषप्रकृतेर्भावे पूर्वसूत्रेण प्रसक्ताविमनिजादिभिश्च बाधितौ ततोऽपि यथा स्याता'मित्येवमर्थश्चशब्दोऽन्यथा कर्मणि त्वतल्विधावस्य सूत्रस्योपयोगात्त्वतलोरपवादैर्बाधः स्यात् । एतदपि नास्तीति । आ त्वात्प्रकृतीः सर्वा अपेक्ष्य त्वतलौ विधीयमानावपवादविषये कर्मणि च भविष्यत इति नार्थश्चशब्देनेत्यर्थः । आ त्वाद्येऽर्था इति । जातौ बहुवचनम् । कर्मण एकस्यैवाऽर्थस्य वक्ष्यमाणत्वात् । अयमर्थः—यद्यवधिमत्यः प्रकृतय आश्रीयन्ते तदाऽपवादैः समावेशः सिध्यति, प्रतिप्रसवार्थत्वादस्य सूत्रस्य । गुणवचनादिभ्यस्तु कर्मणि त्वतलोर्विधानं न सिध्यति। तस्मादवधिमदर्थपरिग्रहेण कर्मणि त्वतलौ सूत्रेण विधीयेते, चकारेण तु भावे अपवादैः समावेश्येते । यत्र चोच्येते इति । भावे विशेषप्रकृतिभ्योऽपवादैः प्रसक्तबाधावित्यर्थः । एतदपीति । अर्थान्प्रकृतींश्चाऽविशेषेणावधिमत्त्वेनाऽपेक्ष्य त्वतल्विधानान्नार्थश्चकारेणेत्यर्थः । केचित्तु—प्रातिपदिकसामान्यात्कर्मणि त्वतलाविच्छन्तो भाष्यमन्यथा व्याचक्षते । तत्त्वयुक्तम् । प्रकृतिविशेषसम्बद्धस्य कर्मार्थस्योपादानात् प्रकृत्यन्तरेण तस्य सम्बन्धाऽयोग्यत्वात् । तस्माद्गुणवचनेत्यतः प्रभृति प्राक्त्वाद्या

---

उ०—तत्तत्सूत्रोपात्तप्रकृतिनिमित्तमुपस्थानं ययोरित्यर्थः । एतत्सूत्राऽभावे गुणवचनादिसूत्रेऽपि सम्बन्धो दुर्घट इत्याह—किञ्चेति । ननु तेषामाकाङ्क्षाऽभावेऽपि त्वतलाकाङ्क्षयैव सम्बन्धः स्यादत आह—त्वतलोरपीति । विवरिष्यत इत्यस्य—वार्त्तिकस्य व्याख्यास्यतीत्यर्थः । नन्वा त्वादित्येव स सिद्धोऽत आह—असतीति । इत्ययमेवार्थ इति । 'प्राग्दीव्यत' इत्यादावर्थानामेवाऽवधिमतां दर्शनादिति भावः । 'आ त्वाद्याः प्रकृतय इति । लक्ष्याऽनुरोधादेवं विशस्यत इति भावः । गुणवचनेति । 'आ त्वाद्याः प्रकृतयोऽप्राप्तत्वतल्कास्ताभ्य' इत्यर्थादिति भावः । सूत्रार्थ इति । सूत्रप्रयोजनमित्यर्थः । आ त्वात्प्रकृतीरिति । अप्राप्तत्वतल्का इत्यर्थे मानाऽभावादिति भावः । जाताविति । 'कर्मणां बाहुल्या'दिति वक्तुं युक्तम् ।

इदं तर्हि प्रयोजनम्—आ त्वाद्याः प्रकृतयस्ताभ्यश्च त्वतलौ यथा स्यातां, यस्याश्च प्रकृतेरेतस्मिन्विशेषेऽन्यः प्रत्यय उत्पद्यते । किं कृतं भवति ? स्त्रीपुंसाभ्यां त्वतलोरुपसङ्ख्यानं चोदितं* तन्न वक्तव्यं भवति ॥ १२० ॥

## न नञ्पूर्वात्तत्पुरुषादचतुरसङ्गतलवणवटबुधकतरसलसेभ्यः ॥ ५ । १ । १२१ ॥

कस्याऽयं प्रतिषेधः ? त्वतलोरित्याह । नैतदस्ति प्रयोजनम् । इष्येते नञ्पूर्वात्तत्पुरुषात्त्वतलौ, अब्राह्मणत्वम् अब्राह्मणतेति ॥ अत उत्तरं पठति—

**न नञ्पूर्वादित्युत्तरस्य प्रतिषेधः ॥ १ ॥**

न नञ्पूर्वादित्युत्तरस्य भावप्रत्ययस्य प्रतिषेधः क्रियते ॥ नैतदस्ति प्रयोजनम् । परिगणिताभ्यः प्रकृतिभ्य उत्तरो भावप्रत्ययो विधीयते, न च तत्र काचिन्नञ्पूर्वा प्रकृतिर्गृह्यते । तदन्तविधिना† प्राप्नोति । ग्रहणवता प्रातिपदिकेन तदन्तविधिः

प्र०—विशेषप्रकृतयस्ताभ्य एव प्रकृतिभ्यः कर्मणि त्वतलौ भवतः, आपादपरिसमाप्तेर्भावकर्माधिकारात् । भावे तु प्राक्त्वादेतस्मात्सूत्रादूर्ध्वं याः प्रकृतयस्ताभ्यः । पूर्वसूत्रेण तु ङ्याप्प्रातिपदिकादिति सिद्धान्तः । यस्याश्चेति । प्रकृतिविशेषान्नञ्स्नञौ प्राग्भवनात्सर्वेष्वर्थेषु विधीयमानौ त्वतलोर्बाधकौ प्राप्नुत इदि तद्विषये त्वतलौ प्राप्येते । प्राग्भवनादित्यवध्युपादानाच्च नञ्स्नञावपि भावे भवतोऽन्यथा 'प्राग्वते'रित्येव वक्तव्यं स्यात् । वत्यर्थे हि नञ्स्नञ्भ्यां 'पुंव'दिति लिङ्गान्न भाव्यम् ॥ १२० ॥

न नञ्पूर्वा । कस्यायमिति । प्रतिषेध्यस्यानुपादानादनन्तरयोश्च त्वतलोः प्रतिषेधस्याऽनिष्टत्वात्प्रश्नः ।' आचार्यदेशीय आह—त्वतलोरिति । 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वे'ति मन्यते । उत्तरस्य प्रतिषेध इति । अधिकारादस्य सूत्रस्येति भावः । परिगणिताभ्य इति ।

उ०—न सिध्यतीति । प्रतिप्रसवाऽपेक्षया विधित्वस्य गुरुत्वात्, उभयरूपत्वस्यैकवाक्येऽलाभाच्चेति भावः । ननु यत्रोच्येते तत्र विधानं व्यर्थमत आह—भावविशेषेति । अर्थोनिति । अवधिसजातीयत्वस्य क्वाऽप्यभावेन विनिगमनाविरहादिति भावः । अन्यथा व्याचक्षत इति । 'आ त्वाद्येऽर्थास्तत्रे'त्यस्य प्रातिपदिकमात्रादिति शेष' इत्यादिरीत्येत्यर्थः । प्रकृत्यन्तरेणेति । निराकाङ्क्षत्वादित्यर्थः । नन्वेवं भाष्ये नञ्स्नञौ न स्यातामत आह – प्राग्भवनादिति । एतेन तद्वार्त्तिकशेषभूतं वावचनमपि प्रत्याख्यातम् ॥ १२० ॥

न नञ्पू । ननु त्वतलोरुपस्थितत्वात्कस्येति प्रश्नोऽनुपपन्नोऽत आह—प्रतिषेध्यस्येति । ननु प्रतियोगिज्ञानपूर्वकत्वादभावज्ञानस्य कथमुत्तरस्य प्रतिषेधः । अत एवोत्तरप्रतिषेधे 'नेड्वशी'त्यादौ प्रतिषेध्योपादानमत आह—अधिकारादिति । परिगणनस्याऽदर्शनादाह—पृथ्वादीति । ननु पत्यन्तविषयकनिषेधेन

* ५ । १ । ११६ वा० १  † येन विधिस्तदन्तस्य १ । १ । ७२

१३ ‡

प्रतिषिध्यते । यत्र तर्हि तदन्तविधिरस्ति 'पत्यन्तपुरोहितादिभ्यो यक्' [ ५ । १ । १२८ ] इति । यद्येतावत्प्रयोजनं स्यात्तत्रैवायं ब्रूयात् 'पत्यन्ताद्यग्भवति, नञ्पूर्वात्तत्पुरुषान्ने'ति ।

एवं तर्हि ज्ञापयत्याचार्य्यं 'उत्तरो भावप्रत्ययो नञ्पूर्वाद्बहुव्रीहेर्भवती'ति । नेष्यते, त्वतलावेवेष्येते,—अविद्यमानाः पृथवोऽस्य अपृथुः, अपृथोर्भावः—अपृथुत्वम्, अपृथुतेति ॥ एवं तर्हि ज्ञापयत्याचार्यं 'उत्तरो भावप्रत्ययोऽन्यपूर्वात्तत्पुरुषाद्भवतीति । नैवेष्यते, त्वतलावेवेष्येते,—परमः पृथुः परमपृथुः, परमपृथोर्भावः—परमपृथुत्वम्, परमपृथुता ॥ एवं तर्हि ज्ञापयत्याचार्यं 'उत्तरो भावप्रत्ययः सापेक्षाद्भवती'ति । किमेतस्य ज्ञापने प्रयोजनम् ? 'नञ्समासादन्यो भाववचनः स्वरोत्तरपदवृद्ध्यर्थ'मित्युक्तं‡ तदुपपन्नं भवति ।

प्र०—पृथ्वादिप्रभृतिभ्यो गणे सूत्रे च पठिताभ्यः । यत्र तर्हीति । एतच्चोपलक्षणम्—'हायनान्तयुवादिभ्योऽण्' 'इगन्ताच्च लघुपूर्वात्' 'योपधाद्गुरूपोत्तमाद्वु'ञित्येतैः सूत्रैर्नञ्पूर्वात्तत्पुरुषादस्त्येव प्रसङ्गः । यद्येतावदिति । अत्र प्रदेशे प्रयोजनाभावात्पत्यन्तसूत्रस्य परतः प्रतिषेधो विधेयः स एवोत्तरत्रानुवर्त्तिष्यते । एवं तर्हीति । अत्र प्रदेशे प्रतिषेधाधिकारस्योपादानादिमनिजादीनामपि प्रतिषेधो विज्ञायते तत्र तदन्तविध्यभावात्प्रसङ्गाभावात्किं प्रतिषेधेन । कुतश्चासौ नञ्पूर्वाद्बहुव्रीहेरन्यपूर्वाच्च तत्पुरुषात्प्रत्ययविधानं ज्ञापयतीति पूर्वः पक्षः । अनिष्टत्वेन तूत्तरम् । एवं तर्हीति । प्रसङ्गाभावात्प्रतिषेधो न कर्त्तव्यः । कुतस्तु ज्ञापयति यत्राऽपि विषये उत्तरो भावप्रत्ययो न प्राप्नोति तत्रापि भवति न पृथोर्भाव इति । अत्र हि प्रकृत्यर्थस्य नञर्थापेक्षत्वादसामर्थ्यादिमनिज्न प्राप्नोतीति ज्ञापकाद्भवति—अप्रथिमेति । नञ्पूर्वस्य तत्पुरुषस्य प्रत्यासन्ना तदर्थविग्रहवाक्यावस्थेति तद्विषयमेव ज्ञापनमाश्रीयते । त्वतलौ तु कृते नञ्समासे भवतो न तु सापेक्षात्,

उ०—कथं हायनान्तादिविषये सिद्धिरत आह—अत्र प्रदेशे इति । ननु नञ्पूर्वाद्बहुव्रीहिस्तत्सत्ताज्ञापनेऽपि कथमस्य सार्थक्यमत आह—अत्र प्रदेशे प्रतिषेधेति । इमनिजादीनामपीति । तथा च तद्विषये तदन्तविधिर्ज्ञाप्यत इति भावः । सापेक्षाद्भावप्रत्ययोत्पत्तौ ज्ञापकत्वं यथा तथा दर्शयति—प्रसङ्गाभावादिति । नञ्पूर्वं तत्पुरुषात्तदन्तविध्यभावेन प्रसङ्गाभाव इत्यर्थः । यत्राऽपि विषये इति । सापेक्षे इत्यर्थः । अयं भावः,—उत्तरपदार्थे युगपदुभयसम्बन्धविवक्षायामसामर्थ्यादप्राप्तः प्रत्ययोऽनेन ज्ञाप्यते । न च ज्ञापितेऽपि कथं चारितार्थ्यं, 'नञ्पूर्वात्तत्पुरुषान्न किन्तु ततः प्रागेवे'ति सूत्रार्थं इत्याशयात् । ज्ञापयतीत्यस्य च—बोधयतीत्यर्थः । तद्ध्वनयन्नाह—अत्र हीत्यादि । ननु सापेक्षादित्यर्थज्ञापने 'राज्ञः पृथोर्भाव' इत्यर्थेऽपि स्यादत आह—प्रत्यासन्नेति ।

‡ ५ । १ । ११९ वा० १०

एतदपि नाऽस्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति—'सर्वे एते तद्धिताः सापेक्षाद्भवन्ती'ति,—यदयं 'नञो गुणप्रतिषेधे सम्पाद्यर्हहिताऽलमर्थास्तद्धिताः'

प्र०—उत्तरप्रत्ययविषयत्वाज्ज्ञापनस्य । यदयमिति । वत्सेभ्यो न हित इत्यादौ प्रतिषेधापेक्षणा-त्तद्धितानुत्पत्तौ नञः परस्य संपाद्याद्यर्थतद्धितान्तस्यान्तोदात्तविधानमनुपपन्नम् । तत्क्रियमाणं सामा-न्येन 'सर्वस्तद्धितो नञर्थापेक्षाद्भवती'ति ज्ञापयति । तदेवं सूत्रमेतत्प्रत्याख्यातम् । त्वतलभ्यां नञ्स-मास इत्येतदिदानीं विध्यर्थं, न नियमार्थम् । चतुरादिभ्यस्तु नञपेक्षेभ्योऽनभिधानात्ष्यञ्न भवति । कृते तु नञ्समासे ब्राह्मणादेराकृतिगणत्वात्ष्यञि स'त्याचतुर्य'मित्यादि भवति । 'यथातथयथा-पुरयोः पर्यायेणे'त्येतत्सूत्रं विवक्षाभेदेन रूपद्वयसिद्धिं मत्वा भाष्यकारेण प्रत्याख्यास्यते । यदा पूर्वं भावविवक्षा पश्चात्प्रतिषेधविवक्षा तदा 'अयाथातथ्यम्' 'अयाथापुर्य्यम्' इति भवति । पूर्वं तु प्रतिषेधविवक्षायाम् 'आयथातथ्यम्' 'आयथापुर्यम्'इति भवति । न पत्युर्भाव इत्यत्र पतिशब्दः

उ०—भाष्ये —सापेक्षादित्यस्य—नञर्थसापेक्षादित्यर्थः । ननु त्वतलावपि तर्हि सापेक्षात्स्यातां, ततो नञ्समासे स्वरदोषोऽत आह—त्वतलौ त्विति । वत्सेभ्यो न हित इति । अत्र नञमनपेक्ष्य तद्धितं कृत्वा नञ्तत्पुरुषे उत्तरपदार्थसदृशोऽन्यः प्रतीयते, न तु हितत्वादिगुणप्रतिषेध इति न सूत्रोदाहरणाऽसम्भवः । यद्यार्थो तत्प्रतीतिरस्तीत्युच्यते तदा ज्ञापकत्वाऽसम्भवः । पूर्वं नञ्समासे तु तद्धितान्तोत्तरपदाऽभाव इति हितार्थे नञर्थप्रकृत्यर्थयोर्युगपदन्वयं विवक्षित्वा पूर्वं तद्धितं कृत्वा पश्चादवयवद्वारकसामर्थ्याश्रयेण तद्धितान्ते नञ्समासे उदाहरणत्वं वाच्यम्, तत्र च हितार्थस्य सापेक्षत्वाद्वृत्त्यप्राप्तौ ज्ञापकत्वमित्यर्थः । 'वत्सार्थे उभयविवक्षे'ति तु न युक्तं, गुणप्रतिषेधस्याऽप्रतीतेरिति भावः ।इदं न युक्तम्, एवं हि प्रत्ययार्थस्य सापेक्षत्वं, न प्रकृत्यर्थस्येति सापेक्षाद्भवन्तीति ज्ञाप्यार्थाऽसङ्गतिः । किञ्च हितार्थस्य प्रधानस्य प्रतिषेधसापेक्षत्वेऽप्य-प्रधानस्य वत्सस्य न सापेक्षतेति कुतस्तद्धिताऽनुत्पत्तिरिति । 'भवति च प्रधानस्य सापेक्षस्याऽपि समास'-इत्यस्योपमितमितिसूत्रे न्यायसिद्धतायाः कैयटे उक्तत्वेन वृत्त्यन्तरेऽपि प्राप्तेः, न्यायाऽप्राप्तौ मानाऽभावात् । अत एव 'पिपठिषति भोक्तुम्' इत्यादौ सन्सिद्धिः, 'भोक्तु'मित्यस्य पठनकर्मकेच्छायामन्वयात् । 'गुणप्रति-षेधग्रहणं ज्ञापक'मिति तु वक्तुं युक्तं, तस्य हि 'अगार्दभरथिक' इति प्रत्युदाहरणम् । तत्र हि गर्दभरथार्ह-णकर्तृभिन्न इत्यर्थः । आर्थिकगुणप्रतिषेधसत्त्वात्प्रत्युदाहरणत्वाऽसङ्गतिरेव, अन्यथा 'अवत्सीय' इत्यत्रापि हिताद्यर्थे नञर्थवत्सयोर्युगपदन्वयविवक्षायामपि हितस्य धर्मित्वेन तत्र नञर्थाऽत्यन्ताऽभावाऽन्वये हिताऽ-भावः प्रतीयते, न गुणप्रतिषेधः । भेदार्थकत्वं तु न वाच्यवृत्त्या, अपि त्वार्थ्यैवेति तस्याऽप्युदाहरणत्वं न स्यात् । 'वत्सहितत्वाऽभाववा'नित्यर्थस्तु न, प्रवृत्तिनिमित्तस्याऽन्यत्र विशेषणतायास्तदाश्रयस्याऽन्यत्र विशेष्यतायाश्चाऽ-दृष्टचरत्वादत्यन्तमव्युत्पन्नत्वाच्च । सूत्रन्तु गुणप्रतिषेधगम्ये इत्येवं सुयोजमिति न तद्बलादीदृशव्युत्पत्त्यन्तरकल्प-नाऽवकाशः । तस्माद्गर्दभरथेन युगपदुभयविवक्षायां परत्वात्तद्धितोत्तरं समासे प्रत्युदाहरणत्वं वाच्यं, तदा हि 'गर्दभरथभिन्नार्हणकर्त्ते'त्यर्थं इति गुणप्रतिषेधाऽभावः । तत्र परत्वात्पूर्वं तद्धिते कृतेऽवयवद्वारकसामर्थ्यमाश्रित्य तद्धितान्तेनैव समासः, न तु तदवयवेन, अस्मादेव प्रतिषेधाज्ज्ञापकात् । अन्यथा तद्धितान्तस्योत्तरपदत्वाऽ-भावाद्विध्यप्राप्तौ निषेधवैयर्थ्यं स्पष्टमेवेति दिक् । प्रत्याख्यातमिति । अत्र प्रदेशे प्रत्याख्यातमित्यर्थः । 'पत्यन्ते'-त्यस्याऽग्रे तु 'न नञ्पूर्वा'दिति कर्त्तव्यमेवेति बोध्यम् । इदानीमिति । सापेक्षादपि तद्धित इति ज्ञापने

[ ६ । २ । १५५ ] इत्याह ॥ १२१ ॥

## पृथ्वादिभ्य इमनिज्वा ॥ ५ । १ । १२२ ॥

वावचनं किमर्थम् ? वाक्यमपि यथा स्यात् । नैतदस्ति प्रयोजनम् । प्रकृता महाविभाषा × तया वाक्यमपि भविष्यति ॥ इदं तर्हि प्रयोजनं—त्वतलावपि यथा

प्र०—केवलं प्रातिपदिकं न पत्यन्तमिति यगभावे 'त्वतल्भ्यां नञ्समास' इति वचनान्नञ्समासे कृते त्वतलौ भवतः । न पटोर्भावो, न मनुष्यस्य भावो, न द्विहायनस्य भाव इत्यादौ पूर्वोक्तज्ञापकान्नञर्थपित्तत्वेऽपि पूर्वं प्रत्ययः पश्चान्नञ्समासः—'अपाटवम्' 'अमानुष्यकम्' 'अद्वैहायनम्' इति । अशुचिशब्दात्तु तत्पुरुषादिगन्तादितीष्यत एवाण् 'आशौचम्' 'अशौच'मिति । 'नञः शुचीश्वरे'ति पूर्वपदस्य वा वृद्धिरुत्तरपदस्य नित्यम् । न शुक्लस्य भाव इत्यादौ सापेक्षात्ष्यञुत्पत्तौ चाऽशौक्ल्यमित्यादि भवति । तदेवं सूत्रेऽस्मिन्प्रत्याख्याते लक्ष्यदर्शनवशात्कचिद्भावनिषेधयोर्युगपद्विवक्षायां ज्ञापकान्नञर्थपित्तत्वेऽपि पूर्वं यथाप्राप्तं भावप्रत्ययः पश्चान्नञ्समासः । त्वतलौ तु कृते नञ्समासे । कचित्पूर्वं भावविवक्षा कचित्पूर्वं निषेधविवक्षा ॥ १२१ ॥

पृथ्वादि । वावचनमिति । वक्ष्यमाणोऽभिप्रायः । आचार्यदेशीयः परिहरति—वाक्यमपीति । अरसमावेशार्थमिति । यत्रोत्सर्गापवादौ विभाषा तत्रापवादेन मुक्ते उत्सर्गो न प्रवर्त्तते,

उ०—इत्यर्थः । ननु सापेक्षादपि तद्धितोत्पत्तौ चतुरादिभ्यो युगपदुभयविवक्षायाम्परत्वात्प्रत्ययेऽचातुर्यमिति स्यात्, सूत्ररीत्या तु आचतुर्यमितीष्यतेऽत आह—चतुरादिभ्य इति । न भवतीति । 'ष्य'ञिति शेषः । त्वतलौ तु भवत एव, 'त्वतल्भ्या'मिति वचनात् । नन्वेवं कृतनञ्समासात्ष्यञपि न स्यादत आह—कृते त्विति । नञ्समासात्ष्यञिष्यत इत्यत्र भाष्यं प्रमाणत्वेनोपन्यस्यति—यथातथेति । 'अचतुरे'त्यादिसूत्रशेषोऽप्यत्र गमकः । स च ब्राह्मणादेराकृतिगणत्वात्प्रत्याख्यातव्य इत्यन्यत् । अन्यथाऽचतुरेत्यादिसूत्रशेषे कृतेऽपि ष्यञ्विधौ तदन्तविध्यभावात्तदप्राप्तिरेव स्यात् ।

न पत्यन्तमिति । 'व्यपदेशिवद्भावोऽप्रातिपदिकेने'ति निषेधादिति भावः । त्वतलौ भवत इति । नञ्समासे कृते यक्तु न, 'न नञ्पूर्वा'दिति निषेधात् । तत्र तत्कर्त्तव्यताया उक्तेः । अस्माकैयदेतत्प्रदेशे प्रत्याख्याने एव पूर्वकैयटतात्पर्यं न सर्वथा प्रत्याख्याने इति बोध्यम् । पूर्वं प्रत्यय इति । कृतनञ्समासात्तु न, पूर्वोक्तयुक्तेः । बहुव्रीहेस्तु भवत्येव । अशुचिशब्दादिष्यत इत्यत्र प्रमाणमाह—नञ इति । आशौचशब्दाद्भावप्रतीतेरिति भाव ।

तदेवमिति । तदेवमत्र प्रदेशे प्रत्याख्याते इत्यर्थः । 'पूर्वं निषेधविवक्षे'त्यनन्तरम्—'एवं व्यवस्थामाश्रित्य सर्वथा सूत्रं प्रत्याख्येय'मिति शेषः । लक्ष्यदर्शनवशादिति । एवञ्च 'पत्यन्ते'त्युत्तरमपीदं न कार्यमिति भावः । कृते नञ्समासे इति । 'भवत' इति शेषः । कचित्पूर्वमिति । 'लक्ष्यदर्शनवशा'दित्यत्राप्यपेक्ष्यते । पत्यन्तादिविषये च पूर्वं भावविवक्षैवेति न नञ्तत्पुरुषात्तेषाम्प्रसङ्ग इति न तत्राऽपि प्रदेशे 'न नञ्पूर्वात्तत्पुरुषा'दिति वक्तव्यमिति भावः ॥ १२१ ॥

× समर्थानां प्रथमाद्वा ४ । १ । ८२

स्याताम् । एतदपि नास्ति प्रयोजनम् । 'आ च त्वात्' [ ५ । १ । १२० ] इत्येतस्माद्यत्नात्त्वतलावपि भविष्यतः ॥ अत उत्तरं पठति—

**पृथ्वादिभ्यो वावचनमणसमावेशार्थम् ॥ १ ॥**

पृथ्वादिभ्यो वावचनं क्रियतेऽणसमावेशो यथा स्यात्+ पार्थवम् प्रथिमा ॥ १२२ ॥

## गुणवचनब्राह्मणादिभ्यः कर्मणि च ॥ ५ । १ । १२४ ॥

**ब्राह्मणादिषु चातुर्वर्ण्यादीनामुपसङ्ख्यानम् ॥ १ ॥**

ब्राह्मणादिषु चातुर्वर्ण्यादीनामुपसङ्ख्यानं कर्त्तव्यम् । चातुर्वर्ण्यम् चातुर्वैद्यम् चातुराश्रम्यम् ।

**अर्हतो नुम् च ॥ २ ॥**

अर्हतो नुम् च ष्यञ्च वक्तव्यः । अर्हतो भावः आर्हन्त्यम् आर्हन्ती* ॥१२४॥

## स्तेनाद्यन्नलोपश्च ॥ ५ । १ । १२५ ॥

किमिदं नलोपे वर्णग्रहणमाहोस्वित्सङ्घातग्रहणम् ? किं चातः ? यदि वर्णग्रहणं—स्तेयम् नलोपे कृतेऽयादेशः प्राप्नोति† । अथ सङ्घातग्रहणम्, अन्त्यस्य

प्र०—वाक्यानुज्ञानार्थत्वाद्विभाषायाः । लिङ्गं च 'पारे मध्ये षष्ठ्या वा' 'पीलाया वे'त्यादिषु विकल्पवचनमस्यार्थस्येत्यण्समावेशार्थमिह वावचनम् ॥ १२२ ॥

गुणव । चातुर्वर्ण्यादीनामिति । प्रत्ययान्तोच्चारणं भावकर्मसम्बन्धनिवृत्त्यर्थमिति स्वार्थ एव ष्यञ्भवति—चत्वारो वर्णाश्चातुर्वर्ण्यम् । चतुर्वेदमेव चातुर्वैद्यम् । अथवा चतस्रो विद्या अधीते । 'विद्यालक्षणकल्पसूत्रान्तादकल्पादे'रिति ठकः 'सर्वसादेर्द्विगोश्च ल'इति लुक् । चतुर्विद्य एव चातुर्वैद्यम् । अनुशतिकादेराकृतिगणत्वादुभयपदवृद्धिः । अर्हतो नुम् चेति । 'अर्हः प्रशंसाया'-मिति शत्रन्तोऽर्हच्छब्दः पूजाद्यर्थाभिधायी । आर्हन्तीति । षित्करणात्स्त्रियामपि ष्यञन्तः प्रयोगः । तथा चौचिती मैत्रीत्यादि प्रयुज्यते ॥ १२४ ॥

स्तेना । अयादेशः प्राप्नोतीति । 'यस्ये'त्यकारलोपस्य पूर्वविधौ स्थानिवद्भावात् । अथेति । 'नानर्थकेऽलोन्त्यविधि'रित्येषा परिभाषा प्रयोजनाभावान्नादृता । आरम्भसामर्थ्या-

उ०—गुणवचन । ननु'चतुर्वर्णादिभ्य' इत्येव वक्तुमुचितमत आह—प्रत्ययान्ताविति ॥ १२४ ॥

+ इगन्ताच्च लघुपूर्वात् ५ । १ । १३१　　* षिद्गौरादिभ्यश्च ४ । १ । ४१

† यस्येति च ६ । ४ । १४८; अचः परस्मिन् पूर्वविधौ १ । १ । ५७; एचोऽयवायावः ६ । १ । ७८

लोपः कस्मान्न भवति ? सिद्धोऽन्त्यस्य लोपो 'यस्ये'त्येव‡ तत्रारम्भसामर्थ्यात्सर्वस्य भविष्यति ॥ १२५ ॥

## हायनान्तयुवादिभ्योऽण् ॥ ५ । १ । १३० ॥

### अण्प्रकरणे श्रोत्रियस्य घलोपश्च ॥ १ ॥

अण्प्रकरणे श्रोत्रियस्योपसङ्ख्यानं कर्त्तव्यं घलोपश्च वक्तव्यः । श्रोत्रियस्य भावः श्रौत्रम् ॥ १३० ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये पञ्चमस्याध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ॥ पादश्च समाप्तः ॥

प्र०—दिति । अलोऽन्त्यस्येत्यनुसंहारो बाध्यत इत्यर्थः ॥ १२५ ॥

हायनान्त । घलोपश्चेति । यदा 'छन्दसः श्रोत्रभावो घंश्च प्रत्यय' इति पक्षस्तदा घस्य लोपो यदा तु 'वाक्यार्थे पदवचन'मिति दर्शनं तदा घशब्देन 'इये'ति रूपं लक्ष्यते । कचित्तु 'यलोपश्चे'ति पाठः ॥ १३० ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे पञ्चमस्याध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ॥ पादश्च प्रथमः समाप्तः ॥

उ०—हायनान्त यु । क्वचित्त्विति । तत्र च 'ये'ति सङ्घातग्रहणं, पश्चादिकारस्य 'यस्ये'ति लोपः ॥ १३० ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते पञ्चमाध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् । पादश्च समाप्तः ।

‡ यस्येति च ६ । ४ । १४८

## विभाषा तिलमाषोमाभङ्गाणुभ्यः ॥ ५ । २ । ४ ॥

### तिलादिभ्यः खञ्च ॥ १ ॥

तिलादिभ्यः खञ्चेति वक्तव्यम् । तिल्यम् तैलीनम् ।

किमर्थमिदमुच्यते न यता मुक्ते 'धान्यानां भवने क्षेत्रे खञ्' [ ५ । २ । १ ] इत्येव सिद्धम् ? न सिध्यति । किं कारणम् ?

### उमाभङ्गयोरधान्यत्वात् ॥ २ ॥

'धान्यानां भवने क्षेत्रे ख'ञित्युच्यते न चोमाभङ्गे धान्ये । चमेषु* यत्पठ्यते तद्धान्यं न चैते तत्र पठ्येते ।

तत्तर्हि खञ्ग्रहणं कर्त्तव्यम् ? न कर्त्तव्यम् । प्रकृतमनुवर्त्तते । क्व प्रकृतम् ? 'धान्यानां भवने क्षेत्रे ख'ञिति । यदि तदनुवर्त्तते 'व्रीहिशाल्योर्ढक्' [ २ ] 'यवयवकषष्टिकाद्यत्' [ ३ ] इति 'खञ्चे'ति खञपि प्राप्नोति । सम्बन्धमनुवर्त्तिष्यते ।

प्र०—विभाषा । न यता मुक्त इति । महाविभाषया वाक्ये सिद्धे विभाषाग्रहणमुत्सर्गप्राप्त्यर्थमेवेति भावः । उमाभङ्गयोरिति । निमित्ताभावात्ताभ्यां खञोऽप्राप्तिः । विभाषाग्रहणं तु तिलमाषाणुभ्य एव खञः प्राप्त्यर्थं स्यात् । चमेष्विति । 'यवाश्च मे माषाश्च मे' इति चमेशब्दस्य पुनः पुनरुच्चारणाच्चमेशब्देन तद्वन्तोऽनुवाका उच्यन्ते । अथवा 'चमे'शब्दस्य 'च'मिति यन्मकारान्तं तदनुकरणं—'च'मिति । आगन्तुना चाऽकारेण चमशब्दो भवति । चमशब्दो विद्यते येष्वनुवाकेषु ते चमाः । 'अध्यायानुवाकयोर्लुग्'िति च्छस्य लुक् । सम्बन्धमनुवर्त्तिष्यत इति ।

उ०—विभाषा ति । खञि प्राप्ते वचनम् । यत्रोत्सर्गोऽपवादमिति न्यायात्खञप्राप्तेराह—महाविभाषयेति । उमा—अतसी । भङ्गा—प्रसिद्धा । निमित्ताभावादिति । धान्यत्वाऽभावादित्यर्थः । ननु 'च मा' इति न किञ्चित्प्रसिद्धं, चकारेषु च धान्यानां पाठोऽसम्भवीत्यत आह—यवाश्च मे इति । ननु 'च मे' शब्देन तद्वदनुवाकोक्तौ मत्वर्थप्रत्ययं विनाऽसाधुत्वापत्तिरत आह—अथवेति । एकारान्ताऽनुकरणादेव छलुकि सिद्धे, आगन्तुकाऽकारपर्यन्तधावनं किमर्थमिति चिन्त्यम् । सम्बन्धस्याऽप्रकृतत्वात्तदनुवृत्तिः कथमत आह—धान्येति । भावे घञिति भावः । अनुरोत्स्यत इति । खञत्र कर्त्ता । धातूनामनेकार्थत्वादनुपूर्वक-

* "चमेशब्दस्य पुनः पुनरुच्चारणाच्चमे शब्देन तद्वन्तोऽनुवाका उच्यन्ते । अथवा ...... चमशब्दो विद्यते येष्वनुवाकेषु ते चमाः ।" इति कैयटः । ते च यजुर्वेदसंहितायामष्टादशाऽध्याये द्रष्टव्याः ।

"व्रीहयश्च मे यवाश्च मे माषाश्च मे तिलाश्च मे मुद्गाश्च मे खल्वाश्च मे प्रियङ्गवश्च मेऽणवश्च मे श्यामाकाश्च मे नीवाराश्च मे गोधूमाश्च मे मसूराश्च मे यज्ञेन कल्पन्ताम्" ॥ १२ ॥

'धान्यानां भवने क्षेत्रे खञ्'। व्रीहिशाल्योर्ढग्भवति 'धान्यानां भवने क्षेत्रे खञ्'। विभाषा तिलमाषोमाभङ्गाणुभ्यः' भवति। विभाषा तिलमाषो-यवयवकषष्टिकाद्यद्भवति 'धान्यानां भवने क्षेत्रे खञ्' भवति। विभाषा तिलमाषो-माभङ्गाणुभ्यः'। 'भवने क्षेत्रे खञ्'ग्रहणमनुवर्त्तते 'धान्याना'मिति निवृत्तम्।

अथवा मण्डूकप्लुतयोऽधिकाराः यथा मण्डूका उत्प्लुत्योत्प्लुत्य गच्छन्ति तद्वद-धिकाराः।

अथवाऽन्यवचनाच्चकाराऽकरणात्प्रकृतस्यापवादो विज्ञायते यथोत्सर्गेण प्रसक्त-स्यापवादः। अन्यस्य प्रत्ययस्य वचनाच्चकारस्य चाऽनुकर्षणार्थस्याऽकरणात्प्रकृतस्य खञो ढग्यतौ बाधकौ भविष्यतो यथोत्सर्गेण प्रसक्तस्यापवादो बाधको भवति।

अथवैतज्ज्ञापयत्यनुवर्त्तन्ते च नाम विधयो न चानुवर्त्तनादेव भवन्ति। किं तर्हि? यत्नाद्भवन्ति॥ अथवा यता युक्ते 'धान्यानां भवने क्षेत्रे ख'ञित्येव सिद्धम्।

प्र०—धान्यग्रहणेन सम्बन्धमनुरोत्स्यत इत्यर्थः। अथवा सम्बध्यत इति सम्बन्धः। धान्यग्रहणसम्बद्धम-नुवर्त्तिष्यते इत्यर्थः। ततो धान्यसामान्यसम्बद्धं खञ्ग्रहणं व्रीह्यादिभिर्वाक्यविशेषैर्न सम्बध्यते। भवने क्षेत्र इत्येतत्तु प्रत्ययेनाऽभिधायकेन सम्बध्यते। अथवेति। यत्रैवार्थित्वं तत्रैवाधिकाराः सम्बध्यन्ते नान्यत्रेत्यर्थः। यथोत्सर्गेणेति। उत्सर्गस्याऽन्यत्र चरितार्थत्वादपवादविषये प्रवृत्तिः सन्दिग्धेत्य-सन्दिग्धेनापवादेनासौ बाध्यते। एवं खञ उत्तरार्थायामनुवृत्तौ नान्तरीयकोपस्थानसंभवात्संदिग्ध-प्रवृत्तित्वादसन्दिग्धप्रवृत्तिभ्यां ढग्यद्भ्यां बाधः। 'धान्याना'मित्यनेन प्राप्तस्य खञो ढग्यताव-पवादौ न तु तत्रानुवृत्त्या संनिहितस्येति साधर्म्यवैधर्म्यसंभवाद्यथोत्सर्गेण प्रसक्तस्येत्युक्तम्। अथवेति। विभाषाग्रहणमेव ज्ञापयति—'अनुवर्त्तमाना अप्यधिकारा यत्र यत्र यत्नो विभाषा-ग्रहणादिकस्तु तत्रैव भवन्ति नान्यत्रे'ति। अन्यथा विभाषाग्रहणमनर्थकं स्यादनुवर्तनादेव खञः सिद्धत्वात्। धिनोतेरिति। योगरूढिरियमुमाभङ्गयोरपीति भावः। चमकेषु त्वधान्यान्यपि

उ०—वृत्तेरनुरोधोऽप्यर्थ इति भावः। अथवेति। कर्मणि घञ्। एवञ्चाऽनुवर्त्तिष्यत इति यथाश्रुतमेवेति भावः। व्रीह्यादिभिरिति। तद्धितैरित्यर्थः। प्रत्ययेनेति। तस्यार्थाकाङ्क्षित्वादिति भावः। अतएव 'विभाषे'ति सूत्रे'धान्याना'मित्यस्यैव निवृत्तिर्भाष्ये उक्ता। मण्डूकस्य चेतनत्वेन तथा गमनसम्भवेऽपि शब्दस्य कथं तथा गमनमत आह—यत्रैवेति। अर्थित्वम्—आकाङ्क्षा। न तु नदीस्रोतोन्यायेनाऽधिकार इति भावः।

अपवादेनाऽसाविति। यथा केन अणिति भावः। नन्वत्राप्युत्सर्गाऽपवादभावसत्त्वाद् दृष्टान्तदार्ष्टा-न्तिकभावोऽनुपपन्नोऽत आह—धान्यानामित्यनेनेति। सन्दिग्धप्रवृत्तिकत्वात्साधर्म्यं बोध्यम्। अनुवृत्त्या सन्निहितस्याऽनुवृत्तिसामर्थ्येन बाधाऽसम्भवाद्वैधर्म्यं बोध्यम्।

नन्वतिप्रसङ्गोऽत आह—योगरूढिरिति। श्रूयते च 'धान्यमसि धिनुहि देवा'निति।

ननु चोक्तं 'न सिध्यति । किं कारणम् ? 'उमाभङ्गयोरधान्यत्वा'दिति । नैष दोषः । धिनोतेर्धान्यम्, एते चापि धिनुतः ॥ अथवा शणसप्तदशानि धान्यानि ॥ ४ ॥

## यथामुखसंमुखस्य दर्शनः खः ॥ ५ । २ । ६ ॥

संमुखेति किं निपात्यते ?

**संमुखेति समस्याऽन्तलोपः ॥ १ ॥**

संमुखेति समस्याऽन्तलोपो निपात्यते । सममुखस्य दर्शनः संमुखीनः ॥६॥

## अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु ॥ ५ । २ । ६ ॥

'अयानयं नेय'इत्युच्यते, तत्र न ज्ञायते—कोऽयः कोऽनय इति ? अयः—प्रदक्षिणम् । अनयः—प्रसव्यम् । प्रदक्षिणप्रसव्यगामिनां शाराणां यस्मिन्परैः

प्र०—कानिचित्पठ्यन्ते धान्यान्यपि कानिचिन्न पठ्यन्ते । न हि तद्धान्यपरिगणनार्थमिति तत्राऽपाठादुमाभङ्गयोरधान्यत्वं न भवति । शणसप्तदशानीति । धान्यपरिगणनार्था स्मृतिरियम् ॥४॥

यथामुख । समस्यान्तलोप इति । समं मुखं यत्राऽऽदर्शादौ प्रतिबिम्बाश्रये सति दृश्यते स संमुखीन इति प्रयोगदर्शनान्निपातनमाश्रितम् । संशब्दस्य निपातस्यार्थसंगत्यभावादनाश्रयणम् । प्रत्ययसंनियोगेनाऽकारलोपो निपात्यमानस्तदभावे न भवति । संमुखीनादर्शादिसादृश्याचान्योऽप्यभिमुखावस्थानः संमुखीन उच्यत इत्याहुः ॥ ६ ॥

अनुपद । तत्र न ज्ञायत इति । अयनमय इति गमनमात्रमयशब्देनोच्यते । तत्र प्रतिषेधस्त्वनयशब्देनेति विरुद्धार्थाभिधानादयानयं नेय इत्यसमन्वयाशङ्कया प्रश्नः । अयः प्रदक्षिणमिति । एकद्यूतकारापेक्षया शारस्य प्रदक्षिणं गमनमयो, द्वितीयापेक्षया प्रसव्यं वामापर-

उ०—ननु धान्यपरिगणनार्थंचमकाऽनुवाकविरोधोऽत आह–अधान्यान्यपीति । अश्मादीनीत्यर्थः । धान्यान्यपीति । कोद्रवादीनि । भाष्ये–धिनुत इति । प्रीणीत इत्यर्थः । स्मृतिरिति । उमाभङ्गयोरपि शणविशेषत्वाद्धान्यत्वमिति भावः ॥ ४ ॥

यथामुखस । ननु समुपसर्गपूर्वात्खेनैव सिद्धे निपातनं व्यर्थमत आह—समं मुखमिति । सर्वं मुखमित्यर्थः । न चाऽत्रार्थे 'सम'मिति निपातस्य सङ्गतिरस्तीति भावः । दर्शन इत्यधिकरणे ल्युट् । न भवतीति । अत एव भाष्ये 'सममुखस्य दर्शन' इत्येव विग्रहो दर्शितः । तेन 'संमुखस्य दर्शन' इति वृत्तिकारोक्तमयुक्तमिति भावः । नन्वेवं 'संयुगे संमुखीनं त'मित्यादि प्रयोगाऽसङ्गतिरत आह—संमुखीनादर्शादीति ॥ ६ ॥

अनुपदसर्वान्ना । अयाऽनययोर्घटाऽघटयोरिवाऽर्थः प्रसिद्ध एवेत्यत आह—अयनमिति । एवञ्च प्रकृतान्वययोग्योऽर्थो न ज्ञायत इत्यर्थ इति भावः । ननु प्रदक्षिणप्रसव्यगमनमेकस्य कथमत आह—एकद्यूतकारेति । ननु प्रदक्षिणप्रसव्यगमनमात्रे शब्दाल्लभ्येते, 'शारस्ये'ति विशेषलाभः कथमत आह–रूढीति । उच्यत इति । अयाऽनयशब्दाभ्यामित्यर्थः ।

पदानामसमावेशः सोऽयानयः । अयानयं नेयोऽयानयीनः शारः ॥ ६ ॥

परोवरपरम्परपुत्रपौत्रमनुभवति ॥ ५ । २ । १० ॥

परोवरेति किं निपात्यते ?

परोवरेति परस्योत्त्ववचनम् ॥ १ ॥

परोवरेति परस्यौत्त्वं निपात्यते । यद्येवं 'परस्यौत्त्ववचन'मिति प्राप्नोति । शक-

---

प्र०—पर्यायं गमनमनयो रूढिवशादुच्यते । परैरिति । द्वितीयद्यूतकारसम्बन्धिभिःशारैः पदानां स्थानानां गृहापरपर्यायाणामनाक्रमणमनध्यासनमित्यर्थः ।

'ससहायस्य शारस्य परैर्नाक्रम्यते पदम् ।

असहायस्तु शारेण परकीयेण बाध्यते' ॥

इति द्यूतव्यवहारः । अयसहितोऽनय इत्युत्तरपदलोपी समासस्तत्पुरुषः । अथवा अयश्चासावनयोऽयानय इत्येकदेशद्वारेण समुदायस्य कृताकृतादिवद्व्यपदेशात्समानाधिकरणसमासः, समाहारद्वन्द्वो वा । अयानयमिति । नयतेर्द्विकर्मकत्वादयानयमित्यप्रधानेऽपि कर्मणि द्वितीया, प्रधाने तु कृत्यप्रत्ययः । तत्र केचित्—फलकशिरस्थस्यैव स्वशारवर्गमानेयस्याऽयानयीनमित्यभिधानमिच्छन्ति । यस्तु शार एकपार्श्वे एव संचरति तत्र न भवति प्रत्ययो, यो हि शारः पार्श्वात्पार्श्वान्तरमानीयते स एवायानयं नीयते । अन्यस्त्वयमेव नीयतेऽनयमेव वा ॥ ९ ॥

परोव । परस्योत्त्ववचनमिति । परशब्दस्यान्तस्योकारो निपात्यत इत्यर्थः । तत 'एङः पदान्तादती'ति पूर्वैकादेशः । शकन्ध्वादिषु परन्यायेनेति । 'शकन्ध्वादिषु पररूपं वक्तव्य'मिति पर-

---

उ०—भाष्ये–प्रदक्षिणेत्यादि । अनेन गतिविशेषवाच्यया‌ऽनयशब्दाभ्यां सव्याऽपसव्यगामि–शाराणां तादृशगत्या प्राप्यं स्थलविशेषं शारयुगादिस्थानं लक्षणयोच्यते । ये हि परशारभिया युगमादिस्थानं प्रापणीयास्ते–अयानयीना इत्युच्यन्ते इति भावः । पदानां—स्थानविशेषाणां मध्ये यस्मिन्स्थानविशेषे परैर्द्वितीयद्यूतकारसम्बन्धिभिः शारैः,—अपरन्येमिद्यूतकाराः परस्परमिति शारास्तैरसमावेशोऽनतिक्रमणमित्यक्षरार्थः । तं स्थलविशेषं दर्शयति—ससहायस्येति । अयाऽनययोर्भेदात्कर्मधारयाऽनुपपत्तेराह—उत्तरपदलोपीति । समुदायस्य कृताऽकृतादिवदिति । यथा तत्रैकदेशद्वारा समुदायस्य तत्त्वं, तथाऽत्र गतिसमुदायस्य किञ्चिदपेक्षया सव्यत्वमन्याऽपेक्षयाऽपसव्यत्वं चेति कर्मधारय इति भावः । समाहारद्वन्द्वो वेति । इदं चिन्त्यं 'सोऽयाऽनय' इति भाष्ये पुंल्लिङ्गनिर्देशात् ।

फलकशिर इति । आरम्भकाले यत्र स्थाने शाराः स्थाप्यन्ते तच्छिरः, तत्र स्थितः शारः परपार्श्वादात्मपार्श्वोऽन्तरमानीयते तत्रैवाऽयं प्रयोग इष्यते इति भावः । अन्यस्त्वयमेवेति । अस्योपपत्तिश्चिन्त्या महद्भिः ॥ ६ ॥

न्धुन्यायेन* निर्देशः । अथवा नैवं विज्ञायते—परस्यौत्त्वं निपात्यत इति । कथं तर्हि ? परस्य शब्दरूपस्यादेरुत्वं निपात्यत इति । परांश्चावरांश्चानुभवति परोवरीणः ।

अथ परम्परेति किं निपात्यते ?

**परपरतराणां परम्परभावः ॥ २ ॥**

परपरतराणां परम्परभावो निपात्यते । परांश्च परतरांश्चानुभवति परम्परीणः ॥ १० ॥

## समां समां विजायते ॥ ५ । २ । १२ ॥

इह समांसमीना गौः, 'सुपो धातुप्रातिपदिकयोः' [ २ । ४ । ७१ ] इति सुब्लुक् प्राप्नोति । 'समां समां विजायत इति यलोपवचनादलुग्विज्ञानम्' । 'समांसमां विजायत' इति यलोपवचनादलुग्विज्ञानं भविष्यति । यदयं यलोपं शास्ति तज्ज्ञापयत्याचार्यो 'नात्र लुग्भवती'ति ।

**समां समां विजायत इति यलोपवचनादलुग्विज्ञानमिति चेदुत्तरपदस्य लुग्वचनम् ॥ १ ॥**

समां समां विजायत इति यलोपवचनादलुग्विज्ञानमिति चेदुत्तरपदस्य लुग्वक्तव्यः ।

प्र०—रूपेण निर्देशः । परस्येति । अवरशब्दस्यादेरकारस्येत्यर्थः । तत्राद्गुणः । तत्र केचित्सामान्येन निपातनमिच्छन्ति । तेन खप्रत्ययाभावेऽपि प्रयोग उपपन्नो भवति—'पारोवर्यवि'दिति 'पारम्पर्यमविच्छिन्न'मिति च । अन्ये तु परंपराशब्दमव्युत्पन्नमाचक्षते तस्मात्स्वार्थे ष्यञि पारंपर्यमिति भवति । 'पारोवर्यवि'दित्यस्यासाधुत्वमाहुः प्रत्ययसंनियोगेनैव निपातनस्य युक्तत्वं मन्यमानाः ॥ १० ॥

समांसमाम् । विजायते—प्रसूयत इत्यर्थः । तत्र समायां समायामित्यस्मात्पदसमुदायात् प्रत्ययो वचनाद्भवति । तद्धितान्तत्वात्प्रातिपदिकत्वे सति तदवयवस्योत्तरपदवत्पूर्वपदेऽपि सुपो लुक् प्राप्तो यलोपवचनान्न भवति । याटः सुब्भक्तत्वात्सुब्लुकैव यलोने सिद्धे सूत्रे यलोपवचनं नियमार्थं—यकारस्यैव लोपो भवति न तु सर्वस्य प्रत्ययस्येत्यर्थः । उत्तरपदस्य लुग्वचनमिति । यलोपनिपातनात् पूर्वपदवदुत्तरपदेऽपि लुङ् न प्राप्नोतीति भावः ।

उ०—परोवरप । 'उत्वं परशब्दान्तस्ये'त्यर्थे 'परोवरे'त्यसिद्धेराह—ओकार इति । मन्यमाना इति । अत एव 'परांश्च अवरांश्च' 'परांश्च परतरांश्चे'त्यनादेशेनैव विग्रहो दर्शितो भाष्ये । 'पारोवर्यवि'दित्येष निरुक्ते[1] दृश्यते प्रयोगः ॥ १० ॥

समांसमां । ननु सकृदुत्पन्नस्य न पुनरुत्पत्तिरत आह—प्रसूयत इति । प्रत्ययाऽर्थोऽसम् । ननु समुदायस्याऽसुबन्तत्वात्कथं प्रत्ययोऽत आह—पदसमुदायादिति । वीप्साद्विर्वचनमित्यन्ये । ज्ञापकत्व-

* ६ । १ । ६४ वा० ४ पररूपेणेत्यर्थः । १—निरुक्ते १ । ५ । १६

सिद्धन्तु पूर्वपदस्य यलोपवचनात् ॥ २ ॥

सिद्धमेतत् । कथम् ? पूर्वपदस्य यलोपो वक्तव्यः ।

अनुत्पत्तावुत्तरपदस्य च वावचनम् ॥ ३ ॥

अनुत्पत्तौ पूर्वपदस्योत्तरपदस्य च यलोपो वा वक्तव्यः । समां समां विजायते । समायां समायां विजायत इति ॥ १२ ॥

आगवीनः ५ । २ । १४ ॥

आगवीन इति किं निपात्यते ?

गोराङ्पूर्वादाऽऽतस्य गोः प्रतिदानात्कारिणि खः ॥ १ ॥

गोराङ्पूर्वादाऽऽतस्य गोः प्रतिदानात्कारिणि खो निपात्यते । आ तस्य गोः प्रतिदानात्कर्मकारी आगवीनः कर्मकरः ॥ १४ ॥

प्र०—सिद्धं त्विति । तेन पूर्वपद एव यलोपनिपातनादामः श्रवणं भवति । उत्तरपदे तु सुब्लुग्भवत्येवेत्यर्थः । अनुत्पत्ताविति । वाक्ये पूर्वोत्तरपदयोर्वा यलोपो वक्तव्यः । तेन द्वैरूप्यं भवति ॥ १२ ॥

आगवीनः । किं निपात्यत इति । का प्रकृतिः कः प्रत्ययः कः प्रत्ययार्थ इति प्रश्नः । गोराङ्पूर्वादिति । यो गवा भृत आ गोः प्रत्यर्पणात् कर्म करोति स आगवीन उच्यते । तत्र वृत्तिविषये गोशब्दो गोप्रत्यर्पणे वर्त्तते । तत्र आङ्गोशब्दयो'राङ्मर्यादाभिविध्यो'रित्यव्ययीभावे ह्रस्वत्वे च कृते खो निपात्यते ॥ १४ ॥

उ०—सुपपादयति—तद्धितान्तत्वादिति । तदवयवस्य सुप इत्यन्वयः । भाष्ये—सिद्धन्तु पूर्वपदस्येति—प्रत्ययसन्नियोगशिष्टम् । नन्वेवं सौत्रनिर्देशाऽसङ्गतिरत आह—भाष्ये—अनुत्पत्ताविति । तद्व्याचष्टे—वाक्य इति । भाष्ये—समायामिति—अधिकरणत्वविवक्षायां सप्तमी ॥ १२ ॥

आगवीनः । नन्वस्यैव शब्दस्य निपात्यत्वात् प्रश्नोऽनुपपन्नोऽत आह—केत्यादि । भाष्ये—गोरित्यस्य गोशब्दादित्यर्थः । प्रतिदानं—प्रत्यर्पणम् । कारिणीत्यावश्यके णिनिः । 'कर्मणि' इत्यादिः । तस्येति—'कारिणी'त्यनेनाऽन्वेति । तस्य—गोस्वामिनः कर्मकारिणीत्यर्थः । खोनिपात्यत इति । खे—ओर्गुणः ॥ १४ ॥

## शालीनकौपीने अधृष्टाकार्ययोः ॥ ५ । २ । २० ॥

किं यः शालायामधृष्टः स शालीनः, कूपे वा यदकार्यं तत्कौपीनम् ? नेत्याह । उत्तरपदलोपोऽत्र द्रष्टव्यः । शालाप्रवेशनमर्हत्यधृष्टः स शालीनः । कूपाऽवतरण-मर्हत्यकार्यं तत्कौपीनम् ॥ २० ॥

## व्रातेन जीवति ॥ ५ । २ । २१ ॥

'व्रातेन जीवती'त्युच्यते, किं व्रातं नाम ? नानाजातीया अनियतवृत्तय उत्से-

---

प्र०—शालीनकौपीने । किं यः शालायामिति । अस्यां कल्पनायां शालाकूपशब्दयो-र्मुख्यार्थत्वमाश्रितं भवतीति भावः । शालायामधृष्ट इति । अन्यत्र धृष्टः । कूप इति । लङ्घनादि-कमित्यर्थः । उत्तरपदलोप इति । लोकप्रसिद्धार्थानुवादेन साधुत्वान्वाख्यानादधृष्टाकार्यमात्रे च शालीनकौपीनशब्दयोः प्रयोगादिति भावः । तत्र वृत्तिविषये शालाकूपशब्दौ तत्कर्मिकायां क्रियायां वर्तेते इति गम्यमानार्थत्वादप्रयोग एवोत्तरपदस्य लोपः ।

शालाप्रवेशनमिति । अन्यत्र प्रागल्भ्याभावादासितुमशक्यत्वाच्छालामेव प्रवेष्टुमर्हती-त्यर्थः । कूपावतरणमिति । यदकार्यं तत्प्रच्छादनीयत्वात्कूपावतरणमर्हतीत्यर्थः । अकार्ययोग्य-त्वात्पुरुषलिङ्गमपि कौपीनमुच्यते । तत्साहचर्यात्तदाच्छादनमपि कौपीनम् । अथवाऽकार्यशब्दे करोतिः क्रियासामान्यवचनः । तेनाऽद्रष्टव्यत्वाल्लज्जाहेतुदर्शनत्वात्पुरुषलिङ्गं कौपीनमस्पृश्यत्वाच्च तदाच्छादनम् ॥ २० ॥

व्रातेन । किं व्रातं नामेति । व्रातशब्दस्तावत्सङ्घवचनः । तत्र यः सङ्घेन जीवति तत्र व्रातीनशब्दो न प्रयुज्यते व्रातकर्मणा जीवति तु प्रयुज्यते । व्रातकर्मणि च व्रातीयशब्देन भाव्य-मिति प्रश्नः । नानाजातीया इति । एकजातीयक्षत्रियादिसङ्घनिराकरणम् । अनियतवृत्तय इति । नियतवृत्त्याऽऽयुधजीविसङ्घनिषेधः । उत्सेधजीविन इति । उत्सेधः—शरीरम् । तदायासेन भारवहनादिना जीवन्ति न तु बुद्धिवैभवेनेत्यर्थः । व्रातानां कर्मेत्यन एव निपातनाच्छं

---

उ०—शालीनकौपीने । नन्वीदृगर्थस्य लोकेऽसम्प्रत्ययात्कथमीदृशार्थविषयः प्रश्नोऽत आह—अस्या-मिति । लक्षणैकशरणोऽयं प्रश्न । अन्यत्रेति । शालायान्तु भार्याजितत्वादधृष्ट इत्यर्थः । लोकेति । लक्षणै-कचक्षुष्कतयोत्तरमिति भावः । नन्वधृष्टस्य शालाप्रवेशनयोग्यत्वं कथमत आह—अन्यत्रेति । आसितु'— स्थातुम् । अद्रष्टव्यत्वे हेतुर्लज्जाहेतुदर्शनत्वम् ॥ २० ॥

व्रातेन जी । ननु व्रातशब्दस्य सङ्घे लोकप्रसिद्धत्वात्प्रश्नाऽनुपपत्तेराह—व्रातशब्द इति । ननु व्रातशब्देन तत्कर्मैव गृह्यतामत आह—व्रातीनशब्देनेति । इदमर्थे छेन भाव्यमिति भावः । अत एव निपातनादिति । एवञ्च सूत्रे योगेन व्रातशब्दस्तत्सम्बन्धिकर्मवृत्तिरिति भावः । लक्षणया व्रातसम्बन्धिकर्म-

धजीविनः सङ्घा व्राताः । तेषां कर्म व्रातम् । व्रातकर्मणा जीवतीति व्रातीनः ॥ २१ ॥

## हैयंगवीनं संज्ञायाम् ॥ ५ । २ । २३ ॥

'हैयङ्गवीन'मिति किं निपात्यते ?

ह्योगोदोहस्य हियङ्ग्वादेशः संज्ञायां तस्य विकारे ॥ १ ॥

ह्योगोदोहस्य हियङ्ग्वादेशो निपात्यते संज्ञायां विषये तस्य विकार इत्येतस्मिन्नर्थे । ह्योगोदोहस्य विकारो हैयङ्गवीनं घृतम् । संज्ञायामिति किमर्थम् ? ह्योगोदोहस्य विकार उदश्वित्—अत्र मा भूदिति ॥ २३ ॥

## पक्षात्तिः ॥ ५ । २ । २५ ॥

'मूले'इति वक्तव्यम् । पक्षस्य मूलं पक्षतिः ॥ तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । मूल इति वर्त्तते । क्व प्रकृतम् ? 'तस्य पाकमूले पील्वादिकर्णादिभ्य कुणब्जाहचौ' [ ५ । २ । २४ ] इति । यदि तदनुवर्त्तते पाकेऽपि प्राप्नोति । मूल इत्यनुवर्त्तते पाक इति निवृत्तम् । कथं पुनरेकयोगनिर्दिष्टयोरेकदेशोऽनुवर्तेतैकदेशो वा निवर्त्तेत । एकयोगनिर्दिष्टानामप्येकदेशानुवृत्तिर्भवति । यद्यथा—'सङ्ख्याव्ययादेर्ङीप्'

---

प्र०—बाधित्वाऽणभवति । तेषामेषामन्यतमो व्रातीन उच्यते । यस्त्वन्यस्तत्कर्मणा जीवति स नोच्यते ॥ २१ ॥

हैयङ्गवीनम् । किं निपात्यत इति । प्रकृतिसन्देहात्प्रश्नः । ह्योगोदोहस्येति । ह्यःशब्दस्य गोदोहशब्देन सुप्सुपेति समासः । दुह्यत इति दोहः—क्षीरमुच्यते । ह्यःशब्देन कालप्रत्यासत्तिः प्रतिपाद्यते । तेनाऽविकृतरूपगन्धमेव घृतं हैयङ्गवीनमुच्यते इत्याहुः ॥ २२ ॥

पक्षात्तिः । मूल इति वक्तव्यमिति । अन्यथाऽनिर्दिष्टार्थत्वात्स्वार्थे प्रत्ययप्रसङ्गः । कथं पुनरिति । एकस्मिन्नर्थे योगः संबन्धस्तेन निर्दिष्टयोः समुदायाभिधायिद्वन्द्वनिर्दिष्टयोरित्यर्थः । द्वन्द्वस्य तदर्थस्य चैकत्वादेकदेशानुवृत्तिर्न संभवतीति भावः । एकसूत्रनिर्दिष्टानां तत्रैकदेशानुवृत्तिर्दृश्यते । एकयोगनिर्दिष्टानामपीति । अर्थाधिकारपक्षेऽर्थस्यैकत्वाद्विच्छेदाभावान्न स्यादेकदेशानुवृत्तिः । शब्दाधिकारपक्षे तु यस्यैव शब्दस्य स्वरितत्वं प्रतिज्ञातं तत्सदृशशब्दान्तरसंनिधानं

---

उ०—परत्वेऽसाधुत्वमिति तात्पर्यम् । यस्त्वन्य इति । अनभिधानादिति भावः । इदञ्च वृत्तौ स्पष्टम् ॥२१॥

हैयङ्गवीनं । घृतमिति । नवनीतमिति हरदत्तः ॥ २३ ॥

पक्षात्तिः । नन्वेकसूत्रनिर्दिष्टानामेकदेशाऽनुवृत्तेरदर्शनादाह—एकस्मिन्निति । दृश्यत इति । यथा'ऽत इ'ञित्यादित इञ्पदमात्रस्योत्तरत्राऽनुवृत्तिः । अर्थाऽधिकारमाश्रित्य पूर्वपक्षः, शब्दाऽधिकारमाश्रि-

[ ४ । १ । २६ ] 'दामहायनान्ताच्च' [२७]। 'सङ्ख्यादे'रित्यनुवर्त्तते, 'अव्ययादे'-रिति निवृत्तम् ।। २५ ।।

## विनञ्भ्यां नानाञौ न सह ॥ ५ । २ । २७

इह नानेति सहार्थो गम्यते, द्वौ हि प्रतिषेधौ प्रकृतमर्थं गमयतः । न न सह–सहैवेति ।। नैष दोषः । नाऽयं प्रत्ययार्थः । किन्तर्हि ? प्रकृतिविशेषणमेतत् । 'वि–नञ्'इत्येताभ्यामसहवाचिभ्यां नानाञौ भवतः । कस्मिन्नर्थे ? स्वार्थे ।। २७ ।।

## वेः शालच्छङ्कटचौ ।। ५ । २ । २८ ।।

कस्मिन्नर्थे शालजादयो भवन्ति ? 'न सहे'ति वर्त्तते† । भवेत्सिद्धं विशाले

प्र०—योगान्तरे प्रतीयते इति दोषाभावः ।। २५ ।।

विनञ् । सहार्थो गम्येतेति । नसहेति प्रत्ययार्थनिर्देशं मन्यते । प्रकृत्यर्थेन प्रत्ययार्थो विशेषणीयः । ततः प्रतिषेधस्य प्रतिषेधाद्विधिना भाव्यमिति भावः । नायमिति । लोकप्रसिद्धार्थानां शब्दानामिह साधुत्वाख्यानात् । लोके च नानाशब्दस्य पृथग्भावाभिधायित्वान्न सहेति प्रकृत्यर्थनिर्देशः । यद्येवं सहेत्येव प्रत्ययार्थो निर्देश्यः, विनञोः प्रतिषेधार्थत्वात्, 'विगार्दभरथिक'-इत्यादौ विशब्दस्य गुणप्रतिषेधवृत्तित्वदर्शनात् । नैतदस्ति । क्रियावाचिनोऽपि विशब्दात्सहार्थे प्रत्ययो विज्ञायेत,—विगतौ सह, विकृतौ सहेति । इह तु विना देवदत्तेन नाना देवदत्तेनेत्यस्याऽसत्त्वभूतस्याऽप्यर्थस्य व्यतिरेकहेतुत्वं भवति, यथा मातुः स्मरतीति ॥ २७ ।।

वेः शा । कस्मिन्नर्थे शालजादय इति । वक्ष्यमाणप्रत्ययापेक्षं बहुवचनम् । असहार्थस्य सर्वत्राऽसंभवादर्थानुपादानाच्च प्रश्नः । विशाले इति । नानादेशगमनादस्त्यत्राऽसहार्थत्वमिति

उ०—स्योत्तरमित्याह—अर्थाऽधिकारेति । पक्षतिः—प्रतिपत्, पक्षिणां पक्षमूलञ्च ।। २५ ।।

विनञ्भ्यां । नन्वसहार्थे वर्त्तमाननञः स्वार्थे प्रत्यये कथं सहाऽर्थावगतिरत आह—प्रत्ययार्थेति । प्रकृतिविशेषणत्वे प्रत्ययस्याऽर्थाकाङ्क्षा न शान्ता स्यादिति भावः । भाष्ये 'न न सहे'त्यस्य व्याख्यानं—सहैवेति । प्रत्ययार्थत्वाऽभावे हेतुमाह—लोके इति । विगार्दभरथिक इति । 'नञो गुणप्रतिषेध' इति सूत्रे नञित्यस्य प्रत्युदाहरणमिदम् । नन्वेवं 'विनानाना'शब्दयोरसत्त्वभूताऽर्थाऽभिधायित्वेन चादिवद्व्यतिरेकहेतुत्वं न स्यादिति 'देवदत्तेन विने'त्याद्यनुपपन्नमत आह—इह त्विति । द्योतकानामेव तत्स्वभावत्वमिति भावः । अत एव 'पृथग्विनानानाभि'रिति सङ्गच्छते ।। २७ ।।

वेः शाल । वक्ष्यमाणेति । 'सम्प्रोदश्च कटच्'जितीत्यर्थः । सर्वत्रेति । कटच्विषये इत्यर्थः । अनर्थकाएवेति । एवञ्च क्रियावृत्तित्वाऽभावात्कथं साधने प्रत्यय इत्यक्रियावाचिनोऽपि साधने प्रत्ययो वक्तव्य-

† विनञ्भ्यां नानाञौ न सह ५ । २ । २७

शृङ्गे विशङ्कटे शृङ्गे इति। इह तु खलु 'सङ्कट'मिति सङ्गताऽर्थो गम्यते, 'प्रकट'मिति प्रगताऽर्थो गम्यते, 'उत्कट'मिति उद्गतार्थो गम्यते‡।

एवं तर्हि साधने शालजादयो भवन्ति। किं वक्तव्यमेतत्? नहि। कथमनुच्यमानं गंस्यते? उपसर्गेभ्य इमे विधीयन्ते, उपसर्गाश्च पुनरेवमात्मका यत्र कश्चित्क्रियावाची शब्दः प्रयुज्यते तत्र क्रियाविशेषमाहुर्यत्र हि न प्रयुज्यते ससाधनां तत्र क्रियामाहुः। त एत उपसर्गेभ्यो विधीयमानाः ससाधनायां क्रियायां भविष्यन्ति।

एवमपि भवेत्सिद्धं 'विशाले शृङ्गे' इति। इदन्तु न सिध्यति—'विशालः' 'विशङ्कटः' इति। एतदपि सिद्धम्। कथम्? अकारो मत्वर्थीयः। विशाले अस्य स्तो विशालः। विशङ्कटे अस्य स्तो विशङ्कट इति॥ २८॥

## सम्प्रोदश्च कटच्॥ ५। २। २९॥

### कटच्प्रकरणेऽलाबूतिलोमाभ्यो रजस्युपसङ्ख्यानम्॥ १॥

कटच्प्रकरणेऽलाबूतिलोमाभ्यो रजस्यभिधेयउपसङ्ख्यानं कर्त्तव्यम्। अलाबूकटः तिलकटः उमाकटः।

प्र०—भावः। किं वक्तव्यमिति। शब्दान्तरवाच्यक्रियाविशेषस्य द्योतका उपसर्गाः। वाचकाभावे द्योत्यार्थाभावादनर्थका एवेति भावः। ससाधनामिति। क्रियोपसर्जनं साधनमाहुरित्यर्थः। नियतविषयाः शब्दानां शक्तयो दृश्यन्ते यथा द्विदशा इत्यादौ कृत्वोऽर्थाद्यभिधानमिति भावः। उपसर्गेभ्य इति। अन्यत्रोपसर्गसंज्ञादर्शनाद्विषयान्तरेऽपि योग्यतामात्राश्रयं प्रादीनामिदमभिधानम्। विशाल इति। शृङ्गयोरेव विगमनक्रियाकर्तृत्वं न तु गोरिति भावः। विशाले अस्येति। मतुप्प्रत्ययस्तु गव्यनभिधानान्न भवति। विशालवानित्युक्तेऽपि विशालगवयुक्तस्य गोष्ठादेरवगमो न तु गोरित्यर्थः। व्युत्पत्त्यनुसारेण चेदमुच्यते। गुणशब्दास्तु विशालादयः, साधुत्वान्वाख्यानाय तु कंचिदुपायमाश्रित्य व्युत्पत्तिः क्रियते। यथा प्रतिलोमोऽनुलोम इति॥ २८॥

संप्रोद। अलाबूतिलोमाभङ्गाभ्य ओषधित्वादवयवेऽलाबूशब्दा'दोर'ञित्यञि प्राप्ते

उ०—इत्यर्थः। नन्वेवं सति क्रियाया एव प्राधान्यं स्यादत आह—क्रियोपसर्जनमिति। साहित्यमेव सहार्थः। एवञ्च क्रियासाधने वर्त्तमानव्यादिभ्यः स्वार्थे प्रत्यय इति भावः। नन्वीदृशेऽर्थे शक्तिग्राहकाऽभावोऽत आह—नियतेति। नन्वत्र क्रियायोगाऽभावात्कथमुपसर्गत्वमत आह—अन्यत्रेति। क्रियायोगे इत्यर्थः। शृङ्गयोरेवेति। विगमनक्रियाकर्त्तृत्वेव तत्साधनादिति भावः। नन्वच्प्रत्ययवन्मतुबपि कदाचित्स्यादत आह—मतुबिति। परमार्थमाह—गुणशब्दास्त्विति। विशालत्वगुणवद्बोधका इत्यर्थः॥ २८॥

सम्प्रोदश्च। रजसोऽप्यवयवत्वं मन्यमान आह—ओषधित्वादवयव इति। तिलोमाशब्दाभ्या-

‡ सम्प्रोदश्च कटच् ५। २। २६

भङ्गायाश्च ॥ २ ॥

भङ्गायाश्चेति वक्तव्यम् । भङ्गाकटः ।

गोष्ठादयः स्थानादिषु पशुनामादिभ्यः ॥ ३ ॥

गोष्ठादयः प्रत्ययाः स्थानादिष्वर्थेषु पशुनामादिभ्यो वक्तव्याः । गोगोष्ठम् अविगोष्ठम् ।

कटच्[2] वक्तव्यः । अविकटः उष्ट्रकटः ॥ पटच्[3] वक्तव्यः । अविपटः उष्ट्रपटः ॥ गोयुगशब्दश्च[4] प्रत्ययो वक्तव्यः । उष्ट्रगोयुगम् खरगोयुगम् ।

तैलशब्दश्च[5] प्रत्ययो वक्तव्यः । इङ्गुदतैलम् सर्षपतैलम् ॥ शाकटशब्दश्च[6] प्रत्ययो वक्तव्यः । इक्षुशाकटम् मूलशाकटम् ॥ शाकिनशब्दश्च प्रत्ययो वक्तव्यः । इक्षुशाकिनम् मूलशाकिनम् ।

प्र०—तिलोमाभ्यां घृतादित्वादन्तोदात्तत्वादनुदात्तादेश्चेत्यञि प्राप्ते भङ्गाया'स्तृणधान्यानां च द्व्यषा'मित्याद्युदात्तत्वादणि प्राप्ते रजसि कटज्विधिः । गोष्ठादय इति । प्रयोगसमवायिप्रत्ययरूपं निर्दिष्टम् । चकारस्तु स्वरार्थोऽनुबन्ध आसङ्क्तव्यः । तथा हि—समासाश्रयेण प्रत्ययाः प्रत्याख्यायन्ते । तत्र चित्स्वरसमासस्वरयोरभेदादेकफलत्वमारम्भप्रत्याख्यानयोरुपपद्यते । सर्वत्रादिशब्दः प्रकारे । गवां स्थानमिति । 'तस्येद'मित्यत्रार्थे 'सर्वत्र गोरजादिप्रत्ययप्रसङ्गे य'दिति यति प्राप्ते गोष्ठप्रत्ययः । अविकट इति । अवीनां समूह इत्यणि प्राप्ते कटच् । अवीनां विस्तार इत्यत्रार्थे पटच् । अप्रसृते समूहे—अविकट । प्रसृते त्वविपटः । उष्ट्रगोयुगमिति । द्वावुष्ट्रावित्यत्रार्थे गोयुगच्प्रत्ययः । अन्ये त्वाहुः—उष्ट्रस्य ग्रीवाबन्धने यानाङ्गे गोयुगच्प्रत्ययः । इङ्गुदतैलमिति । 'लघावन्त'इत्याद्युदात्तत्वात्तस्य विकार इत्यण्प्राप्तः । सर्षपशब्दस्य 'सादीनां शाकाना'मित्याद्युदात्तत्वे प्राप्ते परत्वा'दथ द्वितीयं प्रागीषा'दित्यनुवर्त्तमाने 'यान्तानां च गुर्वादीना'मिति मध्योदात्तत्वं भवति । तयोरनुदात्तत्वादञ्प्राप्तः । इक्षुशाकटमिति । इक्षूणां भवनं क्षेत्रमित्यर्थे शाकटशाकिनौ । गवां स्थानमिति । गावस्तिष्ठन्ति यस्मिन्निति 'घञर्थे कविधान'मिति कः । तत्र गोष्ठसाधर्म्यादुष्ट्रादिस्थानमपि गोष्ठशब्देनोच्यते । तत्र विशेषप्रतिपत्त्यर्थमुष्ट्रादीनामन्यतमेन विशेष्यते । मुख्यगोष्ठप्रतिपत्तये च गोभिरपि गोष्ठस्य विशेषणाद्गोगोष्ठमित्यपि भवति ।

उ०—मिति । अत्र तिलस्य घृतादित्वे न मानं, 'तिलाश्च मे' इत्यादावाद्युदात्तपाठादिति चिन्त्यम् । सर्वत्रादिशब्द इति । अत्रत्यादिशब्दविवरणभूतान्येवाऽग्रिमाणि वचांसि । अप्रसृते इति । उत्तरवार्त्तिकेष्वर्थनिर्देशेऽपि स्वभावगम्योऽयं विशेष इति भावः । अत एव 'प्रस्तीर्णः पटो यथा एव'मित्यादि प्रत्याख्यान भाष्ये वक्ष्यति । द्वावुष्ट्राविति । 'द्वयं युग'मित्यादिवद् द्वयवयवसङ्घाऽभिधायित्वादेकवचनमुष्ट्रगोयुगमित्यत्रेति

१—'गोष्ठजादयः' पा० । २—'संघाते कटच्च वक्तव्यः' पा० ।
३—'विस्तारे पटच्च वक्तव्यः' पा० । ४—'द्वित्वे गोयुगच्शब्दश्च' पा० ।
५—'स्नेहने तैलच् ' पा० । ६—'संभवने क्षेत्रे शाकटच् पा० ।

## उपमानाद्वा सिद्धम् ॥ ४ ॥

उपमानाद्वा सिद्धमेतत् । गवां स्थानं गोष्ठम् । यथा गवां तद्वदुष्ट्राणाम् । कटच्च वक्तव्य इति । यथा नानाद्रव्याणां सङ्घातः कट एवमवयः संहता अविकटः ॥ पटच्च वक्तव्य इति । यथा पटः प्रस्तीर्ण एवमवयः प्रस्तीर्णा अविपटः ॥ गोयुगशब्दश्च प्रत्ययो वक्तव्य इति । गोर्युगं गोयुगम् । यथा गोस्तद्वदुष्ट्रस्य । उष्ट्रगोयुगम् ॥ तैलशब्दश्च प्रत्ययो वक्तव्य इति । प्रकृत्यन्तरं तैलशब्दो विकारे वर्त्तते । एवञ्च कृत्वा तिलतैलमित्यपि सिद्धं भवति ॥ शाकटशब्दश्च प्रत्ययो वक्तव्य एव । शाकिनशब्दश्च प्रत्ययो वक्तव्य एव ॥ २६ ॥

प्र०—नानाद्रव्याणामिति । रज्जुवीरणादीनामित्यर्थः । तत्साधर्म्यादन्योऽपि सङ्घातः कटशब्दाभिधेयोऽविभिर्विशेषितोऽविकट इत्युच्यते । यथा पट इति । विस्तारसामान्यादन्योऽपि सङ्घातः पटशब्दाभिधेयोऽविभिर्विशेष्यते—अविपट इति । गोयुगमिति । युगशब्देन द्वयमुच्यते, ग्रीवाबन्धनं काष्ठञ्च । तत्र यानाङ्गे युगः पुंस्युक्त इति पुंस्त्वं प्रायिकं बोध्यम् । प्रकृत्यन्तरमिति । अव्युत्पन्नं विशिष्टस्नेहद्रव्यवाचीत्यर्थः । तिलतैलमित्यपीति । अपिशब्दात्तैलमपीत्यर्थः यदि तु तैलच्प्रत्ययो विधीयते तदा विशेषविहितेन तैलचा तिलशब्दादण्बाध्येत । ततश्च तैलमिति न सिध्येत । यदा त्वव्युत्पन्न एव तैलशब्दो विकारविशेषवाची तदा तिलानां तैलमिति समासे कृते तिलतैलमिति भवति । तिलानां विकार इत्यत्राऽञि तैलमिति । उपमानाश्रयेणाऽपीङ्गुदतैलमित्यादि सिध्यति । तिलविकारो मुख्यं तैलं, तत्सादृश्यादन्यदपि तैलमिङ्गुदादिभिर्विशेष्यते । गौणसंभवे च मुख्यतैलप्रतिपादनाय तिलैर्विशेषणात्तिलतैलमित्यपि भवतीति केचिदाहुः । व्युत्पत्त्युपाय एव तिलानां विकारस्तैलमिति । रूढिशब्दस्त्वयं स्नेहद्रव्यवृत्तिः । तथा च सादृश्यानुकरणमन्तरेणेङ्गुदतैलादयः शब्दाः प्रयुज्यन्ते । यथा प्रकृष्टो वीणायां प्रवीण इति व्युत्पत्तिमात्रं क्रियते, कौशलं त्वस्य प्रवृत्तिनिमित्तम् । तेन वीणायां प्रवीण इत्यपि भवति ॥ २९ ॥

उ०—बोध्यम् । यानाऽङ्गे युगे इति । उष्ट्ररथरूपयानेत्यर्थः । प्रत्ययः—गोयुगच्प्रत्ययः । नन्वेवं 'गोगोष्ठ'मिति न स्यादत आह—मुख्यगोष्ठेति । यथा स्वामिमात्रपरतया प्रयुक्ते गोपतिशब्दे गवां विशेषणत्वं 'गवामसि गोपतिरेक' इत्यादौ । द्वयं—युग्ममित्यर्थः । प्रकारान्तरेणाऽपि इङ्गुदतैलादीन्साधयन्ति केचिदित्याह—उपमानाश्रयेणाऽपीति । तद्दूषयति—व्युत्पत्त्युपाय एवेति । स्नेहद्रव्यवृत्तिरिति । स्नेहवद्द्रव्यविशेषवृत्तिरित्यर्थः । सादृश्याऽनुकरणं—सादृश्यप्रत्ययम् । एतेन 'न हि 'तैल'मित्युक्ते सस्नेहद्रव्यरूपं विकारमात्रं प्रतियन्ती'ति हरदत्तः परास्तः ॥ २६ ॥

## इनच्पिटच्चिकचि च ॥ ५ । २ । ३३ ॥

### इनच्पिटच्चकाः चिकचिचिकादेशाश्च ॥ १ ॥

इनच्पिटच्चकाः प्रत्यया वक्तव्याः, 'चिक–चि–चिक्'इत्येते च प्रकृत्यादेशा वक्तव्याः । चिकिनः चिपिटः चिक्कः ।

### क्लिन्नस्य चिल्पिल्लश्चाऽस्य चक्षुषी ॥ २ ॥

क्लिन्नस्य चिल्पिलित्येतौ प्रकृत्यादेशौ वक्तव्यौ लश्च प्रत्ययोऽस्य चक्षुषी इत्येतस्मिन्नर्थे । क्लिन्ने अस्य चक्षुषी चिल्लः । पिल्लः ॥ चुल् च वक्तव्यः । चुल्लः ॥ यद्यस्येत्युच्यते—चिल्ले चक्षुषी पिल्ले चक्षुषी इति न सिध्यति तस्मान्नार्थोऽस्यग्रहणेन । कथं चिल्लः पिल्ल इति ? अकारो मत्वर्थीयः—चिल्ले अस्य स्तः चिल्लः, पिल्ले अस्य स्तः पिल्ल इति ॥ ३३ ॥

## प्रमाणे द्वयसज्दघ्नञ्मात्रचः ॥ ५ । २ । ३७ ॥

प्रमाण इति किमयं प्रत्ययार्थः ?

### प्रमाणं प्रत्ययार्थो न

प्रमाण इति नायं प्रत्ययार्थः । क्व तर्हि प्रत्यया भवन्ति ?

---

प्र०—इनच् । सूत्रे निशब्दस्य द्वावादेशौ प्रत्ययौ च विहितावित्यादेशत्रयप्रत्ययत्रयविधानाय वार्त्तिकम् । तस्मान्नार्थ इति । क्लिन्नशब्दाच्चक्षुर्विशेषार्थाभिधायिनः स्वार्थे लो विधेयः । अकारो मत्वर्थीय इति । अर्श आदिषु 'स्वाङ्गाद्धीना'दिति पाठात् । मतुप्त्वनभिधानान्न भवति ॥ ३३ ॥

प्रमाणे । किमयमिति । सप्तमीनिर्दिष्टस्येह शास्त्रे प्रकृत्यर्थप्रत्ययार्थत्वदर्शनादुभयसम्भवाच्च प्रश्नः । अस्येत्यनुवर्त्तनादिति । नन्वेवमपि प्रमेयवाचिनः प्रमाणे प्रत्ययप्रसङ्ग –उदकं प्रमेयमस्योरोरिति । नैष दोषः । अनियतप्रमेयविषयत्वात्प्रमाणानामेकेन प्रमेयेण विशेषणे दुःसम्बन्धत्वा-

---

उ०—इनच्पिटचि । ननु सूत्रे प्रत्ययद्वयादेशद्वययोर्विधानात्तयोर्वार्त्तिके उल्लेखोऽसङ्गतोऽत आह–सूत्रे इति । कसन्नियोगेन 'चि'किति कान्त आदेशः । नन्वस्यग्रहणाऽभावे कस्मिन्नर्थे प्रत्ययोऽत आह—क्लिन्नशब्दादिति ॥ ३३ ॥

प्रमाणे द्वयस । ननु सूत्राक्षरैः प्रत्ययार्थत्वस्यैव प्रतीतेस्तस्याऽर्थाकाङ्क्षायाः सत्त्वाच्च प्रश्नोऽनुपपन्नोऽत आह—सप्तमीति । 'अतिशायने तम'बित्यादौ प्रकृत्यर्थत्वं, 'कर्त्तरि क्'दित्यादौ प्रत्ययार्थत्वम् । प्रत्ययार्थत्वे च प्रमेयवाचिनः प्रमाणे प्रत्ययः स्यात्, षष्ठी च समर्थविभक्तिर्योग्यतावशादिति बोध्यम् । नन्विति । यत्तदस्येति निर्दिष्टं प्रमाणञ्चेद्भवतीत्यर्थः स्यात्, प्रमाणस्य प्रमेयाऽपेक्षत्वात्तद्वाचित्वम्प्रकृतेरिति

## तद्वृति

कुत एतत् ?

अस्येति वर्त्तनात् ।

अस्येति हि वर्त्तते । क्व प्रकृतम् ? 'तदस्य सञ्जातं तारकादिभ्य इतच्' [ ५ । २ । ३६ ] इति ।

प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम ॥

ऊरुद्वयसम् ऊरुदघ्नम् ।

प्रमाणे लः

प्रमाणे लो वक्तव्यः । शमः दिष्टिः वितस्तिः ।

द्विगोर्नित्यं

द्विगोर्नित्यं लो वक्तव्यः । द्विशमम् त्रिशमम् । द्विदिष्टिः त्रिदिष्टिः । द्विवितस्तिः त्रिवितस्तिः ।। किमर्थमिदमुच्यते ? संशये श्राविणं वक्ष्यति* तस्यायं पुरस्तादपकर्षः ।

प्र०—प्रमेयस्य तु नियतप्रमाणप्रतिपादनायोरुमात्रादयः शब्दा लोके प्रयुज्यमाना साधुत्वेनाऽन्वाख्यायन्ते । प्रथमश्चेति । यद्यायामवाच्येत्र प्रमाणशब्दः सूत्र उपात्तस्तदोर्ध्वमानेऽप्राप्तौ द्वयसज्दघ्नचौ प्रमाणादपकृष्य विधीयेते । अथ तु परिच्छेदकमात्रं प्रमाणमिह गृह्यते तदोर्ध्वमान एव यथा स्यातामिति नियमाय वचनम् ।

प्रमाणे इति । प्रमाणशब्दा लोके ये प्रसिद्धा दिष्टिहस्तादयस्तेभ्यः परस्य प्रत्ययस्य लुग्भवति । स च संभवान्मात्रच एव । इतरयोरूर्ध्वमान एव हि विधानम् । मात्रचस्त्वविशेषेण परिच्छेदकमात्रवाचिनः स्मरणात् । द्विगोर्नित्यमिति । तदन्तविध्यभावाल्लुगप्राप्तिः । किमर्थमिति । नित्यग्रहणम्प्रति प्रश्नः । नहि विकल्पः प्रकृत इति भावः । श्राविणमिति । श्रवणं श्रावः, स यस्यास्तीति श्रावी—मात्रच्प्रत्ययः । तस्य परत्वाच्छ्रवणे प्राप्ते नित्यग्रहणाद्बाधकबाधनार्था-

उ०—भावः । दुःसम्बन्धादिति । इतरनिरूपितप्रमाणत्वप्रतीतिप्रतिबन्धादिति भावः । वस्तुतः शङ्केयं निर्दला, 'अस्ये'त्यनुवृत्तिवैयर्थ्यापत्तेरिति बोध्यम् । ननु 'प्रस्थमात्र'मित्यादौ मात्रचो दर्शनात्–प्रमाणशब्देनाऽत्र परिच्छेदकमात्रग्रहणादूर्ध्वमानेऽपि सिद्धावेतावत आह–यद्यायामेति । अत एव चोत्तरसूत्रे परिमाणग्रहणं चरितार्थम् । अत्र पक्षे 'प्रस्थमात्र'मित्याद्यसिद्धिरित्यरुचेराह—अथ त्विति । उत्तरत्र परिमाणग्रहणप्रयोजनन्तु वार्त्तिककृदेव वक्ष्यति, तक्रकौण्डिन्यन्यायस्याऽपवादविषयत्वेनाऽत्राऽनाश्रयणाच्च ऊर्ध्वमाने मात्रजपि—ऊरुमात्रमिति ।

* ५ । २ । ३७ वा० १

डट् स्तोमे

डट् स्तोमे वक्तव्यः । पञ्चदशः स्तोमः ।

शच्छनोर्डिनिः ।

शच्छनोर्डिनिर्वक्तव्यः । त्रिंशिनो मासाः । पञ्चदशिनोऽर्धमासाः ।
विंशतेश्चेति वक्तव्यम् । विंशिनोऽङ्गिरसः† ।

प्रमाणपरिमाणाभ्यां सङ्ख्यायाश्चापि संशये ॥

मात्रज्वक्तव्यः । शममात्रम् दिष्टिमात्रम् वितस्तिमात्रम् । कुडवमात्रम् । पञ्चमात्राः दशमात्राः ।

वत्वन्तात्स्वार्थे द्वयसज्मात्रचौ बहुलम् ॥ १ ॥

वत्वन्तात्स्वार्थे द्वयसज्मात्रचौ बहुलं वक्तव्यौ । तावदेव तावद्द्वयसम् तावन्मा-

प्र०—ल्लुगेव भवति । द्वौ शमौ प्रमाणमस्य स्यान्न वा—द्विशममिति । प्रकरणादिवशाच्च निश्चयसंशयविषयप्रयोगावधारणम् । डट् स्तोम इति । अत्रायामस्य प्रमाणस्याऽसंभवात्परिच्छेदोपाधिकायाः संख्यायाः स्तोमे डट्प्रत्ययः । पञ्चदश मन्त्राः परिमाणमस्य स्तोमस्य पञ्चदशः स्तोमः । विंशिन इति । विंशतिशब्दात्सङ्ख्यामात्रवाचिनः सङ्ख्येये प्रमेये डिनिः । 'तिविंशतेर्डिती'ति तिलोपः, तस्य 'यस्येति चे'त्यकारलोपे कर्त्तव्येऽसिद्धवदत्राभादित्यसिद्धत्वं न भवति भाष्यकारवचनात्तस्य सिद्धत्वात् । 'तदस्य परिमाणं'—'सङ्ख्यायाः संज्ञे'त्यत्र 'स्तोमे डविधिः पञ्चदशाद्यर्थ'मित्युक्तेऽपि स्त्रियां ङीबर्थमिह डड्विधीयते, स्तोमसाहचर्याच्च स्त्रियां प्रयोगः—सप्तदशी रात्रिरिति । तत्र तु डविधानं टाबर्थं यदि प्रयोगो दृश्यते । तददर्शने तु प्रपञ्चार्थम् । डिनेः सामान्यविधानात्तत्र 'शन्शतोर्डिनिश्छन्दसि वक्तव्य' इति वचनं प्रपञ्चार्थमेव । प्रमाणपरिमाणाभ्यामिति । रूढिशब्दौ भेदेनोपात्तौ । शममात्रमिति । शमः प्रमाणमस्य स्यान्न वा, दिष्टिः प्रमाणमस्य स्यान्न वा,

उ०—ननु 'प्रमाणे ल' इत्यत्राऽपि सूत्रवत्प्रमाणशब्देन परिच्छेदकमात्रग्रहणे 'ऊरुद्वयस'मित्याद्यनुपपन्नमत आह—प्रमाणशब्दा इति । मात्रचस्त्विति । अत एव 'प्रस्थमात्र'मित्यादिसिद्धिः । अतएवोत्तरसूत्रस्थे वार्त्तिके 'मात्रादी'त्यादिग्रहणं चरितार्थम् । आयामाऽर्थकप्रमाणग्रहणाऽनुवृत्तौ दघ्नादेर्बोधाप्रातेस्तद्वैयर्थ्यं स्पष्टमेव । पूर्वेणाऽसिद्धिं दर्शयति—तदन्तेति । ननु प्रमाणे वर्त्तमानात्परस्य लुगिति तदर्थस्तत्र कस्तदन्तविधेरुपयोगः, न च द्विगुर्न प्रमाणं, तर्हि प्रत्ययस्याऽप्यप्राप्तिरिति चिन्त्यमिदम् । तस्मात् 'किमर्थ'मिति भाष्यस्य—पूर्वेण सिद्धे द्विगोरित्यादि व्यर्थमित्येवाशयः । 'प्रमाणे वर्त्तमानादस्येत्यर्थे जातस्य प्रत्ययस्य लु'गिति पूर्ववार्त्तिकार्थः । अस्य तु 'द्विगोः परस्य नित्यं सर्वत्राऽस्येत्यर्थे संशये चोत्पन्नस्य लु'गित्यर्थ इत्युत्तराशयः । किञ्च 'परत्वाल्लुको बाधकः संशये मात्र'जित्यप्यसङ्गतं; युगपत्प्राप्त्यभावात्, नित्यग्रहणान्तु 'सर्वत्रे'त्यर्थकमुभयोः समानम् । 'श्राव' इत्यत्र बाहुलकाद्वम् । अन्यथा ऋदोरप्स्यात् । ननु 'प्रमाणे' इत्युत्-

१—'शन्शतोर्डिनिः' पा० । † तिविंशतेर्डिति; यस्येति च ६।४।१४२; १४८

त्रम् । यावदेव यावद्द्वयसम् यावन्मात्रम् ।

प्रमाणं प्रत्ययार्थो न तद्वृत्यस्येति वर्त्तनात् ।
प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम ॥
प्रमाणे लो द्विगोर्नित्यं डट्स्तोमे शच्शनोर्डिनिः ।
प्रमाणपरिमाणाभ्यां सङ्ख्यायाश्चापि संशये ॥[१]

**यत्तदेतेभ्यः परिमाणे वतुप् ॥ ५ । २ । ३९ ॥**

किमर्थं परिमाण इत्युच्यते न प्रमाण‡ इति वर्त्तते ? एवं तर्हि सिद्धे सति यत्परिमाणग्रहणं करोति तज्ज्ञापयत्याचार्योऽन्यत्प्रमाणमन्यत्परिमाणमिति ।

डावतावर्थवैशेष्यान्निर्देशः पृथगुच्यते ।
नैतज्ज्ञापकसाध्यमन्यत्प्रमाणमन्यत्परिमाणमिति । उक्तोऽत्र विशेषः × ।

प्र०—कुडवं प्रमाणमस्य स्यान्न वेत्यत्रार्थे मात्रच् । पञ्चमात्रा इति । पञ्च स्युर्न वेति संशय्यमानार्थवाचिनः स्वार्थे प्रत्ययः । अथवा वृत्तिविषये 'द्व्येकयो'रित्यादिवत्सङ्ख्यामात्रवाचिनः षष्ठ्यर्थे प्रत्ययः । पञ्चत्वसङ्ख्या प्रमाणमेषां स्यान्न वेति पञ्चमात्राः । तावदेवेति । तत्परिमाणं यस्य धान्यादेस्तत्—तावद्धान्यादिकं, ततः स्वार्थे प्रत्ययः । उत्तरसूत्रे तु 'भावः सिद्धश्च डावतो'रित्यर्थान्तरे वत्वन्तान्मात्रादिप्रतिपादनम् ॥ ३७ ॥

यत्तदे । किमर्थमिति । प्रमाणपरिमाणशब्दयोरेकार्थत्वं मत्वा प्रश्नः । न प्रमाण इति वर्त्तत इति । काका नञः प्रयोगाद्वर्त्तत एवेत्यर्थः । अथवाऽनेकार्थत्वान्निपातानां 'ननु'शब्दस्यार्थे 'न'शब्दो वर्त्तते । आचार्यदेशीय आह—एवं तर्हीति ।

उ०—वृत्तेः 'पञ्चदशे'त्युदाहरणमयुक्तमत आह—अन्नायामस्येति । मात्रचः परिच्छेदकमात्रे स्मरणादिति कैयटोक्तेरिदमुपलक्षणम्—उन्मानपरिमाणयोरपि, डित्त्वन्तु एकविंशे तिलोपार्थं, त्रयस्त्रिंशादौ टिलोपार्थञ्चेति बोध्यम् । तस्याऽसिद्धत्वादिति । असिद्धवत्सूत्रस्याऽनित्यत्वादित्यर्थः । तस्य सिद्धत्वादिति पाठे—टिलोपस्य सिद्धत्वादित्यर्थः । भेदेनेति । तेनोन्मानान्न । इत्यत्रार्थे इति । संशयस्य प्रत्यासत्त्याऽस्येतिप्रत्ययार्थगतधर्मविषयस्यैव ग्रहणमुचितमिति भावः । प्रत्ययार्थगतधर्मविषयसन्देहाऽसम्भवादाह—संशय्येति ॥ ३७ ॥

यत्तदेतेभ्यः । प्रमाणेत्यादि । पूर्वसूत्रे प्रमाणशब्दः परिच्छेदकमात्रवाची, तत्साहचर्यात्, 'यावानध्वे'त्यादिप्रयोगदर्शनाच्चेह परिमाणशब्दोऽपि तथेति तदनुवृत्त्यैव सिद्धमिति भाव इति केचित् । अस्मादेव ज्ञापकात्तयोर्भेद इत्याचार्यदेशीयमतम् । ज्ञापकं विनाऽध्याहारात्सूत्रोक्तरीत्या सिद्धोऽनयोर्भेद इत्याचार्यपक्षः । डावतोरप्रसिद्धत्वादाह—पूर्वाचार्येति । पृथङ्निर्देश इति । अत्र परिमाणशब्देन रूढस्यैव ग्रहणमिति भावः ।

‡ प्रमाणे द्वयसज्दघ्नञ्मात्रचः ५ । २ । ३७

× ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः ।
आयामस्तु प्रमाणं स्यात् संख्या बाह्या तु सर्वतः ॥ ५ । १ । १९

१—इमौ सङ्ग्रहश्लोकौ क्वाचित्कौ ।

मात्राद्यप्रतिघाताय

एवं च कृत्वा मात्रादीनां प्रतिघातो न भवति ।

भावः सिद्धश्च डावतोः ॥

डावत्वन्ताच्च मात्रजादीनां भावः सिद्धो भवति ।

वतुप्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसङ्ख्यानम् ॥ १ ॥

वतुप्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसङ्ख्यानं कर्त्तव्यम् । 'न त्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते'† । 'त्वावतः पुरूवसो'‡ ।

प्र०—आचार्य आह-डावताविति । पूर्वाचार्यप्रक्रियाऽपेक्षो निर्देशः । इह तु वतुपं विधाया-'ऽऽसर्वनाम्न' इत्यात्त्वं विहितम् । पूर्वाचार्यास्तु डावतुं विदधिरे । अर्थवैशेष्यादिति । विशिष्यत इति विशेषः, विशेषस्य भावो वैशेष्यमर्थस्य वैशेष्यमर्थवैशेष्यम्—अर्थभेदः । तस्मात्परिमाण-शब्दस्य पृथङ्निर्देशः क्रियते । उक्तोऽत्रेति । 'आयामस्तु प्रमाणं स्यात्परिमाणं तु सर्वत' इति । मात्राद्यप्रतिघातायेति । यदि प्रमाण इत्यनुवृत्त्या प्रमाणोपाधिकेभ्यो यदादिभ्यो वतुब्विधीयते तदाऽसौ विशेषविहितत्वात्सामान्यविहितान्मात्रादीन्बाधेत, परिमाणग्रहणे तु सति भिन्नोपाधि-विषयत्वाद्बाध्यबाधकभावाऽभावः । तेन 'तन्मात्रं' 'यन्मात्र'मित्यादि प्रमाणोपाधौ प्रकृत्यर्थे सिद्धं भवतीति । भावः सिद्धश्चेति । तत्परिमाणमस्य धान्यस्य तत्तावद्धान्यं राशीकृतं तावत्प्रमाण-मस्य कुड्यादेस्तावन्मात्रम् । यादृग्राशीकृतस्य धान्यस्य दैर्घ्यं तादृगस्यापीत्यर्थः । एकविषयत्वे तु

उ०—'यावानध्वा' 'यावती रज्जुः' 'अधिकरणैतावत्त्वे चे'त्यादिनिर्देशास्तु सादृश्याद्बोध्या इति तात्पर्यम् । भाष्ये—उक्तोऽत्रेति । 'आर्हा'दिति सूत्रे इत्यर्थः । प्रमाणोपाधिकेभ्य इति । प्रमाणशब्देन परिच्छेदक-मात्रम् । प्रमाणोपाधौ—आयामपरिच्छेदकत्ववदुपाधौ । सर्वतोमानोपाधौ तु 'यन्मात्र'मिति नेष्यत एव, 'याव'दित्येवेष्यत इति भावः । इदमुपलक्षणम्—ऊर्ध्वमानोपाधौ 'तद्दघ्न'मित्यादेः । नन्वेतदर्थमत्र सूत्रे 'प्रमाणे' इति परिच्छेदकमात्रार्थकमनुवर्त्त्य 'यत्तदेतेभ्यो वतुप् चे'ति सूत्र्यताम् । चेन—मात्रादयः । 'प्रथमश्च द्वितीयश्चे'त्यनेनाऽत्राऽपि नाऽव्यवस्था । सर्वप्रयोगाश्च लक्षणं विनैव सिध्यन्तीत्यपरमनुकूलम्, एवञ्च परिमाणग्रहणं व्यर्थमिति चेन्न, सर्वतोमाने 'यन्मात्र'मित्यस्याऽनिष्टस्य त्वन्मते आपत्तेरिति बोध्यम् । फलान्तर-माह-भाष्ये—भावः सिद्धश्चेति । विशिष्टस्येति । कुड्यादिरूपस्येत्यर्थः । तस्यतत्प्रमाणमिति । साक्षात्—परम्परया वा परिच्छेदकमित्यर्थः । तावच्छब्दस्यैवेति । 'न कर्मधारयान्मत्वर्थीय' इति न्यायेनेति भावः । अत एव मात्रजाद्यन्तान्न प्रत्ययमाला, परिमाणग्रहणे सर्वतोमानत्वेन बोधाय वतुः, तदन्तात्कुड्यादिबोधाय मात्रजाद्यपीति सर्वमनवद्यम् । ननु सादृश्ये प्रत्ययं विधाय 'त्वत्सदृशस्ये'त्यर्थकथनमयुक्तमत आह—विषयेति । परे तु 'उक्तोऽत्र भेद' इत्यत्रत्यभाष्यात्पूर्वसूत्रे प्रमाणशब्द आयामार्थक एव, अत्र परिमाणशब्दश्च सर्वतोमाना-

† ऋ० ७ । ३२ । २३ ‡ ऋ० ८ । ४६ । १

'यद्वं विप्रस्य मावतः' × । 'त्वत्सदृशस्य' 'मत्सदृशस्ये'ति ।

डावतावर्थवैशेष्यान्निर्देशः पृथगुच्यते ।
मात्राद्यप्रतिघाताय भावः सिद्धश्च डावतोः ॥

## किमिदंभ्यां वो घः ॥ ५ । २ । ४० ॥

केन विहितस्य किमिदम्भ्यां वतुपो वो घत्वमुच्यते ? एतदेव ज्ञापयत्याचार्यो 'भवति किमिदम्भ्यां वतु'विति, यदयं किमिदम्भ्यामुत्तरस्य वतुपो वो घत्वं शास्ति ।

अथवा योगविभागः करिष्यते—'किमिदम्भ्यां' वतुब्भवति । ततो 'वो घ' इति । वश्चाऽस्य घो भवतीति ॥ ४० ॥

## किमः सङ्ख्यापरिमाणे डति च ॥ ५ । २ । ४१ ॥

बहुष्विति वक्तव्यम् । इह मा भूत्—कियान् कियन्तौ ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । किमित्येतत्परिप्रश्ने वर्तते, परिप्रश्नश्चाऽनिर्ज्ञाते, अनिर्ज्ञातश्च बहुषु । द्व्येकयोः पुनर्निर्ज्ञातम् । निर्ज्ञातत्वाद् द्व्येकयोः परिप्रश्नो न

---

प्र०—ननु नैवोक्तत्वाद्विशिष्टस्य प्रमेयस्य तदन्तान्मात्रादयो न स्युः। यस्य हि तावत्प्रमाणं तस्य तत्प्रमाणमिति तावच्छब्दस्यैव तत्रापि प्रयोगः स्यात् ॥ सादृश्य इति । विषयनिर्देशोऽयं, सदृशस्तु प्रत्ययार्थः ॥ ३९ ॥

किमिदम् । एतदेवेति । आदेशविधानाऽन्यथानुपपत्त्या प्रत्ययोऽनुमीयते ॥ ४० ॥

किमः सङ्ख्या । बहुष्विति वक्तव्यमिति । का सङ्ख्या परिमाणमस्य वर्गस्येति यदा वर्गावयवगतसङ्ख्याविशेषविषयः प्रश्नस्तदा प्रत्ययः प्राप्नोति—कति वर्ग इति । तदा पञ्चक इत्याद्युत्तरेण भाव्यम् । तस्मादत्र प्रत्ययनिवृत्तये बहुष्विति वक्तव्यमिति भावः । किमित्येतदिति । इहाऽस्येत्यधिकाराद्यदीया सङ्ख्या पृच्छ्यते तत्रैव प्रत्ययेनोत्पत्तव्यम् । तत्र यदा वर्गावयवगतसङ्ख्याविशेषप्रश्नस्तदावयवेष्वेव प्रत्ययेन भाव्यं ननु व्यवहितसङ्ख्यासम्बन्धे वर्गे,

---

उ०—र्थकः, एवञ्च 'प्रस्थमात्र'मित्यादयः प्रयोगाः, मात्रचस्त्वविशेषेण परिच्छेदकमात्रे स्मरणादिति कैयटश्चिन्त्य एवेत्याहुः ॥ ३९ ॥

किमः संख्या ननु 'किया'निति न सङ्ख्याप्रश्नः, किन्तु परिमाणमात्रप्रश्नः, तत्प्रश्ने तु अत्राऽपि बहुवचनमेव 'कियन्त' इतीत्यत आह—का संख्येति । उत्तराशयमाह—इहेति । व्यवहितसंख्यासम्बन्धे इति । व्यवहितः प्रश्नविषयसंख्यया सम्बन्धो यस्येत्यर्थः । यथा प्रकृते वर्गोऽवयवद्वारा वर्गेण सम्बन्ध इति भावः । तत्र तदवयवसंख्याप्रश्ने यादृशप्रयोगस्तमाह—कति गावोऽस्मिन्निति । प्रकारान्तरमाह—कति

---

× अ० १ । १४२ । २ १—अयं सङ्ग्रहश्लोकः काचित्कः ।

भवति, परिप्रश्नाभावात्किमेव तावन्नास्ति कुतः प्रत्ययः ॥ ४१ ॥

## संख्याया अवयवे तयप् ॥ ५ । २ । ४२ ॥

इह कस्मान्न भवति—बहवोऽवयवा अस्याः सङ्ख्याया इति ? अवयवे या सङ्ख्येत्युच्यते न च काचित्सङ्ख्याऽस्ति यस्या बहुशब्दोऽवयवः स्यात् । ननु चेयमस्ति—सङ्ख्येत्येव । नैषा संख्या संज्ञैषा ।

### अवयवविधानेऽवयविनि प्रत्ययः ॥ १ ॥

अवयवविधानेऽवयंविनि प्रत्ययो भवतीति वक्तव्यम् । इह मा भूत्—पञ्चावयवाः दशावयवा इति ।

अथाऽवयविनीत्युच्यमानेऽवयवस्वामिनि कस्मान्न भवति—'पञ्च पश्ववयवा देवदत्तस्ये'ति । अवयवशब्दोऽयं गुणशब्दः, 'अस्ये'ति च वर्त्तते†, तेन यं प्रत्यवयवो

प्र०—तत कति गावोऽस्मिन्वर्ग इति भवति, कति गावोऽयं वर्ग इति वा सङ्ख्यसङ्ख्निोरभेदाविवक्षायाम् । कियानिति तु परिमाणोपाधौ प्रकृत्यर्थे प्रयुज्यते । सङ्ख्याप्रश्ने तु कियन्त इति बहुवचनान्तस्यैव प्रयोगः ॥ ४१ ॥

संख्याया । बहवोऽवयवा इति । उत्सृष्टभेदस्य सङ्ख्यालक्षणस्याऽर्थस्यैकत्वादीन्विशेषानवयवान्मत्वा प्रश्नः । अवयवे या सङ्ख्येति । अवयवे यः सङ्ख्यावाची शब्दो वर्त्तते तस्मादस्येत्यधिकारादवयविनि प्रत्ययो भवति । न च सामान्यविशेषयोरवयवावयविभावः संभवतीति भावः । बहुशब्द इति । बहुशब्दवाच्योऽर्थ इत्यर्थः । अथैवं कल्प्यते—बहव एकत्वगुणा अवयवा अस्य विंशतिसङ्ख्यायास्तत्समुदायस्वरूपायाः सा बहुतयी विंशतिरिति, तथापि प्रत्ययार्थस्य प्रकृत्यर्थो विशेषणमव्यभिचारादनुपपन्नम् । सङ्ख्येत्येवेति । सङ्ख्याशब्दवाच्या

उ०—गाव इति । असमस्तमेतत् । तदुपपत्तिमाह—सङ्ख्येति । किमेव तावन्नास्तीति—भाष्यस्य सङ्ख्याप्रश्नार्थको नास्तीत्यर्थः ॥ ४१ ॥

संख्याया अवयवे । ननु संख्याया बह्ववयवाऽसम्भवोऽत आह—उत्सृष्टेति । त्यक्तभेदस्येत्यर्थः । ननु तथोक्तावपि दोषस्तदवस्थोऽवयवे एव बहुशब्दस्य वृत्तेरत आह—अवयवे य इति । शब्दस्याऽवयवत्वाऽनुक्तेराह—शब्दवाच्य इति । एकत्वगुणा इति । एकत्वसङ्ख्यारूपा गुणा इत्यर्थः । अव्यभिचारादिति । विंशतिसङ्ख्याया बह्वेकत्वावयवकत्वाव्यभिचारादिति भावः । इदश्चिन्त्यं, तत्तद्द्रव्यसमुदायरूपत्वस्य विंशत्यादीनां पङ्क्त्यादिसूत्रे भाष्ये उक्तत्वेऽपि एकत्वसमूहरूपत्वे न मानम् । किञ्चैवं विंशतिर्गाव इत्याद्यसिद्धिरिति । संख्याविशेष इति । नियतपरिच्छेदहेतुर्हि सङ्ख्येति भावः । नाऽपि संख्यासंज्ञकत्वं

† अत इनिठनौ; तदस्यास्त्यस्मिन्निति मतुप् ५ । २ । ११५; ९४

गुणास्तस्मिन्नवयविनि प्रत्ययेन भवितव्यम् । कं च प्रत्ययवयवो गुणः ? समुदायम् । यद्येवमवयविनीत्यपि न वक्तव्यम् । अवयवेषु कस्मान्न भवति ? 'अस्ये'ति वर्त्तते‡ ॥ ४२ ॥

## उभादुदात्तो नित्यम् ॥ ५ । २ । ४४ ॥

किमर्थमुदात्त इत्युच्यते ? उदात्तो यथा स्यात् । नैतदस्ति प्रयोजनम् ।

प्र०—सङ्ख्यावयविनीत्यर्थः । नैषा सङ्ख्येति । सङ्ख्याविशेषो नाभिधीयत इत्यर्थः । संज्ञैषेति । एकत्वादीनां सङ्ख्यात्वजातियुक्तानां सङ्ख्येत्येषा संज्ञा । तत्र सङ्ख्याशब्दप्रतिपाद्यस्य सामान्यविशेषस्यावयवित्वासंभव इत्युक्तमेतत् । 'बहुतयं यूथ'मित्येतदवयवावयविभेदविवक्षायां भवति । 'बहुतयं रूप'मित्येतच्चित्रस्य रूपस्यावयवित्वविवक्षायां भवति । यदा तु रूपसामान्यं विवक्ष्यते शुक्लादिविशेषविषयं तदा सामान्यविशेषयोरवयवावयविभावाभावान्न भवति । अवयविनीति । स्वार्थे प्रत्ययो मा भूदित्येवमर्थमवयविनीति वक्तव्यम् । अवयवस्वामिनीति । अवयवाः सन्त्यस्येति व्युत्पत्त्या स्वामिनोऽप्यवयविशब्देनाभिधानात्तत्रापि प्रत्ययेन भाव्यमिति मत्वा प्रश्नः । अवयवशब्दोऽयमिति । सम्बन्धिशब्दान्नियत एव सम्बन्धिनि मत्वर्थीयो भवति । यथा 'पितृमा'निति पुत्र एवाभिधीयते, 'पुत्रवा'निति च पितैव । तथेहाऽप्यवयविशब्देनावयवारब्ध एवोच्यते न तु स्वामीत्यर्थः । अस्येति च वर्त्तत इति । 'अत इनिठना'वित्यत्र 'तदस्यास्त्यस्मिन्निति मतु'बित्यतोऽस्येति वर्त्तते । सप्तम्यर्थे त्विनिठनोरभावः । 'सप्तम्यां च न तौ स्मृता'विति वचनात् । अस्येति वर्त्तत इति । 'तदस्य संजात'मित्यतः ॥ ४२ ॥

उभा । 'उभयो मणि'रित्यवयविनोऽवयवद्वित्वनिमित्तो व्यपदेशः । उभौ पीतलोहितावयवौ यस्य स उभयः । उभये देवमनुष्या इति वर्गद्वयापेक्षमतिरोहितभेदानां वर्गिणामभिधानम् ।

उ०—सङ्ख्याशब्दस्येत्यपि बोध्यम् । सामान्यविशेषस्येति । संख्यात्वस्येत्यर्थः । तदाश्रयश्च एकत्वाद्यतिरिक्तो न कश्चिदिति भावः । चित्ररूपस्येति । तच्चाऽतिरिक्तं, समूहोऽतिरिक्त इति वा । अवयवे वर्त्तमानो यः संख्यासंज्ञकस्तस्मात्तयबित्यर्थ इति भावः । एतेन 'बहुशब्दस्य संख्यावाचकत्वाऽभावात्कथं तय'बित्यपास्तम् । भाष्ये—अवयवविधाने इति । अवयवे वर्त्तमानाद्विधाने इत्यर्थः । अर्थोऽनिर्देशादाह—स्वार्थे इति । अवयविशब्दस्य अवयवारब्धे एव प्रयोगादाह—अवयवा इति । 'कञ्च प्रत्ययवयवो गुणः ?' 'समुदाय'मिति भाष्येण अयुतसिद्धाऽवयवाऽनुगतस्तत्समूह एवाऽवयवीति ध्वनितम् । 'क्रियाञ्चे'ति सूत्रे स्पष्टमेवैतदुक्तम् । नन्वेवमपि सप्तम्यर्थे इनौ तदाधारभूम्यादावतिप्रसङ्गोऽत आह सप्तम्यर्थे त्विति ॥ ४२ ॥

उभादु । अयजन्तस्य यथैकवचनान्तत्वं तथा दर्शयति—उभय इति । एवञ्चैकस्याऽवयविनः प्राधान्यादेकवचननिर्देश इति भावः । 'उभये' इति बहुवचनोपपत्तिं दर्शयति—वर्गद्वयेति । द्विवचनन्तु न,

‡ तदस्य संजातं तारकादिभ्य इतच् ५ । २ । ३६

प्रत्ययस्वरेणाऽप्येष स्वरः सिद्धः* । न सिध्यति । 'चितोऽन्त उदात्तो भवती'त्यन्तोदात्तत्वं प्रसज्येत† ।

अथोदात्त इत्युच्यमाने कुत एतदादेरुदात्तत्वं भविष्यति न पुनरन्तस्येति ? उदात्तवचनसामर्थ्याद्यस्याऽप्राप्तः स्वरस्तस्य भविष्यति । कस्य चाऽप्राप्तः ? आदेः । अन्तस्य पुनश्चित्स्वरेणैव सिद्धम् ॥ ४४ ॥

## तदस्मिन्नधिकमिति दशान्ताड्डः ॥ ५ । २ । ४५ ॥

इह कस्मान्न भवति—एकादश माषा अधिका अस्मिन्कार्षापणशत इति ?

प्र०—किमर्थमिति । किमप्राप्तमादेरुदात्तत्वं विधातुमुदात्तवचनमुतामन्त्रितस्वरबाधनार्थमन्तस्यैवोदात्तत्वं विधातुमिति प्रश्नः । उदात्त इति । आदेरिति भावः । स्थानिवद्भावात्पित्त्वादनुदात्तत्वं प्राप्तं बाधित्वा चित्स्वरे प्राप्ते आदेरुदात्तत्वं विधीयते । प्रत्ययस्वरेणापीति । स्थानिवद्भावात्प्रत्ययत्वात् । चित्स्वरं तु पूर्वपक्षवादित्वान्न पश्यति । सर्वदर्शित्वे पूर्वपक्षमेव न विदधीत । कुत एतदिति । स्वरान्तरबाधनार्थमन्तस्यैवोदात्तत्वमस्त्विति मन्यते । हे उभयेत्यामन्त्रिताद्युदात्तत्वप्रसङ्गः । उदात्तेति । 'पुरस्तादपवादा अनन्तरान्विधीन्बाधन्त' इति चित्स्वर एवानेन बाध्यते नामन्त्रितस्वरः ॥ ४४ ॥

तदस्मिन्न । अधिके समानजाताविति । समाना या जातिस्तस्यां सत्यामधिकेऽर्थे वर्त्तमानात्प्रत्ययः । प्रकृतिप्रत्ययार्थयोस्तुल्यजातीयत्वे प्रत्यय इत्यर्थः । न्यायप्राप्तएवायमर्थ-

उ०—अनभिधानात् । तिरोहिताऽवयवभेदवर्गद्वयाऽभिधाने हि तत्सम्मतः । पूर्वपक्षवादित्वादिति । 'अये'ति प्रत्ययान्तरं विधेयं, ङीप्तु मात्रजितिप्रत्याहाराश्रयणात्सिध्यतीत्याशयः । प्रत्ययान्तरविधाने गौरवं मन्यमानआह—चितोऽन्त इति—इत्याशयमाह कश्चित् । हे उभयेति । 'हे'शब्दाऽप्रयोगे इदमुदाहरणम् । तत्प्रयोगे तु पदात्परत्वेनाष्टमिकनिघातप्रसङ्ग इति चिन्त्यम् । नामन्त्रितस्वर इति । ननूभशब्दस्य 'उभे भद्रे' इत्यादिप्रयोगादन्तोदात्तत्वमावश्यकम्, एवञ्च चित्त्वादन्तोदात्तत्वेऽकारस्याऽनुदात्तत्वाद्यस्येतिलोपेऽनुदात्तस्य च यत्रेत्यनेनाद्युदात्तत्वसिद्धेरुदात्तग्रहणं व्यर्थमेवेतिचेन्न; प्रकृतेरपि शेषनिघातेनाऽनुदात्तत्वात् । न चोभात्—'अय' इति निरनुबन्धकं प्रत्ययान्तरमस्तु किमुदात्तग्रहणेनेति वाच्यं, पदलाघवाऽभावात् । एतेन—'उभात्—अय इति निरनुबन्धकादेशान्तरमस्तु, तस्यान्तरतम्येनाऽनुदात्तत्वात्, उभयशब्दस्याऽन्तोदात्ततयाऽनुदात्तस्य चेत्यनेनाऽद्युदात्तत्वसिद्धेरुदात्तग्रहणं व्यर्थमेवे'ति परास्तम् ॥ ४४ ॥

तदस्मिन्न । प्रत्ययार्थापेक्षया समानजातीये प्रकृत्यर्थेऽधिके सति प्रत्यय इत्यर्थस्तदाह—समानायेति । न्यायेति । प्रत्यासत्तिन्यायेत्यर्थः । शब्दान्तरेति । 'शब्दान्तरप्रयोगमन्तरेणाऽपी'त्यपिघटितः पाठोऽ-

* आद्युदात्तश्च ३ । १ । ३   † चितः ६ । १ । १६३

**अधिके समानजातौ**

समानजातावधिक इष्यते ॥ अथेह कस्मान्न भवति—एकादश कार्षापणा—अधिका अस्यां कार्षापणत्रिंशतीति ?

**इष्टं शतसहस्रयोः ।**

शतसहस्रयोरधिक इष्यते ॥ अथेहैकादशं शतसहस्रमिति कस्याधिक्ये भवितव्यम् ?

**यस्य सङ्ख्या तदाधिक्ये डः कर्त्तव्यो मतो मम ॥**

यदि तावच्छतानि सङ्ख्यायन्ते शताधिक्ये भवितव्यम् । अथ सहस्राणि सङ्ख्यायन्ते सहस्राधिक्ये भवितव्यम् ।

**डविधाने परिमाणशब्दानामाधिक्यस्याऽधिकरणाभावादनिर्देशः ॥ १ ॥**

डविधाने परिमाणशब्दानामाधिक्यस्याऽधिकरणाभावादनिर्देशः । अगमकोनिर्देशोऽनिर्देशः । न ह्येकादशानां शतमधिकरणम् ।

प्र०—उक्तः । तथा ह्येकादशाधिका अस्मिन् गोशत इति वाक्ये शतविशेषणत्वेनाऽप्युपात्ता गावः संनिधानात्प्रकृत्यर्थमपि विशिंषन्ति । एवं वृत्तावपि 'एकादशं गोशत'मित्युक्ते गावः प्रकृत्यर्थतया प्रतीयन्ते । शब्दान्तरप्रयोगमन्तरेणाऽप्यधिकाधिकिभावस्तुल्यजातिविषय एव प्रसिद्धः । न च वृत्तौ भिन्नजातीयसङ्ख्येयवाचिना शब्देन प्रकृत्यर्थो विशेष्टुं शक्यते, 'सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणं ने'ति न्यायात् । यस्य सङ्ख्येति । 'शतानां सहस्रं शतसहस्र'मिति व्युत्पत्तिः क्रियते, 'सहस्राणां शतं शतसहस्र'मिति च । 'सङ्ख्याया अल्पीयस्या' इति द्वन्द्वे चाऽद्वन्द्वे च स्मरणाच्छतस्य पूर्वनिपातः । तत्र शतानां सहस्रमिति शतानि सङ्ख्यायन्त इति तान्येव प्रकृत्यर्थतया विज्ञायन्ते—'एकादश शतान्यधिकान्यस्मिन्शतसहस्रे तदेकादशं शतसहस्र'मिति । 'सहस्राणां शतं शतसहस्र'मिति तु सहस्राणां सङ्ख्येयत्वात्तेषामेव प्रकृत्यर्थत्वम्—एकादश सहस्राण्यधिकान्यस्मिन्नेकादशमिति प्रकरणादिवशाच्छतानां सहस्राणां वा सङ्ख्येयत्वाव-

उ०—पपाठः । तत्प्रयोगे तु शब्दतः सन्निहितेन तेनाऽर्थतः सन्निहितं सजातीयं बाध्यते, यथोदाहृते 'एकादश माषा' इत्यादौ । न च तत्र वृत्तिः सम्भवतीत्याह—न चेति । सविशेषणानामिति । इदमुपलक्षणं—सविशेष्याणामित्यस्यापि । अन्यथा प्रकृते माषाणां विशेष्यत्वात्तदसङ्गतिः स्पष्टैव । वस्तुतः प्रत्यासत्तिन्यायविरोधादनभिधानाच्च न तथा प्रयोग इति तत्त्वम् । अत एव भाष्ये 'इष्यत' इत्युक्तिः । भाष्ये—कार्षापणत्रिंशतीति—सप्तमी । उत्तरमाह—इष्टं शतेति । 'कस्याधिक्ये'इति पाठः । प्रत्ययार्थेनेति । 'अस्मि'न्नित्यनेनेत्यर्थः । भाष्ये—परिमाणशब्दानां-शतसहस्ररूपाणाम्, अधिकस्याऽधिकरणाऽभावात्-तत्त्वाऽभावात्-अनिर्देश इत्यर्थः । अनन्तर्भावादिति । अन्तर्भावे हि 'वृक्षे शाखा' इतिवत्स्यादधिकरणत्वमिति भावः । औपश्लेषिकमिति । उप-समीपे श्लेषः सम्बन्धः तत्कृतमित्यर्थः । एवञ्चेति । अत एवैतन्निर्देशोपपत्तिः ।

## सिद्धन्तु पञ्चमीनिर्देशात् ॥ २ ॥

सिद्धमेतत् । कथम् ? 'पञ्चमीनिर्देशात्' । पञ्चमीनिर्देशः कर्त्तव्यः—'तदस्मादधिक'मिति ॥ स तर्हि पञ्चमीनिर्देशः कर्त्तव्यः ? न कर्त्तव्यः । यद्यपि तावदव्यापके वैषयिके वाऽधिकरणत्वे संभवो नास्ति—औपश्लेषिकमधिकरणं विज्ञास्यते—एकादश कार्षापणा उपश्लिष्टा अस्मिञ्छत एकादशं शतम् ॥ ४५ ॥

अधिके समानजाताविष्टं शतसहस्रयोः ।
यस्य सङ्ख्या तदाधिक्ये डः कर्त्तव्यो मतो मम ॥

## शदन्तविंशतेश्च ॥ ५ । २ । ४६ ॥

किमर्थं शद्ग्रहणेऽन्तग्रहणम् ?

**शद्ग्रहणेऽन्तग्रहणं प्रत्ययग्रहणे यस्मात्स तदादेरधिकार्थम् ॥ १ ॥**

शद्ग्रहणेऽन्तग्रहणं क्रियते । 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणं भवती'तीह न प्राप्नोति—एकत्रिंशं शतम् । इष्यते चाऽत्रापि स्यादिति,—तच्चा-

प्र०—सायः । 'यस्य सङ्ख्या तदाधिक्ये'इत्येतत्प्रत्ययार्थेन तुल्यजातीयस्य प्रकृत्यर्थस्याश्रयणाल्लभ्यत इति नायमपूर्वार्थः । न ह्येकादशानामिति । तेषां शतेऽनन्तर्भावादिति भावः । पञ्चमीनिर्देश इति । 'यस्मादधिक'मिति निपातनाद्बुद्धिप्रकल्पितापायाश्रयणाद्वा पञ्चमी । औपश्लेषिकमिति । एवं चाधिकसम्बन्धे पञ्चमीसप्तम्यौ भवतः । 'अधिका खारी द्रोणेने'ति कर्त्तरि तृतीयाऽपि भवति ॥ ४५ ॥

शदन्त । अन्तग्रहणमिति । केवलस्य शतः प्रातिपदिकस्याऽसंभवात्प्रत्ययग्रहणपरिभाषया वा तदन्तविधिर्भविष्यतीति प्रश्नः । सङ्ख्याग्रहणं चेति । 'सङ्ख्याया अवयवे तय'-

उ०—कर्त्तरि तृतीयेति । अधिकशब्दार्थान्तर्गताऽध्यारोहणक्रियायाञ्चाऽन्वय इति भावः । एवं च षष्ठीव्यावृत्तये 'कर्त्तृकर्मणो'रिति सूत्रे कृद्ग्रहणस्यावश्यकत्वेन तत्सूत्रस्थभाष्यमसङ्गतं स्यात् । तस्मादुपश्लिष्टा इति क्रियापेक्षमधिकरणत्वमिति भाष्याशयः । कर्त्तृद्वारा चेदमधिकरणं, कर्त्रा चेदमुपश्लिष्टमिति । तृतीया तु प्रकृत्यादित्वादत्रेति तत्त्वम् । तद्ध्वनयन्नाह भाष्ये—एकादश कार्षापणा उपश्लिष्टा अस्मिन् शत इति ॥ ४५ ॥

शदन्त । ननु 'ग्रहणवते'ति निषेधाद्शान्तादितिवदिदमप्यन्तग्रहणमत आह—केवलस्येति । एवञ्च प्रातिपदिकग्रहणाऽभावान्न निषेधप्रवृत्तिरिति भावः । प्रत्ययग्रहणपरिभाषया वेति । सामर्थ्यपेक्षो विकल्पः । त्रिंशदादिषु निपातनाड्डप्रत्ययः । नन्वेकत्रिंशदादयोऽपि सङ्ख्यासमूहवाचका न सङ्ख्यावाचका इति तेभ्यः प्रत्ययाऽनुपपत्तिरत आह—एकत्रिंशदादय इति । सङ्ख्यान्तरस्य समूहविशेषरूपस्येत्यर्थः ।

१—कारिकेयमिह कीलहार्नसंस्करणे न दृश्यते ।

न्तरेण यत्नं न सिध्यतीत्यन्तग्रहणम् । एवमर्थमिदमुच्यते ।

अस्ति प्रयोजनमेतत् ? किं तर्हीति ।

**सङ्ख्याग्रहणं च ॥ २ ॥**

सङ्ख्याग्रहणञ्च कर्त्तव्यम् । इह मा भूत्—गोत्रिंशदधिकाऽस्मिंशच्छत इति ।

**विंशतेश्च ॥ ३ ॥**

विंशतेश्चाऽन्तग्रहणं कर्त्तव्यम् । इहाऽपि यथा स्यात्—एकविंशं शतम् । चकारात्सङ्ख्याग्रहणं च कर्त्तव्यम् । इह मा भूत्—गोविंशतिरधिकाऽस्मिंच्छत इति ॥ ४६ ॥

## सङ्ख्याया गुणस्य निमाने मयट् ॥ ५ । २ । ४७ ।

**निमाने गुणिनि ॥ १ ॥**

'निमाने गुणिनी'ति वक्तव्यम् । किं प्रयोजनम् ? गुणेषु मा भूत् ।

---

प्र०—वित्यतः 'सङ्ख्याया' इत्यनुवर्त्तत इति व्याख्यानं कर्त्तव्यमित्यर्थः । एकत्रिंशदादयश्च शब्दाः सङ्ख्यान्तरस्य नरसिंहादय इव जात्यन्तरस्य वाचका न तु सङ्ख्यासमूहस्य । त्रिंशतेश्चेति । ग्रहणवतेति तदन्तविधिनिषेधात्तदन्तादपि यथा स्यादिति वचनम् ॥ ४६ ॥

सङ्ख्यायाः । 'तदस्य सञ्जात'मित्यतस्तदस्येत्यनुवर्त्तते । 'मेङ् प्रणिदाने' इत्यस्माद्धातोः करणे ल्युटि निमानशब्दः, स च मूल्यवाची । प्रकृत्यर्थविशेषणं चैतत् । निमाने वर्त्तमानात्सङ्ख्यावाचिनोऽस्येति षष्ठ्यर्थे मयट् प्रत्ययो गुणस्य चेन्निमानं भवति । गुणशब्दः समानावयववचनः । निमानस्य निमेयापेक्षत्वान्निमेयं प्रत्ययार्थः संपद्यते । निमानस्य च गुणत्वमन्तरेण निमेयस्य गुणत्वं नोपपद्यते इति सामर्थ्यान्निमानस्यापि गुणत्वं विज्ञायते । 'यवानां द्वौ भागौ निमानमस्योदश्विद्भागस्य द्विमयमुदश्विद्यवाना'मित्युदाहरणम् । भागविशेषप्रतिपत्त्यर्थं यवादेः प्रकृत्यर्थविशेषस्योपादानं नित्यसापेक्षत्वाच्च वृत्तिर्भवति । सङ्ख्येति किम् ? 'यवभागौ निमानम-

---

उ०—न तु सङ्ख्यासमूहस्येति । त्रिंशत्त्वैकत्वसमूहस्येत्यर्थः । अत एव 'नान्तादसंख्यादे'रिति चरितार्थम् । ननु विंशतिशब्दोत्तरमन्तग्रहणे व्यपदेशिवद्भावनिषेधात्केवलेऽप्राप्ताविहापीति भाष्येऽपिशब्दोऽनुपपन्न इति चेन्न; 'अन्तग्रहणं कर्त्तव्य'मित्यस्य 'तदन्ताच्चे'ति वक्तव्यमित्यर्थात् ॥ ४६ ॥

संख्याया गुण । स्पष्टप्रतिपत्तये सूत्रार्थं पदप्रयोजनानि चाह—तदस्येत्यादि । समानाऽवयववचन इति । 'द्विगुणं' 'त्रिगुण'मित्यादौ तथा दर्शनात् । व्याख्यानञ्चाऽत्र शरणम् । सामर्थ्यादिति । गुणत्वं—समानाऽवयवत्वम् । तद्घटकसमानत्वं निमेयस्य किमपेक्षमित्याकाङ्क्षायां सन्निधानान्निमानाऽपेक्षमिति सामर्थ्यान्निमानस्याऽपि भागत्वमर्थसिद्धमिति भावः । केचित्तु—'गुणस्ये'ति मध्यमणिन्यायेनोभयाऽन्वयि, तेन गुणस्य निमाने वर्त्तमानाद्गुणगतसङ्ख्यावाचकात्प्रत्यय इत्यर्थमाहुः । भागविशेषेति । भागिविशेषसम्बन्धिभाग-

## भूयसः ॥ २ ॥

भूयस इति च वक्तव्यम् । किं प्रयोजनम् ? भूयसो वाचिकायाः सङ्ख्याया उत्पत्तिर्यथा स्यादल्पीयसो वाचिकायाः सङ्ख्याया उत्पत्तिर्मा भूदिति ।

## एकोऽन्यतरः ॥ ३ ॥

'एकश्चेदन्यतरो भवती'ति वक्तव्यम् । इह मा भूत्—'द्वौ यवानां त्रय उदश्वित' इति ।

## समानानाम् ॥ ४ ॥

समानानां चेति वक्तव्यम् । इह मा भूत्—'एको यवानामध्यर्द्धमुदश्वित' इति ।

तत्तर्हीदं बहु वक्तव्यम् ? न वक्तव्यम् । यत्तावदुच्यते—'गुणिनीति वक्तव्य'-मिति, न वक्तव्यम् । गुणेषु कस्मान्न भवति ? 'अस्येति' वर्त्तते† ।

प्र०—स्योदश्विद्भागस्य' । गुणस्येति किम् ? 'द्वौ कार्षापणौ निमानमस्य व्रीहेर्द्विमयो व्रीहिः कार्षापणयो'रिति माभूत् । निमान इति किम् ? 'यवानां द्वौ भागौ समीपेऽस्योदश्विद्भागस्ये'त्यत्र माभूत् । गुणिनीति । 'द्विमयमुदश्वि'दिति गुणिनि निमेये प्रत्ययो यथा स्यादित्येवमर्थम् । गुणेषु मा भूदिति । स्वार्थे मा भूदित्येवमर्थमिमर्थ । अन्यथा 'द्वौ यवानां गुणौ निमानमस्योदश्विद्भागस्य द्विमयौ यवानामुदश्वित' इति स्वार्थे मयट् प्रयुज्येत । भूयस इति । निमेयभागसङ्ख्यया निमानभागसङ्ख्या यदाधिका भवति तदा प्रत्ययो यथा स्यादेको यवभागो निमानमस्योदश्विद्भागस्येत्यत्र मा भूदिति । एकोन्यतर इति । अन्यतरशब्देन निमेयमेव विवक्षितम् । एक एव यदि निमेयगुणो भवति तदा प्रत्ययः, द्वयोर्बहुषु च निमेयगुणेषु न भवति । द्वौ यवानां त्रय उदश्वित इति । नन्वत्र भूयस्त्वाभावान्न भविष्यति, एवं तर्हि उदाहरणदिगियम्, इदन्त्वत्रोदाहरणं—त्रयो यवानां द्वावुदश्वित-इति । अथवा 'द्वौ यवानां निमेयौ त्रय उदश्वितो भागा निमान'मिति विवक्षायामुदाहरणम् ।

उ०—विशेषेत्यर्थः । नित्यसापेक्षत्वादिति । वृत्तौ द्व्यादीनां भागरूपसङ्ख्येय एव वृत्तेरिति भावः । गमकत्वाद्वृत्तिरिति युक्तम् । 'तदस्मिन्नधिक'मित्यनेन विच्छेदात्तदस्येति नाऽनुवर्त्तत इत्यभिप्रेत्य वार्त्तिकं—गुणिनीति । निमेये इत्यर्थः । गुणेषु मा भूदिति । निमानरूपेषु इत्यर्थः । तदाह—स्वार्थे इति । 'भूयस' इत्युक्तेर्द्विमयमिति न स्यात्, भूयस्त्वञ्च किमपेक्षं ग्राह्यमत आह—निमेयेति । यदाऽधिकेति । आधिक्यमात्रं विवक्षितं न तु बहुत्वं नाऽप्यतिशय इत्यर्थः ।

निमानेऽधिकत्वस्योक्तत्वात्सामर्थ्यमवलम्ब्याह—अन्यतरशब्देनेति । 'द्वौ भागौ यवानां निमानमुदश्वितस्त्रयो भागा निमेय'मित्यर्थं मत्वा शङ्कते—नन्विति । निमाननिमेयभावस्य वैपरीत्ये तु न शङ्केति बोध्यम् । भाष्ये—समानाञ्चेति । निमेयभागस्य येन केनापि निमानभागेन समानत्वे सति यदा निमेय-

१—'अध्यर्द्ध उदश्वित'इति पा० । † तदस्य संजातं तारकादिभ्य इतच् ५ । २ । ३६

यदुक्तं—'भूयस इति वक्तव्य'मिति, न वक्तव्यम् । अल्पीयसो वाचिकायाः सङ्ख्याया उत्पत्तिः कस्मान्न भवति ? अनभिधानात् ।

यदुक्तमेकश्चेदन्यतरो भवतीति वक्तव्यमिति, न वक्तव्यम् । कस्मान्न भवति—'द्वौ यवानां त्रय उदश्वित'इति ? तन्त्रं विभक्तिनिर्देशः ।

यदप्युच्यते—'समानानामिति वक्तव्य'मिति, न वक्तव्यम् । कस्मान्न भवति—'एको यवानामध्यर्द्धमुदश्वित' इति ? अनभिधानात् ।

**निमेये चाऽपि दृश्यते ।**

निमेये चाऽपि प्रत्ययो दृश्यते । द्विमया यवाः । त्रिमयाः ।। किं पुनरिह निमानं किं निमेयं, यावतोभयं त्यज्यते ? सत्यमेवमेतत् । क्वचित्तु काचित्प्रसृततरा गतिर्भवति । तद्यथा,–समाने त्यागे 'धान्यं विक्रीणीते' 'यवान्विक्रीणीते' इत्युच्यते,

प्र०—एको यवानामध्यर्द्धमुदश्वित इति । 'भूयस' इत्येतदनपेक्ष्येदमुदाहरणम् । तदपेक्षायां तु 'द्वौ यवानामध्यर्द्धमुदश्वित'इत्युदाहार्यम् । अन्ये त्वध्यर्द्धशब्दात्प्रत्ययनिवृत्त्यर्थमिदमुदाहरणमित्याहुः । तदयुक्तम् । अध्यर्द्धशब्दस्य समासकनोरेव सङ्ख्यासंज्ञात्वादन्यत्र संख्यात्वाभावात् प्रत्ययाऽप्रसङ्गात् । अध्यर्द्धपञ्चमादयोऽपि समासकनोरेव सङ्ख्यासंज्ञा नान्यत्रेति तेभ्योऽपि प्रत्ययाऽप्रसङ्गः । अस्येति वर्त्तत इति । ततः स्वार्थे मयण्न भवति । किं तर्हि ? निमेये क्षीरादौ स्वभागापेक्षया लब्धगुणव्यपदेशे । निमेयगुणमात्रे तु प्रत्ययो न भवति, अनभिधानात् । तन्त्रमिति । 'पशुना यजेते'त्यादिवद्गुणस्येत्येकत्वसङ्ख्या विवक्षिता । एतदर्थमेव 'गुणनिमाने' इति लघुरपि समासनिर्देशो न कृतः । अनभिधानादिति । अन्यूनाधिकैकगुणमुदश्विदादिनिमेयं वक्तुं प्रत्ययान्तरस्य सामर्थ्यादित्यर्थः । द्विमया यवा इति । उदश्वितो द्वौ गुणौ निमेयौ येषामेकगुणानां यवानां ते द्विमयाः । यावतेति । तथा च निमेयस्यापि निमानत्वान्निमेये चापि दृश्यत इति न वक्तव्यमिति मन्यते । प्रसृततरा गतिरिति । आशु द्रागिति प्रतिपत्तिरित्यर्थः । अथवेति ।

उ०—सङ्ख्या निमानसङ्ख्यातोऽधिका तदा प्रत्यय इत्यर्थः । अन्ये त्विति । पूर्वोक्ताऽथवेति प्रकाराऽनुसारेणेति भावः । सङ्ख्यात्वाऽभावादिति । एतेन 'एको यवानामर्द्धमुदश्वित इति भाष्ये पाठ' इत्यपास्तम् । ननूदाहरणे 'द्विमयमुदश्वि'दित्युक्तं, 'द्विमय उदश्विद्भाग' इत्येवोचितमत आह—निमेयगुणमात्रे त्विति । निमेये भागमात्रे इत्यर्थः । भाष्ये—तन्त्रमिति । विधेयगतत्वाऽभावेऽपि लक्ष्याऽनुसाराद्विवक्षा, ग्रहैकत्ववदविवक्षाकारणाऽभावाच्चेति भावः । अन्यूनेति । अन्यूनाऽधिकैकभागकमुदश्विदादिरूपं निमेयम् । निमेयभागकमेव वक्तुं सामर्थ्यं तस्य, न तु तं भागं वक्तुमित्यर्थः । भाष्ये—उभयं त्यज्यत इति । तदीयमुपादाय स्वीयं दीयत इत्यर्थः । एवञ्च स्ववस्तुदानपूर्वकं परवस्तूपादानस्योभयसाधारणत्वादुभयं निमानमिति भावः । आशु द्रागिति । अत्याशित्यर्थः । तदर्थमपि व्याख्यातुं पर्यायद्वयोपादानम् । एवञ्च हट्टे लाभार्थिभिर्यद्दीयते

न कश्चिदाह—'कार्षापणं विक्रीणीते' इति । अथवा येनाऽधिगम्यते तन्निमानं, यदधिगम्यते तन्निमेयम् ॥ ४७ ॥

## तस्य पूरणे डट् ॥ ५ । २ । ४८ ॥

### तस्य पूरण इत्यतिप्रसङ्गः ॥ १ ॥

तस्य पूरण इत्यतिप्रसङ्गो भवति । इहापि प्राप्नोति—'पञ्चानामुष्ट्रिकाणां पूरणो घट' इति ।

### सिद्धन्तु सङ्ख्यापूरण इति वचनात् ॥ २ ॥

सिद्धमेतत् । कथम् ? सङ्ख्यापूरण इति वक्तव्यम् । एवमपि घटे प्राप्नोति सङ्ख्येयं ह्यसावद्भिः पूरयति । सङ्ख्यापूरण इति ब्रूमो न ब्रूमः सङ्ख्येयपूरण इति ।

प्र०—येन मूल्येन करणेन क्रय्यं प्राप्तुमिष्यते तन्निमानं, यत्प्रेप्स्यते तन्निमेयमित्यर्थः । देशकालापेक्ष्यव्यवहारापेक्षत्वान्निमाननिमेयभावस्य ॥ ४७ ॥

तस्य पूरणे डट् । तस्येति सम्बन्धमात्रं विवक्षितं नैकत्वम् । न ह्येकस्य पूरणं संभवतीति द्व्यादिभ्य एव द्विवचनबहुवचनान्तेभ्यः प्रत्ययविधिः । तस्य पूरण इत्यतिप्रसङ्ग इति । 'सङ्ख्यावाचिनः शब्दात्पूरणे डट्प्रत्यय' इत्येतावानेव सूत्रार्थः । तथा च लब्धपञ्चत्वसङ्ख्यानां सङ्ख्येयानामुष्ट्रिकादीनां पूरणे घटे प्रत्ययोऽनिष्टः प्राप्नोति । एवमपीति । आधारधर्मेण पूरणेनाऽऽधेयायाः सङ्ख्यायास्तद्द्वारेणासंस्पर्शादिति भावः । सङ्ख्यापूरण इति ब्रूम इति । द्वे सङ्ख्याग्रहणे अनुवर्तेते । तत्रैकं प्रकृतिविशेषणमपरं पूरणविशेषणम् । ततश्च येन पञ्चत्वादिसङ्ख्या संपद्यते स प्रत्ययार्थः । अथवैकस्मिन्नेव सङ्ख्याग्रहणेऽनुवर्त्तमाने प्रत्यासत्त्या सङ्ख्यापूरण एव प्रत्ययो भवति न तु विप्रकृष्टे पञ्चत्वादिसङ्ख्यासङ्ख्येयेऽनन्तर्भूते ।

उ०—तन्निमेयम्, तन्मूल्यं निमानमित्याद्यपन्नार्थः । यदपेक्षितं तन्निमेयं, येन च तत्प्राप्यं तन्निमानमित्यर्थवेतादेरर्थः । एवञ्च निमेयत्वाद्यनियतमित्याह—देशेति । देशकालाऽपेक्षो यः क्रयविक्रयव्यवहारस्तदपेक्षत्वादित्यर्थः । एवञ्च यदा यन्निमेयं, तदाऽपि तस्मिन्प्रत्ययदर्शनान्निमेये चाऽपीत्यावश्यकमिति भावः ॥ ४७ ॥

तस्य पूरणे । 'गुणस्ये'त्यत्रेव सङ्ख्याविवक्षाभ्रमं व्यावर्त्तयति—सम्बन्धमात्रमिति । नन्वेकत्वमिति तद्विवक्षायां कुतश्चिदेव प्रत्ययः स्यान्न सर्वत इति तदविवक्षेति भावः ।

युक्त्यन्तरमाह—न हीति । ननु सङ्ख्या—त्र्यादिसङ्ख्याव्याप्यकधर्मान्यतरवाचकात्पूरणे प्रत्यय इत्युक्ते प्रत्यासत्त्या सङ्ख्याया इति गम्यते, तत्कथमतिप्रसङ्गोऽत आह—सङ्ख्यावाचिन इति । प्रत्यासत्त्या हि प्रकृत्यर्थपूरणे इत्येव लभ्येतेति भावः । उष्ट्रिका—चर्मविकारः पात्रविशेषो, मृण्मयो वा, यद्घटमितेनोदकेन पञ्चताः पूर्यन्त इत्यर्थः । ननु 'संख्यापूरण' इत्युक्तेः संख्येयपूरणे कथं प्रसङ्गोऽत आह—आधारेति ।

१—उष्ट्रिका चर्मविकारः, पात्रविशेषो मृण्मयो वा । 'मसक' 'लोट' 'कुंजा' इति भाषायाम् ।

## यस्य वा भावादन्यसङ्ख्यात्वं तत्र ॥ ३ ॥

अथवा यस्य भावादन्या सङ्ख्या प्रवर्त्तते तत्रेति वक्तव्यम् ॥ एवमपि द्वितीयेऽध्याये अष्टम इति प्राप्नोति, सर्वेषां हि तेषां भावात्सङ्ख्या प्रवर्त्तते । चरमोपजाते पूर्वस्मिंश्चाऽनपगते इति वक्तव्यम् ।

एवमपि 'एकादशीद्वादश्यौ सौविष्टकृती' 'इदं द्वितीयमिदं तृतीयम्' 'दश दशमानी'ति न सिध्यति । सूत्रं च भिद्यते ।

प्र०—यस्य वेति । न्यासान्तरं वा कर्त्तव्यमित्यर्थः । तेन पञ्चत्वसङ्ख्या भवत्यनेनेत्यत्रार्थे पञ्चम इति भवति । एवमपीति । प्रसिद्धसंनिवेशविशेषस्य ग्रन्थस्य यो द्वितीयोऽध्यायो यथेह 'समर्थः पदविधि'रित्यादिस्तस्याप्यष्टमशब्देनाऽभिधानं प्राप्नोति, तद्भावेऽष्टत्वसङ्ख्याया भावात्तदभावेऽभावात् । द्वितीयग्रहणं चोपलक्षणं, न्यायस्य तुल्यत्वात्प्रथमाध्यायादावप्यष्टमाद्यभिधानप्रसङ्गात् । यदा तु व्युत्क्रमेण गणना क्रियते तदा द्वितीयोऽध्यायः पश्चाद्गण्यमानोऽष्टमादिव्यपदेशत्वेनेष्यत एव । तथा च भाष्यकारो वक्ष्यति—भवत्येवेति । पूरणग्रहणे तु क्रियमाणे चरमोपजातस्य गणनापेक्षायां पूरणत्वात्संनिवेशमात्रापेक्षया द्वितीयेऽष्टमव्यपदेशाभावः । द्वितीयं न्यासान्तरमाह—चरमोपजात इति । गणनायां क्रियमाणायां पूर्वस्मिन्सङ्ख्येयेऽनपगते—बुद्ध्या परिगृहीतत्वादपेक्षिते यद्बुद्धौ पश्चादुपजायते तत्र प्रत्यय इत्यर्थः ।

एकादशीद्वादश्याविति । द्वादशीसंनिधावेकादश्याश्चरमोपजातत्वाभावः । एवं तृतीयसंनिधौ द्वितीयस्य चरमत्वाभावः । दश दशमानीति । शततमस्यैव चरमोपजनात्रवानां दशमानां चरमत्वाभावः । सूत्रं चेति । न च केवल व्याप्तिदोषो यावत्सूत्रभेदोऽपीति 'च'शब्दस्यार्थः । एवं तर्हीति । वृत्तिः परार्थाभिधानमुच्यते । उपसर्जनपदानां प्रधानार्थाभिधानात् । तदयमर्थः—

उ०—'सङ्ख्यापूरणे' इत्यस्य 'सङ्ख्याबोधकशब्दबोध्यपूरण' इत्यर्थ इत्याशय इत्यन्ये । नेदमपूर्वमित्याह—द्वे इति । 'सङ्ख्याया अवयवे' इत्यतः, 'सङ्ख्याया गुणस्ये'त्यतश्च । तत्रैकमिति । सङ्ख्याबोधकाच्छब्दात्षष्ठ्यन्तात्तदर्थं सङ्ख्यापूरणे डडिति सूत्रार्थं इति भावः । प्रत्यासत्त्येति । प्रवृत्तिनिमित्तसङ्ख्यापूरणे तत्सङ्ख्येयभूते एव प्रत्ययो न तु सत्सङ्ख्यासङ्ख्येयाऽनन्तर्भूते पूरणे इत्यर्थः ।

भाष्ये—अन्यसङ्ख्यत्वमिति—बहुव्रीहिस्त्वः । अन्या सङ्ख्येत्यर्थः । ननु व्युत्क्रमेण गणने तस्याऽप्यष्टमत्वमिष्टमेवेत्यत आह—प्रसिद्धेति । यो द्वितीय इति । प्रसिद्धसन्निवेशक्रमीयगणनाक्रमेणेत्यर्थः । एवञ्च न्यासान्तरमपि दुष्टमित्यत्र तात्पर्यम् । अष्टमादिव्यपदेश्यत्वेनेति । तच्छब्दव्यवहार्यत्वेनेत्यर्थः । 'अष्टमादिव्यपदेशत्वेने'ति पाठे बहुव्रीहिस्त्वः । यथान्यासे तु नाऽयं दोष इत्याह—पूरणग्रहणे त्विति । प्रथमत्वादिना या गणना तदपेक्षायां पूर्वस्मिन् बुद्धिस्थे एव यश्चरममुपजातस्तस्यैव पूरणत्वमित्यर्थः ।

यथान्यासमेवाऽस्तु । ननु चोक्तं—'तस्य पूरणे इत्यतिप्रसङ्ग' इति । परिहृतमेतत्—'सिद्धन्तु सङ्ख्यापूरणे इति वचना'दिति । तत्तर्हि सङ्ख्याग्रहणं कर्त्तव्यम् ? न कर्त्तव्यम्—प्रकृतमनुवर्त्तते । क्व प्रकृतम् ? 'सङ्ख्याया गुणस्य निमाने मयट्' [ ४७ ] इति ।

एवं तर्हि—नेयं वृत्तिरुपालभ्यते । किं तर्हि ? वृतिस्थानमुपालभ्यते । वृत्तिरेवाऽत्र न प्राप्नोति । किं कारणम् ? प्रत्ययार्थोऽभावात् । नैष दोषः । वचनात्स्वार्थिको भविष्यति ।। अथवा पूर्वस्याः सङ्ख्यायाः परापेक्षाया उत्पत्तिर्वक्तव्या, उत्तरा च सङ्ख्याऽऽदेशो वक्तव्यः ।। अथवा न्यूनेऽयं कृत्स्नशब्दो द्रष्टव्यः—चतुर्षु पञ्चशब्दः ।। अथवा सर्व एव द्व्यादयोऽन्योन्यमपेक्षन्ते । यद्येवं द्वितीयेऽध्यायेऽष्टम इति प्राप्नोति । भवत्येव ।

प्र०—इष्टविषयवदनिष्टेऽपि विषये वृत्तिः प्राप्नोत्येवमुपालम्भो न क्रियते, किं तर्हि इष्टे विषये प्रत्ययो न सिध्यत्यनिष्ट एव प्राप्नोतीत्युच्यते । वृत्तिस्थानमिति । प्रत्ययार्थ इत्यर्थः । प्रत्ययार्थे हि स्वार्थोपसर्जने प्रकृतिर्वर्त्तत इति प्रत्ययार्थो वृत्तिस्थानम् । अयमत्रार्थः—प्रकृत्यर्थव्यतिरिक्तेन प्रत्ययार्थेन भवितव्यं—यथौपगवमिति । इह तु पञ्चमः पञ्चशब्दार्थेऽन्तर्भूतः । तथा हि—'पञ्चानीयता'—मित्युक्ते पञ्चमस्याऽप्यानयनं भवति, ततश्चाऽत्र प्रकृत्यर्थव्यतिरिक्तप्रत्ययार्थाभावात्पञ्चानामुष्ट्रिकाणां पूरणो घट इत्यत्रैवाऽनिष्टेविषये प्रत्ययप्रसङ्गः । वचनादिति । प्रकृत्यर्थान्तर्भावमात्रेण स्वार्थिकत्वं न तु सर्वात्मना, तत्र सङ्ख्याग्रहणद्वयानुवर्त्तनादन्तरङ्गत्वाद्वा सङ्ख्यासंप्रतिपत्तिहेतौ प्रकृत्यर्थान्तर्भूतेऽपि प्रत्ययो भविष्यतीत्यर्थः । पूर्वस्या इति । चतुःशब्दादिभ्यः प्रत्ययो विधेयः, पञ्चादयश्चादेशा कर्त्तव्या इत्यर्थः । तेन चतुर्णां पञ्चत्वसङ्ख्योपजननद्वारेण पूरणः पञ्चमः । न्यून इति । यथाऽर्द्धतृतीया द्रोणा इत्यत्रार्द्धद्रोणोऽपि द्रोणशब्देनाभिधीयते, तथा च द्रोणा इति बहुवचनम्, अवयवेन विग्रहः, समुदायः समासार्थः, तथेहापि वृत्तिविषये चतुर्पु

उ०—सन्निवेशमात्रेति । सन्निवेशो—निर्माणक्रमः । भाष्ये—सौविष्टकृती इत्यत्र प्रथमाद्विवचनस्य लुक् । शततमस्येति । दशमदशद्वर्गीयदशमस्येत्यर्थः । यद्यपि तत्तत्सङ्ख्यावच्छिन्नेभ्योऽन्येभ्यस्तत्तत्सङ्ख्यापूरकस्य चरमोपजातत्वान्नायं दोषस्तथापि दोषान्तरमाहभाष्ये—सूत्रं चेति । प्रधानाऽर्थोऽभिधानम्—प्रधानार्थसंसृष्टस्वार्थोपस्थापकत्वम् । अतिव्याप्त्या वृत्तेरेवोपालम्भान्नेयं वृत्तिरुपालभ्यते इत्यनुपपन्नमत आह—अयमर्थ इति । 'पञ्चानामुष्ट्रिकाणा'मित्यनेनाऽतिव्याप्तिरेव नोच्यते किन्तर्ह्यव्याप्तिरपीत्यर्थः । तदाह—अनिष्टे एवेति । ननु प्रकृतिमात्रेणाऽप्रतीतस्य पञ्चत्वसङ्ख्यापूरकत्वस्याऽपि प्रतीतेः कथं स्वार्थिकत्वमत आह—प्रकृत्यर्थान्तर्भावेति । सम्प्रतिपत्तिहेताविति । पञ्चत्वादिसम्प्रतिपत्तिहेतावित्यर्थः । पञ्चत्वादिसङ्ख्यापूरणे इति यावत् । चतुःशब्दादिभ्य इति । सङ्ख्यावाचकात्स्वार्थवृत्तिसङ्ख्यान्तरपूरणे प्रत्यय इत्यर्थः सूत्रस्येति भावः । तदाह भाष्ये—पराऽपेक्षयेति । परसङ्ख्याऽपेक्षपूरणत्वे इत्यर्थः । चतुर्णाम्पञ्चत्वसङ्ख्यापूरकः पञ्चम इति तात्पर्यम् । भाष्ये—न्यूनेऽयं कृत्स्नशब्द इति । अधिकवाचकः शब्द इत्यर्थः ।

प्रकृत्यर्थाद्बहिः सर्वा वृत्तिः प्रायेण लक्ष्यते ।
पूरणे स्यात्कथं वृत्तिर्वचनादिति लक्ष्यताम् ॥ १ ॥

तस्याः पूर्वा तु या सङ्ख्या तस्यां भवतु तद्धितः ।
आदेशश्चोत्तरा सङ्ख्या तथा न्याय्या भविष्यति ॥ २ ॥

न्यूने वा कृत्स्नशब्दोऽयं पूर्वस्यामुत्तरा यदि ।
सामर्थ्यञ्च तया तस्यास्तथा न्याय्या भविष्यति ॥ ३ ॥

प्र०—पञ्चशब्दो वर्त्तते । तेन न्यूनानां पञ्चानां पूरणः पञ्चमः । न्यूनाश्च पञ्च—चत्वारो भवन्ति । तथा—पञ्चसु लब्धव्येषु चतुरो लब्ध्वा ब्रवीति—'न्यूनानि पञ्च लब्धानी'ति । अथवेति । सर्वेष्वेव पञ्चशब्दो वर्त्तत इत्येकैकमन्तरेण पञ्च न भवन्तीति पञ्चभ्यो बुद्ध्यैकतमं निष्कृष्य प्रत्ययो विधीयते । पञ्चानां पूरणः—पञ्चसङ्ख्यानिमित्तत्वात्पञ्चमः । भवत्येवेति । गणनापेक्षायाम् । यथा पूर्वं व्याख्यातम् ।

प्रकृत्यर्थादिति–पूर्वोक्तार्थसङ्ग्रहश्लोकाः । बहिरिति । बाह्यार्थे सर्वा वृत्तिर्न तु स्वार्थ इत्यर्थः । वचनादिति । स्वार्थ इत्यर्थः ॥ १ ॥

पूर्वस्यामुत्तरेति । यदोत्तरसङ्ख्यावाची पञ्चादिशब्दः पूर्वस्यां सङ्ख्यायां वर्त्तत इत्यर्थः ॥ सामर्थ्यं चेति । तस्या न्यूनार्थाभिधायिन्याः सङ्ख्यायाः प्रत्ययार्थेन सम्बद्धत्वं न्याय्यमित्यर्थः ॥ ३ ॥

उ०—अधिकवाचकस्य न्यूने वृत्तिं दृष्टान्तव्यवहाराभ्यां दर्शयति—यथेति । नन्वेवं वर्त्तिपदार्थसमासार्थयोर्भेदाऽभावोऽत आह—अवयवेन विग्रह इति । अवयवार्थकेन वर्त्तिपदार्थबोधनमित्यर्थः । तदाह—समुदायः समासार्थ इति । अत्रापि पक्षे चतुर्णां पञ्चत्वसंख्यापूरक इत्येव पञ्चमशब्दार्थो द्रष्टव्यः । 'सर्वेष्वेव पञ्चशब्दो वर्त्तते इती'ति पाठे—इति—हेतोः सर्व एव द्व्यादयोऽन्योन्यमपेक्षन्त इति भाष्येणाऽन्वयः । प्रायेणेतिशब्दरहित एव पाठः । अत्र 'सर्वेष्वेवे'—त्युक्त्या प्रत्येकं द्व्यादिसङ्ख्यासम्बन्धाऽभावो दर्शितः । यथा महतो भारस्योत्थापनशक्तिः प्रत्येकमसम्बद्धा समुदायेनैव सम्बद्धा तद्वत्, यथा वा विशिष्टं गुरुत्वं प्रत्येकाऽसम्बद्धं समुदाये सम्बद्धं तद्वदित्याहुः । सर्वेष्वेव वृत्तौ हेतुमाह—एकैकमन्तरेणेति । गणनापेक्षायामिति । यथाकथञ्चिद्गणनमात्राऽपेक्षायामित्यर्थः । निर्माणाऽपेक्षायान्तु द्वितीय एवेति बोध्यम्, तदा प्रागुक्तपूरणत्वाऽभावादिति भावः ।

पूर्वोक्तार्थसङ्ग्रहेति—पचाद्यजन्तसङ्ग्रहशब्देन षष्ठीसमासः ॥ १ ॥

भाष्ये यदीत्यसन्दिग्धे सन्दिग्धवचनं तदाह—यदेति । यत इत्यर्थः । तथा सति तस्याः—प्रकृत्यभिहितसङ्ख्यायाः, तया—प्रत्ययाऽभिहितव्यक्त्या, सामर्थ्यं—सम्बन्धः चतुर्वृत्तिपञ्चत्वसङ्ख्यापूरकइत्यर्थात् । एवं हि वृत्तिर्न्याय्येत्यर्थः ॥ ३ ॥

१—'तस्या'. इति कीलहार्नपाठः ।

अन्योन्यं वा व्यपाश्रित्य सर्वस्मिन्द्व्यादयो यदि ।
प्रवर्त्तन्ते तथा न्याय्या वृत्तिर्भवति पूरणे ॥ ४ ॥
बहूनां वाचिका सङ्ख्या पूरणश्चैक इष्यते ।
अन्यत्वादुभयोर्न्याय्या वार्त्ती शाखा निदर्शनम् ॥ ५ ॥

## नान्तादसङ्ख्यादेर्मट् ॥ ५ । २ । ४९ ॥

### मडादिषु यस्यादिस्तन्निर्देशः ॥ १ ॥

मडादिषु यस्यादिः* क्रियते तन्निर्देशः कर्त्तव्यः । 'अस्यादिर्भवती'ति वक्तव्यम् । अक्रियमाणे प्रत्ययाऽधिकारात्प्रत्ययोऽयं विज्ञायेत । तत्र को दोषः ?

प्र०—अन्योन्यं वेति । अपेक्षितपरस्पराः सङ्ख्येयाः पञ्चादिशब्दवाच्य.स्तेषामन्यतमे पञ्चत्वादिसङ्ख्याहेतौ प्रत्ययः ॥ ४ ॥

बहूनामिति । पूर्वस्मात्पक्षादयं भेद.--पूर्वस्मिन्पक्षे सर्व एवाऽतिरोहितभेदः पञ्चशब्दार्थः । उत्तरत्र तु समुदायः शब्दार्थः । अवयवस्तु नोपात्तो न च त्यक्तः । प्रत्ययेन त्वभिधीयते । अन्यत्वादुभयोरिति । समुदायावयवयोर्भेदात्समुदायः प्रकृत्यर्थोऽवयवः प्रत्ययार्थः । यथा वार्त्ती शाखेति प्रत्यस्तमितमूलाद्यवयवसमुदायः प्रकृत्यर्थोऽवयवस्तु शाखाप्रत्ययार्थः । 'अनुदात्तादेश्चे'-त्यञ्प्रत्ययः ॥ ४८ ॥

नान्ता । मडादिष्विति । 'षष्ठीस्थाने योगे'त्यत्र षष्ठीति योगविभागात्तत्र चाद्यन्तौ टकिता वित्यस्यानुवर्त्तनात्षष्ठीनिर्दिष्टस्यागमिनोऽभावाच्चरेष्ट इत्यादिवन्मडादयो डडपवादाः प्रत्ययाः

उ०—'अन्योऽन्यं वा व्यपाश्रित्ये'ति पाठो भाष्ये । अपेक्ष्येत्यर्थः ॥ ४ ॥

अतिरोहितभेदा इति । अवयवमात्रवृत्तिधर्मेण भासमानाः पञ्चादिशब्दवाच्या इत्यर्थः । नोपात्त-इति । अवयवमात्रवृत्तिधर्मेण प्रकृत्या नोपात्त इत्यर्थः । न च त्यक्त इति । साधारणरूपेणोपात्तत्वादित्यर्थः । अत एव बहुवचनम् । प्रत्ययेन त्वभिधीयत इति । अवयवमात्रवृत्तिधर्मेणाऽभिधीयते इत्यर्थः । परे तु—'सर्वस्मिन् प्रत्ययवाच्यसहिते द्व्यादयः प्रवर्त्तन्ते, अतः पूरणे न्याय्या वृत्तिः । तदेव न्याय्यत्वमुपपादयति—बहूनां—समुदितानाम् । वाचिका सङ्ख्या प्रकृतिः पूरणस्तदर्थश्च तदन्तर्गत एकः, अत उभयोः प्रकृतिप्रत्ययार्थयोरन्यत्वान्न्याय्या । 'वृत्ति'रिति शेषः । 'पूर्वत्र पक्षे' इत्यादि कैयटस्तु चिन्त्यः, पक्षद्वयेऽप्यतिरोहितभेदस्यैव समूहस्य पञ्चादिशब्दवाच्यताऽवश्यकत्वात् । अत एव बहुवचनम्, एकैकस्मिन् कदाऽप्यप्रवृत्तेश्च । प्रकृत्यर्थान्तर्भावमात्रेण प्रकृतिप्रत्ययार्थयोर्भेदाऽभावशङ्कायां तमभ्युपेत्य पूर्वसमाधानम् । प्रकृत्यर्थताऽवच्छेदकप्रत्ययार्थताऽवच्छेदकभेदेन तदवच्छिन्नभेदेन च भेद एवेत्यवलम्ब्याऽन्यः पक्ष इत्येव युक्तमाभातीत्याहुः ॥ ४८ ॥

नान्ता । ननु यस्माद्विहितस्तस्यादिरेवाऽस्तु, न 'ह्याद्यन्ता'वित्यत्र षष्ठीनिर्देशोऽस्तीत्यत आह—

* आद्यन्तौ टकितौ १ । १ । ४६

## प्रत्ययान्तरे हि स्वरे दोषः ॥ २ ॥

प्रत्ययान्तरे हि सति स्वरे दोषः स्यात् । विंशतितमः† एष स्वरः प्रसज्येत । विंशतितमं इति चेष्यते‡ ।

स तर्हि तथा निर्देशः कर्त्तव्यः ? न कर्त्तव्यः । प्रकृतं डड्ग्रहणमनुवर्त्तते । क्व प्रकृतम् ? 'तस्य पूरणे डट्' [ ४८ ] इति । तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहाऽर्थः । 'नान्ता'दित्येषा पञ्चमी'ड'डिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति—'तस्मादित्युत्तरस्य' [ १ । १ ६७ ] इति । प्रत्ययविधिरयं न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका भवन्ति । नाऽयं प्रत्ययविधिर्विहितः प्रत्ययः प्रकृतश्चानुवर्त्तते ॥ ४६ ॥

## षट्कतिकतिपयचतुरां थुक् ॥ ५ । २ । ५१ ॥

### चतुरश्छयतावाद्यक्षरलोपश्च ॥ १ ॥

चतुरश्छयतौ वक्तव्यावाद्यक्षरलोपश्च वक्तव्यः । तुरीयम् तुर्यम् ।

अथ किमर्थं थट्थुकौ× पृथक्क्रियेते न सर्वं थडेव वा स्यात्थुगेव वा ?

प्र०—प्राप्नुवन्ति । तत्र मट्थट्थुकामागमत्वप्रत्ययत्वयोर्विशेषाभावः । तमट् तु प्रत्ययत्वे सत्याद्युदात्तः स्यादागमत्वे त्वनुदात्तो भवतीति डट्स्वरेण विंशतितम इत्यन्तोदात्तत्वं भवति । प्रकृतमिति । स्वरितत्वादिति भावः । विहित इति । न ततो विधानार्था डट इहानुवृत्तिरपि त्वागमसम्बन्धप्रतिपत्त्यर्थेत्यर्थः ॥ ४९ ॥

षट्क । आद्यक्षरलोप इति । अक्षरशब्देनाऽच्सहितं व्यञ्जनमुच्यते । छयद्भ्यां च डट् न बाध्यते, डटि चतुरस्थुग्विधानात् । न सर्वमिति । सर्वं थकाररूपं थडेव क्रियतां, थुगेव वेत्यर्थः । पदान्तविधिप्रतिषेधार्थमिति । विधिप्रतिषेधौ नलोपादीनां पदान्तकार्याणां विषयविभागेन व्यवतिष्ठेयातामित्यर्थः । पञ्चथानीति । थटि सति 'स्वादि'ष्विति पदत्वात्तन्निबन्धनो नलोपो भवति । थुकि तु सति थकारान्तस्य भत्वं स्यात् ।

उ०—षष्ठीस्थान इति । मट्थट्थुकामिति त्वपपाठः । एवं मट्थुकोरिति च । थुकः प्रत्ययत्वे 'चतुर्थः' इत्यादावकारश्रवणानापत्तिर्विसर्गापत्तिश्च । मट्थटोरित्येव पाठः । मट्डटोरिति पाठे तयोर्मध्ये मट इत्यर्थः ॥ ४६ ॥

षट्कति । नन्वाद्यक्षरस्य चकारस्य लोपेऽकारस्य श्रवणं स्यादत आह—अक्षरशब्देनेति । 'व्यञ्जनसहितोऽ'जिति तु नोक्तं, तकारस्याऽपि लोपापत्तेः । नपुंसकप्रयोगोपपत्तय आह—सर्वं थकारेति । ननु

† विंशत्यादिभ्यस्तमडन्यतरस्याम् ५ । २ । ५६; आद्युदात्तश्च ३ । १ । ३

‡ तस्य पूरणे डट् ५ । २ । ४८; आद्युदात्तश्च ३ । १ । ३

× थट् च च्छन्दसि; षट्कतिकतिपयचतुरां थुक् ५ । २ । ५०; ५१

थट्थुकोः पृथक्करणं पदान्तविधिप्रतिषेधार्थम् ॥ २ ॥

थट्थुकोः पृथग्ग्रहणं क्रियते 'पदान्तविधिप्रतिषेधार्थम्' । पदान्तविध्यर्थं, पदान्तप्रतिषेधार्थं च । पदान्तविध्यर्थं तावत्—'पर्णमयानि पञ्चथानि भवन्ति' । 'रथः सप्तथः' । 'पदान्तस्ये'ति नलोपो यथा स्यात्* । पदान्तप्रतिषेधार्थं—षष्ठः । 'पदान्तस्ये'ति जश्त्वं मा भूत्† । इह चतुर्थ इति 'पदान्तस्ये'ति विसर्जनीयो मा भूदिति‡ ॥ ५१ ॥

बहुपूगगणसङ्घस्य तिथुक् ॥ ५ । २ । ५२ ॥

[१]बहुकतिपयवतूनां लिङ्गविशिष्टादुत्पत्तिः ॥ १ ॥

बहुकतिपयवतूनां× लिङ्गविशिष्टादुत्पत्तिर्वक्तव्या । इहापि यथा स्यात्—बह्वीनां पूरणी बहुतिथी । कतिपयानां पूरणी कतिपयथी । तावतीनां पूरणी तावतिथी ।

[२]बहुकतिपयवतूनां लिङ्गविशिष्टादुत्पत्तिः सिद्धा । कथम् ? 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवती'ति ।

पुंवद्वचनञ्च ॥ २ ॥

पुंवद्भावश्च वक्तव्यः । बह्वीनां पूरणी बहुतिथी ॥ किमर्थम्, न 'भस्याऽढे तद्धिते पुंवद्भवती'ति+ सिद्धम् ? भस्येत्युच्यते, यजादौ च भं भवति** न चात्र यजादिं पश्यामः । किं कारणम् ? तिथुका व्यवहितत्वान्न प्राप्नोति ।

प्र०—षष्ठ इति । यद्यत्र थट् क्रियते ततः षकारान्तस्य पदत्वात्तन्निबन्धनं जश्त्वं स्यात् । थुकि तु तदन्तस्य भत्वात्पदत्वाभावः ॥ ५१ ॥

बहु । लिङ्गविशिष्टादिति । लिङ्गसहचरितः प्रत्ययो लिङ्गं, तदधिकारादित्यर्थः । तिथुकेति । तिथुकि कृते तदन्तस्य भसञ्ज्ञा न तु स्त्रीप्रत्ययान्तस्येत्यर्थः । उत्पत्तिसंनियोगेनेति ।

उ०—पदान्तविधिप्रतिषेधौ नैतदपेक्षावत आह—विधीति । पदान्तकार्यनलोपादीनां विधिप्रतिषेधौ विषयविभागेन व्यवस्थितौ भवेतामित्यर्थं भिन्नाऽनुबन्धकरणमित्यर्थः । तदन्तस्य भत्वादिति । अत्र 'भत्वा'दित्यस्योपयोगश्चिन्त्यः ॥ ५१ ॥

बहुपूग । नाम्नां लिङ्गवैशिष्ट्यस्याऽव्यभिचरितत्वादाह—लिङ्गसहचरित इति । यदैवेति । एषां

* स्वादिष्वसर्वनामस्थाने १ । ४ । १७; नलोपः प्रातिपदिकान्तस्य ८ । २ । ७

† यचिभम् १ । ४ । १८; झलां जशोऽन्ते ८ । २ । ३९ ‡ खरवसानयोर्विसर्जनीयः ८ । ३ । १५

× षट्कतिकतिपयचतुरां थुक्; बहुपूगगणसंघस्य तिथुक्; वतोरिथुक् ५ । २ । ५१—५३

१—इदं भाष्यमिति केचित् । २—इदं वार्तिकमिति केचित् ।

\+ ६ । ३ । ३५ वा० ११ ** यचिभम् १ । ४ । १८

इदमिह सम्प्रधार्यं तिथुक्क्रियतां पुंवद्भाव इति, किमत्र कर्त्तव्यम् ? परत्वात्पुंवद्भावः। नित्यस्तिथुक्, कृतेऽपि पुंवद्भावे प्राप्नोत्यकृतेऽपि। तिथुगप्यनित्यः। अन्यस्य कृते पुंवद्भावे प्राप्नोत्यन्यस्याऽकृते, 'शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति'। अन्तरङ्गस्तर्हि तिथुक्। काऽन्तरङ्गता ? उत्पत्तिसन्नियोगेन तिथुगुच्यते, उत्पन्ने प्रत्यये प्रकृतिप्रत्ययावाश्रित्य पुंवद्भावः। पुंवद्भावोऽप्यन्तरङ्गः। कथम् ? उक्तमेतत्— 'सिद्धश्च प्रत्ययविधा'विति*। उभयोरन्तरङ्गयोः परत्वात्पुंवद्भावः, पुंवद्भावे कृते पुनः प्रसङ्गविज्ञानात्तिथुक् सिद्धः—बहुतिथी ॥ ५२ ॥

## षष्ट्यादेश्चाऽसङ्ख्यादेः ॥ ५ । २ । ५८ ॥

असङ्ख्यादेरिति किमर्थम् ? इह मा भूत्—एकषष्टः द्विषष्टः।

असङ्ख्यादेरिति शक्यमवक्तुम्। कस्मान्न भवति—एकषष्टो द्विषष्ट इति। षष्टिशब्दात्प्रत्ययो विधीयते कः प्रसङ्गो यदेकषष्टिशब्दात्स्यात् ? नैव प्राप्नोति

प्र०—यदैव प्रकृतयः पूरणविषयाः प्रत्ययोत्पत्तिनिमित्तं तदैवागम इत्यर्थः। प्रकृतिप्रत्ययाविति। भस्येति वचनादुभयमाश्रीयते। सिद्धश्चेति। तेन प्राक्प्रत्ययोत्पत्तेः पुंवद्भाव इत्यर्थः ॥ ५२॥

षष्ट्यादेः। किमर्थमिति। इह प्रत्यासत्त्या पङ्क्त्यादिसूत्रनिपातिताः षष्ट्यादयो गृह्यन्ते न लोकप्रसिद्धया विप्रकृष्टाः, तथा चानर्थकः प्रतिषेध इति मत्वा प्रश्नः। इतरो व्याप्तिन्यायाश्रयाल्लौकिकग्रहणादतिप्रसङ्ग इति मत्वाह—एकषष्ट इति। प्रत्यासत्तिन्यायाश्रयेणाह— षष्टिशब्दादिति। षष्टिशब्दस्योपलक्षणत्वात्सप्तत्यादयोऽपि गृह्यन्ते। प्रत्ययइति। प्रत्ययभक्तत्वात्तदवयवत्वादागम एव प्रत्ययशब्देनोक्तः। तदन्तविधिनेति। शास्त्रीयाणामपि षष्ट्यादीनां ग्रहणे तैः सङ्ख्याया विशेषणात्तदन्तविधौ सति षष्ट्याद्यन्तस्य सङ्ख्यावाचिनो ग्रहणप्रसङ्गः। भवतीहेति। इह प्रकरण इत्यर्थः। तत्र यदि लौकिकसङ्ख्याग्रहणं ज्ञाप्यते तदैकान्नविंशतिशब्दात्तमप्न प्राप्नोतीति भाष्यकारेण शास्त्रीयग्रहणाभ्युपगमेन तदन्तविधिज्ञापनमुक्तम्। एवं चैकान्नविंशतितम इति भाव्यमिति लक्ष्यते। यत्र च ज्ञापकात्तदन्तविधिस्तत्र व्यपदेशिवद्भावात्केवलानामपि ग्रहणं भवति। ज्ञापकेन सामान्येन 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति'

उ०—'तस्य पूरणे' इत्यनेन वाक्यैकवाक्यता, षष्ठ्यन्तात्पूरण इत्यर्थे एभ्यो डट्, एषां तिथुक् चेत्यर्थ इति भावः। तेनेति। भसंज्ञानिमित्ते तद्धिते विवक्षिते पुंवदिति वार्त्तिकार्थ इति भावः ॥ ५२ ॥

षष्ट्यादे। ननु लौकिकषष्ट्यादिग्रहणेन एकषष्टेऽपि तत्त्वाप्राप्त्या प्रश्नोऽनुपपन्नोऽत आह—इहेति। नन्वस्यागमविधित्वात्प्रत्ययो विधीयत इत्ययुक्तमत आह—प्रत्ययभक्तत्वादिति। प्रत्ययविधिरप्यनेनैवेत्यन्ये।

* ४ । १ । ७८ वा० ४; ४ । २ । ३८ वा० १

नार्थः प्रतिषेधेन । तदन्तविधिना† प्राप्नोति । ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते ॥ एवं तर्हि ज्ञापयत्याचार्यो—भवतीह तदन्तविधिरिति । किमेतस्य ज्ञापने प्रयोजनम् ? एकविंशतितमः‡ एतत्सिद्धं भवति ॥ ५८ ॥

## मतौ छः सूक्तसाम्नोः ॥ ५ । २ । ५९ ॥

### छप्रकरणेऽनेकपदादपि ॥ १ ॥

छप्रकरणेऽनेकपदादपीति वक्तव्यम् । इहापि यथा स्यात्—अस्यवामीयम् कयाशुभीयम् । किं पुनः कारणं न सिध्यति ? अप्रातिपदिकत्वात् ।

### सिद्धं तु प्रातिपदिकविज्ञानात् ॥ २ ॥

सिद्धमेतत् । कथम् ? 'प्रातिपदिकविज्ञानात्' । कथं प्रातिपदिकविज्ञानम् ?

प्र०—'व्यपदेशिवद्भावोऽप्रातिपदिकेने'ति परिभाषाद्वयस्यानुपस्थानज्ञापनात् । अथवा सूत्रोपात्तानां केवलानां प्रथमं ग्रहणं भवति, ततो ज्ञापकेन लक्षणविशेषो वाक्यान्तरमनुमीयत इति तदन्तस्यापि ग्रहणं भवति । तेन विंशतितम इति भवति । एकषष्ट्यादिभ्यो 'विंशत्यादिभ्य' इति विकल्पेन तमड् भवति । केचित्त्वसङ्ख्यादेरिति प्राप्तिमात्रापेक्षया निषेधाश्रयणादसङ्ख्यादेरिति योगविभागाद्वा विकल्पितस्यापि तमटो निषेधमिच्छन्त एकषष्टितम इति न भवितव्यमित्याहुः । एतत्तु भाष्यकारेणानुक्तत्वादसम्बद्धम् । 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वे'त्येतच्च त्यागहेतुत्वाभावात्कथं त्यज्येत ॥ ५८ ॥

मतौ छः । मतुशब्देन साहचर्यान्मत्वर्थ उच्यते । तद्विशेषणं सूक्तसाम्नी । प्रधानानुयायित्वाच्च गुणानां प्रथमा समर्थविभक्तिरस्त्युपाधिकत्वं च प्रकृतेर्गम्यते । अच्छावाकशब्दोऽस्मिन्नस्ति अच्छावाकीयं सूक्तमित्युदाहरणम् । अनेकपदादपीति—कर्मधारयो, बहुव्रीहिर्वा । पदसमुदायादित्यर्थः । 'अस्य' 'वाम'इत्यस्मिन्नस्तीति षष्ठीप्रथमयोरुपलम्भात्पदसमुदायात्मकत्वात्प्रातिपदि-

उ०—तमपन प्राप्नोतीति । सहस्रादिभ्यः प्राप्नोतीत्यपि बोध्यम् । ननु वैयर्थ्ये सति ज्ञापकं भवति, न हि व्यपदेशिवद्भावनिषेधप्रवृत्तावप्यसंख्यादेरित्यस्य वैयर्थ्यमत आह—अथवेति । वस्तुतस्तु सूत्रोपात्ताऽन्तादिशब्दविषय एव स निषेध इति नाऽत्र तस्य प्राप्तिः । स्पष्टश्चेदं 'येन विधिः' इत्यत्र प्रदीपे । लक्षणविशेष इति । विधायकं विशेषभूतं वाक्यान्तरमित्यर्थः । 'लक्षणशेष'इति क्वचित्पाठः । 'विंशत्यादिभ्यस्तमड् तदन्तेभ्यश्चे'त्येवमिति भावः । 'त्यागे हेत्वभावा'दिति पाठः ॥ ५८ ॥

मतौ छः । अन्यशब्दस्याऽन्यशब्दे वृत्त्यसम्भवादाह—मत्वर्थ इति । तद्विशेषणे इति । सूक्तसामरूपे सम्बन्धिनि प्रथमान्ताच्छ इत्यर्थ इति भावः । नन्वेवमपि समर्थविभक्त्यादिकं न लभ्येतेत्यत आह—

† येन विधिस्तदन्तस्य १ । १ । ७२ ‡ विंशत्यादिभ्यस्तमडन्यतरस्याम् ५ । २ । ५६

**'स्वं रूपं शब्दस्याऽशब्दसंज्ञा' [ १ । १ । ६८ ] इति वचनात् ॥ ३ ॥**

स्वं रूपं शब्दस्याऽशब्दसंज्ञा भवतीति । एवं योऽसावाम्नायेऽस्यवामशब्दः पठ्यते सोऽस्यपदार्थः ॥ किं पुनरन्य आम्नायशब्दा अन्य इमे ? 'ओ'मित्याह । कुत एतत् ?

**आम्नायशब्दानामान्यभाव्यं स्वरवर्णानुपूर्वीदेशकालनियतत्वात् ॥४॥**

[ आम्नायशब्दानामान्यभाव्यम्—अन्यभावः सिद्धः । कथम् ? स्वरवर्णानुपूर्वीदेशकालनियतत्वात् । स्वर-] स्वरो नियत आम्नाये अस्यवामशब्दस्य । [ वर्णानुपूर्वी-] वर्णानुपूर्वी खल्वप्याम्नाये नियता अस्यवामशब्दस्य । [ देशः—]

प्र०—कत्वाभावात्प्रत्ययो न प्राप्नोतीति वचनम् । सिद्धं त्विति । 'अस्य' 'वामस्ये'ति वेदे यत्पदद्वयं पठ्यते तदेकदेशस्याऽस्यवामशब्दस्य यदनुकरणमस्यवामशब्दोऽनुकार्यरूपार्थेनाऽर्थवत्त्वाल्लब्धप्रातिपदिकसंज्ञस्तस्मादेतत्प्रत्ययविधानमित्यर्थः । स्वं रूपमिति । दृष्टान्तत्वेनाऽस्योपन्यासः । यथा 'स्वं रूप'मिति वचनादग्नेर्ढगित्यत्राग्निशब्दस्वरूपमग्निशब्दस्य प्रत्यायकमेवमाम्नायपठितस्याऽस्यवामशब्दस्य छप्रत्ययप्रकृतिरस्यवामशब्दः प्रत्यायक इत्यर्थवत्त्वात्पदसमुदायरूपत्वाभावाच्च प्रातिपदिकत्वमित्यर्थः । न त्वनुकार्यानुकरणविषये स्वं रूपमित्युपतिष्ठते । स्वशास्त्रविषयत्वादस्य, लौकिकत्वाच्चानुकार्यानुकरणभावस्य । एवं योऽसाविति । एवं शब्दस्तथाशब्दस्यार्थे । यथात्र शास्त्रे वचनात्स्वं रूपं शब्दस्य प्रत्यायकं तथानुकार्यस्याऽनुकरणमित्यर्थः । किं पुनरिति—अभिन्नरूपत्वादनुकार्यानुकरणयोरभेदं मन्यमानः पृच्छति । आम्नायशब्दानामिति । अन्यस्य भावोऽन्यभावः । अन्यभाव एवाऽऽन्यभाव्यम् । ब्राह्मणादिषु प्रतिपदपाठात्स्वार्थे ष्यञ् । अथवा अन्यो भावोऽन्यद्वस्तु, तस्य भाव आन्यभाव्यम् । अन्यवस्तुत्वमित्यर्थः । यद्यप्यनुकार्यानुकरणयोरर्थभेदादन्यत्वनिश्चयस्तथाप्यन्यत्वस्य दार्ढ्याय स्वरादिभेदोपन्यासः । स्वर इति । अस्ये-

उ०—प्रधानेति । प्रधानं प्रत्ययार्थः, गुणाः समर्थविभक्त्यादयः । प्रधान उपस्थापिते तद्गुणभूतमुपस्थाप्यत एवेति भावः । यथा 'ब्राह्मणा भोज्यन्ता'मित्युक्तेऽनुक्ता अप्याचमनादय आक्षिप्यन्त इति तात्पर्यम् । एकपदभिन्नादपीत्यर्थे वर्णमात्रादपि प्रत्ययः स्यादत आह—कर्मधारय इति । पराऽभ्युपगमेनेदम् । यं भवाननेकपदरूपं समुदायं मन्यते तस्मादपीत्यर्थः । षष्ठीप्रथमयोरिति । 'अस्ये'ति षष्ठी, 'वाम' इति प्रथमा । पदसमुदायरूपत्वाऽभावाच्चेति । अनेन 'पदसमुदायस्य चेत्समासस्यैवे'ति नियमाऽप्राप्तिर्दर्शिता । पदघटितसमुदायरूपत्वाऽभावादिति तदर्थः । अस्येत्यस्याऽपि न पदत्वं तत्रत्य'स्य'शब्दस्य विभक्त्यर्थाऽप्रतिपादकत्वेनाऽसुप्त्वादिति भावः । एवं शब्दस्य 'अनेन प्रकारेणे'ति नार्थः, सूत्रस्याऽप्राप्त्याऽसङ्गतत्वात्, किन्त्वन्य इत्याह—तथाशब्दस्येति । स्वं रूपं शब्दस्येति । 'शब्दः स्वरूपस्ये'ति वक्तुमुचितम् । वस्तुतो भाष्ये सूत्रकथनं तत्प्रत्याख्यानप्रकारोपलक्षणम्, अर्थे बाधादुपस्थितशब्दस्यैव ग्रहणं भविष्यतीति व्यर्थं सूत्रमिति । स लोकेऽप्यर्थबाध एवाऽनुकरणत्वमिति दिक् ।

१—इदं क्वचिन्नास्ति ।

देशः खल्वप्याम्नाये नियतः—'श्मशाने नाध्येयम्, चतुष्पथे नाध्येय'मिति। [कालः—] कालः खल्वप्याम्नाये नियतः—नाऽमावास्यायामध्येयं[2] न चतुर्दश्यामिति ।

पदैकदेशसुबलोपदर्शनाच्च ॥ ५ ॥

पदैकदेशः खल्वप्याम्नाये दृश्यते । अस्यवामीयम् । ननु चैष सुब्लोपः स्यात् । सुबलोपदर्शनाच्च । सुबलोपः खल्वपि दृश्यते—अस्यवामीयमिति ।

[ तस्मादन्ये[1] आम्नायशब्दा अन्य इमे । ] यदि तर्ह्यन्य आम्नायशब्दा अन्य-

प्र०—स्थूडिदमित्यन्तोदात्तत्वम् । 'वाम'शब्दः 'कर्षात्वत' इत्यन्तोदात्तः । अथवा 'ज्वलितिकसन्तेभ्यो ण' इति णान्तः प्रत्ययस्वरेणान्तोदात्तः । अनुकरणं त्वस्यवामशब्दः प्रातिपदिकस्वरेणान्तोदात्तः । 'प्रकृतिवदनुकरण'मित्येतत्तु विरोधादत्र स्वरे नाश्रीयते । अनुकरणे एकस्मिन्पदे उदात्तद्वयविरोधात् । वर्णानुपूर्वीति । अनुकरणं तु व्युत्क्रमेणाऽप्युच्चार्यमाणं सादृश्यादनुकार्यस्य प्रत्यायकं भवति । देश इति । अनुकरणस्य तु देशकालनियमाभावः । पदैकदेशेति । आम्नाये अस्यवामस्येति प्रयुज्यते तदेकदेशस्यास्यवामशब्दस्यानुकरणमेकदेश एवास्यवामशब्दो दृश्यते अस्यवामीयशब्दे प्रकृतिरित्यर्थः । सुबलोपदर्शनाच्चेति । यदि षष्ठ्या लुकि कृते रूपमेतद्भवतीत्युच्यते तदा पूर्वपदेऽपि लुक्प्रसङ्गः। अनुकरणस्य तु विभक्त्यर्थाप्रतिपादनात् सुप्त्वाभावाल्लुगभावः । मत्वर्थो नोपपद्यत इति । अनुकार्येण सूक्तसाम्नोस्तद्वत्ता न त्वनुकरणेनेति भावः । न संज्ञेति । अनुकरणं प्रत्यायकत्वात्संज्ञा । अनुकार्यं तु प्रत्याय्यत्वात्संज्ञि । अव्यभिचारश्चावश्यप्रत्याय्यत्वात्संज्ञिनः, तत्र यथा गवादयः शब्दाः सास्नालाङ्गूलवदर्थं प्रत्याययन्तस्तेनार्थेन तद्वति मतुपमुत्पादयन्ति—गोमानिति । तथा अनुकरणशब्दाः प्रथमासमर्थाः स्वेनार्थेनानुकार्येण तद्वति छप्रत्ययमिति न कश्चिद्दोषः।

उ०—नन्वर्थभेदाद्भेदविषयः प्रश्नोऽनुपपन्नोऽत आह—अभिन्नरूपत्वादिति । एवञ्च भेदनिबन्धनाऽर्थवत्त्वाऽनुपपत्तिरित्यर्थः । अर्थभेदादिति । अनुकार्यस्य बाह्योऽर्थः । अनुकरणस्य तु अनुकार्यशब्दरूपमेवेत्यर्थभेदः । अस्येतीति । इत्यस्येत्यर्थः । ननु लोकेऽपि स्वरस्य नियतत्वाद्भेदे एव स्वरनियमकथनं भाष्यस्थमसङ्गतमिति चेन्न, लोके एकश्रुतेरपि सत्त्वेन तदनियम इति भाष्याशयात् । [ भाष्ये ] वर्णाऽनुपूर्वी नियतेति । तत्तत्कल्पे यादृशी ऋषिभिः कृता सा तत्कल्पसमाप्तिपर्यन्तं नियतेत्यर्थः । नियमाऽभाव इति । अनुकरणं शृण्वतः शूद्रस्य प्रायश्चित्ताऽभाव इत्यपि बोध्यम् । अध्ययनकालेऽर्थपराणामपि अर्थाऽवबोधाद्, अध्येतॄणां शब्दपरत्वभ्रमः । नाप्यनुकरणत्वं, शब्दतात्पर्यकत्वस्याऽभावात् । स्वरवर्णाऽनुपूर्वीभेदाऽभावाच्च तत्त्वबुद्ध्या तद्धर्माः सर्वेऽत्रापीत्याहुः ।

आम्नाये पदैकदेशाऽदर्शनादाह—आम्नाये इति भाष्ये । आम्नाये पठ्यमानस्य यः पदैकदेशः स छप्रत्ययप्रकृतिभूतेऽनुकरणे दृश्यत इत्यन्वयः । ननूत्तरभागे सुब्लोपो दृश्यत एवेत्यत आह—यदीति । नन्वनुकरणस्याऽपि कुतो न सुप्त्वं, कुतो वा न लुगत आह—अनुकरणस्य त्विति । भाष्ये उत्तरयति—

१—इदं क्वचिन्नास्ति ।　　२—'नामावास्यायां न चतुर्दश्यामिति' 'नामावास्यायामधीयीत, न चतुर्दश्यामिति' च पा० ।

इमे, मत्वर्थो नोपपद्यते—अस्यवामशब्दोऽस्मिन्नस्तीति† । न संज्ञा संज्ञिनं व्यभिचरति ॥ ५६ ॥

## अध्यायानुवाकयोर्लुक् ॥ ५ । २ । ६० ॥

### अध्यायानुवाकाभ्यां वा लुक् ॥ १ ॥

अध्यायानुवाकाभ्यां वा लुग्वक्तव्यः । स्तम्भः, स्तम्भीयः । गर्दभाण्डः, गर्दभाण्डीयः । अनुकः[1], अनुकीयः ॥ ६० ॥

## धनहिरण्यात्कामे ॥ ५ । २ । ६५ ॥

### धनहिरण्यात्कामाभिधाने ॥ १ ॥

धनहिरण्यात्कामाभिधान इति वक्तव्यम् ।

### षष्ठ्यर्थे ह्यनिष्टप्रसङ्गः ॥ २ ॥

षष्ठ्यर्थे हि सत्यनिष्टं प्राप्नोति—धने कामोऽस्येति ॥ तत्तर्हि वक्तव्यम् ? न

प्र०—अनुकरणशब्दश्चानुकार्यं स्वजातिसमवेतं वक्तीति जातिशब्द इति लृकारवार्तिकेऽभिहितम् ॥ ५६ ॥

अध्याय । अध्यायानुवाकाभ्यामिति । तादर्थ्ये एषा चतुर्थी । अध्यायानुवाकार्थो यश्छस्तस्य वा लुग्वक्तव्यः । तेन पक्षे श्रवणं भवति । लुग्विधानमेव च ज्ञापकमध्यायानुवाकयोश्छो भवतीति । तत्र मतुप्प्रकरण एवाऽस्मिन् सूत्रे कर्त्तव्ये यदत्र छस्य लुग्विधानं तस्मात्पाच्छिको लुगनुमीयते इत्याहुः ॥ ६० ॥

धन । धनहिरण्यात्कामाभिधान इति । इच्छामात्राभिधान इत्यर्थः । षष्ठ्यर्थे हीति । यद्यप्यत्र षष्ठ्यर्थो न प्रकृतस्तथापि कामयत इति कामः, कर्तृसाधनकामशब्दोपादाने धनस्य कामयिता देवदत्तादिर्धनकशब्देनाभिधीयत इति सामर्थ्यात्षष्ठ्यर्थ एव प्रत्ययः स्यादित्यर्थः । अनभिधानादिति । कामशब्देनेच्छामात्रमभिधीयते न तु कामयिता । ततश्च तत्रेत्यधिकाराद्धन-

उ०—न संज्ञेति । संज्ञासंज्ञिनोरव्यभिचारे यथा मत्वर्थोपपत्तिस्तथा दर्शयति—तत्र यथेति । स्वजातिसमवेतमिति । अनुक्रियमाणनिष्ठजातिसम्बद्धमनुकार्यमित्यर्थः ॥ ५६ ॥

अध्यायाऽनु । नन्वेतौ प्रत्ययार्थौ, न त्वाभ्याम्परः प्रत्यय इत्यत आह—तादर्थ्यं इति । ननु पूर्वसूत्रे 'सूक्तसाम्नो' रित्युक्त्या तयोश्छ एव नास्ति, कस्य लुगत आह—लुग्विधानमेवेति । मतुप्प्रकरण एवेति । तथा च 'मतुप्' प्रत्ययस्यैवाऽनेन लुक्सिद्धेरत्र करणम्पाक्षिकत्वार्थम्, तत्र न्यासे च प्रत्ययाऽनुमानं नेति भावः ॥ ६० ॥

धनहिरण्यात्कामे । अनभिधानादित्यस्य—कामशब्देन कर्त्रनभिधानादित्यर्थ इत्याह—कामशब्दे-

† तदस्यास्त्यस्मिन्निति मतुप् ५ । २ । ९४ [1]—'अनुवाकः, अनुवाकीयः' पा० ।

वक्तव्यम् । कस्मान्न भवति—धने कामोऽस्येति ? अनभिधानात् ॥ ६५ ॥

## शीतोष्णाभ्यां कारिणि ॥ ५ । २ । ७२ ॥

किं यः शीतं करोति स शीतकः, यो वा उष्णं करोति स उष्णकः ? किं चातः ? तुषारे आदित्ये च प्राप्नोति ॥ एवं तर्हि—उत्तरपदलोपोऽत्र द्रष्टव्यः । शीतमिव शीतम् । उष्णमिवोष्णम् । य आशु कर्त्तव्यानर्थांश्चिरेण करोति स उच्यते—शीतक इति । यः पुनराशु कर्त्तव्यानर्थानाशवेव करोति स उच्यते—उष्णक इति ॥ ७२ ॥

## अधिकम् ॥ ५ । २ । ७३ ॥

अधिकमिति किं निपात्यते ? अध्यारूढस्योत्तरपदलोपः कंश्च प्रत्ययः । अध्यारूढमधिकमिति ॥ भवेत्सिद्धमध्यारूढो द्रोणः खार्याम्, अधिको द्रोणः खार्यामिति ।

प्र०—हिरण्याभ्यां सप्तम्यन्ताभ्यामिच्छामात्रे प्रत्ययो भवति–धनको देवदत्तस्येति । न तु तद्वतीति भावः ॥ ६५ ॥

शीतो । किं यः शीतमिति । शीतोष्णशब्दयोः स्पर्शविशेषो मुख्यार्थ इति तत्संप्रत्ययेनैव भाव्यमिनि मत्वा प्रश्नः । उत्तरपदलोप इति । नाऽत्र समासावयव उत्तरपदमभिप्रेतं समासस्याऽसंभवात् । किं तर्हि उत्तरं यत्पदं—द्योतक इवशब्दस्तस्यापि गतार्थत्वाद्वृत्तिविषयेऽप्रयोग इत्यर्थः । यथा मन्दतायुक्तं शीतं, सति शीते कार्यकरणे पाटवाभावात् । तद्वन्मन्दकरणं शीतमित्युच्यते, एवमाशुकरणमुष्णम् । तत्र क्रियाविशेषणाभ्यां कर्मभ्यां प्रत्ययः शीतंकारी शीतकोऽलस इत्यर्थः । उष्णंकारी उष्णको दक्षः । प्रयोगवशाच्च गौणस्याप्यर्थस्येह क्वचिद्भवति ॥ ७२ ॥

अधिकम् । किं निपात्यत इति । यद्यधिशब्दात्साधनक्रियावचनात्कन्निपात्यते तदा कर्तृकर्मणोरन्यतरस्य साधनस्याभिधानेन भाव्यम् । तत्र कर्त्तुरङ्गीकरणे कर्मणोऽभिधानं न प्राप्नोति । कर्माश्रयणे कर्त्तुरभिधानस्याऽप्रसङ्ग इति मत्वा प्रश्नः । अध्यारूढस्येति । लौकिके प्रयोगे अधिकशब्देन विषयभेदेन कर्तृकर्मणोरभिधानदर्शनादनङ्गीकृतसाधनभेदमध्यारूढस्येदं

उ०—नेति ॥ ६५ ॥

शीतोष्णा । समासाऽभावेनोत्तरपदाऽसम्भवादाह—नात्रेति । समासाऽसम्भवादिति । 'इवेन समासो विभक्त्यलोपश्चे'त्यस्य सम्भवाच्चिन्त्यमिदम् । गतार्थत्वादिति । वृत्तौ शीतादिपदं तत्सदृशपरमिति भावः । मन्दतायुक्तं—तत्समानाऽधिकरणम् । 'मन्दकरणं शीत' मित्यादिना मन्दाद्यर्थशीतादिपदं क्रियाविशेषणमिति सूचितं, तदाह—क्रियाविशेषणाभ्यामित्यादि । गौणस्याऽपीति । 'अपि'रेवार्थे । इह—शास्त्रे । 'क्वचि'दित्यस्य ग्रहणमिति शेषः । सूत्रविशेष इत्यर्थः ॥ ७२ ॥

अधिकम् । ससाधनेति—साहित्यमात्रं विवक्षितं, तेन क्रियाविशिष्टसाधनवाचकादित्यर्थः । अनङ्गीकृतेति । अनाश्रितार्थशब्दस्वरूपमात्रस्य निपातनमित्यर्थः ।

इदं तु न सिध्यति—अध्यारूढा द्रोणेन खारी, अधिका द्रोणेन खारीति; गत्यर्थानां हि क्तः कर्त्तरि विधीयते†। गत्यर्थानां वै क्तः कर्मण्यपि विधीयते† ॥ ७३ ॥

## पार्श्वेनान्विच्छति ॥ ५ । २ । ७५ ॥

किं यः पार्श्वेनाऽन्विच्छति स पार्श्वकः ? किं चातः ? राजपुरुषे प्राप्नोति । एवं तर्हि—उत्तरपदलोपोऽत्र द्रष्टव्यः । पार्श्वमिव पार्श्वम् । य ऋजुनोपायेनान्वेष्टव्यानर्थाननृजुनोपायेनान्विच्छति स उच्यते पार्श्वक इति ॥ ७५ ॥

## अयःशूलदण्डाजिनाभ्यां ठक्ठञौ ॥ ५ । २ । ७६ ॥

किं योऽयःशूलेनान्विच्छति स आयःशूलिकः ? किं चातः ? शिवभागवते प्राप्नोति ॥ एवं तर्हि—उत्तरपदलोपोऽत्र द्रष्टव्यः । अयः शूलमिवायःशूलम् । यो मृदुनोपायेनान्वेष्टव्यानर्थान् रभसेनान्विच्छति स उच्यते आयःशूलिकः ॥ ७६ ॥

प्र०—निपातनं, स चोभयार्थ इति न कश्चिद्दोषावसरः । खार्यामिति । यदा कर्त्तरि क्तस्तदा कर्मणोऽनभिधानाद्द्वितीयायां प्राप्तायां 'यस्मादधिक'मिति ज्ञापकात्पञ्चमी भवति । औपश्लेषिकाधिकरणविवक्षायां तु सप्तमी, तथा 'तदस्मिन्नधिक'मिति निर्देशः कृतः ॥ ७३ ॥

पार्श्वेन । राजपुरुष इति । स हि राजा पार्श्वश्रयेणाऽर्थमिच्छतीति भावः । ऋजुनेति । यथा पार्श्वं तिर्यगवस्थानादनृजु तथाऽन्योऽप्यनृजुरुपायः पार्श्वमित्यर्थः ॥ ७५ ॥

अयः । शिवभागवत इति । भगवान् भक्तिरस्य भागवतः । शिवस्य भागवत इति षष्ठीसमासः । अवयवसंस्पर्शद्वारेण समुदायार्थविशेषणाच्छिवो भगवान्भक्तिर्यस्य स प्रतीयते । एवं

उ०—द्वितीयायामिति । 'अध्यारूढो द्रोणः खारी'मितिवत् । भाष्येऽप्यध्यारूढपदयुक्तप्रयोगे 'खारी'मिति द्वितीयान्तपाठ इति भावः । कर्मणः शेषत्वविवक्षया षष्ठ्यन्तपाठोऽपि क्वचित् । वस्तुतोऽधिकशब्दार्थस्य क्रियात्वाऽभावात्तद्योगे द्वितीयाप्राप्तिश्चिन्त्यैव, अन्यथा 'देवत्तेन शत्योऽश्व' इत्यादौ षष्ठीवारणाय 'कर्त्तृकर्मणो'रिति सूत्रे कृद्ग्रहणस्यावश्यकतया तत्सूत्रस्थभाष्यविरोधापत्तिः, भाष्यन्तूभयविधाऽध्यारूढशब्दार्थे एतन्निपातनमित्यर्थमात्रपरमिति स्पष्टमेव तद्विदाम् । किञ्च 'रुहिर्गत्यर्थ' इति 'यद्धितुपर'मिति सूत्रे भाष्यम्, न च सा क्रियाऽधिकशब्दजबोधे भासते, 'अस्य परिमाणादस्य परिमाणमधिक'मित्यादावप्रतीतेः । नाऽप्यन्या, तथा सति 'गत्यर्थत्वात्कर्त्तरि कर्मणि च क्तः' इति भाष्याऽसङ्गतिः । आधिक्यगुणप्रवृत्तिनिमित्तकश्चाऽयम् । पञ्चमी तु षष्ठीबाधिका—ज्ञापकादेव । स्वतन्त्रा सप्तमी तु उपश्लिष्टपदाध्याहारेण औपश्लेषिकेऽधिकरण इत्यन्ये । औपश्लेषिकेति । एतच्च 'तदस्मि'न्निति सूत्रे व्याख्यातम् । 'अधिका खारी द्रोणेने'त्यत्र तृतीया प्रकृत्यादित्वाद्धेतौ वा, कृतेतिपदाध्याहारेण कर्त्तरि वा ॥ ७३ ॥

पार्श्वेना । भाष्ये 'राजपुरुषे' इति पाठः । 'राजपुरुषेऽपी'ति पाठे 'अपि'रेवार्थः ॥ ७५ ॥

अयःशूल । शिवभागवते एतद्भाष्यप्रामाण्यादेव गमकत्वाद्वृत्तिः, अन्यथा भगवत्पदार्थस्य शिव-

† गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च ३ । ४ । ७२

## तावतिथं ग्रहणमिति लुग्वा ॥ ५ । २ । ७७ ॥

### 'तावतिथं ग्रहणमिति लुग्वा'वचनानर्थक्यं विभाषाप्रकरणात् ॥ १ ॥

तावतिथंग्रहणमिति लुग्वावचनमनर्थकम् । किं कारणम् ? 'विभाषाप्रकरणात्' । प्रकृता महाविभाषा† तयैतत्सिद्धम् ।

### तावतिथेन गृह्णातीति लुक् च ॥ २ ॥

तावतिथेन गृह्णातीत्युपसङ्ख्यानं कर्त्तव्यं लुक्च वक्तव्यः । षष्ठेन गृह्णाति षट्कः ॥ ७७ ॥

## शृङ्खलमस्य बन्धनं करभे ॥ ५ । २ । ७६ ॥

### शृङ्खलमस्य बन्धनं करभ इत्यनिर्देशः ॥ १ ॥

शृङ्खलमस्य बन्धनं करभ इत्यनिर्देशः । अगमको निर्देशोऽनिर्देशः । न हि

---

प्र०—तर्हीति । यथाऽय शूलं तीक्ष्णमेवमन्योऽपि तीक्ष्ण उपायोऽयःशूलमुपचारादुच्यते ॥ ७६ ॥

तावतिथं । 'तावतिथ'मिति पूरणप्रत्ययान्तनिर्देशः । गृह्यतेऽऽनेनेति ग्रहणम् । तत्रायमर्थः—पूरणप्रत्ययान्ताद्ग्रहणोपाधिकात् स्वार्थे कन्भवति,—तस्य च कनो वा लुम्भवति,—पञ्चमं ग्रहणं पञ्चमकमिति । एतत्सूत्रार्थाश्रयेण वार्त्तिकारम्भः । तावतिथमिति । महाविभाषाधिकाराद्विकल्पेन प्रत्ययोत्पादनाद्रूपद्वयस्य सिद्धत्वादित्यर्थः । यदा तु पूरणप्रत्ययस्य वा लुग्विधीयते—पञ्चकं ग्रहणं पञ्चमकं ग्रहणमिति,—तदा लुग्वाग्रहणं च कर्त्तव्यमेव । अन्यथा रूपद्वयं कथं सिध्येत् । तावतिथेनेति । स्वार्थे प्रत्ययो विधीयमानो ग्रहीतरि न प्राप्नोतीति वचनम् । लुक्च पूरणप्रत्ययस्यैव न तु कनः ॥ ७७ ॥

शृङ्खलम् । शृङ्खलमिति । बध्यतेऽस्वतन्त्रीक्रियतेऽनेनेति बन्धनमुच्यते । रज्जोश्चाऽस्वतन्त्रीकरणे करणत्वं न तु शृङ्खलस्येति भावः । काष्ठमयं पाशकं पादे यद्बध्यतिषज्यते तच्छृङ्खल-

---

उ०—रूपविशेष्यसापेक्षत्वेनाऽसामर्थ्याद्वृत्तिर्न स्यात् । ननु शिवस्य भगवता सामर्थ्येऽपि भागवतेनाऽसामर्थ्यात्कथं समासोऽत आह—अवयवेति । भक्तिः—सेव्यः । कर्मणि क्तिन् । शिवभागवताः—कापालिकाः । ते हि शूलहस्ताः प्रायेण भिक्षां चरन्ति । तीक्ष्ण उपाय इति । भाष्ये रभसपदेनाऽप्ययमेव ॥ ७६ ॥

तावतिथंग्रह । तावतिथस्यैव सूत्रे निर्देशात् 'षट्क' इत्युदाहरणं कथमत आह—पूरणेति । अनेनेतीति । अत एव सूत्रे सामानाधिकरण्येन निर्देशः । यदा त्विति । अत एव 'षष्ठेन गृह्णाति षट्कः' इति भाष्यं सङ्गच्छते । एवञ्चेदं वार्त्तिकं प्रौढ्यैवेति भावः । 'पञ्चक'मित्यस्य च ग्रहणकरणम्पञ्चमं रूपमित्यर्थः ॥ ७७ ॥

शृङ्खलमस्य । ननु संयोगविशेषरूपस्य बन्धनस्य शृङ्खलमपि करणमेवेत्यत आह—अस्वतन्त्री-

---

† समर्थानां प्रथमाद्वा ४ । १ । ८२

तस्य शृङ्खलं बन्धनं शृङ्खलवत्याऽसौ रज्ज्वा बध्यते ।

**सिद्धं तु तद्वन्निर्देशाल्लुक् च ॥ २ ॥**

सिद्धमेतत् । कथम् ? तद्वन्निर्देशः कर्त्तव्यो लुक् च वक्तव्यः—शृङ्खलवद्बन्धनमिति ।

स तर्हि तद्वन्निर्देशः कर्त्तव्यः ? न कर्त्तव्यः । इह यन्नान्तरेण यस्य प्रवृत्तिर्भवति तत्तस्य निमित्तत्वाय कल्पते, न चाऽन्तरेण शृङ्खलं बन्धनं प्रवर्त्तते । अथवा साहचर्यात्ताच्छब्द्यं भविष्यति—शृङ्खलसहचरितं बन्धनं शृङ्खलं बन्धनमिति ॥ ७९ ॥

## तदस्मिन्नन्नं प्राये संज्ञायाम् ॥ ५ । २ । ८२ ॥

**प्राये संज्ञायां वटकेभ्य इनिः ॥ १ ॥**

प्राये संज्ञायां वटकेभ्य इनिर्वक्तव्यः । वटकिनी पौर्णमासी ॥ ८२ ॥

## श्रोत्रियँश्छन्दोऽधीते ॥ ५ । २ । ८४ ॥

किं निपात्यते ?

**श्रोत्रियंश्छन्दोऽधीत इति वाक्यार्थे पदवचनम् ॥ १ ॥**

छन्दोऽधीत इत्यस्य वाक्यस्यार्थे 'श्रोत्रिय'न्नित्येतत्पदं निपात्यते ।

प्र०—मुच्यते । बाल उष्ट्रः—करभः । इहेति । यद्यपि रज्जोः करणत्वं तथापि शृङ्खलस्य करणत्वमस्त्येव तदन्तरेण बन्धनस्याभावात् । अथवेति । रज्जुः शृङ्खलशब्देन तत्साहचर्यादुच्यत इत्यर्थः ॥ ७९ ॥

तदस्मिन्नन्नम् । वटकेभ्य इनिरिति । कनि प्राप्ते वचनम् । मत्वर्थीयस्त्विनिः 'सप्तम्यां च न तौ स्मृता'विति नास्ति ॥ ८२ ॥

श्रोत्रियन् । वाक्यार्थ इति । वाक्यार्थस्य सम्बन्धरूपस्य क्रियारूपस्य वाऽसत्त्वभूतत्वात् श्रोत्रियशब्दस्य च सत्त्वभूतार्थाभिधायित्वाद्वाक्यार्थग्रहणेन तदाश्रयश्छन्दोऽध्याय्युपचारादभिहितः । तत्राऽविद्यमानप्रकृतिप्रत्ययविभागः श्रोत्रियशब्दो निपात्यते । नकारः स्वरार्थः ।

उ०—क्रियत इति । व्यतिषज्यते—रज्ज्वादिना बध्यते इत्यर्थः । 'शृङ्गल'मिति क्वचित्पाठः । भाष्ये—यं नान्तरेणेति । यं विना यस्य प्रवृत्तिर्नेत्यर्थः ॥ ७९ ॥

श्रोत्रियंश्छ । ननु वाक्यार्थे वृत्तावसत्त्वभूतार्थकत्वादव्ययत्वापत्तिरत आह—वाक्यार्थस्येति । ननु सम्बन्धस्य न वाक्यार्थत्वं 'वाक्यार्थे' इत्यस्य 'तज्जन्यबोधविशेष्ये' इत्यर्थादत आह—क्रियारूपस्य वेति । व्यपवर्गोऽभावेऽपीति । निति परे इत्यर्थं इत्यभिमानः ।वस्तुतस्तु निदन्ते पदे इत्यर्थाद्व्यपदेशिवद्भावेनेदं

छन्दसो वा श्रोत्रभावस्तदधीत इति घंश्च ॥ २ ॥

छन्दसो वा श्रोत्रभावो निपात्यते तदधीत इत्यस्मिन्नर्थे, घंश्च प्रत्ययः । छन्दोऽधीते श्रोत्रियः ॥ ८४ ॥

## श्राद्धमनेन भुक्तमिनिठनौ ॥ ५ । २ । ८५ ॥

इनिठनोः समानकालग्रहणम् ॥ १ ॥

इनिठनोः समानकालग्रहणं कर्त्तव्यम् । अद्यभुक्ते श्वः श्राद्धिक इति मा भूत् ।

उक्तं वा ॥ २ ॥

किमुक्तम् ? अनभिधानादिति† ॥ ८५ ॥

## साक्षाद् द्रष्टरि संज्ञायाम् ॥ ५ । २ । ९१ ॥

संज्ञायामिति किमर्थम् ? त्रिभिः साक्षाद् दृष्टं भवति—यश्च ददाति यस्मै च

प्र०—तेनाद्युदात्तत्वं नित्करणसामर्थ्याद्व्यपवर्गाभावेऽपि भवति । छन्दसो वेति । तस्मिन्पक्षे घनाऽणो बाधप्रसङ्गाच्छान्दसशब्दो न सिध्यतीति 'तावतिथं ग्रहण'मित्यतो 'वा'ग्रहणमनुवर्त्यम् । अथवा विशेषतः छन्दोऽध्यायिनि तदर्थानुष्ठायिनि श्रोत्रियशब्दस्य निपातनादध्येतृमात्रे छान्दसशब्दस्य नास्ति बाधः ॥ ८४ ॥

श्राद्ध । समानकालग्रहणमिति । भुजिना समाने काले प्रत्ययप्रयोगो यथा स्यात् । यस्मिन्काले भुजिक्रियाऽऽहिततृप्तिलक्षणविशेषानुवृत्तिस्तस्मिन्नेव श्राद्धिश्राद्धिकशब्दयोरुच्चारणं न तु कालान्तरे । स च समानः कालो लोकप्रसिद्ध्यनुसारेणाऽद्यतन एव द्रष्टव्यः, तेन यदा द्वितीयेऽहनि कस्यचिदन्नमपरिणतं तदा प्रत्ययाभावः ॥ ८५ ॥

साक्षात् । संज्ञायत इति संज्ञेत्यर्थ एव व्यपदिश्यमानोऽभिधीयते । अथवा संज्ञायतेऽनयेति संज्ञा । निपातनाल्ल्युडभावः । ततः शब्द एव संज्ञाशब्देनोच्यते । संज्ञायां विषये कार्यं

उ०—सिद्धम् । विशेषे छन्दोऽध्यायिनीति । छन्दोऽध्यायित्वं—तदर्थाऽनुष्ठायित्वरूपविशेषवतीत्यर्थः । विशेषत इति पाठे 'निपातना'दित्यनेनाऽन्वयः । विशेषमेव दर्शयति—छन्दोऽध्यायिनीत्यादिना ॥ ८४ ॥

श्राद्धमनेन । द्वयोः प्रत्यययोः समानकालत्वाऽसम्भवादाह—भुजिनेति । नन्वेवं भोजनोत्तरं तद्दिनेऽपि प्रयोगो न स्यादित्यत आह—यस्मिन्निति । 'लोकप्रसिद्ध्यनुसारेणे'ति पाठः ॥ ८५ ॥

साक्षाद् । एवं व्यपदिश्यमान इति । 'संज्ञायत' इत्यर्थकसंज्ञाशब्देन साक्षाद्द्रष्टृत्वेन व्यवहिय-

† ३ । २ । १ वा० ५

दीयते यश्चोपद्रष्टा, तत्र सर्वत्र प्रत्ययः प्राप्नोति । संज्ञाग्रहणसामर्थ्याद्धनिकाऽन्तेवासिनोर्न भवति ॥ ९१ ॥

## क्षेत्रियच्परक्षेत्रे चिकित्स्यः ॥ ५ । २ । ९२ ॥

किं निपात्यते ?

क्षेत्रियः श्रोत्रियवत् ॥ १ ॥

क्षेत्रियः श्रोत्रियवन्निपात्यते × । परक्षेत्रे चिकित्स्य इत्येतस्य वाक्यस्याऽर्थे 'क्षेत्रिय'जित्येतत्पदं निपात्यते ।

परक्षेत्राद्वा तत्र [१]चिकित्स्य इति परलोपो घच्च ॥ २ ॥

परक्षेत्राद्वा तत्र चिकित्स्य इत्येतस्मिन्नर्थे परलोपो निपात्यते घच्च प्रत्ययः । परक्षेत्रे चिकित्स्यः क्षेत्रियः ॥ ९२ ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये पञ्चमाध्यायस्य
द्वितीये पादे प्रथममाह्निकम् ।

---

प्र०—भवतीत्यर्थः । लक्ष्यानुसारिप्रतिपत्त्रपेक्षया प्रश्नः—संज्ञाग्रहणं किमर्थमिति । लक्षणानुसारिप्रतिपत्त्रपेक्षया तूत्तरम्—त्रिभिरिति । अन्तेवासिशब्देन शिष्यसाधर्म्यात्पारतन्त्र्यादधमर्ण उच्यते ॥ ९१ ॥

क्षेत्रि । परक्षेत्रे—जन्मान्तरशरीरे चिकित्स्यो व्याधिरसाध्यत्वात्क्षेत्रियः । तथा परक्षेत्रे-धान्यार्थे क्षेत्रे यानि तृणानि जातानि विनाश्यानि तानि क्षेत्रियाणि । तथा परदारेषु निग्राह्यः क्षेत्रियः । तथा परशरीरेषु संक्रमय्य यद्विषं चिकित्स्यते तत्क्षेत्रियम् ॥ ९२ ॥

इत्युपाध्यायजैयटपुत्रकैय्यटविरचिते महाभाष्यप्रदीपे पञ्चमाध्यायस्य
द्वितीये पादे प्रथममाह्निकम् ।

---

उ०—माणोऽर्थोऽभिधीयत इत्यर्थः । एवं व्यवह्रियमाणेऽर्थे इति प्रत्यय इत्यर्थः । अनयेति । शब्दव्यक्त्येत्यर्थः । तदाह—शब्द एवेति । संज्ञायां विषय इति । तदर्थप्रतिपादकशब्दविषय इत्यर्थः ॥ ९१ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते पञ्चमाऽध्यायस्य
द्वितीयपादे प्रथममाह्निकम् ।

---

× ५ । २ । ८४ वा० १     १—'घंश्च' पा० ।

# तदस्यास्त्यस्मिन्निति मतुप् ॥ ५ । २ । ९४ ॥

किमर्थमिमावर्थावुभौ निर्दिश्येते—अस्याऽस्मिन्निति, न यद्यस्य भवति तस्मिन्नपि तद्भवति, यच्च यस्मिन्भवति तत्तस्याऽपि भवति ? नैतयोरावश्यकः समावेशः । भवन्ति हि देवदत्तस्य गावो न च तास्तस्मिन्नाधृता भवन्ति । भवन्ति

प्र०—तदस्य । 'शाखावान्वृक्ष' इत्यादौ वृक्षादेराधारभावोऽप्यस्ति, तत्पूर्वकं सम्बन्धित्वं चेत्यन्यतरोपादानेनैवेष्टविषये सिद्धिं मत्वा पृच्छति—किमर्थमिति । कस्मा इदं किमर्थम् । कोऽर्थोऽस्येति वा किमर्थम् । एतच्च निर्देशक्रियाविशेषणं न तु निर्दिश्यमानविशेषणमिति नपुंसकैकवचननिर्देशः । न यद्यस्येति । नशब्दः काका प्रयुक्तो भवत्येवेति विधिं गमयति । नैतयोरावश्यक इति । अवश्यंभाव आवश्यकम् । मनोज्ञादेराकृतिगणत्वादोरावश्यक इति निपातनाद्वा वुञ्प्रत्ययः । 'अव्ययानां भमात्रे'इति टिलोपः । आवश्यकमस्मिन्नस्तीत्यावश्यकः । अर्शआदेराकृतिगणत्वादच्प्रत्ययः । इह यदा सम्बन्धः सर्वकारकपूर्वकः नाधारपूर्वक एव, यथा देवदत्तस्य गाव इति क्रयप्रतिग्रहादिक्रियाविषयकर्तृत्वपूर्वकः स्वस्वामिसम्बन्धः, तदा सप्तम्युपादाने कारकान्तरपूर्वसम्बन्धाग्रहणादस्येति षष्ठ्यर्थोऽप्युपपादनीयः । तथा षष्ठ्यर्थमात्रनिर्देशे यत्राधिकरणं शेषसम्बन्धनिमित्तसम्बन्धित्वेनाऽविवक्षितम्—वृक्षा अस्मिन्पर्वते सन्तीति; तत्र प्रत्ययो न स्यात् । न ह्यत्र क्रियाकारकपूर्वः शेषसम्बन्धो दृश्यते, वृक्षैः पर्वतस्यानारम्भात् । नावयवावयविभावः—आनन्तर्यादिसम्बन्धसम्भवेऽपि तत्र मत्वर्थीयैर्न भाव्यं, तस्मादुभयोपादानम् । ननु किमुच्यते—न तास्तस्मिन्ना-

उ०—तदस्याऽस्त्य । नन्वाधारत्वसम्बन्धित्वयोर्भेदात्प्रश्नाऽनुपपत्तेराह—शाखावानिति । 'वृक्षे शाखा' 'वृक्षस्य शाखे'त्युभयदर्शनादिति भावः । तत्पूर्वकं सम्बन्धित्वञ्चेति । सम्बन्धित्वं—सम्बन्धः । अवयवाऽवयविभावरूपमिति भावः । बोधविषयधर्मभेदसत्वेन 'मत्वे'त्युक्तम् । द्वयोरर्थयोर्विशेष्यत्वान्नपुंसकैकवचननिर्देशाऽनुपपत्तेराह—एतच्चेति । नञो निषेधार्थत्वेऽसङ्गतेराह—न शब्द इति । भवत्येवेति । तस्मिन्नपि तद्भवत्येवेत्यर्थः ।

भावप्रत्ययान्तस्य नपुंसकत्वदर्शनादन्वयाऽसम्भवाच्चाह—अवश्यम्भाव इत्यादि । अवश्यं यद्भवति तस्य भावस्तद्बोधकशब्दः, स चाऽवश्यं शब्द एव, सोऽर्थद्वारा यत्राऽस्तीत्यावश्यकः । एवञ्च,—'आवश्यक' इत्यस्य—अवश्यंसमावेश इत्यर्थः । वृक्षशाखयोस्तत्समावेशदर्शनादाह—इहेत्यादि । यदेति । यत इत्यर्थः । तदेति च,—तत इत्यर्थः । कर्त्तृत्वपूर्वक इति । कर्मत्वस्याऽप्युपलक्षणम् । सम्बन्धनिमित्तेति । सम्बन्धनिमित्ते सम्बन्धनिरूपके सम्बन्धित्वेनाऽविवक्षितम्, किन्त्वधिकरणत्वेन विवक्षितमित्यर्थः ।

तत्त्वेनाऽविवक्षा च सम्बन्धाऽसम्भवादेवेत्याह—न ह्यत्रेति । कारकाणां शेषत्वविवक्षा हि तत्पूर्वकसम्बन्धसत्त्वे, न च प्रकृते कश्चित्तादृशः सम्बन्धोऽस्तीति भावः । तदेवोपपादयति—वृक्षैरिति । आनन्तर्यादिसम्बन्धेति । अनन्तरादिसमभिव्याहारं विना तेषां षष्ठ्याद्यर्थत्वाऽभावः, तत्समभिव्याहारे तु सापेक्षत्वान्मत्वर्थीयो नेति भावः । कारकप्रकरणे इति । 'साधकतम'मिति तमप्ग्रहणादिति भावः । अयन्त्विति । न चेह गौणग्रहणे ज्ञापकमस्तीति भावः । अन्ये त्वेवं हि 'घोषवती गङ्गा' 'काकवद्गृह'मित्याद्यनापत्तिः,

च पर्वते वृक्षा न च ते तस्य भवन्ति । [ तस्मादस्याऽस्मिन्ग्रहणम् । ]

अथाऽस्तिग्रहणं किमर्थम् ? सत्तायामर्थे प्रत्ययो यथा स्यात् । नैतदस्ति प्रयोजनम् । न सत्तां पदार्थो व्यभिचरति ।

प्र०—धृता भवन्तीति-यावता 'यस्य चेश्वरवचन'मित्येतत्प्रत्याख्यानायाधिब्रह्मदत्ते पञ्चाला इति सप्तमीसिद्धयर्थं भाष्यकारेणाभिहितं—'परिग्रहीतव्यं परिग्रहीत्रधीन'मित्यादि । तथा च 'देवदत्ते गाव' इत्यपि भवितव्यम् । कारकप्रकरणे हि गौणमुख्यन्यायस्यानाश्रयणाद्गौणस्याधारस्याप्यधिकरणसंज्ञया भाव्यम् । यथा 'गङ्गायां घोषः' 'कूपे गर्गकुल'मिति । ततश्च सप्तम्युपादानेऽपि 'गोमान्देवदत्त' इति सिध्यत्येव । नैतदस्ति । सप्तमीमात्रनिर्देशे मुख्य एवाधिकरणे मत्वर्थीयाः स्युः—'वृक्षवान् पर्वत' इत्यादौ, न तु गौणे 'गोमान् देवदत्त' इत्यादौ । कारकप्रकरणे हि गौणमुख्यन्यायानाश्रयणम्, अयन्तु प्रत्ययविधिरिति स्यान्न्यायाश्रयणमिति षष्ठीनिर्देशोऽपि कृतः ।

अथास्तिग्रहणमिति । संभवे व्यभिचारे च विशेषणविशेष्यभावो भवति, यथा नीलोत्पलमिति । सत्तां तु पदार्थो न व्यभिचरति, तामन्तरेण पदोच्चारणाऽसंभवात्तस्या एव सर्वशब्दवृत्तौ कारणत्वादिति **प्रश्नः । सत्तायामर्थे प्रत्ययो यथा स्यादिति ।** सत्तायां वर्त्तमानात्सत्तोपाधिकार्थाभिधायिनः प्रत्ययो यथा स्यादित्यर्थः । **न सत्तां पदार्थो व्यभिचरतीति ।** यावद्बुद्ध्या पदार्थो न विषयीकृतस्तावत्पदस्य प्रयोगाभावः । तस्माद्बुद्धिसत्तासमाविष्टोऽर्थो विधिनिषेधजननादिभिः सम्बध्यते.-वृक्षोऽस्ति वृक्षो नास्ति वृक्षो जायत इति । अत्यन्ताऽसतोऽपि बहिः शशविषाणादीनर्थान् बुद्ध्या विषयीकृत्य शशविषाणादिप्रयोगः, तस्माद्बुद्ध्यारूढोपचरिता सत्ता शब्द-

उ०—व्यापकाधारस्यैव मुख्याधिकरणत्वमिति 'स्वरितेन' 'साधकतम'मित्यादौ भाष्ये स्पष्टमुक्तेः, तस्मादधिब्रह्मदत्ते पञ्चाला इत्यादौ 'आधृता'इत्यध्याहारेण बौद्धमाधारत्वम्, तच्च यत्र तथा बुद्धिरस्ति तत्राऽस्तु, सा चाधिशब्दयोग एव, नाऽन्यत्रेति भाष्याशयः । भाष्ये—भवन्ति च पर्वते इति । न च तेऽपि तस्य संयोगवन्तो भवन्तीति वाच्यं, संयोगसम्बन्धेन सम्बन्धिनि मतुपः षष्ठ्याश्चाऽनङ्गीकारात् । न हि कथञ्चित्संयुक्तयोर्घटयोः 'घटवान् घट'इति 'घटस्ये'ति वा भवति । संयोगविशेष एव स्म भवति, तत्र च आधाराधेयभाव एव इत्याहुः । अस्तीति प्रकृत्यर्थविशेषणन्तत्र, प्रश्नाशयमाह—सम्भवे इति । तामन्तरेण—बुद्धौ पदार्थसत्तामन्तरेणार्थबोधाय .पदोच्चारणाऽसम्भवादित्यर्थः । तस्या एव—बुद्धिसत्ताया एव । प्रवृत्तौ—प्रयोगे । 'न सत्ता प्रकृत्यर्थ' इति 'सत्तायां वर्त्तमाना'दित्यसङ्गतमतस्तदर्थमाह—सत्तोपाधिकेति । वृत्तौ प्रकृतेस्तदर्थाऽन्तर्भावेण वृत्तिरिति भावः ।

ननु वर्त्तमानाऽर्थशत्रन्तप्रकृतिकसत्तापदार्थो न भूतभविष्यतोरिति कथं पदार्थस्तां न व्यभिचरतीत्यत आह—यावदिति । सम्बध्यत इति । 'बहिः सत्वाऽसत्वादिप्रतिपादनाये'ति शेषः । नन्वत्यन्ताऽसन् शशविषाणादिः सत्तां व्यभिचरतीत्यत आह—अत्यन्तेति । उपचरितेति । बाह्यसत्ताया एव

१—अयं पाठो न सार्वत्रिकः ।

**इदं तर्हि प्रयोजनम्, सम्प्रतिसत्तायां यथा स्याद्भूतभविष्यत्सत्तायां मा भूत्,—'गावोऽस्यासन्' 'गावोऽस्य भवितार' इति । न तर्हीदानीमिदं भवति—**

प्र०—प्रयोगाश्रयत्वादव्यभिचारेत्यर्थः । सैव तु बुद्धिसत्ता प्रयोक्तृप्रतिपत्तॄणां बही रूपतयाऽवभासते । यदि तु वृक्षादीनां बाह्यसत्तासमाविष्टं वस्तु वाच्यं स्यात्तदा 'वृक्ष' इत्यतः सत्तावगमादस्तीत्यस्य गतार्थत्वात् प्रयोगो न स्यात् । नास्तीत्यस्य च सत्ताविरोधात्प्रयोगाऽप्रसङ्गः । 'अङ्कुरो जायते' इति च प्रयोगो न स्यात्सतो जन्मविरोधात् । उपचारसत्तायां त्वेते दोषा नावतरन्ति । बुद्धिसत्तासमाविष्टस्य बहिःसत्त्वाऽसत्त्वजननप्रतिपादनायास्तिनाऽस्तिजायत इति प्रयोगात् । अन्ये तु वर्णयन्ति, यत्र क्रियापदं न श्रूयते तत्राऽस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोप्यस्तीति गम्यत इत्येतदाश्रयणेन न सत्तां पदार्थो व्यभिचरतीत्युक्तम् । तेषां 'संप्रतिसत्तायां यथा स्या'दिति परिहारग्रन्थो नोपपन्नः । 'राजपुरुष' इत्यादौ च सबन्धप्रतिपादनेऽस्तेराक्षेपाभावादनैकान्तिकमेतत् । **संप्रतिसत्तायामिति** । वर्त्तमानसत्तायां—बाह्यायां सत्तायामित्यर्थः । **भूतभविष्यत्सत्तायामिति** । भूतभविष्यतोर्या सत्ता अतीतानागतवस्तुपरामर्शिबुद्धितत्त्वोत्प्रेक्षितोपचरितरूपा तस्यां मा भूदित्यर्थः । या तु मुख्या सत्ता सा भूतभविष्यत्सत्तेति व्यपदेष्टुं न शक्यते । 'स'दित्यस्य लडन्तस्य वर्तमानकालविषयत्वाद्भूतभविष्यतोः सत्तेति सम्बन्धाऽयोगात् । नापि 'भूता सत्ता' 'भविष्यन्ती सत्ते'ति सामानाधिकरण्येन सम्बन्धोपपत्तिः ।

उ०—मुख्यत्वादियं गौणीत्यर्थः, तयैव सर्वव्यवहारात् । **शब्दप्रयोगाश्रयत्वात्**—तत्प्रयोगनिमित्तत्वात् । ननु तस्या न शब्दजबोधविषयत्वं, तद्विशिष्टस्य नयनाद्यसम्भवादत आह—**सैव त्विति** । बहिः सत्तासत्त्वे तु तत्समानाऽधिकरणतयाऽसत्त्वे तु केवलायास्तस्या एव बही रूपत्वेन भानम्, अत एव घटशून्यादपि गेहाद्घटमानयेत्युक्ते आनयने प्रवर्त्तते, पश्चात्तदभावनिर्णये वक्तृज्ञानस्य भ्रमत्वं कल्पयतीति भावः । अन्तःकरणस्य रागादिदोषवशेन तस्या एव तत्त्वेन भानमिति तात्पर्यम् । बाह्यसत्ताया एव प्रयोगनियामकत्वे दोषमाह—**यदि त्विति** । **सतो जन्मविरोधादिति** । 'सूक्ष्मरूपेण स्थितस्यैव स्थूलरूपापत्तिर्जन्मे'ति मतेऽपि अङ्कुरशब्दोपात्तस्थूलरूपाऽवच्छिन्नस्याऽसत एव जन्मेति भावः । **उपचारसत्तायान्त्विति** । उपचारसत्तायाः शब्दप्रयोगनिमित्तत्वाश्रयणे त्वित्यर्थः । नन्वेवं बुद्धिसत्तायाः सर्वत्र भाने 'अस्ती'त्यादिप्रयोगो न स्यादत आह—**बुद्धीति** । तया च बाह्यसत्ताऽभावस्य जननस्य चाऽविरोधादिति भावः । **नोपपन्न इति** । अस्तिना सम्प्रतिसत्ताया एव प्रतीतेरिति भावः । दोषान्तरमप्याह—**राजपुरुष इत्यादौ चेति** । **आक्षेपाऽभावादिति** । 'राजपदार्थे' इति शेषः । ननु बुद्धिसत्ता सर्वा व्यवहारकाले सम्प्रतिसत्त्वैवेत्यत आह—**बाह्यायामिति** । मुख्यायामित्यर्थः । **वस्तुपरामर्शि**—वस्तुग्राहकम् । **बुद्धितत्त्वम्**—अन्तःकरणम् । **तदुत्प्रेक्षिता**—तद्वृत्तिविषयीकृता । ननु मुख्यायामेव वर्तमानायां यथा स्याद् भूतभविष्यन्त्यां मा भूदित्येव भाष्यं कुतो न व्याख्यायतेऽत आह—**या त्विति** । **सम्बन्धाऽयोगादिति** । सत्तावर्त्तमानकालत्वस्याऽऽश्रयगतभूतत्वादिना विरोधात् । सत्तावर्तमानत्वस्याश्रयवर्तमानत्वनियतत्वात् । सामानाऽधिकरण्येनाऽपि न सम्बन्धः, स्वगतवर्तमानत्वस्य स्वगतभूतत्वादिना विरोधादिति भावः । अथ कर्मधारयं समर्थयते—**अथाश्रयस्येति** । सत्ताशब्दश्च केवलरूढ एव, न तु वर्त्तमानकालाऽवच्छिन्नसत्ताप्रतिपादक

'गोमानासीत्' 'गोमान्भविते'ति । भवति, न त्वेतस्मिन्वाक्ये । यद्येतस्मिन्वाक्ये स्याद्यथेहाऽस्तेः प्रयोगो न भवति'गोमान्' 'यवमा'निति, एवमिहापि न स्यात्—'गोमानासीत्' 'गोमान्भविते'ति । सति चास्तेः प्रयोगे यथेह बहुवचनं श्रूयते—

प्र०—अथाश्रयस्य भूतभविष्यत्त्वाद्भूता सत्ता भविष्यन्ती सत्तेत्युच्यते तथाऽप्यसौ वर्तमाना न भवतीति तत्र प्रत्ययाभावः । तेन 'गावोऽस्यासन्' 'गावोऽस्य भवितार' इत्यत्रार्थे 'गोमा'निति प्रयोगो न भवति । न तर्हीति । विद्यमान एव देवदत्ते तद्गवीनामतीतानागतत्वप्रतिपादनाय 'गोमानासीद्गोमान्भविते'ति प्रयुज्यते । तत्र प्रकृत्यर्थस्य सम्प्रतिसत्ताया अभावात्प्रत्ययाऽप्रसङ्गः । गुणधर्मस्य च प्रधान आरोपादासीद्भवितेति प्रत्ययार्थस्यातीतानागतव्यपदेश इति चोदको मन्यते । भवतीति । अवस्थातुर्विद्यमानत्वेऽप्यवस्थाविशेषस्य भूतभविष्यत्त्वादासीद्भवितेति व्यपदेशो यथेश्वरोऽयमासीदिति सिद्धान्तवादिनोऽभिप्रायः । न त्वेतस्मिन्वाक्य इति । 'गावोऽस्यासन्' 'गावोऽस्य भवितार' इत्यत्रार्थे 'गोमा'निति न प्रयुज्यते इत्यर्थः । यथेति । प्रत्ययान्तेनैव प्रकृत्यर्थोपाधेः प्रतीतत्वादुपाधिवाचिनः प्रयोगाभावः, यथा दाण्डा क्रीडेति प्रहरणशब्दस्येति भावः । सति चेति । सामान्याभिधाने विशेषावगमाय दृश्यते प्रयोगो यथोत्पुच्छयत इत्यादावसनविशेषप्रतिपादनाय व्युत्परीणाम्, अभिमनायत इत्यादौ च प्रत्ययार्थभवनविशेषावगमाय सुदुरुदभीनामिति भावः । एवमिहापीति । प्रकृत्यर्थसत्ता कालविशेषावधारणाय वाक्यवद्बहुवचनान्तस्याऽस्तेः प्रयोगप्रसङ्गः । का तर्हीति ।

उ०—एवेति भावः । तथाप्यसाविति । तथाऽपि न दोषो यतोऽसावित्यन्वयः । 'सम्प्रतिसत्ताया'मिति भाष्यस्य—वर्तमानाश्रयकसत्तायामित्यर्थकत्वादिति भावः । ननु 'गोमानासी'दित्यादौ सम्बन्धिनोऽतीतादिसत्ता प्रतिपाद्यते न गवामिति नाऽयं दोषोऽत आह—विद्यमान एवेति । ननु गवां सत्ताया एवाऽतीतत्वादिप्रतिपादने 'आस'न्नित्यादि बहुवचनं स्याद्गावोऽस्यासन्निितिवदत आह—गुणधर्मस्य चेति । विशेषणगोगताऽतीतत्वस्येत्यर्थः । प्रधाने—गोमति । 'आसीद्भवितेतिशब्दाभ्या'मिति शेषः । प्रत्ययार्थस्य । मतुप्प्रत्ययार्थगोसम्बन्धिकर्तृकसत्ताया इत्यर्थः ।

ननु गोमतो विद्यमानत्वेन कथं भूतादिप्रयोगोऽत आह—अवस्थातुरिति । अवस्थाविशेषस्य—बाह्यसत्ताविशिष्टगोसम्बन्धस्य । यथेति । यथा च विशेष्यस्य विद्यमानत्वेऽपि शिखासम्बन्धरूपविशेषणनाशाद्विशिष्टनाशमादाय 'शिखी नष्टः' इत्यादिव्यवहारः, तद्वदेव चाऽर्थाद्विशिष्टवैशेष्या मत्वन्तार्थस्य सम्बन्धिनोऽतीतत्वादिप्रतीतिरिति बोध्यम् ।

ननु मतुपः सम्बन्धिमात्रार्थकत्वेन तत्राऽप्यस्तेः प्रयोगः कुतो नेत्यत आह—प्रत्ययान्तेनैवेति । प्रत्ययान्तप्रकृत्येत्यर्थः । ननूक्तत्वादप्रयोग एव न्याय्योऽत आह—विशेषाऽवगमायेति । सत्तागताऽतीतत्वाद्यवगमायेत्यर्थः । प्रत्ययेन हि प्रकृत्यर्थोपाधितया सत्तामात्राऽवगतेरिति भावः । असनविशेषेति । व्यसनोदसनपर्यसनरूपेत्यर्थः । प्रत्ययार्थभवने इति । 'मनस्वी सुष्ठु भवती'त्याद्यर्थप्रतीतिरित्यभिमानः । भाष्ये—का—किमर्थिका, वाचोयुक्तिः,—वाचः—शब्दस्य, युक्तिः—प्रयोग इत्यर्थः । अलुक्समासः । नन्वर्थतोऽतीतगोसत्ताया अपि प्रतीतेर्नैवेत्यनुपपन्नमत आह—साक्षादिति । अवस्थाविशेषस्येति । उक्त एवाऽर्थः ।

१—'यदि त्वेतस्मिन्' पा० ।

'गावोऽस्यासन्' 'गावोऽस्य भवितार' इति, एवमिहापि स्यात्—'गोमानासीत्' 'गोमान्भविते'ति । का तर्हीयं वाचोयुक्तिः—'गोमानासीत्' 'गोमान्भविते'ति ? एवैषा वाचो युक्तिः—नैषा गवां सत्ता कथ्यते । किं तर्हि ? गोमत्सत्तैषा कथ्यते । अस्त्यत्र वर्त्तमानकालोऽस्तिः । कथं तर्हि भूतभविष्यत्सत्ता गम्यते ? 'धातुसन्बन्धे प्रत्ययाः' [ ३ । ४ । १ ] इति ।

प्र०—गोमतो वर्त्तमानत्वादासीद्भवितेति प्रयोगानुपपत्तिरिति मत्वा प्रश्नः । एवैवेति । या एषा शिष्टैः प्रयुक्ता सैषैव वाचोयुक्तिः, यथास्माभिर्व्याख्यायते न त्वन्यथेत्यर्थः । नैषेति । साक्षादित्यर्थः । गोमत्सत्तेति । 'अतीतानागता वे'ति शेषः । अवस्थाविशेषस्यातीतानागतत्वादवस्थातुरतीतानागतत्वमिति प्रागेवोक्तम् । अस्त्यत्रेति—चोदकः । गोमानित्यादौ वर्त्तमानसत्तायुक्तः प्रकृत्यर्थः प्रतीयत एवाऽस्तिर्भवन्तीपर इत्यन्तरङ्गत्वात्सत्तायास्तथा च प्रत्ययान्तादेव शब्दशक्तिस्वाभाव्यात् प्रकृत्यर्थसत्तावगमात् सत्तावाचिपदाऽप्रयोगः । तस्मादङ्गीकृतसत्तः प्रकृत्यर्थः प्रत्ययार्थमवच्छिनत्तीति न कर्त्तव्यमस्तिग्रहणम् ।

चोदक एव—कथं तर्हीत्याशङ्क्य धातुसम्बन्ध इति परिहरति । तत्रारम्भपक्षे प्रत्ययाधिकारे प्रत्ययग्रहणस्येदं प्रयोजनम्—अधात्वधिकारविहितानामपि तद्धितानां कालान्तरे धातुसम्बन्धे साधुत्वं यथा स्यादिति । यदा तु तत्सूत्रं प्रत्याख्यायते तदा हि स्वकाल एव प्रत्यया विधीयन्ते । तत्राग्निष्टोमयाज्यस्य पुत्रो जनितेति विरुद्धकालक्रियासंबन्धादग्निष्टोमयाजित्वस्यैव वाक्यार्थवशाद्भावित्वं गम्यते तथेहापि 'गोमानसीद्गोमान् भविते'ति विरुद्धकालक्रियासम्बन्धाद्गोमत्सत्तालक्षणावस्थाविशेषविषयातीतानागतत्वप्रतीतिरवस्थातुः सत्त्वेऽसत्त्वे च । तत्र प्रकृत्यर्थस्य

उ०—तस्माद्वाह्यसत्तायामेव यथा स्यादित्यर्थमस्तीत्युक्ते तत्प्रत्याख्यानाय चोदक आह—भाष्ये—अस्त्यत्रेति । तद्व्याचष्टे—गोमानित्यादाविति । प्रतीयत एवेति । सूत्रे 'अस्ती'ति पदं विनाऽपि शब्दशक्तिस्वभावादित्यर्थः । यथा सुजर्थे बहुव्रीहिरित्यनुक्तावपि 'द्विदशा' इत्यादौ सुजर्थे बहुव्रीहिरिति भावः ।

तत्र हेतुमाह—अस्तिर्भवन्तीति । अन्यनिवृत्तिपरवाक्येऽपि प्रथमायाः साधुत्वाय तत्सम्बन्ध आवश्यक इति भावः । असति बाधके ज्ञानसामान्यसामग्र्यैव वर्त्तमानसत्ताभासिद्धेरिति तात्पर्यम् । सत्ताया इति । वर्त्तमानसत्ताया इत्यर्थः । इत्याशङ्क्येति । 'गोमानासी'दित्यादौ वर्त्तमानसत्ताया अतीतत्वादिना विरोधाद्गोसत्ताऽतीतत्वस्याऽप्यर्थतस्ततः प्रतिपत्तेरिति भावः । ननु 'धातुसम्बन्ध' इत्यत्र धात्वधिकारात्कथं मतुप्प्रियामकताऽस्येत्यत आह—तत्रेति । विरुद्धकालक्रियासम्बन्धादिति । धर्मिणि विशेषणगतकालविरुद्धकालक्रियासम्बन्धाद्यथा तद्धर्मे यागे भावित्वप्रतीतिः, अतीततद्यागकर्त्तरि भावित्वान्वयबाधेन तद्वाक्यार्थाऽनुपपत्तिवशादित्यर्थः । तथेहाऽपीति । अतीते सम्बन्धिनि विद्यमानगोसम्बन्धस्य वक्तुमशक्यत्वाद्गोसत्तायामप्यतीतत्वप्रतीतिरित्यर्थः । अयम्भावः,—वाक्यार्थाऽनुपपत्तिवशाद्विशेषणगतकालस्य शब्दाबोधेऽभान-

१—'श्रूयेत' पा० ।

इदं तर्हि प्रयोजनम्—अस्तियुक्ताद्यथा स्यादनन्तरादियुक्तान्मा भूदिति,—गावोऽस्यानन्तराः, गावोऽस्य समीप इति। अथ क्रियमाणेऽप्यस्तिग्रहण इह कस्मान्न भवति—गावोऽस्य सन्त्यनन्तराः, गावोऽस्य सन्ति समीप इति। असामर्थ्यात्। कथमसामर्थ्यम्? सापेक्षमसमर्थं भवतीति। यथैव तर्हि क्रियमाणेऽस्तिग्रहणेऽसामर्थ्यादनन्तरादिषु न भवत्येवमक्रियमाणेऽपि न भविष्यति। अस्त्यत्र विशेषः। क्रियमा-

प्र०—वर्तमानसत्ताभावप्रतीतावपि शब्दसंस्कारस्यान्तरङ्गस्यानिवृत्तिर्यथा ग्रामान्नागच्छतीति।

अस्तियुक्तादिति। अस्तिनैव युक्तादित्यर्थः। पूर्वोक्तेन न्यायेनास्त्युपाधिकत्वे लब्धे पुनरस्तिग्रहणं विशेषणान्तरयुक्तप्रकृत्यर्थनिराकरणार्थम्। गावोऽस्येति। अनन्तरमव्यवहितं, समीपं तु व्यवहितमपीति भावः। गावोऽस्य सन्त्यनन्तरा इति। केवलानामनन्तरादीनां भवत्वस्तिग्रहणान्निरासः, इह तु सत्तासद्भावात्प्राप्नोत्येव प्रत्यय इति भावः। असामर्थ्यादिति। इह तु यः प्रकृत्यर्थोपाधिः प्रत्ययान्तेनाऽन्तर्भावयितुं शक्यस्तदुपाधेरेव प्रत्ययेन भाव्यम्। न च गोमानित्येतत्—प्रकृत्यर्थस्यानन्तर्यं गमयितुं शक्नोतीति तदभिधानाय वाक्यमेव प्रयुज्यते। स्वस्वामिभावस्तु सत्तयैवान्तर्भावित इति तत्प्रतीतिर्भवत्येव। क्रियमाण इति। प्रकृत्यर्थविषयपदापेक्षं तृतीयत्वं—गावः सन्त्यनन्तरा अस्येति। तत्राऽस्तिग्रहणे क्रियमाणे केवल एवाऽस्त्यर्थ उपाधिभावेन प्रत्ययान्तेऽन्तर्भवति न त्वानन्तर्यादिविशिष्ट इति प्रतीतिर्भवति। असति त्वस्तिग्रहणे

उ०—मिति। यदाऽपि गोमति विद्यमाने 'गोमानासी'दिति प्रयोगस्तदापि विशिष्टाऽवस्थाविशिष्टस्यैव गोसम्बन्धित्वादवस्थानाशेऽपि तत्र विद्यमानगोसम्बन्धो वक्तुमशक्य इति तदतीतत्वप्रतीतौ न बाधकम्। ननु गोमति गोषु च विद्यमानासु तत्सम्बन्धाऽतीतत्वेऽपि 'गोमानासी'दिति प्रयोगो दृश्यत इति कथं तत्र तदतीतत्वप्रतीतिरत आह—गोमत्सत्तालक्षणेति। गोमत्सम्बन्धलक्षणस्य गोनिष्ठस्याऽवस्थाविशेषस्याऽतीतत्वेन तत्राऽपि गवामतीतत्वादिप्रतीतिर्गोमत इव। अवस्थातुरिति। गवादेरित्यर्थः। असत्त्वेन तु स्फुटैव तत्राऽतीतत्वप्रतीतिरिति बोध्यम्। नन्वेवं सत्ताया वर्तमानत्वप्रतीतिनिवृत्तौ तन्निबन्धनमतुपोऽपि निवृत्तिः स्यादत आह—प्रकृत्यर्थस्येति। अन्तरङ्गस्येति। 'अस्ती'त्यस्य प्रत्याख्यानेऽपि शब्दशक्तिस्वभावबलात्तस्य तत्संस्कारनिमित्तत्वं बोध्यम्। अस्तिनैवेति। 'अस्तिना युक्तादेवे'ति वक्तुमुचितम्, 'अथ क्रियमाणेऽपी'त्युत्तरभाष्यस्वरसात्। नन्वत्राऽस्तिनैव न योगोऽतः कथम्प्राप्तिरत आह—केवलानामिति। 'अस्तियुक्तादेवे'ति नियम इति भावः। ननु 'गाव' इत्यस्य सत्तारूपविशेष्याऽन्वये यथा मतुपः साधुत्वं तथाऽनन्तराऽन्वयेऽपि भविष्यतीत्यत आह—इहेति। 'इह त्वि'ति पाठे तुशब्दार्थश्चिन्त्यः। प्रकृत्यर्थोपाधिरिति। ननु तस्य षष्ठ्यर्थत्वात्प्रत्ययार्थत्वं वक्तुं युक्तं न तु प्रकृत्यर्थोपाधित्वमिति चेन्न; आनन्तर्यादीनामनन्तरादिप्रयोगाऽभावे षष्ठ्यर्थत्वाऽभावात्, न ह्यनन्तरादिप्रयोगमन्तरा 'ब्राह्मणस्य कम्बल' इत्यादौ सत्यपि प्रकरणादावानन्तर्यप्रतीतिरस्ति 'अस्तेरनन्तरे समीपे वे'त्यादिभाष्यस्त्वनन्तरादिपदाध्याहारेण तन्निरूपितसम्बन्धार्थिका षष्ठीत्येतत्परम्। अत एवाऽसामर्थ्याद्वृत्तिर्नेति भाष्यं सङ्गच्छते। यत्र तु प्रकरणादिना वाक्यैकदेशन्यायेनानन्तर्यादिप्रतीतिः तत्राऽपि 'गाव' इति सुबुत्पत्तिर्गोशब्दास्स्वार्थपरादेवेति न समर्थप्रकृतिकता सुबन्तस्येति न मतुबिति

णेऽस्तिग्रहणे नाऽन्तरेण तृतीयस्य पदस्य प्रयोगमनन्तरादयोऽर्था गम्यन्ते । अक्रियमाणे पुनरस्तिग्रहणेऽन्तरेणाऽपि तृतीयस्य पदस्य प्रयोगमनन्तरादयोऽर्था गम्यन्ते ।

अथेह कस्मान्न भवति,—चित्रगुः शबलगुरिति ? बहुव्रीहिणोक्तत्वान्मत्वर्थस्य[१] ।

अथेह कस्मान्न भवति,—चित्रा गावोऽस्य[२] सन्तीति ? कुतः कस्मान्न भवति, किमवयवादाहोस्वित्समुदायात् ? अवयवात्कस्मान्न भवति ? असामर्थ्यात् । कथमसामर्थ्यम् ? 'सापेक्षमसमर्थं भवती'ति । समुदायात्तर्हि कस्मान्न भवति ? अप्रातिपदिकत्वात् । ननु च भो आकृतौ शास्त्राणि प्रवर्त्तन्ते । तद्यथा,—सुप्सुपेति* वर्त्तमानेऽन्यस्य चाऽन्यस्य च समासो भवति । सत्यमेवमेतत् । आकृतिस्तु प्रत्येकं परिसमाप्यते । यावत्येतत्परिसमाप्यते ङ्याप्प्रातिपदिकादिति† तावत उत्पत्त्या भवितव्यम्, अवयवे चैतत्परिसमाप्यते न समुदाये ।

प्र०—धर्मान्तरावच्छिन्नस्याप्यस्त्यर्थस्यान्तर्भाव आशङ्क्येतेत्यर्थः । तत्र क्रियमाणेऽस्तिग्रहणेऽस्त्यर्थस्यैवान्तर्भावावगमाद्वाक्ये यत्तृतीयं पदमनन्तरा इति तद्वृत्तौ स्वार्थप्रतिपादनायावश्यं प्रयोक्तव्यम् । तत्प्रयोगे चाऽसामर्थ्यम् । अक्रियमाणे त्वस्तिग्रहणेऽनेकस्याप्युपाधेरन्तर्भावसंभावनया वृत्तावनन्तरपदप्रयोगमन्तरेणाऽप्यानन्तर्यावगमादसामर्थ्यं न स्यादित्यर्थः ।

चित्रगुरिति । सत्ताविशिष्टचित्रगवार्थः षष्ठ्यर्थश्चास्तीति प्रश्नः । बहुव्रीहिणेति । षष्ठ्यर्थ एव बहुव्रीहिविधानादित्यर्थः । कुतः कस्मादिति । समुदायावयवसंनिधानात्प्रश्नः ।

सापेक्षमिति । 'चित्रा' इति गुणपदं विशेष्यापेक्षं, द्रव्यद्वारेणैव चित्रार्थस्य देवदत्तादिना संबन्धात्, गाव इत्येतदपि गुणापेक्षमित्येकार्थीभावं प्रतिपत्तुं न शक्नोति । तस्माद्वृत्तौ चित्रादिगुणानपेक्षप्रकृत्यर्थोपसर्जनप्रत्ययार्थावगमात्तत्समानार्थमेव वाक्यं प्रदर्शयितव्यं—गावोऽस्य सन्तीति । अप्रातिपदिकत्वादिति । यदा सुबन्तात्प्रत्ययोत्पत्तिः समर्थात्प्रत्ययः प्रातिपदिकात्तु परः श्रूयत इत्येवमाश्रयणं तदा सुबन्तसमुदायस्य समासग्रहणान्नियमार्थादप्रातिपदिकत्वं, सुबन्तत्वमपि नास्ति समुदायात्सुपोऽविधानात्, प्रातिपदिकसमुदायस्याप्यर्थान्तरोपजनाभावादेका प्रातिपदिकासंज्ञा नास्तीत्यप्रातिपदिकत्वम् । विशेषणविशेष्यभावस्य हि पदावस्थायां प्रादुर्भावः,

उ०—ध्वनितं 'कर्मणि चे'ति सूत्रे भाष्य इति बोध्यम् । एवञ्चानन्तरा इत्यनेन सविशेषणत्वादत्र न वृत्तिरिति भावः । ननूक्तोदाहरणेऽनन्तरेत्यस्य चतुर्थत्वात्तृतीयस्येत्ययुक्तमत आह—प्रकृत्यर्थविषयेति । केवल एवेति । अस्तिनैव युक्तादित्यर्थादिति भावः । असति त्विति । तदा हि सूत्राऽनुपात्ताऽस्त्यर्थोऽन्तर्भावेणाऽपि स्यादित्यर्थः । भाष्ये—अक्रियमाणे पुनरिति । वाक्यस्थ'गम्यन्ते' इत्यस्य गम्येरन्नित्यर्थस्तदाह—

१—'मतुप्प्रत्ययार्थस्य' पा० । २—'गावो यस्य' पा० ।

* सुबामन्त्रिते पराङ्गवत् स्वरे; सह सुपा २ । १ । २; ४ † ङ्याप्प्रातिपदिकात् ४ । १ । १ ।

अथेह कस्मान्न भवति,—पञ्चगावोऽस्य सन्ति पञ्चगुः दशगुरिति ? प्रत्येकमसामर्थ्यात्, समुदायादप्रातिपदिकत्वात्, समासात्समासेनोक्तत्वात् । नैतत्सारम् । उक्तेऽपि हि प्रत्ययार्थ उत्पद्यते द्विगोस्तद्धितः । तद्यथा,—द्वैमातुरः । पाञ्चनापितिरिति‡ । नैष द्विगुः । कस्तर्हि ? बहुव्रीहिः† । अपवादत्वाद् द्विगुः प्राप्नोति । अन्तर-

प्र०—न प्रातिपदिकावस्थायाम् । आकृताविति । जातौ कार्यमुच्यमानमनपेक्षितव्यक्तिगतसङ्ख्याविशेषं सर्वत्र प्रवर्त्तते । यथा–'ब्राह्मणो न हन्तव्य' इति । ततश्च प्रातिपदिकसमुदायादपि प्रत्ययोत्पत्तिप्रसङ्गः । अन्यस्य चाऽन्यस्य चेति । अनेन जात्याश्रयत्वं कार्याणां समर्थयते । यदि हि व्यक्तिः पदार्थस्तदा कस्यचिदेवैकस्य सुबन्तस्य समासः प्रसज्येत न तु सर्वस्येत्यर्थः । प्रत्येकमिति । आश्रयगतैकत्वसंख्याविशिष्टा जातिः कार्य आश्रीयते, यथा पशुना यजेतेति भावः । 'ङ्याप्प्रातिपदिका'दित्यत्रैकवचनान्तानां समाहारनिर्देशाद्गुणे सङ्ख्याया विवक्षितत्वादेकैकस्मात्प्रातिपदिकात्प्रत्ययोत्पत्तिर्न तु तत्समुदायादित्यर्थः । उक्तेऽपीति । द्विगोर्लुग्विधानात्तद्धितार्थेत्यत्र स्यादर्थस्याऽर्थशब्दस्य ग्रहणाद्वा तद्धितार्थाद्द्विगोस्तद्धितो भवति । पञ्चगुशब्दश्च द्विगुं मन्यते न बहुव्रीहिम् । अपवादत्वादिति । अन्यपदार्थमात्रे सुबन्तमात्रस्य विधीयमानस्य बहुव्रीहेः सङ्ख्यायास्तद्धितार्थे 'पञ्चगु'रित्यादौ विधीयमानो द्विगुर्विशेषविषयत्वाद्बाधकः प्राप्नोतीत्यर्थः ।

उ०—असामर्थ्यं न स्यादिति । 'अस्तिनैव युक्ता'दित्यनेन अस्तिसहितेतरयुक्तः, केवलेतरयुक्तश्च वारित इति बोध्यम् । तस्मान्नियमायाऽस्तिग्रहणमित्युक्ते पूर्वपक्षी चोद्यान्तरे आवश्यकेन परिहारेणाऽस्यापि परिहारादेतदर्थं तत्रावश्यकमिति वक्तुं चोदयति भाष्ये—अथेह कस्मादिति । यद्यपि 'चित्रा गावो यस्य सन्ती'त्यत्राऽनवकाशेन बहुव्रीहिणा बाधोऽपि वक्तुं शक्यस्तथापि तदप्राप्तिमेव दर्शयितुमाह—कुत इत्यादि । उभयोरप्यवयवयोर्यथा सापेक्षत्वं तथा दर्शयति—चित्रा इतीति । एकार्थीभावमिति । 'मत्वर्थेने'ति शेषः । ननु प्रातिपदिकप्रकृतिकसुबन्तात्प्रत्यय इति 'अप्रातिपदिकत्वा'दित्ययुक्तम्, 'असुबन्तत्वा'दिति वक्तुं युक्तमत आह—यदेति । उक्तार्थेऽप्यदोष इत्याह—सुबन्तत्वमपीति । नन्वेवमपि प्रातिपदिकसमुदायादेकसुपि स्यादेव दोष इत्यत आह—प्रातिपदिकसमुदायस्याऽपीति । एवञ्च न ततः सुबिति भावः । ननु विशेषणविशेष्यभावरूपसम्बन्ध एवाऽधिकोऽर्थ उपजायतेऽत आह—विशेषणविशेष्यभावस्येति । प्रातिपदिकसमुदायादपीति । सुबन्तसमुदायादपीत्यपि बोध्यम् । ननु जातेः प्रत्येकं समासत्वेऽपि एकत्वस्याऽविवक्षणेन तत्समुदायात्स्यादेवेत्यत आह—आश्रयगतैकत्वेति । ननु 'ङ्याप्प्रातिपदिका'दित्यस्य समाहारे एकवचनस्य सत्त्वात्कथं तद्विवक्षया निर्वाहोऽत आह—ङ्याबिति । अत्र यद्वक्तव्यं तत्समर्थसूत्रे उक्तम् । उक्तेऽप्युत्पत्तौ बीजमाह—द्विगोरिति । स्यादर्थस्येति । 'तद्धितः स्या'दिति समासः कार्य इति तत्सूत्रार्थ इति भावः । अत्र पक्षे तद्धितार्थस्य द्विगुनाऽभिधाने मानं चिन्त्यम् । तस्मादाद्यमेव युक्तम् । मन्यत इति । समासान्तस्तु अनित्यत्वान्नेति तदाशयः । 'द्विगोर्लु'गिति तु मतोर्न लुक्, अप्राग्दीव्यतीयत्वादिति बोध्यम् । वस्तुतो न द्विगुरत्र,

‡ तद्धितार्थोत्तरपदसमाहारे च २ । १ । ५१; अत इञ्; मातुरुत्संख्यासंभद्रपूर्वायाः ४ । १ । ९५; ११५ † अनेकमन्यपदार्थे २ । २ । २४

ङ्गत्वाद्बहुव्रीहिर्भविष्यति । काऽन्तरङ्गता ? अन्यपदार्थे बहुव्रीहिर्वर्त्तते, विशिष्टेऽन्यपदार्थे तद्धितार्थे द्विगुः, तस्मिंश्चास्य तद्धितेऽस्तिग्रहणं क्रियते ।

यदि तर्ह्यतिप्रसङ्गाः सन्ति [ इति तद्धितविधावस्तिग्रहणं क्रियते ] बहुव्रीहावप्यस्तिग्रहणं कर्त्तव्यम्, अस्तियुक्ताद्यथा स्यादनन्तरादियुक्तान्मा भूदिति ।

अथ[2] न सन्ति, तद्धितविधावपि नार्थोऽस्तिग्रहणेन । सत्यमेवमेतत् । क्रियते त्विदानीं तद्धितविधावस्तिग्रहणम् । तद्वै क्रियमाणमपि प्रत्ययविध्यर्थं नोपाध्यर्थम्,—अस्तिमानिति मतुब्यथा स्यात् । किं च कारणं न स्यात् ? अप्रातिपदिकत्वात् । नैष

प्र०—अन्तरङ्गत्वादिति । ननु चाऽनवकाशेनाऽन्तरङ्गमपि बाध्यते । नैष दोषः । यत्रैकनिमित्ता द्विगुबहुव्रीहिप्राप्तिस्तत्र द्विगुना बहुव्रीहिर्बाध्यतामिह तु द्विगुरस्त्यर्थमधिकमपेक्षते । तदाह—तस्मिंश्चास्येति । तेन विशिष्टस्य षष्ठ्यर्थस्य तद्धितार्थत्वादस्त्यर्थोऽवश्यापेक्ष्यो द्विगुना, षष्ठ्यर्थमात्रापेक्षस्तु बहुव्रीहिः । यदि तर्हीति । यदि वचनमन्तरेणाऽनन्तरादीनां निवृत्तिर्नास्तीत्यर्थः । अथ न सन्तीति । अनभिधानादेवानिष्टाऽप्रसङ्गादिति भावः । प्रत्ययविध्यर्थमिति । 'अस्ती'ति

उ०—'मत्वर्थे प्रतिषेध' इति वचनादिति भावः । 'पञ्चसु कपालेषु संस्कृतः पुरोडाश' इत्यादौ द्विगोः सावकाशत्वात्परत्वेन बहुव्रीहिरित्याशयः । अत्र प्रत्येकमित्यादि सिद्धान्तिनोक्ते पूर्वपक्ष्याह—नैतत्सारमित्यादि । ततः सिद्धान्त्याह—नैष द्विगुरित्यादि । पूर्वपक्ष्याह—अपवादत्वादित्यादि । तमवकाशमसौ नाऽऽशासीत् । 'पञ्चसु कपालेषु संस्कृतः पुरोडाश' इत्यादौ द्विगोः सावकाशत्वात्परत्वेन बहुव्रीहिरित्याशयः । ननु द्विगोरप्यन्यतद्धितार्थे सावकाशत्वात्कथमपवादत्वमत आह—अन्यपदार्थमात्र इति । ( भाष्ये ) सिद्धान्त्येकदेश्याह—अन्तरङ्गत्वादित्यादि, अस्तिग्रहणं क्रियते इत्यन्तम् । तत्र शङ्कते—ननु चेति । नैष दोष इति । अपवादोऽपि यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यत एवेति भावः । 'पञ्चसु कपालेषु संस्कृतः पञ्चकपाल इत्यादौ तद्धितार्थद्विगुः सावकाश' इति वक्तुं युक्तम् । पूर्वपक्षिणस्तु मतुब्विषयवाक्यविहितो द्विगुरपवाद इत्यभिमानः । पृथक्तद्विषयवाक्यकल्पनैव नेत्युत्तराशयः । कैयटस्तु चिन्त्यः, एकनिमित्ताया द्विगुबहुव्रीहिप्राप्तेरसम्भवात् । भाष्ये तस्मिंश्चास्य तद्धित इति । अस्य द्विगोरर्थद्वारा निमित्तभूते तद्धित इत्यर्थः । एवञ्च'पञ्चगु'रित्यादिर्न द्विगुः, किन्तु बहुव्रीहिरेवेति न ततो मतुबिति बोध्यम् । नैषा सिद्धान्त्युक्तिः, तावताऽप्यपवादत्वाऽहानेः । अच्सामान्यापेक्षयणो विशिष्टसवर्णाऽजपेक्षदीर्घेण बाधदर्शनात् । यत्तु 'सामान्यापेक्षं विशेषाऽपेक्षादन्तरङ्ग'मिति—एतद्भाष्येण सूचितमिति, तन्न; अधिकापेक्षत्वेन बहिरङ्गत्व एवैतद्भाष्यतात्पर्यात् । अत एव 'सुबन्तसामान्यापेक्षो बहुव्रीहिस्तद्विशेषापेक्षो द्विगु'रिति भाष्ये नोक्तम् । तस्मादुक्तस्थले द्विगोः सावकाशत्वेन परत्वादत्र बहुव्रीहिरेवेति सिद्धान्तितात्पर्यम् । अथ न सन्तीति भाष्यस्य—'बहुव्रीहावतिप्रसङ्गा' इति शेषः । तत्र हेतुमाह—अनभिधानादेवेति । भाष्ये—सत्यमेव तदिति । कृते उपायेऽनभिधानाश्रयणमयु-

१—अयं पाठो न सर्वत्र । २—'अथ बहुव्रीहौ दोषा न सन्ति' पा० ।

दोषः । अव्ययमेषोऽस्तिशब्दो नैषोऽस्तेर्लट्[1] । कथमव्ययत्वम् ? 'विभक्तिस्वरप्रतिरूपकाश्च निपाता भवन्ती'ति निपातसंज्ञा*, निपातोऽव्ययमित्यव्ययसंज्ञा† । एवमपि न सिध्यति । किं कारणम् ? अस्तिसामानाधिकरण्ये[2] मतुब्विधीयते, न चाऽस्तेरस्तिना सामानाधिकरण्यम् ।

तदेतत्क्रियमाणमपि प्रत्ययविध्यर्थं, नोपाध्यर्थं, तस्माद्द्विगोस्तद्धितस्य प्रतिषेधो वक्तव्यो यदि तन्नास्ति—'सर्वत्र मत्वर्थे प्रतिषेध' इति‡ । सति हि तस्मिंस्तेनैव सिद्धम् ।

अथ मत्वर्थीयान्मत्वर्थीयेन भवितव्यम् ? न भवितव्यम् । किं कारणम् ? अर्थगत्यर्थः शब्दप्रयोगः । 'अर्थं संप्रत्याययिष्यामी'ति शब्दः प्रयुज्यते । तत्रैकेनो-

प्र०—लुप्तपञ्चमीकः प्रकृतिनिर्देश इति भावः । अव्ययमिति । कर्तृविशिष्टसत्तावाचीति भावः । तथा चास्तित्वमिति भावप्रत्ययप्रयोगोपपत्तिः । न चास्तेरिति । गवादीनां संभवव्यभिचाराभ्यामस्तीति सामानाधिकरण्यं संभवति, अस्तेस्त्वव्यभिचारादस्तिना सामानाधिकरण्याभावः । तत्रास्तिमानिति वृत्तिविषयेऽस्तिक्रियायाः कर्तृविशेषे धनेऽस्तिशब्दो वर्त्तते । कर्तृसामान्येन प्रत्ययार्थस्य विशेषणाऽयोगात् । तस्माद्द्विगोरिति । उपाध्यनुपादानेऽपि शब्दशक्तिस्वाभाव्यान्मतुपो बहुव्रीहेश्चास्त्युपाधिकार्थविषयत्वाद्द्विगुबहुव्रीह्योस्तुल्याश्रयत्वादन्तरङ्गबहिरङ्गभावाभावाद्विशेषविहितेन द्विगुना बहुव्रीहेर्बाधनाद्द्विगोर्मतुबादेस्तद्धितस्य प्रतिषेधो वक्तव्यः । तेनैवैतत् सिद्धमिति । द्विगौ प्रतिषिद्धे बहुव्रीहेर्भावात् द्विगुप्रतिषेध एव युक्तः । पञ्चखट्व इत्यादौ 'बहुव्रीहौ प्रकृत्ये'ति पूर्वपदप्र-

उ०—कमिति भावः । किञ्चाऽन्यार्थे तदित्याह—तद्धै इति । कर्तृविशिष्टेति । कर्तृसहितेत्यर्थः । सत्ताश्रयकर्तृवाचीति तात्पर्यम् । नन्वेवमस्तिभवतीत्यस्यापि सम्भवात्कुतो नाऽस्तेरस्तिसामानाधिकरण्यमत आह—गवादीनामिति । 'अस्ती'त्यतः सत्तावत एव प्रतीतेस्तत्सत्ताप्रतिपादनं विफलमिति भावः । अस्तिशब्द इति । विशेष्यविशेषणभावव्यत्यासादिति भावः । कर्तृसामान्येन—सत्ताकर्तृसामान्येन । प्रत्ययार्थस्य—मत्वर्थसम्बन्धिनः । विशेषणाऽयोगादिति । अव्यभिचारादिति भावः । तुल्याश्रयत्वादिति । उभयोरप्यस्त्युपाधिकत्वस्यावश्यकत्वात्सूत्रेऽनुपादानाच्चेति भावः । विशेषविहितेनेति । तदप्राप्तिविषये तद्धितार्थद्विगोश्चारितार्थ्याऽभावादित्यभिमानः । यदि तु 'पञ्चकपाल' इत्यादौ द्विगोश्चारितार्थ्यं, तदोक्तरीत्याऽपवादत्वं मन्यमानस्य पूर्वपक्षिण इदं वचनम् । 'सर्वत्र मत्वर्थे प्रतिषेध' इति च तस्यैव । वस्तुतो द्वयोः समानाश्रयत्वेन सावकाशत्वेन च परत्वाद्बहुव्रीहिरेव युक्तत्वमित्यन्ये । तत्र द्विगुप्रतिषेधवचनमेवावश्यकमित्याह—पञ्चखट्व इति । 'पञ्चखट्व' इत्यादौ ङीबापत्तिः, 'पञ्चसु'रित्यादौ टजापत्तिश्चेत्यपि बोध्यम् ।

१–'नैषोऽस्तेर्लट्' पा० ।
* १ । ४ । ५७ गणसूत्रम् ।
† स्वरादिनिपातमव्ययम् १ । १ । ३७
२–'अस्तिना सामा' पा० ।
‡ २ । १ । ५१ वा० ११

क्तत्वात्तस्याऽर्थस्य द्वितीयस्य प्रयोगेण न भवितव्यम् । किं कारणम् ? 'उक्तार्थानामप्रयोग' इति । न तर्हीदानीमिदं भवति—दण्डिमती शाला, हस्तिमत्युपत्यकेति ? भवति । अर्थान्तरे वृत्तादर्थान्तरे वृत्तिः । षष्ठ्यर्थे वा वृत्तं सप्तम्यर्थे वर्त्तते, सप्तम्यर्थे वा वृत्तं षष्ठ्यर्थे वर्त्तते ।

अथ मत्वन्तान्मतुपा भवितव्यम्,—गोमन्तोऽस्य सन्ति, यवमन्तोऽस्य सन्तीति ? न भवितव्यम् । किं कारणम् ? यस्य गोमन्तः सन्ति गावोऽपि तस्य सन्ति, तत्रोक्तो गोभिरसम्बन्धे प्रत्यय इति कृत्वा तद्धितो न भविष्यति । न तर्हीदानीमिदं भवति—दण्डिमती शाला, हस्तिमत्युपत्यकेति ? भवति । अर्थान्तरे वृत्तादर्थान्तरे वृत्तिर्भविष्यति । षष्ठ्यर्थे वा वृत्तं सप्तम्यर्थे वर्त्तते, सप्तम्यर्थे वा वृत्तं षष्ठ्यर्थे वर्त्तते ।

प्र०—कृतिस्वरो भवति । द्विगौ तु समासान्तोदात्तत्वप्रसङ्गः । अथेति । 'यवमानस्यास्ती'त्यादौ । अर्थगत्यर्थ इति । यस्य यवमानस्ति तस्य यवैरपि तत्सबन्धद्वारेण सम्बन्धोऽस्तीति यवमानित्यनेनैव यवमत्संबन्धावगमादिति भावः । दण्डिमतीति । यस्यां शालायां दण्डिनः पुरुषाः सन्ति दण्डा अपि तस्यां सन्तीति दण्डवतीत्यनेनैव पूर्वोक्तेन न्यायेन दण्डिसम्बन्धावगमान्मतुन्न प्राप्नोतीति भावः । 'अर्थान्तरे वृत्ता'दिति यदुक्तं तदेव विभजति—षष्ठ्यर्थे वेति । एकजातीये हि सम्बन्धे मतुन्न भवति । यस्य हि यवमान्विद्यते तस्य यवा अपि सन्ति । इह तु यस्यां शालायां हस्तिनो गोमन्तश्च तस्यां नावश्यं हस्ता गावश्च सन्ति, छिन्नहस्तानामपि हस्तित्वजातिसम्बन्धात्, तद्देशासंनिहितगोरपि गोमत्त्वाच्च । अथ मत्वन्तादिति । पूर्वोक्तन्यायस्य मतुप्यपि सद्भावात्प्रश्नः । यस्य गोमन्त इति । गावो विद्यन्ते येषु ते गोमन्तो ग्रामास्ते यस्य सन्तीत्यर्थः । गावोऽपीति । द्विविधो हि गोभिः सम्बन्धः, साक्षात्पारंपर्येण वेति भावः । ततो 'गोमा'नित्ययं शब्दो द्विविधमपि सम्बन्धं शब्दप्रवृत्तिनिमित्तत्वेनान्तर्भावयितुं शक्तस्तत्र पारंपर्येण गोसम्बन्धेऽभिधित्सिते गोमत्स-

उ०—ननु यवसम्बन्धीति'यवमा'नित्यस्यार्थः, यवसम्बन्धिसम्बन्धीति 'यवमानस्याऽस्ती'त्यस्याऽर्थ इत्यर्थभेदादेकेनोक्तत्वादित्यसङ्गतमत आह—यस्येति । साक्षात्परम्परासाधारणसम्बन्धिनि मतुप्साधुरिति भावः । नन्वेवमन्यषष्ठ्यर्थे वृत्तस्याऽन्यषष्ठ्यर्थेऽपि वृत्तिः प्राप्नोतीत्यतो भाष्येऽर्थान्तरं विभज्य दर्शयति—षष्ठ्यर्थे वेत्यादिना । तत्र बीजं दर्शयति—एकजातीये हीति । गोमदुल्लेखस्त्वग्रिमभाष्यपूर्वपक्षोपपादनायेति बोध्यम् । 'तद्देशाऽसन्निहितगवीमि'रिति पाठः । 'तद्देशाऽसन्निहितगोरपी'ति पाठे बहुव्रीहिः । पूर्वोक्तन्यायस्येति । दण्डिमच्छब्दे उपपादितन्यायस्येत्यर्थः । ननु गोमद्ग्रामस्वामिनः कथं गोभिः सम्बन्धोऽत आह—द्विविधो हीति । ननु मतुप एवाऽऽपाद्यत्वादन्यथाजातीयकः प्रत्यय इत्यनुपपन्नमत आह—अवगम इति ।

इहापि सप्तम्यर्थे वा वृत्तं षष्ठ्यर्थे वर्त्तते, षष्ठ्यर्थे वा वृत्तं सप्तम्यर्थे वर्त्तते। अन्यथाजातीयकः खल्वपि गोभिरसम्बन्धे प्रत्ययोऽन्यथाजातीयकस्तद्वता। येनैव खल्वपि हेतुनैतद्वाक्यं भवति—'गोमन्तोऽस्य सन्ति, यवमन्तोऽस्य सन्ती'ति तेनैव हेतुना वृत्तिरपि प्राप्नोति। तस्मान्मत्वर्थीयान्मतुबादेः प्रतिषेधो वक्तव्यः। तं चापि ब्रुवता 'समानवृत्तौ सरूप' इति वक्तव्यम्। भवति हि दण्डिमती शाला हस्तित्युमपत्यकेति।

प्र०—म्बन्धोऽप्याक्षिप्त एव, तद्द्वारकत्वाद्गोसम्बन्धस्य। न तर्हीति। न्यायस्य तुल्यत्वादिति भावः। इहापीति। मत्वन्तादपि मतुप्प्रसङ्गो न्यायस्य तुल्यत्वादित्यर्थः। अन्यथाजातीयक इति। सम्बन्धे प्रत्ययः—अवगम इत्यर्थः। 'गोमा'नित्युक्ते साक्षाद्गोभिः सम्बन्धः प्रतीयते। गोमत्सम्बन्धेऽपि गोसम्बन्धो नावश्यंभावी, नहि गोमत्स्वामिना गोस्वामिना भाव्यमिति नियम इत्यर्थः। येनैवेति। वृत्तिवाक्ययोस्तुल्यार्थत्वाद्वृत्तेरिव वाक्यस्याप्यभावः स्यात्, वाक्यवद्वा वृत्तिप्रसङ्गः।

मत्वर्थीयान्मतुबादेः प्रतिषेध इति। न केवलं मत्वन्तान्मतुब्नेष्यते यावता ठन्नन्तादिनिठनावपि नेष्येते इति सामान्येनोक्तम्। सामान्येन प्रतिषेधं विधाय विशेषप्रतिपादनायाह—तं चापीति। समानवृत्ताविति। समाने प्रत्ययार्थे षष्ठ्यर्थे वृत्तं षष्ठ्यर्थे न वर्त्तते, सप्तम्यर्थे वृत्तं सप्तम्यर्थे न वर्त्तते इत्यर्थः। तेन 'सप्तम्यां च न तौ स्मृता'विति वचनात्षष्ठ्यर्थे इनिठनोर्विधानात्समानवृत्तित्वाद्विरूपोऽपीनिष्ठन्नन्तान्न भवति—'दण्डिका अस्य सन्ती'ति। तथा भिन्नवृत्तावपि सरूपो न भवति—'यवमन्तो ग्रामा अस्य सन्ती'ति। अथ हस्तिमान्राजेति समानवृत्तित्वात्कथं प्रत्ययः? हस्तिशब्दस्य जातिशब्दत्वान्न सम्बन्धः प्रवृत्तिनिमित्तमित्यदोषः, अत एवाऽहस्तीति कृते मत्वर्थीये नञ्समासः क्रियते न बहुव्रीहिः। न ह्यहस्त इत्युक्ते जातिपर्युदासप्रतीतिः। यत्र तु समानार्थत्वं तत्र बहुव्रीहिरेव भवति, यथाऽगुरनश्व इति, न त्वगोमाननश्ववानिति। यत्रापि मत्वर्थीयेनार्थविशेषप्रतीतिस्तत्रापि तदन्तेन नञ्समासो यथा—अदण्डी अपुच्छी अवाग्मीति।

उ०—सम्बन्धविषयो बोध इत्यर्थः। परम्परासम्बन्धो न मतुब्नियामको नाऽपि षष्ठीनियामक इति भावः। एवञ्च सप्तम्यर्थषष्ठ्यर्थभेदात्, गोमच्छब्देन गोसम्बन्धस्येव तद्वत्सम्बन्धस्य प्रत्याययितुमशक्यत्वाच्च, वृत्तिसमानार्थकवाक्यदर्शनाच्चेति हेतुत्रयेण मत्वन्तान्मतुपमापाद्य भाष्ये समाधत्ते—तस्मादिति।

नेष्येते इति। 'सप्तम्याञ्च न तौ स्मृतौ, इत्युक्तेः षष्ठ्यर्थे वृत्तस्य षष्ठ्यर्थे वृत्त्यभावादित्यर्थः। तंचाऽपीति भाष्यस्य—समानवृत्तौ मत्वर्थान्मत्वर्थप्रतिषेधो वक्तव्यः, भिन्नवृत्तावपि समानाकारस्य प्रतिषेधो वक्तव्य इत्यर्थस्तदाह—समाने इति। अर्थविशेषेति। भूमादिरूपेत्यर्थः। संयोगेति। भूमादिषु संसर्गपदेन संयोगो गृहीतः। गृहाऽवस्थितदण्डे दण्डस्वामिनि 'दण्डी'त्यप्रयोगात्। स च न बहुव्रीहिणा बोधयितुं

१—इतः पूर्वम् "तस्मान्मत्वर्थीयान्मतुबादेः" इति वार्तिकं क्वचिद् दृश्यते।

**शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः ।**
**सरूपः प्रत्ययो नेष्टः सनन्तान्न सनिष्यते ॥**

किं पुनरिमे मतुप्प्रभृतयः सन्मात्रे भवन्ति ? एवं भवितुमर्हति ।

**मतुप्प्रभृतयः [1]सन्मात्रे चेदतिप्रसङ्गः ॥ १ ॥**

मतुप्प्रभृतयः सन्मात्र इति चेदतिप्रसङ्गो भवति । इहाऽपि प्राप्नोति,—व्रीहिरस्य यवोऽस्येति ॥ तस्माद्भूमादिग्रहणं कर्त्तव्यम् । के पुनर्भूमादयः ?

**भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।**
**[2]संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥**

प्र०—दण्डपुच्छसंयोगनिषेधस्य सम्यग्भाषित्वनिषेधस्य च बहुव्रीहेरनवगमात् ।

शैषिकादिति । शैषिकाच्छैषिकः सरूपो नेष्टः । यथा शालायां भवः शालीयो घटः । 'तत्र भवस्तस्येद'मिति वा छान्ताच्छो न भवति । विरूपस्तु भवत्येव । अहिच्छत्रे भव आहिच्छत्रः, तत्र भव आहिच्छत्रीय इति । तथा मतुबर्थीयान्मतुबर्थीयः सरूपो नेष्टः—यथा यवमानस्यास्तीति, मत्वन्तान्मतुब्न भवति । 'समानवृत्ता'विति तु श्लोकानुरोधान्नोक्तम् । पूर्वमेव च विषयः प्रविभक्तः । सनन्तादिति । 'सरूप' इत्यपेक्ष्यते । सारूप्यं चाऽव्यभिचारात् । तेन समानत्वं लक्ष्यते । तच्चाऽर्थकृतम् । तेनेच्छासन्नन्तादिच्छासन्न भवति । अर्थान्तराभिधायिनस्तु भवत्येव,—जुगुप्सिषते मीमांसिषत इति ।

किं पुनरिति । विशेषानुपादानात् सन्मात्रस्य सर्वत्र चाऽनिष्टप्रसङ्गात्प्रश्नः । अभिधानतो व्यवस्थां वक्ष्यामीत्याह—एवं भवितुमर्हतीति । भूमेति । यद्यपि त्रिप्रभृतिषु बहुत्वं व्यवस्थितं

उ०—शक्यः, स्वस्वामिभावेऽपि तद्विधानात् । 'अदण्ड' इत्युक्ते हि स्वामित्वाऽभावस्याऽपि प्रतीतेः । 'अदण्डी'ति तु स्वामिन्यपि दण्डसंयोगाऽभाववतीष्यत इत्यर्थः । श्लोकाऽनुरोधादिति । तदनुरोधादत्र तन्नोक्तं किन्तु पूर्वमेवेत्यर्थः । यत्त्वत्र सरूपपदस्य—'समानार्थो विरूपोऽपि न, अर्थभेदे समानाकारोऽपिने'त्यर्थद्वये तात्पर्यमिति तन्न, सरूपपदेन समानार्थत्वस्याऽलाभादत आह—सारूप्यञ्चाऽव्यभिचारादिति । 'विशेषणत्वेनाऽन्वयाऽयोग्य'मिति शेषः । एवञ्चाऽयं श्लोकः कस्यचिच्छात्रस्येति बोध्यम् । 'विशेषाऽनुपादानात्सर्वत्र चाऽनिष्टत्वा'दिति पाठः । 'विशेषाऽनुपादानात्सन्मात्रस्य सर्वत्रे'ति क्वचित्पाठः । तत्र सत्तामात्रप्रतिपादकस्येत्यर्थः । भूमेत्यादिश्लोकस्य—'येऽस्तिविवक्षायां मतुबादय उक्तास्ते भूमादिषु भवन्तीति वक्तव्य'मित्यर्थः । भूमादिषु संसर्गपदेन—संयोगः, स च सम्बन्धान्तरे सत्येव तन्नियामको न तु केवल इत्युक्तम् ।

१—'सन्मात्रे इति चेदति' पा० ।   २—'सम्बन्धे' पा० ।

भूम्नि—गोमान् यवमान् ॥ निन्दायाम्—ककुदावर्तो सङ्खादकी ॥ प्रशंसायाम्—रूपवान् वर्णवान् ॥ नित्ययोगे—क्षीरिणो वृक्षाः कण्टकिनो वृक्षा इति ॥ अतिशायने—उदरिणी कन्या ॥ ससर्गे—दण्डी छत्री ।[3]

तत्तर्हि भूमादिग्रहणं कर्त्तव्यम् ? न कर्त्तव्यम् । कस्मान्न भवति—व्रीहिरस्य यवोऽस्येति ?

उक्तं वा ॥ २ ॥

किमुक्तम् ? 'अनभिधाना'दिति* ॥ इतिकरणः खल्वपि क्रियते ततश्चेद्विवक्षा, भूमादियुक्तस्यैव च विवक्षा । गोमान् यवमान्,—भूमादियुक्तस्यैव सत्ता कथ्यते, न हि कस्यचिद् यवो नास्ति । सङ्खादकी ककुदावर्त्ती,—निन्दायुक्तस्यैव सत्ता कथ्यते, न हि कश्चिन्न सङ्खादकी । रूपवान् वर्णवान्,—प्रशंसायुक्तस्यैव सत्ता कथ्यते, नहि कस्यचिद्रूपं नास्ति । क्षीरिणो वृक्षाः कण्टकिनो वृक्षा इति,—नित्ययुक्तस्यैव सत्ता

प्र०—तथाऽप्यभिधानमाश्रयणीयम् । न हि यस्य त्रयो यवाः सन्ति स यवमानित्युच्यते । इतिकरण इति । इतिशब्दस्य बह्वर्थत्वादिह विवक्षार्थत्वमिति भावः । नहि कस्यचिदिति । मत्वर्थीयान्तानभिधेयस्यापि सम्बन्धोऽस्यास्तीत्येवं परमेतत् ।

न हि कश्चिन्न संखादकीति । सङ्खादको—दशनः स च सर्वस्याप्यस्तीति विशेषणोपादानान्निन्दाप्रतीतिः । न हीति । रूपमात्रसम्बन्धेऽवगते रूपवानयमिति । विशेषणोपादानात्प्रशंसाप्रतीतिः । यावतीभिरिति । क्रियमाणेऽपि भूमादिग्रहणे विशिष्टमेव बहुत्वमभिधानवशादाश्र-

उ०—बह्वर्थत्वादिति । निपातत्वादिति भावः । ननु यवनामाऽपि यत्र नास्ति तादृशदेशानामपि सत्त्वान्न हि कश्चिदित्यनुपपन्नमत आह—मत्वर्थीयान्तेति । संखादक इति—दन्त्यादिपाठः । दशनः—'अश्वस्ये'ति शेषः । तदाह—सर्वस्याऽश्वस्येति । क्वचित्तु 'स च सर्वस्याऽस्ती'त्येव पाठः । विशिष्टमेवेति । लोकव्यव-

१—इति क्वचिन्न ।

२—'अस्तिविवक्षायाम्—अस्तिमान्' इत्यधिकमुदाहरणं काशिकावृत्तौ दृश्यते ।

'क्वचिद्वृत्तौ ग्रन्थः—अस्तिविवक्षायामस्तिमानिति, तत्र भूमादिष्वस्तिविवक्षायां च भवन्ति मतुबादय इति समुच्चयो व्याख्येयः, अस्तिशब्दो विभक्तिप्रतिरूपको निपातः कर्तृविशिष्टसत्तावाची, नैषोऽस्तेर्लट्, प्रत्ययान्तरमपि दृश्यते 'अस्तित्वम्' 'अस्तिते'ति, अव्यभिचारादस्तिसामानाधिकरण्यं नास्तीत्यस्तिविवक्षायां प्रत्ययो विधीयते, एतच्च सूत्रे 'अस्ती'तितन्त्रेण लुप्तपञ्चमीकनिर्देशाल्लभ्यते ।' इति पदमञ्जर्यां हरदत्तः ।

* ३ । २ । १ वा०५ ३—'कस्यचिद् गौर्नास्ति' पा० ।

कथ्यते, नहि कस्यचित्क्षीरं नास्ति । उदरिणी कन्येति,—अतिशायनयुक्तस्यैव सत्ता कथ्यते, न हि कस्यचिदुदरं नास्ति । दण्डी छत्री,—संसर्गयुक्तस्यैव सत्ता कथ्यते, न हि कस्यचिद्दण्डो नास्ति[1] ।

यावतीभिः खल्वपि गोभिर्वाहदोहप्रसवाः कल्पन्ते तावतीषु सत्ता कथ्यते । कस्यचिच्चतसृभिः कल्पन्ते कस्यचिच्छतेनापि न प्रकल्पन्ते ।

सन्मात्रे चर्षिदर्शनात् ।

सन्मात्रे च पुनः ऋषिर्दर्शयति मतुपम्—'यवमतीभिरद्भिर्यूपं प्रोक्षती'ति[2] ।

गुणवचनेभ्यो मतुपो लुक् ॥ ३ ॥

गुणवचनेभ्यो मतुपो लुग्वक्तव्यः । शुक्लः कृष्ण इति ॥ अव्यतिरेकात्सिद्धम् । 'न गुणो गुणिनं व्यभिचरती'ति ।

अव्यतिरेकात्सिद्धमिति चेद् दृष्टो व्यतिरेकः ॥ ४ ॥

[ अव्यतिरेकात्सिद्धमिति चेद्[3] ] दृश्यते व्यतिरेकः । तद्यथा,—पटस्य शुक्ल इति ।

प्र०—यणीयं, ततश्चाऽकरणमेव भूमादीनां ज्याय इति भावः । यवमतीभिरिति । संस्कारस्याऽदृष्टार्थत्वाज्जातिमात्रसंबन्धोऽत्र विवक्षितः । गुणवचनेभ्य इति । शुक्लादय एवाऽभिन्नरूपा गुणे तद्वति च द्रव्ये वर्तमाना गृह्यन्ते न तु रूपादयः सर्वदा गुणमात्रवचनाः । अव्यतिरेकादिति । गुणगुणिनोः 'सोऽय'मित्यभिसंबन्धादभेदाध्यवसायादुत्पत्तिरेव मतुपो नास्तीत्यर्थः । न गुण इति । गुणगुणिनोर्जातितद्वतोरिव युतसिद्ध्यभावात्सोऽयमित्यभेदात्सम्बन्ध इत्यर्थः । दृश्यते व्यतिरेक इति ।

उ०—हाराऽनुसारादिति भावः । नन्वत्रापि भूम्न्येव मतुब्नत आह—संस्कारस्येति । नन्वेवं 'रूपवा'निति प्रयोगो न स्यादत आह—शुक्लादय एवेति । गुणे तद्वति च द्रव्ये ये लोकेऽभिन्नरूपाः समानरूपाः वर्त्तमाना दृश्यन्ते ते गृह्यन्त इत्यर्थः । वचनग्रहणादिति भावः । नन्वव्यतिरेकेऽपि मतुपोऽश्रवणं कुतोऽत आह—गुणगुणिनोरिति । भेदनिबन्धने षष्ठ्यर्थे मतुपो विधानात्तस्य चाऽत्राऽभावात्तदनुत्पत्तिरित्यर्थः । सोऽयमित्यभिसम्बन्धादिति । एवंरूपसम्बन्धादित्यर्थः । अभेदाऽध्यवसाने हेतुर्भाष्ये—न गुण इत्यादि । ननु 'यो

१—'छत्रं वा' इत्यधिकं क्वचित् ।

२—'यवमतीभिरद्भिर्यूपं प्रोक्षतीति जातिमात्रसम्बन्धो विवक्षित इति भूमाभावेपि भवति, भूमादिग्रहणं त्वभिधानस्वभावप्रदर्शनार्थ'मिति पदमञ्जरी ।

३—कोष्ठान्तर्गतः पाठः क्वचिन्नापि दृश्यते ।

तथा च लिङ्गवचनसिद्धिः ॥ ५ ॥

एवं च कृत्वा लिङ्गवचनानि सिद्धानि भवन्ति,—शुक्लं वस्त्रम्, शुक्ला शाटी, शुक्लः कम्बलः, शुक्लौ कम्बलौ, शुक्लाः कम्बला इति । यदसौ द्रव्यं श्रितो भवति गुणस्तस्य यल्लिङ्गं वचनं च तद्गुणस्याऽपि भवति ॥ ९४ ॥

रसादिभ्यश्च ॥ ५ । २ । ९५ ॥

किमर्थमिदमुच्यते न 'तदस्यास्त्यस्मि'न्नित्येव* मतुप्सिद्धः ?

रसादिभ्यः पुनर्वचनमन्यनिवृत्त्यर्थम् ॥ १ ॥

रसादिभ्यः पुनर्वचनं क्रियतेऽन्येषां मत्वर्थीयानां प्रतिषेधार्थम् । मतुबेव यथा स्याद्येऽन्ये मत्वर्थीयाः प्राप्नुवन्ति ते मा भूवन्निति ।

नैतदस्ति प्रयोजनम् । दृश्यन्ते ह्यन्येरसादिभ्यो मत्वर्थीयाः—रसिको नटः । उर्वशी वै रूपिण्यप्सरसाम् । स्पर्शिको वायुरिति ॥ ९५ ॥

प्र०—जातिरुत्पत्तिभृत्याऽऽविनाशाद्द्रव्यं न जहाति, तदात्मैव प्रतीयते शब्देन चाभिधीयते 'गौः शाबलेय'इति, न तु 'शाबलेयस्य गौ'रिति । गुणाः पुनरुपायिनश्चापायिनश्चेति द्रव्याद्भेदेन प्रतीयन्ते, शब्देन चाऽभिधीयन्त इत्यर्थः । पटस्य शुक्ल इति । ततश्च भेदविवक्षायाः सद्भावान्मतुपः श्रवणं स्यादिति लुग्वक्तव्य एव । तथाचेति । यस्माद्द्रव्ये वर्तमाना शुक्लादयो यौगिका न तु वरणपञ्चालादिवद्रूढिशब्दास्ततो द्रव्यगतलिङ्गसङ्ख्योपादायिनः, रूढित्वे तु नियतलिङ्गसंख्यत्वं सर्वत्र वा सर्वलिङ्गसङ्ख्यत्वं प्रसज्येत ॥ ९४ ॥

रसा । दृश्यन्ते हीति । प्रयोगमूलत्वाल्लक्षणस्य नियमार्थत्वायोगात्सूत्रं प्रत्याख्यातम् ॥ ९५ ॥

उ०—यदव्यभिचारी स तदभिन्न' इति न नियमः, धूमवह्न्योर्व्यभिचारादत आह-गुणेत्यादि । 'न सम्बन्ध'इति पाठः । 'अभेदात्सम्बन्ध' इति पाठे ततो विशेष्यविशेषणभावरूपः सम्बन्ध इत्यर्थः । एवञ्च मतुप्प्रवृत्तियोग्यो भेदसम्बन्धो नास्तीति भावः । अभेदसमानाऽधिकरणो भेदो न मतुम्नियामक इति भावः । एतदजानान एकदेश्याह—दृश्यत इति । नन्वनयैव रीत्या जातिशब्दादपि मतुपो लुग्वक्तव्यः स्यादत आह-जातिरिति । विपक्षे बाधकं दर्शयति—रूढित्वे त्विति । भाष्ये—यदसौ द्रव्यमित्यादिना—मतुब्लोपेऽपि लिङ्गादिसिद्धिर्दृश्यते, तेन प्रत्याख्यानस्यैव युक्तत्वं दर्शयते, अन्यथाऽस्य ग्रन्थस्याऽत्राऽसङ्गतिरित्याहुः ॥ ९४ ॥

* तदस्यास्त्यस्मिन्निति मतुप् ५ । २ । ९४

## प्राणिस्थादातो लजन्यतरस्याम् ॥ ५ । २ । ९६ ॥

इह कस्मान्न भवति,—चिकीर्षाऽस्यास्ति जिहीर्षाऽस्यास्तीति ? प्राण्यङ्गादिति वक्तव्यम् ॥ तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । कस्मान्न भवति—चिकीर्षाऽस्यास्ति जिहीर्षाऽस्यास्ति ? अनभिधानात् ॥ ९६ ॥

## सिध्मादिभ्यश्च ॥ ५ । २ । ९७ ॥

सिध्मादिषु यान्यकारान्तानि तेभ्यो लचा मुक्ते इनिठनौ† प्राप्नुतः, इनिठनौ च नेष्येते । [ कथं तौ न भविष्यतः । ]

लजन्यतरस्यामिति समुच्चयः ॥ १ ॥

लजन्यतरस्यामिति समुच्चयोऽयं न विभाषा । लच्च मतुप्च ।

कथं पुनरेतज्ज्ञायते—'लजन्तरस्यामिति समुच्चयो न विभाषे'ति ?

पिच्छादिभ्यस्तुन्दादीनां नानायोगकरणं ज्ञापकमसमावेशस्य ॥ २ ॥

यदयं पिच्छादिभ्यस्तुन्दादीनां नानायोगं करोति‡ तज्ज्ञापयत्याचार्यः—'समुच्चयोऽयं न विभाषे'ति । यदि विभाषा स्यान्नानायोगकरणमनर्थकं स्यात् । तुन्दा-

प्र०—प्राणि । लोकप्रसिद्धशरीरादिसङ्घातः प्राणी, तत्र चैतन्यापगमेऽपि प्राणिव्यवहारस्य रूढत्वान्मृतावस्थायामपि चूडालादिव्यपदेशप्रवृत्तिः ॥ ९६ ॥

सिध्मा । 'प्राणिस्थादात' इत्यतोऽन्यतरस्यां ग्रहणं विकल्पार्थमनुवर्त्तत इति मत्वाह—सिध्मादिष्विति । समुच्चय इति । अनेकार्थत्वान्निपातानां समुच्चयेऽन्यतरस्यां शब्दः । अथवा विकल्पार्थ एव । तत्र लचा मुक्ते प्रकृत एव मतुब्भवति न त्विनिठनौ, वक्ष्यमाणाज्ज्ञापकादिति सामर्थ्यात्समुच्चयः संपद्यते । पिच्छादिभ्य इति । 'तुन्दादिभ्य इलच्चे'त्यत्र चत्वारः प्रत्यया

उ०—प्राणिस्थादा । प्राण्यङ्गादिति । चूडाकर्णिकाशब्दौ शिखाकर्णालङ्कारसदृशाऽवयववाचकौ, न त्वापीडाख्यालङ्कारकर्णालङ्कारवाचकावित्यर्थः ॥ ९६ ॥

सिध्मादि । भाष्ये—समुच्चयोऽयं न विभाषेति । समुच्चयार्थो न विकल्पार्थ इत्यर्थः । अथवेति । अत्राद्यव्याख्यैव युक्ता । मतुबिति । 'अत इनी'त्यत्राप्यन्यतरस्यांग्रहणाऽनुवृत्तेरिति भावः । अपर आहेत्या-

† अत इनिठनौ ५ । २ । ११५ १–क्वाचित्कः पाठः ।
‡ लोमादिपामादिपिच्छादिभ्यः शनेलचः; तुन्दादिभ्य इलच ५ । २ । १००; ११७

दीन्यपि पिच्छादिष्वेव पठेत् ॥ नैतदस्ति ज्ञापकम् । अस्ति ह्यन्यन्नानायोगकरणे प्रयोजनम् । किम् ? तुन्दादिषु यान्यनकारान्तानि तेभ्य इनिठनौ यथा स्याताम् ॥ यानि तर्ह्यकारान्तानि तेषां पाठः किमर्थः ? ज्ञापकार्थ एव ।

अपर आह 'तुन्दादिभ्यः पिच्छादीनां नानायोगकरणं ज्ञापकमसमावेशस्य' । यदयं तुन्दादिभ्यः पिच्छादीनां नानायोगं करोति तज्ज्ञापयत्याचार्यः—'समुच्चयो न विभाषे'ति । यदि विभाषा स्यान्नानायोगकरणमनर्थकं स्यात् । पिच्छादीनपि तुन्दादिष्वेव पठेत् ॥ नैतदस्ति ज्ञापकम् । अस्ति ह्यन्यन्नानायोगकरणे प्रयोजनम् । किम् ? पिच्छादिषु यान्यनकारान्तानि तेभ्य इनिठनौ मा भूतामिति ॥ यानि तर्ह्यकारान्तानि तेषां पाठः किमर्थः ? ज्ञापकार्थ एव ।

वस्य च पुनर्वचनं सर्वविभाषार्थम् ॥ ३ ॥

वस्य खल्वपि पुनर्वचनं क्रियते सर्वविभाषार्थम्—'केशाद्वोऽन्यतरस्याम्' [ ५ । २ । १०९ ] इति । एतदेव ज्ञापयत्याचार्यः—'समुच्चयो न विभाषे'ति ।

द्युद्रुभ्यां× नित्यार्थमेकेऽन्यतरस्यां ग्रहणमिच्छन्ति । कथम् ? विभाषामध्येऽयं

प्र०—इष्यन्ते—इलजिनिठनौ मतुबिति । तत्र यद्यन्यतरस्यांग्रहणानुवृत्त्या पिच्छादिभ्यः प्रत्ययचतुष्टयं स्यात्तदा तुन्दादिष्वेव पिच्छादयः पठितव्या पिच्छादिष्वेव वा तुन्दादयः । पृथक् पाठात्तु ज्ञायतेऽन्यतरस्यांग्रहणेन मतुप्समुच्चीयते न तु यथाप्राप्तमभ्यनुज्ञायते । तेन सिध्मादिपिच्छादिभ्य इनिठनौ न भवतः । नैतदस्तीति । तुन्दादिभ्योऽनकारान्तेभ्योऽपीनिठनाविष्येते । तत्र यदि तुन्दादिषु पिच्छादयः पठ्येरंस्तदा पिच्छादिभ्योऽनकारान्तेभ्य इनिठनौ स्याताम् । अथ पिच्छादिषु तुन्दादयः पठ्येरंस्तदा तुन्दादिभ्योऽनकारान्तेभ्य इनिठनौ न स्यातामित्यर्थः । यानि तर्हीति । कानिचिदकारान्तानि पिच्छादिषु पठितानि कानिचित्तु तुन्दादिषु पठितानि, तत्र भेदेन पाठो ज्ञापक एव यथोक्तार्थस्येत्यर्थः । वस्य च पुनर्वचनमिति । 'केशाद्व' इत्येव वक्तव्यम् । तत्र प्रकृतान्यतरस्यांग्रहणानुवृत्त्या ठन्निनिमतुपो भविष्यन्तीति किमन्यतरस्यांग्रहणेन ठन्निनिप्राप्त्यर्थेन । तत्पुनः क्रियमाणं पूर्वस्याऽन्तरस्यांग्रहणस्य मतुप्समुच्चयार्थत्वं ज्ञापयतीत्यर्थः । द्युद्रुभ्या-

उ०—दिना वक्ष्यमाणस्य भाष्यस्याशयमाह—तुन्दादिष्विति । प्रथमभाष्याशयमाह—पिच्छादिष्विति । इनिठनौ न स्यातामिति । पिच्छादिसूत्रे तदसम्बन्धादिति भावः । भाष्ये ज्ञापकान्तरमाह—वस्य च पुनर्वचनमिति । वस्य विधायके शास्त्रेऽन्यतरस्यांग्रहणाऽनुवृत्त्यैव सिद्धे पुनरन्यतरस्यामिति वचनं सर्वेषामिनादीनां विभाषार्थम्, पक्षे प्राप्त्यर्थं सदेतदर्थज्ञापकमित्यर्थः । तदाह—तत्रेत्यादि । सतीति । वस्तुतस्तु 'द्युद्रुभ्यां मो नित्य'-

× द्युद्रुभ्यां मः ५ । २ । १०८

योगः क्रियते, विभाषामध्ये ये विधयो नित्यास्ते भवन्तीति ॥ ९७ ॥

## लोमादिपामादिपिच्छादिभ्यः शनेलचः ॥ ५ । २ । १०० ॥

### नप्रकरणे दद्र्वा ह्रस्वत्वं च ॥ १ ॥

नप्रकरणे दद्र्वा उपसङ्ख्यानं कर्त्तव्यं ह्रस्वत्वं च वक्तव्यम् । दद्रुणः ।

अत्यल्पमिदमुच्यते । शाकीपलालीदद्रूणां ह्रस्वत्वं चेति वक्तव्यम् । शाकिनम् पलालिनम् दद्रुणम् ।

### विष्वगित्युत्तरपदलोपश्चाऽकृतसन्धेः ॥ २ ॥

विष्वगित्युपसङ्ख्यानं कर्त्तव्यम्, उत्तरपदलोपश्चाऽकृतसन्धेर्वक्तव्यः । विष्वग्गतान्यस्य विषुणः ॥ १०० ॥

प्र०—मिति । सति प्रयोजने ज्ञापकं न भवतीति पूर्वोक्तमेव ज्ञापकमाश्रयणीयम् ॥ ९७ ॥

लोमादि । न प्रकरण इति । प्रकरणं—प्रस्तावः । महच्छाकं—शाकी । नानाजातीयकशाकसमाहारो वा शाकी । पलाली–पलालचोदः । अथवा भिन्नानि शालिकोद्रवादिपलालानि–पलाली । विष्वगिति । विषु—नानाऽञ्चन्तीति, विषु—अञ्चितानि सन्त्यस्य विषुणम् । विष्वग्गतानीति । अर्थप्रदर्शनपरमेतत् । यानि हि विष्वञ्चितानि विष्वग्गतानि, विष्वग्गतं गमनमेषामित्यर्थः । तत्र विषुणशब्देन विषुवदाख्यः काल उच्यते । तस्य हि नानागतानि दिनानि सन्ति, तदाश्रयत्वाद्दिवसान्तराणां न्यूनाधिकभावस्य । तथा वायुर्मृत्युश्च विषुणः, तथान्योऽप्यनवस्थितप्रकृतिर्मनुष्यादिर्विषुणस्तत्र वृत्तिविषये गमनक्रियान्तर्भावाद्विष्वग्गमनमस्यास्तीत्येवं वाय्वादेरभिधानमित्याहुः ॥ १०० ॥

उ०—मित्येव सिद्धे'ऽन्तरस्यां'ग्रहणं ज्ञापकमेव । इदमेव भाष्ये—'एके'इत्यत्राऽरुचिबीजम् ॥ ९७ ॥

लोमादिपा । ननु नस्योत्तरत्राऽननुवृत्तेर्नप्रकरणे इत्ययुक्तमत आह—प्रस्ताव इति । शाकीपलाल्योर्महत्त्वाद्युपाधौ लोकप्रयोगान्ङीष्गौरादिपाठादित्याहुः । ननु 'विष्वग्गतानी'तिभाष्ये 'गतानी'त्यधिकमत आह—अर्थप्रदर्शनेति । तदेवोपपादयति—यानि हीति । विष्वगिति । नानाप्रकारमित्यर्थे रूढमपीति तद्ध्वनितेन 'विष्वग्गतानी'त्यनेन नानाप्रकारगमनकर्त्रर्थकविष्वक्शब्दस्याऽर्थकथनमिति भावः । वार्त्तिके द्वयोरपि विष्वक्शब्दयोर्ग्रहणं, तत्र वाय्वादिविषये विषुणप्रकृतिर्नानाप्रकारार्थक इत्यभिप्रायेणाह—गमनक्रियान्तर्भावादिति । केचित्तु भावक्विबन्तो नानाप्रकारगमनार्थो विष्वक्शब्दस्तत्र प्रकृतिरित्याहुः ॥ १०० ॥

प्रज्ञाश्रद्धार्चाभ्यो णः ॥ ५ । २ । १०१ ॥

वृत्तेश्च ॥ १ ॥

वृत्तेश्चेति वक्तव्यम् । वार्त्तम् ॥ १०१ ॥

तपःसहस्राभ्यां विनीनी ॥ ५ । २ । १०२ ॥

अण्च ॥ ५ । २ । १०३ ॥

किमर्थं तपःशब्दाद्विन्विधीयते नाऽसन्तादित्येव† सिद्धम् ?

तपसो विन्वचनमण्विधानात् ॥ १ ॥

तपसो विन्वचनं क्रियते । [ किं प्रयोजनम् ? 'अण्विधानात्' । ] तपःशब्दादण्विधीयते स विशेषविहितः सामान्यविहितं विनं बाधेत ।

प्र०—प्रज्ञा । वार्त्तमिति । वृत्तिशब्दोऽविच्छेदप्रतिविधानादिषु वर्तते । इह प्रज्ञशब्दात् स्वार्थेऽणि विहिते 'प्राज्ञो व्याकरण'मिति भाव्यम्,—यथा 'कृतपूर्वी कट'मिति । कृद्ग्रहणात्तद्धितप्रयोगे षष्ठ्यभावः । यदा तु प्रज्ञाशब्दान्मत्वर्थीयो णो विधीयते, तदा प्रज्ञावतः प्राधान्यात्प्रज्ञानक्रियाया उपलक्षणत्वादनाविर्भावाद्व्याकरणादिभिः कर्मभिः सम्बन्धाभावः । केचित्त्वत्रापि गुणभूतया प्रज्ञानक्रियया व्याकरणादीनां सम्बन्धमिच्छन्तः 'प्राज्ञो व्याकरण'मिति भवितव्यमित्याहुः । विषयत्वविवक्षायां तु—'प्राज्ञो व्याकरणे' इति ॥ १०१ ॥

अण्च । तामिस्रमिति । तमःसमूहस्तमिस्रं, तद्यत्रास्ति, तमिस्रा रात्रिर्वा यस्मिन्नस्ति,–

उ०—प्रज्ञाश्रद्धा । अविच्छेदप्रतिविधानेति । अविच्छेदेति छेदः कर्मणि घञ्, षष्ठीसमासः । प्रतिविधानं-जीविकोपायः । अविच्छिन्नजीविकोपाय इत्यर्थः । आदिना ग्रन्थविवरणम् । कर्त्रर्थे'क'प्रत्ययान्तप्रज्ञशब्दात्स्वार्थिकाऽणैव सिद्धे सूत्रे प्रज्ञाशब्दग्रहणस्य फलं दर्शयति—इह प्रज्ञशब्दादिति । 'प्रज्ञाशब्दा'दित्यपपाठः । केचित्त्विति । इदमेव युक्तं, कारकाणां गुणभूतक्रियायामप्यन्वयात् । 'प्रज्ञे'त्यादौ क्षीबभावार्थमिदमिति तत्त्वम् । 'कर्तृकर्मणो'रिति सूत्रस्थभाष्याऽनुगृहीतमदुक्तरीत्या तूभयत्राऽपि 'प्राज्ञो व्याकरणस्ये'त्येव भाव्यमिति चिन्त्यम् । विषयत्वविवक्षायामिति । वैषयिकाधारत्वविवक्षायामित्यर्थः ॥ १०१ ॥

अण्च । तमिस्रे पृषोदरादित्वादित्वम् । 'तद्धिताः' इति बहुवचनादप्रत्ययः । कुण्डलाहं इति । मत्वर्थस्तु

१–'प्रज्ञाश्रद्धार्चावृत्तिभ्योणः' इति सूत्रे वृत्तिपाठोऽनार्षः काशिकायाम् । 'सूत्रे वृत्तिशब्दो वार्तिके दर्शनात् प्रक्षिप्तः' इति पदमञ्जरी ।

† अस्मायामेधास्रजो विनिः ५ । २ । १२१ २–क्वचिन्न ।

## अण्प्रकरणे ज्योत्स्नादिभ्य उपसङ्ख्यानम् ॥ २ ॥

अण्प्रकरणे ज्योत्स्नादिभ्य उपसङ्ख्यानं कर्त्तव्यम् । ज्यौत्स्नः तामिस्रः कौण्डलः कौतपः वैपादिकः ॥ १०२ ॥ १०३ ॥

## ऊषशुषिमुष्कमधो रः ॥ ५ । २ । १०७ ॥

अयं मधुशब्दोऽस्त्येव द्रव्यपदार्थकः, अस्ति रसवाची । आतश्च रसवाच्यपि मधुन्येव हि 'मध्विदं मधुर'मिति प्रयुज्यते । तद्यो रसवाची तस्येदङ्ग्रहणम् । यदि हि द्रव्यपदार्थकस्य ग्रहणं स्यादिहाऽपि प्रसज्येत—मध्वस्मिन्घटेऽस्ति ।

## रप्रकरणे खमुखकुञ्जेभ्य उपसङ्ख्यानम् ॥ १ ॥

रप्रकरणे खमुखकुञ्जेभ्य उपसङ्ख्यानं कर्त्तव्यम् । खरः मुखरः कुञ्जरः ।

प्र०—तत्तामिस्रम् । कुण्डलार्हः—कौण्डल इत्याहुः ॥ १०३ ॥

ऊषशु । द्रव्यपदार्थक इति । माक्षिके माध्वीके च प्रसिद्ध इत्यर्थः । आतश्चेति । रसमात्रे मधुशब्दस्य प्रवृत्त्यभावाद्व वृत्तिविषय एव यत्नप्रतिपाद्यं रसवाचित्वं मन्यते । मधुन्येवेति । न हि तदेव तस्मिन्विद्यत इति सामर्थ्याद्व वृत्तिविषये रसविशेषवाची मधुशब्द इत्यर्थः । तद्यो रसवाचीति । अभिधानशक्तिस्वाभाव्यादिति भावः । मतुबपि रसवाचिनोऽनभिधानान्न भवति । खर इति । शब्दनिष्पत्तिकारणं कण्ठविवरं महदस्यास्तीत्यर्थः । मुखर इति । स्वव्यापारशब्दोच्चारणेऽप्रतिबद्धं मुखमस्येत्यर्थः । कुञ्जर इति । वृत्तिविषये कुञ्जशब्देन हस्तिहनुरुच्यते । तेन तद्वान्कुञ्जरो हस्तिशब्दवज्जातिशब्दोऽयम् । नगरमिति । नगा वृक्षाः पर्वताश्च । नगरशब्दोऽपि जातिशब्द एव । नगशब्दोऽश्मादिषु पठ्यते, 'वुञ्छण्कठ'जित्यादिना नगरशब्दस्य सिद्धत्वान्नगा-

उ०—कथञ्चिदुपपाद्यः । संसक्तकुण्डले तु नेष्यत इति भावः ॥ १०३ ॥

ऊषशुषि । नन्वस्ति च रसवाचीत्युक्ते पुन'रातश्चे'त्यस्य नोपयोगोऽत आह—रसमात्रे इति । 'केवलस्ये'ति शेषः । अत 'आतश्चे'ति यत्नेन प्रतिपादनमिति भावः । न हि तदेवेति । व्यपदेशिवद्भावेन व्यवहारे तु मधुमात्रे तथा व्यवहारापत्तिरिति भावः । तद्ध्वनयन्नाह–भाष्ये—मध्विदमिति । अभिधानशक्तीति । बोधजनकशब्दशक्तीत्यर्थः । मतुप्त्विवति । द्रव्यवाचिनस्तु भवत्येव 'मधुमान्नो वनस्पति'रित्यादौ । महदिति । शब्दशक्तिस्वभावान्महत्त्वस्य वृत्तावन्तर्भावः । स्वव्यापारेति । स्वव्यापारसाध्यशब्दोच्चारणे इत्यर्थः । अप्रतिबन्धमिति । वक्तव्याऽवक्तव्यविवेकाऽभावादित्यर्थः । जातिशब्द इति । अत एव नगरीत्यादौ ङीष् । वक्तव्यमिति । तत्र 'देशे तन्नामी'त्युक्ते—तन्नामकेऽपि तस्य साधुत्वार्थमिदमावश्यकमिति

नगाच्च[१] ॥ २ ॥

नगाच्चेति वक्तव्यम् । नगरम् ॥ १०७ ॥

केशाद्वोऽन्यतरस्याम् ॥ ५ । २ । १०६ ॥

वप्रकरणे मणिहिरण्याभ्यामुपसङ्ख्यानम् ॥ १ ॥

वप्रकरणे मणिहिरण्याभ्यामुपसङ्ख्यानं कर्त्तव्यम् । मणिवः हिरण्यवः ।

छन्दसीवनिपौ च ॥ २ ॥

छन्दसि ईवनिपौ च वक्तव्यौ वश्च मतुप्च । 'रथीरभून्मुद्गलानी गविष्टौ'* । 'सुमङ्गलीरियं वधूः'† । ऋतावानम्‡ । मघवानमीमहे । उद्वा च उद्वती च ।

मेधारथाभ्यामिरन्निरचौ ॥ ३ ॥

मेधारथाभ्यामिरन्निरचौ वक्तव्यौ । मेधिरः रथिरः ।

प्र०—चेति न वक्तव्यम् ॥ १०७ ॥

केशाद्वो । मणिव इति । नागविशेषस्येयं संज्ञा । हिरण्यव इति । निधिविशेषस्य । केचित्तु कुञ्जरस्येत्याहुः । छन्दसीवनिपौ चेति । चशब्दो वस्य समुच्चयाऽर्थोऽन्यतरस्यांग्रहणस्य सर्वसंबन्धान्मतुबपि भवतीति मत्वाह—वश्च मतुप्चेति । रथीरिति । रथोऽस्यास्तीत्यर्थः । सुमङ्गलीरिति । लाघवाद्बहुव्रीहिणा भाव्यमिति न्यायः छान्दसत्वादत्र नाश्रितः । मघवेति । मघमस्यास्तीति मघवा । मतुपि तु मघवच्छब्दः । 'मघवा बहुल'मित्येतन्न कर्तव्यम् । 'श्वन्नुक्ष'न्निति निपातनान्मघशब्दान्मतुपा च भाषायामपि शब्दद्वयस्य सिद्धत्वात् । उद्वा चेति । उद्गतमस्यास्तीति ससाधनक्रियावचनादुपसर्गात् प्रत्ययः । मेधारथाभ्यामिति । एतदपि

उ०—चिन्त्यम् ॥ १०७ ॥

केशाद्वो । ननु 'ईवनिपौ चे'ति चेन प्रकृतस्यैव समुच्चयः स्यादिति 'वश्च मतुप्चे'त्ययुक्तमत आह—चशब्द इत्यादि । सर्वसम्बन्धादिति । सर्वत्र सम्बन्धादित्यर्थः । क्वचित्तु तथैव पाठः । भाषायामपीत्यादि । 'मघोनश्छन्दस्य छान्दसत्व'मिति 'मघवा बहुल'मिति सूत्रभाष्योक्तेः, 'नियतविषया अपि शब्दा' इति

१—इदं वार्तिकं भाष्यं वेति सन्देहः । उभयथाऽपि पाठदर्शनात् ।

* ऋक्संहिता १० । १०२ । २ † ऋक्संहिता १० । ८५ । ३३

‡ यजु० १२ । १११; २६ । २६ साम० उ० ८ । १६ । १; ( १७०८ ); ६।१।६ (१८२१)

अपर आह—'वप्रकरणेऽन्येभ्योऽपि दृश्यत इति वक्तव्यम्' । बिम्बावम् कुररावम् इष्टकावम् ॥ १०९ ॥

## रजःकृष्यासुतिपरिषदो वलच् ॥ ५ । २ । ११२ ॥

### वलच्प्रकरणेऽन्येभ्योऽपि दृश्यते ॥ १ ॥

वलच्प्रकरणेऽन्येभ्योऽपि दृश्यत इति वक्तव्यम् । भ्रातृवलः पुत्रवलः उत्सङ्गवलः ॥ ११२ ॥

## अत इनिठनौ ॥ ५ । २ । ११५ ॥

### इनिठनोरेकाक्षरात्प्रतिषेधः ॥ १ ॥

इनिठनोरेकाक्षरात्प्रतिषेधो वक्तव्यः । स्ववान् खवान् ॥ अत्यल्पमिदमुच्यते ।

### एकाक्षरात्कृतो जातेः सप्तम्यां च न तौ स्मृतौ[१] ।

एकाक्षरात्—स्ववान् खवान् । कृतः—कारकवान् हारकवान् । जातेः—वृक्षवान् प्लक्षवान् व्याघ्रवान् सिंहवान् । सप्तम्यां च न तौ,—दण्डा अस्यां शालायां सन्तीति ।

यदि 'कृतो ने'त्युच्यते—कार्यी कार्यिक इति न सिध्यति । तथा च यदि 'जातेर्ने'त्युच्यते—तण्डुली तण्डुलिक इति न सिध्यति ॥ एवं तर्हि नाऽयं समुच्चयः—कृतश्च जातेश्चेति । किं तर्हि ? जातिविशेषणं कृद्ग्रहणं,—कृद्या जातिरिति । कथं कारकवान् हारकवान् ? अनभिधानान्न भविष्यति ।

प्र०—छन्दोविषयम् । बिम्बावं कुररावमिति । 'अन्येषामपि दृश्यत'इति दीर्घः ॥ १०९ ॥

रजः । भ्रातृवल इति । वल इत्यत्राण्ग्रहणानुवर्तनाद्दीर्घाभावः । पुत्रवल इति । दीर्घत्वं 'वनगिर्योः संज्ञाया'मित्यतः संज्ञानुवृत्त्या संज्ञायां विधीयते । तेन पुत्रावल उत्सङ्गावल इति संज्ञायां भवतीत्यसंज्ञायां दीर्घाभावः ॥ ११२ ॥

उ०—तत्रैव स्वोक्तेश्च चिन्त्यम् । प्रत्यय इति । वो मतुप्चेत्यर्थः ॥ १०९ ॥

अत इनि । भाष्ये—एकाक्षरात्कृतो जातेरिति । दण्डशब्दस्तु दमनकरणत्वेन बोधक इति न

१—श्लोकवार्तिकस्य पूर्वार्धम् ।

यद्येवं नार्थोऽनेन। कथं स्ववान् खवान् वृक्षवान् प्लक्षवान् सिंहवान् व्याघ्रवान् दण्डा अस्यां शालायां सन्तीति ? अनभिधानान्न भविष्यति ॥ ११५ ॥

## व्रीह्यादिभ्यश्च ॥ ५ । २ । ११६ ॥

### शिखादिभ्य इनिर्वाच्य इकन्यवखदादिषु ॥

किं प्रयोजनम् ? नियमार्थम् । इनिरेव शिखादिभ्यः, इकन्नेव यवखदादिभ्यः ।

**शिखायवखदादिभ्यो नियमस्याऽवचनं निवर्तकत्वात् ॥ १ ॥**

शिखायवखदादिभ्यो नियमस्याऽवचनम् । किं कारणम् ? 'निवर्तकत्वात्' । किं निवर्तकम् ? अनभिधानम् ॥ ११६ ॥

## एकगोपूर्वाट्ठञ्नित्यम् ॥ ५ । २ । ११८ ॥

नित्यग्रहणं किमर्थम् ? विभाषा मा भूत् । नैतदस्ति प्रयोजनम् । पूर्वस्मिन्नेव योगे विभाषाग्रहणं निवृत्तम् । एवं तर्हि सिद्धे सति यन्नित्यग्रहणं करोति तज्ज्ञापयत्याचार्यः—'प्रागेतस्माद्योगाद्विभाषेत्यनुवर्तत'इति ।

उ०—जातिशब्द इति तत्र भवत्येवेति भावः ॥ ११५ ॥

एकगो । भाष्ये—प्रागेतस्मादिति । एवञ्चात्राऽपि वाग्रहणाऽनुवृत्त्या पक्षे मतुप्स्यादिति तन्निवृत्त्यर्थं नित्यग्रहणमिति भावः । समासान्ते कृते इति । न च तत्पुरुषे सिद्धावपि बहुव्रीहिद्वन्द्वयोर्न सिध्यतीति वाच्यम्, अनभिधानेन तत्राऽप्रवृत्तेः । गौशकटिक इति । शकटिशब्देन समास इति भावः । यद्यप्यकारान्तशकटशब्देनेदं सिध्यति, तथापीकारान्तेन विग्रहे 'गोशकटिमा'नित्यस्यापत्तिरिति भावः । निवृत्तमिति ।

१–श्लोकवार्तिकस्योत्तरार्धम् । तच्चैवं पठनीयम्—

'एकाक्षरात् कृतो जातेः सप्तम्यां च न तौ स्मृतौ ।
शिखादिभ्य इनिर्वाच्य इकन् यवखदादिषु ॥'

न व्रीह्यादिभ्यः सर्वेभ्यः प्रत्ययद्वयमिष्यते, किं तर्हि ? तेषु शिखादिभ्यः=( शिखा, मेखला, संज्ञा, बलाका, माला, वीणा, वडवा, अष्टका, पताका, कर्मन्, चर्मन्, हंसा इत्येतेभ्यः ) इनिरेवेष्यते । 'यवखद, कुमारी, नौ' इत्येतेभ्य इकन्=ठन्नेवेष्यते । परिशिष्टेभ्यो द्वावपि प्रत्ययौ भवतः ।

"इकन्निति=ठन्नित्यर्थः । पूर्वाचार्यप्रक्रियापेक्षस्त्विकन्निति निर्देशः श्लोकपूरणार्थः ।" इति पदमञ्जर्यां हरदत्तः ।

"शिष्टप्रयोगे येभ्य इनिरेव दृश्यते ते शिखादयो द्रष्टव्याः । ते हि तेभ्यष्ठनं विहितवन्तः ।" इति न्यासे जिनेन्द्रबुद्धिपादः ।

अथाऽत* इत्यनुवर्त्तते, उताहो न । किं चातः ? यद्यनुवर्त्तते,—ऐकगविको न सिध्यति । समासान्ते† कृते भविष्यति । एवमपि गौशकटिको न सिध्यति । अथ निवृत्तम्,—इहापि प्राप्नोति—गोविंशतिरस्याऽस्तीति । निवृत्तम् । कस्मान्न भवति—गोविंशतिरस्यास्तीति । अनभिधानान्न भविष्यति ॥ ११८ ॥

## रूपादाहतप्रशंसयोयप् ॥ ५ । २ । १२० ॥

### यप्प्रकरणेऽन्येभ्योऽपि दृश्यते ॥ १ ॥

यप्प्रकरणेऽन्येभ्योऽपि दृश्यत इति वक्तव्यम् । हिम्याः पर्वताः गुण्या ब्राह्मणाः ॥ १०२ ॥

## बहुलं छन्दसि ॥ ५ । २ । १२२ ॥

### छन्दोविन्प्रकरणेऽष्ट्रामेखलाद्वयोभयरुजाहृदयानां दीर्घश्च ॥ १ ॥

छन्दोविन्प्रकरणेऽष्ट्रामेखलाद्वयोभयरुजाहृदयानां दीर्घश्चेति वक्तव्यम् । अष्ट्रावी मेखलावी द्वयावी उभयावी रुजावी हृदयावी ।

मर्मणश्च¹ ॥ मर्मणश्चेति वक्तव्यम् । मर्मावी ।

### सर्वत्रामयस्य ॥ २ ॥

सर्वत्रामयस्योपसङ्ख्यानं कर्त्तव्यम् । आमयावी ।

### शृङ्गवृन्दाभ्यामारकन् ॥ ३ ॥

शृङ्गवृन्दाभ्यामारकन् वक्तव्यः । शृङ्गारकः वृन्दारकः ।

### फलबर्हाभ्यामिनच् ॥ ४ ॥

फलबर्हाभ्यामिनज्वक्तव्यः । फलिनः बर्हिणः ।

उ०—'द्वन्द्वोपतापे'त्यादौ तु मण्डूकाऽनुवृत्त्याऽत इत्यस्य सम्बन्ध इति भावः । इदं च 'समासान्ता' इति सूत्रे भाष्ये स्पष्टम् । वृत्तिकृतस्तु प्रमाद इति बोध्यम् ॥ ११८ ॥

बहुलं छन्द । भाष्ये—दीर्घश्चेति । द्वयोभयहृदयार्थमिदम् । चालुचेलू चिताविल्येके । अचितौ । अत एव 'चैलु' रित्यत्र क्वचित्पुस्तके वृद्धिर्दृश्यते । पर्वमरुद्भयां तबिति पिदयम् । नित्पाठस्तु लेखकप्रमादात् । मरुत्तस्य मध्योदात्तस्यैवेष्टेः । तदेव ध्वनयन् तपं प्रत्याचष्टे—ददाति वृत्तं वेति । अत्र पद्धे उपसर्गसंज्ञायां

* अत इनिठनौ ५ । २ । ११५  † गोरतद्धितलुकि ५ । २ । ९२

१–अयं क्वाचित्कः पाठः ।

हृदयाच्चालुरन्यतरस्याम् ॥ ५ ॥

हृदयाच्चालुरन्यतरस्यां वक्तव्यः । हृदयालुः हृदयी हृदयिकः हृदयवान् ।

शीतोष्णतृप्रेभ्यस्तन्न सहते ॥ ६ ॥

शीतोष्णतृप्रेभ्यस्तन्न सहत इति चालुर्वक्तव्यः । शीतालुः उष्णालुः तृप्रालुः ।

हिमाच्चेलुः ॥ ७ ॥

हिमाच्चेलुर्वक्तव्यस्तन्न सहत इत्येतस्मिन्नर्थे[1] । हिमेलुः ।

बलाच्चोलः ॥ ८ ॥

बलाच्च—ऊलो वक्तव्यस्तन्न सहत इत्येतस्मिन्नर्थे । बलूलः ।

वातात्समूहे च ॥ ९ ॥

वातात्समूहे च तन्न सहत इत्येतस्मिन्नर्थे च—ऊलो वक्तव्यः । वातूलः ।

पर्वमरुद्भ्यां तप्[2] ॥ १० ॥

पर्वमरुद्भ्यां तप् वक्तव्यः । पर्वतः मरुत्तः ।

ददातिवृत्तं वा ॥ ११ ॥

ददातिवृत्तं वा पुनरेतद्भविष्यति,—मरुद्भिर्दत्तो मरुत्तः* ॥ १२२ ॥

उ०—मरुच्छब्दस्योपसंख्याना'दच्च उपसर्गा'दिति तत्वम् । अन्यच्चोपसर्गकार्यमस्य नेति तत्रैव निरूपितम् । अत्र पक्षे 'तृतीया कर्मणी'ति पूर्वपदप्रकृतिस्वरेण मध्योदात्तत्वं स्पष्टमेव । केचित्त्वेवं हि तत्वविधावेव मरुत्त इति पठेत् । तस्मात्सञ्ज्ञाप्रकरणे प्रथमाऽध्याये पाठोऽनेकसञ्ज्ञालाभाय । 'अनेकफलाये'ति तु न युक्तमुपसर्गत्वस्य फलान्तराय चारितार्थ्येऽजन्तत्ववैकल्यात्तत्वाऽनापत्त्या मरुत्त इत्युदाहरणपरभाष्यविरोधापत्तेः । एवञ्च निपातत्वमप्यस्येति तन्मूलकमाद्युदात्तत्वं दुर्वारमेव । तच्च तत्वविषये एवेति 'मरुद्भि'रित्यादिप्रयोगोपपत्तिः । एवञ्च निपाठ एवोचितः । वेदे क्वचिन्मध्योदात्तत्वन्तु छान्दसत्वाद्बोध्यम् । मरुच्छब्दान्मतुप्तु न, ततो रूढ्यर्थाऽप्रतीतेरिति प्रत्याख्यानाशय इत्याहुः ॥ १२२ ॥

१–'इत्यस्मिन्नर्थे' पा० ।

२–"पञ्चमेऽपि 'तन्पर्वमरुद्भ्या'मिति निदेव पाठ इत्याहुः । कैयटस्वारस्येन तु स पिदिति बोध्य"-मिति १ । ४ । ५८ वा० ४ वार्तिकोद्द्योते नागेशभट्टः ।

* मरुच्छब्दस्योपसंख्यानम् १ । ४ । ५८ वा० ४

## आलजाटचौ बहुभाषिणि ॥ ५ । २ । १२५ ॥

कुत्सित इति वक्तव्यम् । यो हि सम्यग्बहु भाषते वाग्मीत्येव स भवति† ॥ तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । [१]नानायोगकरणसामर्थ्यान्न भविष्यति ॥ १२५ ॥

## स्वामिन्नैश्वर्ये ॥ ५ । २ । १२६ ॥

इह कस्मान्न भवति,—स्वमस्यास्तीति ? नैष दोषः । नायं प्रत्ययार्थः । किं तर्हि ? प्रकृतिविशेषणमेतत्—'स्वामिन्नैश्वर्ये निपात्यत' इति ॥ १२६ ॥

प्र०—स्वामिन्नै । स्वमस्येति । धनवाच्यत्र स्वशब्दः । नायं प्रत्ययार्थ इति । प्रत्ययार्थविषयत्वात्प्रत्ययार्थ उच्यते । ऐश्वर्ये इति यदि विषयसप्तमी स्यात्तदेशितरि धनवाचिनोऽपि प्रत्ययः स्यात्, प्रकृत्यर्थस्त्वैश्वर्यमिहोपात्तमिति वृत्तिविषय एव च स्वशब्द ऐश्वर्ये वर्तते, तेन धनवान्निर्धनो वेशिता स्वामिशब्दाभिधेयः ॥ १२६ ॥

उ०—आलजाटचौ । नानायोगेति । पूर्वसूत्रेऽपि 'बहुभाषिणी'ति सम्बध्यत इति भावः । १२५ ॥

स्वामिन्नै । 'स्वशब्दादामिनच्भवत्यस्येत्यर्थे, षष्ठ्यर्थश्चेदैश्वर्यविषयोऽर्थादैश्वर्यवान्भवती'ति सूत्रार्थं मत्वा पूर्वपक्षः यस्य धनमस्ति स· तदैश्वर्यवानिति भावः । नन्वैश्वर्यवान्प्रत्ययाऽर्थो न स्वैश्वर्यमत आह—प्रत्ययार्थविषयादिति । प्रत्ययार्थे विशेषणत्वादित्यर्थः । भाष्ये—प्रकृतिविशेषणमिति । प्रकृत्यर्थशोधकमित्यर्थः । स्वामिन्नैश्वर्ये इति । ऐश्वर्ये वर्त्तमानस्वशब्दस्य 'स्वामि'न्निति निपात्यत इत्यर्थः । यदि विषयेति । प्रत्ययार्थविशेषणं यदि स्यादित्यर्थः । नन्वन्यत्राऽपि स्वशब्दस्यैश्वर्ये प्रयोगापत्तिरत आह—वृत्तिविषये इति । स चैतद्वृत्तिविषये एव । अत एव 'धनस्य स्वामी'त्यपि भवति । धनवाचिनस्तु मतुबेव ॥ १२६ ॥

† वाचो ग्मिनः ५ । २ । १२४ "वाच्शब्दात् ग्मिनिः प्रत्ययो भवति मत्वर्थे । वाग्मी । वाग्मिनौ । वाग्मिनः ।" इति वृत्तिः ।

'वाचो मिनिः प्रत्ययो भवति मत्वर्थे, गकारश्चादेशः' इत्यप्यर्योपयन्ति गकारद्वयाऽभावार्थम् । 'यरोऽनुनासिके प्रत्यये भाषायां नित्यवचन'मित्यनुनासिकस्तु गकारादेशविधानसामर्थ्यान्न भविष्यति । अथवा व्यवस्थितविभाषा विज्ञास्यते । द्रष्टव्योऽत्र न्यासः ।

१—'बहुभाषिणी'त्यस्य पूर्वसूत्रेऽपि सम्बन्धात् ग्मिनिरालजाटचौ च समानार्थाः प्रत्यया भवन्ति, ते चैकयोगेनैव विधेयाः । नानायोगकरणसामर्थ्योदुत्तरयोगस्य कुत्सितार्थत्वमवगम्यते । 'योगविभाग इष्टसिद्ध्यर्थ' इति विपरीतं तु नाशङ्कनीयम् । सम्यग् यो बहुभाषते तत्र 'वाग्मी,' यश्च कुत्सितं बहुभाषते तत्र 'वाचालवाचाटावि'ति दिक् ।

'वाचोयुक्तिपटु[१]र्वाग्मी[२] वावदूको[३]ऽतिवक्तरि[४] । स्याज्जल्पाकस्तुवाचालो वाचाटो बहुगर्ह्यवाक् ।' इत्यमरः ।

## वातातीसाराभ्यां कुक्च ॥ ५ । २ । १२९ ॥

पिशाचाच्चेति वक्तव्यम् । पिशाचकी वैश्रवणः ॥ १२९ ॥

## पुष्करादिभ्यो देशे ॥ ५ । २ । १३५ ॥

### इनिप्रकरणे बलाद्बाहूरुपूर्वपदादुपसङ्ख्यानम् ॥ १ ॥

इनिप्रकरणे बलाद्बाहूरुपूर्वपदादुपसङ्ख्यानं कर्त्तव्यम् । बाहुबली ऊरुबली ।

### सर्वादेश्च ॥ २ ॥

सर्वादेश्चेनिर्वक्तव्यः । सर्वधनी सर्वबीजी सर्वकेशी ।

### अर्थाच्चाऽसन्निहिते ॥ ३ ॥

अर्थाच्चाऽसन्निहिते इनिर्वक्तव्यः । अर्थी । असंनिहित इति किमर्थम् ? अर्थवान् ।

### तदन्ताच्च ॥ ४ ॥

तदन्ताच्चेति वक्तव्यम् । धान्यार्थी हिरण्यार्थी ॥ किमर्थं तदन्तादित्युच्यते न तदन्तविधिना‡ सिद्धम् ? ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते ॥ एवं तर्हीनन्तेन सह समासो भविष्यति,—धान्येनाऽर्थी धान्यार्थी । स हि समासो न प्राप्नोति ॥ यदि पुनरयमर्थयतेर्णिनिः स्यात् ? एवमपि क्रियामेव कुर्वाणे स्यात् । तूष्णीमप्यासीनो यस्तत्समर्थान्याचरति सोऽभिप्रायेण गम्यते—अर्थ्ययमनेनेति ।

प्र०—पुष्करा। अर्थाच्चेति। विरोधादस्तीति न संबद्धचते। अर्थो संनिहितोऽस्येत्यर्थेऽप्राप्त एवेनिर्विधीयते। तक्रकौण्डिन्यन्यायेनाऽस्त्युपाधिकादिनेरभावः। धान्यार्थीति। धान्यमर्थ इति कर्मधारयो धान्यार्थोऽसन्निहितोऽस्येति प्रत्ययः। एवं तर्हीति। धान्येनार्थी धान्यार्थी तृतीयासमासो भविष्यतीत्यर्थः। स हीति। 'तृतीया तत्कृतार्थेने'त्यनेनार्थशब्देन समासो विधीयमानोऽ-

उ०—पुष्करादि। असन्निहित इति। असन्निधानमत्र कालकृतम्, अत एव विरोधादस्तीत्यस्याऽसम्बन्धः, असन्निहितकर्त्तृकवर्त्तमानसत्ताया असम्भवात्। ननु सन्निहितेऽप्यर्थशब्दा'दत इनिठना'विति दुर्वारमत आह-तक्रेति। 'अर्थी समर्थो विद्वा'निति तु छान्दसत्वाद्बोध्यम्। भाष्ये—धान्येनार्थीति। नन्वत्र कथं तृतीया ? न करणे, अर्थिशब्दस्याऽक्रियावाचित्वात्, नाऽपि प्रकृत्यादित्वात्, प्रथमार्थे एकदेशान्वयेऽपि विशिष्टेनाऽसामर्थ्यात्समासाऽप्राप्तेः, 'धान्येने'त्यस्यैकदेशाऽन्वयाऽनौचित्याच्चेति चेन्न; हेतौ सत्त्वात्। अर्थवत्त्वे च धान्यं हेतुः। एतेन 'सापेक्षत्वादीदृशे विषये तद्धितस्यैव न प्राप्तिः, द्रव्यवाची तु न नित्यसाकाङ्क्ष

‡ येन विधिस्तदन्तस्य १ । १ । ७२

एवं तर्ह्ययमर्थशब्दोऽस्त्येव द्रव्यपदार्थकः । तद्यथा,—अर्थवानयं देश इत्युच्यते यस्मिन्गावः सस्यानि च वर्त्तन्ते । अस्ति क्रियापदार्थको भावसाधनः—अर्थनमर्थ इति । तद्यः क्रियापदार्थकस्तस्येदं ग्रहणम् । एवं च कृत्वाऽर्थिकप्रत्यर्थिकावपि सिद्धौ

प्र०—र्थिशब्देन न प्राप्नोतीत्यर्थः । सुप्सुपेत्येतन्नाश्रितम् । न्याय्यस्य परिहारस्याऽभिधास्यमानत्वात् । एवमपीति । कृतामुद्भूतक्रियासाधनाभिधायित्वात् । नह्यगच्छन् गन्तेत्यभिधीयते । तद्यः क्रियापदार्थक इति । नन्वत्रापि निरीहे न प्राप्नोति । नैष दोषः । णिनिपक्ष एव दोषस्यावतारो णिनेः कर्तरि विधानात् । क्रियां हि कुर्वन्कर्तेत्युच्यते । मत्वर्थीयस्तु शेषसम्बन्धे भवति । तत्र

उ०—इति स्पष्टमेवे'ति परास्तम् । एवमेव 'धान्येन धनी'त्याद्युपपत्तिः । अर्थयतेरिति । एवञ्च करणतृतीयान्तेन 'कर्त्तृकरणे' इति समास इति भावः । तत्समर्थानीति । प्रार्थना हि—लाभानुकूलः स्फुटं लाभेच्छाव्यञ्जको व्यापारो 'देही'त्यादिशब्दप्रयोगादिरूपः । तत्कर्त्तैव च णिन्यन्तार्थः । यस्तु तदकुर्वस्तत्फललाभजनकक्रियान्तरमाचरति, तत्राऽपीष्यतेऽयम्प्रयोग इति न णिन्यन्तस्याऽयं प्रयोग इति भावः । एतेन 'तत्समर्थाचरणकर्त्तरि 'पञ्चभिर्हलैः कृषती'ति प्रयोगवदत्राऽप्ययं प्रयोगः सुलभ' इत्यपास्तम् । णिनिविग्रहरूपे 'अर्थयते' इति प्रयोगे तादृशव्यापारस्यैव प्रतीतेर्णिनन्तोऽपि तादृशार्थक एवेति तात्पर्यम् । अर्थनमर्थ इत्यत्र तु लाभेच्छार्थ इति न दोष इत्युत्तरम् । कैयटोऽप्येतत्तात्पर्यक एव । भाष्ये—सोऽभिप्रायेणेति । सोऽपीत्यर्थः । तस्येदं ग्रहणमिति । तद्धटितस्येदं ग्रहणम् ।

अयं प्रयोगः । धान्यार्थीति प्रयोग इत्यर्थः । एवञ्च धान्यशब्दस्य उक्तार्थकाऽर्थशब्देन समासं कृत्वा धान्यार्थशब्दा'दत इनिठना'वितीनौ सिद्धः प्रयोगः । 'अर्थाच्चे'ति वार्त्तिके तु रूढत्वाद्द्रव्यवाचिन एव ग्रहणम् । एवञ्च क्रियावाचकादत इनिठनौ भवत एव । अत एव 'अर्थिनश्च राजानो हिरण्येने'ति भाष्यप्रयोगः सङ्गच्छत इति भावः । तद्ध्वनयन्नाह—एवञ्च कृत्वेति । यच्चर्थाच्चाऽसन्निहिते इत्युच्यत इति । अत्र वार्त्तिके यद्युभयोरर्थशब्दयोर्ग्रहणमुच्यत इत्यर्थः । यद्वा एतदेवोच्यते । क्रियापदार्थकस्त्वर्थशब्दो नास्त्येवेति यदुच्यत इत्यर्थः । ठन्न स्यादिति । अर्थादिनिरेव, स चाऽसन्निहित एवेत्याश्रयणादिति भावः । अथापि णिनिनेति । 'बहुलमाभीक्ष्ण्ये' इति 'बहुलग्रहणात्सुबन्तोपपदाऽभावेऽपीत्यर्थः । एतदुपयोगश्चिन्त्यः । न च 'अर्थाच्चे'ति वार्तिकप्रत्याख्यानमफलम्, अनिच्छोरप्यसन्निहितधनस्याऽर्थिशब्देनाऽभिधानार्थं तदावश्यकत्वादित्याहुः । अत एव भाष्येऽपिनाऽर्थीतीनन्तसङ्ग्रहः । नन्वेवं क्रियाशब्दान्मतुबपि स्यादत आह—मतुप्त्विति । तदेवं भाष्ये 'तदन्ताच्चे'ति वार्त्तिकं प्रत्याख्यातम् । नन्वेवं धनवाचकादस्त्युपाधिकादिनिठनौ स्यातामेव, ततश्च क्रियापदार्थकाऽभावेऽपि अर्थिकः सिद्धोऽत आह—धनेति । इनिग्रहणं दृष्टान्तार्थम् । तक्रकौण्डिन्यन्यायेनेनेरेवाऽनभिधानाट्ठनोऽभाव इति तात्पर्यम् । अन्ये तु तक्रकौण्डिन्यन्यायस्य

भवतः* ॥ १३५ ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये पञ्चमस्याध्यायस्य
द्वितीये पादे द्वितीयमाह्निकम् । पादश्च समाप्तः ।

प्र०—क्रियाकारकभावस्य त्यग्भावान्निरीहेऽपि सिद्धः प्रत्ययः । एवं च कृत्वेति । यद्यर्थाच्चाऽसंनिहित इत्युच्यते तदा–इनेरेव विधानाट्ठन्न स्यात् । अथापि णिनिनाऽर्थीति साध्यते तथाऽप्यर्थिक इति न सिध्येदिति । क्रियापदार्थकत्वे'ऽत इनिठना'विति प्रत्ययद्वयं सिध्यति । मतुप्तु क्रियापदार्थकादनभिधानान्न भवति । धनवाचिनोऽप्यनभिधानादिनिठनोरभावः ॥ १३५ ॥

इत्युपाध्यायजैय्यटपुत्र–कैय्यटकृते महाभाष्यप्रदीपे पञ्चमस्याध्यायस्य
द्वितीयपादे द्वितीयमाह्निकम् । पादश्च समाप्तः ।

उ०—विधेयविषयत्वादनुवाद्योपाधिबाधे मानाऽभावाद्येननाऽप्राप्त्यभावाच्च, उभयोरप्यनभिधानेनाऽभाव इत्याहुः ॥ १३५ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टविरचिते भाष्यप्रदीपोद्द्योते पञ्चमाऽध्यायस्य
द्वितीये पादे द्वितीयमाह्निकम् । पादश्च समाप्तः ।

---

* अत इनिठनौ ५ । २ । ११५

## प्राग्दिशो विभक्तिः ॥ ५ । ३ । १ ॥

विभक्तित्वे किं प्रयोजनम् ?

### विभक्तित्वे प्रयोजनमित्प्रतिषेधः ॥ १ ॥

इदानीम्* । 'न विभक्तौ तुस्माः' [ १ । ३ । ४ ] इतीत्त्वप्रतिषेधः[१] सिद्धो भवति ॥ यद्येवं–'किमोऽत्' [ ५ । ३ । १२ ] 'क्व प्रेप्स्यन् दीप्यसे'[२] 'क्वार्धमासाः' अत्रापि प्राप्नोति ।

### तौ चोक्तम् ॥ २ ॥

किमुक्तम् ? 'विभक्तौ तवर्गप्रतिषेधोऽतद्धित' इति† ।

### इदमो विभक्तिस्वरश्च ॥ ३ ॥

इदमो विभक्तिस्वरश्च प्रयोजनम् । इतः इह । 'इदमस्तृतीयादिर्विभक्तिरुदात्ता भवती'त्येष स्वरः‡ सिद्धो भवति ।

प्र०—प्राग्दिशो विभक्तिः । किं प्रयोजनमिति । प्रयोजनसामान्यविवक्षायामेकवचननिर्देशः । इत्प्रतिषेध इति । अन्यथा 'मिदचोन्त्यात्पर'इति देशविध्यर्थाद्दानीमो मकारस्य 'हलन्त्य'मितीत्संज्ञा स्यात् । तौ चोक्तमिति । तवर्गस्य चोक्तमित्यर्थः । थमोरित्संज्ञापरित्राणार्थमुकारकरणमित्संज्ञायाः प्रतिषेधस्याऽनित्यत्वं ज्ञापयतीति—तद्धितपर्युदासोऽपि न वक्तव्यः । इत इहेति । इत इति मुख्यमुदाहरणम् । अत्र हि लित्स्वरे प्राप्ते विभक्ते'रूडिद'मित्युदात्तत्वं भवति । इहेत्यत्र तु प्रत्ययस्वरेणाऽन्तोदात्तत्वं सिध्यति । ननु मध्येऽपवादा इति न्यायादनुदात्तौ सुप्पितावित्येतं स्वरं विभक्तिस्वरो बाधते, न लित्स्वरं, लित्स्वर एव तु परत्वाद्विभक्तिस्वरं बाधते । नैष दोषः ।

उ०—प्राग्दिशो । प्रयोजनानाम्बहूनामग्रे वक्ष्यमाणत्वात् किम्प्रयोजनमित्येकवचनमनुपपन्नमत आह—प्रयोजनसामान्येति । ननु फलाऽभावादेव नेत्संज्ञेत्यत आह—अन्यथेति । इददानीमिति स्यादिति भावः । तवर्गस्येत्त्वनिषेधात्तावित्ययुक्तमत आह—तवर्गस्येति । ताविति विषयसप्तमीति भावः । ननु तद्धितप्रतिषेधवचनारम्भे गौरवमत आह—थमोरिति । 'न विभक्ता'वितिसूत्रभाष्ये तु प्राग्दिशीयेष्वस्याऽप्रवृत्तावुदित्वं ज्ञापकम् । दानीमो मस्य 'लोपो व्यो'रिति लोपेन यकारं प्रश्लिष्य 'इत्संज्ञा ने'त्युक्तम् । वार्त्तिकाऽनुसारेण त्वत्र प्रयोजनत्वोक्तिरिति बोध्यम् । लितीत्यत्रानुवर्त्तत इति । अत्र चेदमेव भाष्यं मानम् । हरदत्तस्तु—

* दानीं च ५ । ३ । १८
† १ । ३ । ४ वा० १
‡ ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः ६ । १ । १७१

१–'इत्प्रतिषेधः' पा० । २—'दीव्यसे' पा० ।

## त्यदादिविधयश्च ॥ ४ ॥

त्यदादिविधयश्च प्रयोजनम् । यतः यत्र । कुतः कुत्र । 'विभक्ता'विति त्यदादिविधयः* सिद्धा भवन्ति ॥ १ ॥

## किंसर्वनामबहुभ्योऽद्व्यादिभ्यः ॥ ५ । ३ । २ ॥

### बहुग्रहणे सङ्ख्याग्रहणम् ॥ १ ॥

बहुग्रहणे सङ्ख्याग्रहणं कर्तव्यम् । इह मा भूत्+, बहौ बहोरिति ।

अथ किमर्थं किम उपसङ्ख्यानं क्रियते न 'सर्वनाम्न' इत्येव सिद्धम् ?

### द्व्यादिप्रतिषेधात्किम उपसङ्ख्यानम् ॥ २ ॥

द्व्यादिप्रतिषेधात्किम उपसङ्ख्यानं क्रियते । 'अद्व्यादिभ्य' इति प्रतिषेधे प्राप्ते किम उपसङ्ख्यानं क्रियते ॥ २ ॥

## एतदोऽन् ॥ ५ । ३ । ५ ॥

क्वाऽयं नकारः श्रूयते ? न क्वचिच्छ्रूयते, लोपोऽस्य भवति 'नलोपः प्राति-

प्र०—'ऊडिद'मित्येतत्सूत्रं 'लिती'त्यत्रानुवर्तते । तेन लित्स्वरं बाधित्वा विभक्तिस्वरो भवति । तृतीयादिग्रहणेन च तृतीयामारभ्य प्राग्दिशः प्रत्यया विभक्तिसंज्ञा गृह्यन्ते ॥ १ ॥

किं सर्वनाम। किम उपसङ्ख्यानमिति । उपेत्य सङ्ख्यानं, प्रतिपदं सूत्र उच्चारणमित्यर्थः । द्व्यादिषु किंशब्दस्य पाठे प्रयोजनं,—कश्च भवांश्च काविति 'त्यदादीनां यद्यत्परं तच्छिष्यते' इति किमः शेषः, द्व्यादिभ्यस्तु प्राक्पाठे भवतः शेषः स्यात् ।. २ ॥

एतदोऽन् । इह केचिदशं पठन्ति केचिदनम् । तत्रोत्तरपाठापेक्षया विचारः—क्वायं

उ०—'ऊडिद'मित्यत्र 'अन्तोदात्ता'दिति वर्तते तत्र निमित्तमेव लित्स्वरो विभक्तिस्वरस्येत्याह । तं विनाऽपि अन्तोदात्त एव इदम्शब्द इत्यन्ये ॥ १ ॥

किंसर्वं । ननु किमः सूत्रे पाठादुपसंख्यानमित्ययुक्तमत आह—उपेत्येति । ननु द्व्यादिभ्यः पूर्वमेव किम्शब्दः कुतो न पठ्यतेऽत आह—द्व्यादिष्विति । 'पूर्वशेषोऽपि दृश्यते' इति सत्त्वात् किम्ग्रहणं चिन्त्यप्रयोजनमिति कश्चित् । तन्न, भवतः शेषस्य कदाऽप्यदर्शनात् ॥ २ ॥

एतदोऽन् । केचिदिति । वृत्तिकृतः । 'अत्र द्वितीयपाठ एव सूत्रकृत्कृतः, भाष्यसम्मतः ।' नन्वनु-

* त्यदादीनामः ७ । २ । १०२ + पञ्चम्यास्तसिल्; सप्तम्यास्त्रल् ५ । ३ । ७; १०

पदिकान्तस्य' [ ८ । २ । ७ ] इति । यदि न क्वचिच्छ्रूयते, किमर्थमुच्चार्यते ? अनेकाल्शित्सर्वस्य [ १ । १ । ५५ ] इति सर्वादेशो यथा स्यात् ।

क्रियमाणेऽपि वै नकारे सर्वादेशो न प्राप्नोति । किं कारणम् ? नलोपे कृते एकाल्त्वात् । इदमिह संप्रधार्यम्—नलोपः क्रियतां सर्वादेश इति, किमत्र कर्त्तव्यम् ? परत्वान्नलोपः । असिद्धो नलोपस्तस्याऽसिद्धत्वात्सर्वादेशो भवति । परिगणितेषु कार्येषु* नलोपोऽसिद्धो न चेदं तत्र परिगण्यते । एवं तर्हि—आनुपूर्व्या सिद्धमेतत् । नात्राऽकृते सर्वादेशे प्रातिपदिकसंज्ञा प्राप्नोति, न चाऽकृतायां प्रातिपदिकसंज्ञायां नलोपः प्राप्नोति । तदानुपूर्व्या सिद्धमेतत् ।

नैतदस्ति प्रयोजनम् । अलोन्त्यस्य विधयो भवन्तीत्यकारस्याऽकारवचने† प्रयोजनं नास्तीति कृत्वाऽन्तरेण नकारं सर्वादेशो भविष्यति । अस्त्यन्यदकारस्याऽकारवचने प्रयोजनम् । किम् ? येऽन्येऽकारादेशाः प्राप्नुवन्ति तद्बाधनार्थम् । तद्यथा,-'मो राजि समः क्वौ' [ ८ । ३ । २५ ] इति मकारस्य मकारवचनसामर्थ्यादनुस्वारादयो न भवन्ति । तस्मान्नकारः कर्त्तव्यः ।

न कर्त्तव्यः । क्रियते न्यास एव । प्रश्लिष्टनिर्देशोऽयम्—'अ अ अ'¹ इति । सोऽनेकाल्शित्सर्वस्येति सर्वादेशो भविष्यति ।

प्र०—नकार इति । इत्कार्याभावादित्संज्ञायामसत्यां श्रवणेन भाव्यमिति प्रश्नः । लोपोस्येति । नेत्संज्ञाद्वारेण लोपः, किं तर्हि ? संपादिताऽनेकाल्व्यपदेशस्य कृतकार्यत्वाल्लक्षणान्तरेणेति भावः । क्रियमाणेऽपीति । ननु यावदेतदः स्थाने आदेशो न प्रवृत्तस्तावत् प्रातिपदिकान्तत्वाभावान्नलोपाऽप्रसङ्गः । प्रवृत्तिकाले त्वनेकाल्त्वात्सिद्धः सर्वादेशः । एवं मन्यते—स्वरूपेणार्थेनार्थवत्त्वादप्रवृत्तोऽप्येतदः स्थाने बुद्धिस्थ इति प्रातिपदिकं भवत्येव, ततश्च नलोपे कृतेऽनेकाल्त्वाभावात्सर्वादेशो न प्राप्नोति । आनुपूर्व्या सिद्धमिति । यदुक्तं 'स्वरूपेणार्थेनार्थवत्त्वात्प्रातिपदिक'-मिति, तदयुक्तम् । सर्वत्र स्वरूपप्रतिपत्तिसंभवादर्थवद्ग्रहणसामर्थ्याद्व्यतिरिक्तबाह्यार्थग्रहणात्, अन्यथा न क्वचिन्नकारस्य श्रवणं स्यात् । नात्राऽकृत इति । अर्थवतः संज्ञाविधानात् । स्थान्य-

उ०—बन्धानां सर्वत्राऽश्रवणेन किमस्यैव श्रवणविचारोऽत आह—इत्कार्याभावादिति । नन्वित्त्वाऽभावे कथं लोपः ? उच्चारणसामर्थ्याच्चेत्यत आह—नेत्संज्ञेत्यादि । लक्षणान्तरं—'नलोपः प्रातिपदिकान्तस्ये'ति । ननु प्रयोगार्थं शास्त्रं, तत्र यावत्स्थाने न जातस्तावत्प्रयोगेऽनोऽभावात् कस्य प्रातिपदिकत्वमित्यत आह—एतदः स्थाने बुद्धिस्थ इति । बुद्धिविषयतया सत्त्वमिति भावः । बाह्यार्थेति । अनुकरणानामप्यनुकार्यं बाह्य एवार्थ

* नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ८ । २ । २

† त्यदादीनामः ७ । २ । १०२; अलोऽन्त्यस्य १ । १ । ५२　　१—'अ अ इति' पा० ।

एतद् इति योगविभागः ॥ १ ॥

एतद इति योगविभागः कर्त्तव्यः । एतदः—'एत' 'इत्' इत्येतावादेशौ भवतो रयोः । ततः—'अन्' । अंश्च भवत्येतद इति ।

केन विहिते थकार एतद आदेश उच्यते ?

एतदश्च थम उपसङ्ख्यानम् ॥ २ ॥

एतदश्च थम उपसङ्ख्यानं कर्तव्यम् । एतत्प्रकारमित्थम् ।

तत्तर्हि कर्तव्यम् ? न कर्तव्यम् । एतज्ज्ञापयति—भवत्यत्र थमुरिति, यदयं थकारादावादेशं शास्ति । कुतो नु खल्वेतज्ज्ञापकादत्र थमुर्भविष्यति न पुनर्य एवाऽसावविशेषविहितस्थकारादिस्तस्मिन्नादेशः स्यात्‡ । इदमा थकारादिं विशेषयिष्यामः—'इदमो यस्थकारादि'रिति ॥ ५ ॥

पञ्चम्यास्तसिल् ॥ ५ । ३ । ७ ॥ सप्तम्यास्त्रल् ॥५।३।१०॥

इदं विचार्यते—इमे तसिलादयो विभक्त्यादेशा वा स्युः, परे वेति । कथं चादेशाः स्युः, कथं वा परे ? यदि 'पञ्चम्याः' 'सप्तम्या'इति षष्ठी तदादेशाः, अथ पञ्चमी, ततः परे । कुतः सन्देहः ? समानो निर्देशः ॥ कश्चात्र विशेषः ?

प्र०—र्थेनाऽर्थवत्त्वमेष्टव्यमित्यर्थः । अकारस्याकारवचन इति । त्यदाद्यत्वं कृत्वादेशं मन्यते । बाध्यबाधकभावमनपेक्ष्यैतदुक्तम् । तदपेक्षायां हि दकारस्य स्थाने त्यदाद्यत्वस्याऽस्य चाऽत्वस्य विशेषो नास्तीति वक्तव्यम् । येऽन्य इति । एतच्छन्दाऽकारेण सह पररूपं लित्स्वरश्च बाध्येत । योगविभाग इति । अन्वाधनार्थम् । तत्र रेफादि'रनद्यतने र्हिलन्यतरस्या'मिति र्हिल्प्रत्ययः । अविशेषविहित इति । 'प्रकारवचने था'लिति भावः । इदमेति । एवं च थमुना थाल्बाध्यते ॥ ५ ॥

पञ्चम्याः । पञ्चमीनिर्देशादिति । आदेशपक्षस्य बहुदोषत्वात्प्राथम्याच्च पञ्चम्याश्रयेण

उ०—इति भावः । इदन्तु नाऽनुकरणमनुकार्याऽभावादिति तात्पर्यम् । बाध्यबाधकेति । येन नाऽप्राप्तिन्यायेनेति भावः । तदपेक्षायां हीति । अकारस्य प्राप्तावकारवचने फलं नास्तीति भाष्यं व्याचष्टे परे । भाष्ये—इदमो यस्थकारादिरिति । इदम इदम्शब्दमुच्चार्य विहितो यस्थकारादिरित्यर्थः । तथा च तत्सामर्थ्यादेतदस्थमुरिति वचनमनुमीयत इति भावः । नन्वेवमपि थाल्दुर्वारोऽत आह—एवञ्चेति ॥ ५ ॥

पञ्चम्यास्त । भाष्ये—कस्मिन् कुत्रेति । 'वा ह च च्छन्दसी'त्यत्र वेति योगविभागाल्लोकेऽपि किमस्त्रलिति भावः । न च छान्दसमेव भाष्य उदाहृतमिति भ्रमितव्यं, छन्दस्यापाद्यरूपाऽभावादिति

१—'वक्तव्यम्' पा० । २—'एतदेव ज्ञापयति' पा० ।

‡ प्रकारवचने थाल् ५ । ३ । २३

**तसिलादयो विभक्त्यादेशाश्चेत्सुब्लुक्स्वरगुणदीर्घैत्त्वौत्त्वस्मायादिविधिप्रतिषेधः ॥ १ ॥**

तसिलादयो विभक्त्यादेशाश्चेत्सुब्लुक्स्वरगुणदीर्घैत्त्वौत्त्वस्मायादिविधीनां प्रतिषेधो वक्तव्यः । सुब्लुक्—ततस्त्यः यतस्त्यः । तत्रत्यः यत्रत्यः* । 'सुपो धातुप्रातिपदिकयोः' [ २ । ४ । ७१ ] इति सुब्लुक्प्राप्नोति । सुब्लुक् ॥ स्वर—यदा तदा । 'अनुदात्तौसुप्पितौ' [ ३ । १ । ४ ] इत्येष स्वरः प्राप्नोति । स्वर ॥ गुण—कस्मात् कुतः । 'घेर्ङिति' [ ७ । ३ । १११ ] इति गुणः प्राप्नोति । गुण ॥ दीर्घ—तस्मिन् तर्हि । 'अतो दीर्घो यञि' 'सुपि च' [ ७ । ३ । १०१; १०२ ] इति दीर्घत्वं प्राप्नोति । दीर्घ ॥ एत्त्व—तेषु तत्र । 'बहुवचने झल्येत्' [ ७ । ३ । १०३ ] इत्येत्त्वं प्राप्नोति । एत्त्व ॥ औत्त्व—कस्मिन् कुत्र । 'इदुद्भ्यामौदच्चघेः' [ ७ । ३ । ११७–११९ ] इत्यौत्त्वं प्राप्नोति । औत्त्व ॥ स्मायादिविधिः—तस्मात् ततः । तस्मिन् तत्र । 'ङसिङ्योः स्मात्स्मिनौ' [ ७ । १ । १५ ] इति स्मायादयः प्राप्नुवन्ति ।

**पञ्चमीनिर्देशात्सिद्धम् ॥ २ ॥**

सन्तु परे ॥ यदि परे समानशब्दानां प्रतिषेधो वक्तव्यः । तस्मात्तस्यति । यस्मात्तस्यति । पञ्चम्यन्तात्परस्य तसेस्तसिल्भवतीति† तसिल्प्राप्नोति ।

प्र०—प्रत्ययाश्रयणमित्यर्थः । तस्मात्तस्यतीति । पञ्चमीनिर्देशे 'तसेश्चे'त्यस्यायमर्थः,—पञ्चम्याः परस्य तसेस्तसिलादेशो भवतीति । 'तसे'रिति निर्देशे चेकार उच्चारणार्थः । ततश्च धातोरपि तस्यतेः पञ्चम्या परस्य तसिलादेशस्तद्धितादेशवत्प्रसज्येत । तद्विधानसामर्थ्याच्च प्रत्ययस्वरत्वेऽपि लित्स्वरप्रसङ्गः । आदेशपक्षे तु नायं दोषः, 'अपादाने चाहीयरुहो'रित्यत्राप्यादेशपक्षाश्रयणात्, ततश्च पञ्चम्याः स्थाने यस्तसिस्तस्य तसिल्विधानाद्धातोः प्रसङ्गाभावः । स्वार्थे वर्तमानस्येति । पञ्चम्य-

उ०—कश्चित् । परे तु छान्दसमेवेदं, छन्दस्यपि न्यायविचारस्य कर्तुं योग्यत्वात् । अत एव छान्दसेषु शास्त्रेषु तत्तदुपाधिनिर्देशः सार्थक इत्याहुः ।

पञ्चमीनिर्देशात्सिद्धमिति । एतल्लब्धार्थस्य दूषणाय 'सन्तु परे' इत्यनुवादः । नन्विकारोच्चारणसामर्थ्याद्धातोर्न भविष्यतीत्यत आह—इकार इति । प्रसङ्ग इति—कर्मणि घञ्, तसिलादेशः प्रसज्यत इत्यर्थः । 'प्रसज्येते'ति वा पाठः । ननु षष्ठीपक्षेऽपि पञ्चमीस्थानिकतसिरप्रसिद्ध इति पञ्चम्या विशेषणाऽसम्भवात्सर्वत्र प्रसङ्गस्तदवस्थ इति 'यदि परे' इति भाष्याऽनुपपत्तिरत आह—आदेशपक्षे त्विति । नाऽयं दोष इति । एतेन सुब्लुक्स्वरादिदोषाः सन्त्येवेति ध्वनितम् । आदेशपक्षाश्रयणादिति । अपादाने

१—'दीर्घत्वैत्त्वौत्त्वस्मादादिविधि' पा० ।
२—'स्मादादिविधिः' पा० ।

* अव्ययात्त्यप् ४ । २ । १०४
† तसेश्च ५ । ३ । ८

अनादेशे स्वार्थविज्ञानात्समानशब्दाऽप्रतिषेधः ॥ ३ ॥

अनादेशे स्वार्थविज्ञानात्समानशब्दानामप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः । तसिल्कस्मान्न भवति ? 'स्वार्थविज्ञानात्' । पञ्चम्यन्तात्परस्य तसेः स्वार्थे वर्तमानस्य‡ तसिला भवितव्यम्, न चात्र पञ्चम्यन्तात्परस्तसिः स्वार्थे वर्तते ॥ ७ ॥ ॥ १० ॥

## तसेश्च ॥ ५ । ३ । ८ ॥

किमर्थं तसेस्तसिलुच्यते ?

तसेस्तसिल्वचनं स्वरार्थम् ॥ १ ॥

तसेस्तसिल्वचनं क्रियते[1] । किं प्रयोजनम् ? 'स्वरार्थम्' । 'लिति प्रत्ययात्पूर्वमुदात्तं भवती'त्येष* स्वरो यथा स्यात् ॥ ननु चायं तसिल्तसिं‡ बाधिष्यते । न सिध्यति । परत्वात्तसिः प्राप्नोति । तसिलोऽवकाशः—ततो हीयते, ततोऽवरोहति । तसेरवकाशः—ग्रामत आगच्छति नगरत आगच्छति । इहोभयं प्राप्नोति—तत आग-

प्र०—न्तप्रकृत्यर्थ इत्यर्थः । इह स्वार्थिकैः साहचर्यात्तसिलादेशोऽपि स्वार्थिको विज्ञायते । यदि च स्वार्थिकस्य स्थाने भवति ततः स्वार्थिको भवति । अथवा तसेरितीकारो विवक्षितो न तूच्चारणार्थः ॥ ७ ॥

तसेश्च । स्वार्थमिति । ननु त्यदाद्यत्वाद्यर्थत्वाद्द्रूपाद्यर्थं तसिल्वचनम् । न च विभक्त्यादेशपक्षाश्रयेण त्यदादिविधिसिद्धिः, आदेशपक्षस्य सदोषत्वात्परित्यागात् । एवं तर्हि स्थान्यादेश-

उ०—वर्त्तमानपञ्चम्याः स्थाने तसिरित्यर्थं इति भावः । ननु तसुधातुरपि स्वस्यैवार्थे वर्त्ततेऽत आह—पञ्चम्यन्तेति । पञ्चम्यन्तायाः प्रकृतेरर्थे इत्यर्थः । ननु 'स्वार्थे'इति पदाऽभावात्स्वार्थे वर्त्तमानस्येत्यर्थोऽलाभोऽत आह—इहेति । वाक्यैकदेशन्यायेन तल्लाभ इति भावः । अथवेति । स्वार्थे वर्त्तमानस्येत्यनेनेकारो विवक्षित इत्येव भाष्ये बोधितम्, इकारविशिष्टस्य तथात्वादिति भावः ॥ ७ ॥ १० ॥

तसेश्च । विभक्त्यादेशपक्षाश्रयेणेति । 'अपादाने चाऽहीयरुहोरित्यत्रे'ति शेषः । सदोषत्वादिति । 'कुत आगच्छती'त्यादौ सुप्प्रसङ्गो दोषः । परत्वात्तसेर्बाधकस्य तसिलो बाधक इति । परत्वात्तसिलो बाधक इत्यन्वयः । 'अहीयरुहो'रिति पर्युदासेन क्रियानिमित्तकत्वाश्रयणात्स बहिरङ्गः, अयन्त्वन्तरङ्ग इति तसेरयम्बाधक इत्यर्थः । अर्थकृतबहिरङ्गत्वाश्रयणमत्र नेतीदं चिन्त्यम् । अत एव भाष्ये 'तसिलः परत्वात्तसि'-

‡ अपादाने चाहीयरुहोः ५ । ४ । ४५

* लिति ६ । १ । १९३

१—'क्रियते स्वरार्थम्' पा० ।

च्छति, यत आगच्छतीति । परत्वात्तसिः प्राप्नोति । तस्मात्सुष्ठूच्यते—'तसेस्तसिल्वचनं स्वरार्थ'मिति ॥ ८ ॥

## पर्यभिभ्यां च ॥ ५ । ३ । ६ ॥

### पर्यभिभ्यां च सर्वोभयार्थे ॥ १ ॥

पर्यभिभ्याञ्चेति यदुच्यते तत्सर्वोभयार्थे द्रष्टव्यम् । यावत्सर्वतस्तावत्—परितः । यावदुभयतस्तावत्—अभितः ॥ ६ ॥

## इतराभ्योऽपि दृश्यन्ते ॥ ५ । ३ । १४ ॥

इह कस्मान्न भवति—सः, तौ, ते ? भवदादिभिर्योग इति वक्तव्यम् । के पुनर्भवदादयः ? भवान्, दीर्घायुः, देवानांप्रियः, आयुष्मानिति । स भवान्, तत्र भवान्, ततो भवान् । तं भवन्तम्, ततो भवन्तम्, तत्र भवन्तम् । तेन भवता, तत्र भवता, ततो भवता । तस्मै भवते, तत्र भवते, ततो भवते । तस्माद्भवतः, तत्र भवतः, ततो भवतः । तस्य भवतः, तत्र भवतः, ततो भवतः । तस्मिन् भवति, तत्र भवति, ततो भवति ।

स दीर्घायुः, तत्र दीर्घायुः, ततो दीर्घायुः । तं दीर्घायुषम्, तत्र दीर्घायुषम्, ततो दीर्घायुषम् ।

स देवानांप्रियः, तत्र देवानांप्रियः, ततो देवानांप्रियः । तं देवानांप्रियम्, तत्र देवानांप्रियम्, ततो देवानांप्रियम् ।

स आयुष्मान्, तत्रायुष्मान्, तत आयुष्मान् । तमायुष्मन्तम्, तत्रायुष्मन्तम्, तत आयुष्मन्तम् ॥ १४ ॥

---

प्र०—भावः किमर्थ आश्रितः, तसिश्चेति प्रत्यय एव परत्वात्तसेर्बाधकस्य तसिलो बाधकः कर्त्तव्यः । तस्य च विभक्तिसंज्ञकत्वात्त्यदादिविधिः सिध्यतीत्याशङ्क्य स्वरार्थमित्युक्तम् ॥ ८ ॥

---

उ०—रित्युक्तम् । तस्मात्पूर्वत्राऽनुक्तं लित्वफलं वक्तुं 'स्वरार्थ'मित्युक्तम् । तच्च पूर्वोक्तत्यदाद्यत्वादीनामप्युपलक्षणम् ॥ ८ ॥

पर्यभिभ्यां च । भाष्ये—सर्वोभयार्थेति । अभिधानस्वभावमूलकमेतत् । 'ओदनम्परिषिञ्चती'त्यादौ वावचनाऽनुवृत्तेः पक्षे तसिलभावो बोध्यः ॥ ६ ॥

## अधुना ॥ ५ । ३ । १७ ॥

अधुनेति किं निपात्यते ? इदमोऽश्भावो धुना च प्रत्ययः । इदमो वा लोपोऽधुना च प्रत्ययः । अस्मिन्काले अधुना ॥ १७ ॥

## दानीं च ॥ ५ । ३ । १८ ॥

इदानीम्[१] । इदमस्तृतीयादिर्विभक्तिरुदात्ता भवतीत्येष स्वरः प्राप्नोति* ।

### दानीमिति निपातनात्स्वरसिद्धिः ॥ १ ॥

दानीमिति निपातनात्स्वरसिद्धिर्भविष्यति । आद्युदात्तनिपातनं करिष्यते, स निपातनस्वरो विभक्तिस्वरस्य बाधको भविष्यति ।

### उक्तं वा ॥ २ ॥

किमुक्तम् ? 'आदौ सिद्ध'मिति† ॥ १८ ॥

## तदो दा च ॥ ५ । ३ । १९ ॥

### तदो दावचनमनर्थकं विहितत्वात् ॥ १ ॥

तदो दावचनमनर्थकम् । किं कारणम् ? 'विहितत्वात्' । विहितोऽत्र प्रत्ययः[१]— 'सर्वैकान्यकिंयत्तदः काले दा' [ ५ । ३ । १५ ] इति ॥ १९ ॥

---

प्र०—दानीम् । केचिदिदानीमिति सूत्रं पठन्ति । अन्ये तु—दानीं चेति । एष स्वर इति । 'अलोन्त्यस्ये'ति वचनादन्त्यस्योदात्तत्वं प्राप्नोति । आदौ सिद्धमितीति । 'आदेः परस्ये'-ति वचनात् ॥ १८ ॥

तदो । दावचनमिति । सूत्रकारेण त्वदाप्रत्ययः कृत इत्याहुः । स्वरे च विशेषः । अदाप्रत्यये तदाशब्द आद्युदात्तो भवति, दाप्रत्यये त्वन्तोदात्तः ॥ १९ ॥

---

उ०—दानीं च । अन्ये त्विति । अयमेव पाठो 'न विभक्ता'विति सूत्रस्थभाष्यसंमतः । ननु तेनाऽप्याद्युदात्तत्वात्को भेदोऽत आह—अलोन्त्यस्येतीति ॥ १८ ॥

तदो दा । इत्याहुरिति । अत्राऽरुचिबीजं भाष्यविरोधः ॥ १९ ॥

---

१—'इदानीमिति' इति पा० । * ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः ६ । १ । १७१; अलोऽन्त्यस्य १ । १ । ५२ † ६ । १ । १६१ वा० ४ १—'दाप्रत्ययः' पा० ।

## तयोर्दार्हिलौ च च्छन्दसि ॥ ५ । ३ । २० ॥

### तयोरिति प्रातिपदिकनिर्देशः ॥ १ ॥

तयोरिति प्रातिपदिकनिर्देशोऽत्र द्रष्टव्यः ॥ द्वैष्यं विजानीयाद्योगयोर्वा प्रत्यययोर्वेति । तदाचार्यः सुहृद्भूत्वाऽन्वाचष्टे—'तयोरिति प्रातिपदिकनिर्देश' इति ॥ २० ॥

## सद्यःपरुत्परार्यैषमःपरेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः ॥ ५ । ३ । २२ ॥

सद्य इति किं निपात्यते ?

### समानस्य सभावो द्यश्चाहनि ॥ १ ॥

समानस्य सभावो निपात्यते द्यश्च प्रत्ययोऽहन्यभिधेये । समानेऽहनि सद्यः ।
परुत् परारीति किं निपात्यते ?

### पूर्वपूर्वतरयोः परभाव उदारी च संवत्सरे ॥ २ ॥

पूर्वपूर्वतरयोः परभावो निपात्यते उदारी च प्रत्ययौ संवत्सरेऽभिधेये । पूर्वस्मिन्संवत्सरे परुत् । पूर्वतरे संवत्सरे परारि ।
ऐषम इति किं निपात्यते ?

### इदमः समसण् ॥ ३ ॥

इदमः समसण्प्रत्ययो निपात्यते संवत्सरेऽभिधेये । अस्मिन्संवत्सरे ऐषमः ।

---

प्र०—तयो । योगयोर्वेति । तत्र पूर्वयोर्योगयोर्विषये दार्हिलौ भवतः, चशब्दाद्योगद्वयविहितौ प्रत्ययाविति सूत्रार्थः स्यात् । तत्र यदि यथासङ्ख्यमाश्रीयते तदा इदमश्छन्दसि इदा इदानीमिति रूपद्वयमेव स्यान्न त्वधुना एतर्हीति । विशेषविहिताभ्यां छन्दोविषयाभ्यां दादानीम्भ्यां र्हिलधुना प्रत्यययोर्बाधप्रसङ्गात् । तदस्तु तदानीं तदा तर्हीति रूपत्रयं सिध्यत्येव । अथापि यथासङ्ख्यानाश्रयणादिदमो र्हिल्विधीयते तथाप्यधुनेति छन्दसि न स्यादेव । अथ तयोरिति प्रत्ययपरामर्शस्तयोः पूर्वसूत्रविहितयोर्विषये दार्हिलौ भवतस्तदानन्तर्यात्तद एव दार्हिलौ स्यातामिति इदम इदा इति न सिध्येत् । प्रातिपदिकपरामर्शे तु चकारेण यथाप्राप्त्यभ्यनुज्ञाने न कश्चिद्दोषः ॥ २० ॥

---

उ०—तयोर्दार्हि । योगयोः प्रत्यययोर्वेत्यर्थे दोषं दर्शयति—तत्रेति । र्हिलधुनाप्रत्यययोरिति । अनद्यतने र्हिलः प्राप्तिः ॥ २० ॥

२४ ‡

परेद्यवीति किं निपात्यते ?

परस्मादेद्यव्यहनि ॥ ४ ॥

परस्मादेद्यविप्रत्ययो निपात्यतेऽहन्यभिधेये । परस्मिन्नहनि परेद्यवि ।

अद्येति किं निपात्यते ?

इदमोऽश्भावो द्यश्च ॥ ५ ॥

इदमोऽश्भावो निपात्यते द्यश्च प्रत्ययोऽहन्यभिधेये । अस्मिन्नहनि अद्य ।

पूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युरिति किं निपात्यते ?

पूर्वान्यान्यतरेतरापराधरोभयोत्तरेभ्य एद्युसुच् ॥ ६ ॥

पूर्वान्यान्यतरेतरापराधरोभयोत्तरेभ्य एद्युसुच्प्रत्ययो निपात्यतेऽहन्यभिधेये । पूर्वस्मिन्नहनि पूर्वेद्युः । अन्यस्मिन्नहनि—अन्येद्युः । अन्यतरस्मिन्नहनि— अन्यतरेद्युः । इतरस्मिन्नहनि—इतरेद्युः । अपरस्मिन्नहनि—अपरेद्युः । अधरस्मिन्नहनि—अधरेद्युः । उभयोरह्नोः—उभयेद्युः । उत्तरस्मिन्नहनि—उत्तरेद्युः ।

द्युश्चोभयात् ॥ ७ ॥

उभयशब्दाद् द्युश्च वक्तव्यः । तस्मान्मनुष्येभ्य उभयद्युः ॥ २२ ॥

## दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः ॥ ५ । ३ । २७ ॥

प्र०—दिक्शब्दे । दिशां शब्दा दिक्शब्दाः, ये रूढ्या दिशो वाचकाः पूर्वादयस्ते गृह्यन्ते । न त्वैन्द्र्यादयो यौगिकाः, तत्र दिश उपलक्षणत्वेनोपादानादिहापि प्राप्नोति—'पूर्वस्मिन्गुरौ वसती'ति । अत्र हि देशसम्बन्धात्कालसम्बन्धाद्वा पूर्वशब्दो गुरौ वर्त्तते, तदर्थं विशेषणोपादानं 'दिग्देशकाले'-ष्विति । विभक्तीनामुपाधीनां च साम्येऽपि यथासङ्ख्याऽभावः, तदर्थं स्वरितत्वाऽप्रतिज्ञानात् । तत्र यथा पूर्वादयः स्वभावाद्दिशि वर्त्तन्ते तथा देशकालयोरपि । यथा काले वर्तमाना दिशं

उ०—दिक्शब्देभ्यः । स्पष्टप्रतिपत्तये उत्तरचोद्यावतारणाय च सूत्रार्थं निरूपयति—दिशां शब्दा इति । शब्दग्रहणसामर्थ्यलभ्यमाह—ये रूढ्येति । दिश उपलक्षणत्वेनेति । अत एव 'दिग्देशकाले'ष्विति तद्विशेषणम् । तथा देशेऽपीति । वक्तृसंमुखदेशत्वादेस्तत्प्रवृत्तिनिमित्तत्वात् । न च दिशि पूर्वादयष्टाबन्ता देशकालयोस्त्वदन्ता इति देशकालवृत्त्योः कथं दिक्शब्दत्वेन व्यवहार इति वाच्यं, टापः स्वार्थिकत्वेन

इह कस्मान्न भवति,—'पूर्वस्मिन्देशे वसती'ति ? नैष देशो देशविशेषणमेतत् ॥ २७ ॥

प्र०—नापेक्षन्ते तथा देशेऽपि दिगनपेक्षाः[1]। यद्यपि भिन्नार्थवृत्तित्वाद्भिन्ना एव पूर्वादयो दिग्देशकालेषु तथापि तत्त्वव्यपदेशनिबन्धनसादृश्याश्रयो दिक्शब्देभ्य इति व्यपदेशः। अनिर्दिष्टार्थत्वाच्च स्वार्थेऽयं प्रत्ययः। एवं स्थिते चोदकः पृच्छति—इह कस्मान्न भवति पूर्वस्मिन्देशे वसतीति। पूर्वशब्दस्य दिक्छब्दत्वाद्देशवृत्तित्वाच्च प्रसङ्गः। आचार्य आह—नैष देशो देशविशेषणमेतदिति। अयमर्थः,—विशेषणविशेष्ययोः काणखञ्जवत्कामचाराद्यदा पूर्वोऽर्थो विशेष्यत्वेन प्रक्रम्यते देशो विशेषणत्वेन तदा प्रत्ययो भवति। वृत्तौ विशेष्यं प्राधान्याद्विशेषणमन्तर्भावयितुं शक्नोति। सत्यपि चान्तर्भावे दिग्देशकालानामविशेषेणान्तर्भावाद्विशेषाभिव्यक्तये देशादिशब्दप्रयोगो भवति,—'पुरस्ताद्दिश आगतो' 'देशात्कालाद्वे'ति। यदा तु देशो विशेष्यत्वेन प्रक्रम्यते पूर्वोऽर्थो विशेषणत्वेन तदा प्रत्ययाभावः। दिग्देशकालेष्वित्यनेन ह्युपाधिभावो दिगादीनां समर्थितो न तु प्राधान्यं, नापि वृत्तौ गुणः प्रधानमन्तर्भावयितुं शक्नोति। नैष देश इति। नैष पूर्वार्थो देशेन विशेष्यत इत्यर्थः। यो हि देशेन विशेष्यमाणो देशो भवति ततः प्रत्ययो न तु विशेषणादित्यर्थः। अन्ये त्वाहुः—अवध्यपेक्षार्थाभिधायिभ्यः पूर्वादिभ्यः प्रत्ययेन भवितव्यम्, इह तु पूर्वदेशेऽवधिनिरपेक्ष एव पूर्वशब्दः प्रयुज्यते। तथा हि—पूर्वदेशाद्दक्षिणापथं गच्छन्कुतश्च गतस्त्वमिति पृष्टः 'पूर्वदेशादागतोऽह'मिति प्रतिवक्ति। प्रत्यागच्छंश्च 'दक्षिणापथा'दिति। तत्र 'नैष देश'इत्यस्यायमर्थो नायमवधिमत्त्वेन देश उपात्तः, किं तर्हि ? अवधिनिरपेक्षदेशस्यैतद्विशेषणम्। वास्तवी तु व्यवस्था विद्यत इति सर्वनामसंज्ञा प्रवर्त्तत एव ॥ २७ ॥

उ०—द्योतकतया वाचकरूपे भेदाभावान्न दोषः। देशकालाभ्यां व्यपदेशस्तु न कृतो, गौरवापत्तेः। तत्त्वव्यपदेशेति। तत्त्वव्यपदेशः-प्रत्यभिज्ञाप्रत्ययः, तस्य निबन्धनं यत्सादृश्यं तदाश्रयस्तन्निमित्तक इत्यर्थः। समानाऽधिकरणविशेषणत्वेन देशार्थकत्वमस्त्येवेत्यत आह—विशेषणविशेष्ययोरिति। अत्रेदं चिन्त्यं,-गुणशब्दयोः क्रियाशब्दयोर्विशेषणविशेष्यभावे कामचारेऽपि गुणद्रव्यशब्दयोस्तत्त्वे कामचाराऽभावः। 'पुरस्ताद्देशे इदं कृत'मित्यादौ देशस्य विशेषणत्वाऽननुभवाच्च, बहुव्रीह्यादौ प्रधानान्तर्भावेणाऽपि वृत्ते दर्शनाच्च। तस्मादयमत्र भाष्यार्थः—नैष देशः—न देशत्वेन देशबोधकः, किन्तु देशविशेषणस्य पूर्वार्जितत्ववतः पूर्वाऽध्युषितत्ववतो वा बोधकः। ईदृशे चार्थे 'पुरस्तात्'शब्दस्याऽसाधुत्वं स्पष्टमेवे'ति। ननु वृत्तौ देशाद्यन्तर्भावे 'पुरस्ताद्देश' इति प्रयोगो न स्यादत आह—सत्यपि चेति। देशो भवतीति। देशवाचको भवतीत्यर्थः। अन्ये त्विति। मतन्त्वक्षरस्वारस्याऽननुगुणत्वादरुचिग्रस्तमिति स्पष्टमेव। किञ्च वास्तवव्यवस्थामादायोपात्तव्यवस्थापदकं सर्वनामत्वं भवति, अनुपात्तव्यवस्थापदकः प्रत्ययो न प्रवर्त्तत इत्यत्र मानाऽभावः ॥ २७ ॥

१—"ननु दिगवच्छिन्नत्वात् 'पूर्वे गुरवः' 'पूर्वे ब्राह्मणाः' इति। एवं दिगवच्छिन्नत्वाद् देशोऽपि पूर्वादिः, तत्कथमुच्यते—दिगनपेक्षेति चेत्; उच्यते। देशाऽवच्छिन्ना दिगेव पूर्वादिरिति विनिगमनाविरहात् सुष्ठूक्तं देशेऽपि दिगनपेक्षा इति।" इत्यधिकं प्रदीपे क्वचिद् दृश्यते।

# दक्षिणोत्तराभ्यामतसुच् ॥ ५ । ३ । २८ ॥

किमर्थमतसुच् क्रियते न तसुजेव क्रियेत ? तत्रायमप्यर्थः—स्वरार्थश्चकारो* न कर्तव्यो भवति, प्रत्ययस्वरेणैव† सिद्धम् । का रूपसिद्धिः—दक्षिणतो ग्रामस्य, उत्तरतो ग्रामस्य ? दक्षिणोत्तरशब्दावकारान्तौ तसुशब्दः प्रत्ययः । भवेत्सिद्धं यदा अकारान्तौ, यदा तु खल्वाऽऽकारान्तौ तदा न सिध्यति । तदापि सिद्धम् । कथम् ? पुंवद्भावेन । कथं पुंवद्भावः ? 'तसिलादिष्वाकृत्वसुचः' [ ६ । ३ । ३५ ] इति ।

न सिध्यति भाषितपुंस्कस्य पुंवद्भावः, न चैतौ भाषितपुंस्कौ । ननु च भो दक्षिणशब्द उत्तरशब्दश्च पुंसि भाष्येते । 'समानायामाकृतौ यद्भाषितपुंस्क'मित्युच्यते, आकृत्यन्तरे चैतौ भाषितपुंस्कौ । दक्षिणोत्तरेति दिक्छब्दौ, दक्षिण उत्तर इति व्यव-

प्र०—दक्षि । आकृत्यन्तर इति । अन्या दिगाकृतिरन्या व्यवस्थाकृतिरिति भावः । दिशि वर्तमानाः पूर्वादयो निमित्तान्तरनिरपेक्षाः । देशकालयोस्तु व्यवस्थापेक्षाः । यदि पुनरिति । सर्वत्र व्यवस्थाशब्दाः सन्त्विति भावः ।

व्यवस्था—मर्यादेति केचिदाहुः । एवं तु—'उत्तराः कुरव' इति संज्ञायां मर्यादानपेक्षणात्कुरूनुत्तरेणाप्यासीनानामुत्तराः कुरव इति प्रयोगाद्व्यवस्थाभावादसंज्ञायामिति प्रतिषेधानर्थक्यप्रसङ्गाद्यावद्द्रव्यमनपायो व्यवस्थेत्यपरे मन्यन्ते । दक्षिणा गाथका इति,—सत्स्वेव गाथकेषु प्रावीण्यलक्षणस्य दाक्षिण्यस्य कादाचित्कत्वाद्व्यवस्थाऽभावो, दिग्देशकालसंज्ञासु तु व्यवस्थासद्भावः । मर्यादालक्षणव्यवस्थावादिनस्तु उत्तराः कुरव इत्यत्रापि मेरुं जम्बूद्वीपं वाऽपेक्ष्योत्तर-

उ०—दक्षिणोत्तरा भाष्ये—आकारान्ताविति । यदा दिग्वाचकावित्यर्थः । अन्येति । दिशि वाच्यायामन्या आकृतिः, व्यवस्थाविषयदेशादौ वाच्येऽन्या आकृतिः प्रवृत्तिनिमित्तमित्यर्थः । आकृतिभेदमेव दर्शयति—दिशीत्यादि । अवधिसापेक्षत्वाऽसापेक्षत्वाभ्यामाकृतिभेदो गम्यत इत्यर्थः । निमित्तान्तरपेक्षा इति । अवधिनिरपेक्षप्रवृत्तिनिमित्तकाः, प्रवृत्तिनिमित्ताऽभाव एव वेत्यर्थः । व्यवस्थाऽपेक्षा इति । अवधिसापेक्षप्रवृत्तिनिमित्ता इत्यर्थः । तत्तदवधिकोदयाचलसन्निहितदेशत्वादिसमनियतं पूर्वदेशत्वादि दिग्वाचकेषु शब्द एव प्रवृत्तिनिमित्तम्, तदभाव एव वा 'तस्य भाव' इति सूत्रोक्तरीत्या डित्थादिशब्देष्विव, अन्यत्रत्ववधिसाकाङ्क्षधर्म इति तात्पर्यम् । भाष्ये—दिक्शब्दावित्यस्य दिग्बोधकपूर्वादिशब्दप्रवृत्तिनिमित्तकावित्यर्थः । सर्वत्र व्यवस्थेति । देशे इव दिश्यपि पृथ्वीमध्याऽवधिकोदयाचलसन्निहितत्वादिकमेव प्रवृत्तिनिमित्तमित्यभिमानः ।

मर्यादा—अवधिः । यावद्द्रव्यमिति । द्रव्योत्पत्तिक्षणमारभ्य नाशपर्यन्तं यत्र पूर्वादिव्यवहारानपाय इति हि तदर्थः । दिग्देशकालसंज्ञासु त्विति । तद्वाचकेष्वित्यर्थः । इदमपि 'अधरे ताम्बूलराग' इत्यादावतिव्याप्तं, देशकालयोरव्याप्तञ्च, तद्ध्वनयन्पुनः प्रागुक्तमेव लक्षणमाश्रयति—मर्यादालक्षणेति । मेरुं जम्बूद्वीपं वेति । 'ये केचन परेण हिंमवन्तं जनपदा उत्तरकुरव उत्तरमद्रा' इति श्रुतिविरुद्धमेतत् । नन्वेवं तत्प्रयोगोऽपि स्यादत

* चितः ६ । १ । १६३ † आद्युदात्तश्च ३ । १ । ३

स्थाशब्दौ । यदि पुनर्दिक्शब्दा अपि व्यवस्थाशब्दाः स्युः, कथं यानि दिगपदिष्टानि कार्याणि ? दिशो यदा व्यवस्थां वक्ष्यन्ति ।

यदि तर्हि यो यो दिशि वर्त्तते स स दिक्शब्दो रमणीयादिष्वतिप्रसङ्गो भवति—रमणीया दिक्, शोभना दिगिति ॥ अथ मतमेतत्—'दिशि दृष्टो दिग्दृष्टः, दिग्दृष्टः शब्दो दिक्शब्द इति दिशं यो न व्यभिचरति, न रमणीयादिष्वतिप्रसङ्गो भवति,

प्र०—त्वविज्ञानात्प्रयोगकाले तु निरूढत्वाद्व्यवहारस्य प्रयोक्तृभिरनपेक्ष्यमाणापि वस्तुतो व्यवस्थाऽस्तीति मन्यन्ते ।

अन्ये तु—परस्परापेक्षात्मस्थितिर्व्यवस्थेत्याहुः । कथं यानीति । 'दिक्शब्देभ्यः सप्तमी'त्यादिविहितानि । व्यवस्थाशब्दत्वे हि दिश उपलक्षणत्वं न स्यात्तस्या निमित्तत्वाभावादिति भावः । दिशो यदेति । निमित्तवतोऽप्यर्थस्योपलक्षणत्वात् । तथा च सङ्ख्याशब्दाः कालवृत्तयः कालशब्दत्वात्कालाधिकारविहितप्रत्ययभाजः,—षष्टिवर्षाणि भूतः षष्टिक इति भावः ।

एतत्पक्षाश्रयेऽतिप्रसङ्गमाह-यदि तर्हीति। रमणीयादयो गुणक्रियानिमित्ता दिशि वर्तमाना दिक्शब्देनव्यपदिश्येरन्नित्यर्थः । दिशं यो न व्यभिचरतीति । व्यवस्थानिमित्तो यो न भवति, स्वभावत एव यो दिशि वर्त्तत इत्यर्थः । दिशि दृष्ट इत्यर्थप्रदर्शनं, दिशां शब्द इति तु षष्ठीसमासः ।

उ०—आह-निरूढत्वाद्व्यवहारस्येति । परस्परेति । यावत्सुमेरुव्यवहारमेव पूर्वादिव्यवहारः, सुमेरुस्थितिपर्यन्तमेवोत्तराः कुरवः, दक्षिणा दिगित्यादिव्यवहारा इति भावः । आत्मा-व्यवहारः । एवं यावद्दिग्व्यवहारमेव सुमेरुव्यवहार इति मन्यन्ते । देशादिवाचकेषु कथमस्योपपत्तिरिति चिन्त्यम् । इदमेवाऽत्रारुचिबीजम् ।

व्यवस्थाशब्दत्वे हीति । दिक्शब्दानामपि व्यवस्थाऽपेक्षप्रवृत्तिनिमित्तकत्वे इत्यर्थः । अयम्भावः,—प्रवृत्तिनिमित्तमादाय हि तत्तच्छब्दत्वव्यवहारः । यथा जातिशब्दो गुणशब्द इत्यादौ । एवञ्च'दिक्शब्दत्व'-मित्यस्य 'दिगुपलक्षितः शब्द' इत्यर्थो वाच्यः, स च न सम्भवति, तदेवाह—उपलक्षणत्वं न स्यादिति । तत्र हेतुमाह—निमित्तत्वाऽभावादिति । प्रवृत्तिनिमित्तत्वाऽभावादित्यर्थः । प्रवृत्तिनिमित्तस्य हि शब्दोपलक्षणत्वं दृष्टम् । एवञ्च व्यवस्थाशब्दत्वे दिक्शब्दत्वाऽभावात्तानि कार्याणि न स्युरिति भावः । भाष्ये—दिशो यदा व्यवस्थां वक्ष्यन्तीति । आकाशवदेकस्यैव दिक्पदार्थस्य व्यवस्थामौपाधिकं भेदं यदा वक्ष्यन्तीत्यर्थः । उपाधिश्च मध्याह्नसूर्यसंयोगिदेशावधिकोदयाचलाऽस्ताचलसन्निहितदेशतात्कालिकसूर्यसम्मुखयावद्देशतात्कालिकतत्पृष्ठस्थयावद्देश इति वदन्ति । मध्याह्ने सूर्यस्योदङ्मुखत्वात् । एवञ्च तत्राऽपि उदयाचलसन्निहितत्वादिकमेव प्रवृत्तिनिमित्तम्, अवधिः परम्पृथिवी मध्यमेकमेवेति समानायामाकृतौ भाषितपुंस्कत्वमक्षतमेव । एवञ्च विशेष्यतया दिग्बोधकशब्दत्वमेव दिक्शब्दत्वमिति भावः । तदेवाह—निमित्तवतोऽपीति । विशेष्यभूतस्याऽपीत्यर्थः । ननु व्यवस्थाविषयप्रवृत्तिनिमित्तकस्यापि टाबन्तस्य दिश्येव वृत्तेस्तस्यापि दिग्व्यभिचाराभावात्—'पुंवद्भावस्तु न सिध्यती'त्यग्रिमभाष्यमसङ्गतमत आह—व्यवस्थानिमित्त इति । स्वभावत एवेति ।

पुंवद्भावस्तु न प्राप्नोति ॥ एवं तर्हि सर्वनाम्नो वृत्तिमात्रे पुंवद्भावो वक्तव्यः—दक्षिणोत्तरपूर्वाणामित्येवमर्थम् ।

विशेषणार्थस्तर्हि । 'क्व विशेषणार्थेनार्थः ? 'षष्ठ्यतसर्थप्रत्ययेन' [ २ । ३ । ३० ] इति । 'षष्ठी तसर्थप्रत्ययेने'त्युच्यमान इहापि स्यात्—ततो ग्रामात्, यतो ग्रामादिति ॥ २८ ॥

---

प्र०—स्वरूपव्यतिरिक्तप्रवृत्तिनिमित्तनिरपेक्षो दिशो यो वाचकः पूर्वादिशब्दः स दिक्शब्द आश्रीयते शब्दग्रहणात्, अन्यथा 'दिग्भ्य' इत्येवब्रू यादित्यर्थः । यद्येवं 'दिशः पूर्वादीनि नामधेयानी'त्यसंज्ञायामिति सर्वनामसंज्ञानिषेधात्पूर्वस्यां दिशि वसतीत्यादि न सिध्यति । पौरुषेयसंज्ञाश्रयणादिह च तदभावाददोषः । पुंवद्भावस्त्विति । दिशि वर्त्तमानानां प्रवृत्तिनिमित्तानपेक्षणात्समानायामाकृतौ भाषितपुंस्कत्वाभावात् । सर्वनाम्न इति । यद्यपि दिशि वर्त्तमानानां व्यवस्था न प्रवृत्तिनिमित्तं तथापि वास्तवी व्यवस्था विद्यत इति सर्वनामसंज्ञायाः प्रवर्त्तनात् । तदेवं 'व्यवस्थाया'मिति विषयो निर्दिश्यते न तु प्रवृत्तिनिमित्तं, 'सर्वनाम्न' इत्येतच्चावश्यं कर्त्तव्यमित्याह—दक्षिणोत्तरपूर्वाणामिति । अयं समानाकृतित्वानपेक्षः पुंवद्भावः । दिग्वाचिनां त्वयं द्वन्द्वः । वृत्तिमात्र इति । तद्धितवृत्तिः समासवृत्तिश्च । ततो ग्रामादिति । अन्यादियोगे पञ्चमीं बाधित्वा षष्ठी स्यात् । यदा ग्रामस्यापादानत्वं तदोपपदविभक्तेः कारकविभक्तिर्बलीयसीति न्यायादप्रसङ्गः षष्ठ्याः ॥ २८ ॥

---

उ०—दिगतिरिक्तप्रवृत्तिनिमित्तभूतार्थोऽनपेक्षेत्यर्थः । एवञ्च 'दिशं यो न व्यभिचरती'ति भाष्यस्य दिगतिरिक्तमर्थं प्रवृत्तिनिमित्तत्वेनाऽपि यो नाश्रयत इत्यर्थः । दिशि दृष्ट इति भाष्यस्य—दिशि रूढया दृष्ट इत्यर्थः । तदाह—स्वरूपव्यतिरिक्तेति । स्वरूपं—वाचकशब्दस्वरूपम् । यद्वा—स्वरूपं—वाच्यदिक्स्वरूपम् । तस्यैव विषयताद्वयेन भानमिति बोध्यम् । पौरुषेयेति । दिक्तु त्वैश्वरः सङ्केत इति भावः । अत एव 'विश्वेषां देवाना'मिति सिद्धम् । एवञ्च दिग्वाचकानां व्यवस्थाऽपेक्षप्रवृत्तिनिमित्तकत्वाऽभाव इति स्थितम् । नन्वेषां व्यवस्थाप्रवृत्तिनिमित्तकत्वेऽपि 'दिशमेव यो विशेष्यतयाऽऽह स दिक्शब्द' इत्याश्रयणान्न रमणीयादिष्वतिप्रसङ्गः, पुंवत्त्वस्य च सिद्धिरिति चेन्न; अतिरिक्तार्थरूपप्रवृत्तिनिमित्तप्रकारकबोधाऽननुभवेन तथा वक्तुमशक्यमिति भाष्याशयात् । किञ्च तादृशप्रवृत्तिनिमित्तमाश्रित्य देशकालयोरपि बोधात्त्वदुक्तार्थो वक्तुमशक्यः । मम तु स्वरूपव्यतिरिक्तप्रवृत्तिनिमित्तनिरपेक्षो दिग्बोधको दिक्शब्दः । न हि तथा देशादिबोधः, किन्तु प्रवृत्तिनिमित्तान्तरसापेक्ष एवेति न दोषः । प्रवृत्तिनिमित्ताऽनपेक्षणादिति । दिग्व्यतिरिक्तार्थरूपप्रवृत्तिनिमित्तानपेक्षणादित्यर्थः । व्यवस्था नेति । व्यवस्थासापेक्षं न प्रवृत्तिनिमित्तमित्यर्थः । तथापि वास्तवीति । पृथ्वीमध्यभागादुदयाचलपर्यन्तदेशरूपोपाध्याद्यवच्छिन्नायां दिशि रूढिस्वीकारादित्यर्थः । तादृशोपाधिविशिष्टाया दिशो बोधात्तदन्तर्गततया व्यवस्थाऽस्त्येवेति भावः ।

न तु प्रवृत्तिनिमित्तमिति । व्यवस्थाऽपेक्षप्रवृत्तिनिनित्ते सतीति नार्थं इति भावः । ननु भाषितपुंस्कत्वाऽभावेऽयमपि पुंवद्भावः कथमत आह—अयमिति । तत्र बीजं दर्शयति—दिग्वाचिनान्त्विति । ननु 'ततो ग्रामा'दित्यस्य 'आगच्छती' त्यादावन्वयेऽपादानत्वात्पञ्चमी सिद्धा, न च तदा षष्ठ्याः प्रसङ्गः, पञ्चम्याः कारकविभक्तित्वादत आह—अन्यादीति ॥ २८ ॥

## उपर्युपरिष्टात् ॥ ५ । ३ । ३१ ॥

उपर्युपरिष्टादिति किं निपात्यते ?

**ऊर्ध्वस्योपभावो रिल्-रिष्टातिलौ च ॥ १ ॥**

ऊर्ध्वस्योपभावो रिल्—रिष्टातिलौ च प्रत्ययौ निपात्येते । उपरि उपरिष्टात् ॥ ३१ ॥

## पश्चात् ॥ ५ । ३ । ३२ ॥

पश्चादिति किं निपात्यते ?

**अपरस्य पश्चभाव आतिश्च प्रत्ययः ॥ १ ॥**

अपरस्य पश्चभावो निपात्यते, आतिश्च प्रत्ययः । पश्चात् ।

**दिक्पूर्वपदस्य च ॥ २ ॥**

दिक्पूर्वपदस्य चाऽपरस्य पश्चभावो वक्तव्यः, आतिश्च प्रत्ययः । दक्षिणपश्चात् उत्तरपश्चात् ।

**अर्धोत्तरपदस्य च समासे ॥ ३ ॥**

अर्धोत्तरपदस्य च समासे—अपरस्य पश्चभावो वक्तव्यः । दक्षिणपश्चार्धः उत्तरपश्चार्धः ।

**अर्धे च ॥ ४ ॥**

अर्धे च परतोऽपरस्य पश्चभावो वक्तव्यः । पश्चार्धः ॥ ३२ ॥

## एनबन्यतरस्यामदूरेऽपञ्चम्याः ॥ ५ । ३ । ३५ ॥

**अपञ्चम्या इति प्रागसः ॥ १ ॥**

अपञ्चम्या इति यदुच्यते प्रागसंस्तद्द्रष्टव्यम् † ॥ इदं विजानीयात्—अविशेषेणेत उत्तरमपञ्चम्या इति । तदाचार्यः सुहृद्भूत्वाऽन्वाचष्टे—अपञ्चम्या इति प्रागसेरिति[1] ॥ ३५ ॥

उ०—पश्चात् । भाष्ये—अपरस्येति । लिङ्गविशिष्टपरिभाषयाऽपरशब्दस्याऽपि । दक्षिणपश्चादिति । दक्षिणाया अपरस्याश्चाऽन्तरालं दिगिति विग्रहः । तस्यामित्यातिप्रत्ययः । समासे इति । 'दिग्वाचकै'रिति शेषः । अर्धे चेति । 'विनाऽपि दिग्वाचकपूर्वपद'मिति शेषः ॥ ३२ ॥

१–'प्रागसेः' पा० ।

† पूर्वाधरावराणामसि पुरधवश्चैषाम् ५ । ३ । ३९

## दक्षिणादाच् ॥ ५ । ३ । ३६ ॥

किमर्थश्चकारः ? स्वरार्थः । 'चितोऽन्त उदात्तो भवती'त्यन्तोदात्तत्वं यथा स्यात्‡ ।

नैतदस्ति प्रयोजनम् । एकाजयं, तत्र नार्थः स्वरार्थेन चकारेणाऽनुबन्धेन । प्रत्ययस्वरेणैव* सिद्धम् ॥ विशेषणार्थस्तर्हि । क्व विशेषणार्थेनार्थः ? 'अन्याराद्इतरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते' [ २ । ३ । २९ ] ॥ ३६ ॥

## संख्याया विधार्थे धा ॥ ५ । ३ । ४२ ॥

'विधार्थ' इत्युच्यते को विधार्थो नाम ? विधाया अर्थो विधार्थः । यद्येवम्— 'एका गोविधा' 'एका हस्तिविधा' अत्राऽपि प्राप्नोति ॥ एवं तर्हि—

### धाविधानं धात्वर्थपृथग्भावे ॥ १ ॥

धाविधानं धात्वर्थपृथग्भाव इति वक्तव्यम् । कः पुनर्धात्वर्थपृथग्भावः ? किं यत्तद् देवदत्तः कंसपात्र्यां पाणिनौदनं भुङ्क्त इति ? नेत्याह । कारकपृथक्त्वमेतत् ।

प्र०—दक्षिणादाच् । विशेषणार्थ इति । वाक्यस्मरणयोर्य आकारोऽननुबन्धकस्तद्व्यावृत्तय इत्यर्थः ॥ ३६ ॥

सङ्ख्या । यदा विधाशब्दः स्त्रीलिङ्ग उपादीयते तदा तस्यानेकार्थत्वादनिष्टेऽपि विषये प्रसङ्गः । यदा तु विधानं विध इति 'घञर्थे कविधान'मिति के कृते पुंलिङ्गनिर्देशस्तदा तस्यैकार्थत्वान्नानिष्टप्रसङ्गः । विधाया अर्थ इत्याचार्यदेशीयवचनम् । गोविधेति । अन्नं-विधोच्यते ।

कः पुनरिति । किं धातुकृतोऽर्थो धात्वर्थ इति कारकं विवक्षितमथवा धातोरर्थो धात्वर्थः क्रिया विवक्षितेति प्रश्नः । कल्य इति । कल्यमहर्मुखमुच्यते । कालपृथग्भावा-

उ०—दक्षिणादाच् । वाक्येत्यादि । यद्यपि स आकारो न प्रत्ययस्तथाप्यन्यादिसाहचर्यादप्रत्ययस्य तस्यैव ग्रहणापत्तिरिति भावः ॥ ३६ ॥

संख्याया वि । विधाशब्दार्थः प्रकार एव प्रसिद्ध इति संशयाऽनुपपत्तेराह—यदेति । एकार्थत्वादिति । प्रकाररूपपृथग्भावमात्रार्थकत्वादित्यर्थः । पृथग्भावः—भेदः । धातुकृत इति । धात्वर्थकृत इत्यर्थः । तेन कारकं कर्मादिव्यपदेशयुक्तं क्रियत इति तद्धात्वर्थकृतमिति भावः । अत्र कारककालगुणेषु स्वतो भेदः, क्रियायान्तु स्वतोऽसम्भवात्प्रकारकृतः, क्रियाया धातुना निवृत्तभेदाया एवोक्तेरिति बोध्यम् । पृथग्भावं मन्यत इति । 'क्रियाया' इत्यादिः । उत्तरन्तु कालस्यैव पृथक्त्वं भेदो गम्यते, न तु तत्कृतः—क्रियाया

‡ चितः ६ । १ । १६३ * आद्युदात्तश्च ३ । १ । ३

यत्तर्हि तत्कल्ये[1] भुङ्क्ते सायं भुङ्क्त इति ? नेत्याह । कालपृथक्त्वमेतत् । यत्तर्हि शीतं भुङ्क्त उष्णं भुङ्क्त इति ? नेत्याह । गुणपृथक्त्वमेतत् । कस्तर्हि धात्वर्थपृथग्भावः ? कारकाणां प्रवृत्तिविशेषः क्रिया ।। यद्येवं क्रियाप्रकारेऽयं भवति । विधयुक्तगताश्च प्रकारे भवन्ति । एवंविधम् एवंयुक्तम् एवङ्गतम् एवंप्रकारमिति ।। ४२ ।।

प्र०—पृथग्भावं मन्यते । कारकाणामिति । पूर्वपदार्थविषये एव प्रश्नप्रतिवचने । पृथग्भावस्य सुज्ञानत्वात्तद्विषयप्रश्नाऽयोगात् । तत्र पञ्चधा गच्छतीत्येकस्या गमनक्रियायाः शब्देन निवृत्तभेदायाः प्रकारलक्षणपृथग्भावप्रतिपत्तिः । यद्येवमिति । सूत्रन्यासेनैव सिद्धे वार्त्तिकं नारम्भणीयमित्यर्थः । तथा हि सामान्यस्य भेदको विशेषः प्रकार उच्यते । न च गुणकालकारकपृथक्त्वे किंचित्सामान्यमुपात्तं यस्य प्रकारः स्यात् । ननु सूत्रन्यासे 'पञ्चधा श्लोका इत्यादावपि प्रत्ययेन भाव्यं, वार्त्तिकन्यासे तु न भाव्यम्, एकधा भुङ्क्ते इति च पृथग्भावाभावात्प्रत्ययस्य न प्रसङ्ग इति भिन्नं फलं सूत्रवार्तिकयोः । नैष दोषः । 'पञ्चधा श्लोका' इत्यादौ क्रियापदाऽप्रयोगेऽपि अस्तीतिक्रियापदानुषङ्गादस्तिक्रियापृथग्भावः । 'एकधा भुङ्क्त'इत्यादावनेकप्रकारभुजिक्रियापेक्ष एकप्रकारस्य भुजेरस्त्येव पृथग्भावः । 'एकः पाक' इत्यादौ प्रकारस्याऽविवक्षितत्वात्प्रत्ययाभावः । प्रकारविवक्षायां तु भवत्येव एकधा पाक इति । 'पञ्च पाका' इत्यादौ भिन्ना एव पाका न त्वेकस्य प्रकारवत्त्वं विवक्षितमिति प्रत्ययो न भवति । 'पञ्चधा पाक' इत्यादौ तु भवत्येव ।। ४२ ।।

उ०—इति । ननु विशिष्टप्रश्ने विशेषणांशमात्रप्रत्युत्तरमयुक्तमत आह—पूर्वपदार्थेति । भाष्ये-प्रवृत्तिविशेष इत्यस्य विवरणं—क्रियेति । शब्देनेति । 'आख्यातशब्देनोपस्थितायाः' इति शेषः । अनेन क्रियाया एकत्वं समर्थितम् । प्रकारलक्षणेति । पञ्चशब्देनेति भावः । एतेन पञ्चशब्दस्य क्रियापृथग्भाववृत्तित्वमुक्तम् । 'चैत्रमैत्रदेवदत्ताः पचन्ती'त्यादौ त्रिधेति न, शब्दत एकत्वेनोपस्थितायाः यत्र सङ्ख्यया भेदप्रतिपादनं तत्रैव धाप्रत्ययोत्पत्तेरिति बोध्यम् । तदुक्तं—निवृत्तभेदाया इत्यादि । भेदको विशेष इति । पञ्चसङ्ख्यारूपभेदकधर्मवद्गगनमिति बोधः ।

नन्वेवं कारकादिपृथक्त्वेऽपि 'द्विधा चतुर्धा भुङ्क्ते'इत्याद्यापत्तिरत आह—न च गुणेति । उक्तेष्विति भावः । पञ्चधा श्लोक इति । अस्य पञ्चप्रकारः श्लोक इत्यर्थः । अत्र भेदको विशेषश्छन्द आदिः । क्रियापदाऽनुषङ्गादिति । एवञ्च सत्तायाः पञ्चप्रकारत्वं कर्तुः पञ्चप्रकारत्वादेवेति श्लोकस्याऽपि तत्त्वमर्थसिद्धमिति भावः । अस्तीति,—योग्यक्रियोपलक्षणम् । एवञ्च सूत्रेऽप्यभिधानस्वाभाव्यात्क्रियाविषय एव प्रकारो गृह्यत इति भावः । 'द्विधा गच्छती'त्यादावेकस्या एव क्रियाया अवान्तरप्रकारः प्रतीयत इति बोध्यम् । प्रकारस्याऽविवक्षितत्वादिति । पाकव्यक्तेरेकत्वमेव विवक्षितं, न त्ववान्तरप्रकारभेदाऽभावेनैकप्रकारकत्वमित्यर्थः । इत्यादौ त्विति । एकस्यैवाऽनेकप्रकारवत्त्वविवक्षणादिति भावः ।। ४२ ।।

१—'काल्ये' पा० ।

## एकाद्धो ध्यमुञन्यतरस्याम् ॥ ५ । ३ । ४४ ॥

### सहभावे ध्यमुञ् ॥ १ ॥

सहभावे ध्यमुञ्वक्तव्यः । ऐकध्यं राशिं कुरु ॥ स तर्हि वक्तव्यः ? न वक्तव्यः । अधिकरणविचाल इत्युच्यते*, न चावश्यं स एवाधिकरणविचालो यदेकमनेकं क्रियते, यदप्यनेकमेकं क्रियते सोऽप्यधिकरणविचालः ॥ ४४ ॥

## द्वित्र्योश्च धमुञ् ॥ ५ । ३ । ४५ ॥

### धमुञन्तात्स्वार्थे डदर्शनम् ॥ १ ॥

प्र०—एकाद्धो । धाग्रहणेऽनुवर्त्तमाने पुनर्धाग्रहणं धामात्रस्यादेशार्थम्, अन्यथानन्तर्यादधिकरणविचाल एव ध्यमुञ्विज्ञायेत । ततश्च विधार्थे न स्यात्—'ऐकध्यं भुङ्क्ते' इति । सहभाव इति । अनेकस्यार्थस्यैकीकरणं सहभावः । इहाधिकरणविचालः एकस्य द्रव्यस्य विभागेनावस्थापनम्, यथैकं राशिं पञ्चधा कुरु इति । ऐकध्यं राशिं कुर्वित्यत्र त्वेकस्य विभागावस्थापनाभावान्नास्त्यधिकरणविचाल इति मन्यते । वचनं तु विधार्थमेव स्यात् । धाग्रहणं तूत्तरार्थमेव स्यात्—द्वयोरर्थयोर्धमुञर्थं, द्वैधं भुङ्क्ते, एकं राशिं द्वैधं कुर्विति । न चावश्यमिति । अधिकरणं—द्रव्यमुच्यते । तस्य विचालोऽन्यथाकरणं, तच्चैकस्यानेकीकरणमनेकस्य वा एकीकरणमिति सूत्रेणैवेष्टसिद्धिरित्यर्थः । अनेकस्य यदेकीकरणं तत्र प्रकाराभावात्तदर्थमेवाधिकरणविचाले चेति सूत्रम् । एकस्यानेकीकरणे प्रकारस्यापि संभवात् पूर्वेणैव सिद्धत्वादित्याहुः ॥ ४४ ॥

द्वित्र्योश्च । पथि द्वैधानीति । स्वार्थिकत्वेऽपि स्वभावात्सत्त्ववाचित्वाल्लिङ्गसङ्ख्या-

उ०—एकाद्धो । धातुग्रहण इति । अनुवर्त्तमानस्य च पूर्वमेव विहितस्य पुनर्विधानाऽसम्भवात्स्यानित्वमेव विज्ञास्यत इति भावः । धामात्रस्येति । विधार्थे विहितस्याऽपीत्यर्थः । एतदर्थमेव स्थान्यादेशभावाश्रयणम् । प्रत्ययान्तरेऽप्येतद्दोषात् । अनन्तरत्वादधिकरणविचाल इत्यस्यैव सम्बन्धात् । ननु तत्रापि 'अधिकरणविचाले' इत्येव सिद्धमत आह—इहेति । नास्त्यधिकरणेति । एवञ्च 'अधिकरणविचाल' इत्यस्याऽसम्भवादत्रासम्बन्ध एवेति भावः । तदाह—वचनन्त्विति । नन्वेवं 'ध' इति व्यर्थमत आह—धाग्रहणन्त्विति । 'द्वित्र्योश्च धमु'जित्यादौ । तत्रार्थद्वयेऽपि धः सम्भवादिति भावः । इत्याहुरिति । अत्राऽरुचिबीजन्त्वनेकस्यैकीकरणेऽपि प्रकारसम्भवः, अत एव 'एकधे'ति सिद्धिरित्यन्ये ॥ ४४ ॥

द्वित्र्योश्च ध । ननु धमन्तस्याऽव्ययत्वात्ततः स्वार्थे डे तदन्तस्याऽप्यसत्त्वधर्मतया 'द्वैधानी'-त्ययुक्तमत आह—स्वार्थिकत्वेऽपीति । सत्त्ववाचित्वादित्यस्य—प्रकारवद्वाचित्वादित्यर्थः । बहुवचनं कथमत आह—एकशेषेणेति । पथि द्वैधानीत्यस्य–तद्विषये द्विप्रकाराणि ज्ञानानि । यद्वा पथि राशीन्द्वैधं कुर्वित्यर्थः ।

* अधिकरणविचाले च ५ । ३ । ४३

धमुञन्तात्स्वार्थे डो दृश्यते, स च विधेयः । पथि द्वैधानि । संशये द्वैधानि ॥ ४५ ॥

## याप्ये पाशप् ॥ ५ । ३ । ४७ ॥

### पाशपि कुत्सितग्रहणम् ॥ १ ॥

पाशपि कुत्सितग्रहणं कर्त्तव्यम् । वैयाकरणपाशः याज्ञिकपाशः । यो हि यापयितव्यो याप्यस्तत्र मा भूदिति ।

अथ वैयाकरणः शरीरेण[1] कृशो व्याकरणेन च शोभनः[2], कर्तव्यो वैयाकरणपाश इति ? न कर्त्तव्यः[3] । कथम् ? यस्य भावाद्द्रव्ये शब्दनिवेशस्तदभिधाने-तद्गुणे वक्तव्ये प्रत्ययेन भवितव्यं, न च कार्श्यस्य भावाद्द्रव्ये वैयाकरणशब्दः ॥ ४७ ॥

## पूरणाद्भागे तीयादन् ॥ ५ । ३ । ४८ ॥

पूरणग्रहणं शक्यमकर्त्तुम्, न ह्यपूरणस्तीयशब्दोऽस्ति यत्र दोषः स्यात् । ननु चाऽयमस्ति—मुखतीयः पार्श्वतीय इति* । 'अर्थवद्ग्रहणे नानर्थकस्ये'त्येवमस्य न भविष्यति ॥ उत्तरार्थं तर्हि पूरणग्रहणं कर्तव्यम् । 'प्रागेकादशभ्योऽच्छन्दसि' [४९] इति पूरणाद्यथा स्यात् ॥ ४८ ॥

प्र०—योगस्तत्रैकशेषेण बहुवचनम् । क्वचित्तु 'मतिद्वैधानी'ति पाठः ॥ ४५ ॥

याप्ये । याप्यशब्दोऽयमस्त्यपादानसाधनो यापिता अस्माद्गुणा इति याप्यः—कुत्सितः । अस्ति कर्मसाधनो—यापयितव्यो याप्यः, देशान्तरं प्रापयितव्य इत्यर्थः । तत्र विशेषानुपादानादतिप्रसङ्गं मत्वाह—पाशपीति । तद्गुण इति । कुत्सितत्वेन प्रतिपाद्य इत्यर्थः । एतच्चाऽन्तरङ्गत्वाल्लभ्यते । प्रवृत्तिनिमित्तस्य प्रत्यासन्नत्वात्कुत्साश्रयणस्य न्याय्यत्वात् । यत्र तु प्रवृत्तिनिमित्तस्य कुत्सा न संभवत्यश्वको देवदत्तकः संक इत्यादौ, तत्र तत्सहचरितगुणक्रियाकुत्साश्रयेण प्रत्ययो भवत्येव । एवं च देवदत्तपाश इत्याद्यपि भवति यद्यभिधानमस्ति ॥ ४७ ॥

उ०—संशये द्विप्रकाराणि ज्ञानानीत्यन्यार्थः ॥ ४५ ॥

याप्ये पाशप् । भाष्ये—तदभिधानेत्यस्य व्याख्या—तद्गुणे वक्तव्ये इति । ननु न वैयाकरणस्वरूपे गुणेऽयं प्रत्ययः, प्रकृत्यैवेतरनिरपेक्षशक्तयोक्तत्वादत आह—कुत्सितत्वेनेति । प्रत्यासन्नत्वादिति । शब्दवाच्यत्वेनेति भावः । कुत्साश्रयणस्येत्यस्य—'तत्रे'त्यादिः । यत्र त्विति । जातौ कुत्साद्यसम्भवादिति भावः । देवदत्तक इत्यादौ 'कुत्सित' इति कन् ॥ ४७ ॥

१—'शरीतः' पा० ।　२—'शोभनस्तत्रकर्तव्यं स्यात्' पा० ।　३—'कर्तव्यम्' पा० ।

* 'मुखपार्श्वतसोरीयः कुग्जनस्य परस्य च' । ४ । ३ । ६० श्लोकवा० २

## एकादाकिनिच्चाऽसहाये ॥ ५ । ३ । ५२ ॥

### एकादाकिनिचि द्विबह्वर्थे प्रत्ययविधानम् ॥ १ ॥

एकादाकिनिचि द्विबह्वर्थे प्रत्ययो विधेयः । [1]एकाकिनौ एकाकिन इति । किं पुनः कारणं न सिध्यति ? एकशब्दोऽयं सङ्ख्यापदं, सङ्ख्यायाश्च सङ्ख्येयमर्थः ।

### सिद्धं तु सङ्ख्यादेशवचनात् ॥ २ ॥

सिद्धमेतत् । कथम् ? द्विबह्वर्थायाः सङ्ख्याया एकशब्द आदेशो वक्तव्यः ।

### असहायस्य वा ॥ ३ ॥

असहायस्य वा एकशब्द आदेशो वक्तव्यः । असहायः—एकाकी । असहायौ—एकाकिनौ । असहायाः—एकाकिनः । सिध्यति सूत्रं तर्हि भिद्यते ।

यथान्यासमेवास्तु । ननु चोक्तमेकादाकिनिचि द्विबह्वर्थे प्रत्ययविधानमिति । नैष दोषः । अयमेकशब्दोऽस्त्येव सङ्ख्यापदम् । तद्यथा,—एको द्वौ बहव इति । अस्त्यन्यार्थे वर्त्तते । तद्यथा,—सधमादो द्युम्न एकास्ताः । अन्या इत्यर्थः । अस्त्य-

प्र०—एकादा । एकादाकिनिच्चीति । एकशब्दः सङ्ख्यावाच्येवेति मन्यते । असहायग्रहणं च तदर्थस्य विशेषणत्वान्नाभिधेयनिर्देशो विद्यमानतुल्यजातीयैककार्यसहायार्थवाचिनः प्रत्ययो यथा स्यादेकमाकाशमित्यादौ मा भूदिति । कथं पुनर्द्विबह्वर्थे प्रत्ययो विधीयते न ह्येकशब्दो द्विबह्वर्थे वर्त्तत इत्याह—सिद्धं त्विति । सङ्ख्यैवादेशः सङ्ख्यादेशः, स च द्विबहुशब्दयोरसहायस्य वेत्यर्थः । द्विबहुशब्दयोरप्यसहायग्रहणं विशेषणमाश्रयणीयमेव । अयमेकशब्द इति ।

उ०—एकादा । नन्वसहायार्थैकशब्दात्प्रत्ययविधानेन द्विबह्वोरपि सिध्यत्येवेत्यत आह—एकशब्द इति । प्रसिद्धतरत्वात्स एवाऽत्र, एकशब्दाऽनुवादे तस्यैव ग्रहणं न्याय्यम्, अन्यथा 'एकेऽल्पप्राणाः', 'तेनैकदि'गिति भाष्यसूत्राऽशनमपि पूर्वपक्षिणः कल्प्यं स्यात् ।

नन्वेवमसहायग्रहणं किमर्थमत आह—असहायग्रहणमिति । तदर्थस्य विशेषणत्वादिति । एकशब्दार्थविशेषणत्वादित्यर्थः । नाभिधेयनिर्देश इति । नैकशब्दार्थनिर्देश इत्यर्थः । यस्य 'मा भू'दित्यनेनाऽन्वयः । अर्थविशेषणत्वमुपपादयति—अविद्यमानेति । अविद्यमानस्तुल्यजातीय एककार्ये सहायो यस्याऽर्थस्य तादृशार्थवाचिन इत्यर्थः । एवञ्च सम्प्रयोगवद्विप्रयोगस्यापि विशेषाऽवगतिहेतुत्वादेकमाकाशमित्यादिव्यावृत्तिरिति बोध्यम् । इत्याहेति । पूर्ववार्त्तिकमसङ्गतमित्यत आहेत्यर्थः । आश्रयणीयमेवेति ।

[1]—'एकाकी एकाकिनौ एकाकिनः' पा० ।

सहायवाची । तद्यथा,—एकाग्रयः, एकहलानि, एकाकिभिः 'क्षुद्रकैर्जितमिति । तद्यो-ऽसहायवाची तस्यैष प्रयोगः ॥ ५२ ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये पञ्चमस्याध्यायस्य
तृतीये पादे प्रथममाह्निकम् ।

## अतिशायने तमबिष्ठनौ ॥ ५ । ३ । ५५ ॥

अतिशायन इत्युच्यते, किमिदमतिशायन इति ? देश्याः सूत्रनिबन्धाः क्रियन्ते ।

प्र०—उपलक्षणं चैतदर्थप्रदर्शनम् । प्राथम्येऽपि हि वर्त्तते 'एकेऽल्पप्राणाः' 'एको गोत्रे' इति । समानार्थेऽपि वर्त्तते—'तेनैकदि'गिति । साधारणेऽपि वर्त्तते—'देवदत्तयज्ञदत्तयोरेका माते'ति । एकाग्रय इति । अत्राकिनिचः कनो वा लुग्विज्ञेयः ॥ ५२ ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटविरचिते भाष्यप्रदीपे पञ्चमस्याध्यायस्य
तृतीयपादे प्रथममाह्निकम् ।

अतिशायने तमबिष्ठनौ । किमिदमिति । किमयं ण्यन्तस्य निर्देशः आहोस्विदण्यन्तस्य ? कश्चेह शेत्यर्थ इति सन्दिहानः पृच्छति । देश्या इति । देष्टव्या देश्याः, साधुत्वेन प्रतिपाद्या एते

उ०—'द्वौ कालाकाशा'वित्यादौ व्यावृत्त्यर्थमित्यर्थः । नन्वेकाग्रय इति कथं, कनाकिनिचोः प्राप्तेरत आह—अत्रेति । 'आकिनिच्चे'ति चेन 'मानपश्वङ्गयो'रित्यतो लुगप्यनुकृष्यते, स च कनाकिनिचोरेव । विधानसामर्थ्यात्पक्षे श्रवणं तच्च भाष्यप्रयोगादभिधानाच्च व्यवस्थितमित्याहुः । भाष्ये—तद्योऽसहायेति । एवञ्च 'ऽसहाय' इत्यभिधेयनिर्देश इति भावः ॥ ५२ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते पञ्चमस्याध्यायस्य
तृतीये पादे प्रथममाह्निकम् ।

अतिशायने तमबि । यद्यपि वृद्धया ण्यन्तनिर्देशनिश्चयस्तथाऽपि तत्राऽर्थाऽसङ्गतिरित्याशयेन सन्देह इत्याह—किमयमिति । ण्यन्तेऽर्थाऽसङ्गतिर्भाष्ये स्फुटीभविष्यति । अर्थाऽनुसारान्निर्णय इत्याशयेनो-

---

१—"क्षुद्रकाः—क्षत्रियविशेषाः । क्षुद्रकाश्च मालवाश्चेति क्षात्रियद्वन्द्व इति । क्षुद्रकस्यापत्यानि बहूनि । जनपदशब्दात् क्षत्रियादञ् ( ४ । १ । १६८ )………तद्राजस्येति ( २ । ४ । ६२ ) बहुषु लुक् ।" इति न्यासः ४ । २ । ४५ । 'क्षुद्रकमालवात् सेनासंज्ञाया'मिति च खण्डिकादिगणसूत्रम् । 'क्षौद्रकमालवी सेना' भारतैतिह्ये प्रसिद्धा । तत्रैकाकिभिः ( मालवरहितैः ) क्षुद्रकैरेव जितमित्यैतिह्यमनेन निर्दिश्यते ।

प्रकरणमिदं १ । १ । २४ । वा० ३ भाष्ये ( २६७ पृ० ) १ । ४ । २१ सूत्रभाष्ये चापि शक्यं द्रष्टुम् ।

यावद्ब्रूयात्प्रकर्षेऽतिशय इति तावदतिशायन इति ।

कस्य पुनः प्रकर्षे प्रत्यय उत्पद्यते ? 'ङ्याप्प्रातिपदिकात्' [ ४ । १ । १ ] इति वर्त्तते, ङ्याप्प्रातिपदिकस्य प्रकर्षे । ङ्याप्प्रातिपदिकं वै शब्दो न च शब्दस्य

प्र०—सूत्रे निबध्यन्ते प्रसङ्गेन साधुत्वप्रतिपादनार्थम् । ततो निपातनाद्दीर्घत्वमित्युक्तं भवति । यावदिति । यावत्तावच्छब्दौ परिमाणोपाधिकावपि परिच्छेदसाधर्म्यादन्यत्रापि प्रयुज्येते । प्रकर्ष इति । अनेकार्थत्वाद्धातूनां शेतिरभिभवे, अतिशब्दस्तु द्योतकस्तस्यैवाऽर्थस्य । यथा तिष्ठतिर्गतिनिवृत्तौ वर्त्तते । स एव गतावपि । प्रशब्दस्तु तद्गतस्य प्रारम्भस्य द्योतकः—प्रतिष्ठत इति ।

कस्य पुनरिति । द्रव्यवाचिनीह प्रकृतिर्न च द्रव्यस्य प्रकर्षोऽस्तीति मत्वा प्रश्नः । ङ्याप्प्रातिपदिकादिति वर्त्तत इति । ननु सुबन्तसमानाधिकरणवृत्तिभिरेतैस्तद्धितैर्भवितव्यम् । यदुक्तं—प्रियकुत्सनादिषु पुनः प्रवर्त्ततेऽसौ विभक्त्यन्त' इति, 'घकालतनेषु कालनाम्न' इत्यलुग्विधानाल्लिङ्गाच्च । नैष दोषः । प्रकृतेरिदमुपलक्षणम् । सा च प्रकृतिः सुबन्ता वा भवतु, ङ्याप्प्रातिपदिकं वेति विशेषे तात्पर्याभावः । न च शब्दस्येति । शब्दस्याभिधानत्वादभिधानस्य चाभिधेये गुणभावाद्गुणस्य च स्वोपकारं प्रत्यनपेक्षत्वादिति भावः । यदा तु तस्य गुणभावो नास्ति तदा भवत्येव प्रकर्षयोगः,—उच्चतरः शब्दो, नीचतरः शब्द इति । ननु च यथा शुक्लतरः पट इति गुणस्याऽपि प्रकर्ष आश्रीयते द्रव्यप्रकर्षहेतुत्वेन तथा शब्दस्याप्याश्रीयताम् । नैतदस्ति, शुक्लादयो द्रव्यसमवेताः स्वयं प्रकृष्टा द्रव्यप्रकर्षहेतवो भवन्तीति युक्तस्तत्र गुणप्रकर्षाश्रयः, शब्दस्तु वाचकत्वाद-

उ०—त्तरं—देश्या इति । यत्तदेतेभ्यः परिमाणे वतुपो विधानादाह—यावदिति । यावत्तावच्छब्दाविमौ निपातावखण्डावित्यन्ये । कर्त्तरि ल्युडिति भावः । अतिशये इत्यत्र कर्त्तर्यच् । ननु शेतेः कथम्प्रकर्षोऽर्थोऽत आह—अभिभवे इति । स्वाऽपेक्षयेतरस्य न्यूनीकरणरूपे इत्यर्थः । अत एव 'शुक्लमतिशेते' इति सकर्मकत्वमुपपन्नम् । तस्यैवार्थस्येति । तद्गताऽऽत्यन्तिकत्वरूपार्थस्येत्यर्थः । दृष्टान्तोपपादनबलेन तथैव लाभात् ।

ननूपस्थितत्वात्प्रकृत्यर्थप्रकर्षे प्रत्यय उत्पत्स्यत इति 'कस्य पुन'रिति प्रश्नोऽनुपपन्नोऽत आह—द्रव्यवाचिनीति । द्रव्यस्य स्वतः प्रकर्षाऽभावमग्रे स्वयमेव वदिष्यति । ननु सुबन्तेति । सुबन्तेन समानाधिकरणा वृत्तिर्येषां तैरित्यर्थः । अनेन 'अतिशायने' इत्यस्य प्रकृत्यर्थविशेषणत्वं सूचयति । एतैस्तद्धितैरित्यनेनाऽऽत्यन्तस्वार्थिकानामन्येषाञ्चोक्तानां समानाऽधिकरणवृत्तित्वाऽभावं ध्वनयति । ननु शब्दस्याऽपि तारतारतरत्वादिप्रकर्षोऽस्त्येवेत्यत आह—शब्दस्येति । अभिधानत्वादिति । अभिधायकत्वादित्यर्थः । अभिधेये गुणभावादिति । अभिधेयप्रतिपादने व्यग्रत्वात्स्वगतप्रकर्षप्रतिपादने तस्य तात्पर्याऽभावादिति भावः । उच्चतर इति । अस्य हि शब्द एव वाच्य इति न तस्य गुणत्वमिति भावः । वस्तुतस्तत्राऽपि तद्गतगुणस्योच्चत्वादेरेव प्रकर्षो न तु स्वरूपतः शब्दे इति बोध्यम् । ननु गुणभूतगुणादिप्रकर्षे यथा प्रत्ययस्तथा गुणभूतशब्दप्रकर्षेऽप्यस्त्विति शङ्कते—ननु च यथेति । शब्दस्याऽपीति । वाचकस्याऽपीत्यर्थः । शुक्लादय इति । तेषां हि द्रव्याश्रितत्वेन तत्प्रकर्षस्य द्रव्यप्रकर्षप्रयोजकतया वक्तुं शक्यत्वेऽपि शब्दगतस्य तस्य तत्प्रकर्षे प्रत्ययप्रयोजकत्वादिति भावः । गुणप्रकर्षाश्रय इति । द्रव्यप्रकर्षहेतुत्वेन तदाश्रयणं युक्तमित्यर्थः ।

**प्रकर्षाऽपकर्षौ स्तः । शब्देऽसम्भवादर्थे कार्यं विज्ञास्यते । कः पुनङ्र्याप्प्रातिपदिकार्थः ? द्रव्यम् । न वै द्रव्यस्य प्रकर्ष इष्यते । एवं तर्हि—गुणः ।**

प्र०—भिधेयासमवायात्स्वगतेन प्रकर्षेणाभिधेयं प्रकर्षयुक्तं न शक्तोऽवगमयितुमिति तत्प्रकर्षं प्रत्यनपेक्ष एव । द्रव्यमिति । यत्किञ्चिदिदं तदिति सर्वनामपरामर्शयोग्यं वस्तु तद्द्रव्यत्वेन विवक्षितम् । तेन जातिगुणक्रिया अपि गृह्यन्ते । न वै द्रव्यस्येति । यद्वस्तु स्वातन्त्र्येणाभिधीयते तस्य प्रकर्षो नास्तीत्यर्थः । तथा हि—'शुक्लतरं रूप'मित्यत्र गुणस्यापि प्राधान्येनाश्रयणाद्द्रव्यस्याश्रितादेव निमित्तान्तरात्प्रकर्षः । एवं तर्हीति । आश्रितोऽभिधेयधर्मो गुणः, स च कश्चिच्छब्दप्रवृत्तिनिमित्तं,—शुक्लतरः पट इति यथा । पटस्य स्वतो न शुक्लस्य नाऽप्यशुक्लस्य शुक्लो गुणो व्यपदेशहेतुरेवं स्वगतप्रकर्षद्वारेण द्रव्यस्य स्वतोऽप्रकृष्टस्य प्रकृष्टव्यपदेशहेतुर्भवति । तदुक्तं हरिणा—

'द्रव्यस्याऽव्यपदेश्यस्य य उपादीयते गुणः ।
भेदको व्यपदेशाय तत्प्रकर्षोऽभिधीयते ॥'

'अरूपं पररूपेण द्रव्यमाख्यायते यथा ।
अप्रकर्षं प्रकर्षेण गुणस्याऽपीष्यते तथा ॥' इति ।

यद्यपि तत्र द्रव्ये बहवो गुणाः सन्ति तथाऽप्यन्तरङ्गत्वात्प्रवृत्तिनिमित्तगुणप्रकर्षाश्रयः प्रत्ययः । क्रियाशब्देभ्यः पाचकादिभ्यः क्रियायाः प्रवृत्तिनिमित्तत्वात्तत्प्रकर्षे प्रत्ययः । जातिशब्दे-

उ०—तत्प्रकर्षम्प्रति—द्रव्यप्रकर्षं प्रति—अनपेक्ष एव—तदनुपपादक एवेत्यर्थः । यद्यपि शब्दार्थयोरपि तादात्म्याध्यासः 'तस्य भावः' इति सूत्रे कैयटेनोक्तः, पातञ्जलसूत्रतद्भाष्यादौ च स्पष्टः, शब्दालिङ्गितैव चाऽर्थप्रतीतिर्हर्यादिभिरुक्तेत्यस्त्येव तस्याऽप्यभिधेयसमवायस्तथापि स्वरूपत उच्चत्वादिरूपेण तद्गतप्रकर्षेण द्रव्यस्य प्रकर्षो न प्रतीयत इति तात्पर्यम् । न च शब्दस्य प्रकर्षाऽप्रकर्षाभ्यां तदर्थस्य प्रकर्षाऽप्रकर्षौ स्तः—प्रतीतिविषयौ भवत इति भाष्याक्षरार्थः । ननु रूपादिशब्दानां गुणोऽप्यर्थ इति 'प्रातिपदिकार्थो द्रव्य'मित्यनुपपन्नमेवेत्यत आह—यत्किञ्चिदिदमिति । विशेष्यभूतमित्यर्थः । स्वातन्त्र्येणेति । प्राधान्येन विशेष्यत्वेनेत्यर्थः । ननु 'शुक्लतरं रूप'मित्यत्र प्रधानस्य स्वतः प्रकर्षोऽस्त्येवेत्यत आह—गुणस्याऽपीति । प्राधान्येनाश्रयणात् द्रव्यरूपस्य गुणस्याऽपि आश्रिताद्रूपाश्रिताद्धर्मान्तरादेव प्रकर्षः । किम्पुनस्तान्त्रिकसम्मतद्रव्यस्येत्यर्थः । निमित्तान्तरादिति । गुणगतशुक्लत्वादिजातिसमानाधिकरणनैर्मल्यादेरित्यर्थः । न तु स्वत एवेति भावः । 'एवन्तर्हि गुण' इति भाष्यस्य—'ङ्याप्प्रातिपदिकार्थ' इति शेषः । ननु गुणप्रकर्षे आश्रीयमाणे 'पाचकतरः' इति न स्यादत आह—आश्रित इति । स्वतः—विशेष्यभूतेन स्वरूपेण । न शुक्लस्य—न शुक्लव्यवहारविषयस्य । नाप्यशुक्लस्य—नाऽपि तद्व्यवहारविषयस्य । शुक्लो गुण इति । प्रवृत्तिनिमित्तभूत इत्यर्थः । व्यपदेशहेतुः—'शुक्ल' इत्यादिव्यवहारहेतुः । स्वगतप्रकर्षद्वारेणेति । स्वाश्रिताश्रितत्वसम्बन्धेनेत्यर्थः । प्रकृष्टव्यपदेशहेतुः—प्रकृष्टव्यवहारहेतुरित्यर्थः । अव्यपदेश्यस्य—धर्मयोगमन्तरा स्वरूपेणाऽव्यवहार्यस्य । व्यपदेशाय—व्यवहाराय यो भेदको गुण उपादीयते तत्प्रकर्षस्तरबादिभिरभिधीयत इत्यर्थः । अरूपम्—स्वतस्तद्रूपाऽभाववत् स्फटिकादि, जपादिरूपेण रक्तत्वादिगुणमाख्यायत इत्यर्थः । यद्वाऽद्वैतिमते

एवमपि गुणग्रहणं कर्त्तव्यम् । द्रव्यमपि ङ्याप्प्रातिपदिकार्थो गुणोऽपि, तत्र कुत एतत्—'गुणस्य प्रकर्षे भविष्यति न पुनर्द्रव्यस्य प्रकर्ष' इति ॥ क्रियमाणे चाऽपि गुणग्रहणे समानगुणग्रहणं कर्त्तव्यं, 'शुक्लात्कृष्णे मा भू'दिति । न तर्हीदानीमिदं भवति,—'अध्वर्युर्वै श्रेयान्' 'पापीयान्प्रतिप्रस्थाता' 'अन्धानां काणतम'इति ? समानगुण एषा स्पर्द्धा भवति,—'अध्वर्युर्वै श्रेयानन्येभ्यः प्रशस्येभ्यः' । 'पापीया-

प्र०—न्यस्तु जातेः प्रकर्षाभावात्तत्सहचरितप्रसिद्धवाहदोहादिप्रकर्षे प्रत्ययः । उपाधिसंसर्गेण तु विना द्रव्यस्य न प्रकर्षो नाऽपि शब्दवाच्यत्वमस्ति । तदुक्तम्—

सर्वस्यैव प्रधानस्य न विना भेदहेतुना ।
प्रकर्षो विद्यते नापि शब्दस्योपैति वाच्यताम् ॥ इति ।

तत्र वास्तवः प्रकर्षो द्रव्ये भवतु मा वा, आश्रितधर्मद्वारकस्तु तत्प्रकर्षः शब्देनाभिधीयते, न तु तन्निरपेक्षः स्वगतः । अद्रव्यप्रकर्ष इति निषेध उपचरितगुणक्रियागतप्रकर्षद्रव्यविषयो द्रष्टव्यः ।

एवमपीति । यथा गुणस्य नित्यस्य नित्यद्रव्यसमवेतस्य कस्यचिन्महत्त्वादेः स्वतः प्रकर्षोऽनित्यस्य तु कारणकृतस्तथा द्रव्यस्यापीति मन्यते । समानगुणग्रहणमिति । द्वयोः परिपूर्णयोर्भिन्नजातीययोरेकस्य परिपूर्णतरत्वे सति प्रकर्षसद्भावात् 'कृष्णाच्छुक्लतर' इति मा भूदित्येवमर्थमित्यर्थः । अध्वर्युर्वै श्रेयानिति । अध्वर्योः परिपूर्णं प्रशस्यत्वं प्रतिप्रस्थातुरपि पापत्वं, तयोः परस्परापेक्षः प्रकर्ष इति मन्यते । अन्धानां काणतम इति । अन्धा नेत्रद्वयेन न पश्यन्ति, काणस्त्वेकेनेति तदपेक्षं काणस्य प्रकर्षं मन्यते । समानगुण इति । समाने गुणे भिन्नाश्रयवर्त्तिनि विवक्षिते तदाश्रया स्पर्द्धेत्यर्थः । काणिरयमिति । ततश्चाऽन्धानामपि वास्तवं विद्यते न तु

उ०—ब्रह्मैव द्रव्यं पररूपेण मायाकार्यरूपादिसम्बन्धेन तत्तद्रूपादिमत्त्वेन व्यवह्रियत इत्यर्थः । क्रियायाः प्रवृत्तिनिमित्तत्वादिति । प्रवृत्तिनिमित्तसम्बन्धप्रतियोगित्वादित्यर्थः । सम्बन्धेऽपि स्वतः प्रकर्षोऽसम्भवात्तत्प्रतियोगिगतप्रकर्षाश्रयणमिति तात्पर्यम् । वाहदोहादीति । यथा गोतर इत्यादौ ।

ननु द्रव्यस्य स्वत एव प्रकर्षः किं नाऽङ्गीक्रियतेऽत आह—उपाधीति । स्वभावादिति भावः । शब्देनेति । तरबादिनेत्यर्थः । शब्दशक्तिस्वभावादिति भावः । नन्वेवमद्रव्य प्रकर्षे इत्यसङ्गतं स्यादत आह—अद्रव्यप्रकर्ष इति । उपचरितो गुणक्रियागतप्रकर्षेण प्रकर्षो यत्र तादृशद्रव्येत्यर्थः । 'उच्चैस्तरस्तरु'रित्युदाहरणम् । अत्र उच्चैः शब्द उच्चत्वादिविशिष्टद्रव्यपरः, उच्चैस्तमामित्यत्र त्वधिकरणशक्तिपर इति । अत्र उच्चत्वप्रकर्षेण तदाश्रयस्य प्रकर्षेऽपि तस्य न द्रव्यत्वम्, अधिकरणशक्तिप्रधानतया शक्तिविशेषणत्वेनैव तस्य भानेनाऽप्रधानतया सर्वनामपरामर्शाऽयोग्यत्वात् । एवञ्च 'पूर्वाह्णेतमा'मित्यादावपीति बोध्यम् । अत्राऽपि विभक्त्यर्थसम्बन्धनिरूपिता विशेषणतैव तत्प्रकृत्यर्थस्येति वदन्ति ।

महत्त्वादेरिति । 'आकाशं परममहत्' 'परमाणु'रित्यादिप्रयोगादिति भावः । कारणकृत इति । रञ्जनद्रव्यप्रकर्षकृत इत्यर्थः । ननु भिन्नजातीययोः कथं स्पर्द्धेत्यत आह—द्वयोरिति । भाष्ये—शुक्लात्कृष्णे इति । कृष्णाऽवधिकप्रकर्षे शुक्लशब्दान्मा भूदित्यर्थः । नन्वध्वर्योरन्येभ्यः प्रशस्येभ्यः प्रशस्यतरत्वमस्त्येवेत्यत आह—अध्वर्योरिति । तदपेक्षमिति । वैजात्येऽपि प्रकर्षं मन्यत इति भावः । वास्तवं काणत्वमिति ।

न्प्रतिप्रस्थाताऽन्येभ्यः पापेभ्यः' । 'अन्धानां काणतम' इति, काणिरयं सौक्ष्म्ये वर्तते—सर्वे इमे किंचित्पश्यन्त्ययमेषां काणतम इति ।

अदूरविप्रकर्ष इति वक्तव्यम् । इह मा भूत्—महान्सर्षपः महान्हिमवानिति ।

जातेर्नेति वक्तव्यम् । इह मा भूत्–वृक्षोऽयम् प्लक्षोऽयमिति । न तर्हीदानीमिदं भवति—गोतरः गोतरा, अश्वतरः अश्वतरेति ? नैष जातेः प्रकर्षः । कस्य तर्हि ? गुणस्य । गौरयं यः शकटं वहति, गोतरोऽयं यः शकटं वहति सीरं च । गौरियं या समांसमां विजायते, गोतरेयं या समांसमां विजायते स्त्रीवत्सा च । अश्वोऽयं यश्चत्वारि योजनानि गच्छति, अश्वतरोऽयं योऽष्टौ योजनानि गच्छति । तथा–'तिङश्च' [ ५ । ३ । ५६ ] इत्यत्र क्रियाग्रहणं कर्त्तव्यम् । साधनप्रकर्षे मा भूत् ।

नैष दोषः । यत्तावदुच्यते—गुणग्रहणं कर्त्तव्यमिति, न कर्त्तव्यम् । यस्य प्रकर्षोऽस्ति तस्य प्रकर्षे भविष्यति, गुणस्य चैव प्रकर्षो न द्रव्यस्य । कथं ज्ञायते ?

प्र०—लोकप्रसिद्धम् । तत्र दर्शनप्रकर्षाश्रयः प्रत्ययस्तथा च लोके प्रसिद्धिः–'अन्धानां काणो राजे'ति । महान्हिमवानिति । सर्षपान्महीयान् हिमवानिति मा भूदित्यर्थः । जातेरिति । आश्रयप्रकर्षाज्जातेः प्रकर्षं मन्यते । कस्य तर्हीति—प्रश्नः । गुणस्येति—परिहारः । अभिधेयसहचरितलोकप्रसिद्धगुणप्रकर्षाश्रयो द्रव्यस्य प्रकर्ष इत्यर्थः । केचित्तु गुणसमुदाये शब्दप्रवृत्तिं मन्यमानाः शब्दार्थान्तभूतस्यैवायं गुणस्य प्रकर्ष इत्याहुः । साधनप्रकर्षे मा भूदिति । ननु च साधनस्य गुणभावात् प्रधानस्य च क्रियायाः प्रकर्षसंभवात्तत्प्रकर्षे एव प्रत्ययो भविष्यति । एवं मन्यते,—प्रधानानि स्वगतेनापि धर्मेण तद्वत्त्वेन व्यपदिश्यन्ते, गुणगतेनापि । तत्र साधनप्रकर्षाश्रये क्रियाप्रकर्षे प्रत्ययो

उ०—दृष्टिसौक्ष्म्यमित्यर्थः । 'अन्ध दृष्ट्युपघाते' 'कण निमीलने' इति धात्वनुसारादिति भावः । न तु लोकेति । तर्हि एकचक्षुर्नाशवानेव काणत्वेन व्यवह्रियते । तत्र अन्धा अल्पद्रष्टारः, काणोऽपि अल्पद्रष्टा, तत्राऽयं किञ्चिदधिकमल्पद्रष्टेति काणतम उच्यत इति भावः । अन्धकाणशब्दौ पर्यायाविशेषाऽपि समानगुण एव स्पर्द्धेति तात्पर्यम् । दर्शनप्रकर्षेति । अल्पदर्शनप्रकर्षेत्यर्थः । 'अदर्शनप्रकर्षे'तिपाठेऽपि—अदर्शनशब्देनाऽप्यल्पदर्शनमेव । भाष्ये—जातेर्नेति । जातेः प्रकर्षे प्रत्ययो नेत्यर्थः । ननु जातौ कथं प्रकर्षोऽत आह—आश्रयेति । यथा आश्रितगुणप्रकर्षाद्द्रव्यप्रकर्षः, तथा लब्धप्रकर्षद्रव्यगतत्वेन जातेः प्रकर्ष मन्यत इति भावः । अभिधेयसहचरितेति । प्रवृत्तिनिमित्तजातिसहचरितेत्यर्थः । केचित्त्विति । पातञ्जला इत्यर्थः । 'क्रिया'मिति सूत्रे भाष्येऽपि स्पष्टमेतत् । गुणसमुदाये इति । वाहदोहादिगुणसमुदाये इत्यर्थः । एवं मन्यत इति । स्वगतप्रकर्षसम्भवे गुणप्रकर्षेण तद्वत्त्वव्यवहारे न मानमित्यत एवमुक्तिः । स्वगते इति । स्वगत एव स्यादित्यर्थः । ननु द्रव्यस्य स्वतः प्रकर्षोऽस्त्वत आह—सम्भवेति । यदि तस्य स्वतः प्रकर्षस्तर्हि

२६

एवं हि दृश्यते लोके,—इह समान आयामे विस्तारे पटस्याऽन्योऽर्घो भवति काशिकस्य, अन्यो माथुरस्य । गुणान्तरं च खल्वपि शिल्पिन उत्पादयमाना द्रव्यान्तरेण प्रक्षालयन्ति, अन्येन शुद्धं धौतकं[1] कुर्वन्ति, अन्येन शैफालिकमन्येन माध्यमिकम् ।

यदप्युच्यते—'क्रियमाणे चाऽपि गुणग्रहणे समानगुणग्रहणं कर्त्तव्यं शुक्लात्कृष्णे मा भू'दिति, न कर्त्तव्यम् । समानगुण एव स्पर्धा भवति—न ह्याढ्याभिरूपौ स्पर्धेते । वाचकेन खल्वप्युत्पत्तव्यं, न च शुक्लात्कृष्णे प्रत्यय उत्पद्यमानो वाचकः स्यात् ।

प्र०—मा भूत्स्वगते यथा स्यादित्येवमर्थं क्रियाग्रहणं कर्तव्यम् । नैष दोष इति । बहूनामपि दोषाणां प्रक्रमे सामान्यस्य विवक्षितत्वादेकवचननिर्देशः । यस्य प्रकर्षोऽस्तीति । संभवव्यभिचारापेक्षत्वादुपाधिनिर्देशस्येति भावः । काशिकस्येति । काशिषु भव इति ठञ्ञठयोरेकतरः प्रत्ययः । गुणान्तरमिति । पूर्वं मूल्यान्तरदर्शनाद्गुणप्रकर्षः प्रतिपादितोऽत्र तु प्रयत्नभेददर्शनादिति विशेषः ।

शुक्लादिति । कृष्णे प्रतियोगिनि विवक्षिते शुक्लशब्दात्प्रत्ययो मा भूदित्यर्थः । नह्याढ्याभिरूपाविति । स्पर्द्धाहेतोर्गुणस्य शब्देनाऽनाश्रयणात्, शब्दाश्रितस्पर्द्धाहेतुप्रकर्षे तु भवत्येव प्रत्ययः—'आढ्याभिरूपयोराढ्यः श्रेया'निति । शुक्लकृष्णयोरपि तदा भवति प्रत्ययः—'उज्ज्वलतरोऽयं कृष्णा'च्छुक्ल इति । न च शुक्लादिति । शुक्लतर इत्युक्ते शब्दप्रवृत्तिनिमित्तप्रत्यासन्नशुक्लगुणान्तरापेक्षः प्रकर्षः, शुक्लगुणनिमित्तद्रव्यप्रकर्षावगमादिति भावः । नहि निष्कधन इति ।

उ०—सर्वस्याऽपीति व्यभिचाराऽभावः, अन्यथाऽसम्भव इति भावः । पूर्वं मूल्यान्तरेति । यदि स्वत एव द्रव्ये प्रकर्षः स्यात्तदा देशभेदमात्रेण मूल्यान्तरं न स्यात्तदर्थो यत्नभेदश्च न स्यादिति भावः । तस्माद्देशभेदकृतगुणप्रकर्षकृतमेव मूल्यान्तरं, गुणप्रकर्षाय च यत्नभेद इति तस्यैव प्रकर्ष इति तात्पर्यम् ।

गुणप्रकर्ष इति । देशभेदकृतगुणप्रकर्ष इत्यर्थः । धौतकशैफालिकादयः प्रक्षालनवैजात्यकृता वस्त्रस्य गुणविशेषाः । नन्वाढ्याऽभिरूपयोरपि प्रशस्यत्वे स्पर्द्धा भवत्येवेत्यत आह—स्पर्द्धाहेतोरिति । तत्प्रशस्यत्वस्य प्रकर्षे हि तदा प्रत्ययः । न च तदुपात्तमस्ति । आढ्यादभिरूपतर इति तु न भवत्येवेत्यर्थः । शब्दप्रवृत्तिनिमित्तेति । न तु कृष्णाऽवधिकप्रकर्षेण द्रव्यप्रकर्षोऽवगम इत्यर्थः । शब्दप्रवृत्तिनिमित्तभूतमत एव प्रत्यासन्नं यच्छुक्लगुणान्तरं द्रव्यान्तरीयशुक्लगुणस्तदपेक्षः प्रकर्षो यस्य तादृशो यः शुक्लगुणस्तन्निमित्तेत्यर्थः-

[1] १—धौतक=धोया हुआ । शैफालिक=पालिस किया । माध्यमिक=मांडी लगा । यद्वा, धौतक—धोती । शैफालिक साड़ी । माध्यमिक-मऊ का गाढा-खादी । इति गुरुप्रसाद—शास्त्री । "धौतकशैफालिकादयः प्रक्षालनवैजात्यकृता वस्त्रस्य गुणविशेषाः" इत्युद्द्योते नागेशः ।

यदप्युच्यते--'अदूरविप्रकर्ष इति वक्तव्य'मिति, न वक्तव्यम् । अदूरविप्रकर्ष एव स्पर्धा भवति,--नहि निष्कधनो शतनिष्कधनेन स्पर्धते ।

यदप्युच्यते--'जातेर्नेति वक्तव्य'मिति, न वक्तव्यम् । जननेन या प्राप्यते सा जातिः, न चैतस्याऽर्थस्य प्रकर्षाऽपकर्षौ स्तः । यदप्युच्यते--तिङश्चे'त्यत्र क्रियाग्रहणं कर्त्तव्यं साधनप्रकर्षे मा भू'दिति, न कर्त्तव्यम् । साधनं वै द्रव्यं, न च द्रव्यस्य प्रकर्षाऽपकर्षौ स्तः ।

प्र०—अदूरान्तरयोरेव संप्रधारणविषयत्वादिति भावः । जननेनेति । अयत्नलभ्यत्वप्रतिपादनपरमेतत् । नित्यानां परमाण्वादीनां जननाभावात्तद्गताया जातेर्जननेनाऽप्राप्यत्वात् । अयत्नलभ्यश्चायमर्थः,-सत्तादिर्न प्रकर्षापकर्षभाक् । घटादिके च द्रव्ये यत्नेनोत्पाद्यमाने पुरुषप्रयत्नेन विना नित्या जातयो व्यक्तिमायान्ति । यद्यपि बलाकादिगतस्य शौक्ल्यादेरयत्नलभ्यत्वं तथाप्याश्रयभेदाद्गुणस्य भेदावगमादस्ति प्रकर्षापकर्षयोगो, जातेस्त्वाश्रयभेदेऽपि भेदाभावात्प्रकर्षापकर्षाऽयोगः । साधनं वै द्रव्यमिति । ननु च शक्तिः साधनमस्ति च तत्प्रकर्षो यदाह'साधकतमं करण'मिति । नैष दोषः । पचति देवदत्त इति सामानाधिकरण्यदर्शनाच्छक्तिद्रव्ययोस्तिङन्तेन भेदस्यानवगमादभेदमाश्रित्य निर्देशः । न च प्रधानस्य क्रियायाः स्वतः प्रकर्षसंभवे गुणभूतसाधनप्रकर्षापेक्षाऽस्ति । 'पचतितरा'मिति चोक्ते क्रियाप्रकर्षो गम्यते न तु साधनप्रकर्षः । प्रकर्षयुक्तेऽपि साधने कदाचित् क्रियाप्रकर्षाभावात्क्रियाप्रकर्षे तु कार्यस्य कारणाव्यभिचारान्नियमेन साधनप्रकर्षानुमानात् क्रियाप्रकर्ष एव प्रत्ययः । एको द्वौ त्रय इत्यादिकायाः सङ्ख्यायाः सर्वत्र परिच्छेदकत्वाऽविशेषा-

उ०—रार्थः । अदूरान्तरयोरिति । अल्पविशेषयोरित्यर्थः । नित्यगतजातेर्जननेनाऽप्राप्यत्वादाह-अयत्नेति । परमाण्वादीनामिति । साङ्ख्यादिमते प्रधानाऽवयवसत्त्वादिपरमाणवो बोध्याः । 'प्रकर्षाऽपकर्षभा'गिति पाठः । व्यक्तिमायान्तीति । तत्राऽभिव्यक्ता भवन्तीत्यर्थः । अयत्नलभ्यत्वमिति । तथा च तद्वाचकादिष्टस्तरब्न स्यादिति भावः । ईश्वरयत्नस्तु सर्वत्राऽव्यावर्त्तक इति भावः । तथापीति । जननेन प्राप्यत्वोक्त्या एकत्वं नित्यत्वमनेकवृत्तित्वञ्च सूचितमिति भावः । आश्रयभेदादिति । एवञ्च शुक्लगुणत्वाऽवच्छिन्नस्याऽयत्नलभ्यत्वाभावेन क्वचिद्यत्नेनाऽपकर्षे जाते तदपेक्षः प्रकर्षो बलाकाशौक्ल्ये इति तात्पर्यम् । भेदाऽभावादिति । आश्रयभेदकृतारोपविषयभेदस्याऽप्यभावादित्यर्थः । केचित्तु—'जननेन प्राप्यत' इति लक्षणमद्वैतिमते, तेषां ब्रह्माऽतिरिक्तं सर्वं जन्यमेव । ब्रह्मणस्तु निर्धर्मकत्वात्तत्र जातिरेव नास्ति । जीवानामप्युपाधिजन्यत्वेन विशिष्टानां जन्यत्वमेवेत्याहुः । भेदस्याऽनवगमादिति । द्रव्येणाऽभेदमापन्नैव शक्तिस्तिङाऽभिधीयत इति भावः । नन्वभेदेऽपि द्रव्याभेदाच्छक्तौ प्रकर्षोऽभावो वा कल्प्यः, शक्त्यभेदाद् द्रव्ये प्रकर्षो वा कल्प्य इत्यत्र विनिगमकाऽभाव इति चेन्न: शक्तिप्रकर्षेण द्रव्यप्रकर्षे 'परशुतरेणे'त्यापत्तिः, करणे सर्वकारकेभ्यः प्रकर्षसत्त्वात् । तस्माच्छक्तिप्रकर्षो न द्रव्यप्रकर्षकः, सुतरां तद्द्वारा न क्रियाप्रकर्षक इत्याशयात् । स्वयं युक्त्यन्तरमाह—न च प्रधानस्येति । प्रकर्षयुक्तेऽपीति । साधनप्रकर्षेण क्रियाप्रकर्षो न नियत इति न तत्प्रकर्षव्यवहारेण क्रियाप्रकर्षव्यवहार इति भावः । उक्तन्यायेति । एकत्वरूपेत्यर्थः । 'वाचकेन खल्वप्युत्पत्तव्यमिति

किं पुनरेकं शौक्ल्यमाहोस्विन्नाना ? किं चाऽऽतः ? यद्येकं प्रकर्षो नोपपद्यते, न हि तेनैव तस्य प्रकर्षो भवति । अथ नाना, समानगुणग्रहणं कर्त्तव्यं—शुक्लात्कृष्णो मा भूदिति ॥ अस्त्वेकं शौक्ल्यं तत्तु विशेषवत् । किंकृतो विशेषः ? अल्पत्वमहत्त्व-कृतः ॥ अथवा पुनरस्त्वेकं निर्विशेषं च । ननु चोक्तं—'प्रकर्षो नोपपद्यते, न हि तेनैव तस्य प्रकर्षो भवती'ति । गुणान्तरेण प्रच्छादनात्प्रकर्षो भविष्यति ।

प्र०—त्प्रकर्षाऽभावः । बहुत्वसङ्ख्यायास्त्वनियतसङ्ख्येयत्वाद्भवति प्रकर्षः—बहुतरा इति । एवमुन्मानप्रमाणपरिमाणानामपि प्रकर्षाऽभावोऽपि विज्ञेयः । भाष्यकारेण तु जातिप्रकर्षाभावोक्त-न्यायानुसारेण गम्यमानत्वान्नोक्तः । किं पुनरेकमिति । ननु समानधर्मोपलम्भाद्विशेषाऽग्रहणाच्च संशयो, न चैकानेकयोर्विशेषाऽग्रहणम् । नैष दोषः । एकस्यापि भेदव्यवहारो दृश्यते । यथा परुद्भवान्पटुरासीत्पटुतरश्चैषमः, अन्य एवाऽयं संवृत्त इति । तथाऽनेकस्मिन्नप्येकव्यवहारो दृश्यते, यथा भिन्नापि क्रिया निवृत्तभेदा आख्यातेनाभिधीयते इत्येकोच्यते । तत्त्वतो हि 'भवद्भिरास्यते' 'भवन्त आसते' इत्यादौ भिन्नैः कर्तृभिः साध्यानि स्वसमवेतानि । भिन्नान्येवासनानि एकत्वं चाश्रि-त्योक्तं—'न तिङन्तान्येकशेषारम्भं प्रयोजयन्ति क्रियाया एकत्वा' दिति । एवं च किमेकं शौक्ल्यमा-श्रयभेदात्तूपचरितभेदम्, उतानेकमेवेति संशयात्प्रश्न उपपन्नः । यद्येकमिति । एकत्वे जातिवद्गुणस्य प्रकर्षानुपपत्तिः । समानगुणग्रहणमिति । तेन तुल्ये भेदे यथा शौक्ल्यस्य शौक्ल्यान्तरापेक्षः प्रकर्ष एवं कृष्णापेक्षोऽपीति तदपेक्षे प्रकर्षे प्रत्ययनिवृत्त्यर्थं समानगुणग्रहणं कर्त्तव्यमित्यर्थः ।

ननु यस्याऽप्येकं शौक्ल्यं तेनापि भिन्नगुणापेक्षे प्रकर्षे प्रत्ययस्य निवृत्तिर्विधेया । नैष दोषः । एकत्ववादिनो यथा शौक्ल्यस्यात्मापेक्षप्रकर्षानुपपत्तिरेवं गुणान्तरापेक्षोऽपि प्रकर्षो नोपपद्यते, यथा गोत्वं नात्मापेक्षया नापि जात्यन्तरापेक्षया प्रकृष्यते । गुणभेदवादी तु भेदनिबन्धनं प्रकर्षं सर्वत्रेच्छतीति तेनैव समानगुणग्रहणं कर्त्तव्यम् । विशेषवदिति । ततो विशेषाश्रयत्वादन्यत्वा-दुपपन्नः प्रकर्षः । अल्पत्वमहत्वकृत इति । क्वचिदाश्रयेऽल्पं शौक्ल्यं क्वचित्तु महदित्यर्थः ।

उ०—न्याय' इति वक्तुं युक्तम् । तत्तत्समूहरूपद्वित्वस्य भेदो नाऽस्तीति न वक्तुं शक्यमित्यन्ये । समानधर्मः—साधारणधर्मः । विशेषो—वैधर्म्यम्' । उक्तसंशयबीजञ्चाऽत्र नाऽस्तीत्याह—न चैकाऽनेकयोरिति । एकत्वा-ऽनेकत्वरूपवैधर्म्यस्य स्पष्टत्वादिति भावः । एकत्वाऽनेकत्वयोर्वैधर्म्यत्वस्यैवाऽभाव इत्युत्तरयति—एकस्याऽ-पीति । एकत्वे इति । आश्रयभेदसत्वेऽपि न स प्रकर्षप्रयोजक इत्यभिमानः । भाष्ये—न हि तेनैवेति । तत्प्रतियोगिक एवेत्यर्थः । 'अस्मादयं शुक्लतर' इत्यस्यैतद्वृत्तिशुक्लगुणप्रतियोगिकाऽतिशयवच्छुक्लगुणवान-यमिति बोध इति भावः । ननु भिन्नयोः कथं प्रकर्षः, अन्यथा आढ्याऽभिरूपयोरपि स स्यादत आह—तुल्ये भेदे इति । प्रकर्षो नोपपद्यत इति । एकत्वं स्ववाचकात्तरबुत्पत्तिनियामकप्रकर्षविरोधीति भावः । तदेव दृष्टान्तेनोपपादयति—यथेति । जात्यन्तराऽपेक्षयेति । जातिवाचकात्तरबुत्पत्तिनियामकस्तदर्थंगतः प्रकर्षो नास्तीत्यर्थः । एतेन 'ब्राह्मणत्वाच्छूद्रत्वं प्रशस्ततरमिति प्रकर्षोऽस्त्येवे'त्यपास्तम् । सर्वत्रेति । सजातीये विजातीये चेत्यर्थः । विशेषाश्रयत्वादिति । स च प्रकर्षः सजातीयाऽपेक्ष एव, न तु विजातीयकृष्णाद्यपेक्ष

अथवा पुनरस्तु नाना । ननु चोक्तं—'समानगुणग्रहणं कर्त्तव्यं शुक्लात्कृष्णे मा भू'दिति । न कर्त्तव्यम् । समानगुण एव स्पर्धा भवति, न ह्याढ्याभिरूपौ स्पर्धेते । वाचकेन खल्वप्युत्पत्तव्यं, न च शुक्लात्कृष्णे उत्पद्यमानो वाचकः स्यात् ।

किमन्तात्पुनरुत्पत्त्या भवितव्यम् ? द्वितीयान्तादतिशय्यमानात् । शुक्लमतिशेते शुक्लतरः । कृष्णमतिशेते कृष्णतरः । यदि द्वितीयान्तादतिशय्यमानात्, कालोऽतिशेते कालीं 'कालितर' इति† प्राप्नोति, 'कालतर' इति चेष्यते । तथा काल्यतिशेते कालं 'कालतरे'ति प्राप्नोति, 'कालितरे'ति चेष्यते । तथा गार्ग्योऽतिशेते गर्गान् 'गर्गतर' इति

प्र०—गुणान्तरेण प्रच्छादनादिति । संभेदात्, मिश्रीकरणादित्यर्थः । यथा जात्युत्पलादिवासिताया मल्लिकायाः ।

किमन्तादिति । अतिशायन इति किं प्रत्ययार्थनिर्देश आहोस्वित्प्रकृत्यर्थस्य विशेषणमिति समर्थविभक्तिप्रश्नद्वारेण विचारः । द्वितीयान्तादिति । यदा तिङन्तेन विस्पष्टार्थं विग्रहवाक्यं प्रदर्श्यते तदा द्वितीयान्तादुत्पत्तिः । कृदन्तेन तु वाक्यप्रदर्शने षष्ठ्या भाव्यं—'शुक्लस्यातिशायन' इति । तदा षष्ठ्यादौ सन्देहो भवति,—कर्त्तरि षष्ठी वा स्यात्, कर्मणि वा, करणे ल्युट् स्यात् कर्त्तरि वेति ? अथवा द्वितीयाग्रहणमुपलक्षणार्थमिति षष्ठ्यपि गृह्यते । प्रत्ययार्थसामर्थ्यलभ्या च समर्थविभक्तिः । कालितर इति । 'घरूपकल्पे'ति ह्रस्वः । गर्गतर इति प्राप्नोतीति । वृत्तावपि लुग्विधानात्सङ्ख्याविशेषसं प्रत्ययाद्बहुवचनान्तात्प्रत्ययोत्पत्तिरविरुद्धा । अव्यतिरिक्तं वय इति ।

उ०—इति भावः । 'रूपादि साऽवयव'मिति साङ्ख्याऽनुसारेणेदम् । अत एवाऽल्पत्वमहत्त्वकृत इत्युक्तिः सङ्गच्छते । अग्रे-निर्विशेषमित्यस्य-निरवयवमित्यर्थः । सम्भेदादिति । गुणान्तरेण कृष्णादिना प्रच्छादितत्वादपकर्षः । औज्ज्वल्यादिगुणान्तराच्छादितस्य च प्रकर्ष इति भावः । 'न हि आढ्याऽभिरूपौ' इति भाष्यं स्वभावमूलकतया प्राग्व्याख्यातम् । एवञ्च भेदेऽपि स्वभावादेव सजातीयभिन्नाऽपेक्षयैव प्रकर्षो न तु भिन्नजातीयाऽपेक्षः प्रकर्षः—शुक्लादिभ्यस्तरबुत्पत्तिनिमित्तमिति भावः । अत्र भगवता शुक्लादिगुणेष्वनेकपक्षकथनेन व्यवहारोपपादकपदार्थानामवास्तवत्वं सूचितम् । किम्प्रत्ययार्थेति । आद्ये द्वितीयान्तात्, अन्त्ये प्रथमान्तादिति बोध्यम् । नन्वतिशायनशब्दस्य कृदन्तत्वात्तद्योगे षष्ठ्या भाव्यमिति 'द्वितीयान्ता'दित्यसङ्गतमत आह—यदा तिङन्तेनेति । कृदन्तेन विग्रहे यथाऽस्पष्टार्थत्वं तथा दर्शयति—तदा षष्ठ्यादाविति । आदिना ल्युट् । षष्ठ्यादिविषये इत्यर्थः । तत्र यद्यपि कर्त्तरि षष्ठी, करणे ल्युडिति पक्षे शुक्लकर्तृकाऽभिभवकरणमित्यर्थः स्यात्, स च शुक्लतरशब्दान्नाऽवगम्यते, तथापि लक्षणशरणस्य सन्देहः स्यादेवेति भावः । कर्त्तरि वेति । कर्त्तरि ल्युट्, कर्मणि षष्ठीत्यर्थः । अत एव 'आढ्यतमो देवदत्त' इति सामानाधिकरण्योपपत्तिः । अथवेति । अत्र पक्षे कर्मणि षष्ठी कर्त्तरि ल्युडिति निर्णयो व्याख्यानादिति भावः । तदाह—प्रत्ययार्थेति । ननु वृत्तावभेदैकत्वसङ्ख्याऽवगमात्कथं बहुवचनान्तात्प्रत्ययोऽत आह—वृत्तावपीति । लुग्विधानादिति । यञो

† घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः ६ । ३ । ४३

१—क्वचिन्न ।

प्राप्नोति, 'गार्ग्यतर' इति चेष्यते। तथा गर्गा अतिशेरते गार्ग्यं 'गार्ग्यतरा' इति प्राप्नोति, 'गर्गतरा' इति चेष्यते।

एवं तर्हि प्रथमान्तात्स्वार्थिको भविष्यति—कालोऽतिशेते कालतरः। काल्यतिशेते—कालितरा। गार्ग्योऽतिशेते गार्ग्यतरः। गर्गा अतिशेरते गर्गतराः। यदि प्रथमान्तात्स्वार्थिकः—कुमारितरा किशोरितरा, अव्यतिरिक्तं वय इति कृत्वा 'वयसि प्रथमे' [ ४ । १ । २० ] इति ङीप्प्राप्नोति। तरपोक्तत्वात् 'स्त्रीप्रत्ययो न भविष्यति। टाबपि तर्हि न प्राप्नोति। उक्तेऽपि हि भवन्त्येते टाबादयः। उक्तमेतत्—'स्वार्थिकाष्टाबादय' इति‡। ङीबपि तर्हि प्राप्नोति।

एवं तर्हि गुणोऽभिधीयते। एवमपि लिङ्गवचनानि न सिध्यन्ति—शुक्लतरम् शुक्लतरा शुक्लतरः शुक्लतरौ शुक्लतरा इति। आश्रयतो लिङ्गवचनानि भविष्यन्ति।

प्र०—प्रत्ययार्थपक्षे त्वार्थ्यवयवप्रतिपत्तिः। वयःप्रकर्षेणैवासौ कुमारीमतिशेते न तु गुणान्तरेण, तस्य विप्रकर्षात्। शाब्दी तु वयःप्रतिपत्तिर्नास्तीति ङीपोऽप्रसङ्गः। स्वार्थिकतन्त्रे तु शाब्द्येत्र वयःप्रतिपत्तिरिति ङीप्प्राप्तिः। तरपोक्तत्वादिति। तरपः स्वार्थिकत्वात्सर्वः प्रकृत्यर्थस्तेन द्योत्य इति भावः। ङीबपीति। टाबपवादत्वान्ङीप इति भावः। अन्ये त्वाहुः—कुमारशब्दादुत्पन्नेन ङीपा प्रथमवयोविशिष्टार्थगतस्य स्त्रीत्वस्याभिव्यक्तत्वात्तरबन्तात्स्त्रीत्वमात्रमभिव्यक्तव्यमिति टाबेव भविष्यति। यथा यत्र तत्रेत्यादौ त्रलाऽधिकरणस्याभिव्यक्तत्वात्तद्धितान्तात्सामयिकी प्रथमैवोत्पद्यते न सप्तमी। भाष्यकारस्तु—निमित्तस्य संनिधानादपवादेनैवात्र ङीपा भाव्यं न तु टापेति पक्षान्तरमाश्रयति—एवं तर्हि गुण इति। अतिशेतेऽनेनेति अतिशायनो गुणोऽभिधीयते। करणे ल्युट्।

उ०—लुग्दर्शनादित्यर्थः। वस्तुतः सङ्ख्याविशेषाऽनवगमेऽपि गर्गाऽपत्यत्वेन बहुत्वप्रतीतिरिति बोध्यम्। भाष्ये—प्रथमान्तादिति। 'अतिशायने' इति कर्तृल्युडन्तम्प्रकृत्यर्थविशेषणमिति भावः। 'काल्यतिशेते' इत्यादेर्दीर्घत्वादिवद्विशेष्यविशेषणभावव्यत्यासादतिशयकर्त्री कालीत्यादिक्रमेणाऽर्थः। ननु प्रत्ययार्थपक्षेऽपि प्रवृत्तिनिमित्तगुणप्रकर्ष एव प्रत्ययोत्पत्तेस्तत्राऽपि वयोवाचकत्वं दुर्वारमत आह—प्रत्ययार्थेति। तत्र अतिशयितुर्विशेष्यत्वेन वयसस्तद्विशेषणत्वाऽभावान्न प्रवृत्तिनिमित्तत्वमिति भावः। विप्रकर्षादिति। गुणान्तरस्य शब्दतोऽनुपस्थित्या विप्रकर्ष इति भावः। भाष्ये—अव्यतिरिक्तं वय इति। वयः—प्रकृष्टं वयः केवलवयसोऽव्यतिरिक्तम्—अनतिरिक्तमित्यर्थः। तरप इति। वस्तुतस्तरपा—तत्प्रकृतिभूतेन तदन्तघटकेन कुमारीशब्दादिनेत्यर्थः। तेन वयोविशिष्टार्थगतस्त्रीत्वस्योक्तत्वेन तद्द्योतको ङीप्पुनर्नेति भावः। स्त्रीत्वस्य। वयोरूपप्रवृत्तिनिमित्तविशिष्टार्थगतस्त्रीत्वस्येत्यर्थः। तरबन्तस्य तु प्रकर्षः प्रवृत्तिनिमित्तमतस्तद्विशिष्टार्थगतस्त्रीत्वेन 'वयसी'ति ङीबिति भावः। अत एव 'गोतरे'त्यादौ न ङीप्, तदाह—स्त्रीत्वमात्रमिति। ननु वयोमात्रविशिष्टार्थगतं,

१—'स्त्रीत्वस्य प्रत्ययो' पा०। ‡ ४। १। ३ वा० ५ भाष्ये।

गुणवचनानां हि शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति । तद्यथा,–शुक्लं वस्त्रम्, शुक्ला शाटी, शुक्लः कम्बलः, शुक्लौ कम्बलौ, शुक्लाः कम्बला इति । यदसौ द्रव्यं श्रितो भवति गुणस्तस्य यल्लिङ्गं वचनं च तद्गुणस्याऽपि भविष्यति ।

अथवा क्रियाऽभिधीयते । एवमपि लिङ्गवचनानि न सिध्यन्ति । आश्रयतो लिङ्गवचनानि भविष्यन्ति । एवमपि द्विवचनं प्राप्नोति, यश्च ह्यतिशेते यश्चातिशय्यते उभौ तौ तस्याश्रयौ भवतः । नैष दोषः । कथम् ? शेतिरकर्मकः । अकर्मका अपि धातवः सोपसर्गाः सकर्मका भवन्ति । कर्मापदिष्टा विधयः कर्मस्थभावकानां कर्मस्थक्रियाणां वा भवन्ति, कर्तृस्थभावकश्च शेतिः ।

---

प्र०—आश्रयद्रव्यवाचिनः स्वसमवेते गुणे प्रत्ययविधिः । ततो व्यतिरिक्तार्थाभिधानाद्धान्ताद्वयोलक्षणङीबभावः । गुणाभिधाने कालितर इति सामानाधिकरण्याभावाद्घादिष्विति ह्रस्वो न प्राप्नोतीति चेद्वचनाद्वैयधिकरण्येऽपि–भविष्यति । एवम गीति । षष्ठीप्रसङ्गस्तु द्रव्यवचनान्न चोदितः । सोऽयमित्यभेदस्य गुणगुणिनोः सर्वदाऽत्र विवक्षितत्वात् । सत्यामपि त्वभेदविवक्षायां मञ्चादिवत्स्वलिङ्गसङ्ख्यापरित्यागप्रसङ्गः । आश्रयत इति । 'विशेषणानां चाजाते'रिति वचनात् । तत्र हि विशेषणशब्देन परोपकारायोपात्ताः—शेषभूताः—शुक्लादयो गुणा गृह्यन्ते । अथवा क्रियेति । अतिशयोऽतिशायनमिति भावे ल्युड्विधानात् । आश्रयौ भवत इति । उभयोर्निर्वर्तकत्वादिति भावः । अकर्मका अपीति । अर्थान्तरवृत्तित्वात् । कर्मापदिष्टा इति । अतिशयक्रिया कर्त्र्येव

---

उ०—तदेव हि 'वयसि प्रथमे' इत्यस्य प्रवृत्तौ निमित्तमिति भावः । यथेति । सा हि प्रातिपदिकेनोक्तेऽप्यर्थे भवतीति भावः । इममाशयमजानान आह—भाष्ये—टाबपीति । उक्तेनैवाशयेनोत्तरम् । पुनस्तमजानान आह – ङीबपीति । भाष्यकारस्त्विति । भाष्यकारैकदेशी त्वित्यर्थः । गुणोऽभिधीयत इति । प्रकृष्टकालत्वादिगुण इति भावः । करणे ल्युडिति । अतिशायने गुणे प्रत्यय इत्यर्थः । शुक्लस्याऽतिशायनो गुण इति विग्रहः । शुक्लनिष्ठः स्वेतराऽभिभवकरणं शुक्लो गुण इत्यर्थः । एवञ्च न प्रागुक्ता दोषा इति तात्पर्यम् ।

ङीबभाव इति । वयोविशिष्टद्रव्यवाचकाद्धि ङीप्, न चाऽयं तथा, किन्तु वयोमात्रवाचक इति भावः । वचनादिति । 'घरूपे'ति सूत्रे चेति वचनादित्यर्थः । षष्ठीप्रसङ्गस्त्विति । 'न चोदित' इत्यत्राऽन्वयः । द्रव्यवचनात् पटादिशब्दात् पटस्य शुक्लतर इत्येवमित्यर्थः । तत्र हेतुमाह––सोऽयमिति । ननु सर्वथाऽभेदविवक्षायां कथं लिङ्गवचनाऽसिद्धिरत आह—सत्यामपि त्विति । मञ्चादिवदिति । मञ्चस्थस्त्रीणां मञ्चपदेन मञ्चाऽभेदेन बोधनादिति भावः । 'गङ्गायां घोष' इतिवच्चेत्यपि बोध्यम् । भाष्ये—आश्रयत इति । भेदसम्बन्धमूलकेन तत्त्वारोपेण लक्षणायामेव स्वलिङ्गाद्यत्यागः । अभेदेनैव तत्प्रतीतौ तु तत्त्याग इति भावः । तदुक्तम्–'अभेदस्य सर्वदाऽत्र विवक्षितत्वा'दिति । विशेषणानाञ्चेति । विशेषणानां–गुणानां, युक्तवत्–स्वयुक्ताश्रयवल्लिङ्गवचनानीति तदर्थः । तदाह—तत्र हीति । परोपकाराय—परस्य द्रव्यस्येतरेभ्यो व्यवच्छेदाय । तस्यैव व्याख्यानं—शेषभूता इति । भावे ल्युडिति । शुक्लवृत्तिरितराऽभिभव इति बोधः ।

अथ यद्येव द्वितीयान्तादुत्पत्तिः प्रथमान्ताद्वा स्वार्थिकः, अथापि गुणोऽभिधीयते, अथाऽपि क्रिया; किं गतमेतदियता सूत्रेण, आहोस्विदन्यतरस्मिन्पक्षे भूयः सूत्रं कर्त्तव्यम्? 'गत'मित्याह। कथम्? यदा तावद् द्वितीयान्तादुत्पत्तिः प्रथमान्ताद्वा स्वार्थिकस्तदा 'कृत्यल्युटो बहुलम्' [ ३।३।११३ ] इत्येवमत्र ल्युड् भविष्यति। यदा गुणोऽभिधीयते तदा न्यायसिद्धमेव। यदाऽपि क्रिया तदापि न्यायसिद्धमेव।

अथवाऽतिशाययतीत्यतिशायनम्। कः प्रयोज्यार्थः? गुणा गुणिनं प्रयोजयन्ति, गुणी वा गुणान्प्रयोजयति। कः पुनरिह शेत्यर्थः? इह यो यत्र भवति शेतेऽसौ तत्र, गुणाश्च[1] गुणिनि शेरते।

शेत्यर्थः कारितार्थो वा निर्देशोऽयं समीक्षितः।
शेत्यर्थे नास्ति वक्तव्यं कारितार्थं ब्रवीमि ते॥ १॥

प्र०—समवेता नतु कर्मणीति कर्माश्रयलिङ्गसङ्ख्याभाव इत्युक्तं भवति। कर्मापदिष्टा इति। द्विवचनमिह कर्मापदिष्टो विधिः, कर्माश्रित्य तस्य चोदितत्वात्। आश्रयतो लिङ्गवचनानीत्यत्र समवाय्याश्रयो गृह्यते न तु निर्वर्तक इत्यर्थः। ल्युट् भविष्यतीति। कर्तृसाधनः। कः प्रयोज्यार्थ इति। अचेतनत्वाद्गुणानां प्रयोजकत्वानुपपत्तिं मन्यते। गुणा गुणिनमिति। अस्माभिः प्रकृष्टेस्त्वमतिशेष्वेति तत्समर्थाचरणलक्षणश्चाचेतनानामपि प्रयोजकव्यापार इति कारकप्रकरणे प्रतिपादितम्। कः पुनरिति। शेतेरनेकार्थत्वात्प्रश्नः। यो यत्रेति। स्थानार्थः शेतिर्यथा—जलाशय इत्यत्रेति भावः। गुणा गुणिनीति। अवतिष्ठन्त इत्यर्थः। तान् गुणान् गुण्यतिशाययति अतिशयेनावस्था-

उ०—निर्वर्तकत्वादिति। तत्त्वमेव चाश्रयत्वमित्यभिमानः। अर्थान्तरेति। अभिभवार्थत्वादिति भावः। तरबादिविधेः कर्माऽपदिष्टत्वाऽभावादाह—अतिशयक्रियेत्यादि। एवञ्च पटाऽभिन्नः शुक्लवृत्तिरितराऽभिभव इति बोधात्तद्गतलिङ्गसङ्ख्ये। कर्त्रैवाऽभेदविवक्षा न तु कर्मणा स्वभावादिति तात्पर्यम्।

भाष्याक्षराणि योजयितुमाह—द्विवचनमिहेति। तच्च यत्र कर्मण्यपि मुख्यव्यापाराश्रयत्वविवक्षा तत्र भवति,—यथा देवदत्ततण्डुलौ पचत इति, न चैवं प्रकृते इति तात्पर्यम्। भाष्ये—यदा गुण इति। करणे तदा ल्युट्। यदा क्रियेति। भावे तदा ल्युट्। तत्र कर्त्तरि ल्युटि प्राप्ताऽप्राप्तविवेकेनाऽभिभवकर्तृत्वस्यैव द्योत्यत्वात्तस्य च विशेषणत्वात् प्रकृत्यर्थविशेषणत्वोक्तिः। 'गुणोऽभिधीयत' इति पक्षं 'प्रथमान्ताद्वा स्वार्थिक' इति पक्षञ्च प्रकारान्तरेण साधयति भाष्ये—अथवेति। गुणोऽभिधीयत इति पक्षे प्रयोज्यार्थं दर्शयति—गुणा गुणिनमिति। प्रयोज्यार्थं इत्यस्य—प्रयोज्यत्वविशिष्टोऽर्थः प्रयोजनं यस्य स प्रयोजक इत्यर्थः। गुणानां प्रयोजकत्वेऽभिभवप्रेरणाकर्त्तरि गुणे प्रत्ययः। तत्समर्थाचरणलक्षणश्चेति। अचेतनत्वात्तद्विरुद्धानाचरणरूपमेवाऽत्र तत्समर्थाचरणं बोध्यम्। अन्ये उपपत्तिमाह—गुणी वेति। गुणिनः

१–'गुणा गुणिनि' पा०।

गुणी वा गुणसंयोगाद्गुणो वा गुणिना यदि ।
अभिव्यज्येत संयोगात्कारितार्थो भविष्यति ॥ २ ॥

इहाऽस्यापि सूक्ष्माणि वस्त्राण्यस्याऽपि सूक्ष्माणि वस्त्राणीति परत्वादातिशायिकः प्राप्नोति ।

अतिशायने बहुव्रीहावुक्तम् ॥ १ ॥

किमुक्तम् ? 'पूर्वपदातिशय आतिशायिकाद्बहुव्रीहिः सूक्ष्मवस्त्रतराद्यर्थः'। 'उत्तरपदातिशय आतिशायिको बहुव्रीहेर्बह्वाढ्यतराद्यर्थ'इति* ।

इह त्रीणि शुक्लानि वस्त्राणि प्रकर्षापकर्षयुक्तानि । तत्र पूर्वमपेक्ष्य उत्तरे द्वे तरबन्ते । तत्र द्वयोस्तरबन्तयोरेकस्मात्प्रकर्षयुक्ताच्छुक्लतरशब्दादुत्पत्तिः प्राप्नोति, शुक्लशब्दादेव चेष्यते ।

प्र०—पयतीत्यर्थः । पूर्वं गुणानां प्रयोजकत्वमुक्तं पश्चाद्गुणिनः । शैत्यर्थ इति । प्रकृत्यर्थो ण्यर्थोपि वाऽत्र गृह्यत इत्यर्थः । शैत्यर्थे नास्तीति । तस्य प्रसिद्धत्वात् । गुणी वेति । गुणसम्बन्धाद्गुणवानतिशेते गुणिसम्बन्धाद्गुणो वा । अभिव्यज्येतेति । प्रकृष्टत्वेनेतिभावः । कारितार्थ इति । गुणो गुणिनमतिशाययति गुण्यपि गुणमित्यस्ति ण्यर्थोपपत्तिः । परत्वादिति । 'सूक्ष्मतरवस्त्र' इति प्राप्नोति सूक्ष्मवस्त्रतर इति चेष्यते । प्रकर्षस्याऽन्यपदार्थं प्रति विशेषणत्वस्य च युगपद्विवक्षायां विप्रतिषेधोपपत्तिः । आतिशायिकादिति । पूर्वविप्रतिषेधेनेति भावः । उत्तरपदातिशय इति । परविप्रतिषेधेन तत्र स्वरे विशेषस्तरबन्तेन समासे 'बहोर्नञ्वदुत्तरपदभूम्नी'ति बह्वाढ्यतरशब्दोऽन्तोदात्तो भवति । बहुव्रीहेस्तरपि सति तरपः पित्त्वादनुदात्तत्वान्मध्योदात्तत्वप्रसङ्गः, तथा कपि विशेषो बह्वाढ्यतरक इति तरबन्तेन समासे भवति, बहुव्रीहेस्तु तरपि बह्वाढ्यकतर इति स्यात् । यदा त्वत्रैव पूर्वपदार्थातिशयस्तदा बहुव्रीहौ कृते तरब्वेदितव्यः । प्रकर्षापकर्षयुक्तानीति । अवयव-

उ०—प्रयोजकत्वेऽभिभवप्रेरणाकर्त्तरि वर्त्तमानाण्प्रत्यय इति बोध्यम् । कः पुनरिहेति । 'गुणी वे'ति पद्य इत्यर्थः । अभिभवार्थोऽत्र न सम्भवति, गुणविशिष्टो हि गुणी स्ववृत्तिगुणसजातीयगुणविशिष्टमितरमभिभवति न गुण इति प्रश्नः । अतिशयेनाऽवस्थापयतीति । अतिशयवैशिष्ट्येनाऽवस्थापयतीत्यर्थः । अतिशयवैशिष्ट्येन गुणाऽवस्थापनकर्त्तरि गुणिनि वर्त्तमानात्प्रातिपदिकाण्प्रत्ययः स्वार्थे इत्यर्थः । तथात्वञ्चाऽतिशयविशिष्टतया गुणबोध एवेति शब्दात्तत्प्रतितिरुपपन्ना । कारितेति । हेतुमण्ण्यन्तस्य प्राचां सञ्ज्ञा भाष्ये । गुणी गुणेन संयोगात्—सम्बन्धात्, गुणिना संयोगात्सम्बन्धाद्गुणो वा इतराऽभिभवकर्तृत्वेनाऽभिव्यज्येत—प्रतीयेतेत्यर्थस्तदाह—प्रकृष्टशब्देनेति । इतराऽभिभवकर्तृत्वेन प्रतीयत इति ण्यर्थः प्रेरणाऽस्य स्पष्टैवेत्याशयः । अत्र पद्ये निपातनाऽनाश्रयणम् । परत्वादिति । 'बहुव्रीह्यपेक्षये'ति शेषः । ननु पूर्वं तरपि बहुव्रीहौ वा न

* २ । १ । ६६ वा० ६; ७

**शुक्लतरस्य शुक्लभावात्प्रकृतेः प्रत्ययविज्ञानम् ॥ २ ॥**

[ शुक्लतरस्य शुक्लभावात्प्रकृतेः प्रत्ययोविज्ञायते । ] शुक्लतरशब्दे शुक्लशब्दोऽस्ति तस्मादुत्पत्तिर्भविष्यति ॥ नैतद्विवदामहे शुक्लतरशब्दे शुक्लशब्दोऽस्ति नास्तीति । किं तर्हि ? शुक्लतरशब्दोऽप्यस्ति तत उत्पत्तिः प्राप्नोति ।

**तदन्ताच्च स्वार्थे छन्दसि दर्शनं श्रेष्ठतमायेति ॥ ३ ॥**

तदन्तादातिशायिकान्तात्स्वार्थे छन्दस्यातिशायिको दृश्यते—'दे॒वो वः॑ सवि॒ता प्रार्प॑यतु श्रेष्ठ॑तमाय॒ कर्म॑णे॒'† ।

एवं तर्हि—मध्यमाच्छुक्लशब्दात्पूर्वपरापेक्षादुत्पत्तिर्वक्तव्या । मध्यमश्च शुक्लशब्दः पूर्वमपेक्ष्य प्रकृष्टः परमपेक्ष्य न्यूनः, न च न्यूनः प्रवर्त्तते ॥ अथवोत्पद्यतां,

प्र०—धर्मेण समुदायस्य व्यपदेशस्तत्र प्रथममपकर्षयुक्तं मध्यमं पूर्वापेक्षया प्रकर्षयुक्तमन्त्यापेक्षयाऽप्रकर्षयुक्तमन्त्यन्तु प्रकर्षयुक्तमेवेति योज्यम् । तत्रेति । पूर्वापेक्षया द्वयोरपि प्रकृष्टत्वाच्छुक्लतरत्वं तयोस्त्वेकतरस्यान्यतरापेक्षया प्रकर्षविवक्षायां तरबन्तात्तरबुत्पत्तिप्रसङ्गः । शुक्लतरस्येति । न्यूनमध्यमोत्कृष्टानां सर्वेषां शौक्लचसम्भवाच्छुक्लव्यपदेशाच्छुक्लशब्दादेव तरबुत्पत्स्यत इत्यर्थः । शुक्लतरशब्द इति । शुक्लतरः शब्दो वाचको यस्यार्थस्य तस्मिन्नर्थे शुक्लशब्दो वाचकत्वेनास्तीत्यर्थः । उत्पत्तिः प्राप्नोतीति । अनिष्टमपि प्राप्नोति सत्यामपीष्टसिद्धावित्यर्थः । श्रेष्ठतमायेति । श्रेष्ठायेत्यर्थः । मध्यमादिति । मध्यमवाचिनः शुक्लादन्त्येऽभिधेये प्रत्ययो वक्तव्यः,—शुक्लमतिशेते शुक्लतर इति । अनेन च वक्तव्येन तक्रकौण्डिन्यन्यायेन तृतीयशुक्लवाचिनः शुक्लतरशब्दादुत्पत्तिर्बाध्यते । मध्यमश्च शुक्लः पूर्वापेक्षया शुक्लतरो भवति । तृतीयापेक्षया तु न्यूनत्वाच्छुक्ल एव भवति न शुक्लतर

उ०—रूपे विशेष इत्यत आह—तत्र स्वरे इति । त्रयाणामपि प्रकर्षाऽपकर्षोभययोगः कथमत आह—अवयवधर्मेणेति । क्वचिदवयवे प्रकर्षयोगः, क्वचिदप्रकर्षस्यैव, क्वचिदुभयोरिति त्र्यात्मकसमुदाये तदुपपत्तिः । भाष्ये—प्रकर्षयुक्तादिति । प्रकर्षयुक्तवाचकादित्यर्थः । शब्दार्थयोरभेदाच्च भगवतः प्रायेणेदृशो व्यवहार इति बोध्यम् । ननु शुक्लतरशब्दे विद्यमानशुक्लशब्दस्यैकार्थीभावापन्नत्वात्कथं तत उत्पत्तिप्रसङ्गोऽत आह—शुक्लतरशब्द इति । ननु 'श्रेष्ठतमाये'त्यादावातिशायनिकाद् दृश्यत एव स इति कथं तस्याऽनिष्टतेत्यतो भाष्ये—तदन्ताच्च स्वार्थे इति । एवञ्च लोकेऽन्यत्र च तरबाद्यन्तादतिशये तरबाद्यनिष्टमेवेति भावः । शुक्लादन्त्येऽभिधेये इति । अतिशय्यमानादतिशयकर्त्तरि प्रत्यय इति पक्षे इदम् । तदेवाह—शुक्लमतिशेते इति । नन्वेवमपि तरबन्तादुत्पत्तिः कथं वारितेत्यत आह—अनेन चेति । तृतीयशुक्लवाचिनः—तृतीयेनाऽतिशय्यमानशुक्लवाचिन इत्यर्थः । वस्तुत उभाभ्यामप्युत्पत्तिसिद्धाविदं वचनं नियमार्थं—शुक्लशब्दादेव न शुक्लतरादिति वक्तुं

१—इदं क्वाचित्कम् । † यजु० १ । १

लुग्भविष्यति ॥ वाचकेन खल्वप्युत्पत्तव्यं, न च शुक्लतरशब्दादुत्पद्यमानो वाचकः स्यात् ॥ न खल्वपि बहूनां प्रकर्षे तरपा भवितव्यम् । केन तर्हि ? तमपा ।

पूर्वेण स्पर्धमानोऽयं[1] मध्यमो लभते सितः ।
परस्मिन्न्यूनतामेति न च न्यूनः प्रवर्त्तते ॥ १ ॥

अपेक्ष्य मध्यमः पूर्वमाधिक्यं लभते सितः ।
परस्मिन्न्यूनतामेति यथाऽमात्यः स्थिते नृपे ॥ २ ॥
अस्तु वापि तरस्तस्मान्नाऽपशब्दो भविष्यति ।[2]
वाचकश्चेत्प्रयोक्तव्यो वाचकश्चेत्प्रयुज्यताम् ॥ ३ ॥

प्र०—इति शुक्लशब्दादेव मध्यमशुक्लवाचिनः प्रत्ययो वक्तव्य इत्यर्थः । न च न्यूनः प्रवर्त्तत इति । स्वगतप्रकर्षापेक्षायां तद्धितोत्पत्तावित्यर्थः । ततश्च पूर्वमतद्धितान्त एव शुक्लशब्दस्तृतीयेशुक्लेऽभिधेये प्रत्ययमुत्पादयति । लुग्भविष्यतीति । गतार्थत्वादप्रयोग एव लुक् । एकेनैव तरपा आद्यमध्यमशुक्लापेक्षतृतीयप्रकर्षस्य प्रतिपादनात् । न चेति । शुक्लतरतरशब्दस्य प्रयोगाभावादवाचकत्वम् । न खल्वपीति । यदि तावत्त्रयाणामन्यतमस्य प्रकर्षो विवक्ष्यते तदा 'शुक्लतम'-मिति भाव्यं न तु 'शुक्लतर'मिति, अथ पूर्वमनपेक्ष्य द्वयोरन्यतरस्य प्रकर्षविवक्षा तदा पूर्वानपेक्षायां मध्यमं शुक्लमेव भवति न तु शुक्लतरमिति शुक्लशब्दादेवोत्पत्तिः सिद्धा,—शुक्लतर इति न कश्चिद्दोषः ।

पूर्वोक्तार्थसङ्ग्रहश्लोकाः—पूर्वेणेति । सितः—शुक्लः । पूर्वेण स्पर्धमानः—तदपेक्षयोत्तरः । प्रकर्षं लभते । तृतीयापेक्षया न्यून एवेत्यर्थः । अपेक्ष्येति—पूर्वेण समानार्थो, दृष्टान्तोपादानाय तु पुनरुक्तः । नापशब्द इति । गतार्थत्वाल्लुगभावाद्व वाचकश्चेत्प्रयोक्तव्य इति त्वं

उ०—युक्तम् । न्यायस्तु नाऽनुवाद्यविषय इत्यसकृदावेदितम् । ननु मध्यमस्याऽपि पूर्वाऽपेक्षया प्रकृष्टत्वात्तरपा भाव्यमिति मध्यमः शुक्लशब्द एव दुर्लभोऽत आह भाष्ये—मध्यमश्चेति । तृतीयापेक्षया तु न्यूनत्वादिति । विद्यमानोऽपि पूर्वापेक्षः प्रकर्षोऽकिञ्चित्करः, यथा राजसन्निधावमात्यस्येति भावः । ननु न्यूनोऽतिशय्यमानवाचक एव प्रवर्त्तते—वृत्तिं लभतेऽत आह—स्वगतेति । पूर्वाऽभिभवकर्तृत्वेन विवक्षायां मध्यमेऽर्थे प्रथमवाचकात्प्रत्ययो नेत्यर्थः । 'प्रकृत्यर्थविशेषण'मिति पक्षे आह—अथवेति । तद्व्याचष्टे—एकेनैवेति । तृतीयादुत्पन्नेनेत्यर्थः । मध्यमात्तु न, विद्यमानस्याऽपि प्रकर्षस्योक्तरीत्याऽकिञ्चित्करत्वादिति भावः ।

ननु युगपदुपस्थितौ तृतीयाऽपेक्षाऽपकर्षेणाऽऽद्यापेक्षोत्कर्षस्य तिरोधानेऽपि क्रमेण प्रकर्षविवक्षायां ततस्तरपि तदन्तात्पुनः स दुर्वारोऽतः पक्षान्तरमाह भाष्ये—वाचकेन खल्वपीति । वक्ष्यमाणेऽपीयमापत्तिर्दुर्वारेत्ययमेव समाधिर्मुख्यः । अत एवाऽग्रेसङ्ग्रहश्लोकेषु तदनुक्तिः । एतदन्तेन समासिश्चेति ध्येयम् । 'श्रेष्ठतमाये'ति तु च्छान्दसम्, लोके त्वसाधुरेवेति निष्कर्षः ।

१—'मानो यो' पा० । २—'तरस्तस्मात्' पा० ।

## द्विवचनविभज्योपपदे तरबीयसुनौ ॥ ५ । ३ । ५७ ॥

'द्विवचन' इत्युच्यते, तत्रेदं न सिध्यति—'दन्तोष्ठस्य दन्ताः स्निग्धतराः', 'पाणिपादस्य पादौ सुकुमारतरौ', 'अस्माकं च देवदत्तस्य च देवदत्तोऽभिरूपतर इति।

यदि पुनर्द्व्यर्थोपपद इत्युच्येत, तत्रायमप्यर्थो विभज्योपपदग्रहणं न कर्त्तव्यं भवति। इहापि 'साङ्काश्यकेभ्यः पाटलिपुत्रका अभिरूपतरा' इति द्व्यर्थोपपद इत्येव सिद्धम्।

नैवंजातीयिका द्व्यर्थता शक्या विज्ञातुम्। इहापि प्रसज्येत—'साङ्काश्यकानां पाटलिपुत्रकाणां च पाटलिपुत्रका अभिरूपतमा' इति। अवश्यं खल्वपि विभज्योप-

प्र०—मन्यसे तदा—'शुक्लतरतर'मिति यदि वाचकस्ततः प्रयुज्यतां न तु वाचकः, तस्मान्न प्रयोक्तव्य इत्यर्थः ॥ ५५ ॥

द्विवचन। द्विवचनं च विभज्यं च द्विवचनविभज्यम्। निपातनाद्भजेर्विपूर्वाद्यत्प्रत्ययः। द्विवचनविभज्यं च तदुपपदं चेति कर्मधारयः। तस्मिन्सति सुबन्तात्तिङन्ताच्चाऽतिशायने तरबीयसुनौ भवतः। तच्चोपपदं विग्रहवाक्य एव प्रयुज्यते। वृत्तौ तु गतार्थत्वान्नाऽवश्यं प्रयुज्यते। एवं चोपपदग्रहणं विस्पष्टार्थम्। तत्रेदं न सिध्यतीति। पारिभाषिकद्विवचनाश्रयः पूर्वपक्षः। अर्थाश्रयस्तूत्तरः पक्षः। अस्माकं चेति। 'अस्मदो द्वयोश्चे'त्येकस्मिन् बहुवद्भावः। यदि पुनरिति। पूर्वोक्तेषूदाहरणेषु क्वचिद्राशिद्वयापेक्षस्य क्वचिदर्थद्वयापेक्षस्य द्व्यर्थस्य विद्यमानत्वात्प्रत्ययः सिद्ध इति भावः। इहापीति। साङ्काश्यकपाटलिपुत्रकराशिद्वयसम्भवात्। साङ्काश्यकानामिति।

उ०—अपेक्ष्यति-श्लोकस्य पौनरुक्त्यमाशङ्क्याह-पूर्वेणेति। अस्तु वेति। भाष्यस्य-प्राप्नोतु इत्यर्थः। क्रमेण प्रकर्षविवक्षायां प्राप्तिः। वाचको—लोके बोधकश्चेत्प्रयोक्तव्य इत्यस्य 'इति सिद्धान्त' इति शेषः। अतो यदि बोधकः शिष्टसंमतस्तदा प्रयुज्यतां न तु तादृश इति न प्रयुज्यत इत्यर्थः। अनेन शास्त्रसिद्धोऽपि लोकाऽप्रयुक्तोऽसाधुरिति बोधितम् ॥ ५५ ॥

द्विवचनवि। निपातनादिति। एवञ्च लोके विभाज्यशब्दस्य साधुत्वं चिन्त्यम्, ण्यत्यपि विभाग्यमित्यस्यापत्तेः। वृत्तौ त्विति। द्व्यर्थादेर्बुद्धिस्थत्व एव तरबुत्पत्तेरिति भावः। नन्वस्माकमित्यस्य बहुत्वार्थकत्वात्कथं सिद्धान्तेऽपि तरबत आह—अस्मद इति। क्वचिदिति। 'दन्तोष्ठस्ये'त्यादौ। क्वचित्—'अस्माकञ्च देवदत्तस्ये'त्यादौ। द्व्यर्थस्य—द्व्यर्थशब्दस्य। ननु 'साङ्काश्यकाना'मित्यत्र, साङ्काश्यकेभ्य इत्यत्र च बहुत्वाऽवगमात् कथं द्व्यर्थोपपदत्वमत आह—राशिद्वयेति। समुदाय इति। उद्भूताऽवयवभेद इत्यर्थः।

पदग्रहणं कर्त्तव्यं, यो हि बहूनां विभागस्तदर्थम्—'साङ्काश्यकेभ्यश्च पाटलिपुत्रकेभ्यश्च माथुरा अभिरूपतरा' इति ।

तत्तर्हि द्व्यर्थोपपद इति वक्तव्यम् ? न वक्तव्यम् । नेदं पारिभाषिकस्य द्विवचनस्य ग्रहणम् । किं तर्हि ? अन्वर्थग्रहणम्,—उच्यत इति वचनम्,—द्वयोरर्थयोर्वचनं द्विवचनमिति ।। एवमपि—

प्र०—अत्रापि राशिद्वयस्य सद्भावात्तरप्स्यात् । साङ्काश्यकावयवः समुदायः साङ्काश्यकशब्देनोच्यते, पाटलिपुत्रकावयवश्च पाटलिपुत्रकशब्देनोच्यते । एवं निर्धारणमुपपद्यते । बहूनां विभाग इति । बहूनां राशीनां मध्यादेकस्य राशेर्यत्र विभागस्तत्र राशित्रयादिसद्भावात्तरब् न स्यात् ।

तत्तर्हीति । ननु चैवंजातीयिका द्व्यर्थतेत्यादिनातिप्रसङ्गोद्भावनेनाऽस्य पक्षस्य दूषितत्वात्कथं पुनरङ्गीकरणम् ? नैष दोषः । इह राशिद्वयापेक्षां द्व्यर्थतामाश्रित्याचार्यदेशीयेन 'यदि पुन'रित्याद्युक्तं, 'तत्रायमप्यर्थ' इति च । तत आचार्य्येणैवंजातीयिकेति राशिद्वयापेक्षा द्व्यर्थता दूषिता । ततोऽन्या द्व्यर्थताऽऽचार्य्यस्याभिमतेति ज्ञात्वा शिष्य आह—तत्तर्हीति । आचार्य्य आह—न वक्तव्यमिति । इयमाचार्य्यस्य द्व्यर्थताऽभिमता—इह दन्तोष्ठस्य पाणिपादस्येति तिरोहितावयवभेदः समूहः समासार्थः । तत्रैतस्यां वृत्तावभेदैकत्वसङ्ख्योपादायित्वाद्वृत्तिपदस्य परित्यक्तभेदाङ्गीकृताऽभेदलक्षणैकत्वसङ्ख्यदन्तोष्ठलक्षणार्थद्वयाश्रया द्व्यर्थताऽस्ति । यदा त्वितरेतरयोगद्वन्द्वस्तदावयवार्थभेदसद्भावाद्द्व्यर्थता नास्तीति तरब् न भवति—'प्लक्षन्यग्रोधानां प्लक्षाः स्निग्धतमा' इति । 'अस्माकं च देवदत्तस्य चे'त्यत्राप्यर्थद्वयसद्भावादस्ति द्व्यर्थत्वम् । 'साङ्काश्यकानां च पाटलिपुत्रकाणाञ्च पाटलिपुत्रका अभिरूपतमा' इत्यपरित्यक्तभेदाः समूहिनः शब्देन प्रत्याय्यन्ते, न च राशिद्वयापेक्षा द्व्यर्थता शब्देन प्रतिपादिता, राशिशब्दस्याप्रयोगा-

उ०—अत एव बहुवचनम् । वस्तुतो राश्योर्द्वित्वात्तरप्प्रापत्तिः । तस्माद्वस्तुतो राशिद्वयगतद्वित्वमाश्रित्य न तरबिति 'विभज्योपपदे' इत्यवश्यवाच्यमिति तात्पर्यम् । फलान्तरमपि तस्याह—भाष्ये—अवश्यं खल्वपीति । तद्व्याचष्टे—बहूनामिति । तत्र आचार्याऽभिमतां द्व्यर्थतां स्फुटीकृत्य दर्शयति—इयमित्यादिना । एतस्यां वृत्तौ—समाहारद्वन्द्ववृत्तौ । वर्त्तिपदस्यद—न्तदौष्ठपदरूपस्य, अभेदैकत्वसंख्योपादायित्वात्—तदभिधायकत्वाद्विद्यमानस्यापि दन्तादिगतबहुत्वादेरप्रत्ययाद् द्व्यर्थेनेत्यन्वयः । बहुत्वाऽप्रत्यायकत्वमेवोपपादयति—परित्यक्तेति । परित्यक्तो व्यक्तिगतो भेदो येन, अङ्गीकृतो धर्मकृतोऽभेदो येन तल्लक्षणैकत्वेत्यर्थः । व्यक्तीनामभेदेन भानादेकत्वेन भानमिति व्यवहारो न तु तत्र सङ्ख्यारूपैकत्वभानमित्यनेन सूचयति । द्व्यर्थताऽस्तीति । वास्तवी द्व्यर्थताऽस्ति, न तु दन्तोष्ठयोर्द्वित्ववैशिष्ट्येन भानमिति भ्रमितव्यम्, सङ्ख्याविशेषाणां सर्वथा भानाभावात् । पटद्वयोपस्थाप्यत्वेनाऽर्थस्य द्वित्वव्यवहार इति तत्त्वम् । यदा त्विति । यत्र त्वित्यर्थः । तदा—तत्रेत्यर्थः । अवयवार्थभेदसद्भावादिति । तत्कृतबहुत्वसङ्ख्याभावादित्यर्थः । तत्रोदाहरणं दर्शयति—प्लक्षन्यग्रोधानामिति । 'अपरित्यक्तभेदाः समूहिन' इति पाठः । समूहिनः—अवयवाः । उद्भूताऽवयवभेदः समूह इति यावत् । समुदायशब्दप्रयोगे त्विति । तद्बोधकशब्दप्रयोगे त्वित्यर्थः । गवां कृष्णेत्यत्र—गोशब्दः

**तरबीयसुनोरेकद्रव्यस्योत्कर्षापकर्षयोरुपसङ्ख्यानम् ॥ १ ॥**

तरबीयसुनोरेकद्रव्यस्योत्कर्षापकर्षयोरुपसङ्ख्यानं कर्तव्यम् । 'परुद्भवान्पटुरासीत्पटुतर ऐषम' इति ।

**सिद्धं तु गुणप्रधानत्वात् ॥ २ ॥**

सिद्धमेतत् । कथम् ? 'गुणप्रधानत्वात्' । गुणप्रधानोऽयं निर्देशः क्रियते, गुणान्तरयोगाच्चाऽन्यत्वं भवति । तद्यथा,—तमेव गुणान्तरयुक्तं वक्तारो भवन्ति—

प्र०—दिति द्व्यर्थत्वाऽभावात्तरबभावः । अथात्र 'यतश्च निर्धारण'मिति कथं षष्ठी, यावता 'पञ्चमी-विभक्ते' इति पञ्चम्या तदपवादेन भाव्यम् । नैष दोषः । सर्वत्रैव निर्धारणे विभागोऽस्तीति विभक्त-ग्रहणसामर्थ्याद्यत्र विभाग एव शब्देन प्रतिपाद्यते स एव पञ्चम्या विषयः, स एव च विभज्योपपदनिमित्तस्य प्रत्ययस्य,—'माथुराः पाटलिपुत्रकेभ्य आढ्यतरा' इति । समुदायशब्दप्रयोगे तु 'गवां कृष्णा संपन्नक्षीरतमे'त्येवमादौ विभागाविभागसंभवान्न पञ्चमी, नापि तरप्प्रत्ययः । निर्धारणाश्रये तु षष्ठीसप्तम्यौ भवतो यस्मान्निर्धार्यते यश्चैकदेशो निर्धार्यते यश्च निर्धारणहेतू रेतत्त्रयसंनिधाने निर्धारणं भवतीति तत्रैव षष्ठीसमासप्रतिषेधः । इह तु नागानामुत्तमो नागोत्तम इति त्रयसंनिधानाभावात्संबन्धसामान्ये षष्ठीति समासो भवत्येव । 'सांकाश्यकानां पाटलिपुत्रकाणां च पाटलिपुत्रका अभिरूपतमा' इत्यत्रापि शब्देन समुदायस्य प्रतिपादनाद्विभज्यमानस्य द्विरुपादानाद्विभागाऽविभागसद्भावाद्विभागविषयकार्याभावः । प्रतियोग्यपेक्षत्वात्प्रकर्षस्य विकर्ष आक्षिप्ते विभज्यग्रहणादिहाप्यवधारणमाश्रीयते । तेन समुदायशब्द उच्चार्यमाणे विभज्योपपदनिमित्तप्रत्ययाऽप्रसङ्गः ।

परुद्भवानिति । पाटवस्यातिशयेऽपि प्रतियोग्यपेक्षत्वात्प्रकर्षस्य स एवायमिति प्रत्यभिज्ञानाद्गुणिन एकत्वात्तस्यैव प्रतियोगित्वायोगात्प्रकर्षप्रत्ययाप्रसङ्गः । सिद्धं त्विति । यद्यपि शब्देन

उ०—समुदायबोधकः । प्रसङ्गादाह—यस्मान्निर्धार्यत इति तत्रैव षष्ठीत्यादि । तत्रैव षष्ठीसमासप्रतिषेधश्चेत्यर्थः । विनाऽपि च तात्पर्यवशात्समुच्चयप्रतीतेः । समासश्च षष्ठीसमास एव, प्रत्यासत्तेः, निर्धारणे षष्ठीसमासनिषेधस्यैवोक्तेश्च । तद्ध्वनयन्नाह—इह त्विति । ध्वनितं चेदं 'हलादिः शेषः' इति सूत्रे भाष्ये । सांकाश्यकानामिति प्रकृतोदाहरणे यथा षष्ठी तदाह—साङ्काश्यकानामिति । शब्देन समुदायस्येति । चशब्देनेत्यर्थः । 'चशब्देन समुदायस्ये'ति पाठान्तरम् । द्विरुपादानादिति । विभज्यमानस्य निर्धारणाऽवधिकोटावप्युपादानात्समुदायरूपेणाऽविभागस्य, प्रत्येकरूपेण च विभागस्य सद्भाव इत्यर्थः । 'प्रतियोग्यपेक्षत्वात्प्रकर्षस्य विभागे आक्षिप्ते' इति पाठः । 'विकर्षे' इति पाठे विभागप्रयोजकीभूते धर्मे इत्यर्थः । सर्वं वाक्यं साऽवधारणमिति न्यायेन व्याख्यानादिति भावः । विभज्य ग्रहणादिति । विभागे इत्येव वाऽर्थः [ विकर्षे इत्यस्य, अत एव विकल्पः । अत एव वाह—वीति । ] विभज्यश्चाऽत्र विभागाऽवधिभूतमेव गृह्यत इति बोध्यम् । ननु पाटवाऽतिशये प्रत्ययस्तच्च भिन्नमेवेति व्यर्थमुपसङ्ख्यानमत आह—पाटवस्येति । स्वस्यैव स्वगतधर्मातिशये प्रतियोगित्वाऽसम्भव इत्याह—स एवाऽयमितीत्यादि । गुणिन एकत्वे गुणस्याप्येकत्वात्स्वगतगुणस्य

१—क्वचित्कमेतत् ।

'अन्यो [ ऽद्य ] भवान् संवृत्त इति ॥ ५७ ॥

## अजादी गुणवचनादेव ॥ ५ । ३ । ५८ ॥

एवकारः किमर्थः ? नियमार्थः । नैतदस्ति प्रयोजनम् । सिद्धे विधिरारभ्यमाणोऽन्तरेणैवकारं नियमार्थो भविष्यति ॥ इष्टतोऽवधारणार्थस्तर्हि । यथैवं विज्ञायेत—अजादी गुणवचनादेवेति । मैवं विज्ञायि—अजादी एव गुणवचनादिति । किं च स्यात् ? न व्यञ्जनादी गुणवचनात्स्याताम् ॥ ५८ ॥

## प्रशस्यस्य श्रः ॥ ५ । ३ । ६० ॥

इदमयुक्तं वर्त्तते । किमत्रायुक्तम् ? 'अजादी गुणवचनादेव' [ ५८ ] इत्युक्त्वाऽगुणवचनानामप्यजाद्योरादेशा उच्यन्ते । नैष दोषः । एतदेव ज्ञापयति—'भवत एतेभ्योऽगुणवचनेभ्योऽप्यजादी' इति यदयमजाद्योः परत आदेशान् शास्ति । एवमपि तयोरिति वक्तव्यं स्यात्, तयोः परत इति ॥ यदि पुनरयं विधिर्विज्ञायेत । नैवं

प्र०—गुणी प्राधान्येनोच्यते, तथापि गुणाश्रयप्रकर्षनिमित्तत्वात्प्रत्ययोत्पत्तेस्तां प्रति गुणस्य प्राधान्यमाश्रित्य गुणप्रधानत्वादित्युच्यते । तत्र गुणभेदेन गुणिनो भेदारोपादुपपन्नो भेदाश्रयप्रकर्षनिमित्तः प्रत्ययः ॥ ५७ ॥

अजादी । नियमार्थ इति । अन्यथा प्रकर्षेऽजाद्योर्विधानादप्रकर्षे विधिः स्यात् । सिद्धे विधिरिति । स्वरितत्वादतिशायनस्यानुवर्त्तनात्तत्रैव पुनर्विधानं नियमार्थमित्यर्थः ॥ ५८ ॥

प्रशस्यस्य । एवमपीति । अन्यथा तरप्तमपोरादेशविधानं स्यादिति न ज्ञापकं स्यादजादिभावस्य । यदि पुनरिति । 'अजादी' इत्यत्रानुवर्त्य प्रशस्यशब्दादजादी भवतः आदेशश्चेत्येवं व्याख्यानात् । व्यञ्जनादी इति । विशेषविहिताभ्यामजादिभ्यां बाधनात् । ज्ञापकत्वे तु नियमाऽप्रवृत्तिज्ञापनात्स्वशास्त्रेणैवाजाद्योर्विधानाद्व्यञ्जनाद्योर्बाधस्याऽप्रसङ्गः । द्विवचनविभज्योपपदे

उ०—स्वतोऽतिशये प्रतियोगित्वाऽसम्भव इत्यपि बोध्यम् । प्राधान्येनेति । विशेष्यत्वेनेत्यर्थः । गुणस्याऽप्राधान्यमिति । आर्थमित्यर्थः । वस्तुतः पाटवाऽतिशयेन द्रव्यस्याऽतिशये प्रतिपाद्ये प्रत्यय इति स्पष्टं पूर्वमुक्तमिति यथाश्रुतमेव भाष्यमित्यन्ये ॥ ५७ ॥

प्रशस्यस्य श्रः । भाष्ये—अगुणवचनानामिति । प्रशस्यशब्दस्य गुणकृता स्तुतिः प्रवृत्तिनिमित्तं, न तु गुणा इति भावः । नन्वयमादेशस्य विधिरिति विज्ञायेतेत्ययुक्तं, सिद्धान्तेऽपि तद्विधित्वस्येष्टत्वादत आह—अजादी इतीति । ननु ज्ञापकेनाऽप्यजादिविधानेन तरप्तमपौ न स्यातामत आह—नियमाऽप्रवृत्तीति ।

१—क्वाचित्कमेतत् । २—'आदेश' पा० ।

शक्यम् । व्यञ्जनादी हि न स्यातामुपाधीनां* च सङ्करः स्यात्पुनर्विधानादजाद्योः । ननु चैते विशेषा अनुवर्त्तेरन् । यद्यप्येतेऽनुवर्त्तेरन् व्यञ्जनादी तर्हि न स्याताम् ।

एवं तर्हि आचार्यप्रवृत्तिर्ज्ञापयति—'भवत एतेभ्योऽगुणवचनेभ्योऽप्यजादी' इति—यदयमजाद्योरादेशं शास्ति । ननु चोक्तं—'तयोरिति वक्तव्य'मिति । न वक्तव्यम् । प्रकृतमजादिग्रहणमनुवर्त्तते । क्व प्रकृतम् ? 'अजादी गुणवचनादेवे'ति । तद्वै प्रथमानिर्दिष्टं सप्तमीनिर्दिष्टेन चेहाऽर्थः । अर्थाद्विभक्तिविपरिणामो भविष्यति । तद्यथा,—उच्चानि देवदत्तस्य गृहाणि, आमन्त्रयस्वैनम् । 'देवदत्त'मिति गम्यते । देवदत्तस्य गावोऽश्वा हिरण्यम्, आढ्यो वैधवेयः । 'देवदत्त'इति गम्यते । पुरस्ता-

प्र०—ईयसुन्, अत्रेष्ठन्नित्युपाधिसंकरोऽपि न भवति । ननु चैत इति । अतिशायन इष्ठन् द्विवचनविभज्योपपदे ईयसुन्नित्यनुवर्त्तिष्यत इत्यर्थः । व्यञ्जनादी तर्हीति । यदि च तरप्तमपावनुवर्त्तेयातां तदा तयोरपि आदय आदेशाः स्युः तस्मात्तौ नानुवर्त्यौ । ततश्च विशेषविहिताभ्यां तयोर्बाधप्रसङ्ग एव । आचार्यप्रवृत्तिरिति । नियमाप्रवृत्तिज्ञापनद्वारेण अजादीभावो ज्ञाप्यते न तु साक्षात्, अन्यथा पुनरपि व्यञ्जनाद्योर्बाधः स्यात् ।

क्व प्रकृतमिति । अजाद्योरिति सप्तम्यन्तं न प्रकृतं, यत्तु प्रकृतमजादी इति न तदेवात्र सम्बध्यत इति प्रश्नः । अर्थादिति । सामर्थ्यादित्यर्थः । ननु चाजादी इति यथाश्रुतविभक्तिसम्बन्धे अजादिविधानार्थे संभवति कथं विभक्तिविपरिणामः शक्य आश्रयितुम् । नैष दोषः । प्रशस्यस्येति षष्ठीश्रवणात्स्थान्यादेशभावावगमादादेशस्य विधीयमानत्वात्प्राधान्यं प्रतीयते । तत्राऽजादी इत्यनुवर्त्तनादादेशविधौ प्रत्यययोर्गुणभावः । ततः सामर्थ्याद्विभक्तिविपरिणामः । विभक्तिशब्देन विभक्त्यन्तार्थ उच्यते । तस्य पूर्वशक्तित्यागेन शक्त्यन्तरोपजनेन विपरिणामव्यवहारः । प्रातिपदिकार्थ एव हि नानाशक्तियोगात्कर्मादिशब्दवाच्य इति स एव विशिष्टशक्तियुक्तो विभक्त्यन्त-

उ०—उपाधिसंकरो नेति । अत्राऽपि नियमाऽप्रवृत्तिज्ञापनादिरेव हेतुः । न तदेवाऽत्र सम्बध्यत इति । अयोग्यत्वादिति भावः । गुणभाव इति । 'उचित' इति शेषः । ततः सामर्थ्यादिति । गुणभावौचित्यरूपात्सामर्थ्यादित्यर्थः । ननु प्रथमायाः सप्तमीरूपेण विपरिणामाऽसम्भवात् कथं विभक्तिविपरिणामोऽत आह—विभक्तिशब्देनेति । नन्वजादी इति प्रथमान्तस्य प्रातिपदिकार्थ एवाऽर्थो, न तु शक्तिविशिष्ट इति कथं पूर्वशक्तित्यागपूर्वकशक्त्यन्तरोपजननकृतो विपरीणामव्यवहारोऽत आह—प्रातिपदिकार्थ एवेति । एवञ्च स्वरूपेण प्रातिपदिकार्थस्य कर्मादिव्यवहारविषयत्वाऽभावेन सकलशक्तियुक्तः प्रातिपदिकबोध्यत्वात्प्रातिपदिकार्थः । ताः शक्तयस्तु न सर्वदा तद्बोध्याः, सहकार्याभावादिति भावः । स एवेति । एवञ्च तदितरसकलशक्तिपरित्यागपूर्वकं यत्किञ्चिच्छक्तिवैशिष्ट्येन विभक्त्यन्तवाच्यः,—प्रथमाऽतिरिक्तविभक्त्यन्तवाच्य इत्यर्थः । एवञ्च प्रकृते औपश्लेषिकाधिकरणशक्तिकत्वेन बोधाद्विपरिणामव्यवहार इति भावः । तात्त्विकेऽपि भेदे इति । प्रथमा-

* अतिशायने तमबिष्ठनौ; द्विवचनविभज्योपपदे तरबीयसुनौ ५ । ३ । ५५; ५७

त्षष्ठीनिर्दिष्टं सदर्थात्प्रथमानिर्दिष्टं द्वितीयानिर्दिष्टं च भवति । एवमिहाऽपि पुरस्तात्प्रथमानिर्दिष्टं सदर्थात्सप्तमीनिर्दिष्टं भविष्यति ॥ ६० ॥

## प्रशंसायां रूपप् ॥ ५ । ३ । ६६ ॥

स्त्रीलिङ्गेनाऽयं निर्देशः क्रियते, एकवचनान्तेन च । तेन स्त्रीलिङ्गादेवोत्पत्तिः स्यादेकवचनान्ताच्च, पुंनपुंसकलिङ्गाद् द्विवचनबहुवचनान्ताच्च न स्यात् । नैष दोषः ।

प्र०—वाच्यः । अथवा तात्त्विकेऽपि भेदे शब्दस्य सारूप्यात्तत्त्वाध्यवसायाश्रयेण विभक्तिप्रत्ययत्यागोपादानाभ्यां प्रातिपदिकस्य विपरिणामव्यवहारोऽवसीयते । विभक्तेस्तूपचरितो विपरिणामव्यवहारः । न हि प्रथमायाः सप्तमीरूपेण विपरिणामसंभवः ॥ ६० ॥

प्रशंसा । इह प्रत्ययस्य विधीयमानतया प्राधान्यात्तदङ्गत्वाच्च प्रकृतेः प्रधानेन प्रशंसायाः सम्बन्धस्य न्याय्यत्वात्तस्याः प्रत्ययार्थत्वं मत्वाह—स्त्रीलिङ्गेनायमिति । ततश्च पटोः प्रशंसा पटुरूपेति प्राप्नोति । अथ पटुरूपो देवदत्त इति सामानाधिकरण्याऽप्रसङ्गः कस्मान्न चोदितः ? तत्र केचिदाहुः—दोषोपलक्षणायैतदुक्तम् । अन्ये त्वाहुः—सोऽयमित्यभेदविवक्षायां सामानाधिकरण्यं भविष्यति । भेदविवक्षा तु तथा लक्षणप्रयोगाभावान्न क्रियते । यद्येवं 'गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्ती'त्यतिशायनप्रत्ययान्तवदभिमतलिङ्गवचनयोगाद्दोषाभावः । अत्राहुः—प्रकृत्यर्थविशेषणपक्षस्योभयानुग्रहान्न्याय्यत्वादयं परिहारो भाष्यकारेण नाश्रितः । अन्ये त्वाहुः—प्रशंसामात्रे प्रत्ययविधानादन्तरङ्गत्वात् स्त्रीप्रत्ययेन भाव्यम् । पश्चात्तु—सोऽयमित्यभिसम्बन्धात्त-

उ०—प्रकृतेः सप्तमीप्रकृतेश्चेत्यर्थः । विभक्तीत्यादि । विभक्तिरूपप्रत्ययेत्यर्थः । एवञ्च प्रथमाविशिष्टस्य प्रातिपदिकस्य सप्तमीविभक्तिवैशिष्ट्येन विपरिणाम इति भावः । उपचरित इति । प्रातिपदिकगतविपरिणामारोपाश्रय इत्यर्थः ॥ ६० ॥

प्रशंसायां रूपप् । ननु स्वार्थिकत्वादेषां प्रकृत्यर्थविशेषणत्वात्कथमेतदत आह—इहेति । 'गुणानाञ्च परार्थत्वादसम्बन्धः समत्वा'दिति न्यायादिति भावः । यद्यपि भावे 'तस्याऽपत्य'मित्यादौ लिङ्गवचनस्याऽविवक्षितत्वादित्युक्तरीत्याऽत्रापि समाधानं कर्तुं शक्यम्, तथापि वास्तवं समाधानान्तरं वक्तुं पुनरत्रोपन्यासः । अभेदविवक्षायामिति । ईदृशलक्षणायाञ्च स्वलिङ्गादिपरित्यागोऽपीति पटुरूप इत्यादिसिद्धिरिति भावः । तद्ध्वनयन्नाह—भेदविवक्षा त्विति । वक्ष्यमाणमन्ये त्वित्यादि स्वरुचिग्रस्तमिति बोध्यम् । भाष्ये—स्त्रीलिङ्गादेवेत्यादि पञ्चमी—हेतौ । फलञ्चेह हेतुः । स्त्रीलिङ्गफलिकोत्पत्तिः प्राप्नोतीत्यर्थः । एकवचनान्तादिपदानि धर्मपराणि । 'तथा लक्ष्यप्रयोगाऽभावा'दिति पाठः । 'तथा लक्षणप्रयोगाऽभावा'दिति पाठे—भेदज्ञापकप्रयोगाऽभावादित्यर्थः । अतिशायनप्रत्ययान्तवदिति । गुणोऽभिधीयते क्रिया वाऽभिधीयत इति पक्षयोरित्यर्थः । दोषाऽभाव इति । 'पटुरूपेति प्राप्नोती'ति दोषाऽभाव इत्यर्थः । उभयाऽनुग्रहादिति । प्रकृतिप्रत्यययोरुभयोरप्यर्थाऽनुग्रहणादित्यर्थं अनेन प्रकृत्यर्थविशेषणत्वे बीजं कथितम् । अन्यथा गुणत्वात्तेनाऽसम्बन्धः स्यादिति बोध्यम् । अन्ये त्विति । इदमरुचिग्रस्तमित्युक्तमेव । स्त्रीत्वमात्रमिति । प्राशस्त्यविशिष्टार्थगतं

नायं प्रत्ययार्थः । किं तर्हि ? प्रकृत्यर्थविशेषणमेतत्—'प्रशंसायां' यत्प्रातिपदिकं वर्तते तस्माद्रूपब्भवति' । कस्मिन्नर्थे ? स्वार्थ इति । स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते ।

**प्रकृतेर्लिङ्गवचनाभावात्तिङ्प्रकृतेररूभावबवचनम् ॥ १ ॥**

प्रकृतेर्लिङ्गवचनाभावात्तिङ्प्रकृते रूपपोऽम्भावो वक्तव्यः । पचतिरूपम् पचतोरूपम् पचन्तिरूपमिति ।

प्र०—द्वदभिधानेऽप्यन्तरङ्गः स्त्रीप्रत्ययो न निवर्तेत प्रत्ययार्थविशेषणपक्षे । प्रकृत्यर्थविशेषणपक्षे कुमारिरूपेत्यव्यतिरिक्तं वय इति ङीप् कस्मान्न भवति । कुमारशब्दादुत्पन्ने न ङीपा वयोविशिष्टार्थगतस्य स्त्रीत्वस्य द्योतितत्वाद्रूपबन्तात् स्त्रीत्वमात्रमभिव्यङ्क्तुं टाबेव क्रियते । ननु ङीपैव तदभिव्यक्तमिति टाब् न प्राप्नोति । नैतदस्ति—कुमारिरूप इत्युच्यमाने कुटीरादिवल्लिङ्गान्तरं प्रतीयेत । तस्मादवश्यमभिव्यङ्क्तव्यं स्त्रीत्वमिति टाबुत्पद्यते । अयमेव च परिहार आतिशायिकप्रत्ययानां स्वार्थिकत्वपक्षे कुमारितरेत्यादावभिधानीयः । तिङ्प्रकृतेरिति । तिङ्प्रकृतिर्यस्य रूपपः, ततः परस्या विभक्तेरम्भावो वक्तव्यः । एका च क्रियेति । आख्यातशब्दात् क्रियाभेदस्यानवगमात्क्रियाया एकत्वमुच्यते । भवद्भिरास्यत इत्यादौ तु केवलक्रियावचने द्विवचनबहुवचनाऽदर्शनात्, पचतः पचन्तीत्यादौ लकारवाच्यकर्तृसमवेतद्वित्वबहुत्वाश्रयो वचनभेद इति न ततः क्रियाभेदसिद्धिः । एकत्वाच्च क्रियाया रूपप्प्रत्ययान्ताद्द्विवचनबहुवचनाऽभावः । द्रव्यप्रधानं नामेति,—प्रसङ्गेनोक्तं न त्वस्य कश्चित्प्रकृतोपयोगः । किं देवदत्तः करोतीति । करोतिरत्र क्रियासामान्यवचनः । तत्र विशेषपरिज्ञानाय किं शब्दः क्रियाविशेषणं प्रवर्त्तते, क्रियाविशेषणत्वाच्च किमित्येतद्द्वितीयान्तं नपुंसकं च । प्रकरणादिवशाच्च क्रियाप्रश्नावगतिः । गुणद्रव्यविषयस्यापि

उ०—स्त्रीत्वम्, न तु वयोमात्रविशिष्टार्थगतं स्त्रीत्वमित्यर्थः । अत एव 'गोरूपे'त्यादौ न ङीष् । तदभिव्यक्तमिति । वयोविशिष्टार्थगते तस्मिन्नभिव्यक्ते उक्तं स्त्रीत्वमात्रमप्यभिव्यक्तमेवेत्यभिमानः ।

लिङ्गान्तरमिति । न च तादृशप्रतीतिरनुभवसिद्धेति टाबवश्यमुत्पाद्य इत्यभिमानः । मदुक्तव्याख्यानरीत्या तु शङ्कैव नेति ध्येयम् । ननु साधनभेदाक्रियाया भेदेन कथमेका क्रिया, किञ्च तस्यां सङ्ख्याया अभावादेकेत्यप्ययुक्तमत आह—आख्यातशब्दादिति । आख्यातशब्दस्तिङन्ते शक्तो लोकव्यवहारात् । तेन—तदन्तशब्दादित्यर्थः । स्वतस्तस्यां भेदाऽनवगमेन द्वित्वाद्यभावः, एकत्वसत्ता च आकाश इवेति भावः । तत्र द्वित्वाद्यभावे एकत्वसत्त्वे च युक्तिमाह—भवद्भिरित्यादि । वचनाऽदर्शनादिति । एकवचनदर्शनाच्चेत्यपि बोध्यम् । कर्तृसमवेतद्वित्वेति । तदारोपाश्रय इत्यर्थः । तस्यैवारोपः शब्दशक्तिस्वभावात्, न कालादिगतस्य, नाऽपि तद्वाच्यकारकगतस्य । अत एव 'दश दिनानि देवदत्तः पचति' 'भवद्भिरास्यते' 'तण्डुलान् पचती'त्येकवचनमेव, तत्कृतं रूपाद्यन्तात् द्विवचनादि तु न, तस्य तिङैवोक्तत्वादिति भावः । एतेन 'ङ्याप्प्रातिपदिका'दिति सूत्रस्थया हरिभाष्यसंमतस्वोक्त्या विरुद्धोऽयं ग्रन्थ—इति परास्तम् । क्रियाया असत्त्वलिङ्गकत्वेतरसङ्ख्याराहित्यमेवेति बोध्यम् । भाष्ये—द्रव्यप्रधानं नामेति । नामशब्देन

## सिद्धं तु क्रियाप्रधानत्वात् ॥ २ ॥

सिद्धमेतत् । कथम् ? 'क्रियाप्रधानत्वात्' । क्रियाप्रधानमाख्यातं भवति, एका च क्रिया । द्रव्यप्रधानं नाम । कथं पुनर्ज्ञायते क्रियाप्रधानमाख्यातं भवति, द्रव्यप्रधानं नामेति ? यत्क्रियां पृष्टस्तिङाऽऽचष्टे—'किं देवदत्तः करोति' ? 'पचती'ति । द्रव्यं पृष्टः कृताऽऽचष्टे—'कतरो देवदत्तः' ? यः कारको [ यो[2] ] हारक इति ।

प्र०—प्रश्नस्य संभवात्,—वायकः किं शुक्लं वस्त्रं करोत्यथ कृष्णम् ? तथा किं शाटकं करोत्यथ प्रावारकमिति । केचित्तु क्रियाप्रश्नेऽप्यभूततद्भाववचनं करोतिं मन्यन्ते । किं करोति–कां–क्रियां निर्वर्त्तयतीत्यर्थः । तत्राख्यातवति प्रश्नवाक्ये प्रकरणादिवशात् क्रियाप्रश्नावगमादाख्यातेनैवोत्तरोपादानात्कालसङ्ख्यासाधनोपग्रहाभिधानेऽप्याख्यातस्य क्रियाप्रधानत्वाऽवगमः । एकपदोपात्तार्थाऽपेक्षश्च क्रियाप्रधानत्वमभिधीयते । 'व्रीहीनवहन्ती'त्यादौ व्रीहिद्रव्यसंस्कारार्थत्वादवघातस्याऽप्राधान्यम् । अथवा यद्यप्यार्थं व्रीहीणां प्राधान्यं तथापि साध्यत्वात्क्रियाया शाब्दं प्राधान्यं न तु व्रीहीणां साधनत्वात् । द्रव्यं पृष्ट इति । यद्यपि 'यः पचतीति तिङन्तेनापि उत्तरं भवति, तथापि सर्वनाम्ना परामृश्य पाकक्रियाया यः कर्त्ता स देवदत्त इत्यभिधानात्केवलेनाख्यातेनोत्तरस्याऽदा-

उ०—सुबन्तम्, तस्य सत्तालिङ्गसङ्ख्याकारकद्रव्यार्थकत्वेन तदपेक्षया द्रव्यस्य प्राधान्यम् । तस्य विभक्त्यर्थसम्बन्धम्प्रति विशेषणत्वेन 'काण्डे' इत्यादौ विभक्त्यर्थप्रधानत्वोक्तिरविरुद्धा । ननु'देवदत्तः किं करोती'ति कर्मविषयप्रश्ने कथं क्रियामात्रवाचकेनोत्तरम् । किञ्च कृञ उत्पत्त्यनुकूलव्यापारवाचित्वेन तद्विषयप्रश्ने कथं 'पचती'त्युत्तरमत आह—करोतिरत्रेत्यादि । द्वितीयान्तमिति । प्रथमान्तमिति वक्तुं युक्तम्, फलविशेषणत्वाऽभावेन मुख्यव्यापारविशेषणत्वेन च कर्मत्वाऽप्राप्तेः । प्रश्नाऽवगतिरिति । जिज्ञासाविषया देवदत्तकर्तृका क्रियेति बोधः । प्रकरणादिवशाच्चेत्यस्य कृत्यं दर्शयति-गुणद्रव्येत्यादि । अभूतेति । अभूततद्भावः—उत्पत्तिः, तदनुकूलो व्यापारो धात्वर्थः । कां क्रियामिति । किम्पदञ्च कर्मपरम् । तच्च प्रकरणादित एव क्रियारूपकर्मपरमिति भावः । उपग्रहः—परस्मैपदात्मनेपदनिमित्तविशेषः । अत एव 'भावकालकारकसङ्ख्याश्चत्वारोऽर्था आख्यातस्ये'ति निरुक्तभाष्य उक्तम् । आख्यातेनोत्तरोपादाने हेतुः—क्रियाप्रश्नाऽवगमः । तत्र हेतुः—प्रकरणादि । तत्र क्रियाप्रश्नाऽवगमेन प्रश्ने क्रियाप्रधानत्वाऽवगमः, तत एवोत्तरेऽपि तत्त्वाऽगवमः । 'पश्य मृगो धावती'त्यादौ धावनाद्यर्थस्य दर्शि प्रति विशेषणत्वादाह—एकपदोपात्तार्थाऽपेक्षश्चेति । तदुपात्तकारकाऽपेक्षं प्राधान्यमित्यर्थः । तत्फलमन्यदप्याह—व्रीहीति । तथा च भिन्नपदोपात्तव्रीह्यपेक्षयाऽप्राधान्येऽपि न क्षतिः । नन्वेवं 'पच्यते' इत्यादौ स्वपदोपात्तकर्मकारकाऽपेक्षयाऽपीदृशमप्राधान्यं दुर्वारमत आह—अथवेति । 'क्रियाप्रधान'मित्यत्र शाब्दमेव प्राधान्यं विवक्षितमित्यर्थः । यः कर्त्तेति । यत्कर्तृका पाकक्रिया स इत्यर्थः । परामृश्येत्यस्य–बुद्धिस्थीकृत्येत्यर्थः । इत्यभिधनादिति । इत्यर्थकयोत्तरस्याऽभिधानात्कथनादित्यर्थः ।

१–तत्रैतन्नामाख्यातयोर्लक्षणं प्रदिशन्ति—भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि ।' ( निरुक्ते १ । १ । १ )

२–'य' इति न सर्वत्र दृश्यते ।

यदि तर्ह्येका क्रिया द्विवचनबहुवचनानि न सिध्यन्ति—पचतः पचन्तीति। नैतानि क्रियापेक्षाणि। किं तर्हि? साधनापेक्षाणि। इहापि तर्हि प्राप्नुवन्ति—पचतिरूपम् पचतोरूपम् पचन्तिरूपमिति। तिङोक्तत्वात्तस्याऽभिसम्बन्धस्य न भविष्यति। एकवचनमपि तर्हि न प्राप्नोति। समयाद्भविष्यति†। द्विवचनबहुवचनान्यपि तर्हि समयात्प्राप्नुवन्ति। एवं तर्ह्येकवचनमुत्सर्गतः करिष्यते—तस्य द्विबह्वोरर्थयोर्द्विवचन-बहुवचने अपवादौ भविष्यतः। एवमपि नपुंसकत्वं वक्तव्यम्। न वक्तव्यम्। 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति।

प्र०—नादाख्यातस्य साधनप्रधानत्वाऽप्रसङ्गः। पदान्तरेण हि द्रव्योपलक्षणार्थं गुणभावं क्रिया नीयते। यदि तर्हीति। क्रियागतसङ्ख्यापेक्षं वचनभेदं मन्यते। नैतानीति। लकारादिवाच्यकर्तृ-कर्मगतसङ्ख्यापेक्षो वचनभेद इत्यर्थः। तिङोक्तत्वादिति। 'उक्तार्थानामप्रयोग' इति न्यायात्। एकवचनमपीति। 'पचतिरूप'मित्यत्र तिङोक्तत्वादिति भावः। समयादिति। 'परश्चे'ति नियमान्न केवला प्रकृतिः प्रयोक्तव्येत्येवंरूपात्। द्विवचनबहुवचनान्यपीति। तैरपि समयस्य परिपालनात्। यद्यपि प्राथम्यादेकवचनेनैव समयः पाल्यत इति परिहारसम्भवस्तथापि परिहारान्तरमाह—एकवचनमिति। 'द्व्येकयोर्द्विवचनैकवचने' इत्यत्रैकवचनग्रहणं न कर्तव्यम्। 'द्वयोर्द्विवचन'मित्येव कर्तव्यम्। तत्र 'ङ्याप्प्रातिपदिकात्स्वादयो भवन्ती'ति सङ्ख्यानिरपेक्षमेकवचनमुत्सर्गो भवति। तस्य द्वित्वबहुत्वयोर्द्विवचनबहुवचनयोरपवादयोर्विधानादेकत्ववत्यर्थे अभेदैकत्ववति च सङ्ख्यारहि-

उ०—स इत्यनेन पाकक्रियाकर्तृत्वविशिष्टस्य बोधात्। क्रियायाः प्राधान्याऽनुपपत्तिमाशङ्क्याह—पदान्तरेणेति। आख्यातपदे एव स नियम इति भावः। क्रियागतेति। 'अनारोपिते'त्यादिः। सङ्ख्यापेक्ष इति। साधनग-तसङ्ख्यारोपापेक्ष इत्यर्थः। यत्त्विदम्भाष्यमाख्यातार्थसङ्ख्यायाः कारकेऽन्वय इत्येवम्परतया व्याख्येयमिति, तन्न, प्रागुक्तेन 'एका क्रिये'त्यनेन एकत्वस्य प्रकृत्यर्थेऽन्वयलाभेन द्वित्वादीनां कारकेऽन्वये वैरूप्यापत्तेः। तस्मादारोपपरमेव भाष्यं व्याख्यातुमुचितम्। अत एव भाष्ये द्विवचनाद्यसिद्धिरेव शङ्किता न तु वचनमात्रा-ऽसिद्धिरिति दिक्। तत्र 'गौणी मुख्या चोत्तरा सङ्ख्या पूर्वसङ्ख्यां बाधते' इ'त्यइउण्'सूत्रभाष्योक्तेर्न 'पचत' इत्यादौ स्वगतैकत्वप्रयुक्तं कार्यमिति बोध्यम्। ननु क्रियाया एकत्वाश्रयत्वे 'तद्धितश्चे'ति सूत्रस्थेन—'किंचिदव्ययं विभक्त्यर्थप्रधानं, किञ्चित्क्रियाप्रधानं, न चैतयोरर्थयोर्लिङ्गसङ्ख्याभ्यां योगोऽस्ती'त्यनेन विरोधः। अव्ययवा-च्ययोरेतयोरर्थयोर्न ताभ्यां योग इति तदर्थेनाऽविरोधात्। उक्तार्थानामिति। आरोपितसङ्ख्याया उक्तत्वान्न तदाश्रयं वचनं स्यादचन्तात्, किन्तु स्वगतैकत्वाश्रयमेवेति भावः। न केवलेति। प्रातिपदिकत्वेनाऽस्यापि तत्र प्रकृतित्वादिति भावः। तैरपीति। अनुवादकविभक्तेर्न्याय्यत्वाच्चेत्यपि बोध्यम्। एवञ्च 'यद्यपी'त्यादि चिन्त्यम्।

१–'समयः शपथाचारसिद्धान्तेषु' इति मेदिनी।

† प्रकृतिपर एव प्रत्ययः प्रयोक्तव्यः प्रत्ययपरैव च प्रकृतिरिति।' ३। १। २ वा० ११ भाष्ये।

२–'॥उक्तं वा॥ किमुक्तम्?' इत्यधिकं क्वचित्।

## वृषलादिभ्य उपसङ्ख्यानम् ॥ ३ ॥

वृषलादिभ्य उपसङ्ख्यानं कर्तव्यम् । वृषलरूपः दस्युरूपः चौररूपः इति ।

## सिद्धं तु प्रकृत्यर्थवैस्पष्ट्यवचनात् ॥ ४ ॥

सिद्धमेतत् । कथम् ? प्रकृत्यर्थस्य वैस्पष्ट्य इति वक्तव्यम् । वृषलरूपोऽयम्, अप्ययं पलाण्डुना सुरां पिबेत् । चौररूपोऽयम्, अप्ययमक्ष्णोरञ्जनं हरेत् । दस्युरू-

प्र०—तेऽव्ययाद्यर्थे चाऽवस्थितमेकवचनम् । तस्मादेकचनेनैवात्र समयः पाल्यते न तु द्विवचन-बहुवचनाभ्यां तिङोक्तार्थाभ्यामित्यर्थः । लिङ्गमशिष्यमिति । शास्त्रोपदेशेन विनापि सिद्धिर्लिङ्गस्य लोकव्यवहारगम्या ।

वृषलादिभ्य इति । वृषलादीनां निकृष्टत्वादुत्कृष्टविषयत्वाच्च प्रशंसायास्तत्राऽभावं मन्यते । न्यासान्तराश्रयेण सिद्धिं मत्वाह—सिद्धं त्विति । ननु प्रशंसायामित्येव सिद्धः प्रत्ययः, सर्वस्य हि वस्तुनः स्वव्यापारेऽतिशयात् प्रशंसा क्रियते, वृषलादीनामप्यसावस्ति । एवं तर्हि यदा निन्दाप्रतिपादनाय चोररूप इत्युच्यते तदा प्रत्ययाऽप्रसङ्गाद्व्यापकं वैस्पष्ट्यग्रहणमेव कर्त्तव्यम् । सत्येव पाटवादेर्वैस्पष्ट्ये प्रशंसासद्भावाद्विवक्षावशाच्च येषामेव प्रशंसावाचित्वं तेषामेव निन्दावचनत्वं दृश्यते । यथा राक्षस इति,—पौरुषातिशयप्रतिपादने प्रशंसा गम्यते, निर्घृणत्वप्रतिपादने तु निन्दा । अथ तमबादीनां रूपपश्च को विषयविभागो—यावता अतिशायनमपि

उ०—न कर्त्तव्यमिति । 'तद्धितश्चे'ति सूत्रे त्वेकग्रहणं न कर्त्तव्यम्, एकवचनमित्येवाऽप्राप्तप्रापणार्थं सूत्रं कर्त्तव्यमित्युक्तम् । 'पचतिरूप'मित्यादौ सर्वैकवचनत्वनभिधानाद्वारणीयं तत्पक्षे इति बोध्यम् । अभेदैकत्ववर्तीति । यथा 'राजपुरुष' इत्यादिवृत्तेरर्थबोधनाय प्रयुक्ते 'राज्ञः पुरुष' इत्यादौ । नन्वेवं द्विशब्दादावप्युत्सर्गेणैकवचनेनैव समयपालनाद्द्विवचनाद्यनापत्तिः, अनुवादकविभक्तेर्न्याय्यत्वे तु प्रकृतेऽपि तुल्यमिति चेन्न, द्वयोरेकस्य बहुषु 'राज्ञां त्रयाणा'मित्यादि निर्देशैरुत्सर्गेणैव नियमपालनमिति नियमस्य सङ्ख्याशब्देऽनङ्गीकारेण तत्राऽर्थतो व्यवस्थयैवाऽनभिहितसूत्रोक्त्या समयपालनाऽङ्गीकारेणाऽदोषात् । तदाह—एकवचनेनैवाऽत्र समय इति । ननु वृषलत्वस्य पूर्णत्वे प्रशंसा भवत्येवेति सूत्रेणैव सिद्धमत आह—वृषलादीनां निकृष्टत्वादिति । न च वृषलत्वस्य जातित्वात्कथं निकृष्टत्वमिति वाच्यं, सहचरितधर्मनिकृष्टत्वेन तथा व्यवहारात् । वैस्पष्ट्यग्रहणस्य व्यापकत्वमुपपादयितुं वैस्पष्ट्ये सत्येव प्रशंसेत्याह—सत्येवेत्यादि । सूत्रेणैवाऽमुमर्थं साधयितुमाह—विवक्षावशाच्च येषामेवेति । एवञ्च प्रकृत्यर्थताऽवच्छेदकस्य तत्सहचरितगुणानां वा

१–'वैशिष्ट्य' पा० ।

२–पलाण्डुभक्षणं सुरापानं च धर्मशास्त्रनिषिद्धम् ( मनु० ५ । ५ ) ( ११ । ९३—९४ ), ( याज्ञवल्क्य० १ । ७ । १७६ ) ( ३ । ५ । २५६ ), (वासिष्ठधर्मशास्त्रे १४ । ३३ ) ( २१ । ११; १५ ) इति । यः पुनः पलाण्डुना सुरां पिबति स तु नितरां निन्दार्हत्वाद् वृषलरूप उच्यते । एवं चौररूपदस्युरूपौ व्याख्येयौ ।

पोऽयम्, अप्ययं धावतो लोहितं पिबेत् ॥ ६७ ॥

## ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ॥ ५ । ३ । ६७ ॥

### ईषदसमाप्तौ क्रियाप्रधानत्वाल्लिङ्गवचनानुपपत्तिः ॥ १ ॥

ईषदसमाप्तौ क्रियाप्रधानत्वाल्लिङ्गवचनयोरनुपपत्तिः । [ पटुकल्पम् पटुकल्पा ] पटुकल्पः पटुकल्पौ पटुकल्पा इति । एकोऽयमर्थ ईषदसमाप्तिर्नाम तस्यैकत्वादेकवचनं प्राप्नोति ।

### प्रकृत्यर्थविशेषणत्वात्सिद्धम् ॥ २ ॥

सिद्धमेतत् । कथम् ? नायं प्रत्ययार्थः । किं तर्हि ? प्रकृत्यर्थविशेषणमेतत्, ईषद-

प्र०—पूजानिन्दाविषयम्—पटुतमः पापीयानिति । रूपप्प्रत्ययोऽप्युभयविषयः—पटुरूपः चोररूप इति । उच्यते—अतिशायनं समानप्रतियोग्यपेक्षं, वैस्पष्ट्यं तु तन्निरपेक्षमिति स्पष्ट एव विषयविभागः । 'अप्ययं पलाण्डुने'त्यादौ गर्हायामपिशब्दः कर्मप्रवचनीयसंज्ञः ॥ ६६ ॥

ईषदसमाप्तौ । प्रत्ययानां विधेयतया प्राधान्यात्तदर्थत्वमीषदसमाप्तेर्मत्वाह—ईषदसमाप्ताविति । ईषदसमाप्तौ यथेष्टं लिङ्गवचनाऽसिद्धिरित्यर्थः । एकवचनमिति । एकत्वादीषदसमाप्तेः । षष्ठीप्रसङ्गं तु न चोदयति, गुणगुणिनोरिह सर्वदा सोऽयमित्यभेदसम्बन्धस्य विवक्षितत्वाद्भेदनिबन्धनायाः षष्ठ्या अप्रसङ्गात् । यद्येवं गुणवचनानामाश्रयतो लिङ्गवचनानीति लिङ्गवचनदोषोऽपि नास्ति । नैवं शक्यम् । इह गुडकल्पा द्राक्षा बहुगुडा द्राक्षेति,—यदि ईषदसमाप्तेर्द्राक्षाश्रयत्वं तदा

उ०—पूर्णत्वमेवाऽत्र प्रशंसा, तस्य परिपूर्णत्वेन क्वचिन्निन्दाप्रतीतिस्तु प्रकरणादिवशाद्बोध्येति न दोषः । प्रशंसापराणामपि निन्दावचनत्वे दृष्टान्तमाह—यथेति । उदाहरणे—पलाण्डुनेति—सहयोगे तृतीया । पलाण्डुभोजनेऽपि वृषलत्वं, तत्सहितसुरापाने तु तदधिकमिति बोध्यम् । अपिर्गर्हायाम् । सर्वत्र सम्भावनायां लिङ् । दस्युर्हिंसकः सन् परस्वाऽपहर्त्ता । वैस्पष्ट्यमिति । प्रशंसाया अप्युपलक्षणमेतत् ॥ ६६ ॥

ईषदसमाप्तौ । भाष्ये—क्रियाप्रधानत्वादिति । स्त्रीत्वविशिष्टक्रियाप्रधानत्वादित्यर्थः । ईषदसमाप्तिः—आरोपितेषदसमाप्तिः । भावे क्तिन्निति भावः । भाष्ये—एकोऽयमर्थं इति । सूत्रे एकवचनान्तत्वेनोपादानादित्यर्थः । इदमुपलक्षणं 'स्त्रीलिङ्ग' इत्यस्यापि । 'एकवचन'मिति स्त्रीप्रत्ययस्याऽपि । षष्ठीप्रसङ्गमिति । 'देवदत्तस्य पटुकल्प' इति स्यादिति भावः । द्राक्षाश्रयत्वमिति । गुडस्येषदसमाप्तिरिति:विग्रहः । गुडाश्रयत्वे वृत्तित्वं सम्बन्धः षष्ठ्यर्थः । द्राक्षाश्रयत्वे प्रतियोगित्वं सम्बन्धः । गुडकल्पेति न सिध्यतीति । गुडाश्रयत्वे-

१–कोष्ठबद्धः पाठो गुरुप्रसादशास्त्रिसंस्करण एव वर्तते । स च वार्तिकस्थ'लिङ्ग'पदस्योदाहरणभूतत्वादावश्यकः प्रतीयते ।

समाप्तौ यत्प्रातिपदिकं वर्तते तस्मात्कल्पबादयो भवन्ति । कस्मिन्नर्थे ? स्वार्थ इति । स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते ।

**प्रकृत्यर्थे चेल्लिङ्गवचनानुपपत्तिः ॥ ३ ॥**

प्रकृत्यर्थे चेल्लिङ्गवचनयोरनुपपत्तिः—गुडकल्पा द्राक्षा तैलकल्पा प्रसन्ना पयस्कल्पा यवागूरिति ।

**सिद्धं तु तत्सम्बन्ध उत्तरपदार्थे प्रत्ययवचनात् ॥ ४ ॥**

सिद्धमेतत् । कथम् ? तत्सम्बन्धे—ईषदसमाप्तिसम्बन्ध उत्तरपदार्थे प्रत्ययो

प्र०—बहुगुड इति न सिध्यति । अथ गुडाश्रयत्वं ततो गुडकल्पेति न सिध्यति । का पुनर्द्राक्षायां गुडस्येषदसमाप्तिः ? येन माधुर्येण गुणेन द्राक्षायां गुडशब्दो वर्तते, तस्येषदसमाप्त्या गुडस्येषदसमाप्तिः । प्रकृत्यर्थविशेषणत्वादिति । उभयानुग्रहादेव हि प्रकृतिरप्यनुगृहीता भवति प्रत्ययोऽपि द्योतकत्वात्तस्याः । एवं च स्वार्थिकत्वात्प्रकृतितो लिङ्गवचनानि सिध्यन्ति । यत्र तु नेष्यते तत्र 'णचः स्त्रियाम'ञिति ज्ञापकेन तदतिवृत्तिरिति वक्ष्यते ।

प्रकृत्यर्थे चेदिति । ननु गुडकल्पा द्राक्षेत्यादौ गुड इयं द्राक्षेत्यभेदविवक्षायां गुडादयो द्राक्षायां वर्त्तमानाः प्रत्ययमुत्पादयन्तीति द्राक्षादिगतलिङ्गवचनोपपत्तौ नास्त्यव्याप्तिदोषः । नैतदस्ति । गुडादयः शब्दा इवार्थाभ्यन्तरीकरणेन सोयमित्यभेदसम्बन्धेन द्राक्षादिषु वर्त्तमाना अपरित्यक्तस्वलिङ्गसङ्ख्या एव वर्तन्ते तत्र 'बहुगुडो द्राक्षे'त्यादिसिध्यति । गुणशब्देभ्यश्च पट्वादिभ्यः कल्पादिषु दोषाभावो, जातिशब्देभ्यस्तु कल्पादिषु भिन्नलिङ्गसङ्ख्यजात्यभिधाने गुडकल्पा द्राक्षेत्यादौ दोषः ।

सिद्धं त्विति । यद्यप्युत्तरपदशब्दः समासावयवे रूढस्तथापीह प्रकृत्यर्थस्य पश्चात्प्रत्ययार्थस्य भावात्प्रत्ययार्थविशेषवाचिनि द्राक्षादिपदे यौगिको वर्त्तते, तेन गुडादिभ्य उपमानवाचिभ्य

उ०—ऽनुभवविरोधोऽपि बोध्यः । का पुनरिति । द्रव्यस्येषदसमाप्त्यसम्भवादिति भावः । येन माधुर्येणेति । गुणशब्दप्रयोगप्रयोजकमाधुर्यमुखप्रतियोगिकत्वं सम्बन्धः षष्ठ्यर्थ इति भावः । उभयाऽनुग्रहादिति । ईषदसमाप्तिपदं तद्विशिष्टे औपचारिकम् । एवं पूर्वत्र प्रशंसापदं बोध्यम् । यत्र त्विति । 'गुडकल्पा द्राक्षे'त्यादौ । अभेदविवक्षायामिति । तादृशविवक्षायां शुक्लादौ स्वगतलिङ्गादिपरित्यागदर्शनादिति भावः । इवार्थाऽभ्यन्तरीकरणेनेति । अभ्यन्तरीकरणं—मूलत्वेनाश्रयणम्, इवार्थस्याभ्यन्तरीकरणं यत्रेत्यभेदसम्बन्धेनेत्यस्य विशेषणम् । तन्मूलकाऽभेदसम्बन्धेनेति यावत् । सादृश्यमूलकातिरिक्ताऽभेदसम्बन्धेन वृत्तौ हि तत्त्यागः । तन्मूलकाऽभेदसम्बन्धेनाऽन्यत्र वृत्तौ तु न स्वलिङ्गादित्याग इति भावः । गुणशब्देभ्यः पट्वादिभ्यश्चेति । तेषां त्रिलिङ्गत्वेनाऽपरित्यक्तलिङ्गादीनामेव प्रवृत्तेरिति भावः । ईषन्न्यूनौ पटू पटुकल्पाविति द्विवचनादेरपि सिद्धिः । जातिशब्देभ्यस्त्विति । प्रायेण ते नियतलिङ्गाः । ईषन्न्यूनो गुड इत्यर्थेऽपि 'गुडकल्पे द्राक्षे' इतीष्यत इति भावः ।

दोष इति । प्रकृतिलिङ्गातिक्रमो दोषः । वार्त्तिके—तत्सम्बन्ध इति बहुव्रीहिः । तद्ध्वनयन्व्याचष्टे भाष्ये—तत्सम्बन्धे इति । पश्चात्प्रत्ययार्थस्येति । प्रत्ययार्थस्य विशेष्यत्वमेवेति सूचयति । प्रत्ययार्थस्य

भवतीति वक्तव्यम् । सिध्यति । सूत्रं तर्हि भिद्यते ॥ यथान्यासमेवास्तु । ननु चोक्तमीषदसमाप्तौ क्रियाप्रधानत्वाल्लिङ्गवचनानुपपत्तिरिति । परिहृतमेतत्—'प्रकृत्यर्थविशेषणत्वात्सिद्ध'मिति । ननु चोक्तं—'प्रकृत्यर्थे चेल्लिङ्गवचनानुपपत्ति'रिति । नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति—'स्वार्थिका अतिवर्तन्तेऽपि लिङ्गवचनानी'ति, यदयं 'णचः स्त्रियामञ्' [ ५ । ४ । १४ ] इति स्त्रीग्रहणं करोति । यद्येतज्ज्ञाप्यते—बहुगुडो द्राक्षा, बहुतैलं प्रसन्ना बहुपयो यवागूरित्यत्रापि प्राप्नोति । नाप्यतिवर्तन्ते ।

किं पुनरिहोदाहरणम् ? पटुकल्पः मृदुकल्प इति । नैतदस्ति । निर्ज्ञातस्याऽर्थस्य समाप्तिर्वा भवति विसमाप्तिर्वा, गुणश्चाऽनिर्ज्ञातः । इदं तर्हि गुडकल्पा द्राक्षा, तैलकल्पा प्रसन्ना, पयस्कल्पा यवागूरिति । द्रव्यमप्यनिर्ज्ञातम् ॥ इदं तर्हि—कृतकल्पम् शुक्लकल्पम् पीतकल्पमिति ।

प्र०—उपमेये द्राक्षादौ प्रत्यय इत्युक्तं भवति,—गुड इवेयं द्राक्षेषदसमाप्ता गुडकल्पेति । यद्यप्युपमानग्रहणं नोपात्तं तथापि सामर्थ्यादत्रोपमानोपमेयभाव आश्रीयते । पट्वादिभ्योऽपि तत्रैव प्रत्ययोत्पत्तिर्यस्य परिपूर्णं पाटवं स लोके पटुरिति प्रसिद्धः, तेन तुल्य ईषदसमाप्तः पटुकल्पो देवदत्त इति तत्सम्बन्ध इति वचनादीषत्सादृश्ये प्रत्ययाऽभावः ।

सिध्यतीति । यद्यप्यस्मिन्पक्षे बहुगुडो द्राक्षेत्यादि न सिध्यति, द्राक्षादिगतलिङ्गवचनप्रसङ्गात्तथाप्युक्तदोषपरिहारात् सिध्यतीत्युक्तम् । स्त्रीग्रहणमिति । 'कर्मव्यतिहारे णच् स्त्रिया'मिति स्त्रीलिङ्गे भावे णचो विधानात्तदन्तादञ्प्रत्ययः स्वार्थिकत्वात्स्त्रियामेव भविष्यतीति स्त्रीग्रहणं न कर्तव्यम् । तत्क्रियमाणं—लिङ्गवचनातिवृत्तिं ज्ञापयति । नापीति । उत्तरसूत्रे तुग्रहणाद्वक्ष्यमाणनियमार्थात्प्रकृतेर्ये लिङ्गवचने ते एव बहुच्युत्पन्ने भवतः । अथवा स्त्रीग्रहणेनानुवृत्तिनियमाऽभावो ज्ञाप्यते इत्यनुवृत्त्यतिवृत्ती यथाप्रयोगं भवतः । अथवा 'कासूगोणीभ्यां ष्टर'चिति षित्करणेन स्त्रियां ङीषर्थेनानुवृत्तिरपि ज्ञाप्यत इत्युभयसिद्धिः ।

किं पुनरिति । गुणशब्दानामनन्तपरिमाणविषयत्वाद्गुणसम्बन्धमात्रेण मन्दमध्यमोत्कृष्टगुणे सर्वत्र वर्त्तनादीषदसमाप्ते रभावं मत्वा प्रश्नः । निर्ज्ञातस्येति । अयमेवेत्येवं निश्चितस्येत्यर्थः । विसमाप्तिश्चे ति । नञर्थे विशब्दः । गुणश्चानिर्ज्ञात इति । इयदेव पाटवमितीयत्तया न ज्ञायते

उ०—द्रव्याऽभेदेनैव प्रतीतेराह—प्रत्ययार्थस्येति । प्रत्ययार्थविशेषवाचिनीति । नन्वीषदसमाप्तिसम्बन्धेतरपदार्थे प्रातिपदिकात्प्रत्ययस्योपमानवाचकाऽतिरिक्तात्कर्त्तु मशक्यत्वेनाह—तेनेत्यादि । गुड इवेयं द्राक्षेषदसमाप्तेति । ईषदसमाप्तेत्युक्तिर्बहुसादृश्यबोधनाय । तद्ध्वनयन् वक्ष्यति—ईषत्सादृश्ये प्रत्ययाऽभाव इति । सामर्थ्यादिति । अन्यपदस्यार्थे अन्यपदात्प्रत्ययस्य सादृश्यमगर्भीकृत्याऽन्वयबोधने सामर्थ्यादित्यर्थः । वचनादिति । ईषत्सादृश्ये ईषदसमाप्तिसम्बन्धत्वाऽभावादित्यर्थः । अथवेति । 'तु'ग्रहणप्रत्याख्यानपरम् ।

ननु शुक्लादीनामल्पत्वमहत्त्ववत् पाट्वादीनामपि तत्त्वसम्भवादीषदल्पत्वमेवेषदसमाप्तिरत आह—गुणशब्दानामिति । भाष्ये—निर्ज्ञातस्येति । 'एतावाने'वेति निर्ज्ञातस्येत्यर्थः । तदाह—अयमेवेति । इयानेवेत्यर्थः ।

**क्तान्तात्प्रत्ययविधानानुपपत्तिः क्तस्य भूतकाललक्षणत्वात्कल्पादीनां चाऽसमाप्तिवचनात् ॥ ५ ॥**

क्तान्तात्प्रत्ययविधेरनुपपत्तिः । किं कारणम् ? 'क्तस्य भूतकाललक्षणत्वात्' । भूतकाललक्षणः क्तः* । 'कल्पादीनां चाऽसमाप्तिवचनात्' । विसमाप्तिवचनाश्च कल्पादयः । न चाऽस्ति संभवो यद्भूतकालश्च स्यादसमाप्तिश्चेति ।

**सिद्धं त्वाशंसायां भूतवद्वचनात् ॥ ६ ॥**

सिद्धमेतत् कथम् ? 'आशंसायां भूतवच्च' [३।३।१३२] इत्येवमत्र क्तो भविष्यति । इदं चाप्युदाहरणं—पटुकल्पः मृदुकल्प इति । ननु चोक्तं—'निर्ज्ञातस्यार्थस्य समाप्तिर्वा

प्र०—गुणः । द्रव्यमिदानीमुपन्यस्यति—इदं तर्हीति । नन्वत्र न गुडादय ईषदसमाप्ताः । किं तर्हि ? द्राक्षादिभ्य एव प्रत्ययेन भाव्यम् । नैष दोषः । यदपेक्षया परस्येषदसमाप्तिर्भवतितद्वाचिनः प्रत्ययेन भाव्यम् । तत्रैवार्थमभ्यन्तरीकृत्याऽभेदोपचाराद्गुड इव गुडो द्राक्षेति माधुर्याद्वि द्राक्षायां गुडत्वस्यारोपादारोपनिमित्तस्य माधुर्यस्येषदसमाप्तत्वाद्व गुडादिभ्यः प्रत्ययोत्पत्तिरविरुद्धा । द्रव्यमपीति । इयता माधुर्येण द्राक्षा गुड उच्यते इत्येवमपरिज्ञानाद्देशभेदेन च गुडस्य भेदात्कं गुडमपेक्ष्य द्राक्षा गुड ईषदसमाप्त उच्यत इत्येवमपरिज्ञानम् । कृतकल्पमिति । आशंसायां भूतवद्भविष्यति प्रत्ययविधानादस्तिक्रियाया ईषदसमाप्तिरुपाधिरिति भावः ।

इतरो यथोक्तमभिप्रायमप्रतिपद्याह—क्तान्तादिति । क्रियाफलनिवृत्तौ क्रियापवर्गो भवति, सति च क्रियापवर्गे कुतः क्रियाया ईषदसमाप्तिरित्यर्थः । सिद्धं त्विति । भविष्यत्कालाया ईषदसमाप्तायाः क्रियाया आशस्यमानत्वादित्यर्थः । 'ञीतः क्तः' 'मतिबुद्धिपूजार्थेभ्यश्चे'ति वर्तमानकालविषयक्तान्तादपि प्रत्ययैर्भाव्यं,—ज्ञातकल्पं पूजितकल्पमिति । तथा तिङन्तादपि—पचतिकल्पमिति । यदापि क्रियैकदेशापवर्गाश्रयेण भूते क्तो विधीयते तदापि कल्पादयो भवन्ति,—कृतकल्पं वस्त्रमिति । एवञ्च कृताऽकृतादय एकदेशकरणाऽकरणाश्रयाः प्रयोगा उपपन्नाः ।

उ०—क्वचित्तु तथैव पाठः । अत एवाऽग्रे 'इयत्तया न ज्ञायते गुण' इति वक्ष्यति । अत्र—'गुडकल्पे'त्यादौ । ईषदसमाप्ताः—माधुर्येषदसमाप्त्याश्रयाः । किन्तर्हीति । द्राक्षादिगतमाधुर्येषदसमाप्तेरेव प्रतीतेरीषदसमाप्तमाधुर्यवती द्राक्षेति बोधादिति भावः । यदपेक्षयेति । यन्निरूपितसादृश्यप्रयोजकधर्मस्येषदसमाप्तिस्तद्वाचिन इत्यर्थः । शब्दशक्तिस्वभावादिति भावः । एवञ्च सूत्रवार्त्तिकयोः समफलता भवति । ईषदसमाप्तमाधुर्यवद्गुडाऽभिन्ना द्राक्षेति बोध इति द्राक्षामाधुर्यस्याऽपीषदसमाप्तत्वमर्थलब्धमिति तयोः समफलतेति दिक् । ननु द्रव्यमक्तपरिमाणमिति कथं द्रव्यमनिर्ज्ञातमत आह—इयतेति । स्वयमुदाहरणान्तराण्याह—ञीतः क्त इति । यदाऽपीति । यथा 'प्रकृतः कट'मित्यादौ एकदेशाऽपवर्गेण भूते प्रत्यये मानमाह—कृताऽकृतेति ।

* निष्ठा ३ । २ । १०२

भवति विसमाप्तिर्वा, गुणश्चाऽनिर्ज्ञात' इति । लोकतो व्यवहारं दृष्ट्वा गुणस्य निर्ज्ञानम् । तद्यथा,—पटुरयं ब्राह्मण इत्युच्यते, यो लघुनोपायेनार्थान् साधयति । पटुकल्पोऽयमित्युच्यते, यो न तथा साधयति ।

इदं चाप्युदाहरणम्—गुडकल्पा द्राक्षा, तैलकल्पा प्रसन्ना, पयस्कल्पा यवागूरिति । ननु चोक्तं—'द्रव्यमप्यनिर्ज्ञात'मिति । लोकतो द्रव्यमपि निर्ज्ञातम् ॥६७॥

## विभाषा सुपो बहुच्पुरस्तात्तु ॥ ५ । ३ । ६८ ॥

विभाषाग्रहणं किमर्थम् ? विभाषा बहुज्यथा स्यात्, बहुचा मुक्ते वाक्यमपि यथा स्यात् । नैतदस्ति प्रयोजनम् । प्रकृता महाविभाषा†, तया वाक्यमपि भविष्यति ।

इदं तर्हि प्रयोजनं—कल्पादयोऽपि यथा स्युरिति‡ । [1]एतदपि नास्ति प्रयोजनम् । बहुजप्युच्यते कल्पादयोऽपि, तदुभयं वचनाद्भविष्यति । नैवं शक्यम् । अक्रियमाणे हि विभाषाग्रहणेऽनवकाशो बहुच्कल्पादीन्बाधेत । कल्पादयोप्यनवकाशास्ते वचनाद्भविष्यन्ति । सावकाशाः कल्पादयः । कोऽवकाशः ? तिङन्तान्यवकाशः ।

अथ सुब्ग्रहणं किमर्थम् ? सुबन्तादुत्पत्तिर्यथा स्यात्प्रातिपदिकान्मा भूदिति ।

प्र०—सकलक्रियापवर्गाश्रयभूतकालविषयक्तप्रत्ययापेक्षे तु चोद्यप्रतिसमाधाने । एवञ्च कालत्रयविषयेभ्यस्तिङन्तेभ्यः कल्पादयो भवन्ति—पचतिकल्पं पक्ष्यतिकल्पमपाक्षीत्कल्पमिति । लोकत इति । यावता माधुर्येण लोके द्राक्षायां गुडव्यवहारस्तावदाश्रय ईषदसमाप्तिसम्भवः । अथवा गुडगतमाधुर्याश्रयेण द्राक्षायां गुडत्वारोपाद्गुडजात्यभावाच्चेषदसमाप्तं गुडत्वं द्राक्षायां गुड इयं द्राक्षा गुडकल्पा द्राक्षेति प्रयोगः ॥ ६७ ॥

विभाषा । अथ सुब्ग्रहणमिति । सुबन्तस्य प्रियकुत्सनादिषु वर्तनादर्थलभ्यं सुबन्तत्व-

उ०—नन्वेवं भाष्योक्तशङ्कासमाधाने निर्दले अत आह—सकलेति । स्वोक्तेऽर्थे युक्त्यन्तरमाह—एवञ्चेति । तावदाश्रये इति । तावन्माधुर्याश्रये इत्यर्थः । ईषदसमाप्तीति । माधुर्येषदसमाप्तीत्यर्थः । अथवेति । अत्र पक्षे ईषदसमाप्तगुडत्ववती द्राक्षेति बोधः । सादृश्यन्तु पर्यवस्यति पश्चान्मानसबोधविषय इति तत्त्वम् । गुडत्वारोपादिति । आरोपविषयत्वमेवेषदसमाप्तत्वमिति भावः । आद्यमेव तु युक्तम् ॥ ६७ ॥

विभाषा सुपो । सुबन्तस्येति । इदं च 'कुत्सित' इत्यत्र भाष्ये स्पष्टम् । ननु सुबन्तस्यैवेषदसमाप्त्यादौ वृत्तिर्न प्रातिपदिकस्येत्यत आह—अन्वयेति । शास्त्रकल्पितावन्वयव्यतिरेकौ, तत्कल्पितार्थवत्ता च शास्त्रव्यवहारोपयोगिन्येवेति बोध्यम् । इति भाव इति । इत्यभिमान इत्यर्थः । नियममेव दर्शयति—पदादीति ।

† समर्थानां प्रथमाद्वा ४ । १ । ८२

‡ ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ५ । ३ । ६७

१–'ननु च बहुजप्युच्यते कल्पादयोऽप्युच्यन्ते, तदुभयं वचनाद्भविष्यति ।' पा० ।

नैतदस्ति प्रयोजनम् । नास्त्यत्र विशेषः सुबन्तादुत्पत्तौ सत्यां प्रातिपदिकाद्वा ।

यद्येवमिहापि नार्थः सुब्ग्रहणेन 'सुप आत्मनः क्यच्' [ ३ । १ । ८ ] इति । इहापि नास्ति विशेषः सुबन्तादुत्पत्तौ सत्यां प्रातिपदिकाद्वा । अयमस्ति विशेषः—सुबन्तादुत्पत्तौ सत्यां पदसंज्ञा सिद्धा भवति*, प्रातिपदिकादुत्पत्तौ सत्यां पदसंज्ञा न प्राप्नोति । ननु च प्रातिपदिकादप्युत्पत्तौ सत्यां पदसञ्ज्ञा सिद्धा । कथम् ? आरभ्यते 'नः क्ये' [ १ । ४ । १५ ] इति । तच्चावश्यं वक्तव्यम्—सुबन्तादुत्पत्तौ सत्यां नियमार्थम्, तदेव प्रातिपदिकादुत्पत्तौ सत्यां विध्यर्थं भविष्यति ।

इदं तर्हि प्रयोजनम्—'सुबन्तादुत्पत्तिर्यथा स्यात्तिङन्तान्मा भू'दिति । एतदपि नास्ति प्रयोजनम् । 'ङ्याप्प्रातिपदिकात्' [ ४ । १ । १ ] इति वर्तते ।

अत उत्तरं पठति—

प्र०—मिति प्रश्नः । प्रातिपदिकान्मा भूदिति । अन्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययानामिह शास्त्रेऽर्थवत्तापरिकल्पनात्प्रातिपदिकमपि स्वार्थादिपञ्चके प्रवर्तमानं प्रियकुत्सनादिषु प्रवर्त्तत इति ततोऽपि प्रत्ययप्रसङ्ग इति भावः । नास्त्यत्र विशेष इति । ननु सुबन्तादुत्पत्तौ सत्यां 'बहुसेच' इत्यादौ 'सात्पदाद्यो'रिति षत्वप्रतिषेधः सिध्यति, प्रातिपदिकात्तूत्पत्तौ षत्वप्रसङ्गः । नैष दोषः । सुबन्तादुत्पत्ताववश्यं पदसंज्ञानिबन्धनकुत्वादिनिषेधार्थो यत्नः कर्त्तव्यः । बहुचूर्वस्य लुमता लुप्ते पदादिविधौ प्रत्ययलक्षणमिति, तन्नियमार्थं 'पदादिविधात्रेव न पदान्तविधा'विति । एवञ्च प्रातिपदिकादप्युत्पत्तौ यत्नः करिष्यते—सात्पदाद्योर्बहुचश्चेति । अत एव तुल्यन्यायतया 'सुप आत्मनः क्य'जित्यस्य सुब्ग्रहणस्याक्षेपः । पूर्वत्र तिङो ग्रिधिरिति । अस्यैवार्थस्य ज्ञापनार्थमिह सुब्ग्रहणं, तेन पूर्वत्र प्रातिपदिकात्तिङन्ताच्च कलादयः सिध्यन्तीत्यर्थः । नैतदस्तीति । ज्ञापकमन्तरेणापि तिङोऽनुवृत्तिः सिध्यतीत्यर्थः । एवं स्वर इति । जस उदात्तत्वं स्यात् । पटुशब्दोकारस्य चेष्यत इत्यर्थः । स्वरः प्रातिपदिकत्वादिति । बहुचि कृते प्रकृतिप्रत्ययसमुदायस्यार्थवत्त्वात्समुदायाच्च जसोऽविधानात्तस्याऽप्रत्ययान्तत्वात्प्रातिपदिकसंज्ञायां सत्यां पूर्वोत्पन्नाया विभक्तेर्लुकि कृते पटुशब्दस्योकारस्योदात्तत्वं भवति । या त्वन्या विभक्तिरुत्पद्यते न सा प्रकृत्यवयव इति

उ०—अत एव तुल्यन्यायेति । तत्रत्येनाऽस्य तुल्यन्यायतां बोधयितुमित्यर्थः । आक्षेपः—तत्स्मारणम् । ननु चितोऽन्तोदात्तत्वविधानात्कथं जसः, कथं वा पटोरुकारस्वरोऽत आह भाष्ये—पठिष्यति हीति । स्वरः कथमिति । हि यत इति पठिष्यत्यतो हेतोः सुब्ग्रहणे कृते पटोरुकारस्य कथं स्वर इत्यर्थः । ननु तद्धितान्तत्वाऽभावात्कथं प्रातिपदिकत्वमत आह—बहुचीति । अप्रत्यय इति प्रतिषेध इति । स च प्रत्ययान्तविषय

* सुप्तिङन्तं पदम् १ । ४ । १४

## बहुचि सुब्ग्रहणात्पूर्वत्र तिङो विधानम् ॥ १ ॥

बहुचि सुब्ग्रहणं क्रियते पूर्वत्र तिङो विधिर्यथा विज्ञायेत ॥ नैतदस्ति प्रयोजनम् । प्रकृतं तिङ्ग्रहणमनुवर्तते । क्व प्रकृतम् ? 'अतिशायने तमबिष्ठनौ तिङश्च' [ ५ । ३ । ५५; ५६ ] इति ॥ एवं तर्हि 'बहुचि सुब्ग्रहणं पूर्वत्र तिङोविधानात् ।' बहुचि सुब्ग्रहणं क्रियते । किं कारणम् ? 'पूर्वत्र तिङो विधानात्' । पूर्वत्र 'तिङश्चे'-त्यनुवर्तते, तदिहापि प्राप्नोति । ननु च तिङ्ग्रहणं निवर्तेत । अवश्यमुत्तरार्थमनुवर्त्यम् 'अव्ययसर्वनाम्नामकच्प्राक्टेः' [ ५ । ३ । ७१ ] इति—पचतकि जल्पतकीत्येवमर्थम् ।

यदि सुब्ग्रहणं क्रियते, स्वरो न सिध्यति । बहुपटव एवं स्वरः प्रसज्येत । बहुपटव इति चेष्यते । पठिष्यति ह्याचार्य्यः—'चितः सप्रकृतेर्बह्वकजर्थ'मिति† । स्वरः कथम् ?

## स्वरः प्रातिपदिकत्वात् ॥ २ ॥

सुब्लुकि कृते‡ प्रातिपदिकत्वात्स्वरो भविष्यति ॥ अथ तुग्रहणं किमर्थम् ?

## तुग्रहणं नित्यपूर्वार्थम् ॥ ३ ॥

तुग्रहणं क्रियते नित्यं पूर्वो यथा स्याद्विभाषा मा भूदिति ॥ नैतदस्ति प्रयोजनम् । न विभाषाग्रहणेन पूर्वमभिसम्बध्यते । किं तर्हि ? बहुजभिसम्बध्यते—विभाषा

प्र०—तस्या उदात्तत्वाऽप्रसङ्गः । ननु समासग्रहणस्य नियमार्थत्वात्प्रकृतिप्रत्ययसमुदायस्य प्रातिपदिकसंज्ञा न प्राप्नोति । नैष दोषः । 'अप्रत्यय'इति प्रतिषेधो ज्ञापयति—'प्रकृतिप्रत्ययसमुदायस्य समासग्रहणेन प्रातिपदिकसंज्ञा न निवर्त्यते' इति,—अन्यथाऽप्रत्यय इति निषेधोऽनर्थकः स्यात् । नित्यपूर्वार्थमिति । पुरस्तादेवेत्येवमवधारणार्थं तुग्रहणमित्यर्थः । अन्यथा प्रत्ययवत्पूर्वत्वस्यापि विधेयतया प्राधान्याद्विभाषाग्रहणेन सम्बन्धः स्यादिति भावः । किं तर्हि बहुजिति । बहुजेव

उ०—एव न प्रत्ययविषय इति भावः । एतच्च तत्रैव निरूपितम् । ननु 'तु'ग्रहणे पूर्वत्वस्य नित्यत्वं कथं बोधयितुं शक्यमवाचकत्वादित्यत आह—पुरस्तादेवेति । विशेष इति । देशविशेष इत्यर्थः । ननु देशविशिष्टप्रत्ययस्य विधेयत्वात्तस्याऽपि विधेयतालक्षणं प्राधान्यमस्त्येवेत्यत आह—ततश्चेति । गुणस्येति । विधेयांशे विशेषणत्वाद्गुणस्येत्यर्थः । पुरस्तादेव सर्वमिति । यत्सर्वं लिङ्गादि प्रत्ययोत्पत्तेः पुरस्ताद्वर्त्तते तदेव सर्वं भवतीत्य-

† ६ । १ । १६३ वा० १

‡ सुपो धातुप्रातिपदिकयोः २ । ४ । ७१

बहुज्भवतीति । यदा च भवति, तदा नित्यं पूर्वो भवति ।

इदं तर्हि प्रयोजनम्—प्रागुत्पत्तेर्येल्लिङ्गं वचनं च तदुत्पन्नेऽपि प्रत्यये यथा स्यात्—बहुगुडो द्राक्षा, बहुतैलं प्रसन्ना, बहुपयो यवागूरिति ।

एतदपि नास्ति प्रयोजनम् । स्वार्थिकोऽयं, स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते ॥ एवं तर्हि सिद्धे सति यत्तु ग्रहणं करोति तज्ज्ञापयत्याचार्यः—'स्वार्थिका अतिवर्तन्तेऽपि लिङ्गवचनानी'ति । किमेतस्य ज्ञापने प्रयोजनम् ? गुडकल्पा द्राक्षा, तैलकल्पा प्रसन्ना, पयस्कल्पा यवागूरित्येतत्सिद्धं भवति ।

## तमादिभ्यः कल्पादयो विप्रतिषेधेन ॥ ४ ॥

तमादिभ्यः कल्पादयो भवन्ति विप्रतिषेधेन* । तमादीनामवकाशः—प्रकर्षस्य वचनमीषदसमाप्तेरवचनम्—पटुतरः पटुतमः । कल्पादीनामवकाशः—ईषदसमाप्तेर्वचनं प्रकर्षस्याऽवचनम्—पटुकल्पः मृदुकल्पः । उभयवचन उभयं प्राप्नोति—पटुकल्पतरः मृदुकल्पतरः । कल्पादयो भवन्ति विप्रतिषेधेन ॥ यद्येवमीषदसमाप्तेः प्रकर्षे तमादिः प्रत्ययः प्राप्नोति प्रकृतेरेव च प्रकर्ष इष्यते ।

प्र०—विधेयत्वात्प्रधानं विभाषाग्रहणेन सम्बध्यते । तस्य तु परदेशव्यावृत्तये 'पुरस्ता'दित्यनेन विशेषणेन विशेषो निर्दिश्यते, ततश्च विभाषाग्रहणेन पुरस्तादित्यस्य गुणस्य सम्बन्धाभावो 'गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्या'दिति न्यायात् । प्रागुत्पत्तेरिति । तुशब्दो नियमार्थः,—पुरस्तादेव सर्वं भवतीति । तेन लिङ्गसंख्ये प्रकृतिगते भवतः, प्रयोगश्च प्राक्प्रकृतेः—पटुकल्पतर इति ।

ननु परत्वात्कल्पबादिभिर्बाधितत्वात्तरप्तमब्भ्यां न भाव्यम् । नैष दोषः । कल्पबादिभिः प्रकर्षस्याऽद्योतनात्पुनः प्रसङ्गविज्ञानात्कल्पबाद्यन्तात्प्रकर्षज्ञापनाय तरप्तमपौ भवतः । प्रकृतेरेवेति । कल्पबादीनां या प्रकृतिः पट्वादिः तदर्थस्यैव प्रकर्षः सम्भवति, नत्वीषदसमाप्तेः । असमा-

उ०—स्पष्टार्थः । प्रयोगश्चेति । पुरस्तात्पदमावर्त्तत इति भावः । भाष्ये—यत्तुग्रहणमिति । यदि तु पूर्वसूत्रोक्तरीत्या स्त्रीग्रहणमत्रार्थे ज्ञापकमित्युच्यते तदेदम्प्रत्याख्येयम् । उभयं प्राप्नोतीति । 'पटुतरकल्प' इत्यपि कदाचित्स्यादिति भावः । भाष्ये—तमादिरीषत्प्रधानत्वादिति । कल्पान्तस्येषदसमाप्तिप्रत्ययकत्वादित्यर्थः । प्रधानत्वन्तु कल्पप्रयोगस्य तन्मात्रबोधकफलकत्वादिति बोध्यम् । तत्र च प्रकर्षोऽसम्भवात्तत्प्रकृत्यर्थप्रकर्ष एव

* अतिशायने तमबिष्ठनौ; ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ५ । ३ । ५५; ६७

## तमादिरीषत्प्रधानात् ॥ ५ ॥

तमादिरीषत्प्रधानादपि भवन् यस्य प्रकर्षोऽस्ति तस्य प्रकर्षे भविष्यति । कस्य च प्रकर्षोऽस्ति ? प्रकृतेरेव ॥ ६८ ॥

## अव्ययसर्वनाम्नामकच्प्राक् टेः ॥ ५ । ३ । ७१ ॥

## कस्य च दः ॥ ५ । ३ । ७२ ॥

किमयं सुबन्तस्य प्राक्टेर्भवत्याहोस्विन्ङ्याप्प्रातिपदिकस्य ? कुतः सन्देहः ? उभयं प्रकृतम्† । अन्यतरच्छक्यं विशेषयितुम् । किं चातः ? यदि सुबन्तस्य—युष्मकाभिः अस्मकाभिः, युष्मकासु अस्मकासु, युवकयोः आवकयोरिति न सिध्यति । अथ प्रातिपदिकस्य—त्वयका मयका, त्वयकि मयकीत्यत्रापि प्राप्नोति । अस्तु सुबन्तस्य । कथं युष्मकाभिः अस्मकाभिः, युष्मकासु अस्मकासु, युवकयोः आवकयोरिति ? अनोकारसकारभकारादाविति वक्तव्यम् ।

## अकच्प्रकरणे तूष्णीमः काम् ॥ १ ॥

अकच्प्रकरणे तूष्णीमः काम्वक्तव्यः‡ ।

आसितव्यं किल तूष्णीकाम् [ 'एतत्पश्यत चिन्तितम् ] ।

प्र०—ननुप्रकर्षे समाप्तावीषदर्थाभावान्नास्तीषदसमाप्तेः प्रकर्षः ॥ ६८ ॥

अव्यय । अन्यतरदिति । प्रातिपदिकस्य प्राक् टेरकज्भवति, सुबन्तस्य वा प्राक्टेरित्येवं प्राक्टेरित्यनेनान्यतरच्छक्यते विशेषेऽवस्थापयितुमित्यर्थः । तूष्णीमः कामिति । मित्त्वादचोऽ-

उ०—तमादिः प्रत्यय इत्यर्थः । न त्वीषदसमाप्तेरिति । न हीषदर्थस्याऽसमाप्तेर्वा प्रकर्षे ईषदसमाप्तिर्भवतीति भावः ॥ ६८ ॥

अव्ययसर्व । भाष्ये—उभयं प्रकृतमिति । एकमधिकारात्, सुबन्तन्तु सामर्थ्यादिति बोध्यम् । ननु 'प्राक्टे'रित्यस्य सुबन्तं प्रातिपदिकं वा विशेषणम्, न तु 'प्राक्टे'रित्येतत्तस्येति,—'अन्यतरच्छक्यं विशेषयितु'मित्यसङ्गतम्, 'अन्यतरेण शक्यं विशेषणयितु'मित्युचितमत आह—विशेषेऽवस्थापयितुमिति । तत्र सुबन्तस्येति युष्मदस्मद्विषयकमेव, अन्यत्र तु प्रातिपदिकस्यैव टेरिति बोध्यम्, उदाहरणपरभाष्यप्रामाण्यात् । अज्ञा-

१–'प्रधानत्वात्' पा० ।

† विभाषा सुपो बहुच् पुरस्तात्तु ५ । ३ । ६८; ङ्याप्प्रातिपदिकात् ४ । १ । १

‡ मिदचोऽन्त्यात् परः १ । १ । ४७ १ कोष्ठबद्धः पाठः क्वाचित्कः ।

शीले को मलोपश्च ॥ २ ॥

शीले को मलोपश्च वक्तव्यः । तूष्णीं शीलः तूष्णीकः ।

इह भिनत्ति च्छिनत्तीति—श्नमि कृते शप्प्राप्नोति* । बहुकृतम् बहुभुक्तम् बहुपीतम्—बहुचि कृते कल्पादयः प्राप्नुवन्ति† । उच्चकैः नीचकैः—अकचि कृते कादयः प्राप्नुवन्ति‡ । ननु च श्नम्बहुजकचोऽपवादास्ते बाधका भविष्यन्ति ।

श्नम्बहुजकत्तु नानादेशत्वादुत्सर्गप्रतिषेधः ॥ ३ ॥

श्नम्बहुजकत्तु नानादेशत्वादुत्सर्गस्य प्रतिषेधो वक्तव्यः । समानदेशैरपवादैरुत्सर्गाणां बाधनं भवति, नानादेशत्वान्न प्राप्नोति ।

कविधेस्तमादयः पूर्वविप्रतिषिद्धम् ॥ ४ ॥

कविधेस्तमादयो भवन्ति पूर्वविप्रतिषेधेन+ । कविधेरवकाशः—कुत्सादीनां वचनं प्रकर्षस्यावचनम्—पटुकः मृदुकः । तमादीनामवकाशः—प्रकर्षस्य वचनं कुत्सादीनामवचनम्—पटुतरः पटुतमः । उभयवचन उभयं प्राप्नोति—पटुतरकः पटुतमकः । तमादयो भवन्ति पूर्वविप्रतिषेधेन ।

प्र०—न्त्यात्परः काम्भवति । अज्ञाताद्यर्थाविवक्षायां तूष्णीमित्येव भवति । शीले क इति । शीलं स्वभावो नियमश्च । अज्ञाताद्यपवादः शीलं, शब्दशक्तिस्वभावाच्च तद्वांस्तूष्णीक उच्यते । इह भिनत्तीति । भिन्नदेशत्वाद्विरोधाभावादनेकेनापि प्रत्ययेन प्रदीपेनेव घटादेर्गार्ग्यायण्यां ष्फङीष्भ्यां स्त्रीत्वस्येवाज्ञातादेरेकस्यार्थस्य द्योतनमविरुद्धं मन्यमानो वार्तिककार उत्सर्गप्रतिषेधं शास्ति । भाष्यकारस्तु विरोधमन्तरेणापि सामान्यविधेर्बाधकं विशेषविधिमन्यत्रादीदृशत् । कविधेरिति । अज्ञातः प्रकृष्टः पटुरित्यर्थद्वयविवक्षायां पटुतमक इति भवति । छिन्नकतरमिति । 'अनत्यन्तगतौ क्ता'दिति कनि कृते तरप् । अर्धपिप्पलिकेति । कुत्सितमर्धपिप्पल्या इत्याद्यर्थविवक्षायां समासे

उ०—ताद्यपवादः शीलमिति । तक्रकौण्डिन्यन्यायादिति भावः । विधेयविषयत्वात्तस्य न्यायस्येदं चिन्त्यम् । यदि नेष्यते तत्र कस्तदाऽनभिधानान्न । तद्वानिति । 'शीले' इत्यर्श आद्यजन्तं बोध्यम् । तूष्णीक इति । 'केऽण' इति ह्रस्वाऽभावः, अणन्ताद्विहिते के एव ह्रस्वविधानात् । भाष्यकारस्त्विति । 'सत्यपि सम्भवे बाधनं भवती'त्यादिना । कुत्सितमर्धमिति । अन्यथा 'अर्धकपिप्पली'ति स्यादिति भावः । पूर्वं समासे स्वरे विशेष

* रुधादिभ्यः श्नम्; कर्तरि शप् ३ । १ । ७८; ६८

† विभाषा सुपो बहुच् पुरस्तात्तु; ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ५ । ३ । ६८; ६७

‡ अव्ययसर्वनाम्नामकच् प्राक् टेः; प्रागिवात् कः ५ । ३ । ७१; ७०

\+ प्रागिवात् कः; अतिशायने तमबिष्ठनौ ५ । ३ । ७०; ५५

**कदाचिच्छिन्नकतरादयः ॥ ५ ॥**

कदाचिच्छिन्नकतरादयो भवन्ति वि¹प्रतिषेधेन । छिन्नकतरम् छिन्नकतमम् ।

**एकदेशिप्रधानश्च समासः ॥ ६ ॥**

एकदेशिप्रधानश्च समासः कविधेर्भवति पूर्वविप्रतिषेधेन । अर्धपिप्पलिका अर्धकोशातकिका* ।

**उत्तरपदार्थप्रधानश्च संज्ञायां कन्विध्यर्थम् ॥ ७ ॥**

उत्तरपदार्थप्रधानश्च समासः कविधेर्भवति पूर्वविप्रतिषेधेन । किं प्रयोजनम् ? 'संज्ञायां कन्विध्यर्थम्' । संज्ञायां कन् यथा स्यात् × । नवग्रामकम्, नवराष्ट्रकम्, नवनगरकम् ।

**कदाचिद् द्वन्द्वः ॥ ८ ॥**

कदाचिद् द्वन्द्वः कविधेर्भवति पूर्वविप्रतिषेधेन । प्लक्षकन्यग्रोधकौ, प्लक्षन्यग्रोधकाविति वा ॥ ७१ ॥ ७२ ॥

## कुत्सिते ॥ ५ । ३ । ७४ ॥

इह कुत्सितकः अनुकम्पितक इति स्वशब्देनोक्तत्वात्तस्यार्थस्य प्रत्ययो न

प्र०—कृते ततः कप्रत्ययः । नवग्रामकमिति । समासात्संज्ञायां कनिति कुत्सायां ह्रस्वत्वे वा कनि सत्याद्युदात्तत्वं भवति । पूर्वं तु कनि सति पश्चात्समासे क्रियमाणेऽन्तोदात्तत्वप्रसङ्गः । अत्र संज्ञा कुत्सनादिहेतुका विषयभावेनास्ति, सामानाधिकरण्यं च पदयोरिति युगपत्कार्यद्वयप्रसङ्गादस्ति विप्रतिषेधः ॥ ७१ ॥ ७२ ॥

कुत्सिते । स्वशब्देनोक्तत्वादिति । अनिर्धारितविशेषेऽर्थे यदा प्रकृतिर्वर्तते तदा तद्विशेषद्योतनाय स्वार्थिकः प्रत्ययो विधीयते, यदा तु निर्ज्ञातविशेष एवार्थे कुत्सितादयः शब्दा

उ०—दर्शयति—समासादिति । 'दिक्सङ्ख्ये संज्ञायां'मिति समासः । यद्वा नवश्चासौ ग्रामश्चेति समासः । संज्ञायां कनिति सूत्रद्वयम्, एकं 'कुत्सिते' इत्युत्तरम्, अपरं 'ह्रस्वे' इत्युत्तरम् । कुत्सायां ह्रस्वत्वे च कन्भवति, तदन्तेन चेत्संज्ञा गम्यत इति तयोरर्थः । उभयोर्युगपत्प्राप्तिमुपपादयति—अत्र संज्ञेति ॥ ७१ ॥ ७२ ॥

कुत्सिते । नन्वेषां स्वार्थिकत्वेन प्रकृत्युक्त एवाऽर्थे एते प्रत्यया इति किमुच्यते स्वशब्देनोक्तत्वादत आह—अनिर्धारितेति । विशेषाः—कुत्सादयः । अश्वादयश्च जातिविशिष्टमेवाऽर्थं कप्रत्ययरहिताः प्रतिपादय-

१–'पूर्वविप्रतिषेधेन' पा० ।     * अर्धं नपुंसकम् २ । २ । २

× संज्ञायां कन्; संज्ञायां कन् ५ । ३ । ७५; ८७; ञ्नित्यादिर्नित्यम् ६ । १ । १९७

प्राप्नोति । नैष दोषः । कुत्सितस्यानुकम्पायां* भविष्यति, अनुकम्पितस्य कुत्सायाम् ।

अथवा—

स्वार्थमभिधाय शब्दो निरपेक्षो द्रव्यमाह समवेतम् ।
समवेतस्य च वचने लिङ्गं वचनं विभक्तिं च ॥ १ ॥

प्र०—वर्त्तन्ते तदा विशिष्टस्यार्थस्यप्रतीतत्वाच्चरितार्थत्वात् प्रत्ययाऽप्रसङ्गः । प्रतीतप्रत्यायनेऽनवस्थाप्रसङ्गादिति भावः । कुत्सितस्येति । अर्थान्तराश्रयः प्रत्यय इत्यर्थः । अथवेति । कुत्सितकुत्सायामपि कुत्सितक इति भवतीत्यर्थः । स्वशब्दोऽत्रात्मीयवचनोऽर्थशब्दोऽभिधेयवचनः । स्वोऽर्थः—स्वार्थः । स चानेकप्रकारो जातिगुणक्रियासम्बन्धस्वरूपलक्षणः । गौ शुक्लः पाचको राजपुरुषो डित्थ इति । तं स्वार्थमभिधाय तेन स्वार्थेन समवेतं सम्बद्धं द्रव्यमाह शब्दो निरपेक्ष इत्यनेनैतद्दर्शयति यथा द्रव्येऽभिधातव्येऽस्वार्थोऽपेक्ष्यते न तथा स्वार्थेऽभिधातव्येऽर्थगतं निमित्तान्तरमपेक्ष्यते । द्रव्यशब्देन 'इदं त'दिति परामर्शयोग्यं वस्त्वभिधीयते । तत्र जातिशब्दो यदा जातौ वर्त्तते तदाऽऽरोपितस्वरूपां स्वरूपेणैकीकृतां जातिमाहेति तदा तेषां स्वरूपं स्वार्थः, जातिस्तु द्रव्यम् । यदा तु जातिविशिष्टं द्रव्यमाह तदा जातिः स्वार्थः । शुक्लादयो यदा तु गुण-

उ०—न्तीति भावः । तत्र कुत्साविशिष्टार्थबोधकताद्योतकः प्रत्यय उचितो न प्रकृते, प्रत्ययं विनाऽपि तद्विशिष्टार्थबोधकत्वादिति तात्पर्यम् । चरितार्थत्वादिति । उक्तार्थत्वादिति भावः । अनवस्थेति । पुनः पुनः कप्रत्ययापत्तिरिति भावः । कुत्सितकुत्सायामपीति । अपिनाऽनुकम्पायाम् । जातीति । 'नाऽगृहीतविशेषण'न्यायेन तस्यैव पदशक्यत्वादिति भावः । क्रियासम्बन्धेति । यद्यपि पाचकशब्देऽपि क्रियासम्बन्ध एव प्रवृत्तिनिमित्तमिति 'तस्य भाव'इति सूत्रे उक्तम्, तथापि वसिष्ठब्राह्मणन्यायेन 'क्रियासम्बन्धे'त्युक्तिः । स्वरूपेति । स्वरूपपदेन पदस्वरूपं व्यक्तिस्वरूपञ्चेति बोध्यम् ।

'सम्बद्ध'मित्यर्थकस्य नियमेन प्रतियोगिसाकाङ्क्षत्वादाह—तेन स्वार्थेनेति । समवेतं—समवादेन सम्बद्धमित्यर्थः । यथा द्रव्ये इति । शब्दान्निष्प्रकारकोपस्थितेरभावादित्यर्थः ।

स्वार्थेऽभिधातव्ये इति । विशेषणतयेत्यर्थः । केचित्त्वेवं व्याख्याने वक्ष्योऽनुपपत्तिः, न हि प्रातिपदिकमात्रात्प्रक्रियादशायामपि प्रवृत्तिनिमित्ततदाश्रययोः क्रमेण बोधो भवति, तस्मात्स्वार्थं—जात्यादिकं, शब्दस्तद्विषयकाऽभिधाग्रहविषयो भूत्वा निरपेक्षस्तच्छक्तिग्रहेतरानपेक्षः सम्बद्धं द्रव्यमाहेत्यर्थः । तस्यैव शक्तिग्रहविषयत्वेन तत्रैव स्वार्थत्वव्यवहार' इत्याहुः । स्वरूपेण—शब्दस्वरूपेण । एकीकृतामिति । मिश्रीकृतां, तादात्म्येन विशिष्टामित्यर्थः । जातिप्राधान्येऽपि यथा भावप्रत्ययाऽनुत्पत्तिस्तथोक्तम् । 'घटसम्बन्धी धर्म' इत्येवं बोधाऽननुभवाच्च न तदुत्पत्तिः । गुणसामान्यं—गुणगता जातिरित्यर्थः । समवेतस्येति । सम्बद्धस्य समवायिन इत्यर्थः । तदभिधाने सति तत्प्रत्ययसापेक्षो लिङ्गाद्याहेत्यन्वयः ।

* अनुकम्पायाम् ५ । ३ । ७६

१–'भविष्यति' इति क्वचिन्न ।

अभिधाय तान्विशेषानपेक्षमाणश्च कृत्स्नमात्मानम् ।
प्रियकुत्सनादिषु पुनः प्रवर्त्ततेऽसौ विभक्त्यन्तः ॥ २ ॥

प्र०—जातौ वर्त्तन्ते तदा तेषां स्वरूपं स्वार्थः,—जातिर्द्रव्यम् । यदा तु गुणे वर्त्तन्ते तदा गुणसामान्यं स्वार्थो, गुणो द्रव्यम् । यदा द्रव्ये वर्त्तन्ते तदा गुणः स्वार्थः । समवेतस्य द्रव्यस्याभिधाने सति लिङ्गं वचनं विभक्ति चाहेति सम्बन्धः । तान्विशेषानिति । लिङ्गादीनामेव परामर्शः । लिङ्गं-स्त्रीत्वादि, वचनं संख्या, विभक्तिः कारकं कर्मादि । क्वचिल्लिङ्गसंख्याकारकाण्येव स्वार्थो यथा—स्त्री पुमान्नपुंसकम्, एको द्वौ बहवः, कर्म करणं सम्प्रदानमिति । प्रवृत्तिनिमित्तलिङ्गसङ्ख्या-व्यतिरिक्तलिङ्गसङ्ख्याभिधानं यत्र—यथा—स नपुंसकोऽभवत्, गावो—विंशतिरिति,—तत्राऽयमेव क्रमो, यत्र तु प्रवृत्तिनिमित्तव्यतिरिक्तलिङ्गसंख्याऽसम्भवः—स्त्री पुमानेको द्वौ बहव इति, तत्र पुनर्लिङ्गसङ्ख्ययोरभिधानाभावः । यद्यपि लोके पदादुच्चरिताद्युगपत्पञ्चार्थाः प्रतीयन्ते शब्दस्य विरम्य व्यापाराभावात्तथाप्यन्वयव्यतिरेकाभ्यां शास्त्रे संव्यवहाराय कल्पिताभ्यां प्रातिपदिकस्या-ऽप्रयोगार्हस्य कल्पितामर्थवत्तां कल्पितन्यायवशात्क्रमवतीमाश्रित्येदमुच्यते । तदा हि—'नागृहीत-विशेषणा विशेष्ये बुद्धि'रिति न्यायात्पूर्वं स्वार्थाभिधानेन भाव्यम् । पश्चात्तद्विशिष्टस्य लिङ्गाद्या-श्रयस्य द्रव्यस्याभिधानेन, ततो भेदापेक्षबहिरङ्गसंख्यापेक्षया लिङ्गमन्तरङ्गमिति तदभिधीयते । ततः सङ्ख्या । सा हि विजातीयक्रियापेक्षसाधनापेक्षया तुल्यजातीयापेक्षाऽन्तरङ्गा । सङ्ख्या-विधानानन्तरं तु कारकाभिधानम् । एतान्विशेषानभिधाय स्वार्थादिपञ्चकवृत्तं कृत्स्नमात्मानमपेक्ष-माणः शब्दः प्रियकुत्सनादिषु विभक्त्यन्तः पुनः प्रवर्त्तते । पुनःशब्दस्तुशब्दस्यार्थे वर्त्तते । विभ-

उ०—लिङ्गादीनामेवेति । स्वार्थद्रव्ययोर्विशेषत्वाऽभावादिति भावः । यत्र यथेति । नपुंसकपदस्य प्रवृत्तिनिमित्तं नपुंसकत्वं, तद्व्यतिरिक्तञ्च पुंस्त्वम् । एवं विंशतिरित्यत्रैकत्वम् । यत्र प्रकृतिनिमित्ताऽतिरिक्त-लिङ्गाद्यभिधानं यथा 'नपुंसक'इत्यादि तत्राऽयमेव क्रम'इत्यन्वयः । तत्र पुनर्लिङ्गेत्यादि । तत्र तु प्रवृत्तिनि-मित्ताऽतिरेकेण लिङ्गाद्यभिधानाऽभाव इत्यर्थः । कल्पितन्यायवशादिति । 'अर्थवत् प्रातिपदिकं' प्रातिपदिका-न्ङ्याप्, ङ्यन्तात्स्वादयः' इत्येवं कल्पितन्यायलब्धक्रमेत्यर्थः । यद्वा प्रत्यक्षस्थले किञ्चिदंशे दृष्टक्रमस्याऽत्रा-रोपेण क्रमवत्त्वाऽभिमान इति भावः । नाऽगृहीतेति । 'नाऽगृहीतविशेषणा बुद्धिर्विशेष्ये उपजायते' इति न्यायादिति भावः । तद्विशिष्टस्येत्यनेन । उक्ते द्रव्यस्य लिङ्गादितः प्रथममभिधाने बीजकथनम् । लिङ्गाद्या-श्रयस्येति । न चैवमुक्तन्यायेन लिङ्गस्याऽपि प्रथमतो बोधापत्तिः । 'रमे'त्यादौ लिङ्गस्य प्रत्ययं विना बोधाऽ-भावेन तस्य प्रथमतो बोधस्य वक्तुमशक्यत्वमिति भावात् । 'तुल्यजातीयाऽपेक्षान्तरङ्गेति पाठः । एकत्वमपि द्वित्वादिव्यवच्छेदबुद्धिजननात्तदपेक्षमिति बोध्यम् । स्वार्थादिपञ्चके—वृत्तं—वर्त्तनं वृत्तिर्यस्येत्यर्थः । रूपमर्थश्च शब्दस्यात्मेति तज्ज्ञाने कृत्स्नात्मलाभ इति भावः । 'प्रियकुत्सनादिबोधनाय कृत्स्नमात्मानं यतोऽपेक्षमाणो भवत्यतस्तान्विशेषानभिधाय तद्गतकुत्सनादिबोधनाय विभक्त्यन्तस्तु प्रवर्त्तते' इत्यन्वयः । अनेन 'पञ्चकं प्रातिपदिकार्थं' इत्युक्तम् । विभक्त्यन्तस्त्विति । तत्तत्प्रयुक्तकार्यस्याऽन्तरङ्गत्वात्पूर्वं प्रकृतेरिति भावः । अत्रैवार्थे—'घकालतनेषु' इति लिङ्गम् । प्रवृत्तिनिमित्तकुत्साऽतिरिक्तायामिति । यथा सर्वोऽपि शब्दः स्वार्थव्यतिरिक्तां स्वार्थादिगतां कुत्सामभिधातुं प्रत्ययं लभते तथाऽयमपीत्यर्थः ।

कथं पुनरिदं विज्ञायते—कुत्सितादीनामर्थ इति, आहोस्वित्कुत्सितादिसमानाधिकरणात्प्रातिपदिकादिति ? कश्चात्र विशेषः ?

**कुत्सितादीनामर्थे चेल्लिङ्गवचनानुपपत्तिः॥ १ ॥**

कुत्सितादीनामर्थे चेल्लिङ्गवचनयोरनुपपत्तिः,—पटुकम् पटुका, पटुकः पटुकौ पटुका इति । एकोऽयमर्थः कुत्सितं नाम, तस्यैकत्वादेकवचनमेव प्राप्नोति ।

प्र०—क्यन्तस्त्वित्यर्थः । तत्र कुत्सितशब्दप्रवृत्तिनिमित्तव्यतिरिक्तायां कुत्सितत्वस्य कुत्सायां कप्रत्यय उपपन्नो भवति । यथा प्रकृष्टतम इति । प्रकृष्टस्य प्रकर्षे तमप्प्रत्ययः । तथा कुत्सितत्वं यदा कुत्स्यते,—नास्य सम्यक्कुत्सितत्वमिति,—तदा प्रत्ययः ।

अन्ये त्वाहुः—अनिर्द्धारितविशेषधर्मनिबन्धना कुत्सा कुत्सितशब्दप्रवृत्तिनिमित्तं, ब्रह्महत्यादिविशेषनिबन्धना तु कुत्सा प्रत्ययनिबन्धनम् । अनुकम्पितक इत्यत्रापि प्रयोक्तृधर्मेऽनुकम्पायां प्रवृत्तिनिमित्तव्यतिरिक्तायां कप्रत्ययः । केचित्तु— निरपेक्षत्वं शब्दस्य स्वार्थादिपञ्चकाभिधाने मुख्यसत्तानपेक्षणाद् बुद्ध्युपारूढोपचरितार्थसत्तामात्रापेक्षणाद् व्याचक्षते । तत्र परिसमाप्तस्वार्थादिपञ्चकस्य पदस्य कुत्सादिषु प्रवृत्तिर्यस्मात्स्वार्थादयः कुत्सादिहेतवः । तथा हि कश्चित्स्वार्थकुत्सया कुत्स्यते—पटुकः पण्डितक इति । कश्चिल्लिङ्गेन, यथा—'प्राप्य गाण्डीवधन्वानं विद्धि कौरवकान् स्त्रिय'इति । कदाचित्सङ्ख्यया, यथेदमेककमेव शतमिति । 'शतभरणे यद्दुःखं तदेकस्य भरणे'इति शतत्वारोपेण कुत्सा । यत्र तु प्रवृत्तिनिमित्तकुत्सा न सम्भवति,—देवदत्तको डित्थक इति,तत्राभिधेयसहचरितधर्मान्तराश्रयकुत्साश्रयः प्रत्ययः ।

कथं पुनरिति । यदा कुत्सितशब्दो भावसाधनः—कुत्सा कुत्सितमिति, तदा प्रत्ययार्थपक्षः । यदा तु कर्मसाधनः—कुत्स्यत इति कुत्सितं,—मत्यादिसूत्रे चकारस्यानुक्तसमुच्चयार्थत्वाद्वर्त्तमाने क्तः,—क्रियावयवव्यपवर्गाश्रयो भूते वा,—तदा कुत्सितार्थवाचिनः कप्रत्ययो भवतीति सामानाधिकरण्यपक्षोपपत्तिः । कः पुनर्वक्ष्यमाणस्य प्रकृत्यर्थविशेषणपक्षस्य सामानाधिकरण्यपक्षस्य

उ०—नाऽस्य सम्यक्कुत्सितत्वमिति । कुत्साप्रयोजकसकलानाचरणादिति भावः । अन्ये त्वाहुरिति । अत्राऽरुचिर्भाष्यस्वरससिद्धत्वाऽभावः । केचित्त्विति । एतन्मते 'अनपेक्षमाण' इत्यस्य बहिःसत्तामनपेक्षमाण इत्यर्थः । तत्तत्प्रत्ययाऽनपेक्षत्वस्यैव 'अपेक्षमाणश्च कृत्स्नमात्मान'मिति भाष्यतो लाभादिदमप्यरुचिग्रस्तम् । स्वार्थादिपञ्चकपूर्णस्येतरत्र वृत्तिरित्युपादानस्य प्रकृतोपयोगं दर्शयति—तत्र परिसमाप्तेत्यादि । कुत्सादिहेतव इति । 'आश्रयतये'ति शेषः । स्वार्थः—प्रवृत्तिनिमित्तम् । यथा गाण्डीवेति । तत्र हि 'अर्जुनसन्निधौ किमेते पुमांस' इति प्रतीयत इति भावः । यत्र प्रवृत्तिनिमित्तेति । इदं लिङ्गादीनामुपलक्षणम् । एवं प्रकृतेऽपि कुत्सितशब्दार्थनिष्ठकुत्सान्तरविवक्षायां प्रत्ययः सुलभ इति भावः । पक्षद्वयोपपत्तिद्वारेण संशये बीजमाह—यदेति । ननु 'कुत्सित'मिति भूते क्ते अतीतकुत्सा प्रतीयते, अश्वकादिशब्दैश्च विद्यमानकुत्सस्य प्रतीतिरिति विरोधोऽत आह—वर्त्तमाने क्त इति । क्रियाऽवयवेति । यस्य कस्यचिदवयवस्य भूतत्वेन समुदाये भूतत्वमारोप्य क्तः । तत्रारोपितभूतत्वेऽपि केषाञ्चिदवयवानां वास्तववर्त्तमानत्वेन न क्षतिरिति

अस्तु तर्हि—'कुत्सितादिसमानाधिकरणात्प्रातिपदिका'दिति ।

**कुत्सितादिसमानाधिकरणादिति चेदतिप्रसङ्गो यथा टाबादिषु ॥ २ ॥**

कुत्सितादिसमानाधिकरणादिति चेदतिप्रसङ्गो भवति, यथा टाबादिषु । कथं च टाबादिषु ? उक्तं तत्र* 'स्त्रीसमानाधिकरणादिति चेद्भूतादिष्वतिप्रसङ्ग'इति । एवमिहापि कुत्सितादिसमानाधिकरणादिति चेदतिप्रसङ्गो भवति—इदं घृतकम् इदं तैलकम् । इदंशब्दादपि प्राप्नोति ।

**सिद्धं तु येन कुत्सितादिवचनं तद्युक्तात्स्वार्थे प्रत्ययविधानात् ॥ ३ ॥**

सिद्धमेतत् । कथम् ? येन कुत्सितादयोऽर्था गम्यन्ते तद्युक्तात्स्वार्थे प्रत्ययो भवतीति वक्तव्यम् । सिध्यति । सूत्रं तर्हि भिद्यते ॥ यथान्यासमेवास्तु । ननु चोक्तं 'कुत्सितादीनामर्थे चेल्लिङ्गवचनानुपपत्ति'रिति । नैष दोषः । नायं प्रत्ययार्थः । किं तर्हि ? प्रकृत्यर्थविशेषणमेतत्—'कुत्सितादिषु यत्प्रातिपदिकं वर्तते तस्मात्कादयो

प्र०—च विशेषः ? उच्यते,—समानाधिकरणपक्ष उपात्तकुत्सोऽनुपात्तकुत्सो वा कुत्सितत्वोपलक्षितार्थवृत्तिः प्रत्ययमुत्पादयति । प्रकृत्यर्थविशेषणपक्षे त्वङ्गीकृतकुत्सादेव प्रत्ययेन भाव्यम् । तत्र प्रकृत्यर्थविशेषणपक्षेऽनुगृहीतकुत्सपदसामानाधिकरण्येऽव्ययसर्वनामशब्देभ्यः प्रत्ययेन न भाव्यम्,—पटुको नीचैरयं देवदत्त इति । यदा त्वङ्गीकृतकुत्सपदान्तराऽप्रयोगः तदा तेभ्य एवाश्रितकुत्सेभ्यः प्रत्ययो भवति,— नीचकैरसकौ देवदत्तक इति । लिङ्गवचनानुपपत्तिरिति । यथेष्टं लिङ्गवचनानुपपत्तिरित्यर्थः । एतच्चोपलक्षणं,—कुत्सनमात्रस्य प्रत्ययेनाभिधाने षष्ठ्यपि द्रव्यवाचिनः प्राप्नोति । यद्यपि गुणगुणिनोरत्र सर्वदा सोऽयमित्यभेदसंबन्धेन षष्ठ्या अप्रसङ्गो 'गुणवचनानां चाश्रयतो लिङ्गवचनानी'ति दोषपरिहारोऽस्ति तथापि निर्दोषप्रकृत्यर्थविशेषणपक्षसंभवात्प्रत्ययार्थपक्षो भाष्यकारेण नाश्रितः । इदंशब्दादिति । कुत्सितत्वयुक्तार्थवृत्तित्वात्तस्य । सिद्धं त्विति । येन

उ०—भावः । उपात्तकुत्स इति । वाच्यत्वेनाऽङ्गीकृतकुत्स इत्यर्थः । अङ्गीकृतेति । 'वाच्यत्वेने'त्यादिः । प्रकृत्यर्थेति । वस्तुगत्या कुत्साविशिष्टो योऽर्थस्तत्प्रतिपादकेभ्य इति तत्पक्षे सूत्राऽर्थः । अनुगृहीता—वाच्यत्वेन स्वीकृता कुत्सा येन तादृशपदसामानाधिकरण्ये इत्यर्थः । तेनैव कुत्साया उक्तत्वात्प्रकृतेः कुत्सादिविशिष्टवाचकत्वाऽभावादव्ययादिभ्यो न भवति प्रत्यय इति भावः । नन्वेवमव्ययसर्वनाम्नामित्यस्य वैयर्थ्यमत आह—यदा त्वङ्गीकृतेति । आश्रितकुत्सेभ्यः—वाच्यत्वेनाश्रितकुत्सेभ्यः । यथेष्टं लिङ्गेति । कुत्सितशब्दाभिधेयस्य नपुंसकत्वात्स्त्रीपुँल्लिङ्गानुपपत्तिरित्यर्थः । षष्ठ्यपीति 'देवदत्तस्य पटुक' इत्यादौ । येन धर्मेणेति । यथाऽश्वक

* ४ । १ । ३ वा० ३ १-'इदं घृतमिदं तैलम्' पा० ।

भवन्ति । कस्मिन्नर्थे ? स्वार्थ इति । स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते ॥७४॥

## ठाजादावूर्ध्वं द्वितीयादचः ॥ ५ । ३ । ८३ ॥

**चतुर्थात्**

चतुर्थाल्लोपो वक्तव्यः । बृहस्पतिदत्तकः बृहस्पतिकः । प्रजापतिदत्तकः प्रजापतिकः ।

**अनजादौ च**

अनजादौ च लोपो वक्तव्यः । देवदत्तकः देवकः । यज्ञदत्तकः यज्ञकः ।

**लोपः पूर्वपदस्य च ।**

पूर्वपदस्य च लोपो वक्तव्यः । देवदत्तकः दत्तकः । यज्ञदत्तकः दत्तकः ।

**अप्रत्यये तथैवेष्टः**

देवदत्तः दत्तः । यज्ञदत्तः दत्तः ।

**उवर्णाल्ल इलस्य च ॥**

उवर्णादिलस्य च लोपो† वक्तव्यः । भानुदत्तकः भानुलः । वसुदत्तकः वसुलः ।

अथ ठग्रहणं किमर्थम्, न—इके‡ कृतेऽजादावित्येव सिद्धम् ?

**ठग्रहणमुको द्वितीयत्वे काविधानार्थम् ॥ १ ॥**

ठग्रहणं क्रियते, उक्तो द्वितीयत्वे कविधिर्यथा स्यात् । वायुदत्तकः वायुकः । पितृदत्तकः पितृकः ।

प्र०—धर्मेण कुत्सादयस्तद्धर्मयुक्तार्थाभिधायिनः स्वार्थे प्रत्ययविधानमित्यर्थः ॥ ७४ ॥

ठाजादा । अप्रत्यय इति । प्रत्ययाभावेऽपि पूर्वपदोत्तरपदयोरन्यतरस्य वा लोप इत्यर्थः । भाष्ये तु पूर्वपदलोप उदाहरणमात्रम् । उवर्णादिति । लोपस्य 'ल' इति पूर्वाचार्यसंज्ञा । तत्रादेः परस्येतीकारलोपः । कादेशो न भवतीति । संनिपातलक्षणपरिभाषाया आश्रयणात् । यदा च

उ०—इत्यादौ अश्वसाध्यधावनादेः सम्यगननुष्ठानादिनेत्यर्थः । घृतादिशब्दसन्निधाने इदंशब्दः प्रत्यक्षविषयत्वेनैव तद्बोधको न तु कटुघृतत्वादिनेति भावः ॥ ७४ ॥

ठाजादा । लोपः पूर्वपदस्य चेति—अजाद्यनजादिसाधारणम् । चेनोत्तरपदसङ्ग्रहः । पूर्वोत्तरपदयोरिति । लक्ष्यानुसारेण च व्यवस्था । भाष्ये—इलस्य चेति । चेनोत्तरपदस्याऽपि । सन्निपातेति । ठग्रहणे कृते तु तत्सामर्थ्यादिकादेशात्पूर्वमेव लोप इति भावः । एतेन 'द्व्यचश्छिस्त्वस्य सामान्याऽपेक्षज्ञापक-

† आदेः परस्य १ । १ । ५४

‡ ठस्येकः ७ । ३ । ५०

अजादिलक्षणे हि माथितिकादिवत्प्रसङ्गः ॥ २ ॥

अजादिलक्षणे हि माथितिकादिवत्प्रसज्येत । तद्यथा,-मथितं पण्यमस्य माथितिक इत्यकारलोपे कृते × तान्तादिति+ कादेशो न भवति । एवमिहापि न स्यात् ।

द्वितीयादचो लोपे सन्ध्यक्षरद्वितीयत्वे तदादेर्लोपवचनम् ॥ ३ ॥

द्वितीयादचो लोपे कर्त्तव्ये सन्ध्यक्षरद्वितीयत्वे तदादेर्लोपो वक्तव्यः । लहोडः लहिकः । कहोडः कहिकः ॥ ८३ ॥

शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात् ॥ ५ । ३ । ८४ ॥

वरुणादीनां च तृतीयात् स चाऽकृतसन्धीनाम् ॥ १ ॥

वरुणादीनां च तृतीयाल्लोप उच्यते, स चाऽकृतसन्धीनां वक्तव्यः । सुपर्याशीर्दत्तः—सुपरिकः, सुपरियः, सुपरिलः ।

इह षडङ्गुलिः षडिक इत्यजादिलोपे कृते* पदसंज्ञा न प्राप्नोति । तत्र को दोषः ? जश्त्वं† न स्यात् ।

प्र०—देवभान्वादिभ्यष्ठञ्विधीयते तदेकदेशाभावादजादिलक्षणलोपाप्रसङ्गात्तदर्थमपि ठग्रहणम् । तदादेरिति । सन्ध्यक्षरात्परस्य लोपे प्राप्ते तदादेर्लोपवचनम् ॥ ८३ ॥

शेवल । वरुणादीनामिति । आदिशब्दः प्रकारे । एकसूत्रोपात्तत्वं च सादृश्यनिमित्तम् । सुपरिक इति । संहिताकार्ये तु कृते लोपे सति सुपर्यिक इति स्यात् । जश्त्वं न स्यादिति । भसंज्ञया पदसंज्ञाया अन्तर्वर्तिविभक्त्याश्रयायास्तद्धिताश्रयायाश्च द्विविधाया अप्येकसंज्ञाधिकाराद्वा-

उ०—ध्वेनैकस्य सर्वतः पूर्वं प्रवृत्तिरत एव शौवस्तिकादिसिद्धि'रिति परास्तम् । ज्ञापकसिद्धस्याऽसार्वत्रिकत्वाच्च । एवञ्च फलान्तरमपि सम्भवतीत्याह—यदेति ॥ ८३ ॥

शेवलसु । कृतसन्धिकार्यादित्यर्थकप्रथमादित्यधिकारादाह (भाष्ये) अकृतसन्धीनामिति । सुपर्यिक इति । सुपर्याशीर्दत्तशब्दात्प्रत्यये इत्यर्थः । भाष्ये—अजादिलोपे कृत इति । 'एकाक्षरपूर्वपदाना'मिति वक्ष्यमाणवचनेनेति भावः । द्विविधाया अपीति । समानाश्रयत्वादिति भावः । अङ्गुलिशब्दस्याऽनेनेति ।

× तदस्य पण्यम् ४ । ४ । ५१; ठस्येकः ७ । ३ । ५०; यस्येति च ६ । ४ । १४८

+ इसुसुक्तान्तात् कः ७ । ३ । ५१

* बह्वचो मनुष्यनाम्नष्ठज्वा; ठाजादावूर्ध्वं द्वितीयादचः ५ । ३ । ७८; ८३; यस्येति च ६।४।१४८

† झलां जशोऽन्ते ८ । २ । ३९

षडिके जश्त्व उक्तम् ॥ २ ॥

किमुक्तम् ? 'सिद्धमचः स्थानिवत्त्वा'दिति‡ ॥ यद्येवम्,—

वाचिकादिषु पदवृत्तप्रतिषेधः ॥ ३ ॥

वाचिकादिषु पदवृत्तस्य प्रतिषेधो वक्तव्यः । वागाशीर्[1]दत्तः—वाचिक इति ।

सिद्धमेकाक्षरपूर्वपदानामुत्तरपदलोपवचनात् ॥ ४ ॥

सिद्धमेतत् । कथम् ? एकाक्षरपूर्वपदानामुत्तरपदस्य लोपो वक्तव्यः । [ वा[2]चिकः । ]

प्र०—धितत्वात् । सिद्धमच इति । षडङ्गुलिशब्देऽङ्गुलि शब्दस्यानेन लोपे कृते 'यस्येति चे'त्यकारलोपः क्रियते । तस्य स्थानिवत्त्वाद्भसंज्ञा प्रत्यकारान्तमेतद्भवति । अन्तर्वर्त्तिविभक्त्याश्रया तु षकारान्तस्य पदसंज्ञा, ततो भिन्नावधिकत्वाद्भसंज्ञया पदसंज्ञा न बाध्यत इति तन्निबन्धनजश्त्वप्रवृत्तिः। या तु स्वादौ पदमिति पदसंज्ञा सैवैकावधिकत्वाद्भसंज्ञया बाध्यते । न च पदान्तविधिं प्रति न स्थानिवदिति स्थानिवत्त्वनिषेधोऽत्रावतरति, विधिशब्दस्य भावसाधनस्य तत्राश्रयणात्, इह पदान्तस्य कस्यचिदविधेयत्वात् । पदवृत्तप्रतिषेध इति । पदस्य यद्वृत्तं कार्यं तत्प्रतिषेध इत्यर्थः ।

सिद्धमिति । उत्तरपदस्याऽज्झल्समुदायत्वात्तल्लोपस्यानजादेशत्वादस्थानिवत्त्वात्तुल्यावधिकया भसंज्ञया द्विविधापि पदसंज्ञा बाध्यत इति पदनिबन्धनकार्याऽप्रसङ्गः । अत्रेदं चोद्यते, संज्ञाशब्दैकदेशे लुप्ते संज्ञास्वरूपानुपलम्भात्कथं संज्ञिनोऽवगमः । न हि यस्य देवदत्त इति संज्ञा कृता सा देवशब्दाद्दत्तशब्दाद्वा प्रतीयते । न चैकदेशेन समुदायोऽनुमीयते समुदायस्त्वर्थवाचक इति युक्तं कल्पयितुम्; उच्चार्यमाणस्य प्रत्यायकत्वात् । एवं तर्ह्यनुनिष्पन्नत्वादवयवानामपि संज्ञात्वम् । तत्र

उ०—'अजिनान्तस्योत्तरपदलोपश्चे'ति सूत्र एकदेशे स्वरितत्वप्रतिज्ञानादुत्तरपदांशमपहाय लोपपदमात्रमनुवर्त्तते । न च सवितृशब्दाट्ठे 'तृ' शब्दस्य लोपापत्तिः, उपेन्द्रदत्ते 'चतुर्थादच' इति लोपापत्तिः । अनभिधानेनाऽतिप्रसङ्गनिरासादिति भावः । इह पदान्तस्येति । जश्त्वस्य पूर्वमेव निष्पन्नत्वेनेदानीं विधेयत्वाऽभावादिति भावः । वस्तुतोऽत्रैकादेशपर्यन्तं तत्तत्सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतया न पूर्वं जश्त्वमितीदं चिन्त्यम् । तस्माद् द्वितीयादच ऊर्ध्वं लोपविधायकसामर्थ्येनाऽत्र भत्वेन स्थानिवत्त्वप्रतिषेध इति तात्पर्यम् । षषष्ठेति—भाष्ये । अत एव सूत्रे 'ऊर्ध्वं द्वितीयादच' इति चरितार्थम् । अन्यथा 'द्व्यच' इत्येव उत्तरपदलोपग्रहणाऽनुवृत्त्या सिद्धे तद्वैयर्थ्यं स्पष्टमेव । अन्यत्र त्वनभिधानात्त्वयाऽपि नेष्यत एवेत्याहुः ।

न हि यस्येति । सा देवशब्दाद्दत्तशब्दाद्वोच्चारितान्न प्रतीयते—न श्रोत्रेन्द्रियजन्यज्ञानविषया भवतीत्यर्थः । 'न हि यस्य देवदत्त इति संज्ञा कृता स देवशब्दा'दित्यादि क्वचित्पाठः । अनुमीयते इति ।

‡ १ । ४ । १८ वा० २  १—'वागाशीः' पा० ।  २—काचित्कम् ।

इहाऽपि तर्हि प्राप्नोति—षडङ्गुलिः षडिक इति ।

षषष्ठाजादिवचनात् सिद्धम् ॥ ५ ॥

षषष्ठाजादिवचनासिद्धमेतत्* ॥ ८४ ॥

अल्पे ॥ ५ । ३ । ८५ ॥ ह्रस्वे ॥ ५ । ३ । ८६ ॥

किमर्थमिमावुभावर्थौ निर्दिश्येते, न यदल्पं ह्रस्वमपि तद्भवति, यच्च ह्रस्वमल्पमपि तद्भवति ? नैतयोरावश्यकः समावेशः । अल्पं घृतम्, अल्पं तैलमित्युच्यते, न कश्चिदाह—ह्रस्वं घृतम् ह्रस्वं तैलमिति । तथा ह्रस्वः पटः, ह्रस्वः शाटक इत्युच्यते, न कश्चिदाह—अल्पः पटः, अल्पः शाटक इति ॥ ८५ ॥ ८६ ॥

प्र०—वर्णानामनुनिष्पादिनां शास्त्रेणाऽनन्वाख्यानादसाधुत्वम् । पदानामेव तु संज्ञैकदेशानां साधुत्वमिष्यत इति लोपविधानद्वारेण तदभ्यनुज्ञायते । यदुक्तम्—

'तुल्यायामनुनिष्पत्तौ 'देयसो' इत्यसाधवः ।
न ह्यन्वाख्यायते शास्त्रे तेषु दत्तादिवत्स्मृतिः ॥' इति ।

दृष्टश्चायं लोके व्यवहारो यत्समुदायस्य संज्ञात्वे तदेकदेशः प्रयुज्यते । तत्र समुदायस्य मुख्यं संज्ञात्वमवयवानां त्वनुनिष्पन्नम् ॥ ८४ ॥

अल्पे । किमर्थमिति । वंशादिष्वल्पत्वह्रस्वत्वयोः समावेशदर्शनादन्यतरोपादानेन सिध्यतीतिः प्रश्नः । न कश्चिदाहाल्पः पट इति । ननु चोच्यत एव अल्पः पट इति । यद्यप्युच्यते तथाप्यायामविस्तारहीनोऽल्प उच्यते यस्त्वायामहीनो विस्तीर्णश्च स ह्रस्व उच्यते न त्वल्पोऽपि तु महान् ॥ ८५ ॥

उ०—स्मर्यत इत्यर्थः । परोक्तत्वसादृश्यादनुमितिरेव स्मृतिरुक्ताऽत्रेत्याहुः । उच्चार्यमाणस्य प्रत्यायकत्वादिति । एतच्च 'अणुदि'त्सूत्र उपपादितम् । देयसो इति । देवस्याऽऽद्यं 'दे' इति, यज्ञदत्तस्य'य' इति सोमस्य'सो' इति । तेषु वर्णेषु दत्तादिवत् । तेष्विव शास्त्रे स्मृतिरन्वाख्यायकं वचनम् । अन्वाख्यायते—क्रियत इत्यर्थः । तदेकदेश इति । 'देवदत्तो' 'दत्त'इत्यादौ ॥ ८४ ॥

अल्पे । नैतयोरिति । दीर्घत्वप्रतिद्वन्द्वि ह्रस्वत्वम्, महत्त्वप्रतिद्वन्द्वि अल्पत्वमिति भेद इति भावः ॥ ८५ ॥

* ठाजादावूर्ध्वं द्वितीयादचः ५ । ३ । ८३

## कुटीशमीशुण्डाभ्यो रः ॥ ५ । ३ । ८८ ॥

### कुटीशमीशुण्डाभ्यः प्रत्ययसंनियोगेन पुंवद्वचनम् ॥ १ ॥

कुटीशमीशुण्डाभ्यः प्रत्ययसंनियोगेन पुंवद्भावो वक्तव्यः । कुटी—कुटीरः । शमी–शमीरः । शुण्डा–शुण्डार इति । किं पुनः कारणं न सिध्यति ? स्वार्थिकोऽयं, स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते ।

### उक्तं वा ॥ २ ॥

किमुक्तम् ? 'स्वार्थिका अतिवर्तन्तेऽपि लिङ्गवचनानी'ति* ॥ ८८ ॥

## वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे ॥ ५ । ३ । ९१ ॥

### वत्सादिभ्यस्तनुत्वे कार्श्ये प्रतिषेधः ॥ १ ॥

वत्सादिभ्यस्तनुत्वे कार्श्ये प्रतिषेधो वक्तव्यः । कृशो वत्सो वत्सतर इति मा भूदिति ॥ स तर्हि प्रतिषेधो वक्तव्यः ? न वक्तव्यः । यस्य गुणस्य हि भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने=तस्मिन् गुणे वक्तव्ये प्रत्ययेन भवितव्यम्, न च कार्श्यस्य भावाद् द्रव्ये वत्सशब्दः ॥ ९१ ॥

## किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच् ॥ ५ । ३ । ९२ ॥

---

प्र०—कुटी । पुंवद्वचनमिति । प्रकृतिप्रत्ययसमुदायस्यायं पुंवद्भावो न तु प्रकृतेरिति स्त्रीप्रत्ययो न निवर्त्तते ॥ ८८ ॥

वत्सोक्षा । कार्श्ये प्रतिषेध इति । तनुत्व इति सामान्येनोपादानादतिप्रसङ्ग इति भावः । यस्य गुणस्येति । अन्तरङ्गत्वात्प्रवृत्तस्यैव तानत्रे प्रत्यय इति भावः ॥ ९१ ॥

किंयत्त । उपाध्यानर्थक्यमिति । अयं भावः—द्वयोरित्यनर्थकं, बहूनामपि निर्द्धारणे

---

उ०—कुटीशमी । ननु पुंवद्वचने स्त्रीप्रत्ययनिवृत्तिरपि स्यादत आह–प्रकृतीति । कुटीशमीशुण्डाभ्यो यः प्रत्ययस्तत्सन्नियोगेन—तत्सम्बन्धेन विशिष्टस्य शब्दस्य पुंवदिति वार्त्तिकार्थः । गमकत्वात्सापेक्षत्वेऽपि वृत्तिः ॥ ८८ ॥

वत्सोक्षा । शरीरकार्श्ये प्राप्नोतीति प्रतिषेधारम्भः । प्रवृत्तिनिमित्तकार्श्ये एवेष्यत इत्युत्तरम् ॥ ९१ ॥

किंयत्तदो । इष्टत्वादिति । 'बहुष्वासीनेषु कश्चित्कञ्चित्पृच्छति—कतरो देवदत्त' इति 'प्रत्यय'

---

* ५ । ३ । ६८ वा० ३ व्याख्याभाष्ये; ( ४ । १ । ६२ वा० ७ व्याख्याभाष्ये च )।

## वा बहूनां जातिपरिप्रश्ने डतमच् ॥ ५ । ३ । ९३ ॥

### किमादीनां द्विबह्वर्थे प्रत्ययविधानादुपाध्यानर्थक्यम् ॥ १ ॥

किमादीनां द्विबह्वर्थे प्रत्ययविधानादुपाधिग्रहणमनर्थकम् । किं कारणम् ? बहिर्धारणं निर्धारणमिति । यावता द्वयोरेकस्यैव बहिर्धारणं भवति ।

अपर आह—'बहूनां जातिपरिप्रश्ने डतम'जित्यत्र बहुग्रहणमनर्थकम् । किं कारणम् ? किमित्येतत्परिप्रश्ने वर्तते, परिप्रश्नश्चाऽनिर्ज्ञाते, अनिर्ज्ञातं च बहुषु । द्व्येकयोः पुनर्निर्ज्ञातम् । निर्ज्ञातत्वाद् द्व्येकयोः परिप्रश्नो न, परिप्रश्नाभावात्किमेव नास्ति कुतः प्रत्ययः ॥ ९२ ॥ ९३ ॥

## एकाच्च प्राचाम् ॥ ५ । ३ । ९४ ॥

प्राग्वचनं किमर्थम् ? विभाषा यथा स्यात् ।

प्र०—डतरच इष्टत्वादजातिपरिप्रश्नेऽपि कतमशब्ददर्शनाद्वा बहूनामित्यत्र जातिपरिप्रश्नग्रहणं न कर्त्तव्यम् । अथवा द्वयोरित्यस्य निर्द्धारणषष्ठ्यन्तत्वादेकस्येति न वक्तव्यम् । बहुग्रहणमिति । डतमच उत्सर्गस्य द्वयोरेकस्य निर्द्धारणे डतरचोऽपवादस्य विधानाद्बहूनामेव निर्द्धारणे डतमचभविष्यतीत्यर्थः । 'किं कारणं किमेत'दित्यादिरिहाऽग्रन्थः । 'किमः सङ्ख्यापरिमाणे डति चे'त्यत्रत्य एवायं ग्रन्थ इत्याहुः । नहीह सङ्ख्याग्रहणमस्ति येनास्य ग्रन्थस्योपयोगः स्यात् । अत्यन्तासम्बद्धश्चेहायं ग्रन्थः—एकद्विविषयस्यापि प्रश्नस्य सम्भवात्—'को भवान्' 'कतरो भवतोः कठ' इति ॥ ९२ ॥ ९३ ॥

उ०—इति सूत्रे भाष्यप्रयोगादिति भावः । अजातिपरिप्रश्नेऽपीति । 'कतमा कतमा एषामाढ्यता' इति 'प्रकारे गुणवचनस्ये'ति भाष्ये प्रयोगादिति भावः । वार्त्तिके द्विबह्वर्थे इत्युपलक्षणमिति तात्पर्यम् । ननु द्वयोरित्यस्य वैयर्थ्यपरतया भाष्यव्याख्याने किं कारणम्, 'बहिर्धारण'मित्यादिभाष्याऽसङ्गतिः, न हि तेन ग्रन्थेन 'द्वयो'रित्यस्य प्रत्याख्यानं लभ्यते किन्त्वेकग्रहणस्येति चेन्न, तस्य भाष्यपाठस्याऽसाम्प्रदायिकत्वमित्याशयेनैवं व्याख्यानात् । तं पाठमभ्युपगम्याऽप्याह—अथवेति । इदं चिन्त्यं, 'प्रत्यय'सूत्रस्थभाष्यप्रयोगविरोधात्, प्रकृतवार्त्तिके 'द्विबह्वर्थे प्रत्ययविधाना'दिति हेतूपादानस्याऽसङ्गत्यापत्तेश्च । 'अपर आहे'ति भाष्यं पूर्वसूत्रस्योपाधिसत्त्वमाश्रित्यैतत्सूत्रस्थोपाधिप्रत्याख्यानपरतया व्याचष्टे—डतमच इति । केचित्तु—'द्विबह्वर्थे' इत्यस्य द्वयोर्विहितस्य बह्वर्थेऽपि विधानदर्शनाद्बह्वर्थे विहितस्य द्व्यर्थेऽपि विधानदर्शना'दित्यर्थेन 'बहुग्रहणप्रत्याख्यानपरमपीदं वार्त्तिकम् । तद्ध्वनयन्नाह भाष्ये—अपर आहेति'—इत्याहुः ॥ ९२ ॥ ९३ ॥

प्राग्वचनानर्थक्यं च विभाषाप्रकरणात् ॥ १ ॥

प्राग्वचनमनर्थकम् । किं कारणम् ? 'विभाषाप्रकरणात्' । प्रकृता महाविभाषा* तयैव सिद्धम् ॥ ६४ ॥

अवक्षेपणे कन् ॥ ५ । ३ । ९५ ॥

अवक्षेपणे कन्विधीयते कुत्सिते कः†, क एतयोरर्थयोर्विशेषः ? अवक्षेपणं करणम्, कुत्सितं कर्म । अवक्षेपणं वै कुत्सितं करणं तेन यत्कुत्स्यते तदपि कुत्सितं भवति, तत्र कुत्सिते[१] इत्येव सिद्धं भवति ॥ एवं तर्हि यत्परस्य कुत्सार्थमुपादीयते तदिहोदाहरणम्—व्याकरणकेन नामायं गर्वितः, याज्ञिक्यकेन नामाऽयं गर्वितः । यत्स्वकुत्सार्थमुपादीयते तत्त्रोदाहरणम्—देवदत्तकः यज्ञदत्तकः ॥ ६५ ॥

लुम्मनुष्ये ॥ ५ । ३ । ९८ ॥

किमर्थं मनुष्ये लुबुच्यते, न लुगेवोच्येत ?

लिङ्गसिद्ध्यर्थं लुम्मनुष्ये ॥ १ ॥

लिङ्गसिद्ध्यर्थं‡ मनुष्ये लुबुच्यते । चञ्चेव चञ्चा । बध्रिकेव बध्रिका । खरकुटीव खरकुटी ॥ ९८ ॥

प्र०—अवक्षे । एतयोरर्थयोर्विशेष इति । यद्यपि ककनोः स्वरभेदस्तथाप्यसत्यर्थभेदे 'कुत्सिते कंश्चे'त्येव वक्तव्यम् । न तु पृथग्योगद्वयम् । पृथग्योगकरणात्तु नूनमनयोरर्थयोर्भेदः स तु न निश्चीयते इति प्रश्नः । अवक्षेपणमिति । येनावक्षिप्यते निन्द्यते तद्वाचिनः कन्प्रत्ययो, यस्तु स्वयं कुत्स्यते ततः क इति विषयविभागः । अवक्षेपणं वै कुत्सितमिति । न हि स्वयमकुत्सितमवक्षेपणं भवतीत्यवक्षेपणस्यापि कुत्सितत्वमस्तीत्यर्थः । यत्परस्य कुत्सार्थमिति । व्याकरणादिकं स्वयमकुत्सितमप्याश्रयविशेषे मदमुपाहरदवक्षेपणं परस्य भवतीति तद्वाचिनः कन्प्रत्ययः ॥ ६५ ॥

लुम्मनुष्ये । लिङ्गसिद्ध्यर्थमिति । वचनं त्वभिधेयवदेव भवति, 'चञ्चेव मनुष्यौ' इति । तदुक्तम्—'हरीतक्यादिषु व्यक्ति'रिति । लुकि मनुष्यलिङ्गप्रसङ्गः ॥ ९८ ॥

उ०—अवक्षेप । परस्येति । आश्रयस्येत्यर्थः ॥ ६५ ॥

लुम्मनुष्ये । ननु युक्तवद्भावेन लिङ्गवचनयोरुभयोर्विधानाल्लिङ्गमात्रग्रहणमयुक्तमत आह—वचनन्त्विति । हरीतक्यादिष्वस्य पाठादिति भावः । 'मनुष्यलुपि प्रतिषेध' इति विशेषणविषयमिति बोध्यम् ॥ ९८ ॥

* समर्थानां प्रथमाद्वा ४ । १ । ८२
† कुत्सिते ५ । ३ । ७४　　१—'कुत्सितमित्येव' पा० ।
‡ लुपि युक्तवद् व्यक्तिवचने १ । २ । ५१

## जीविकार्थे चाऽपण्ये ॥ ५ । ३ । ९९ ॥

'अपण्ये' इत्युच्यते तत्रेदं न सिध्यति—शिवः स्कन्दः विशाख इति ? किं कारणम् ? मौर्यैर्हिरण्यार्थिभिरर्चाः प्रकल्पिताः । भवेत्तासु न स्यात्, यास्त्वेताः संप्रति पूजार्थास्तासु भविष्यंति ॥ ९९ ॥

## समासाच्च तद्विषयात् ॥ ५ । ३ । १०६ ॥

'त'दित्यनेन किं प्रतिनिर्दिश्यते ? छः* । कथं पुनः समासो नाम च्छविषयः

---

प्र०—जीविकार्थे । यास्त्वेता इति । याः परिगृह्य गृहाद्गृहमटन्ति तास्वित्यर्थः । यास्तु विक्रीयन्ते तासु न भवति—'शिवकान्विक्रीणीते' इति ॥ ९९ ॥

समासा । तदित्यनेनेति । इवार्थश्छश्च प्रकृत इति कस्य सर्वनाम्ना परामर्श इति प्रश्नः । आचार्यदेशीय आह—छ इति । कथं पुनरिति । अनेनैव छस्य विधानाच्छविषयस्यानुवादानुपपत्तिरित्यर्थः । एवं तर्हीवार्थ इति । प्रधानस्यापि छस्य परामर्शस्याऽयुक्तत्वाद्गुणभूतस्यैवेवार्थस्य

---

उ०—जीविकार्थे चा । मौर्याः-विक्रेतुं प्रतिमाशिल्पवन्तः । तैरर्चाः प्रकल्पिताः—'विक्रेतु'मिति शेषः । अतस्तासां पण्यत्वात्तत्र प्रत्ययश्रवणप्रसङ्ग इति भावः । तत्र प्रत्ययश्रवणमिष्टमेवेति वदन् सूत्रस्योदाहरणं दर्शयति भाष्ये—भवेदित्यादि । यास्त्वेता इति च । सम्प्रति पूजार्थाः । सम्प्रति—स्वनिर्माणसमकालमेव फलजनिका या पूजा—जीविकाप्रदत्वेन—तदर्था इत्यर्थः । तदाह—याः परिगृह्येति । यास्तु गृहे पूज्यन्ते शिष्टैस्तासु शिवाऽभेदबुद्धेः सत्त्वेन सादृश्यबुद्ध्यभावेन प्रत्ययस्यैवाऽभावः । एवं चित्रेष्वपि द्रष्टव्यम् ॥ ९९ ॥

समासाच्च । आचार्यदेशीय इति । छस्य विधेयतया प्राधान्येन तस्यैव परामर्शो युक्त इत्यभिमानः । छविषयस्येति । समासस्येत्यर्थः । शस्त्रीश्यामादीनां वक्ष्यमाणरीत्योदाहरणत्वासम्भवादाह—छे च विधीयमानेऽस्मादेवेति । छप्रत्ययविषय एव ज्ञापकसिद्धः समासः, सन्नियोगशिष्टत्वात् 'सुप्सुपे'त्ययं चाऽभिधानस्वाभाव्यादित्यर्थः । सुप्सुपेति वेति । अत्राऽपि पक्षे इवाऽर्थोऽन्तर्भावेण वृत्तौ ज्ञापकमेत्राश्रयणीयम्, पूर्वत्रोभयोर्ज्ञापकसिद्धत्वाश्रयणमिति विशेषः । अतिप्रसङ्ग इति । यद्यत्यन्तस्वार्थिक इति भावः । नन्वेवमपि

---

१—'विक्रेतुमिति शेषः' इति नागेशः । मूर्तिपूजा तु जैनैः प्रारब्धा । तद्यथा—

"( प्रश्न ) मूर्तिपूजा कहां से चली ? ( उत्तर ) जैनियों से । ( प्रश्न ) जैनियों ने कहां से चलाई ? ( उत्तर ) अपनी मूर्खता से ।" ( स० प्र० समु० ११ )

२—यास्त्वायतनेषु प्रतिष्ठाप्यन्ते पूज्यन्ते च तासु 'देवपथादिभ्यश्च' [ १०० ] इत्युत्तरसूत्रेण लुब् भवति । तदुक्तम्—

'अर्चासु पूजनार्थासु चित्रकर्मध्वजेषु च । इवे प्रतिकृतौ लोपः कनो देवपथादिषु ॥' इति ।

* कुशाग्राच्छः ५ । ३ । १०५

स्यात् ? एवं तर्हीवार्थः । यदि तर्हि समासोऽपीवार्थे प्रत्ययोऽपि, समासेनोक्तत्वात्प्रत्ययो न प्राप्नोति । एवं तर्हि द्वाविवार्थौ । कथम् ? काकागमनमिव तालपतनमिव काकतालम्, काकतालमिव काकतालीयम् ॥ १०६ ॥

## अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमदणो यञ् ॥ ५ । ३ । ११८ ॥

### अणो गोत्राद् गोत्रवचनम् ॥ १ ॥

अणो गोत्राद्गोत्रग्रहणं कर्त्तव्यम् । गोत्रादिति वक्तव्यम् । इह मा भूत्—आभिजितो मुहूर्तः, आभिजितः स्थालीपाक इति† । गोत्रमिति[१] च वक्तव्यम् । किं

प्र०—परामर्शः । छे च विधीयमानेऽस्मादेव ज्ञापकादिवार्थे समासः सुप्सुपेति वा । समासेनोक्तत्वादिति । वचनसामर्थ्यात्स्यादिति चेच्छस्त्रीश्यामादिभ्योऽतिप्रसङ्गः । एवं तर्हीति । शस्त्रीश्यामादीनां त्वन्तर्भूतेवार्थानामुपमेयप्रधानानामुपमेयान्तरेण सम्बन्धाभावाच्छस्याप्रसङ्गः । काकागमनमिवेति । वृत्तिविषये काकतालशब्दौ काकतालसमवेतक्रियावाचिनौ । तत्र काकागमनं देवदत्तागमनस्योपमानं, तालपतनं दस्यूपनिपातस्य । तालेन तु यः काकस्य वधः स देवदत्तस्य दस्युना वधस्योपमानमिति वधादिः काकतालीयादिशब्दवाच्यः संपद्यते ॥ १०६ ॥

अभिजि । अणो गोत्रादिति । गोत्रेणाऽण्विशेष्यते । गोत्रे यो विहितोऽणन्तदन्तेभ्योऽभिजिदादिभ्यो यञ्यथा स्यात् । आभिजित इति । एकत्र नक्षत्रेण युक्तः काल इत्यण् । अपरत्र सास्य देवतेति । गोत्रमिति च वक्तव्यमिति । एवं मन्यते-'गोत्रचरणाद्वुञ्'इत्यत्र गोत्रग्रहणस्य

उ०—शस्त्रीश्यामादौ दोषोऽत आह-शस्त्रीति । यद्यपि शस्त्र्युपमितदेवदत्तस्याऽन्यत्रोपमानत्वं वक्तुं शक्यं, तथापि तत्र यदि श्यामत्वेनैव सादृश्यं तर्हि शस्त्रीश्यामपदप्रयोगेणैव सिद्धावितरवैयर्थ्यम्, धर्मान्तरेण तु सादृश्यं न प्रतीयत इति भावः । किञ्च तद्विषयादित्यस्येवार्थविषयसर्वाऽवयवकादित्यर्थः । .शस्त्रीश्यामेत्यादौ पूर्वपदमेव इवार्थविषयमिति न दोषः । वृत्तिविषय इति । तत्राद्योपमाया उपमेयं गम्यम्, तच्च कृदाख्यक्रियारूपमेव, क्रियोपमेयत्वस्य क्रियायामेव सम्भवात्तदाह—तत्रेति । अत्र पूर्वोत्तरपदयोः काकागमनसदृशतालपतनसदृशयोर्लक्षणा, सामानाऽधिकरण्येन च तदर्थयोरन्वयः । एतेन पूर्वोत्तरपदयोरनन्वयेनाऽसामर्थ्यात्समासो दुर्लभ' इत्यपास्तम् । उपमेयवाचकतत्तत्पदसमभिव्याहारेण कदाचित्काकमरणे कदाचित्तत्कृतोपभोगे लक्षणा, उपमानमात्रवाचकाऽभावाच्चेदृशे विषये उपमानलोपव्यवहार आलङ्कारिकाणाम् । तदाह—तालेन त्विति । अतर्कितोपनतत्वञ्च साधारणधर्म इति बोध्यम् ॥ १०६ ॥

अभिजिद्विद । अणन्तप्रकृतिकगोत्रप्रत्ययान्तादित्यर्थभ्रमं वारयति—गोत्रेणेति । अत्र गोत्रमपत्यमात्रम्, अपत्याधिकारादन्यत्वात् । ननु स्वार्थिकत्वादेवास्य गोत्रत्वं सिद्धमत आह—एवं मन्यत इति ।

† नक्षत्रेण युक्तः कालः; साऽस्य देवता ४ । २ । ३; २४

१–'गोत्र इति' पा० ।

प्रयोजनम् ? आभिजितकः । [ गोत्राश्रयो वुञ्[‡] यथा स्यात् । गोत्रमिति[2] शक्यमकर्त्तुम् कथमाभिजितकः ? ] गोत्रादयं स्वार्थिको गोत्रमेव भवति ॥ ११८ ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये पञ्चमस्याध्यायस्य तृतीये पादे द्वितीयमाह्निकम् । पादश्च समाप्तः ।

प्र०—स्वरितत्वाद्गोत्रे कुञ्जादिभ्यः च्फञिति गोत्राधिकारविहितप्रत्ययस्य ग्रहणे सति अस्य यञो ग्रहणं न स्यात् । गोत्रत्वातिदेशात्तु भवति । आभिजितक इति । आभिजित्यस्यायमिति वुञ् । 'आपत्यस्य च तद्धितेऽनाती'ति यलोपः । गोत्रादयमिति । 'गोत्रचरणाद्वुञि'त्यत्र गोत्रग्रहणेनार्थो गृह्यते तेन तद्वाचिनः प्रत्ययो विधीयमानोऽस्मादपि यञो भवति । गोत्राधिकारविहितप्रत्ययग्रहणे त्वौपगवक इत्यादावणाद्यन्ताद्वुञ् न स्यात् ॥ १८ ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे पञ्चमस्याध्यायस्य तृतीये पादे द्वितीयमाह्निकम् । पादश्च समाप्तः ।

उ०—'गोत्रमिति वक्तव्य'मिति पाठः, गोत्रवदिति तदर्थः । 'गोत्र इति वक्तव्य'मिति पाठे गोत्रे यः प्रत्ययस्तद्वदिति वक्तव्यमित्यर्थः । भाष्ये-वुञ्यथा स्यादिति । ननु 'जातिलक्षणो ङीष्, आपत्यत्वप्रयुक्तो यञश्चेति ङीब्यथा स्या'दित्यपि वक्तुं युक्तमिति चेन्न, मण्डूकप्लुत्याऽस्त्रियामित्यस्याऽनुवृत्तेः स्त्रियामेतदप्रवृत्तेरित्याशयात् । स्पष्टञ्चेदं वृत्तौ ॥ ११८ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते पञ्चमस्याध्यायस्य तृतीये पादे द्वितीयमाह्निकम् । पादश्च तृतीयः समाप्तः ।

---

१–[ ] एतदन्तर्गतः पाठः क्वचिन्न ।
२–'गोत्र इति पा० ।

‡ गोत्रचरणाद्वुञ् ४ । ३ । १२६

## पादशतस्य संख्यादेर्वीप्सायां वुन्लोपश्च ॥ ५ । ४ । १ ॥

### पादशतग्रहणमनर्थकमन्यत्रापि दर्शनात् ॥ १ ॥

पादशतग्रहणमनर्थकम् । किं कारणम् ? 'अन्यत्रापि दर्शनात्' । अन्यत्रापि हि वुन् दृश्यते—द्विमोदकिकां ददाति ॥ १ ॥

## स्थूलादिभ्यः प्रकारवचने कन् ॥ ५ । ४ । ३ ॥

### कन्प्रकरणे चञ्चद्बृहतोरुपसङ्ख्यानम् ॥ १ ॥

कन्प्रकरणे चञ्चद्बृहतोरुपसङ्ख्यानं कर्तव्यम् । चञ्चत्कः बृहत्कः ॥ २ ॥

## अनत्यन्तगतौ क्तात् ॥ ५ । ४ । ४ ॥

### अनत्यन्तगतौ क्तात्तमादयः पूर्वविप्रतिषिद्धम् ॥ १ ॥

अनत्यन्तगतौ क्तात्तमादयो भवन्ति पूर्वविप्रतिषेधेन* । अनत्यन्तगतौ क्तात्क-

---

प्र०—पादशतस्य । पादशतग्रहणमिति । द्वौ द्वौ माषौ ददातीत्यादावतिप्रसङ्गो न भवत्यनभिधानात् । यस्येतिलोपेन सिद्धे पुनर्लोपविधानमपरनिमित्तकत्वार्थम् । तेन लोपस्याऽस्याऽस्थानिवत्त्वात् द्विपदिकेत्यादौ 'पादः प'दिति पद्भावः सिध्यति ॥ १ ॥

स्थूला । चञ्चत्क इति । सादृश्यस्य द्योतकः कन्प्रत्ययः । अचञ्चन्नपि यश्चञ्चन्निव लक्ष्यते स चञ्चत्को यथा मणिः, स्यन्दमानप्रभत्वात् । अबृहन्नपि बृहन्निव प्रसृतप्रभत्वाद्यो दृश्यते स बृहत्कः ॥ ३ ॥

अनत्यन्त । भिन्नतरकमिति । भेदस्य प्रकर्षानत्यन्तगत्योर्युगपद्विवक्षायां पूर्वविप्रतिषेधात्तरपि कृते क्तान्तत्वाभावात्कन्न प्राप्नोतीत्याह—तदन्ताच्चेति । स्वार्थः पुनरनत्यन्तगतियुक्त एव न तु शुद्धः । शुद्धे हि स्वार्थे कनि सत्यनत्यन्तगतिर्न द्योतिता स्यात् । नन्वेष स्वार्थमात्रे कन्प्रति-

---

उ०—पादशतस्य । परनिमित्तकत्वार्थमिति । सहविधाने हि तत्त्वं न, नियमतः पूर्ववर्तिबुद्धिविषयस्यैव निमित्तत्वादिति 'धिन्विकृण्वो'रिति सूत्रे भाष्ये स्पष्टम् ॥ १ ॥

स्थूलादिभ्यः । सूत्रे प्रकारशब्देन सादृश्यं गृह्यते तदाह—सादृश्येति । चञ्चन्निवेति । विद्युदिव क्षणदृश्यमानप्रभ इत्यर्थः । स्यन्दमानेति । गलत्प्रभत्वादित्यर्थः ॥ ३ ॥

अनत्यन्त । भेदस्य प्रकर्षेति । भेदगतप्रकर्षेत्याद्यर्थः । इत्याहेति । अत आहेत्यर्थः । नन्वेष इति । 'तदन्ताच्चे'ति वचनविहितः । स्वार्थमात्रे इति । न त्वनत्यन्तगतियुक्ते इत्यर्थः । दृश्यते चेति । तदयुक्तेऽपि

---

१—'क्तान्तात्' पा० ।

* अतिशायने तमबिष्ठनौ ५ । ३ । ५५

न्भवतीत्यस्याऽवकाशः—अनत्यन्तगतेर्वचनं प्रकर्षस्याऽवचनम्—भिन्नकम् छिन्नकम्। तमादीनामवकाशः—प्रकर्षस्य वचनमनत्यन्तगतेरवचनम्—पटुतरः पटुतमः। उभयवचन उभयं प्राप्नोति—भिन्नतरकम् छिन्नतरकम्। तमादयो भवन्ति पूर्वविप्रतिषेधेन।

तदन्ताच्च स्वार्थे कन्वचनम् ॥ २ ॥

तदन्ताच्च स्वार्थे कन्वक्तव्यः। भिन्नतरकम् छिन्नतरकम् ॥ ४ ॥

## न सामिवचने ॥ ५ । ४ । ५ ॥

सामिवचने प्रतिषेधानर्थक्यं प्रकृत्यभिहितत्वात् ॥ १ ॥

सामिवचने प्रतिषेधोऽनर्थकः। किं कारणम् ? 'प्रकृत्यभिहितत्वात्'। प्रकृत्याभिहितः सोऽर्थ इति कृत्वा कन्न भविष्यति ॥ ५ ॥

## अषडक्ष्याशितंग्वलंकर्मालंपुरुषाध्युत्तरपदात्खः ॥ ५ । ४ । ७ ॥

अध्युत्तरपदात्प्रत्ययविधानानुपपत्तिर्विग्रहाभावात् ॥ १ ॥

अध्युत्तरपदात्प्रत्ययविधेरनुपपत्तिः। किं कारणम् ? 'विग्रहाभावात्'। विग्रह-

प्र०—पादितो दृश्यते चासौ,—यथैवं सूत्रमभिन्नतरकं भवति, बहुतरकं व्याप्यते, सुकरतरकं मन्यत इति। एवं तर्हि 'न सामिवचने' इति प्रतिषेधेन स्वार्थिकः कन्नस्तीति ज्ञाप्यते। न हि सामिकृतादिभ्योऽनत्यन्तगतौ क्तादित्यस्य कनः प्रसङ्गोऽसमासे सामिवचनेनैवानत्यन्तगतेर्द्योतनात्। समासेभ्यस्तु क्तान्तत्वाभावाच्च कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति वचनात्सामिशब्दस्य गतिकारकत्वाभावात्। तस्मात्स्वार्थिकस्यैवासौ कनो निषेधः स्वार्थिकं हि कनं ज्ञापयति ॥ ४ ॥

अषड। विग्रहाभावादिति।' अन्यत्र विग्रहपूर्विका वृत्तिर्दृश्यते। यथा यावो यावक

उ०—स्वार्थमात्रे इत्यर्थः। समासेभ्य इति। समासरूपेभ्यः सामिकृतादिभ्य इत्यर्थः। क्तान्तत्वाऽभावाच्चेति। प्रत्ययग्रहणपरिभाषयेति भावः। चेनाऽसमासोक्तहेतोः सङ्ग्रहः। गतिकारकत्वाभावादिति। एवञ्च 'कृद्ग्रहणे' इति न्यायेनाऽपि न समासे क्तान्तत्वमिति भावः। अस्य क्रियाविशेषणत्वात् कारकत्वमस्त्येवेति चिन्त्यम्। ज्ञापयतीति। ननु 'सामी'ति सूत्रस्य प्रत्याख्यास्यमानत्वात्कथमेतज्ज्ञापकमिति चेन्न, तस्य भाष्यस्य पूर्वसूत्रविहितस्य नाऽयं निषेध इत्यर्थमात्रतात्पर्यकत्वात्। तत्रसूत्रे 'प्रकृत्यभिहितत्वा'दिति भाष्यस्य प्रकृतिसहचरितसामिशब्देनाऽभिहितत्वादित्यर्थः। 'सुकरतरक'मित्यादौ यावादेराकृतिगणत्वात् कनः सिद्धया ज्ञापकस्य नोपयोग इत्यन्ये ॥ ४ ॥

अषडक्षा। ननु वृत्त्यभावो न विग्रहाऽभावनियतः, नित्यसमासादीनां दर्शनादत आह—अन्यत्रेति।

पूर्विका तद्धितोत्पत्तिर्न चाऽध्युत्तरपदेन विग्रहो दृश्यते ।

तस्मात्तत्रेदमिति सधीनर् ॥ २ ॥

तस्मात्तत्रेदमिति सधीनर्प्रत्ययो वक्तव्यः[१]* । राजनीदं राजाधीनम् ।

यदि सधीनर्क्रियते सकारस्येत्संज्ञा न प्राप्नोति, इह च श्र्यधीनः भ्र्वधीन इत्यङ्गस्येतीयङुवङौ स्याताम्† । सूत्रं च भिद्यते ।

यथा न्यासमेवास्तु । ननु चोक्तम् 'ध्युत्तरपदात्प्रत्ययविधानानुपपत्तिर्विग्रहाभावा'दिति । नैष दोषः । अस्ति कारणं येनाऽत्र विग्रहो न भवति । किं कारणम् ? नित्यप्रत्ययोऽयम् । के पुनर्नित्यप्रत्ययाः ? '[२]तमादयः प्राक्कनः, '[३]ञ्यादयः प्राग्वुनः, '[४]आमादयः प्राङ्मयटः, '[५]बृहतीजात्यन्ताः, '[६]समासान्ताश्चे'ति ।

प्र०—इति । यत्र तु विग्रहो नेष्यते तत्र नित्यग्रहणं क्रियते,—यथा 'त्रेर्मम्नित्य'मिति । इह तु महाविभाषाधिकारस्य न किंचिन्निवर्त्तकमस्तीति विग्रहः प्राप्नोति, न चासौ दृश्यत इति प्रत्ययविधानं नोपपद्यत इत्यर्थः । सूत्रमुपालभ्य न्यासान्तरं पठति—तस्मात्तत्रेदमिति । तत्र महाविभाषाधिकारात्पक्षे वाक्यं भवति—राजनीदमायत्तमिति । पक्षे प्रत्ययः—राजाधीनमिति । भाष्यकारो न्यासान्तरं दूषयति—यदिति । पदसंज्ञा नलोपाद्यर्थमवश्यमभ्युपेया । तमादय इति । 'अवक्षेपणे क'न्नित्यस्मात्कनः प्रागित्यर्थः । शुक्ल इत्युक्ते सामान्यशब्दत्वात् प्रकर्षस्यानवगमात्प्रकर्षाद्युपाधिद्योतनायावश्यप्रयोज्यास्तमादय इति सामर्थ्यात्ते नित्याः । आमादय इति । 'किमेत्तिङव्ययघा'-

उ०—नोपपद्यत इति । नित्यपदाऽभावान्न नित्यं प्रत्ययः, विकल्पस्तु नेष्यत इत्यनुपपत्तिरिति भावः । नन्वधीनर्प्रत्यय एवास्त्वत आह—पदसंज्ञा चेति । सा च सित्वं विना दुर्लभेति भावः । 'अभ्युपेये'ति पाठे ईङो दैवादिकादचो यति रूपम् । नन्वधीनर् सिद्धेति न्यासः कार्य इत्यभिप्रायेण भाष्ये दोषान्तरमाह—इह चेति । 'तमादयः प्राक्कन' इति प्रायिकम्, 'विभाषा सुप' इति सूत्रे महाविभाषया वाक्ये सिद्धे 'विभाषेति कल्पाद्यर्थ'मिति भाष्येण, 'एकाच प्राचा'मिति सूत्रे महाविभाषयैव सिद्धे प्राचां ग्रहणं न कर्त्तव्य'मिति भाष्येण च तथा बोधनात् । शुक्ल इत्युक्त इति । सामान्यशब्दात्—सामान्यबोधकादस्माच्छब्दात् प्रकर्षानवगमादित्यर्थः । 'सामान्यशब्दत्वा'दिति क्वचित्पाठः । सामर्थ्यात्ते नित्या इति तु चिन्त्यमेव, प्रकरणादिसत्त्वे तन्मात्रादपि

१–'तस्मात्तत्रेदमित्यस्मिन्नर्थे सधीनर्प्रत्ययो भवतीति वक्तव्यम् ।' पा० ।

* सिति च १ । ४ । १६ इति पदसंज्ञा सित्वाद् भवति ।

† अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ६ । ४ । ७७

२–अतिशायने तमबिष्ठनौ,—अवक्षेपणे कन् ५ । ३ । ५५–६५

३–पूगाञ्ञ्योऽग्रामणीपूर्वात्,—पादशतस्य संख्यादेर्वीप्सायां वुन् लोपश्च ५ । ३ । ११२–५।४।१

४–किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे,—तत्प्रकृतवचने मयट् ५ । ४ । ११—२०

५–बृहत्या आच्छादने,—जात्यन्ताच्छ बन्धुनि ५ । ४ । ६—९

६–समासान्ताः,—निष्प्रवाणिश्च ५ । ४ । ६८—१६०

एवं तर्हि नायं प्रत्ययविधिरुपालभ्यते । किं तर्हि ? प्रकृतिरुपालभ्यते, अध्युत्तरपदा प्रकृतिर्नास्ति । किं कारणम् ? 'विग्रहाभावात्' । विग्रहपूर्विका समासप्रवृत्तिर्न चाऽधिना विग्रहो दृश्यते । एवं तर्हि बहुव्रीहिर्भविष्यति । किं कृतं भवति ? भवति वै कश्चिदस्वपदविग्रहोऽपि बहुव्रीहिः । तद्यथा,—शोभनं मुखमस्याः सुमुखीति । नैवं शक्यम् । इह हि 'महदधीन'मित्यात्वं कप्' च प्रसज्येयाताम्‡ । एवं तर्ह्यव्ययी-

प्र०—दित्यारभ्य 'तत्प्रकृतवचने मय'डित्यस्मात् प्रागित्यर्थः । बृहतीजात्यन्ता इति । बहुवचननिर्देशादेतत्सूत्रविहितस्य खस्य ग्रहणम् । किं तर्हि प्रकृतिरिति । प्रकृत्यभावात्प्रत्ययोऽपि न प्राप्नोति । एतच्च शौण्डादिष्वधिशब्दस्य पाठमनपेक्ष्योच्यते । एवं तर्हि बहुव्रीहिरिति । वृत्तिविषये ससाधनक्रियावाचित्वादधिशब्दस्य राजाधिकृतो यस्मिंस्तद्राजाधीनमिति बहुव्रीहिः करिष्यते । विशेषणत्वविवक्षया च राजादीनां पूर्वनिपातः । यद्यधिखट्वादिवद्राजानमधिगत इति तत्पुरुषः क्रियते तदाऽधेः पूर्वनिपातः स्यात् । कप्चेति] । 'शेषाद्विभाषे'त्यनेन ‡। तस्मिंश्च सत्यध्युत्तरपदत्वाभावात्खो न स्यात् । एवमप्यधेरिति । यथाऽधिस्त्रीति । राजदन्तादिष्विति । ननु विभक्त्यर्थवृत्तेरधेरव्ययीभावो विधीयमानोऽधिकरणप्रधानः स्यान्नाधेयप्रधानः । नैष दोषः । साहचर्यादाधेयप्रधानो भविष्यति । खप्रत्यये च कृते कुटीरादिवद्यथेष्टं लिङ्गसङ्ख्य भविष्यति, राजदन्तादिषु चाधेयेऽधिरित्येवं विशिष्य पठितव्यं, तेनाधिस्त्रीत्यादावधिकरणप्रधानत्वेऽधेः परनिपाताभावः । अधिः शौण्डादिष्विति । 'अधिरीश्वर' इत्यधेः कर्मप्रवचनीयत्वा'द्यस्य चेश्वरवचन'मिति सप्तम्यन्ता राजादयोऽधिना समस्यन्ते । एवं च वाक्यमपि भवति । यथाधिब्रह्मदत्ते

उ०—तादृग्बोधस्य वक्तुं शक्यत्वात् तुल्यन्यायात्पाशादीनामपि नित्यत्वापत्तेश्च । तस्माद्भाष्योक्त्या वाचनिकमेषां नित्यत्वं बोध्यम् । नन्वधिशब्दस्याधिकरणशक्तिप्रधानत्वात्सामानाधिकरण्याद्यभावेन कथं बहुव्रीहिरत आह—वृत्तिविषये इति । ससाधनेति । क्रियाविशिष्टसाधनवचनादित्यर्थः । विशेषणत्वविवक्षयेति । 'राजदन्तादित्वा'दिति वक्तुं युक्तम् । तस्मिंश्च सत्यध्युत्तरपदत्वाऽभावादिति । समासाऽवयवत्वे कस्य तच्चरमाऽवयवत्वेनाऽधेस्तच्चरमाऽवयवत्वाऽभाव इति भावः । साहचर्यादिति । अधिकरणत्वशक्तेराधेयाऽविनाभावेन सा तत्सहचरितेति तयाधेयं लक्ष्यमिति भावः । ननु लक्षणयाऽऽधेयप्रधानत्वेऽपि स्वगतलिङ्गाऽस्यागाच्छक्तिप्रधाने सामान्ये नपुंसकत्वस्यैव सत्त्वेन खान्तमपि नपुंसकमेव स्यादत आह—कुटीरादिवदिति । नन्वेवमधिस्त्रीत्यादावप्यधेः परनिपातापत्तिरत आह—राजदन्तादिषु चेति ।

नन्वधियोगे कथं सप्तमीत्यत आह—अधिरिति । 'राजाऽधीनो देवदत्त' इति सामानाधिकरण्यसिद्धये आह—वृत्तिविषये चेति । अथवा अधिकरण एवेति । 'कर्तृकर्मणो'रिति सूत्रस्थभाष्यरीत्याऽधि-

१–'मित्यात्वकपौ' पाठस्तु प्रदीपस्थात् 'कप् चे'ति प्रतीकाद् विरुद्धः ।

‡ आन्महतः समानाधिकरणजातीययोः ६ । ३ । ४६; शेषाद्विभाषा ५ । ४ । १५४

भावो भविष्यति । एवमप्यधेः पूर्वनिपातः प्राप्नोति । राजदन्तादिषु* पाठः करिष्यते । अथवा सप्तमीसमासोऽयम् । अधिः शौण्डादिषु× पठ्यते[1] ॥ ७ ॥

## विभाषाऽञ्चेरदिक् स्त्रियाम् ॥ ५ । ४ । ८ ॥

दिग्ग्रहणं किमर्थम् ? अस्त्रियामितीयत्युच्यमाने 'प्राचीना ब्राह्मणी'[2]-'अवाचीना शिखे'त्यत्रापि प्रसज्येत । दिग्ग्रहणे पुनः क्रियमाणे न दोषो भवति ।

अथ स्त्रीग्रहणं किमर्थम् [ नै[3] ] यावता दिक्शब्दः स्त्रीविषय एव । भवति वै कश्चिद्दिक्शब्दोऽस्त्रीविषयोऽपि । तद्यथा,—प्राक्-प्राचीनम् । प्रत्यक्—प्रतीचीनम् । उदक्-उदीचीनम् ॥ ८ ॥

प्र०—पञ्चाला इति, एवं राजन्यधि राजाधीनमिति । वृत्तिविषये चाधिशब्द ईशितव्ये वर्त्तते । अथवाऽधिकरण एव सप्तमी, वृत्तिविषये च ससाधनक्रियावचनोऽधिर्न तु वाक्ये इत्यस्वपदेन विग्रहो,—राजन्यधिकृतं राजाधीनं, राजायत्तमित्यर्थः ॥ ७ ॥

विभाषाञ्चे । इह विभाषाग्रहणं पूर्वस्य विधेर्नित्यत्वज्ञापनार्थम् । 'द्वयोर्विभाषयोर्मध्ये नित्या विधय' इति न्यायात् । दिग्ग्रहणमिति । अञ्चत्यन्तः स्त्रियां वर्त्तमानो दिश्येव वर्तत इति प्रश्नः । प्राचीना ब्राह्मणीति । क्रियानिमित्तको दिग्देशकालनिमित्तको वा ब्राह्मण्यादौ स्त्रियां वर्त्तत इति खस्य प्रतिषेधाऽभावः । प्रागिति । प्राचीशब्दाद्दिग्वाचिनो दिक्शब्देभ्य इत्यस्तातेरुत्पन्नस्याऽञ्चेर्लुगिति लुक् । ततोऽव्ययत्वात् स्त्रीत्वाभावः । खे तु कृते शब्दान्तरत्वान्नपुंसकत्वम् ॥ ८ ॥

उ०—कृतार्थत्वेऽप्यधेस्तदर्थस्य कारकविभक्त्यर्थान्वयप्रयोजकक्रियात्वाऽभावाचिन्त्यमिदम् । तस्मात्समासाऽलौकिके सप्तम्यन्तेन समासविधानात्सप्तमीस्थितिरिति बोध्यम् ॥ ७ ॥

विभाषाऽञ्चे । द्वयोरिति । 'पादशतस्ये'त्यादौ महाविभाषाधिकारादिति भावः । नन्वञ्चत्यन्तस्य दिग्देशकालबोधकस्य कथं ब्राह्मण्यां वृत्तिरत आह—क्रियानिमित्तक इति । प्रकर्षेणाऽञ्चतीति क्रियानिमित्तक इत्यर्थः । दिग्देशेत्यादि । तत्तद्दिगादिस्थे लक्षणेति भावः । स्त्रीत्वाभाव इति । एवञ्च नाऽयं स्त्रीविषय इति भावः ॥ ८ ॥

* राजदन्तादिषु परम् २ । २ । ३१    × सप्तमी शौण्डैः २ । १ । ४०

१—काशिकादिषु 'अधिपट्ठ' इति समस्तपाठस्तु प्रामादिक एव । 'अन्तर् । अधि । पटु । पण्डित ।' इत्येवं पठनीयम् । 'अधिशब्दोऽत्र पठ्यते' इति कौमुदीव्याकरणदीपिके । गणरत्नमहोदधौ तु 'अधीन'-शब्दो दृश्यते ।

२—'प्राचीना' पा० ।    ३—क्वचिन्न ।

## णचः स्त्रियामञ् ॥ ५ । ४ । १४ ॥

स्त्रीग्रहणं किमर्थम्, न स्वार्थिकोऽयम्, स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते* ? एवं तर्हि सिद्धे सति यत्स्त्रीग्रहणं करोति तज्ज्ञापयत्याचार्यः—'स्वार्थिका अतिवर्त्तन्तेऽपि लिङ्गवचनानी'ति । किमेतस्य ज्ञापने प्रयोजनम् ? गुडकल्पा द्राक्षा, तैलकल्पा प्रसन्ना, पयस्कल्पा यवागूरित्येतत्सिद्धं भवति† ॥ १४ ॥

## एकस्य सकृच्च ॥ ५ । ४ । १९ ॥

सकृदादेशेऽभ्यावृत्तिग्रहणं‡ निवर्त्यम् । किं प्रयोजनम् ? पुनः पुनरावृत्तिरभ्यावृत्तिर्न चैकस्य पुनः पुनरावृत्तिर्भवति ।

प्र०—एकस्य । सकृदादेश इति । अभ्यावृत्तिगणने सकृच्छब्दस्याऽसामर्थ्यात् पुनः पुनरावृत्तिक्रियायाः क्रियाभ्यावृत्तिस्तद्गणने वर्त्तमानात् सङ्ख्याशब्दात्कृत्वसुजित्येवं पूर्वसूत्रार्थमाश्रित्येदमुच्यते । यदा त्वभिमुखी वृत्तिरभ्यावृत्तिर्जन्मलक्षणोच्यते तदा तदनुवृत्तावपीह दोषाभावः । अस्मिन्पक्षे धात्वर्थस्यानुवादक आङ् । यथा 'अधिपरी अनर्थका'विति । किं प्रयोजनमिति । अभिमुखीवृत्तिरभ्यावृत्तिरित्यर्थे न दोष इति प्रश्नः । न चैकस्येति । ननु चैकस्यैव पुनः पुनरावृत्तिर्यथा पञ्चकृत्वो भुङ्क्ते इति । एकैवात्र भुजिक्रिया निवृत्तभेदाख्यातेनाभिधीयते । तस्याः पञ्चावृत्तयः पञ्चसङ्ख्यया गण्यन्ते । सत्यमेवमेतत् । अयं त्वत्रार्थः—न चैककालस्य पुनः पुनरावृत्तिर्भवतीति । इह सकृद्भुङ्क्ते इति भोजनमेककालं विवक्षितं तस्यैकस्यैककालस्यैकशब्दवाच्यस्य कालभेदादप्यलब्धभेदस्य पुनरावृत्त्यभावादभ्यावृत्त्यभावस्तत्र यथा 'साधु पचती'ति भवत्येव'मेकं भुङ्क्ते'इति प्राप्ते सकृच्छब्दप्रयोगार्थमिदं सूत्रम् ।

उ०—एकस्य सकृच्च । नन्वभ्यावृत्तिर्जन्म, तद्गणने सकृच्छब्दस्याऽपि वृत्तिसम्भवादाह—पुनःपुनरिति । अभिमुखीति । व्यवहाराऽभिमुखी वृत्तिर्जन्मेत्यर्थः । नन्वत्रार्थे आङुपादानं व्यर्थमत आह—अस्मिन् पक्ष इति । एकैवाऽत्रेति । एकत्वविशिष्टैवाऽऽख्यातेनाऽभिधीयत इत्यर्थः, शब्दशक्तिस्वभावादिति भावः । पञ्चावृत्तय इति । कृत्वसुजादिसमभिव्याहारे सङ्ख्याशब्दानां तत्सङ्ख्याजन्मपरता, तत्सङ्ख्याऽऽवृत्तिपरता वेत्यर्थः । इति भोजनमिति । सकृच्छब्देनेत्यर्थः । तस्यैकस्येति । निवृत्तभेदस्यैवाख्यातेन प्रत्यायनादिति भावः । एककालस्येति । अस्य प्रयोजनं—कालभेदादप्यलब्धभेदस्येति । अत एव—पुनरावृत्त्यभावादिति । इदं सूत्रमिति । तत्र चाभ्यावृत्त्यसम्भवात्तन्निवृत्तिरावश्यकीति भावः । एकस्येति भाष्यस्य,—एककालस्य एकशब्दबोध्यस्य चेत्यर्थ इति तात्पर्यम् । प्रधाने—अभ्यावृत्तिपदे । स्वरितत्वादिति । एकदेशे स्वरितत्वप्रति-

* कर्मव्यतिहारे णच् स्त्रियाम् ३ । ३ । ४३

† ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ५ । ३ । ६३

‡ संख्यायाः क्रियाऽभ्यावृत्तिगणने कृत्वसुच् ५ । ४ । १७

अथ क्रियाग्रहणमनुवर्तत उताहो न ? किं चार्थोऽनुवृत्त्या ? बाढमर्थः । इह मा भूत्—'एको भुङ्क्त' इति ॥ अथाऽनुवर्तमानेऽपि क्रियाग्रहण इह कस्मान्न भवति—एकः पाक इति । पूर्वयोश्चापि योगयोः+ कस्मान्न भवति—द्वौ पाकौ, त्रयः पाकाः, चत्वारः पाकाः, पञ्च पाकाः, दश पाका इति ? नैतत्क्रियागणनम् । किं तर्हि ? द्रव्यगणनमेतत् । कथम् ? 'कृदभिहितो भावो द्रव्यवद्भवती'ति ।

इहापि तर्हि द्रव्यगणनान्न प्राप्नोति—'सकृद् भुक्त्वा' 'सकृद्भोक्तु'मिति । पूर्वयोश्चाऽपि योगयोः—द्विर्भुक्त्वा द्विर्भोक्तुम्, त्रिर्भुक्त्वा त्रिर्भोक्तुम्, पञ्चकृत्वो

प्र०—अथ क्रियाग्रहणमिति । प्रधाने निवर्त्तमाने गुणस्यापि निवृत्त्या भाव्यमिति मत्वा प्रश्नः । किं चार्थ इति । यदि प्रयोजनमस्ति ततः स्वरितत्वात् क्रियाग्रहणं निवर्त्तमानेऽप्यभ्यावृत्तिग्रहणेऽनुवर्त्तिष्यत इति भावः । एको भुङ्क्त इति । अनेकोऽपि भुङ्क्त इति तन्निवृत्त्यर्थमेकशब्दप्रयोगः । अथानुवर्त्तमानेऽपीति । यथा 'तुमुन्ण्वुलौ क्रियायां क्रियार्थाया'मित्यादिषु क्रियाप्रदेशेषु पाकादेर्ग्रहणं भोक्तुं पाक इत्यादिसिध्यर्थं तथेहापि ग्रहणेन भाव्यमिति मत्वा प्रश्नः । द्वौ पाकाविति । यदैकमेव पाक्यं द्विपाकं तदैतदुदाहरणं—सुवर्णस्य द्वौ पाकाविति । एवमभ्यावृत्तिर्भवति, तद्भेदाच्च पाक्यस्य भेदः । यदा तु पाक्यद्रव्यभेदात्पाकभेदस्तदाभ्यावृत्त्यभावादेव पूर्वयोगाभ्यां प्रत्ययाऽप्रसङ्गः । नैतत्क्रियागणनमिति । अभ्यावृत्तिग्रहणादेव क्रियासंप्रत्ययः सिद्धः । न हि द्रव्यगुणयोः स्वभावसिद्धयोः शब्देन प्रतिपाद्यमानयोरभ्यावृत्तिः संभवति, साध्यार्थविषयत्वात्तस्याः । तस्मात् क्रियाविशेषप्रतिपत्त्यर्थं क्रियाग्रहणं कृतं, तेन साध्यस्वभावैव क्रिया गृह्यते । पाकादिभिस्तु शब्दैः सिद्धस्वभावाऽभिधीयते । सिद्धतायां घञादिविधानात् । यद्यपि धातुनाऽत्र साध्यस्वभावा क्रियाऽभिधीयते तथापि प्रत्ययार्थस्य प्राधान्यात्साध्यत्वं गुणभूतमिति

उ०—ज्ञानादित्यर्थः । ननु 'भुङ्क्ते' इत्येकवचनेनैव कर्त्रेकत्वप्रतीतेः 'एक' इति व्यर्थमत आह—अनेकोऽपीति । तादृशप्रयोगस्याऽपि दर्शनादिति भावः । ननु घञन्तवाच्यस्य द्रव्यरूपत्वेन क्रियात्वाभावात्कथं तत्र कृत्वसुचः प्राप्तिरत आह—यथा तुमुन्ण्वुलाविति ।

ननु पाक्यद्वयस्य पाकद्वयेऽभ्यावृत्त्यभावात्प्रत्ययप्राप्तिरेव नेत्यत आह—यदैकमेवेति । 'यदैकमेव पाक्यं द्विपाक'मिति पाठः । द्विपाकमिति—बहुव्रीहिः । द्विष्पाक'मिति स्वपाठः । 'द्विष्पक्व'मिति क्वचित्पाठः । नन्वेकस्य पाकद्वयं व्यर्थमत आह-तद्भेदाच्चेति । पाकभेदाच्च पाक्यभेदः, तत्कृतः पाक्यस्य विशेष इत्यर्थः । नन्वेकपाक्यस्य वारंवारं पाके क्रियागणनस्य सम्भवादाह—अभ्यावृत्तिग्रहणादेवेति । द्रव्यगुणयोर्न गणनायोग्यं पुनः पुनर्जन्म, यत एकैव तेषामुत्पत्तिः, क्रियायास्तु धातुतो निवृत्तभेदाया एव प्रत्ययेन भवति पुनः पुनरुत्पन्नेति प्रतीतिः, आवृत्तिश्च । द्रव्यस्य स्वनिवृत्तभेदस्यैव शब्देनोपादानात्, न पुनः पुनरुपपत्तिः, नाऽभ्यावृत्तिः, पुनः पुनर्जन्मयोग्यस्य जन्मैव चाऽभ्यावृत्तिपदेनोच्यते; अभिमुखीत्यर्थकाभिपदस्वारस्यादिति

+ संख्यायाः क्रियाऽभ्यावृत्तिगणने कृत्वसुच्; द्वित्रिचतुर्भ्यः सुच् ५ । ४ । १७; १८

भुक्त्वा पञ्चकृत्वो भोक्तुम्, दशकृत्वो भुक्त्वा दशकृत्वो भोक्तुमिति द्रव्यगणनान्न प्राप्नोति ॥ यदि खल्वपि पुनः पुनरावृत्तिरभ्यावृत्तिर्द्विरावृत्ते सकृदिति स्यात्, त्रिरावृत्ते द्विरिति ।

एवं तर्ह्यनुवर्ततेऽभ्यावृत्तिग्रहणम्, न तु पुनःपुनरावृत्तिरभ्यावृत्तिः । किं तर्हि ? अभिमुखी प्रवृत्तिरभ्यावृत्तिः । पूर्वा च परे प्रत्यभिमुखी, परे च पूर्वां प्रत्यभिमुख्यौ ।

प्र०—क्रियाग्रहणादिह सिद्धतावर्मयुक्तपाकाद्यग्रहोऽन्यत्र तु धातुवाच्यक्रियाश्रयं पाकादिष्वपि कार्यं भवति । यादृशी च पूर्वसूत्रे क्रिया गृहीता तादृश्येवेहानुवर्त्तत इत्येकः पाक इत्यत्राप्ययं परिहार उपपन्नः ।

यथोक्तन्यायमप्रतिपद्य कृदभिहित इति सामान्येनाभिधानाद्घञादीनामव्ययकृतां च विशेषमबुद्ध्वा पृच्छति—इहापि तर्हीति । दोषान्तरं चाह—यदि खल्वपीति । आद्या हि क्रियाप्रवृत्तिरभ्यावृत्तिर्न भवति किं तर्ह्यभिमुखीति । एतच्चाभिग्रहणाल्लभ्यते । अन्यथा हि क्रियावृत्तिगणन इति ब्रूयात् । पूर्वा चेति । अस्ति हि तासां प्रवृत्तीनामेकसाधनानां परस्परापेक्षा,—एतावत्य एताः प्रवृत्तय इति । सकृद्भुङ्क्ते इत्यादौ त्वेकस्या अपि वृत्तेः स्वरूपलाभं प्रत्याभिमुख्यमस्ति । द्रव्यवदपीति । यथा द्रव्यं लिङ्गसङ्ख्यासाधनैः सम्बध्यते तथा घञाद्यभिहितो भाव इत्यर्थः । अव्ययकृदभिहितस्तु भावो लिङ्गसङ्ख्यासाधनसम्बन्धाभावात् साध्यस्वभाव एव प्रतीयते न तु सिद्धस्वभाव इति क्रियावदेवासौ भवति न तु द्रव्यवदिति तत्र क्रियाभ्या-

उ०—भावः । तदाह—न हीति । स्वभावसिद्धयोः शब्देनेति । सिद्धतया शब्देन प्रतिपाद्यमानयोरित्यर्थः । तस्याऽपि श्वेतत इत्यादेः शब्दात्साध्यत्वेन प्रतीतौ सम्भवत्येवाऽभ्यावृत्तिरित्येवमुक्तम् । केचित्तु—साध्यत्वविशिष्टा धातुना, सिद्धत्वविशिष्टा घञोच्यत इति वदन्ति, तन्मते शङ्कते—यद्यपीति ।

साध्यस्वाभावेति । सैवेत्यर्थः । साध्यत्वं—तद्विशिष्टा क्रिया । गुणभूतमित्यत्र हेतुः । प्रत्ययार्थप्राधान्यादिति । सिद्धत्वसाध्यत्वधर्मभेदेन तस्मिन् विशेष्यताविशेषणतयोः स्वीकारादिति भावः । क्रियाग्रहणादिहेति । प्रधानतया भासमानसाध्यक्रियाग्रहणादित्यर्थः । आद्या हीति । आवृत्तिशब्दस्य द्वितीयादिप्रवृत्तावेव रूढत्वादिति भावः । एतावत्य एताः प्रवृत्तय इति । 'प्रवृत्तयो जन्मानीति व्यवहारे' इति शेषः । एकसाधनानामित्यनेन—भिन्नकर्मकर्तृकत्वे आवृत्तिव्यवहाराऽभाव इति सूचितम् ।

नन्वेवमपि वृत्त्यन्तराऽपेक्षत्वादाभिमुख्यस्यैकप्रवृत्तावभावात्कथमत्राऽनुवर्त्तत इत्युक्तिरत आह—सकृद्भुङ्क्त इत्यादौ त्विति । स्वरूपलाभमिति । स्वरूपमात्रप्रयुक्तैदशव्यवहारलाभमप्रतीत्यर्थः । जन्मार्थकाऽभ्यावृत्तिग्रहणादेकः पाको द्वौ पाकावित्याद्यपि सिद्धमिति । एतदजानान एकदेश्याह—यदपीत्यादिना क्रियावदित्यन्तेन । 'द्वौ पाका'वित्यादौ न जन्मगणने द्रव्यादीनां वृत्तिः, तथा सति 'पाका'वित्यादौ द्विवचनाद्यनापत्तिरिति तत्त्वम् । 'द्रव्यवदपि क्रियावदपी'ति भाष्यं-लक्ष्यभेदेन व्यवस्थितमित्याह—यथेति । साधनैरिति । साधनपदेन शक्तिः । ननु तस्याऽपि क्रियात्वे 'क्रियाव'दिति वतिरनुपपन्नोऽत आह—अवि-

यदप्युच्यते—"अनुवर्तमानेऽपि क्रियाग्रहण इह कस्मान्न भवति—एकः पाक इति । पूर्वयोश्चापि योगयोः—द्वौ पाकौ, त्रयः पाकाः, चत्वारः पाकाः, पञ्च पाकाः, दशपाका इति" परिहृतमेतत्, नैतत्क्रियागणनम् । किं तर्हि ? द्रव्यगणनमेतत् । कथम् ? कृदभिहितो भावो द्रव्यवद्भवतीति । ननु चोक्तम्—"इहापि तर्हि द्रव्यगणनान्न प्राप्नोति–सकृदभुक्त्वा सकृद्भोक्तुमिति । पूर्वयोश्चापि योगयोः–द्विर्भुक्त्वा द्विर्भोक्तुम्, त्रिर्भुक्त्वा त्रिर्भोक्तुम्, पञ्चकृत्वोऽभुक्त्वा पञ्चकृत्वो भोक्तुम्, दशकृत्वो भुक्त्वा

प्र०—वृत्तिसद्भावाद्भवत्येव प्रत्ययः । अविप्रतिपत्तिविषयाख्यातवाच्यक्रियापेक्षश्च'क्रियाव'दित्यतिदेशः । पूर्वसूत्रे सङ्ख्याग्रहणमनियतविशेषवाचिभूर्यादिनिवृत्त्यर्थम् । ते हि बहुगणशब्दाभ्यां नियमार्थाभ्यां सङ्ख्याप्रदेशेषु निषिद्धग्रहणाः ।

अभ्यावृत्तिग्रहणं किमर्थम् । पञ्चपाका इत्यत्र क्रियामात्रगणने मा भूत् । अभ्यावृत्तिग्रहणे च क्रियमाणे क्रियाग्रहणात्क्रियाया विशेषो गृह्यते नान्यथा । तदेवं यदैकस्या एव क्रियाया जन्मलक्षणाः प्रवृत्तयो गण्यन्ते तदा कृत्वसुजादयो भवन्ति नान्यदा । यदि तर्हि घञाद्यन्तप्रयोगे कृत्वसुजादयो न भवन्ति कथं 'द्विरावृत्तिः' 'द्विःप्रयोगो द्विर्वचन'मित्यादयः प्रयोगाः ? 'द्विर्वचनेऽची'ति ज्ञापकात्क्वचिद्घञाद्यन्तप्रयोगेऽपि कृत्वोऽर्थप्रत्ययो भवतीत्यदोषः । गणनग्रहणं यत्र साक्षादभ्यावृत्तिगणनं तत्र प्रत्ययार्थम्, अन्यथा क्रियाभ्यावृत्तावित्युच्यमाने सप्तदशप्राजापत्यानजांस्तूपरानेकवर्णानालभेतेत्यत्राप्यालम्भनक्रियाया आभिमुख्येन प्रवृत्तिसम्भवात् साधनभेदसामर्थ्यप्रतिपन्नभेदा-

उ०—प्रतिपत्तीति । द्रव्यवदिति–वतिरप्येवम् । ननु गणने वृत्तिः सङ्ख्याशब्दानामेवेति पूर्वत्र सङ्ख्याग्रहणं व्यर्थमत आह—पूर्वसूत्रे इति । अनियतविशेषवाचीति । अनियतसङ्ख्याविशेषवाचीत्यर्थः । निषिद्धग्रहणा इति । वस्तुतस्तेषां सङ्ख्यात्वमेव नेत्युक्तं बहुगणेति सूत्रे । अभ्यावृत्तिग्रहणं किमर्थमिति । सङ्ख्यायाः क्रियागणन इत्युक्तावपि निवृत्तभेदायाः क्रियायाः स्वरूपेण गणनाऽसम्भवादभ्यावृत्तिद्वारकगणन एव भविष्यतीति किं तेनेति प्रश्नः । क्रियाविशेष इति । स चोक्तरूपः । यदैकस्या एवेति । एतेन 'पञ्चकृत्वः पच्यते'इत्यादौ जन्मभेदेन क्रियाभेदाद्बहुवचनं स्या'दित्यपास्तम् । जन्मभेदेऽपि क्रियाया एकत्वेनैव प्रतीतेः, शब्दशक्तिस्वभावेन जन्मगतसंख्यायास्तत्राऽनारोपात् । क्वचिदिति । तेन 'सिद्धान्वाख्यानमेवे'ति सूचितम् । एतेन 'साध्यस्वभावैव यत्र क्रिये'त्यादिग्रन्थस्य प्रागुक्तस्याऽयुक्तत्वं सूचितं स्वयमेवेति दिक् । ननु गणनग्रहणं व्यर्थं, यावता सङ्ख्या गणनात्मिकैव । न च 'शतं वारान् भुङ्क्ते' इत्यादौ प्रत्ययव्यावृत्त्यर्थं, वारशब्देनाऽभ्यावृत्तेरुक्तत्वेन सङ्ख्याशब्दस्य तद्वृत्तित्वाऽभावादत आह–गणनग्रहणमिति । सप्तदश प्राजापत्यानिति । अभिमुखी प्रवृत्तिर्जन्म । साधनभेदेति । तद्भेदेन सामर्थ्यादर्थतो न तु शब्दतः प्रतिपन्नो भेदो यया तादृशी या—आलम्भनक्रिया तदभ्यावृत्तिविषय इत्यर्थः । शब्दतस्तदभ्यावृत्त्यप्रतीतावप्यर्थतस्तत्प्रतीतिरस्त्येवेति तत्राऽपि कृत्वसुजाद्यतिप्रसङ्ग इति भावः । न चालम्भनक्रियायाः प्रतिपशु वस्तुतोऽभ्यावृत्तिसत्त्वेऽपि सप्तदशपदस्य न तद्वृत्तित्वमिति वाच्यं, तदभावेऽभ्यावृत्तिविषये सङ्ख्यावाचकात्प्रत्यय इत्येवार्थः स्यादिति तद्भावात् । एवञ्च 'शतं वारान् भुङ्क्ते' इत्यपि प्रत्युदाहरणं बोध्यम् । केचित्तु व्याख्यानतोऽभ्यावृत्तिरूपसङ्ख्येये वर्त्तमा-

दशकृत्वो भोक्तुमिति द्रव्यगणनान्न प्राप्नोती''ति। नैष दोषः। क्रियागणनाद्भविष्यति। कथम्? कृदभिहितो भावो द्रव्यवदपि क्रियावदपि भवति ॥ १६ ॥

## देवतान्तात्तादर्थ्ये यत् ॥ ५ । ४ । २४ ॥

'देवतान्ता'दित्युच्यते तत्रेदं न सिध्यति—पितृदेवत्यमिति। किं कारणम्? नहि पितरो देवता ॥ नैष दोषः। दिवेरैश्वर्यकर्मणो देवः, तस्मात्स्वार्थे तल्। एवं च कृत्वा देवदेवत्यमपि सिद्धं भवति ॥ २४ ॥

## देवात्तल् ॥ ५ । ४ । २७ ॥

### तलि स्त्रीलिङ्गवचनम् ॥ १ ॥

तलि स्त्रीलिङ्गं वक्तव्यम्। देवता। किं पुनः कारणं न सिध्यति? देवशब्दोऽयं पुँल्लिङ्गः, स्वार्थिकश्चायम्, स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते।

### उक्तं वा ॥ २ ॥

किमुक्तम्? 'स्वार्थिका अतिवर्तन्तेऽपि लिङ्गवचनानी'ति* ॥ २७ ॥

प्र०—लम्भनक्रियाभ्यावृत्तिविषये सावनगणनवाचिनोपि सप्तदशशब्दात् प्रत्ययः स्यात्। इह 'पञ्चकृत्वः पाक' इत्यादौ करोत्यादिक्रियानेऽत्तः प्रत्ययः। यथा 'पञ्चकृत्वः पटो रक्त' इति ॥ १६ ॥

देवतान्ता। न हि पितर इति। देवताशब्दस्य जातिविशेषवाचित्वाद्भिन्नजातीयाभिधायिना सामानाधिकरण्याभावात् समासाभावात्प्रकृतिरेव नास्ति कुतः प्रत्यय इत्यर्थः। दिवरिति। क्रियाशब्दो देवताशब्दो न तु जातिवाचीत्यर्थः। देवदेवत्यमिति। जातिशब्दत्वे तु देवताशब्दस्य द्वयोः पर्यायत्वाद्युगपत्प्रयोगो न स्यात् ॥ २४ ॥

उ०—नात्सङ्ख्यावाचकात्प्रत्यय इत्यर्थेन न प्रागुक्ता दोषाः। तस्माद्गणनायां ये प्रसिद्धाः सङ्ख्यावाचकास्तद्ग्रहणार्थम्। तेन उभशब्दाद्युग्मशब्दाच्च न कृत्वसुच्, न ह्येक उभौ त्रय इति लोके गण्यत इत्याहुः।

ज्ञापकस्य सुज्विषयत्वादाह—इह पञ्चेति। पटो रक्त इति। क्रियत इति शेषः ॥ १६ ॥

देवतान्तात्ता। ननु पितॄणामपि श्राद्धादौ देवतात्वमस्त्येवेत्यत आह—देवताशब्दस्येति। क्रियाशब्द इति। तेन त्यज्यमानहविरुद्देश्यत्वं, मन्त्रस्तुत्यत्वञ्च देवतात्वमिति भावः। द्वयोः—देवदेवताशब्दयोः ॥ २४ ॥

* ५ । ३ । ६८ वा० ३ भाष्ये; ( ४ । १ । ६२ वा० ७ भाष्ये च )

## लोहितान्मणौ ॥ ५ । ४ । ३० ॥

### लोहिताल्लिङ्गबाधनं वा ॥ १ ॥

लोहितात्लिङ्गबाधनं वेति वक्तव्यम्† । लोहितिका लोहिनिका ।

### अक्षरसमूहे छन्दस उपसंख्यानम् ॥ २ ॥

अक्षरसमूहे छन्दस उपसङ्ख्यानं कर्तव्यम् । 'ओ श्रावये'ति चतुरक्षरम् । 'अस्तु श्रौष'डिति चतुरक्षरम् । 'ये यजामहे' इति पञ्चाक्षरम् । 'यजे'ति द्व्यक्षरम् । द्व्यक्षरो वषट्कारः । एष वै सप्तदशाक्षरश्छन्दस्यः प्रजापतिर्यज्ञमनुविहितः[1] ।

### छन्दसि बहुभिर्वसव्यैरुपसङ्ख्यानम् ॥ ३ ॥

छन्दसि बहुभिर्वसव्यैरुपसङ्ख्यानं कर्तव्यम् । 'हस्तौ पृणस्व बहुभिर्वसव्यैः'‡ ।

### अग्निरीशे वसव्यस्येति ॥ ४ ॥

'अग्निरीशे वसव्यस्य'× इत्युपसङ्ख्यानं कर्तव्यम्[2] ।

### उक्तं वा ॥ ५ ॥

किमुक्तम् ? 'स्वार्थविज्ञानात्सिद्ध'मिति* ।

प्र०—लोहिता । लोहितादिति । प्रतिपदविधेर्बलवत्त्वात्पूर्वमेव कन् स्यात् । तथा च 'लोहिनिके'ति न सिध्येदिति वचनं नित्ये लिङ्गार्थप्रत्ययबाधे प्राप्ते विकल्पार्थम् । स्वार्थविज्ञा-

उ०—लोहितान्मणौ । ननु सुबन्तात्तद्धितोत्पत्तेः पूर्वं लिङ्गबोधकप्रत्यये ततः कनि लोहिनिकेति सिद्धम्, स्त्रीप्रत्ययस्य ङीपो वैकल्पिकत्वेन तदभावे 'लोहितिके'ति चेति, किमर्थं वचनमत आह—प्रतिपदेति । यद्यपि 'लोहितक' इत्यत्र चारितार्थ्यादिदमप्रयोजकं, तथाऽप्यर्थोऽन्तराऽभावेन 'कुत्सित' इति सूत्रोक्तन्यायाऽप्रवृत्त्याऽस्मादेव वा वचनाज्ज्ञापकादव्यन्तस्वार्थिकानां सुबुत्पत्तेः प्राक् प्रातिपदिकादेवोत्पत्त्यङ्गीकारेण परत्वादन्तरङ्गत्वाच्च कना नित्यं स्त्रीप्रत्ययबाधनं प्राप्तमिति विकल्पेन तद्बाधबोधनार्थं वचनमावश्यकमिति तात्पर्यम् । एतज्ज्ञापकादेव चाऽत्र ङ्याप्पदस्याऽसम्बन्धः । तेन 'एतिके'त्येवेति प्रपञ्चितं ङ्याप्सूत्रेऽस्माभिः ।

† वर्णादनुदात्तात्तोपधात्तो नः ४ । १ । ३९

१—तैत्तिरीयब्राह्मणादुद्धृतमिदं भाष्यकारेण ।

‡ अथर्ववेदे ७ । २७ । ८

× ऋग्वेदे ४ । ५५ । ८

२–२–३–४ वार्तिकानि तद्भाष्यं च ४ । ४ । १४० सूत्रभाष्येऽपि द्रष्टव्यम् ।

* ४ । ४ । १४९, वा० ४

अपुस्यो वसानाः' । अपो वसानाः ॥ 'स्व ओक्ये' । स्व ओके ॥ 'कव्योऽसि हव्यसूदन' । कविरसि ॥ रौद्रेणानीकेन कव्यतायै । कवितायै ॥ आमुष्यायणस्य । अमुष्यपुत्रस्य ॥ क्षेम्यस्येशे । क्षेमस्येशे ॥ क्षेम्यमध्यवस्यति ॥ क्षेममध्यवस्यति ॥ आयुर्वर्चस्यम् । वर्च एव वर्चस्यम् ॥ निष्केवल्यम् । निष्केवलम् ॥ उक्थ्यम् । उक्थम् ॥ जन्यं ताभिः सजन्यं ताभिः । जनं ताभिः सजनं ताभिः ॥ स्तोमैर्जनयामि नव्यम् । नवम् ॥ प्र णो नव्येभिः । नवैः ॥ ब्रह्मपूर्व्यम् । पाथः पूर्व्यम् । तनुषु पूर्व्यम् । पूर्वम् ॥ पूर्व्याहः । पूर्वाहः ॥ पूर्व्या विशः । पूर्वा विशः ॥ पूर्व्यासः । पूर्वासः ॥ स प्र पूर्व्यः । स प्र पूर्वः ॥ अग्निं वः पूर्व्यम् । पूर्वम् ॥ 'तं जुषस्व यविष्ठ्य' । यविष्ठ ॥ 'होत्रवाहं यविष्ठ्यम्' । यविष्ठम् ॥ त्वं ह यद्यविष्ठ्य । यविष्ठ ॥ समावद्वसति समावद्गृह्णाति । समं वसति समं गृह्णाति ॥ समावद्देवयज्ञे हस्तौ । समम् ॥ समावद्वीर्यावहानि । समानि ॥ समावद्वीर्याणि करोति । समानि ॥ य ईवत उ लोकम् । य ईवते ब्रह्मणे । य इयते ।

प्र०—नास्तिद्धमिति । 'वसोः समूहे चे'त्यत्रोक्तम् । अपस्योवसाना इति । अप्शब्दाद्द्वितीया-

उ०—भाष्ये-बहुभिर्वसव्यैरिति । इदं छन्दसि दृश्यमानयत्प्रत्ययान्तोपलक्षणं, तद्ध्वनयन्नुदाहरति-ईशे वसव्यस्येति । तदेतद्वचनद्वयम्—'अक्षरसमूहे च्छन्दस' इति 'छन्दसि बहुभिर्वसव्यैः' इति च—प्रत्याचष्टे— उक्तं वेति । क्वोक्तं तत्राह—वसोः समूहे चेति । अस्यार्थः—यथा छन्दस्यन्यत्राऽपि स्वार्थिकाः प्रत्ययाः 'यत्' 'य' 'आ' 'व'दादयो दृश्यन्ते, यथा वा'ईवत' इत्यादौ दीर्घः, तथाऽत्रापि स्वार्थिकस्तत एव सिद्ध इतीदं वचनं व्यर्थमिति । तदेव ध्वनयन्-प्रयोगान्दर्शयति-अपस्योवसाना इति । यत्तु कैयटेन चतुर्थशेषे 'स्वार्थविज्ञाना'दित्यस्य 'वसोरिति योगविभागात्स्वार्थे भविष्यती'ति व्याख्यानं कृतं; तच्चिन्त्यम्, तावताऽपि 'अपस्य' इत्याद्यसिद्धेः । विभक्तेश्चाऽलुगिति । छान्दसत्वादिति भावः । अत एव यदन्तात्प्रथमैकवचनं पुंल्लिङ्गता च ।

केचित्तु—'वसो'रिति योगविभागेन स्वार्थिकयता 'वसव्यै'रिति 'वसव्यस्ये'ति च सिद्धम्, वार्त्तिके 'बहुभिर्वसव्यै'रिति वसुशब्दस्यैवोपलक्षणम् । स्वार्थविज्ञानादित्यस्य कैयटोक्तैव व्याख्या । अपस्य इत्याद्यर्थश्च 'वार्त्तिकान्यारभ्याण्येवे'ति व्याचख्युः । तन्मते गौरवं स्पष्टमेव, भाष्ये तत्साधकवचनाऽनुक्तेरुदाहरणमात्रोप-

१—इदानीं भाष्यकारः स्वार्थिक'यत्'-आदिप्रत्ययानां छान्दसोदाहरणानि प्रदर्शयति । यजु० १० । ७
२-ऋ० १ । ६१ । १३ ३-अथर्व० १० । ५ । ३६ ४-ऋ० १ । ३८ । १४
५-'स्तोमैं जनयामि नव्यम्' ऋ० १ । १०६ । २
६-'स नो नव्येभिः' ऋ० १ । १३० । १० ७-'तनुष्व पूर्व्यम्' ऋ० १ । १४२ । १
८-ऋ० ३ । २८ । २ ९-ऋ० ५ । २६ । ७

नवस्य नू त्नप्तनप्खाश्च ॥ ६ ॥

नवस्य 'नू'इत्ययमादेशो वक्तव्यः, त्नप्तनप्खाश्च प्रत्यया वक्तव्याः । नूत्नम् नूतनम् नवीनम् ।

नश्च पुराणे प्रात् ॥ ७ ॥

नश्च पुराणे प्राद्वक्तव्यः, स्तप्तनप्खाश्च प्रत्यया वक्तव्याः । प्रणम् प्रत्नम् प्रतनम् प्रीणम् ॥ ३० ॥

तद्युक्तात्कर्मणोऽण् ॥ ५ । ४ । ३६ ॥

'त'दित्यनेन किं प्रतिनिर्दिश्यते ? वागेव । यदेव वाचा व्याह्रियते तत्कर्मणा क्रियते ।

अण्प्रकरणे कुलालवरुडनिषादचण्डालाऽमित्रेभ्यश्छन्दसि[२] ॥ १ ॥

अण्प्रकरणे कुलालवरुडनिषादचण्डालाऽमित्रेभ्यश्छन्दस्युपसङ्ख्यानं कर्तव्यम् । कौलालः वारुडः नैषादः चाण्डालः आमित्रः ।

भागरूपनामभ्यो धेयः ॥ २ ॥

भागरूपनामभ्यो धेयो वक्तव्यः । भागधेयम् रूपधेयम् नामधेयम् ।

मित्राच्छन्दसि ॥ ३ ॥

मित्राच्छन्दसि धेयो वक्तव्यः । 'मित्रधेयै यतस्व'† ।

प्र०—बहुवचनाद्यत्प्रत्ययो विभक्तेश्चाऽलुक् ॥ ३० ॥

तद्युक्तात् । यदेव वाचेति । 'इदं त्वया कर्तव्य'मिति सन्देशवाचं श्रुत्वा यत्कर्म क्रियते

उ०—न्यासाच्च । 'आमुष्यायणस्यामुष्यपुत्रस्य त्वैम्यस्येशे' इति 'त्वैम्यस्ये'त्युदाहरणम् । आमुष्यायणाऽमुष्यपुत्रयोरलुक् 'आमुष्यायण' इत्यादिवार्त्तिकात्, मनोज्ञादिपाठाच्च । अत्र त्वैम्ये यप्रत्ययः, अन्तोदात्तस्येष्टत्वात् । अन्यथा 'यतोऽनाव' इत्याद्युदात्तत्वं स्यात् । समावदिति । समशब्दात्स्वार्थे वतुप्, छान्दसत्वाद्दीर्घः । तदपि छन्दस्यन्यत्रावश्यकमित्याह—य ईवत इति ॥ ३० ॥

तद्युक्तात्क । इदं त्वयेति । 'यदेव वाचा व्याह्रियते' इति भाष्यस्य—सन्देशद्वारा प्राप्यत इत्यत्तरार्थः । एवञ्च व्याहृतार्था वाक् तच्छब्देन परामृश्यत इति भावः । परन्त्विदं वागेवेति भाष्यस्यैवकारविरुद्धम् ।

१–'तन' पा० । २–'उपसंख्यान'मित्यधिकं क्वचित् । † यजु० वा० मा० २७ । ५

## अणमित्राच्च ॥ ४ ॥

अणमित्राच्चेति वक्तव्यम्[1] । मैत्रं आमित्रः ।

सांनाय्यानुजावरानुषूकचातुष्प्राश्यराक्षोघ्नवैयातवैकृतवारिवस्कृताग्रायणाग्रहायणसान्तपनानि निपात्यन्ते[2] । सान्नाय्यम्[3] । आनुजावरः । आनुषूकः । चातुष्प्राश्यः । राक्षोघ्नः । वैयातः । वैकृतः । वारिवस्कृतः । आग्रायणः । आग्रहायणः । सान्तपनः ।

## आग्नीध्रसाधारणादञ् ॥ ५ ॥

आग्नीध्रसाधारणादञ्वक्तव्यः । आग्नीध्रम् साधारणम्[4] ।

## अयवसमरुद्भ्यां छन्दसि ॥ ६ ॥

अयवसमरुद्भ्यां छन्दस्यञ्वक्तव्यः । आयवसे वर्धन्ते । मारुतं शर्धः ।

## नवसूरमर्तयविष्ठेभ्यो यत् ॥ ७ ॥

नवसूरमर्तयविष्ठेभ्यो यद्वक्तव्यः । नव्यः सूर्यः मर्त्यः यविष्ठ्यः ।

## क्षेमाद्यः ॥ ८ ॥

क्षेमाद्यो वक्तव्यः । क्षेम्यस्तिष्ठन् प्रतरणः सुवीरः ॥ ३६ ॥

## बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ॥ ५ । ४ । ४२ ॥

## बह्वल्पार्थान्मङ्गलाऽमङ्गलवचनम् ॥ १ ॥

बह्वल्पार्थान्मङ्गला[5]ऽमङ्गलवचनं कर्तव्यम् । बहुशो देहि । अनिष्टेषु श्राद्धादिषु

प्र०—तत्कार्मणमित्यर्थः ॥ ३६ ॥

उ०—व्याह्रियत इत्यस्य कथ्यत इत्येवार्थ उचितः, अन्यथा 'वाचो व्याहृतार्थाया'मित्यस्यैव प्रक्रान्तत्वात्प्रश्नस्योत्तरस्यैवकारस्य चाऽसङ्गतेरित्यन्ये । वार्त्तिके सान्नाय्यग्रहणमन्तोदात्तार्थम्, रूपन्तु पाय्यसान्नाय्य' इत्येव सिद्धम् । आनुजावर इति । अत एव निपातनात्समासः । चातुष्प्राश्यम्—आधाने ब्रह्मौदनस्य नाम । आग्रायणम्—कर्मविशेषः ॥ ३६ ॥

बह्वल्पा । अनिष्टेष्विति । अनिष्टश्राद्धादिदानेषु विषये बहूनि श्राद्धादिदानानि देहीत्यर्थे 'बहुशो

१—'मैत्रम्' पा० ।

२—'सान्नाय......सान्तपनानि' इति वार्तिकत्वेन क्वचित् पठ्यते । ३—'सानाय्यः' पा० ।

४—अतोऽग्रे "॥ स्त्रियां ङीप् ॥ स्त्रियां ङीब्वक्तव्यः । आग्नीध्री साधारणी ।" इत्यपि क्वचित् ।

५—'मङ्गलवचनं' इत्येव क्वचित् पाठः । ६—प्रदीपे त्विदं नोपलभ्यते ।

मा भूदिष्टेषु प्राशित्रादिषु यथा स्यात् । अल्पशो देहि । इष्टेषु प्राशित्रादिषु मा भूदनिष्टेषु श्राद्धादिषु यथा स्यात् ॥ ४२ ॥

## प्रतियोगे पञ्चम्यास्तसिः ॥ ५ । ४ । ४४ ॥

### तसिप्रकरण आद्यादिभ्य उपसङ्ख्यानम् ॥ १ ॥

तसिप्रकरण आद्यादिभ्य उपसङ्ख्यानं कर्तव्यम् । आदितः मध्यतः अन्ततः ॥ ४४ ॥

## कृभ्वस्तियोगे संपद्यकर्तरि च्विः ॥ ५ । ४ । ५० ॥

### च्विविधावभूततद्भावग्रहणम् ॥ १ ॥

च्विविधावभूततद्भावग्रहणं कर्तव्यम् । इह मा भूत्—संपद्यन्ते यवाः, संपद्यन्ते शालय इति ॥ अथ क्रियमाणेऽपि वा अभूततद्भावग्रहण इह कस्मान्न भवति—संपद्यन्तेऽस्मिन् क्षेत्रे शालय इति ?

प्र०—कृभ्वस्तियोगे सं । च्विविधाविति । अभूततद्भावग्रहणं वार्तिके दृष्ट्वाऽन्यैः सूत्रे प्रक्षिप्तम् । संपद्यन्तेऽस्मिन्निति । अभूत्वा भवन्ति संपद्यकर्त्तारश्चेति च्विप्रसङ्गः । एतच्चोपलक्षणम्, कृभ्वस्तियोगाभावादत्र च्वेरप्रसङ्गात् । तस्मादिदमुदाहरणं—भवन्त्यस्मिन् क्षेत्रे शालय इति ।

प्रकृतिविवक्षाग्रहणं चेति । तेनात्र प्रकृतेरविवक्षितत्वाच्च्वेरभावः । यदा तु प्रकृतिरेव विकारात्मतामापद्यमाना विकारभेदेन भवनक्रियायां कर्त्री विवक्ष्यते तदा च्विप्रत्ययः,-'अङ्कुरीभवन्ति यवा' इति । अत्राऽभूततद्भाव एव प्रकृतिविवक्षाग्रहणेन व्याख्यात इत्याहुः । येन रूपेण प्रागभूतं

उ०—'देही'ति मा भूत् । प्राशित्रम्-पुरोडाशादीनि । तत्साध्यकर्मविषयदानानि बहूनि देहीत्यर्थे यथा स्यादित्यर्थः । एवमग्रेऽपि ॥ ४२ ॥

कृभ्वस्तियोगे सं । एतच्चोपलक्षणमिति । सम्पद्यन्ते यवा इत्यप्येवम् । भवन्ति यवा इत्युदाहरणं बोध्यम् । 'सम्पद्यकर्त्तरी'त्यत्राऽस्मादेव निपातनात्कर्त्तरि पाघ्रादित्वाऽभावेपि शः । दिवादित्वाच्छ्यन् । सम्पद्यमाने—स्वाद्यर्थकर्त्तरीत्यर्थः । कर्मधारयः समासः । प्रकृतिविवक्षेति । प्रकृतेरुपादानकारणस्याऽन्यरूपेण विवक्षेत्यर्थः । प्रकृतेरविवक्षितत्वादिति । प्रकृतेरन्यरूपेणाऽविवक्षितत्वादित्यर्थः । तदाह—यदा त्विति । 'विकाराऽभेदेने'ति पाठ उचितो 'विकारात्मना सम्पद्यमाने'त्यस्य व्याख्यारूपत्वात् । 'विकारभेदेने'ति पाठे तु—भेदघटितसादृश्येनेत्यर्थः । अनेन विकारशब्दस्य स्वसदृशप्रकृतिपरत्वं गौण्या वृत्त्येति सूचितम् । अत एवौत्सूत्रे, 'आन्म इत' इति सूत्रे च 'गोऽभवन्' 'महद्भून' इत्यादौ प्रगृह्यसंज्ञा, आत्त्वं च गौणमुख्यन्यायेन वारितम् । भाष्ये—अभेदेनेति । सादृश्यमूलकाऽभेदेनेति व्याख्येयम् । तेन रूपेण तस्य भाव इति । अत एव विकृतिवाचकादेव प्रत्यय इत्याहुः ।

## प्रकृतिविवक्षाग्रहणं च ॥ २ ॥

प्रकृतिविवक्षाग्रहणं च कर्तव्यम् ।

## समीपादिभ्य उपसङ्ख्यानम् ॥ ३ ॥

समीपादिभ्य उपसङ्ख्यानं कर्तव्यम् । समीपीभवति, अभ्याशीभवति, अन्तिकीभवति । किं पुनः कारणं न सिध्यति ? न ह्यसमीपं समीपं भवति । किं तर्हि ? असमीपस्थं समीपस्थं भवति ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । तात्स्थ्यात्ताच्छब्द्यं भविष्यति ॥ ५० ॥

# अव्यक्तानुकरणाद्द्व्यजवरार्धादनितौ डाच् ॥ ५ । ४ । ५७ ॥

किमर्थश्चकारः ? स्वरार्थः । चितोऽन्त उदात्तो भवतीत्यन्तोदात्तत्वं यथा स्यात्* । नैतदस्ति प्रयोजनम् । एकाजयं, तत्र नार्थः स्वरार्थेन चकारेणानुबन्धेन । प्रत्ययस्वरेणैव सिद्धम्† ॥ अत उत्तरं पठति—

## डाचि चित्करणं विशेषणार्थम् ॥ १ ॥

डाचि चित्करणं क्रियते विशेषणार्थम् । क्व विशेषणार्थेनार्थः ? 'लोहितादिडा-

प्र०—कारणं तेन रूपेण तस्य भावोऽभूततद्भाव इत्याश्रयणादतिप्रसङ्गाभावः । संपद्यकर्तृत्वादेवाभूततद्भावे लब्धे पुनस्तदुपादानाद्यथोक्तविशेषलाभोऽथवा जन्मग्रहणे कर्त्तव्येऽभूततद्भावग्रहणाद्यथोक्तार्थपरिग्रहः । विकारशब्दाच्च प्रकृतिविकारभेदविवक्षायां प्रकृतौ विकारावस्थां प्राप्नुवत्यां वर्त्तमानात्स्वार्थे च्विप्रत्ययः । समीपादिभ्य इति प्रकृतिविकारभावाभावान्न प्राप्नोतीति वचनम् । तात्स्थ्यादिति । असमीपस्थस्य तस्य समीपस्थत्वभावात्सिद्धः सूत्रेण प्रत्यय इत्यर्थः ॥ ५० ॥

उ०—नन्वजातस्य जन्मभाव इत्येव शब्दात्प्रतीयत इति कथं तत इयदर्थलाभोऽत आह—सम्पद्येति । नन्वभिक्यरूपेऽर्थेऽपि सम्पत्तिरित्यादौ सम्पदेः प्रयोगदर्शनान्न नियमेनोक्तार्थलाभस्ततोऽत आह—अथवा जन्मेति । प्रकृतिविकारभेदविवक्षायामिति । तद्धटितसादृश्यविवक्षायामित्यर्थ । 'अभेदे'ति पाठे—सादृश्यमूलकाऽभेदविवक्षायामित्यर्थः । 'विकाराऽवस्थां प्राप्नुवत्यां प्रकृतौ वर्त्तमाना'दित्यन्वयः । गौण्या वृत्त्येति भावः । एवञ्च च्व्यन्ते प्रकृतेरेव कर्तृत्वमित्युक्तं भाति । 'ब्रह्मीभूत' इत्यादि तु छान्दसम् । 'कारणीभूत' इत्यादि त्वसाध्वेवेति बोध्यम् । समीपस्थत्वभावादिति । समीपस्थत्वसादृश्यभावादित्यर्थः । मुख्यसमीपस्थत्वे तु नेष्यते प्रत्यय इति भावः ॥ ५० ॥

अव्यक्ताऽनु । भाष्ये–इत्येवमेतस्येति । 'सूत्रे ग्रहण'मिति शेषः । इदं तर्हि नाभा पृथिव्या इति ।

* चितः ६ । १ । १६३ † आद्युदात्तश्च ३ । १ । ३

ज्भ्यः क्यष' [ ३ । १ । १३ ] इति । 'डा' इति ह्युच्यमान 'इडा' अतोऽपि प्रसज्येत । 'अर्थवद्ग्रहणे नानर्थकस्ये'तीत्येवमेतस्य न भविष्यति । इह तर्हि प्राप्नोति—नाभा पृथिव्या‡ निहितो दविद्युतत् । तस्माच्चकारः कर्तव्यः ॥ ५७ ॥

## मद्रात्परिवापणे ॥ ५ । ४ । ६७ ॥

भद्राच्चेति वक्तव्यम् । भद्राकरोति ॥ ६७ ॥

## समासान्ताः ॥ ५ । ४ । ६८ ॥

अन्तग्रहणं किमर्थम् ? अन्तो यथा स्यात् । नैतदस्ति प्रयोजनम् । प्रत्ययपरत्वेनाप्येतत्सिद्धम्§ ॥ इदं तर्हि प्रयोजनम्—तद्ग्रहणेन ग्रहणं यथा स्यात् । कानि पुनस्तद्ग्रहणस्य प्रयोजनानि ?

### प्रयोजनमव्ययीभावद्विगुद्वन्द्वतत्पुरुषबहुव्रीहिसंज्ञाः ॥ १ ॥

अव्ययीभावः प्रयोजनम्—प्रतिराजम् उपराजम्¶ । अव्ययीभावश्च समासो नपुंसकलिङ्गो भवतीति* नपुंसकलिङ्गता यथा स्यात् । नैतदस्ति प्रयोजनम् । 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' । इदं तर्हि प्रयोजनम्—'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' [ २ । ४ । ८३ ] इत्येष विधिर्यथा स्यात् । अव्ययीभाव ।

प्र०—समासान्ताः । अन्तग्रहणमिति । समीपवचनमन्तशब्दं मत्वा प्रश्नः । अवयवव-

उ०—अत्र डेर्डादेशे 'नाभा' इति, तदनुकरणे पटपटायतीत्यादाविव च नाभा इति भवतीत्यर्थे क्यषो वारणायेति भावः ॥ ५७ ॥

समासान्ताः । भाष्ये—पुरशब्दोऽयमकारान्त इति । 'ऋक्पू'रिति सूत्रे पूर्ग्रहणञ्च न कार्यम्, तेन च न समासोऽनभिधानादिति भावः । द्विधुरी त्रिधुरीति । न चाऽकारान्तोत्तरपदत्वाभावात् कथं स्त्रीत्वम् । लिङ्गस्य लोकाश्रयत्वेनाऽदोषात् । लिङ्गप्रकरणं ह्युदाहरणमात्रं, न नियम इति बोध्यम् । अत एव 'द्विनावमर्धखार'मित्यादौ परवल्लिङ्गशास्त्रसत्त्वेऽपि नपुंसकत्वं दृश्यते । यत्तु 'द्विधुरी'त्यादौ वाचनिकस्त्रीत्वाभावेऽपि धूःशब्दस्य स्वाभाविकस्त्रीत्वात्परवल्लिङ्गताऽभिप्रायमिदं भाष्यमिति तन्न, तस्य 'स नपुंसक'मित्यनेन बाधादित्याहुः । द्वन्द्वेति । अत्र चाऽत इति वर्त्तत इति भावः । भाष्ये—निधुर इति । न चाऽत्र समासाऽवयवत्वेऽपि परत्वात्पूर्वं पूर्वपदप्रकृतिस्वरे ततः समासान्ते सति शिष्टत्वात्समासान्तस्वरस्यैवाऽवस्थितिरिति

१—'इदं तर्हि' पा० ।  ‡ सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः ७ । १ । ३९

२—"भद्राच्च" इति वार्तिकमिति केचित् ।  § परश्च ३ । १ । २

¶ अनश्च ५ । ४ । १०८  * अव्ययीभावश्च २ । ४ । १८

द्विगु—द्विगुसंज्ञा च प्रयोजनम् । पञ्चगवम् दशगवम्† । द्विगुश्च समासो नपुंसकलिङ्गो भवतीति× नपुंसकलिङ्गता यथा स्यात् । नैतदस्ति प्रयोजनम् । लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य । इदं तर्हि प्रयोजनम्—द्विपुरी त्रिपुरी+ । द्विगोरकारान्तादिति ङीब्—यथा स्यात्‡ । एतदपि नास्ति प्रयोजनम् । पुरशब्दोऽयमकारान्तस्तेन समासो भविष्यति । आतश्चाकारान्तः, एवं ह्याह—

'क्षेमे सुभिक्षे कृतसंचयानि पुराणि राज्ञां विनयन्ति कोप'मिति ।

इदं तर्हि प्रयोजनम्—द्विधुरी त्रिधुरी+ द्विगोरकारान्तादिति ङीब्यथा स्यात्‡ । द्विगु ।

द्वन्द्व—द्वन्द्वसंज्ञा च प्रयोजनम्—वाक्त्वचम् स्रक्त्वचम्* । द्वन्द्वश्च समासो नपुंसकलिङ्गो भवतीति× नपुंसकलिङ्गता यथा स्यात् । नैतदस्ति प्रयोजनम् । लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य । इदं तर्हि प्रयोजनम्—कोशश्च निषच्च कोशनिषदम् कोशनीषदिनि 'द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनीः' [ ५ । २ । १२८ ] इतीनिर्यथा स्यात् । द्वन्द्व ।

तत्पुरुष—तत्पुरुषसंज्ञा च प्रयोजनम्—परमधुरा उत्तमधुरा 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' [ २ । ४ । २६ ] इति परवल्लिङ्गता यथा स्यात् । नैतदस्ति प्रयोजनम् । उत्तरपदार्थप्रधानस्तत्पुरुषः । इदं तर्हि प्रयोजनम्—अर्धधुरा†† । एतदपि

प्र०—चनाश्रयेणोत्तरमाह–अन्तो यथा स्यादिति । इतरोऽग्रहीताभिप्राय आह–नैतदस्तीति ।

उ०—वाच्यं, समासान्तानां समासात्प्रागलौकिकवाक्ये प्रवृत्त्याऽन्तरङ्गत्वात् । तत्र समासाऽनवयवत्वे पूर्वपदप्रकृतिस्वरप्रयुक्तनिघातस्योत्तरपद एव प्रवृत्तिः स्यात्, न तु समासान्ताऽकारस्यापीति स्वरद्वयश्रवणाऽप्राप्तिर्दोषः । इत्येष इत्यस्य–एष एवेत्यर्थः । ननु 'यावतः पदत्वं भावि तावति सन्निहिताच्मात्रस्य निघात' इति सिद्धान्तात्तस्याऽपि निघातः सूपपाद इति वाच्यं, 'तत्पुरुष' इत्यादि श्रुत्या तत्संज्ञप्रकृतिकसुबन्तपदस्यैव ग्रहणात् । यद्यपि प्रकृते न तस्य पदत्वं कदाचिदपि, तथापि पदत्वयोग्यमित्यर्थो भविष्यति । न चैवमपि समासान्ते

† गोरतद्धितलुकि ५ । ४ । ९२ × स नपुंसकम् २ । ४ । १७

+ ऋक्पूरब्धूः पथामानक्षे ५ । ४ । ७४ १—'ईकारो यथा स्यात्' पा० ।

‡ द्विगोः ४ । १ । २१

* द्वन्द्वाच्चुदषहान्तात् समाहारे ५ । ४ । १०६ †† अर्धं नपुंसकम् २ । २ । २

नास्ति प्रयोजनम् । लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य । इदं तर्हि—निर्धुरः, अव्ययं तत्पुरुषे प्रकृतिस्वरं भवतीत्येष स्वरो यथा स्यात्‡ । तत्पुरुष ।

बहुव्रीहि—बहुव्रीहिसंज्ञा च प्रयोजनम्—उच्चधुरः नीचधुरः । बहुव्रीहौ प्रकृत्या पूर्वपदं भवतीत्येष स्वरो यथा स्यात्× ॥ ६८ ॥

## न पूजनात् ॥ ५ । ४ । ६९ ॥

इदं विप्रतिषिद्धम् । को विप्रतिषेधः ? परिगणिताभ्यः प्रकृतिभ्यः समासान्तो विधीयते, न च तत्र काचित्पूजनान्ता प्रकृतिर्निर्दिश्यते ॥ नैतद्विप्रतिषिद्धम् । नैवं विज्ञायते—'याभ्यः प्रकृतिभ्यः समासान्तो विधीयते न चेत्ताः पूजनान्ता भवन्ती'ति । कथं तर्हि ? 'न चेत्ताः पूजनात्परा भवन्ती'ति ।

### पूजायां स्वतिग्रहणम् ॥ १ ॥

पूजायां स्वतिग्रहणं कर्तव्यम् । सुराजा अतिराजा† । क मा भूत् ? परमगवः उत्तमगवः* ।

### प्राग्बहुव्रीहिग्रहणं च ॥ २ ॥

प्राग्बहुव्रीहिग्रहणं च कर्तव्यम्+ । इह मा भूत्—स्वक्षः अत्यक्ष इति ॥ ६९ ॥

प्र०—इतरोऽभिप्रायं प्रकाशयन्नाह—इदं तर्हीति ॥ ६८ ॥

उ०—तत्प्रयुक्तनिघाते च पूर्वपदस्योदात्तस्वरितयोगित्वाऽभावात् कथं पूर्वपदप्रकृतिस्वरप्राप्तिरिति वाच्यं, डचश्चित्त्वेन समासान्तविधावाद्युदात्तश्चेत्यस्याऽसम्बन्धज्ञापनेनाऽदोषात् । अस्वरकस्यैवाऽकारस्य श्रवणं स्यादिति च दोष इति दिक् ॥ ६८ ॥

न पूजनात् । न चेत्ताः पूजनात्परा इति । पूजनात्परो यः शब्दस्तदन्ता इत्यर्थः । प्राग्बहुव्रीहिग्रहणमिति । 'बहुव्रीहौ संख्येये' इत्यतः प्राक् समासान्तविधेरभावाद्बहुव्रीहौ सक्थ्यक्ष्णोरित्यतः प्रागित्यर्थः ॥ ६९ ॥

‡ तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः ६ । २ । २

× बहुव्रीहौ प्रकृत्या पूर्वपदम् ६ । २ । १

† राजाहस्सखिभ्यष्टच् ५ । ४ । ९१　* गोरतद्धितलुकि ५ । ४ । ९२

+ बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् ५ । ४ । ११३

## किमः क्षेपे ॥ ५ । ४ । ७० ॥

क्षेप इति किमर्थम् ? कस्य राजा किंराजः ॥ क्षेप इति शक्यमकर्तुम् । कस्मान्न भवति—कस्य राजा किंराज इति ? 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवे'ति ॥ ७० ॥

## बहुव्रीहौ सङ्ख्येये डजबहुगणात् ॥ ५ । ४ । ७३ ॥

### डच्प्रकरणे सङ्ख्यायास्तत्पुरुषस्योसङ्ख्यानं निस्त्रिंशाद्यर्थम् ॥ १ ॥

डच्प्रकरणे सङ्ख्यायास्तत्पुरुषस्योपसङ्ख्यानं कर्तव्यम् । किं प्रयोजनम् ? 'निस्त्रिंशाद्यर्थम्' । निस्त्रिंशानि वर्षाणि, निश्चत्वारिंशानि वर्षाणि ।

### अन्यत्राधिकलोपात् ॥ २ ॥

अन्यत्राधिकलोपादिति वक्तव्यम्† । इह मा भूत्—एकाधिका विंशतिरेकविंशतिः । द्व्यधिका विंशतिर्द्वाविंशतिः ।

अव्ययादेरिति [ च ] वक्तव्यम् । इह मा भूत्—गोत्रिंशत् गोचत्वारिंशदिति ।

तत्तर्हि वक्तव्यम् ? यद्यप्येतदुच्यते, अथवैतर्हि 'अन्यत्राधिकलोपा'दित्येतन्न क्रियते ॥ ७३ ॥

## ऋक्पूरब्धूःपथामानक्षे ॥ ५ । ४ । ७४ ॥

अनक्ष इति कथमिदं विज्ञायते—न चेदक्षधूरन्तः समास इति, आहोस्विन्न

---

प्र०—ऋक्पूरब्धू । कथमिदमिति । यद्यक्ष इति स्वरूपग्रहणमक्षे पूर्वपदे धूरन्तात्समासान्तो न भवतीति तदा 'न चेदक्षधूरन्तः समास' इत्ययं पक्षो भवति, यदा त्वक्ष इत्यर्थग्रहणं तदा 'न चेदक्षः समासार्थ' इत्ययं पक्षः । उभयथा च दोषप्रसङ्ग इति प्रश्नः ।

---

उ०—बहुव्रीहौ संख्येये । संख्यायास्तत्पुरुषस्येति । सङ्ख्यान्तस्य तत्पुरुषस्य समासान्तो डजित्यर्थः । निस्त्रिंशाद्यर्थमित्यादिशब्दः प्रकारे, तेन यत्र डित्त्वफलसम्भावना तत्रैवेदम् । तेन 'अतिद्वि'रित्यत्र न । भाष्ये—तत्तर्हीति । अव्ययादेरित्येतदित्यर्थः । अथवैतर्हीति—एवं तर्हीत्यर्थकं, तथापीत्यर्थकं वा । अत्र–अन्यत्राऽधिकलोपादित्येतदेकविंशतिरित्यादौ तत्पुरुषस्वीकर्तृवार्त्तिकनये । तत्र 'द्वन्द्व एवे'ति भाष्यमते तु तदनावश्यकमेवेत्याहुः ॥ ७३ ॥

ऋक्पूरब्धूः । सन्देहोपपत्तये पक्षद्वयबीजं दर्शयति—यद्यक्ष इति । 'अक्षधूरन्त' इति भाष्यस्या-

---

† सिद्धं त्वधिकान्ता संख्या संख्यया समानाधिकरणाधिकारेऽधिकलोपश्च २ । २ । २६ वा० १७

१—क्वचिन्न ।

चेदक्षः समासार्थ इति । किं चातः ? यदि विज्ञायते—'न चेदक्षधूरन्तः समास' इति, सिद्धमक्षस्य धूः अक्षधूरिति, इदं तु न सिध्यति—दृढधूरयमक्ष इति । अस्तु तर्हि—'न चेदक्षः समासार्थ' इति । सिद्धं दृढधूरक्ष इति, इदं तु न सिध्यति—अक्षस्य धूरक्षधूरिति ।

एवं तर्हि नैवं विज्ञायते 'न चेदक्षधूरन्तः समास' इति, नापि 'न चेदक्षः समासार्थ' इति । कथं तर्हि ? न चेदक्षस्य धूरिति । एवं च कृत्वा नाऽपि 'न चेदक्षधूरन्तः समास' इति विज्ञायते, नापि 'न चेदक्षः समासार्थ' इति, अथ चोभयोर्न भवति ॥ ७४ ॥

## अक्ष्णोऽदर्शनात् ॥ ५ । ४ । ७६ ॥

'अदर्शना'दित्युच्यते, तत्रेदं न सिध्यति कंबराक्षम् ॥ अदर्शनादिति शक्यमकर्तुम् । कथं ब्राह्मणाक्षि क्षत्रियाक्षि ? अप्राण्यङ्गादिति वक्तव्यम् ॥ ७६ ॥

प्र०—'अक्षधूरन्त' इत्यस्यायमर्थोऽक्षशब्दस्य यः समीपे धू शब्दस्तदन्तः समास इति । न चेदक्षस्य धूरिति । अक्षस्य धूरपेक्षयाऽधिकरणत्वादनक्ष इत्यधिकरणसप्तमी । चक्रसंबद्धः काष्ठविशेषः शकटावयवोऽक्षः ॥ ७४ ॥

अक्ष्णो । अदर्शनादितिवचनादक्षीवाक्षीत्यक्षिसदृशार्थवृत्तिरिहाऽक्षिशब्द उपात्तः । लवणाक्षमित्याद्युदाहरणम् । दर्शनवाचित्वे तु ब्राह्मणाक्षीत्यादौ समासान्ताभावः । कवराक्षमिति । अश्वानां बहुच्छिद्रं मुखावरणमुच्यते । तेनाश्वाः पश्यन्तीति दर्शनत्वात्समासान्ताऽप्रसङ्गः । एवं गवाक्षेपि । अप्राण्यङ्गादिति । तेन गवाक्षकबराक्षौ सिध्यतः ॥ ७६ ॥

उ०—यंमाह—अक्षशब्दस्य समीपे इति । इदमर्थकथनं न तु विग्रहः, समीपपदार्थाऽन्वयेऽसामर्थ्यात्समासाऽप्राप्तेः । तस्मात्समीपेऽवयवत्वारोपेण समासः । समीपे इति आरोपबीजकथनम् । अक्षपूर्वपदको धूरन्त इति मध्यमपदलोपी समासो वा । भाष्ये—न चेदक्षस्येति । अधिकरणत्वाऽविवक्षायां तन्मूलकाऽवयवाऽवयविभावसम्बन्धविवक्षया षष्ठी ॥ ७४ ॥

अक्ष्णोऽद । नन्वक्षिशब्दस्य दर्शनबोधकत्वादक्ष्णोऽदर्शनादित्ययुक्तमत आह—अदर्शनादिति वचनादिति । लवणाक्षमिति । लवणमक्षीवेति विग्रहः । अप्राण्यङ्गादितीति । सूत्रस्थदर्शनशब्दो व्याख्यानेन चक्षुःपर्याय इति भावः ॥ ७६ ॥

१—'कम्बराक्षम्' पा० ।

**अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः ॥ ५ । ४ । ७७ ॥**

आद्यास्त्रयो बहुव्रीहयः—अद्रष्टा चतुर्णामचतुरः । विद्रष्टा चतुर्णां विचतुरः । सुद्रष्टा चतुर्णां सुचतुरः ॥ ततः परे एकादश द्वन्द्वाः—स्त्रीपुंस, धेन्वनडुह, ऋक्साम, वाङ्मनस, अक्षिभ्रुव, दारगव, ऊर्वष्ठीव, पदष्ठीव, नक्तन्दिव, रात्रिन्दिव, अहर्दिव ॥ ततोऽव्ययीभावः-सह रजसा सरजसम् ॥ ततस्तत्पुरुषः-निश्चितं श्रेयो निःश्रेयसम् ॥ ततः षष्ठीसमासः—पुरुषस्यायुः पुरुषायुषम् ॥ ततो द्विगू—द्वे आयुषी द्व्यायुषम् । त्रीण्यायूंषि त्र्यायुषम् ॥ ततो द्वन्द्वः—ऋक् च यजुश्च ऋग्यजुषम् ॥ जातादय उक्षान्ताः समानाधिकरणाः—जात उक्षा जातोक्षः । महानुक्षा महोक्षः । वृद्ध उक्षा वृद्धोक्षः ॥ ततोऽव्ययीभावः—शुनः समीपमुपशुनम् ॥ ततः सप्तमीसमासः—गोष्ठे श्वा गोष्ठश्वः ।

**चतुरोऽच्प्रकरणे त्र्युपाभ्यामुपसङ्ख्यानम् ॥ १ ॥**

चतुरोऽच्प्रकरणे त्र्युपाभ्यामुपसङ्ख्यानं कर्तव्यम् । त्रिचतुराः उपचतुराः ॥७७॥

**ब्रह्महस्तिभ्यां वर्चसः ॥ ५ । ४ । ७८ ॥**

पल्यराजभ्यां चेति वक्तव्यम्[2] । पल्यवर्चसम् राजवर्चसम् ॥ ७८ ॥

**अहःसर्वैकदेशसङ्ख्यातपुण्याच्च रात्रेः ॥ ५ । ४ । ८७ ॥**

**अहर्ग्रहणं द्वन्द्वार्थम् ॥ १ ॥**

अहर्ग्रहणं द्वन्द्वार्थं द्रष्टव्यम् ॥ किमुच्यते द्वन्द्वार्थमिति, न पुनस्तत्पुरुषार्थमपि स्यात् ? तत्पुरुषाभावात् । न हि रात्र्यन्तोऽहरादिस्तत्पुरुषोऽस्ति ॥ ८७ ॥

---

प्र०—अच । अद्रष्टा चतुर्णामिति । अर्थप्रदर्शनमेतत्, अदृश्यानि चत्वार्यस्येति अन्यपदार्थबहुव्रीहय आद्यास्त्रयः कर्तव्याः ॥ ७७ ॥

---

उ०—अचतुरवि । अद्रष्टा चतुर्णामित्यर्थे बहुव्रीह्यसम्भवादाह—अर्थप्रदर्शनमिति । अहर्दिवेत्यत्राऽस्मादेव निपातनाद्द्वन्द्वः । त्रिचतुरा इत्यत्र 'सङ्ख्ययाऽव्यये'ति बहुव्रीहौ डजपवादोऽच् ॥ ७७ ॥

अहःसर्वैक । भाष्ये—न हीति । अन्यतरस्य गौणत्वेन प्रकारान्तरेण वा सम्भवेऽपि न तथा प्रयोगोऽस्तीति भावः ॥ ८७ ॥

---

१—'श्वा इव' पा० । २—इतः पूर्वं 'पल्यराजभ्यां च' इति वार्तिकं केचित् पठन्ति ।

## अह्नोऽह्न एतेभ्यः ॥ ५ । ४ । ८८ ॥

### अह्नोऽह्नवचनानर्थक्यं चाऽह्नष्टखोर्नियमवचनात् ॥ १ ॥

अह्नोऽह्नवचनमनर्थकम् । किं कारणम् ? 'अह्नष्टखोर्नियमवचनात्' । 'अह्नष्टखोरेव' [ ६ । ४ । १४५ ] इत्येतन्नियमार्थं भविष्यति† ॥ ८८॥

## अनसन्तान्नपुंसकाच्छन्दसि ॥ ५ । ४ । १०३ ॥

अनसन्तान्नपुंसकाच्छन्दसि वेति वक्तव्यम् । ब्रह्मसामम् ब्रह्मसाम । देवच्छन्दसम् देवच्छन्दः ॥ १०३ ॥

## बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् ॥ ५ । ४ । ११३ ॥

किमर्थं षच्प्रत्ययान्तरं विधीयते, न टच्प्रकृतः‡ सोऽनुवर्तिष्यते ?

प्र०—अह्नो । अह्नोऽह्नवचनानर्थक्यमिति । 'अह्न एतेभ्य' इत्येतावत्सूत्रमज्विधानार्थं कर्त्तव्यम्, टजचोरत्र विशेषाभावात् । 'रात्राह्नाहाः पुंसी'ति वचनात्स्त्रियां वृत्त्यभावात्तत्राऽह्नष्टखोरेवेति नियमाट्टिलोपाभावादल्लोपेन पूर्वाह्णादयः सिद्धा इति नार्थोऽह्नादेशविधानेनेत्यर्थः ॥ ८८ ॥

बहुव्रीहौ । अनन्तोदात्तार्थमिति । 'सक्थं चाक्रान्ता'दिति विभाषाऽन्तोदात्तत्वं

उ०—अह्नोऽह्न । स्त्रियां वृत्त्यभावादिति । अयं भावः—यद्यपि 'द्वयोरह्नोर्भवा' इत्यर्थे सङ्ख्यापूर्वस्य स्त्रीत्वसम्भवः । 'रात्राह्नाहा' इत्यस्य रात्राहशब्दघटितसमासमात्रार्थनिमित्तलिङ्गस्याऽन्तरङ्गस्य सार्वत्रिकस्य च बाधेनोपपत्तौ बहिर्भूततद्धितार्थनिमित्तलिङ्गबाधकत्वे मानाऽभावात्, तथाऽपि तत्र ङीब्भाव एव, उपसर्जनत्वात् । 'पुण्याह'मित्यत्र 'उत्तमैकाभ्याञ्चे'ति निषेधाद्विशेषाऽभाव एव, पुण्यसुदिनाभ्यामह्नः क्लीबत्वस्य सत्वाच्च । सर्वैकदेशसङ्ख्याताऽव्ययपूर्वपदस्य तु 'रात्राह्नाहा' इति वचनात्स्त्रीत्वमेव नास्तीति केचित् । अन्ये त्वेवं सत्युपस्थितरात्राह्नाहशब्दार्थविशेष्यत्वप्राप्तलिङ्गस्यैव बाधः स्यान्न तु बहिर्भूतसमाहारविशेष्यत्वप्राप्तस्येति, अत्राऽन्तरङ्गन्यायाऽप्राप्तिरेवेति, तद्धितार्थद्विगुरपि न स्त्रीलिङ्ग इति कैयटाशयमाहुः । परे तु सूत्रमतेऽप्यस्य टजपवादाऽजह्नादेशोभयविधायकत्वमेव, 'समासान्ता' इत्यनुवृत्तस्य विभक्तिविपरिणामे मानाऽभावात्, नियमाऽस्मरणमूलकं सूत्रमित्युभयोरावश्यकम् । अच्प्रकरणाऽस्मरणमूलकत्वञ्चाऽधिकं त्वया कल्प्यम् । 'टजचो'रित्यादिकैयटस्तु स्वरूपनिरूपणपर इत्याहुः ॥ ८८ ॥

बहुव्रीहौ सक्थ्य । भाष्ये—न टच्प्रकृत इति । टचि चित्वादन्तोदात्तत्वे ङीष्यप्युदात्तनिवृत्ति-

† अल्लोपोऽनः ६ । ४ । १३४

१—'अनसन्तान्नपुंसकाद्वा' इति वार्तिकमतः प्राक् क्वचिद् दृश्यते ।

‡ राजाहस्सखिभ्यष्टच् ५ । ४ । ९१;

अत उत्तरं पठति—

षचि प्रत्ययान्तरकरणमनन्तोदात्तार्थम् ॥ १ ॥

षचि प्रत्ययान्तरं क्रियते । किं प्रयोजनम् ? 'अनन्तोदात्तार्थम्' । अनन्तोदात्ताः प्रयोजयन्ति*—चक्रसक्थम् चक्रसिक्थ ॥ ११३ ॥

द्वित्रिभ्यां ष मूर्ध्नः ॥ ५ । ४ । ११५ ॥

किमर्थं मूर्ध्नः षः प्रत्ययान्तरं क्रियते, न षच्प्रकृतः × सोऽनुवर्तिष्यते ।

मूर्ध्नश्च षवचनम् ॥ १ ॥

किम् ? अनन्तोदात्तार्थमित्येव । द्विमूर्धः त्रिमूर्धः† ॥ ११५ ॥

प्र०—विधीयते । तत्रान्तोदात्तान्ङीब्ङीषोर्नास्ति विशेषः । ङीप उदात्तनिवृत्तिस्वरेणान्तोदात्तत्वात् । यदा तु पूर्वपदप्रकृतिस्वरेणानुदात्तत्वं तदा ङीषि सतीकारस्योदात्तत्वं भवति, ङीपि तु सत्यनुदात्त ईकारः स्यादित्यर्थः । चक्रसक्थीति । अयुक्तोऽयं पाठोऽत्र ह्यक्रान्तादिति विकल्पनिषेधाच्चित्वान्नित्येनान्तोदात्तत्वेन भाव्यम् । 'गौरसक्थी'त्यन्तोदात्तत्वाऽभावपक्ष उदाहार्यः ॥ ११३ ॥

द्वित्रिभ्याम् । द्विमूर्ध इति । यद्यत्र षच् स्यात्तदा चित्त्वान्नित्यमन्तोदात्तत्वं स्यात् । 'द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहा'विति तु विभाषान्तोदात्तत्वं यदा समासान्तविधेरनित्यत्वाद्द्विमूर्धेति समासान्ताभावस्तदा सावकाशम् । षे तु सति समासान्तपक्षेऽपि पक्षेऽन्तोदात्तत्वं पक्षे पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वमिति स्वरद्वयसिद्धिः ॥ ११५ ॥

उ०—स्वरेणाऽन्तोदात्तत्वं भविष्यतीति भावः । ननु टजन्तो नित्यान्तोदात्त इत्यनन्तोदात्तार्थं इत्ययुक्तमत आह—सक्थञ्चेति । कृतसमासान्तः सक्थशब्दोऽन्तोदात्तो वा भवति चक्रशब्दान्तात्परश्चेन्न भवतीत्यर्थः । गौरसक्थीति । 'चक्रसक्थी'ति भाष्ये पाठः । 'वञ्चु प्रलम्भने' इत्यस्य निष्ठायां रूपमित्यन्ये ॥ ११३ ॥

द्वित्रिभ्यां ष । तदा चित्त्वादिति । चित्त्वसामर्थ्येन चित्स्वरस्य पूर्वपदप्रकृतिस्वरबाधकत्वादिति भावः । ननु 'द्वित्रिभ्यां पाद्दन्'इति विकल्पः सामर्थ्याच्चित्स्वरस्य बाधकः स्यादत आह—द्वित्रिभ्यामिति । अनित्यत्वादिति । अत्र चेदमेव षविधानं ज्ञापकमिति भावः । षे तु सतीति । न च तदा मूर्धन्शब्दोत्तरपदकबहुव्रीहिरभावः, समासान्तानां समासाऽवयवत्वेन तदन्तुतेः ॥ ११५ ॥

* सक्थं चाक्रान्तात्; बहुव्रीहौ प्रकृत्या पूर्वपदम् ६ । २ । १९८; १; षिद्गौरादिभ्यश्च ४ । १ । ४१; आद्युदात्तश्च ३ । १ । ३ × बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् ५ । ४ । ११३

† द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ; बहुव्रीहौ प्रकृत्या पूर्वपदम् ६ । २ । १९७; १; आद्युदात्तश्च ३ । १ । ३

## अप्पूरणीप्रमाण्योः ॥ ५ । ४ । ११६ ॥

### अपि प्रधानपूरणीग्रहणम् ॥ १ ॥

अपि प्रधानपूरणीग्रहणं कर्तव्यम् । प्रधानं या पूरणीति वक्तव्यम् । इह मा भूत्—कल्याणी पञ्चम्यस्य पक्षस्य कल्याणपञ्चमीकः† पक्षः ।

अथेह कथं भवितव्यम्—कल्याणी पञ्चम्यासां रात्रीणामिति ? कल्याणीपञ्चमा रात्रय इति भवितव्यम् । रात्रयोऽत्र प्रधानम् ।

### नेतुर्नक्षत्र उपसङ्ख्यानम् ॥ २ ॥

नेतुर्नक्षत्र उपसङ्ख्यानं कर्तव्यम् । पुष्यनेत्राः मृगनेत्राः ।

### छन्दसि च ॥ ३ ॥

छन्दसि च नेतुरुपसङ्ख्यानं कर्तव्यम् । बृहस्पतिनेत्राः सोमनेत्राः ।

### मासाद्भृतिप्रत्ययपूर्वपदाट्ठज्विधिः ॥ ४ ॥

मासाद्भृतिप्रत्ययपूर्वपदाट्ठज्विधेयः‡ । पञ्चकमासिकः षट्कमासिकः दशकमासिकः ॥ ११६ ॥

---

प्र०—अप्पूरणी । कल्याणपञ्चमीकः पक्ष इति । अत्र वर्त्तिपदार्थ एव पूरणी न त्वन्यपदार्थः । पक्षस्य तिरोहितावयवभेदस्यान्यपदार्थत्वात् । यथा वृक्ष इत्यस्य शब्दस्यावयव्यभिधेयो न तु शाखादयोऽवयवा अनुमीयमानस्याऽशब्दार्थत्वादित्यप्राधान्यं पूरण्याः ।

कल्याणीपञ्चमा इति । अत्रावयवेन विग्रहः समुदाय उद्भूतावयवभेदः समासार्थ इति रात्रिषु पञ्चम्या अन्तर्भावादन्यपदार्थत्वात्प्राधान्यं पूरण्याः । पञ्चकमासिक इति । पञ्च भृतिरस्य मासस्य पञ्चको मासः । 'सोऽस्यांशवस्नभृतय' इति संख्यायाः कन् । पञ्चकों मासोऽस्येति बहुव्रीहौ कृते स्वार्थे ठच् ॥ ११६ ॥

---

उ०—अप्पूरणी । ननु पक्षस्य पञ्चदशतिथ्यात्मकत्वेन पूरण्यपि प्रधानमेवेत्यत आह—पक्षस्येति । अवयवेन-तद्बोधकेन । विग्रहः—वर्त्तिपदार्थबोधनम् । तद्बोधनस्यैव विग्रहफलत्वात् ॥ ११६ ॥

---

† नद्यृतश्च ५ । ४ । १५३; पूरण्यां प्रधानपूरणीग्रहणम् ६ । ३ । ३४ वा० ८
‡ सोऽस्यांशवस्नभृतयः ५ । १ । ५६

## अग्नासिकायाः संज्ञायां नसं चास्थूलात् ॥ ५ । ४ । ११८ ॥

खरखुराभ्यां च नस् वक्तव्यः । खरणाः[1] खुरणाः[2] ।

शितिना अर्चना अहिना इति नैगमाः । शितिनाः[3] अर्चनाः अहिनाः ॥११८॥

## उपसर्गाच्च ॥ ५ । ४ । ११९ ॥

वेर्ग्रो वक्तव्यः । विग्रः[4] [ ख्यश्च वक्तव्यः । विख्यः[5] ] ॥ ११९ ॥

## ऊधसोनङ् ॥ ५ । ४ । १३१ ॥

### ऊधसोऽनङि स्त्रीग्रहणम् ॥ १ ॥

ऊधसोऽनङि स्त्रीग्रहणं कर्तव्यम् । इह मा भूत्—महोधाः पर्जन्य इति* ॥ १३१ ॥

## गन्धस्येदुत्पूतिसुसुरभिभ्यः ॥ ५ । ४ । १३५ ॥

### गन्धस्येत्त्वे तदेकान्तग्रहणम् ॥ १ ॥

गन्धस्येत्त्वे तदेकान्तग्रहणं कर्तव्यम् । इह मा भूत्—शोभना गन्धा अस्य सुगन्ध आपणिक इति ।

प्र०—अङ्नासि । खरखुराभ्यामिति । आदेशप्रत्यययोः प्रसङ्गे केवलादेशविधानार्थं वचनम् ॥ ११८ ॥

उप । विग्र इति । विगता नासिका यस्य स विग्रः ॥ ११९ ॥

गन्धस्ये । गन्धशब्दोऽस्ति द्रव्यवाची—गन्धान्पिनष्टीति । अस्ति च गुणवाची,—चन्दनगन्ध इति । तत्र गुणवाचिग्रहणार्थमाह—गन्धस्येत्त्व इति । रूपादिसमुदायात्मकस्य द्रव्यस्य

उ०—गन्धस्येदु । नन्वेकान्तशब्देनाऽवयव उच्यते, गुणश्च कथमवयवोऽत आह—रूपादिति । 'अयुतसिद्धाऽवयवाऽनुगतस्तत्समूहो द्रव्य'मिति पतञ्जलेर्मतम् । न्यायनये आह—रूपादिव्यतिरिक्तेति ।

१—खरणाः स्यात् खरणसः' इत्यमरः । खरा तीक्ष्णा नासिका यस्य सः । 'पूर्वपदात् संज्ञायामगः' ८ । ४ । ३ इति णत्वम् ।

२—'खुरणाः स्यात् खुरणसः' इत्यमरः । खुरः—पशुखुरस्तस्य इव नासिका यस्य सः । चिपिटनासिक इत्यर्थः ।

३—'शितिः कृष्णा नासिकाऽस्य शितिनाः । अहेरिव नासिकाऽस्य अहिना : । अर्चा प्रतिमा तस्या इव नासिकाऽस्य अर्चनाः, ङ्यापोः संज्ञाछन्दसोः [ ६ । ३ । ६३ ] इति ह्रस्वत्वम् ।' इति हरदत्तः ।

४—'विग्रस्तु गतनासिकः' इत्यमरः । 'नकटा' इति प्रसिद्धः ।

५—कोष्ठबद्धः पाठः क्वाचित्कः । विख्योऽपि गतनासिक एव । * ४ । १ । २५ वा० १–२

अथाऽनुलिप्ते कथं भवितव्यम् ? यदि तावद्यदनुगतं तदभिसमीक्षितं 'सुगन्धि'-रिति भवितव्यम् । अथ यत्प्रविशीर्णं 'सुगन्ध' इति भवितव्यम् ॥ १३५ ॥

## शेषाद्विभाषा ॥ ५ । ४ । १५४ ॥

शेषादित्युच्यते कः शेषो नाम ? याभ्यः प्रकृतिभ्यः समासान्तो न विधीयते स शेषः ।

किमर्थं पुनः शेषग्रहणं क्रियते ? याभ्यः प्रकृतिभ्यः समासान्तो विधीयते ताभ्यः कब्मा भूदिति । नैतदस्ति प्रयोजनम् । ये प्रतिपदं विधीयन्ते ते तत्र बाधका भविष्यन्ति । अनवकाशा हि विधयो बाधका भवन्ति, सावकाशाश्च समासान्ताः । कोऽवकाशः ? विभाषा कप्, यदा न कप्सोऽवकाशः । कपः प्रसङ्ग उभयं प्राप्नोति । परत्वात्कप्प्राप्नोति । तस्माच्छेषग्रहणं कर्तव्यम् ।

किं पुनरिदं शेषग्रहणं कबपेक्षम्—'यस्माद्बहुव्रीहेः कब्न विहित'इति, आहो-

प्र०—गन्धलक्षणो गुण एकान्तो भवति । रूपादिव्यतिरिक्तावयविद्रव्यवादिपक्षे त्वेकान्त इवैकान्तस्तत्स्थस्योपलम्भादित्याश्रीयते । यदनुगतमिति । अनुगतं निलीनमविभागापन्नं कुङ्कुमादिर्यदा देवदत्तादेर्भवति तदा तत्स्थत्वाद्गन्धस्यैकान्तत्वादित्त्वं भवति । प्रविशीर्णमिति । विभागेनावस्थितं देवदत्तादेः पृथगुपलभ्यमित्यर्थः ॥ १३५ ॥

शेषाद्वि । कः शेष इति । अनेकस्योपयुक्तत्वात्किमपेक्षः शेष आश्रीयत इति प्रश्नः । इतरः सामान्येनाह—याभ्य इति । समासान्तविशेषस्तु न प्रदर्शितः । किमर्थमिति । सामान्येन विभाषा कब्विधीयताम् । तस्य विशेषे समासान्ता बाधका भविष्यन्तीति प्रश्नः । परत्वात्कप्प्राप्नोतीति । उपदशा उपविंशा इत्यादिषु नित्यं डजादय इष्यन्ते ।

किं पुनरिति । पूर्वं याभ्यः प्रकृतिभ्य इति सामान्येनोक्तं ततो विशेषज्ञापनाय प्रश्नः ।

उ०—तत्स्थस्येति । ततो भेदेनाऽगृह्यमाणस्येत्यर्थः । तत्स्थत्वात्ततो भेदेनाऽगृह्यमाणत्वात् ॥ १३५ ॥

शेषाद्विभाषा । किमपेक्ष इति । किं कबपेक्षः, उत समासान्तमात्राऽपेक्षः, उताऽनन्तरबहुव्रीह्यधिकाराऽपेक्ष इत्यर्थः । सामान्येनेति । समासान्तमात्राऽपेक्षत्वेनेत्यर्थः । न प्रदर्शित इति । अग्रे तु वक्ष्यति । ननु शेषपदार्थप्रदर्शनेनैव फलमप्युक्तप्रायमिति 'किमर्थ'मिति प्रश्नोऽनुपपन्नोऽत आह—सामान्येनेति । उपदशा इत्यादि । इदं चिन्त्यम् । अस्य बहुव्रीहेः शेषाऽधिकारस्थत्वाऽभावात् । स्पष्टश्चेदमुक्तं बहुव्रीहिप्रकरणे भाष्ये स्वयञ्च । 'स्वक्ष इत्यादौ नित्यं षजिष्यत' इति वक्तुमुचितम् ।

१—'अत्र' पा० ।

क्षितसमासान्तापेक्षम्—'यस्माद्बहुव्रीहेः समासान्तो न विहित' इति ? किं चातः ? यदि विज्ञायते कबपेक्षम्—अनृचः बह्वृच इत्यत्रापि† प्राप्नोति । अथ समासान्तापेक्षम्—अनृक्कं साम, बह्वृक्कं सूक्तमिति न सिध्यति । अस्तु कबपेक्षम् । कथमनृचः बह्वृच इति ? विशेष एतद्वक्तव्यम्—'अनृचो माणवे; बह्वृचश्चरणाख्याया'मिति । इदं तर्हि—ऊधसोऽनङि स्त्रीग्रहणं चोदितं‡ तस्मिन् क्रियमाणेऽपि प्राप्नोति ।

एवं तर्हि नैव कबपेक्षं शेषग्रहणम्, नापि समासान्तापेक्षम् । किं तर्हि ? अनन्तरो यो बहुव्रीह्यधिकारः* सोऽपेक्ष्यते—'अनन्तरे बहुव्रीह्यधिकारे यस्माद्बहु-

प्र०—यद्यपि कबपेक्षे शेषत्वे शेषग्रहणमनर्थकमन्तरेणापि शेषग्रहणमशेषान्नित्यं कब्विधानसामर्थ्याद्विभाषितकप्प्रसङ्गाभावाच्छेषादेव कब्विकल्पविज्ञानात्, तथापि विचारमात्रं क्रियते । अनृच इति । ऋगन्तात्कन्न विहित इति शेषत्वात्पक्षे परत्वात्कप्प्रसङ्गः । कबभावपक्षेऽस्त्वकारस्यावकाशः समासान्तरं च । विशेष एतदिति । तत एव विशेषविषयाद्वचनादत्र कब्न भविष्यतीत्यर्थः । तस्मिन् क्रियमाणेऽपीति । अक्रियमाणे स्त्रीग्रहणे कुण्डोध्नीत्यत्र पक्षे परत्वात्कप्प्राप्नोति । क्रियमाणेऽपि स्त्रीग्रहणे तस्य पुन्नपुंसकनिवृत्त्यर्थत्वात् पक्षे परत्वात्कपः प्रसङ्ग एव । एतच्चोदाहरणमात्रम् । उपदशादिषु पक्षे कप्प्रसङ्गात् । नैव कबपेक्षमिति । शेषग्रहणानर्थक्यप्रसङ्गात् । यस्माद्धि नित्यः कब्विहितस्तस्माद्विभाषा न प्राप्नोति विरोधादिति पूर्वोक्तन्यायात् समासान्तापेक्षमपि न भवति । अनृक्कं बह्वृक्कमित्यत्र कपोऽप्रसङ्गात् । अनन्तरे बहुव्रीह्यधिकार इति । एवं 'चोधसोऽन'ङित्यनन्तरे बहुव्रीह्यधिकारे-

उ०—विशेषज्ञापनायेति । गुरुणा विशेषं ज्ञापयितुमित्यर्थः । भाष्ये—अथ समासान्ताऽपेक्षमनृक्कमिति । प्रियपथिकादेरुपलक्षणमिदम् । ननु विशेषवचन सत्त्वेऽपि पक्षे कप्कुतो नेत्यत आह—तत एवेति । विनिगमनाविरहेण—'अनृचो माणवे एव' 'माणवेऽनृच एवे'त्युभयविधनियमाश्रयणादति भावः । ऊधसोनङि दोष इत्युक्ते स्त्रीग्रहणेन पुनर्विधानार्थेन कपो बाध इति कश्चिद्भ्राम्येदतो भाष्ये—स्त्रीग्रहणं चोदितम् । 'तस्मिन्क्रियमाणेऽपी'त्युक्तं, तत्र अपिशब्दार्थमाह—अक्रियमाणे इति । क्रियमाणे प्रागुक्ताऽनुपपत्तिपरिहारायाह—तस्य पुन्नपुंसकेति । एवञ्च पुनर्विधाने मानाऽभाव इति भावः । उपदशा इत्यत्र दोषश्चिन्त्यः, शेषाऽधिकारस्थत्वाऽभावेन तत्र कपोऽप्राप्तेः । आनर्थक्यप्रसङ्गादिति । प्रागुक्तदोषाच्चेत्यपि बोध्यम् । अनन्तरे इति । उपदशा इत्यादिबहुव्रीहेस्तु शेषाधिकारस्थत्वाऽभावान्न ततः कप्, अत एव 'दक्षिणपूर्वा' 'सुपुत्र' इत्यादौ न कबिति भावः । चिन्त्यमेतन्द्भाष्यमिति । वस्तुतस्तु पूर्वोक्तपक्षोपमर्देनैवाऽस्य भाष्यस्य प्रवृत्तेरनन्तरबहुव्रीह्यपेक्षया शेषग्रहणमेवोचितम् । 'प्रियः पन्था यस्य' इत्यर्थे प्रियपथिक इत्यादेः पक्षे सिद्धिरेव च प्रयोजनम्, भाष्यादिष्टत्वस्यैव लाभात् । 'समासान्ता' इतिसूत्रस्थ 'उच्चधुर' इति प्रयोगस्तु कबभावपक्षे बोध्यः । न च समाससामान्यापेक्षत्वेन 'ऋक्पू'रित्यादेरन्तरङ्गत्वात्कपं बाधित्वा

† ऋक्पूरब्धूः पथामानक्षे ५ । ४ । ७४ ‡ ५ । ४ । १३१ वा० १

* बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् ५ । ४ । ११३

व्रीहेः समासान्तो न विहित' इति । कथमनृचः बह्वृच इति ? वक्तव्यमेवैतत्—'अनृचो माणवे, बह्वृचश्चरणाख्याया'मिति ॥ १५४ ॥

## ईयसश्च ॥ ५ । ४ । १५६ ॥

### ईयस उपसर्जनदीर्घत्वं च ॥ १ ॥

ईयस उपसर्जनदीर्घत्वं चेति वक्तव्यम् । बह्व्यः श्रेयस्योऽस्य बहुश्रेयसी, विद्यमानश्रेयसी ।

### पुंवद्वचनात्सिद्धम् ॥ २ ॥

प्र०—ऽनङो विधानात्कुण्डोध्नीत्यादौ स्त्रियां कन्न भवति । कथमनृच इति । बहुव्रीह्यधिकारात्प्रागकारविधानाच्छेषत्वात्पक्षे कप्प्रसङ्गः । वक्तव्यमेवैतदिति । यद्येवं समासान्तापेक्षेपि शेषत्वेऽनृचबह्वृचयोर्विशेषवचनादन्यत्रानृक्कबह्वृक्कयोः पक्षे कपः सिद्धत्वात्कस्यचिद्दोषस्याप्रसङ्गात्किमर्थमनन्तरबहुव्रीह्यधिकारापेक्षः शेष आश्रीयते । बहुव्रीह्याधिकाराच्च तत्पुरुषादिभ्यः कपोऽप्रसङ्गः । किं चोपदशा इत्यादौ पक्षे कप्प्राप्नोति, अनन्तरे बहुव्रीह्यधिकारे डचोऽविधानात् । तथा प्रियपथः प्रियधुर इत्यत्रापि प्राप्नोति । तस्मात्समासान्तापेक्षमेव शेषत्वमाश्रणीयमिति चिन्त्यमेतद्भाष्यम् ॥ १५४ ॥

ईयस । उपसर्जनदीर्घत्वमिति । ह्रस्वापवादो दीर्घत्वं विधेयम् ।

पुंवद्वचनादिति । 'गोस्त्रियोरुपसर्जनस्ये'ति ह्रस्वः प्राप्तः पुंवद्भावेन विनिवर्त्यते । यथा पुंविषयस्येकारस्य ह्रस्वो न भवत्येवमीयसः परस्येति श्रवणं भवति । बहुश्रेयसीत्यत्र हल्ङ्यादिलोपे विवदन्ते । केचिदाहुः—( तदादिनियमात् ) हल्ङ्यादिलोपेन न भाव्यम् । ङ्यापोः स्त्रीप्रत्यय-

उ०—तस्यैव प्रवृत्त्यापत्तौ कथं 'प्रियपथिक' इष्ट इति वाच्यं, तस्यापि प्रकृतिविशेषाऽपेक्षत्वेन समत्वात् । सामान्याऽपेक्षत्वेन अन्तरङ्गत्वस्य भाष्ये क्वाप्यनाश्रयणाच्च । न च 'बहुव्रीहौ सक्थ्यक्ष्णो'रित्यतः पूर्वमेव कप्प्रकरणपाठेन विशेषविधिभिः परत्वाद्बाधेनैव सिद्धौ तदर्थकशेषग्रहणं व्यर्थमिति वाच्यं, 'विभाषा श्यावे'त्यादिविषये पक्षे कन्नापत्तेः, मम त्वनुक्तसमासान्तबहुव्रीहित्वाऽभावान्न दोष इति सुधियो विचारयन्तु ॥ १५४ ॥

ईयसश्च । ह्रस्वाऽपवाद इति । 'गोस्त्रियो'रित्येतद्ध्रस्वेत्यर्थः । अत एव वार्तिके उपसर्जनपदं चरितार्थम् । तेन हि उपसर्जनत्वप्रयुक्तं दीर्घविधानमिति लभ्यते । न चैवं वचनेन वचनप्रत्याख्यानमयुक्तं, नपुंसकह्रस्वप्रतिबन्धाय तदावश्यकमित्याशयात् । अत एव तत्र 'पुंव'दित्युक्तम् । अन्यथा 'ने'त्येव वदेदित्याहुः । केचिदाहुरिति । अत्राऽरुचिबीजन्तु ङ्याबन्तान्तात्परत्वसत्त्वेन लोपप्रवृत्ते रुक्तत्वात् ।

[ पुंवद्वचनात्सिद्धमेतत्[1] । ] पुंवद्भावोऽत्र भवति—'ईयसो बहुव्रीहौ पुंवद्वचन'-मिति* ॥ १५६ ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये पञ्चमस्याध्यायस्य
चतुर्थे पादे प्रथममाह्निकम् । पादश्च समाप्तः ।
पञ्चमोऽध्यायः समाप्तः ।

प्र०—योर्ग्रहणात्, स्त्रीप्रत्यये चानुपसर्जने तदादिनियमाभावादत्रोपसर्जनत्वान्ङीपस्तदादिनियमाद्धलङ्यादिलोपस्य प्रसङ्गाभावात् । अन्ये त्वाहुः—दीर्घग्रहणं तत्र ह्रस्वनिवृत्त्यर्थं कृतम्,—अतिखट्व इत्यत्र लोपो मा भूदिति । यदि चोपसर्जने तदादिनियमः स्यात्तदा ह्रस्वाल्लोपस्य प्रसङ्गाभावात्तद्व्यावृत्तये दीर्घग्रहणं न कुर्यात्, कृतं तु यथेष्टमुपसर्जनादपि दीर्घाल्लोपं ज्ञापयतीति बहुश्रेयसीति सिद्धमिष्टम् ॥ १५६ ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे पञ्चमस्याध्यायस्य
चतुर्थे पादे प्रथममाह्निकम् ॥ पादोध्यायश्च समाप्तः ।

उ०—अत एव दीर्घग्रहणं चरितार्थमित्याशयेनाह—अन्ये त्वाहुरिति । लोपं ज्ञापयतीति । स्वादीनां प्रत्ययत्वेन ङ्यापोश्च प्रत्ययत्वेन द्वेधा यस्माद्विहितस्तदादेरुपस्थित्या तदन्तविधिद्वयेन पूर्वोक्तार्थज्ञापनद्वारेति भावः ॥ १५६ ॥

हरिदीक्षितपादाब्जसेवनावाप्तबुद्धिना । भट्टनागेशविदुषा कृतोऽयं संग्रहो मुदा ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते
पञ्चमस्याध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ।
पादोऽध्यायश्च समाप्तः ।

---

१—इदं कीलहार्नसंस्करणे न विद्यते । * १ । २ । ४८ वा० ३

इति वेदविमर्शादिपुस्तकलेखकेन 'सुधारक'मासिकपत्रसम्पादकेन
नानाग्रन्थसम्पादकानुवादकेन वेदव्याकरणाद्याचार्येण
वेदव्रतशास्त्रिणा विहितायां 'विमर्शा'भिध-
टिप्पण्यां पञ्चमोऽध्यायः ।

* ओ३म् *

श्रीभगवत्पतञ्जलिविरचितं

# व्याकरण-महाभाष्यम्

[ श्रीकैय्यटकृतप्रदीपेन नागोजीभट्टकृतेन भाष्यप्रदीपोद्द्योतेन च विभूषितम् ]

तस्याऽयं

## षष्ठोऽध्यायः

स च-

परमतपस्विनां श्रीमताम्भगवानूदेवाचार्याणामन्तेवासिना महाविद्यालय-गुरुकुलझज्जरस्योपाचार्येण वेद-व्याकरण-साहित्य-दर्शन-आयुर्वेदाचार्येण पण्डितवेदव्रतेन वर्णिना सम्पादितो 'विमर्श'टिप्पण्या च संयोजितः ।

प्रकाशकः—

हरयाणा-साहित्य-संस्थानम्

गुरुकुल झज्जर ( रोहतक )

| प्रथमं संस्करणम् | २०२१ विक्रमाब्दे | मूल्यम् ९.०० |
| --- | --- | --- |
| द्विसहस्रम् | १८८६ शकाब्दे | नवरूप्यकाणि |
| २००० | १९६४ खिस्ताब्दे | ( नौ रुपये ) |

प्रकाशकः—
हरयाणा-साहित्य-संस्थानम्
पो० गुरुकुल झज्जर, जि० रोहतक।

सम्पादकः—
श्री वेदव्रतः स्नातकः सिद्धान्तशिरोमणिः
वेद-व्याकरण-साहित्य-दर्शन-आयुर्वेदाचार्यः
( उपाचार्यः—महाविद्यालयगुरुकुलझज्जरस्य )

मुद्रकः—
श्रीयुतपण्डितभगवान्स्वरूपो न्यायभूषणम्
प्रबन्धकर्त्ता
वैदिक यन्त्रालय, अजमेर ( राजस्थान )

* ओ३म् *

श्रीभगवत्पतञ्जलिविरचितं

# व्याकरण-महाभाष्यम्



[ प्रदीप-उद्द्योत-विमर्शैः समलङ्कृतम् ]

तस्यायं—

## षष्ठोऽध्यायः



### एकाचो द्वे प्रथमस्य ॥ ६ । १ । १ ॥

एकाच इति किमयं बहुव्रीहिः—एकोऽज्यस्मिन् स एकाच् एकाच इति, आहोस्वित्तत्पुरुषोऽयं समानाधिकरणः—एकोऽच् एकाच् एकाच इति ? किं चातः ? यदि बहुव्रीहिः—सिद्धं पपाच पपाठ, इयाय आरेति न सिध्यति । अथ तत्पुरुषः

---

प्रदीपः—एकाचो द्वे प्रथमस्य । एकाच इति किमयमिति । निर्देशस्य समानत्वाद्भिन्नार्थत्वाच्च एकवचननिर्देशाच्च द्वयोर्युगपदाश्रयितुमशक्यत्वाद्धलादिः शेष इत्यादेर्बहुव्रीहिलिङ्गस्य दर्शनाद् 'दीर्घ इणः किती'ति तत्पुरुषलिङ्गोपलम्भात्स्वरस्य दुरवधारणत्वादेकश्रुत्या वा सूत्रपाठास्वरान्निश्चयाभावात्प्रश्नः । बहुव्रीहितत्पुरुषयोर्विग्रहप्रदर्शनं विरुद्धार्थप्रतिपादनार्थम् । न हि संज्ञाभेदमात्राद्दोषः, किन्तु विरुद्धार्थप्रतिपादनात् । किं चात इति । द्वयोर्विशेषं पृच्छति । सिद्धं

---

उद्द्योतः—एकाचो द्वे । निर्देशस्य समानत्वादिति । अनेन सन्देहबीजं साधारणधर्मदर्शनमुक्तम् । ननूभयोरप्याश्रयणमस्त्वत आह—भिन्नार्थत्वादिति । न ह्येकशब्देन भिन्नयोरभिधानमुपपद्यत इति भावः । नन्वक्षादिवदेकशेषोऽस्त्वत आह—एकवचनेति । समाहारे एकशेषस्तु नास्त्येवेति भावः । लिङ्गमप्युभयोरस्तीति न तेनाऽपि निर्णय इत्याह—हलादिरिति । 'एतेन निषादस्थपत्यधिकरणन्यायेन तत्पुरुषत्वनिर्णय' इत्यपास्तम् । इणः कितीति । बहुव्रीहिपक्षे इणो द्वित्वाऽसंभवादिति भावः । स्वरादपि न निर्णय इत्याह—स्वरस्येति । तत्र हेतु एकश्रुत्या वेति । एवञ्च एकश्रुत्या पाठपक्षे स्वरो दुरवधारण इति भावः । 'किञ्चात' इति प्रश्नोऽनुपपन्नोऽत आह—द्वयोरितीति । ननु बहुव्रीह्यर्थैकाच्त्वेपि प्रथमत्वाऽभावात्कथं द्वित्वमत आह—प्रथमत्वाभावेऽपीति । योगविभागः—'एकाचो द्वे' इत्येवंरूपः ।

समानाधिकरणः—सिद्धमियाय आरेति, पपाच पपाठेति न सिध्यति।

अत उत्तरं पठति—

एकाचो द्वे प्रथमस्येति बहुव्रीहिनिर्देशः ॥ १ ॥

'एकाचो द्वे प्रथमस्ये'ति बहुव्रीहिनिर्देशोऽयम् ॥ एकवर्णेषु [ च ] कथम् ?

एकवर्णेषु [ च ] व्यपदेशिवद्वचनात् ॥ २ ॥

'व्यपदेशिवदेकस्मिन्कार्यं भवती'ति वक्तव्यम्। एवमेकवर्णेषु द्विर्वचनं भविष्यति। 'एकाचो द्वे भवत' इत्युच्यते, तत्र न ज्ञायते कस्यैकाचो द्वे भवत इति ? वक्ष्यति—'लिटि धातोरनभ्यासस्य' [ ६ । १ । ८ ] इति, तेन 'धातोरेकाच' इति विज्ञायते। यदि 'धातोरेकाचः' [इति] सिद्धं पपाच पपाठ, जजागार पुपुत्रीयिषतीति

प्र०—पपाचेति। प्रथमत्वाभावेऽपि व्यपदेशिवद्भावाद्वक्ष्यमाणाद्योगविभागाद्वा बहुव्रीहिपक्षे पचेर्द्विर्वचनं सिध्यति न तु तत्पुरुषपक्षे।

बहुव्रीहिनिर्देश इति। बहुव्रीहेर्निर्देश उच्चारणं, बहुव्रीहिणा वाऽर्थनिर्देशः प्रतिपादनमित्यर्थः। व्याप्तिन्यायाश्रयेण बहुव्रीहिराश्रीयते, वक्ष्यमाणव्यदेशिवद्भावात्तत्पुरुषफलस्य बहुव्रीहिणा कृतत्वात्। अत एव प्रयोजनाभावात्तन्त्रावृत्त्येकशेषाणामन्यतमाऽनाश्रयणम्। लिङ्गमप्यनेकं बहुव्रीहेरस्ति 'हलादिः शेषः' 'शर्पूर्वाः खयः' 'लिटचभ्यासस्योभयेषा'मिति। अज्मात्रस्य द्विर्वचनेऽभ्यासस्य हलभावाच्छेषसंप्रसारणाद्ययोगात्।

एकवर्णेषु चेति। मुख्य एकाज्व्यपदेशो येषामस्ति ते व्यपदेशिनः पचादयस्ते यथा द्विर्वचनं प्रतिपद्यन्ते तथैकवर्णा अपि। कस्यैकाच इति। विधिं मत्वा विशेषानुपादानात्पृच्छति। वक्ष्यतीति। नायं विधिः, किं तर्हि ? अधिकार इत्यस्वातन्त्र्यादस्योत्तरवाक्येष्वर्थविशेषस्य व्यवस्थानम्। धातोरेकाच इति,—वैयधिकरण्येन सम्बन्धोऽभिमतः। धातोरवयवस्यैकाचो द्वे

उ०—बहुव्रीहिशब्दस्य निर्देशाभावादाह—बहुव्रीहेरिति। बहुव्रीहिपदेन तत्संज्ञकमुच्यते। निर्देशः—उच्चारणं प्रतिपादनं वेत्यर्थः। ननु स्वपदार्थप्रधानत्वेनान्तरङ्गत्वात्तत्पुरुषो न्याय्योऽत आह—व्याप्तीति। व्याप्तिमेव दर्शयति—वक्ष्यमाणेति। तन्त्रावृत्त्येकशेषाणामिति। सौत्रो विभक्त्यन्तानामेकशेष इत्यभिमानः। अनेकमिति। तत्पुरुषस्य तु एकमेव लिङ्गं 'दीर्घं इणः' इतीति भावः। वस्तुतो व्यपदेशिवद्भावेन सिद्धत्वात्तस्य लिङ्गत्वमेव नास्ति।

नन्वस्याधिकारत्वात्तत्र तत्र कार्यिनिर्देशोऽस्त्येवेति तत्प्रश्नानुपपत्तिरत आह—विधिं मत्वेति। स्वार्थत्वे संभवति पारार्थ्यकल्पनं न युक्तमिति भावः। भाष्ये कस्येत्यस्य—धातोः, प्रातिपदिकस्य वेत्यर्थः। नायं विधिरिति। विधित्वे हि 'लिटि धातो'रित्यादेर्विधेयाऽनिर्देशात्पूर्वेणैव सिद्धत्वाच्च वैयर्थ्यं स्यादतोऽधिकार

१—क्वचिन्न।

न सिध्यति । धातोरिति नैपैकाच्समानाधिकरणा षष्ठी—धातोरेकाच इति । किं तर्हि ? अवयवयोगैषा षष्ठी—'धातोर्य एकाजवयव' इति ॥ अवयवयोगैषा षष्ठी चेत्सिद्धं जजागार पुपुत्रीयिषतीति, पपाच पपाठेति न सिध्यति । एषोऽपि व्यपदेशिवद्भावेन धातोरेकाजवयवो भवति ।

'एकाचो द्वे प्रथमस्ये'त्युच्यते तेन यत्रैव प्रथमश्चाप्रथमश्चास्ति तत्र द्विर्वचनं स्यात्—जजागार पुपुत्रीयिषतीति, पपाच पपाठेत्यत्र न स्यात् ।

प्रथमत्वे च ॥ ३ ॥

प्रथमत्वे च किम् ? 'व्यपदेशिवद्वचनात्सिद्ध'मित्येव ।

स तर्हि व्यपदेशिवद्भावो वक्तव्यः ? न वक्तव्यः ।

उक्तं वा ॥ ४ ॥

किमुक्तम् ? 'तत्र व्यपदेशिवद्वचनमेकाचो द्वे प्रथमार्थं षत्वे चादेशसंप्रत्ययार्थम्' । नैष दोषः । 'अवचनाल्लोकविज्ञानात्सिद्ध'मित्येव* ।

प्र०—भवत इत्यर्थः । इतरस्तु सामानाधिकरण्येन सम्बन्धं मत्वाह—यदि धातोरिति । नैषेति । सर्वानुग्रहाय वैयधिकरण्यमाश्रीयते । तस्मिन्ननेकविषयता लक्षणस्य, प्रथमग्रहणाच्च । सामानाधिकरण्ये हि व्यवच्छेद्याभावात्प्रथमग्रहणमनर्थकं स्यात् । यत्रैव प्रथमश्चेति । प्राथम्यस्य द्वितीयाद्यपेक्षत्वात् ।

अवचनादिति । वचनरहितं यल्लोकविज्ञानं—वचनेनानिबद्धं लोकव्यवहारात्मकं,

उ०—एवायमिति भावः । व्यवस्थानमिति । 'धातोरेकाच' इत्येवमर्थविशेषस्य व्यवस्थितिरित्यर्थः । 'जजागारे'त्यादिसिद्धये आह—वैयधिकरण्येनेति । सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यायुक्तत्वादाह—सर्वेति । एकाजनेकाज्धात्वनुग्रहायेत्यर्थस्तदेवाह—तस्मिन्निति । 'अनेकविषयते'त्यनेन व्याप्तिन्यायः सूचितः । यतस्तस्मिन्वैयधिकरण्ये सत्यनेकविषयता लक्षणस्य भवतीत्यक्षरार्थः । 'अनेकविषयत्वाल्लक्षणस्ये'ति क्वचित्पाठस्तत्रान्वयश्चिन्त्यः । वैयधिकरण्याश्रये ज्ञापकमप्याह—प्रथमग्रहणाच्चेति । इति भविष्यतीति । इति व्यवहारविषयो भविष्यतीत्यर्थः ।

भाष्ये—प्रथमत्वे [ चाप्रथमत्वे ] चेत्यस्योक्तमिति शेषः । किमुक्तमिति पृच्छति—किमिति । तदाह—व्यपदेशिवदिति । 'स तर्हि वक्तव्य' इति काक्वा प्रश्नः । 'न वक्तव्य इत्येतद्गर्भमुत्तरयति—उक्तं वेति । 'आद्यन्तवदिति सूत्रे' इति शेषः । षत्वे चादेशेति । 'आदेशप्रत्यययो'रिति सूत्रे प्रत्ययांशेऽवयवषष्ठी सत्त्वात्पक्षत् वक्षदित्यादौ सकारमात्रस्य प्रत्ययस्य षत्वार्थमित्यर्थः । वचनेनानिबद्धं—वचननिबन्धनस्वाभाववत् ।

१—'एकाजवयव इति भविष्यति' पा० । * १ । १ । २१ वा० २–५ पृ० २४८–२४९

## योगविभागो वा ॥ ५ ॥

अथवा योगविभागः करिष्यते—एकाचो द्वे भवतः। [1]किमर्थो योगविभागः ?

प्र०—तस्मात्सिद्धमित्यर्थः। तथा हि—लोके शिलापुत्र( क )स्य शरीरमिति बहिर्वस्तुभेदेऽसत्यपि भेदस्य व्यवहारोऽवस्थाभेदाश्रयो दृश्यते। शिलापुत्रो विक्रीयमाणत्वाद्यनेकावस्थायुक्तो यो दृष्टस्तस्येदं शरीरमिति परिदृश्यमानावस्थाभेदेन निर्दिश्यते। एकमेव हि वस्तु 'तदेवेद'मिति प्रत्यभिज्ञानादेकत्वमत्यजदप्यवस्थाभेदान्नानारूपमाभाति। तथा हन्त्यात्मानमात्मनेत्येकस्यापि बुध्यवस्थापितावस्थाभेदाश्रयः कर्तृकर्मकरणभावः। इयायेत्यत्रापि प्रयोगभेदादेति इतो यन्ति आयन् जिगमिषतीत्याद्यनन्तरूपस्येण एकोऽयमिकारोऽजिति व्यपदिश्यते॥ अथवान्वयव्यतिरेकाभ्यां परिकल्पितार्थत्वाच्छब्दार्थसमुदायस्याविवक्षितार्थ एको वर्णोऽजिति व्यपदिश्यते। एवं पचेरनन्तप्रयोगविषयस्य प्रयुज्यमानं लिडादिपरं रूपमवयत्र इति व्यपदिश्यते। प्रथमव्यपदेशोऽपि प्रयोगभेदादेवेति 'प्रथमगर्भेण हते'त्यादिलौकव्यवहार एकस्मिन्नपि दृश्यते। असतोऽपि द्वितीयादीन्बुध्या परिकल्प्य व्यवहारान्मुख्यप्रथमसाधर्म्याद्वा। प्रसिद्धत्वाच्चैवंविधस्य व्यवहारस्य नास्ति गौणत्वम्। सत्यपि वा गौणत्वे 'लिटचभ्यासस्योभयेषाम्' 'दीर्घ इणः किती'त्यादेर्ज्ञापकाद्भवति शास्त्रीयकार्यप्रवृत्तिः।

योगविभागो वेति। तेन प्राथम्यार्थो व्यपदेशिवद्भावो नाश्रयितव्यः। तत्र हि योगविभा-

उ०—लोकव्यवहाराच्छास्त्रेऽपि मुख्यप्रथमादिवत्सिद्धं तत्तत्कार्यमित्यर्थः। अवस्थाभेदाश्रय इति। अवस्थाकृतभेदाश्रय इत्यर्थः। भेदेनेति। दृश्यमानावस्था पूर्वावस्थातो भेदेन निर्दिश्यते इत्यर्थः। नन्वेवं भेदे सति प्रत्यभिज्ञा ( नं ) न स्यादत आह—एकमेव हीति। यथा नटादिशरीरमिति भावः। बुद्ध्यवस्थापितेति। बुद्धिकल्पितेत्यर्थः। अवस्था—अन्तःकरणाद्युपाधिसम्बन्धरूपा, न तु वास्तव आत्मन्यवस्थाभेदोऽस्तीति भावः। वस्तुतः 'शिलापुत्रकस्य शरीर'मित्यादि वस्तुशून्यं विकल्पात्मकं ज्ञानं, 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः'। 'पुरुषस्य चैतन्य'मितिवत्प्रकृते एकाच्त्वज्ञानमपि तथैव। 'इणो दीर्घ' इत्यादिज्ञापकाल्लोकनिरूढत्वाद्वा तादृशस्यापि शास्त्रीयकार्यनिमित्तता। 'अथवे'त्यादिपद्क्षिन्त्य इत्याद्यन्तवत्सूत्रे उक्तं, तद्ध्वनयन्नाह—एवं पचेरिति। प्रयोगभेदादेवेति। भाविप्रयोगान्तरस्यापेक्षया प्रथमव्यवहार इति भावः। प्रथमगर्भेणेति। प्रागसूतायामग्रेऽसोष्यमाणायां चायं व्यवहारः। गर्भोऽपत्यम्। साधर्म्याद्वेति। अपत्यान्तराभाववत्कालिकापत्यत्वेन सादृश्यं, तस्माद्वा एकस्मिन्नपि लोके व्यवहारो दृश्यत इत्यन्वयः। नन्वेवं सति गौणत्वादस्य ग्रहणं न स्यादित्यत आह—प्रसिद्धत्वाच्चेति। द्वितीये सादृश्यमूलकत्वाद्गौणत्वं दुर्वारमत आह—सत्यपि वा गौणत्वे इति।

नन्वधिकारार्थत्वादस्य विभागेऽविभागे वा न विशेषोऽत आह—तत्र हीति। वाक्यभेदेन सम्बन्धप्र-

[1]—'किमर्थं' पा०।

## एकाज्मात्रस्य द्विर्वचनार्थः ॥ ६ ॥

एकाज्मात्रस्य द्विर्वचनं यथा स्यात् । इयाय पपाच । ततः 'प्रथमस्य' । प्रथमस्यैकाचो द्वे भवतः । इदमिदानीं किमर्थम् ? नियमार्थम् । यत्र प्रथमश्चाप्रथमश्चास्ति तत्र [2]प्रथमस्यैकाचो द्विर्वचनं यथा स्यादप्रथमस्य मा भूदिति । जजागार पुपुत्रीयिषतीति ।

## एकाचोऽवयवैकाच्त्वादवयवानां द्विर्वचनप्रसङ्गः ॥ ७ ॥

एकाचोऽवयवैकाच्त्वादवयवानां द्विर्वचनं प्राप्नोति । नेनिजतीत्यत्र निज्शब्दोऽप्येकाच्, इज्शब्दोऽप्येकाच्, इकारोऽप्येकाच्, निशब्दोऽपि । तत्र निज्शब्दस्य द्विर्वे-

प्र०—गसामर्थ्याल्लिटि धातोरनभ्यासस्येत्यादावेकाच इति प्रथमस्येति च वाक्यभेदेन सम्बध्यते, एकवाक्यतायां तस्यैव दोषस्य प्रसङ्गात् । तस्मादेतस्माद्ग्रहणकवाक्यात्प्रक्रियावाक्यानि लक्ष्यसंस्कारकाणि उपप्लवन्ते । 'धातोरवयवस्यैकाचो लिटि द्वे भवत' इत्येकं वाक्यम् । 'धातोः प्रथमस्यैकाच' इति नियमार्थं द्वितीयम् । 'अजादेर्धातोर्द्वितीयस्यैकाच' इति तृतीयम् ।

एकाच इति । अवयवा अप्येकाचः, समुदायोऽपि व्यपदेशिवद्भावाद्धातोरवयवश्च । ततो विशेषानुपादानात्सर्वेषां द्विर्वचनप्रसङ्गः ।

निज्शब्दोऽपीति । यथा येनैव हस्तेन बाहुर्हस्तवानुच्यते तेनैव देवदत्तोऽपि, एवमिकारेण सर्व एकाज्व्यपदेशभाज इति भावः । इकारोऽपीति । व्यपदेशिवद्भावादिति भावः । 'अर्थवता व्यपदेशिवद्भाव' इत्यनाश्रित्येकारोऽपीत्युक्तम् । न ह्येतद्वचनमपि तु न्यायः । अर्थवतो भेदकल्पनसम्भवादनर्थकोऽपि यदि भेदेनाश्रयितुं शक्यते ततस्तत्रापि भवत्येव व्यपदेशिवद्भावः । शक्यते चेकारोऽप्यनेकसमुदायान्तर्भावान्नानारूप इवोपलभ्यमानेन रूपेणैकाजिति व्यपदेष्टुम् । नन्वर्थवत्त्वात्समुदायस्यैव द्विर्वचनं भविष्यति नावयवानामनर्थकानाम् । नैतदस्ति । यत्र विशिष्टं शब्दस्वरूपमुपा-

उ०—कारमाह—तस्मादिति । नियमार्थमिति । प्रथमाप्रथमसद्भावविषये इति भावः ।

नन्वेक इकारः कथं सर्वेषामवयवः स्यादित्याशङ्क्य दृष्टान्तेनोपपादयति यथेति । इत्यनाश्रित्येति । असहाये एव व्यपदेशिवद्भाव इत्यनाश्रित्येत्यपि बोध्यम् । आद्यन्तवत्सूत्रे 'व्यपदेशिवदेकस्मि'न्नित्युक्तेः । तस्मात्त्रयाणामापत्तावेव तात्पर्यम् । पूर्वपक्षत्वात्तु भगवता न चोदः कृतः । वक्ष्यमाणेन सर्वसमाधानाच्चेति दिक् । अर्थवत इति । अर्थस्य त्यागोपादानाभ्यां भेदकल्पनायाः सुकरत्वादित्यर्थः । सति संभवेऽर्थवत्त्वकृतभेदेन भेदः । असति तु प्रकारान्तरेणापीति तद्भावः । अन्यथेति । ज्ञापकमिदं चिन्त्यं, पर्युदासेनैवार्थवत्त्वलाभे परिभाषानुपयोगात् । अर्थवद्ग्रहणस्य विशिष्टार्थग्रहणायावश्यकत्वाच्चेत्याहुः ।

१—'योगविभागो वैकाज्मात्रस्य द्विर्वचनार्थः' इत्येकमेव वार्तिकं केचिदिच्छन्ति ।
२—'प्रथमस्यैवैकाचो' पा० ।

चने रूपं सिद्धं दोषाश्च न सन्ति । इञ्शब्दस्य द्विर्वचने रूपं न सिध्यति दोषा[1] अपि न सन्ति । इकारस्य द्विर्वचने रूपं न सिध्यति दोषाश्च सन्ति । निशब्दस्य द्विर्वचने रूपं सिद्धं दोषास्तु[2] सन्ति ॥ तत्र को दोषः ?

## तत्र जुस्भाववचनम् ॥ ८ ॥

तत्र जुस्भावो वक्तव्यः—अनेनिजुः पर्यवेविषुः । अभ्यस्ताज्झेर्जुस्भावो भवतीति† जुस्भावो न प्राप्नोति जकारेण व्यवधानात् ।

प्र०—दीयते तत्रार्थवद्ग्रहणपरिभाषोपतिष्ठते । यथा'शे' इत्यत्र । अन्यथार्थवदधातुरित्यत्रार्थवद्ग्रहणमनर्थकं स्यात् । 'अधातुरप्रत्यय' इति पर्युदासाश्रयणात्तत्सदृशशब्दग्रहणादर्थवत्परिभाषोपस्थानादनर्थकस्य ग्रहणाप्रसङ्गाद्धातोरवयवस्यैकाच इत्यवयवत्वेनाश्रयणाच्चानर्थकस्याप्यङ्गीकरणान्नास्तीहैतत्परिभाषोपस्थानम् । अत्र च पर्यायेण सर्वेषां द्विर्वचनप्रसङ्गश्चोद्यते न तु युगपत् । न ह्येकोऽवयवो युगपदनेकस्यावयविनोऽवयवत्वेन शक्योऽपेक्षितुम्, अवयवस्य गुणत्वात्परार्थत्वादेकं प्रति गुणभावादपरं प्रति गुणभावायोगात् । पर्यायेण त्वपेक्षाया अविरोधात्सर्वप्रसङ्ग उच्यते । एकस्य चैकाचो द्विर्वचने कृते एकाज्व्यपदेशहेतोरचोऽपि द्विरुक्तत्वात्तस्मिन्नेव प्रयोगेऽपरस्यैकाचो द्विर्वचनाप्रसङ्गः, प्रवृत्तत्वाल्लक्षणस्य । तस्मात्प्रयोगान्तरे पर्यायेण सर्वेषां द्विर्वचनप्रसङ्गः ।

इञ्शब्दस्येति । इकारस्य लघूपधगुणे सत्यभ्यासस्यासवर्णे इति इकारस्य इयङि नियेजेति रूपं स्यात् । इकारस्यापि द्विर्वचन एतदेव रूपम् । दोषा अपि न सन्तीति । रूपासिद्धेरन्यस्य जुस्भावाद्यसिद्धिदोषस्याप्रसङ्गात् ।

उ०—अर्थवत्परिभाषानाश्रयणे हेत्वन्तरमाह—धातोरवयवस्येति । अर्थवत्त्वाद्धातोस्तदवयव इत्युक्तेऽवयवोऽनर्थक एव प्रतीयत इति भावः । अत एव जजागारेत्यादौ जागिरयस्य द्वित्वं भवति । ननु सर्वेषां द्वित्वमेकत्रैव प्रयोगे युगपच्चोद्यते उत प्रयोगभेदात्पर्यायेण ? तत्राद्यः पक्षो नोपपद्यते । प्रमित्यनुष्ठानयोरसम्भवादित्याह—अत्र चेति । तत्र प्रमितेस्तावद्युगपदसम्भवमाह—न ह्येक इति । शक्योऽपेक्षितुमिति । प्रमातुमित्यर्थः । एकस्य तद्वैशिष्ट्येन प्रमाकालेऽपरस्य तद्वैशिष्ट्येन प्रमाया असम्भवादिति भावस्तदाह—अवयवस्येत्यादिना । युगपदनुष्ठानासम्भवादपि पर्यायप्रसङ्ग इत्याह—एकस्य चेति । लक्ष्यभेदात्पुनः प्रवृत्तिभ्रमं वारयति—अचोऽपि द्विरुक्तत्वादिति । एवं च तदंशमादाय लक्ष्ये लक्षणस्येति न्यायप्रवृत्तिरिति भावस्तदाह—प्रवृत्तत्वाल्लक्षणस्येति । 'अनभ्यासस्ये'ति निषेधाच्चेत्यपि बोध्यम् । वाचः क्रमवृत्तित्वाच्च युगदनुष्ठानाभाव इत्यपि बोध्यम् । ननु रूपासिद्धेर्दोषस्य सत्वाद्दोषा न सन्तीत्ययुक्तमत आह—रूपासिद्धेरिति ।

१–'दोषाश्च न सन्ति' पा० । २–'दोषाश्च भवन्ति' पा० ।

† सिजभ्यस्तविदिभ्यश्च ३ । ४ । १०९

## स्वरश्च ॥ ९ ॥

स्वरश्च न सिध्यति । नेनिजति यत्परिवेविषतीति‡ । अभ्यस्तानामादिरुदात्तो भवत्यजादौ लसार्वधातुक इत्येष स्वरो§ न प्राप्नोति ।

## अद्भावश्च ॥ १० ॥

अद्भावश्च न सिध्यति—नेनिजति परिवेविषतीति । 'अदभ्यस्तात्' [ ७ । १ । ४ ] इत्यद्भावो न प्राप्नोति ।

## नुम्प्रतिषेधश्च ॥ ११ ॥

नुम्प्रतिषेधश्च न सिध्यति—नेनिजत् परिवेविषत् । 'नाभ्यस्ताच्छतुः' [ ७ । १ । ७८ ] इति नुम्प्रतिषेधो न प्राप्नोति जकारेण व्यवधानात् ।

## शास्त्रहानिश्च ॥ १२ ॥

शास्त्रहानिश्च भवति । समुदायैकाचः शास्त्रं हीयते ।

## सिद्धं तु तत्समुदायैकाच्त्वाच्छास्त्राहानेः ॥ १३ ॥

प्र०—स्वर इति । स्वरविधौ व्यञ्जनस्याविद्यमानत्वात्स्वरसिद्धिरिति चेत्, तन्न; 'हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानव'दित्येव व्यवस्थापनात् । यत्परिवेविषतीति । यच्छब्दस्य प्रयोगो 'निपातैर्यद्यदी'ति निघातप्रतिषेधार्थः ॥ शास्त्रहानिश्चेति । एकस्मिन्नेकाच्यवयवे द्विरुच्यमाने पूर्वोक्तेन न्यायेनान्येषां तस्मिन्नेव प्रयोगे द्विर्वचनाभावात्तद्विषयं शास्त्रं त्यक्तं स्यात् ।

सिद्धं त्विति । समुदाये द्विरुच्यमानेऽवयवानामपि तत्रान्तर्भावाद्द्विर्वचनसम्बन्धान्न

उ०—हल्स्वरप्राप्ताविति । ( न ) विधेयस्वरविषये एतदेवेति भावः । एतेन—'स्वरोद्देश्यके विधौ व्यञ्जनस्याविद्यमानत्वाय तदावश्यकम् । अत एव शौकम् वाकमित्यादावनुदात्तादेरञ्सिद्धः । एवञ्च 'इत्येव व्यवस्थापनादित्युक्त'मित्यपास्तम् । अत्र च जकारादेर्हलः स्वरप्राप्त्यभावाद्विद्यमानत्वमेवेति तेन व्यवधानात्स्वरासिद्धिरिति बोध्यम् ।

पूर्वोक्तेनेति । 'लक्ष्ये लक्षणस्ये'ति न्यायेनानभ्यासस्येति निषेधेन चेत्यर्थः । अन्येषामिति । 'अवयवान्तराणामित्यर्थः । तदुक्तं भाष्ये—समुदायैकाच इति । समुदायरूप एकाच्—समुदायैकाच्, तस्य शास्त्रं तद्विषयं शास्त्रमित्यर्थः । धातोः प्रथमैकाच्त्वावच्छेदेनासति बाधके शास्त्रव्यापारादिति भावः ।

‡ निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम् ८ । १ । ३०

§ अभ्यस्तानामादिः ६ । १ । १८९

सिद्धमेतत् । कथम् ? 'तत्समुदायैकाच्त्वात्' । किमिदं तत्समुदायैकाच्त्वादिति ? तस्य समुदायस्तत्समुदायः । एकाज्भाव एकाच्त्वम् । तत्समुदायस्यैकाच्त्वं तत्समुदायैकाच्त्वम्, तत्समुदायैकाच्त्वात् । तत्समुदायैकाचो द्विर्वचनं भविष्यति । कुत एतत् ? 'शास्त्राहानेः' । एवं हि शास्त्रमहीनं भवति ।

ननु च समुदायैकाचोऽपि द्विर्वचने क्रियमाणेऽवयवैकाचः शास्त्रं हीयते । न हीयते । किं कारणम् ? अवयवात्मकत्वात्समुदायस्य । अवयवात्मकः समुदायः । अभ्यन्तरो हि समुदायेऽवयवः । तद्यथा—वृक्षः प्रचलन्सहावयवैः प्रचलति ।

**तत्र बहुव्रीहिनिर्देशेऽनच्कस्य द्विर्वचनमन्यपदार्थत्वात् ॥ १४ ॥**

तत्र बहुव्रीहिनिर्देशेऽनच्कस्य द्विर्वचनं प्राप्नोति—आटतुः आटुः । किं कारणम् ? 'अन्यपदार्थत्वाद् बहुव्रीहेः' । अन्यपदार्थे बहुव्रीहिर्वर्तते†, तेन यदन्यदचस्तस्य द्विर्वचनं स्यात् । तद्यथा—'चित्रगुरानीयता'मित्युक्ते यस्य ता गावः सन्ति स आनीयते

प्र०—कस्मिंश्चिच्छास्त्रं हीनमित्यर्थः ॥ नन्विति । शास्त्रेण साक्षात्समुदाय एवानुगृहीतः स्यात्, न त्ववयवा इति प्रश्नः । न हीयत इति । यद्यपि समुदाये द्विरुच्यमाने साक्षादवयवेषु शास्त्रं न प्रवृत्तं तथापि शास्त्रीयफलसंपत्त्या शास्त्राहानिरुच्यते । अवयवे तु द्विरुच्यमाने तस्मिन्प्रयोगेऽवयवान्तराणां समुदायस्य च शास्त्रीयफलसम्बन्धाभावाद्धीनमेव शास्त्रं स्यात् ।

अनच्कस्येति । एकस्य वानेकस्य वा हल एव द्विर्वचनप्रसङ्गः । तद्यथेति । चित्रगु-

उ०—भाष्ये—समुदाय इति—जातावेकवचनं, तेषां समुदाय इत्यर्थः । तत्समुदायैकाच्त्वादिति—ल्यब्लोपे पञ्चमी । तेषां समुदायस्य एकाच्त्वमाश्रित्य द्वित्वप्रवृत्त्या सिद्धमित्यर्थः । ननु समुदायद्वित्वेऽपि अवयवानामप्येकाच्त्वात्कथं न शास्त्रहानिरत आह—समुदाये इति । यथा सकृदनुष्ठितप्रयाजादिना शेषित्र-योपकारात्फलाभावात्पृथगननुष्ठानमेवं समुदायेऽपि द्विरुक्तेऽवयवानां तत्फललाभात्पृथगननुष्ठानमिति भावः । एतदेव स्पष्टयितुं भाष्ये चोद्यसमाधाने इत्याह—शास्त्रेणेति । यद्यपीति । 'अवयवे अद्विरुच्यमाने' इति च्छेदः । 'समुदाये द्विरुच्यमाने' इति पाठः क्वचित् ।

णलि टकारस्य द्वित्वे व्यपदेशिवद्भावेनादित्वेऽपि मुख्यादित्वाभावाद्धलादिः शेषेणाभ्यासटकार-निवृत्तावत उपधाया इति वृद्धावाटेत्यस्य सिद्धेर्भाष्ये आटतुरित्याद्युक्तं, तच्च पपाचेत्यस्याप्युपलक्षणमित्याह—अनेकस्य वेति । अतद्गुणसंविज्ञानो बहुव्रीहिरिति भावः ।

१–'तत्समुदायस्यैकाच्त्वादिति' पा० । † अनेकमन्यपदार्थे २ । २ । २४

न गावः ।

सिद्धं तु तद्गुणसंविज्ञानात्पाणिनेर्यथा लोके ॥ ५ ॥

सिद्धमेतत् । कथम् ? तद्गुणसंविज्ञानाद्भगवतः पाणिनेराचार्यस्य यथा लोके । तद्यथा– लोके 'शुक्लवाससमानय' 'लोहितोष्णीषा [ऋत्विजः] प्रचरन्ती'ति तद्गुण आनीयते तद्गुणाश्च प्रचरन्ति । एवमिहापि ।

अथ यस्य द्विर्वचनमारभ्यते किं तस्य स्थाने भवति, आहोस्विद् द्विप्रयोग इति ।

प्र०—शब्दस्यान्यपदार्थ एव वाच्यो न तु वर्तिपदार्थ इति न तस्य कार्येण सम्बन्धः ।

सिद्धं त्विति । तस्यान्यपदार्थस्य गुणो विशेषणं तस्य संविज्ञानं, स वर्तिपदार्थो गुणो वा यस्यान्यस्य पदार्थस्य तस्य संविज्ञानम् । संनिहितविशेषणस्यान्यपदार्थस्य विशिष्टसम्बन्धाश्रयेण केनचिद्बहुव्रीहिणाभिधानादित्यर्थः । शुक्लवाससमिति । अत्र सत्यपि स्वस्वामिभावे वासस्संयोगाश्रयो बहुव्रीहिरिति शुक्लवासस्संयुक्तपुरुषानयने पृथगचोदितान्यपि वासांसि सामर्थ्यादानयनेन सम्बध्यन्ते । इह तु यः शुक्लवासा दृष्टस्तमानयेति दर्शनक्रियायां वासांस्युपलक्षणत्वेनोपात्तानि, तथा च तानि युक्तान्येव । दर्शनक्रिया त्वानयनक्रियोपलक्षणत्वेन निर्दिष्टेति नावश्यं तत्र शुक्लानां वाससां संविज्ञानम् । चित्रगुशब्दस्तु स्वस्वामिभावविशिष्टमन्यपदार्थमाहेति नास्त्यानयने वर्तिपदार्थसंनिधानम् । इह तु एकोऽज्यस्य स एकाजिति विशिष्टावयवोपलक्षितस्यावयविनोऽन्यपदार्थत्वादपरित्यागेनावयविनोऽभावात्तस्य कार्यं विधीयमानं तत्रान्तर्भावात्संनिहितोऽवयव उपलक्षणभावेनाप्युपादीयमानः प्रतिपद्यते ।

अथ यस्येति । सोपस्कारत्वात्सूत्राणां तन्निबन्धनानि लक्ष्यसंस्कारकाणि वाक्यान्तराण्युपप्ल-

उ०—तस्य संविज्ञानमिति । आनयनाद्यन्वयित्वेन ज्ञानमित्यर्थः । गुणो वेति । वाशब्दः संविज्ञानमित्युत्तरं बोध्यः । सन्निहितविशेषणस्येति बहुव्रीहिः । विशिष्टसम्बन्धाश्रयेणेति । संयोगसमवायान्तरसम्बन्धाश्रयेणेत्यर्थः । तदन्यतरसम्बन्ध्यन्यपदार्थकेन केनचिद्बहुव्रीहिणेति फलितम् । 'विशिष्टसम्बन्धाश्रयणे' इति पाठः क्वचित्[1] । 'अत्र सत्यपि स्वस्वामिभावे' इति पाठः । सत्येवेति तदर्थः । वासः संयोगाश्रय इति । भूमादयो मतोरिव बहुव्रीहेरपि विषया इति भावः । 'असत्यपी'ति पाठस्तु मतुप्सूत्रस्थभाष्यस्वग्रन्थविरुद्धः । यद्वा तत्र पाठे 'वासस्संयोगाश्रय' इत्यस्य वासस्संयोगमूलकाधाराधेयभावे सप्तम्यर्थे बहुव्रीहिरित्यर्थः । केनचिद्बहुव्रीहिणेत्युक्तं, तत्र 'केनचि'दित्यस्य फलमाह—इह त्विति । उपलक्षणत्वेनेति । दर्शनक्रियाकर्मोपलक्षणत्वेनेत्यर्थः । तथा– दर्शनक्रियया । तानि–वासांसि । युक्तानि–विषयतया संबद्धानीत्यर्थः । नावश्यं तत्रेति । वर्तिपदार्थानां दर्शनक्रियायामुपलक्षणत्वाश्रयणादिति भावः । स्वस्वामिभावविशिष्टमिति । देशान्तरस्थाभिरपि गोभिस्तत्त्वसंभवादिति भावः । सर्वथात्रातद्गुणसंविज्ञानत्वमेवेति तात्पर्यम् । प्रकृते तु तद्गुणसंविज्ञानत्वमेवेत्याह—इह त्विति । उपलक्षणभावेनापीति । य एकाज् दृष्टस्तस्य द्वित्वमित्येवमुक्तावपीति भावः । तत्रापि तद्गुणत्वमेव किं पुनरत्रेति तात्पर्यम् ।

१—क्वचिन्न ।

कश्चात्र विशेषः ?

**स्थाने द्विर्वचने णिलोपवचनं समुदायादेशत्वात् ॥ १६ ॥**

स्थाने द्विर्वचने णिलोपो वक्तव्यः—आटिटत् आशिशत् । किं कारणम् ? 'समुदायादेशत्वात्' । समुदायस्य समुदाय आदेशस्तत्र संप्रमुग्धत्वात्प्रकृतिप्रत्ययसमुदायस्य नष्टो णिर्भवतीति 'णेरनिटि' [ ६ । ४ । ५१ ] इति णिलोपो न प्राप्नोति ।

प्र०—वन्ते । तत्र 'द्वे' इत्येतत्सङ्ख्येये वर्तते । तच्च सङ्ख्येयं शब्दानामन्वाख्येयत्वेन प्रस्तुतत्वाच्छब्दरूपं वा स्यात्तत्सम्बन्धि वोच्चारणम् । तत्र यदा शब्दरूपं सङ्ख्येयं तदैकाच इति स्थानेयोगा षष्ठी, 'षष्ठी स्थानेयोगे'ति परिभाषोपस्थानात्, तदा स्थाने द्विर्वचनमित्येष पक्षो भवति । यथा-स्तेर्भूरिति । यदा तूच्चारणं सङ्ख्येयं तदा तस्य क्रियारूपत्वात्क्रियायाः शब्दस्य च स्थान्यादेशभावायोगादेकाच इति कर्मलक्षणा षष्ठी विज्ञायते उच्चारणशब्दाध्याहारेण, शेषलक्षणा वा, यथा मातुः स्मरतीति 'द्विःप्रयोगो द्विर्वचन'मित्येष पक्षो भवति । तत्र गुणदोषपरीक्षार्थो विचारः क्रियते ।

आटिटदिति । प्राग्द्विर्वचनं भवति । 'द्विर्वचनं यणयवायावेकादेशल्लोपोपधालोपणिलोपकिकिनोरुत्वेभ्य' इति । अथवा कृतेऽपि णिलोपे 'द्विर्वचनेऽची'ति रूपस्थानिवद्भावात्कृताकृतप्रसङ्गित्वान्नित्यत्वाद्द्विर्वचनं भवति । तच्चैकस्य टिशब्दस्य शब्दान्तरं समुदायरूपमादेशः, तत्र णेरभावादिकारलोपाप्रसङ्गः । न च स्थानिवद्भावाण्णिग्रहणेनादेशस्य ग्रहणम् । न ह्ययं णेरादेशः । किं तर्हि ?, समुदायस्य टिशब्दस्य । यत्र च द्वौ स्थानित्वेन शब्देन निर्दिष्टौ यथैकः पूर्वपरयोरिति, तत्रान्यतरेणादेशस्य व्यपदेशो भवति—खट्वर्श्य इति । इह तु समुदाये णिरन्तर्भूतत्वादादेशेन सम्बध्यते, न तु साक्षादित्यविषयोऽयं स्थानिवद्भावस्य ।

उ०—पक्षद्वयोपपत्तिं सूत्राक्षरैर्दर्शयति—सोपस्कारत्वादिति । 'द्वे'इत्यस्य सङ्ख्येयानुक्तेस्तत्सापेक्षत्वादिति भावः । तन्निबन्धनानि—तद्घटितानि । संख्येये इति । 'आ दशतः सङ्ख्याः सङ्ख्येये' इत्युक्तेरिति भावः । स्थान्यादेशभावायोगादिति । असम्भवात्षष्ठीस्थाने इत्यस्याप्रवृत्तेरिति भावः । तत्कार्यकारी हि तत्स्थाने भवति । न हि शब्दकार्यं बोधं क्रिया कर्तुमीष्टे इति तस्या आदेशत्वासम्भव इति तात्पर्यम् । ननु कृद्योगाभावात्कथं कर्मणि षष्ठीत्यत आह—उच्चारणशब्दाध्याहारेणेति । 'एकाचो द्वे उच्चारणे' इत्येतद्वाक्यैकदेशोऽयमिति भावः । 'शेषलक्षणा वे'त्यभ्युच्चयः ।

नन्वाटिटदित्यत्र परत्वाण्णिलोपे स्थानिवत्त्वाद्द्वित्वमिति न दोषोऽत आह—प्रागिति । त्वदुक्तप्रक्रियायां ह्यभ्यासे इकारश्रवणं न स्यादित्यर्थः । 'द्विर्वचनेऽची'त्यस्य कार्यातिदेशत्वादिति भावः । न च स्थनिवद्भावादिति । 'स्थानिवदादेश' इत्यनेन । न ह्ययं णेरिति । अयं—द्विर्वचनरूपः । एवं चेकारे णित्वं दुर्लभम् । न च ण्यन्ताङ्गान्त्यत्वेनेकारस्य लोपः सुलभः, अलोऽन्त्यपरिभाषया निर्दिश्यमानपरिभाषया च ण्यन्ताङ्गस्य निर्दिश्यमानोऽन्त्यश्च यो णिस्तस्य लोप इत्यर्थादिति भावः । नन्वेवं खट्वर्श्य इत्यादौ रपरत्वं न स्यात्समुदयोदेशत्वेऽपि ऋवर्णादेशत्वाभावादत आह—यत्र चेति । 'स्थानिवत्त्वेने'त्यस्य 'प्रत्येक'मित्यादिः । भाष्ये—संप्रमुग्धत्वादित्यस्य विवेकानाकलनादित्यर्थः । ननु 'द्विर्वचनेऽची'ति रूपस्थानिवद्भावात्कथं शब्दान्तरे

इदमिह संप्रधार्यम्—द्विर्वचनं* क्रियतां णिलोप इति किमत्र कर्तव्यम् ? परत्वाण्णिलोपः । नित्यं द्विर्वचनम् । कृतेऽपि णिलोपे प्राप्नोत्यकृतेऽपि । द्विर्वचनमप्यनित्यम्¹ । अन्यस्य कृते णिलोपे प्राप्नोत्यन्यस्याकृते, शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति । नित्यमेव द्विर्वचनम् । कथम् ? रूपस्य स्थानिवत्त्वात्† ।

## यच्च सन्यङन्तस्य द्विर्वचने ॥ १७ ॥

यच्च सन्यङन्तस्य द्विर्वचने चोद्यं तदिहापि चोद्यम्² । किं पुनस्तत् ? सन्यङन्तस्येति चेदशेः सन्यनिटः, दीर्घकुत्वप्रसारणषत्वमधिकस्य द्विर्वचनात्, आवृध्योश्चाभ्यस्तविधिप्रतिषेधः, 'सङाश्रये³ च समुदायस्य समुदायादेशत्वाज्झलाश्रये चाव्यपदेश आमिश्रत्वा'दिति‡ ।

अस्तु तर्हि द्विःप्रयोगो द्विर्वचनम् ।

## द्विःप्रयोग इति चेण्णकारषकारादेशादेरेत्त्ववचनं लिटि ॥ १८ ॥

द्विःप्रयोग इति चेण्णकारषकारादेशादेरेत्त्वं लिटि वक्तव्यम् । नेमतुः नेमुः । सेहे सेहाते सेहिरे§ । अनादेशादेरिति प्रतिषेधः प्राप्नोति¶ । स्थाने पुनर्द्विर्वचने सति

प्र०—अनित्यं द्विर्वचनमिति । द्विर्वचनेऽचीति कार्यस्थानिवद्भावं मन्यते ।

अशेः सन्यनिट इत्यादि 'सन्यङो'रित्यत्र व्याख्यास्यते ।

नेमतुरिति । 'णो न' इति नत्वे कृते धातुरादेशादिर्भवति । ततो द्विःप्रयोगेऽप्यादेशादित्वं न व्यावर्तते । स्थाने द्विर्वचने तु शब्दान्तरत्वादादेशादित्वाभावः । आदेशादिव्यपदेशस्य

उ०—प्राप्तिरत आह—कार्यस्थानिवद्भावमिति । भाष्ये—रूपस्य स्थानिवत्त्वादिति । स्थानिवत्त्वेन रूपस्यातिदेशादित्यर्थः ।

व्याख्यास्यत इति । चिचीषतीत्यादौ समुदायस्यादेशत्वेन संमोहाद्द्वित्वे कृते सनि परेऽजन्ताङ्गस्य दीर्घो न स्यादित्यादिदोषा अत्रापि बोध्याः । 'अशेः सन्यनिट'इति दोषस्तु न प्रकृते इति बोध्यम् ॥ ननु स्थानिवत्त्वादादेशादित्वमत आह—आदेशादिव्यपदेशस्येति । अप्राधान्येनाप्यलाश्रयणे स्थानिवत्त्वनिषेधस्तत्र

* चङि ६ । १ । ११ १—'अनित्यं द्विर्वचनम्' पा० । † १ । १ । ५९ वा० ३ । पृ० ४६२
२—'योज्यम्' पा० । ३—'सन्यङाश्रये' पा० ।
‡ ६ । १ । ९ वा० ४–७ § णो नः; धात्वादेः षः सः ६ । १ । ६५; ६४
¶ अत एकहल्मध्येऽनादेशादेर्लिटि ६ । ४ । १२०

समुदायस्य समुदाय आदेशस्तत्र संप्रमुग्धत्वात्प्रकृतिप्रत्ययस्य नष्टः स आदेशादिर्भवति ।

द्विःप्रयोगेऽपि[1] द्विर्वचने सति न दोषः । वक्ष्यति तत्र लिड्ग्रहणस्य प्रयोजनं 'लिटि य आदेशादिस्तदादेर्ने'ति‡ ।

इड्वचनं च यङ्लोपे ॥ १९ ॥

इट् च यङ्लोपे वक्तव्यः । बेभिदिता बेभिदितुम् । 'एकाच उपदेशेऽनुदात्तात्' [७।२।१०] इतीट्प्रतिषेधः प्राप्नोति । स्थाने पुनर्द्विर्वचने सति समुदायस्य समुदाय आदेशस्तत्र संप्रमुग्धत्वात् प्रकृतिप्रत्ययस्य नष्टः स भवति य एकाजुपदेशेऽनुदात्तः ।

द्विःप्रयोगेऽपि[1] द्विर्वचने न दोषः। एकाज्ग्रहणेनाङ्गं विशेषयिष्यामः—एकाचोऽङ्गादिति । ननु चैकैकमत्राङ्गम् ? समुदाये या वाक्यपरिसमाप्तिस्तयाङ्गसंज्ञा भविष्यति ।

प्र०—चात्रालाश्रयत्वात्स्थानिवत्त्वाभावः । लिटीति । नत्वसत्वयोरनैमित्तिकत्वाल्लिण्निमित्तत्वाभावः ।

बेभिदितेति । बेभिद्यशब्दात्तृच्, अल्लोपयलोपयोः कृतयोरिट्प्रतिषेधः प्राप्नोति । 'पूर्वस्मादपि विधौ स्थानिवद्भाव' इत्यनाश्रित्य चोद्यप्रतिसमाधाने । एकाचोऽङ्गादिति । उपदेशग्रहणेनानुदात्त एव विशेष्यते न त्वेकाजिति भावः । आवृत्तिसङ्ख्यया चैतद्द्व्यजङ्गं नैकाच् । ननु चैकैकमिति । एकमेव द्विरुच्यत इत्येकस्माद्यः प्रत्ययविधिः सोऽपरस्मादपीति द्वे अङ्गे

उ०—स्थापित इत्यर्थः । अशास्त्रीयत्वाच्चास्य तदभाव इत्यपि बोध्यम् । भाष्ये—संप्रमुग्धत्वात्प्रकृतिप्रत्ययस्येति । प्रकृतिज्ञानस्येत्यर्थः । अत एवाट्टिदित्यत्रेव 'संप्रमुग्धत्वात्प्रकृतिप्रत्ययसमुदायस्ये'ति अत्र नोक्तम् ।

भाष्ये—एकाच इति । बेभिदितेत्यत्र भिदेरेव द्विःप्रयोगादुपदेशे एकाच्त्वाच्च ततः परस्येण्निषेधप्रसङ्ग इत्यर्थः । एकाचोऽङ्गादिति । अङ्गत्वस्य विधानप्रतिबद्धतया एकाचो विहितादित्यर्थेन न दोष इत्याशयः । एवं चोपदेशग्रहणमनुदात्तांशे एव सम्बध्यते, न त्वेकाजंशेऽपि, बिभित्सतीत्यादौ विहितविशेषणेनैवादोषात्तदाह—न त्वेकाजितीति । भाष्यस्य यथाश्रुतत्वे हि अन्तरङ्गत्वात्सन्नन्ते द्वित्वे कृते तावेव सुप्तिङाविति वक्ष्यमाणरीत्या समुदायस्यैवाङ्गत्वेन बिभित्सतीत्यादावेकाचोऽङ्गात्परत्वाभावेनेडागमस्य दुर्वारत्वेनासङ्गतिः स्पष्टैव । उपदेशग्रहणस्यैकाज्विशेषणत्वे तु बेभिदितेत्यादौ दोषस्तदवस्थ एवेति बोध्यम् । ननु द्विःप्रयोगपक्षे उच्चारणभेदेन शब्दभेदे मानाभावात्कथमनेकाच्त्वमत आह—आवृत्तिसंख्यया चेति । भाष्ये—ननु चैकैकमपीति । समुदायोऽवयवश्चेत्यर्थः । अङ्गमिति । प्रत्ययविधानावधिरित्यर्थः । इदमेव ध्वनयितुं सिषेचेत्यत्र वक्ष्यति—एकैकस्मादप्यत्र सुप्तिङ्विधिरिति । न त्वेकैकमत्र पदमित्यर्थः । तेन हि एतस्य सर्वस्य तद्रीत्या व्याख्यानमिति ध्वनितम् । तदाह—एकमेवेति । एकस्मात्—समुदायात् । अपरस्मात्—अवयवात् । एवं चोत्तरभिद्येत्यस्याप्यङ्गत्वं, तस्यापि प्रत्ययविधानावधित्वात् । तत्राल्लोपयलोपयोरेकदेशविकृतन्यायेन

१—'चापि' पा० ।

‡ ६ । ४ । १२० वा० १ भाष्ये ।

कुत एतत् ? 'शास्त्राहानेः' । एवं हि शास्त्रमहीनं भवति ।

इड्दीर्घप्रतिषेधश्च ॥ २० ॥

इटो दीर्घत्वस्य च प्रतिषेधो वक्तव्यः । जरीगृहिता जरीगृहितुम् । 'ग्रहोऽलिटि दीर्घः' [ ७ । २ । ३७ ] इति दीर्घत्वं प्राप्नोति । स्थाने पुनर्द्विर्वचने [ सैति ] समुदायस्य समुदाय आदेशस्तत्र संप्रमुग्धत्वात्प्रकृतिप्रत्ययस्य नष्टो ग्रहिः ।

द्विःप्रयोगेऽपि[2] द्विर्वचने न दोषः । ग्रहिणाङ्गं विशेषयिष्यामः—ग्रहेरङ्गादिति । ननु चैकैकमप्यत्राङ्गम् ? समुदाये या वाक्यपरिसमाप्तिस्तयाङ्गसंज्ञा भविष्यति ।

प्र०—भवतः, तत्र परं यदेकाजङ्गं तदाश्रय इट्प्रतिषेधः प्राप्नोतीत्यर्थः । आवृत्तिसङ्ख्याश्रया चैकैकमिति वीप्सा । समुदाय इति । एकैवाङ्गसंज्ञा समुदायस्य न तु पृथगवयवयोः, समुदायस्य प्राधान्यात्प्रधाने कार्यसंप्रत्ययात्समुदायव्यवहारोऽप्यावृत्तिसङ्ख्याश्रयः ।

जरीगृहितेति । जरीगृह्यशब्दात्तृच् । ग्रहिणाङ्गमिति । अत्र तृचो जरीगृहित्यङ्ग

उ०—मिदित्यस्याप्यङ्गत्वम् । एवं चोपदेशेऽनुदात्तादेकदेशविकृतन्यायेन लोकदृष्टान्तमूलकेनैकाचो विहितत्वबुद्धिरपि तृचोऽस्त्येवेति इटः प्रतिषेधः स्यादेवेत्यर्थः ।

एकैवाङ्गसंज्ञेति । अयं भावः—'धातोस्तृज्भवती'त्यस्य धातुत्वावच्छिन्नात्तृज्भवतीत्यर्थः । तत्र तदवच्छिन्नं यद्यपि द्वयं—समुदायोऽवयवश्च, तथापि प्रधानसन्निधौ प्रधान एव कार्यप्रवृत्तेर्न्याय्यत्वेन प्रधानस्य समुदायस्यैव तद्विधानावधित्वं नावयवस्य । एवं हि शास्त्रमहीनं भवतीत्यस्य प्रधानन्यायेन हीनं न भवतीत्यर्थः । ननु क्रियावाचकत्वस्याभ्यासनैरर्थक्योक्त्या समुदाये एव पर्याप्तेर्धातुत्वमपि तत्रैवेति—अवयवविषयकवाक्यस्य वक्तुमशक्यतया 'समुदाये या वाक्यसमाप्ति'रित्यसङ्गतं, द्वयोः संभवे ह्येवं वक्तुं योग्यमिति चेन्न; उत्तरखण्डसाहित्यं विनाभ्यासमात्रादर्थप्रत्ययाभावेन तस्य नैरर्थक्यम् । उत्तरखण्डस्य तु प्रत्ययाव्यवहितप्राग्वर्तिनः केवलस्याप्यर्थबोधकताया दृष्टत्वेनार्थवत्त्वमेव । पेचतुरित्यादौ तदभावेऽप्युत्तरखण्डमात्रेणार्थबोधाच्च । यातेर्यङन्तात्क्विपि यातिरित्यादावियानित्यादाववशिष्टप्रत्ययादिव तत एवार्थबोध इति न तावताभ्यासस्यार्थवत्त्वं शङ्क्यमिति दिक् । न तु पृथगवयवयोरिति । एकोऽवयवशब्दस्तद्घटितसमुदायपरस्तेन पृथक् समुदायावयवयोरित्यर्थो न त्ववयवयोः पृथक् प्राप्तिरस्ति । अभ्यासस्य नैरर्थक्याद्धातुत्वाभावेन प्रत्ययविधानावधित्वाभावात्सत्त्वेऽपि तदादिग्रहणेन समुदायस्यैव प्राप्तिरिति यथाश्रुतासङ्गतिरिति बोध्यम् ।

जरीगृह्यशब्दादिति । तत्राल्लोपयलोपयोः कृतयोर्ग्रहेः पर इडिति दीर्घप्रसङ्ग इति भावः । भाष्ये—ग्रहिणाङ्गमिति । उक्तरीत्या ग्रहेरिति विहितविशेषणं, तृचो जरीगृह्—इत्यङ्गं न केवलो ग्रहिः । एकदेशविकृतन्यायेनापि जरीगृह्—इत्यस्यैवाङ्गत्वं न तु ग्रहेरिति भावः । ननु चैकैकमिति । उक्त आशयः । ननु द्विःप्रयोगे जरीगृहिर्ग्रहिरिव, एकदेशविकृतन्यायेन चाङ्गत्वमपीति दोषस्तदवस्थ एवेत्यत आह—विशेषयिष्याम-

१—क्वचिन्न । २—'चापि' पा० ।

कुत एतत् ? 'शास्त्राहानेः' । एवं हि शास्त्रमहीनं भवति ।

पदादिविधिप्रतिषेधश्च ॥ २१ ॥

पदादिलक्षणविधेः प्रतिषेधो वक्तव्यः । सिषेच सुष्वाप । 'सात्पदाद्योः' [ ८ । ३ । १११ ] इति षत्वप्रतिषेधः प्राप्नोति । स्थाने पुनर्द्विर्वचने सति न दोषः । समुदायस्य समुदाय आदेशस्तत्र संप्रमुग्धत्वात्प्रकृतिप्रत्ययस्य नष्टः स पदादिर्भवति ।

द्विःप्रयोगे चापि द्विर्वचने न दोषः । सुप्तिङ्भ्यां पदं विशेषयिष्यामः*—यस्मा-

प्र०—न तु ग्रहेः । विशेषणसामर्थ्याद्धि यथाश्रुतरूपाङ्गीकरणम् ॥ सिषेचेति । सिचेर्लिड्विहित इति तिङन्तं पदमिति तदादेरेव पदत्वात्पदादिः सकार इति षत्वप्रतिषेधप्रसङ्गः । प्रकृतिप्रत्ययस्येति । प्रत्ययो—ज्ञानम् । प्रकृतिविज्ञानस्येत्यर्थः । अथवा प्रकृतेः प्रत्ययस्य चेत्यर्थः ।

उ०—र्थ्याद्धीति । अङ्गस्य विभक्तिविपरिणामेन विशेषणसामर्थ्यादित्यर्थः । अन्यथाङ्गनिमित्तावयवस्येट इति षष्ठ्यैव व्याख्यायेतेति भावः । ग्रहेरत्र विषयेऽङ्गत्वाव्यभिचाराच्च ।

यथाश्रुतेति । सूत्रश्रुतानुपूर्वीग्रहेर्विहितस्येटो दीर्घ इत्यर्थ इति भावः । अत्र तु यङन्तादिड्विहितो न तु ग्रहेरिति तात्पर्यम् । अन्यथा नित्यत्वात्संप्रसारणे गृहीतमित्यस्यासिद्धिरिति एतद्भाष्यकैयटयोर्विहितविशेषणत्व एव तात्पर्यम् । एकाचोऽङ्गादितिवदस्यापि भाष्यस्य तथैव व्याख्याया उचितत्वाच्च । किञ्चासिद्धवत्सूत्रस्थभाष्यसंमतलावस्थायामडाटाविति पक्षेऽग्रहीष्टामित्यादौ दीर्घानापत्तिः । इदमेवाभिप्रेत्य कैयटेन 'यङ्लोपे चोक्त'मिति 'ग्रहोऽलिटी'तिसूत्रभाष्यस्थं प्रतीकमुपादायग्रहेर्विहितस्येत्येवं विहितविशेषणाद्यङ्लोपे दीर्घाभावासिद्धिरिति उक्तम् । भाष्यकृता तु अन्यत्रास्य दोषस्य सम्यक् परिहाराभिधानादनादरेण तद्वार्तिकं तदन्तद्विर्वचनादिति विवृतमिति चोक्तम् । अत एव जाहितमित्यादौ न दीर्घः । एवञ्च यङ्लुगन्ते यदि ग्रहेः प्रयोगोऽस्ति तदा ततः परस्येटो दीर्घो भवत्येव । अत एव स्थाने द्विर्वचनपक्षेण न फलभेदः । तत्पक्षे हि तत्र दीर्घः प्राप्नोत्येव, स्थानिवत्त्वेन ग्रहित्वात् । यङ्लुगुत्तरमेव तत्र द्वित्वप्रकृतेः, तदुत्तरं प्रत्ययप्रवृत्तेश्च, पूर्वापरभाष्यच्छायया तत्पक्षे ग्रहेरङ्गादित्यस्याभावलाभाच्च । अत एव स्थाने द्विर्वचनपक्षे एतद्दोषानुपन्यासाद्भगवतो न्यूनतेत्यपास्तम् ।

नन्वभ्यासादुत्तरसकारस्य न पदादित्वमत आह—सिचेरिति । तदादेरेवेति । उत्तरखण्डादेरेवेत्यर्थः । नुन नात्र प्रकृतिप्रत्ययसंमोहः, किन्तु प्रकृतेरेवेत्यत आह—प्रत्ययो ज्ञानमिति । प्रत्ययस्य चेति । प्रकृतेस्तत्त्वेनाज्ञाने तन्निरूपितत्वात्प्रत्ययत्वाज्ञाने प्रत्ययस्यापि संमोह इत्यर्थः ।

भाष्ये—सुप्तिङ्भ्यां पदमिति । पदसंज्ञासूत्रे पदं—पदसंज्ञोद्देश्यं सुबन्तं तिङन्तञ्च । तत्सुप्तिङ्भ्यां

* सुप्तिङन्तं पदम् १ । ४ । १४ 'विशेषयिष्यामः—सुप्तिङन्तं पदम्—यस्मात्' पा० ।

त्सुप्तिङ्विधिस्तदादि सुबन्तं तिङन्तं च । ननु चैकैकस्मादप्यत्र[1] सुप्तिङ्विधिः ? समुदाये या वाक्यपरिसमाप्तिस्तया पदसंज्ञा भविष्यति । कुत एतत् ? 'शास्त्राहानेः' । एवं हि शास्त्रमहीनं भवति ।

**तावेव सुप्तिङौ यौ ततः परौ सैव च प्रकृतिराद्या ।**
**आदिग्रहणं प्रकृतं[2]† समुदायपदत्वमेतेन ॥ १ ॥**

प्र०—तावेवेति—परिहारान्तरम् । उच्चारणक्रियाया एव द्वित्वं न तूच्चार्यमाणस्य शब्दस्य, ततश्चैकस्मादेव प्रत्ययविधिर्न तु द्वाभ्यामित्येकैवाङ्गसंज्ञा पदसंज्ञा चेति नास्ति दोषः । आदिग्रहणं चेति । 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणं भवती'त्यत्र । समुदायपदत्वमिति । सिषेचशब्दस्य पदसंज्ञा न तु सेचशब्दस्य तदवयवस्य । नन्वेवं बेभिदितेति स एवैकाज्झातुरितीट्प्रतिषेधः प्राप्नोति । नैष दोषः । उच्चारणभेदाद्विरोधिसङ्ख्याप्रादुर्भावात् पूर्वसङ्ख्याकृतव्यपदेशनिवर्तनात् । तथा च 'गिरिणे'त्यादौ 'सावेकाच' इति विभक्तेरुदात्तत्वं न भवति । तदत्रावृत्तिभेदाद्रूपद्वयमाश्रित्य 'समुदाये वाक्यपरिसमाप्ति'रिति परिहार उक्तः । रूपभेदानङ्गीकरणेन तु 'तावेव सुप्तिङा'विति द्वितीयः परिहारः ॥ १ ॥

उ०—यस्माद्विधिस्तदादित्वेन विशेषयिष्याम इत्यर्थस्तदाह–सुप्तिङन्तं पदं यस्मादित्यादि । एकैकस्मादिति । समुदायादवयवाच्चेत्यर्थः । समुदाये येति । लिटीत्यस्य विषयसप्तमीत्वेन पूर्वं द्वित्वे ततः समुदायाल्लिडित्याशयः । समुदायस्य धातुत्वं तु धातोरेव द्विःप्रयोगेण भेदाग्रहादिति बोध्यम् । इत एव वास्चेराह—तावेवेति । तदाह—परिहारान्तरमिति । न त्वयं पूर्वोक्तार्थसङ्ग्रहश्लोक इति भ्रमः कार्य इति भावः । 'लिङुत्पत्त्यनन्तरमेव द्वित्व'मिति पक्षेऽपि दूषणोद्धार इति तात्पर्यम् । पूर्वोक्तार्थोपपादनपरमेवैतद्भाष्यम् । 'ननु चैकैकस्मादप्यत्रे'त्यस्योभयोरपि तत्त्वप्रत्यभिज्ञानादुभाभ्यामपि तिङ्विधिरिति प्रत्यभिज्ञेत्यर्थ इति परे । एकैवेति । उच्चारणक्रियाद्वयविशिष्टस्येत्यर्थः । उच्चारणभेदेन शब्दभेदाभाव इति भावः । एकैवाङ्गसंज्ञेत्यपि प्रकृतविषयमेव, बेभिदितेत्यत्र कृतद्वित्वाद्यङन्तादुत्पत्त्या नास्य परिहारस्य विषयः । स एवेति । 'यलोपाल्लोपयोः कृतयो'रिति शेषः । उच्चारणभेदादिति । उत्तरा सङ्ख्या पूर्वां सङ्ख्यां निवर्तयतीति भावः । तदत्रेति । सिषेचेत्यत्र । अयमत्र भाष्याक्षरार्थः—यौ ततो विधानावधेः परौ तावेमौ सुप्तिङौ, यतो विहितौ सा प्रकृतिराद्यैव न द्वितीयेत्यर्थः । 'आगन्तूनामन्ते निवेश' इति न्यायाद्द्वितीयोच्चारणस्यैव विधेयत्वाद्द्वितीयोच्चारणस्य प्रत्ययोत्पत्तिकालेऽभावात् । आद्या—आद्योच्चारणविषया । कृते तु द्वित्वे द्वितीयोच्चारणेनार्थबोधादभ्यासस्य नैरर्थक्यव्यवहारोऽपि । नन्वेवमपि द्वितीयोच्चारणविषयतद्रूपेण व्यवधानात्प्रत्ययपरत्वाभाव आद्यस्येत्यत आह—आदिग्रहणञ्चेति । समुदायपदत्वमिति । उच्चारणक्रियाद्वयविषयत्वेन समुदायव्यवहारः ॥ १ ॥

---

१—'अप्यत्र' क्वचिन्न ।　　२—'च कृतं' पा० ।

† यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्; सुप्तिङन्तं पदम् १ । ४ । १३; १४

# अजादेर्द्वितीयस्य ॥ ६ । १ । २ ॥

## द्वितीयस्येत्यवचनमजादेरिति कर्मधारयात्पञ्चमी ॥ १ ॥

द्वितीयस्येति शक्यमवक्तुम् । कथम् ? अजादेरिति नैषा बहुव्रीहेः षष्ठी—अच् आदिर्यस्य सोयमजादिः, अजादेरिति । किं तर्हि ? कर्मधारयात्पञ्चमी—अच् आदिः अजादिः, अजादेः परस्येति । तत्रान्तरेण द्वितीयग्रहणं द्वितीयस्यैव भविष्यति‡ ।

## [1]द्वितीयद्विर्वचने प्रथमनिवृत्तिः प्राप्तत्वात् ॥ २ ॥

द्वितीयद्विर्वचने प्रथमस्य निवृत्तिर्वक्तव्या । अटिटिषति अशिशिषतीति । किं कारणम् ? 'प्राप्तत्वात्' । प्राप्नोति 'एकाचो द्वे प्रथमस्य' [ ६ । १ । १ ] इति ।

ननु च द्वितीयद्विर्वचनं प्रथमद्विर्वचनं बाधिष्यते । कथमन्यस्योच्यमानमन्यस्य

---

प्र०—अजादेः । द्वितीयस्येति शक्यमवक्तुमिति । अजादेरिति बहुव्रीहिपक्षे सामर्थ्यादप्रथमार्थे प्रारम्भे विज्ञायमाने तृतीयानामप्येकाचां द्विर्वचनप्रसङ्गाद्द्वितीयस्येति वक्तव्यम् । कर्मधारयपक्षे त्वजादेरिति पञ्चमीनिर्देशा'त्तस्मादित्युत्तरस्ये'ति परिभाषोपस्थानादनन्तरस्यैव कार्येण भाव्यं न व्यवहितस्येति नार्थो द्वितीयग्रहणेन । तत्र व्याख्यानात्स्वपदार्थप्रधानत्वादन्तरङ्गत्वाद्वा कर्मधारय एवाश्रयितव्य इति भावः ।

प्राप्तत्वादिति । यद्यपि सत्यामेव प्राप्तौ निवृत्तिरुच्यते न त्वसत्यां, तथापि विशिष्टा प्राप्तिरिह हेतुत्वेन विवक्षिता । प्राप्तेर्विघातकाभावादित्यर्थः । ननु चेति । येननाप्राप्तिन्यायात् । कथमन्यस्येति । विरोधाद्बाध्यबाधकभावं मन्यते । यथा काणोः । इह च विरोधाभावः ।

---

उ०—अजादेर्द्वि । ननु बहुव्रीहित्वपक्षेऽपि प्रथमस्य पूर्वेण सिद्धतया सामर्थ्येन द्वितीयस्यैव भविष्यतीति तत्रापि द्वितीयग्रहणं व्यर्थमत आह—अजादेरितीति । यद्यपि 'ईर्ष्यतेस्तृतीयस्ये'त्यस्य नियमार्थत्वेनापि तृतीयानां द्वित्वं वारयितुं शक्यं तथापि तस्य वार्तिकत्वाददोषः । 'न न्द्राः संयोगादय' इति सूत्रेऽनुवृत्तस्याजादेरित्यस्येन्दिद्रीयिषतीत्यादौ दस्य द्वित्वनिषेधाभावाय पञ्चम्यन्तत्वकर्मधारयपरत्वावश्यकत्वादिति भावस्तदाह—तत्र व्याख्यानादिति । 'तत्पुरुषः समानाधिकरण' इत्यादौ कर्मधारययोग्यपदानां समासाभावस्य सूत्रकारशैलीसिद्धत्वेऽपीह व्याख्यानात्कर्मधारय इति भावः । समासद्वयसम्भवे न्याय्योऽव्ययमित्याह—अन्तरङ्गत्वाद्वेति । तद्बीजं स्वपदार्थप्रधानत्वम् ।

यद्यपीति । एवञ्च प्राप्तत्वादिति हेतुरसङ्गत इति भावः । विशिष्टेति । निवर्तकान्तराभावविशिष्टेत्यर्थः । यथा काणोरिति । परदेशस्यैकेनाक्रान्तत्वात्तदैव द्वितीयस्य परत्वायोगात्तत्र विरोध इति भावः ।

---

‡ तस्मादित्युत्तरस्य १ । १ । ६७

[1]—'तत्र द्वितीय' पा० ।

बाधकं स्यात् ? असति खल्वपि सम्भवे बाधनं भवति, अस्ति च सम्भवो यदुभयं स्यात् ।

न वा प्रथमविज्ञाने हि द्वितीयाप्राप्तिरद्वितीयत्वात् ॥ ३ ॥

न वा वक्तव्यम् । किं कारणम् ? प्रथमविज्ञाने हि सति द्वितीयस्याप्राप्तिः स्यात् । किं कारणम् ? 'अद्वितीयत्वात्' । न हीदानीं प्रथमद्विर्वचने कृते द्वितीयो द्वितीयो भवति । कस्तर्हि ? तृतीयः । तद्यथा— द्वयोरासीनयोस्तृतीय उपजायमाने न द्वितीयो द्वितीयो भवति । कस्तर्हि ? तृतीयः ॥ न हि किंचिदुच्यतेऽकृते द्विर्वचने यो द्वितीयस्तस्य भवितव्यमिति । किं तर्हि ? कृते द्विर्वचने यो द्वितीयस्तस्य द्विर्वचनं भविष्यति ।

अनारम्भसममेवं स्यात् । अटः प्रथमस्य द्विर्वचनं स्यात्, हलादिशेषः*,

प्र०—अविरोधे हि समुच्चयो दृश्यते—यथा कृत्कृत्यप्रत्ययसंज्ञानाम् । भिन्नफलत्वात् संज्ञानां समुच्चय इति चेदिहाप्यस्त्येव फलभेदः । एकेन प्रथमस्य द्विर्वचनविधाना'दजादेर्द्वितीयस्ये'त्यनेन तु द्वितीयस्य ।

न वेति । अनेनासम्भवः प्रदर्श्यते । यस्य द्वितीयस्यैकाचो द्विर्वचनं विधेयं तस्य प्रथमद्विर्वचने कृतेऽद्वितीयत्वाद्द्वितीयद्विर्वचनं न प्राप्नोतीत्यर्थः ॥ ननु यदि नियोगतः प्राक्प्रथमद्विर्वचनं स्यात्ततोऽयं विरोधः स्याद्यदा तु पूर्वं द्वितीयद्विर्वचनं तदा विरोधाभावात्स्यादेव प्रथमद्विर्वचनम् । नैतदस्ति । नित्यत्वात्प्राथम्यात्क्रमव्यतिक्रमे हेत्वभावात्पूर्वं प्रथमद्विर्वचनं तत्र कृतेऽद्वितीयत्वाद्द्वितीयद्विर्वचनाप्रसङ्ग इत्यनवकाशत्वाद्द्वितीयद्विर्वचनेन प्रथमद्विर्वचनं बाध्यते । तद्यथेति । यदा द्वयोः पुरस्तान्मध्ये वा तृतीय उपजायते[1] तदायं दृष्टान्तो यदा तु परत उपजायते तदा द्वितीयो द्वितीय एव भवति । न हि किंचिदिति । द्वितीयत्वनिर्देशाद्विशेषानुपादानात् । सामर्थ्यादत्र विशेष आश्रीयत इति मत्वाह—अनारम्भसममिति । अटि स इति स्थिते प्रथमद्विर्वचनम् अट्-अट्, 'हलादिः शेष' इति टकारस्य निवृत्तिः । द्वितीयद्विर्वचनमट्-अट् । ततो हलादिः शेषः । तत्र द्वयोस्त्रयाणां वाकाराणां पररूपे विशेषाभावाद्द्वितीयद्विर्वचनमनर्थकं

उ०—भिन्नफलत्वादिति । समानफलकत्वे हि बाध्यबाधकभाव इत्यर्थः ।

नन्वद्वितीयत्वादित्वादित्यसिद्धो हेतुः । कृतेऽपि प्रथमद्विर्वचने द्वितीयस्यैकाचः सत्त्वादत आह—यस्येति । अकृतद्विर्वचनकालिकी द्वितीया व्यक्तिराश्रीयत इति भावः । प्राथम्यादित्यस्योपपादकं—क्रमव्यतिक्रमे हेत्वभावादिति । अनवकाशत्वादिति । तद्बाधं विना चारितार्थ्याभावादिति भावः । द्वितीयत्वनिर्देशादिति । तत्र विनिगमनाविरहात्सर्वद्वितीयव्यक्तिग्रहणमिति भावः । विशेष इति । द्वितीयविशेष इत्यर्थः । भाष्ये—कृते द्विर्वचने इति । अनभ्यासस्येत्येतत्तत्पुरुषेणैकाज्विशेषणमिति भावः । पररूपे इति । 'अत आदे'रिति तु न, तस्य लिट्येव प्रवृत्तेः । द्वयोस्त्रयाणामिति । पररूपोत्तरं द्वितीयद्वित्वे द्वयोरन्यथा त्रयाणामि-

1—'उपजायते' पा० ।

* हलादिः शेषः ७ । ४ । ६०

द्वितीयस्य द्विर्वचनम्, हलादिशेषः[1]। त्रयाणामकाराणां पररूपत्वे† ऽटिषतीत्येवं[2] रूपं स्यात् ॥ नानारम्भसमम्। अटेः प्रथमस्य द्विर्वचनं, हलादिशेषः, इत्वम्‡, द्वितीयस्य द्विर्वचनं, हलादिशेषः, इत्वम्; द्वयोरिकारयोः+ सवर्णदीर्घत्वमभ्यासस्या-

प्र०—स्यादित्यर्थः। 'हलादिः शेषो द्वितीयद्विर्वचन'मित्ययं क्रमः कथं लभ्यते, विपरीतक्रमः कस्मान्न भवति ? उच्यते,—नित्यत्वात्पूर्वं हलादि शेषो भवति। द्वितीयद्विर्वचनं तु शब्दान्तरप्राप्त्या-नित्यम्। तद्धि कृते हलादिशेषेऽटः प्राप्नोति। अकृते तु ट-ट्शब्दस्य। अन्तरङ्गत्वात्त्वतो गुण इति पररूपं 'सन्यत' इतीत्वस्य बाधकं मन्यते। इत्वं हि सनमभ्यासं चापेक्षत इति बहिरङ्गम्। 'प्रागभ्यासविकारेभ्योऽङ्गाधिकार' इति पक्षे इत्वमाङ्गं न भवतीति 'वार्णादाङ्गं बलव'दित्यपि नास्ति। सत्यपि वेत्वस्याङ्गत्वे नानाश्रयत्वादाङ्गवार्णयोरत्र परिभाषानुपस्थानमिति भावः। तस्मात्सामर्थ्यादकृते प्रथमद्विर्वचने यो द्वितीयस्तस्य द्विर्वचनेन भाव्यम्। स च प्रथमद्विर्वचने कृते द्वितीयो न भवतीति सामर्थ्यात्प्रथमद्विर्वचनं द्वितीयद्विर्वचनेन बाध्यते।

कृतेऽपि प्रथमद्विर्वचने यो द्वितीयस्तस्य द्विर्वचनं नानर्थकमिति मत्वाह—नानारम्भसम-मिति। इत्वमिति। आसप्तमपरिसमाप्तेरङ्गाधिकारादाङ्गमित्वम्। सामान्येन च वार्णादाङ्गं बलवदित्याश्रीयते, न समानाश्रयाङ्गवार्णविषयमेवेति इत्वमेव प्रवर्तते न पररूपम्। तत्र कृते द्वितीयद्विर्वचनं प्राप्नो'त्यभ्यासस्यासवर्ण' इतीयङादेशश्च। तत्र नित्यत्वाद्द्वितीयद्विर्वचनम्। इयङादेशो ह्यनित्यः। कृते द्वितीयद्विर्वचने नित्यत्वादित्वे चासवर्ण इति वचनादियङोऽप्रसङ्गात्। ननु परस्य कृतेऽपीत्वे तस्य स्थानिवद्भावात्पूर्वस्येयङ् प्राप्नोति। नैष दोषः। 'सवर्णे न भवती'ति प्रसज्यप्रतिषेध आश्रीयते। सवर्णे च यो विधिः स सवर्णस्य विधिर्भवतीति सवर्णविधौ स्थानिव-त्प्रतिषेधादियङोऽप्रसङ्गात्।

द्वयोरिकारयोरिति। अथ परस्येयङादेशः कस्मान्न भवति ? अन्तरङ्गत्वात्पूर्वमेकादेशं मन्यते। एकादेशस्य त्वभ्यासह्रस्वत्वं विशेषाभावान्नोक्तम् ॥ इयटिषतीति। अस्यामपि

उ०—ति भावः। विपरीतक्रमः कस्मादिति। एवं च टट्शब्दस्य द्वित्वे द्वितीयद्विर्वचनमर्थवदित्यर्थः। ननु कृते प्रथमद्विर्वचने हलादिः शेषे च 'सन्यत' इति इत्वं कस्मान्नेत्यत आह—अन्तरङ्गत्वादिति। इत्वं हीति। पररूपं तु वार्णत्वादन्तरङ्गमिति भावः। सत्यपि चेति। 'आसप्तमाध्यायसमाप्तेरङ्गाधिकार' इति पक्षस्याकरे स्थितत्वादिति भावः। ननु इत्वोत्तरं द्वितीयद्विर्वचनात्प्राक् 'अभ्यासस्यासवर्णे' इति इयङ् प्राप्नोतीत्यत आह—तत्र कृत इति। नैष दोष इति। वस्तुतस्तु 'अभ्यासस्यासवर्णे' इति सूत्रारम्भसामर्थ्यात्तद्विषये स्थानिव-त्वाप्रवृत्तिरित्याह्निकशेषे निरूपयिष्यामः। मूलोक्तसमाधानं तु चिन्त्यम्। 'पूर्वत्रासिद्धे न स्थानिव'दित्यवष्टभ्य भाष्ये सवर्णग्रहणस्य प्रत्याख्यानादित्याहुः।

मन्यत इति। वार्णादाङ्गमिति समानाश्रयविषयमिति मन्यते इति भावः।

१—'हलादिः शेषः' पा०। † अतो गुणे ६।१।९७

२—'तीत्येव रूपं' पा०। ‡ सन्यतः ७।४।७९ + अकः सवर्णे दीर्घः ६।१।१०१

सवर्णे' [ ६ । ४ । ७८ ] इतीयङादेशः, इयटिषतीत्येतद्रूपं यथा स्यात्, ओणेश्चोवोणिषतीति ॥ नानिष्टार्था शास्त्रप्रवृत्तिर्भवितुमर्हति ।

यथा वादिविकारेऽलोन्त्यविकाराभावः ॥ ४ ॥

यथा वादिविधावलोऽन्त्यविधिर्न भवत्येवं द्वितीयद्विर्वचने प्रथमद्विर्वचनं न भविष्यति* ॥ विषम उपन्यासः । नाप्राप्तेऽलोन्त्यविधावादिविधिरारभ्यते स तस्य बाधको भविष्यति । इदमप्येवंजातीयकम् । नाप्राप्ते प्रथमद्विर्वचने द्वितीयद्विर्वचनमारभ्यते तद्बाधकं भविष्यति ॥ यदप्युच्यतेऽसति खल्वपि सम्भवे बाधनं भवति, अस्ति च सम्भवो यदुभयं स्यादिति नैतदस्ति । सत्यपि संभवे बाधनं भवति ।

प्र०—प्रक्रियायां नास्ति द्वितीयद्विर्वचने विशेषः, अकृतेऽपि तस्मिन्नेतद्रूपलाभात् । प्रथमद्विर्वचने कृते हलादिःशेषः, इत्वमियङिति कार्यप्रवर्तनात् । अत एवान्येषां ग्रन्थः—'इत्वं परस्येयङादेशो द्वयोरिकारयोः सवर्णदीर्घता ईयटिषतीत्येतद्रूपं यथा स्या'दिति । युक्त एवायं ग्रन्थः । वार्णादाङ्गं बलवदिति परस्येकारस्येयङ भाव्यं न त्वेकादेशेन । तस्मिन्कृते एकादेशस्तस्य त्वन्तवद्भावाद्ध्रस्वत्वं न भवति । नाभ्यासादीनां ह्रस्वत्वे इत्यन्तादिवद्भावप्रतिषेधात् । ओणेश्चेति । अत्रापि 'ऊवोणिषती'ति पाठेन भाव्यम् । उवोणिषतीत्येतस्याकृते द्वितीयद्विर्वचने सिद्धत्वात् । नानिष्टार्थेति । 'द्वितीयस्येति व्यक्तिराश्रीयते न जातिः । या चाकृते प्रथमद्विर्वचने द्वितीयव्यक्तिः सा कृते तस्मिन्द्वितीया न भवतीति विरोधाद्द्वितीयद्विर्वचनेन प्रथमद्विर्वचनं बाध्यते ।

यथा वेति । भवतु द्वितीयस्येति जातिनिर्देशस्तथापि सामान्यविहितस्य विशेषविहितमसत्यपि विरोधे बाधकं भवति । यथा द्वीपमित्यादा'वादेः परस्ये'त्यादेर्विधीयमानमपीत्वमन्त्यस्य न भवत्येवमिहापि द्वितीयद्विर्वचनं विधीयमानं प्रथमस्य न भवति । ननु चाप इत्येका षष्ठी 'आदेः परस्ये'त्यादिमलमनुसंहृतेति कुतोऽलोन्त्यस्य प्रसङ्गः ? इह तु प्रथमस्येति द्वितीयस्येति

उ०—विशेषाभावादिति । पर्जन्यवत्प्रवृत्त्या पूर्वं प्रकृतेर्लक्ष्ये लक्षणस्येति न्यायेन न दोष इत्यन्ये । वार्णादिति । समानाश्रय एवैतत्प्रवृत्तिरिति तु निर्मूलमिति भावः । पाठेनेति । ससन्धिकार्यपाठे छेदेनेति बोध्यम् । व्यक्तिरिति । व्यक्तिविशेष इत्यर्थः । न जातिरिति । व्यक्तिसामान्यमित्यर्थः । तदाह—या चाकृते इति । प्रथमस्य तादृशस्यैव ग्रहणेन तत्साहचर्यात्तदपेक्षत्वाच्च द्वितीयत्वस्य द्वितीयस्यापि तादृशस्यैव ग्रहणमिति भावः ।

ननु प्रमाणस्य प्रयोजनानुवर्तित्वाभावान्नानिष्टार्थेत्ययुक्तमत आह-भाष्ये—यथा वेति । तद्व्याचष्टे—भवत्विति । जातिनिर्देश इति । मा भूद् व्यक्तिविशेषनिर्देश इत्यर्थः । असत्यपि विरोध इति । यथा दधिदानं तक्रदानेन । धातुरूप उभयोरप्येको विषयः । नन्वोदनसेकाख्यफलाभेदात्तत्र बाधेऽपि रूपविशेषाख्यफलभेदादत्र कथं बाध इति चेन्न; दधितक्रजन्यविजातीयतृप्तेस्तत्रापि भेदाद्बाधानापत्तेः । अत्राप्यर्थाभिधानाख्य-

* अलोऽन्त्यस्य; आदेः परस्य १ । १ । ५२; ५४

तद्यथा— दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्यायेति सत्यपि दधिदानस्य संभवे तक्रदानं निवर्तकं भवति । एवमिहापि सत्यपि संभवे प्रथमद्विर्वचनस्य द्वितीयद्विर्वचनं बाधिष्यते ।

तत्र पूर्वस्याचो निवृत्तौ व्यञ्जनस्यानिवृत्तिर्वक्तव्या । अटिटिषतीति । यथैवाचो निवृत्तिर्भवत्येवं व्यञ्जनस्यापि प्राप्नोति ।

**तत्र पूर्वस्याचो निवृत्तौ व्यञ्जनानिवृत्तिरशासनात्पूर्वस्य ॥ ५ ॥**

तत्र पूर्वस्याचो निवृत्तौ व्यञ्जनस्यानिवृत्तिः सिद्धा । कुतः ? 'अशासनात्पूर्वस्य' । नेह वयं पूर्वस्य प्रतिषेधं शिष्मः । किं तर्हि ? द्वितीयस्य द्विर्वचनमारभामहे । व्यञ्जनानि पुनर्नटभार्यावद्भवन्ति । तद्यथा— नटानां स्त्रियो रङ्गं गता यो यः पृच्छति 'कस्य यूयं' 'कस्य यूय'मिति तं तं 'तव' 'तवे'त्याहुः । एवं व्यञ्जनान्यपि यस्य यस्याचः कार्यमुच्यते तं तं भजन्ते ।

प्र०—च षष्ठीद्वयसंभवादुभयोः प्रसङ्गः । नैतदस्ति । 'अप' इत्येकापि षष्ठी वचनद्वयप्रामाण्यादाद्यन्तावुपसंश्लियेत,–अप आद्यन्तयोरीत्त्वं भवतीति । एकस्माद्धि ग्रहणकवाक्याल्लक्ष्यसंस्कारकमनेकं प्रक्रियावाक्यमुपप्लवते । यथैवाचो निवृत्तिरिति । यथाभूतस्य प्रथमस्यैकाचो द्विर्वचनं प्राप्तं तथाभूतस्य द्वितीयद्विर्वचनेन बाध्यं, सव्यञ्जनस्य च प्राप्तमिति व्यञ्जनानामपि द्विर्वचनबाधप्रसङ्ग इत्यर्थः ।

अशासनात्पूर्वस्येति । अप्राप्त्यनुमानं बाधो न हि प्रमाणेन प्राप्तं बाधितुं शक्यते, प्रमाणत्वाविशेषात्, तस्मात्—अजादिधातुद्वितीयद्विर्वचनविषये प्रथमद्विर्वचनं न विहितं न प्रतिषिद्धम् । नटभार्यावच्च व्यञ्जनानि भवन्तीति द्वितीयैकाजन्तर्भावात्तानि द्विरुच्यन्त इत्यर्थः ।

उ०—फलस्याभेदाच्च । अप आद्यन्तयोरिति । एकापि षष्ठी तन्त्रादिन्यायाश्रयेण संबन्धिभेदाद्भिद्यतेऽप आदेरीत्त्वं भवति, अपोऽन्त्यस्य चेतीति भावस्तदाह—एकस्माद्धीति । एवं च कृते प्रथमद्विर्वचने द्वितीयद्विर्वचनस्य चारितार्थ्येऽपि यत्र यत्र द्वितीयद्विर्वचनप्राप्तिस्तत्रावश्यं प्रथमद्विर्वचनप्राप्तेर्येन नाप्राप्तिन्यायेन बाधः, यथा आदेरित्यनेनान्त्यस्येत्यस्य । अन्यथापस्यादेरपीत्त्वविधानेनादेरित्यस्य चारितार्थ्येनान्त्यांशबाधकत्वं न स्यादिति तात्पर्यम् । नन्वेकाच इत्युक्त्याचो विधानेन तस्य तन्निवृत्तावपि व्यञ्जनस्य तन्निवृत्तौ मानाभावोऽत आह—यथाभूतस्येति । 'एकाच' इति बहुव्रीहिरिति भावः ।

भाष्ये—अशासनात्पूर्वस्येति । पूर्वस्य प्रतिषेधाशासनादित्यर्थः । अप्राप्त्यनुमानमिति । द्वितीयैकाच्सहिताजादिधात्वातिरिक्तविषयमेकाच इतीति भावः । न प्रतिषिद्धमिति । शब्दतः प्रतिषेधे हि तथा शङ्कितुमपि शक्येतेत्यर्थः ।

१—अस्मात्पूर्वं 'तत्र पूर्वस्याचो निवृत्तौ व्यञ्जनानिवृत्तिः' इति वार्तिकं क्वचिद् दृश्यते ।

न्द्रादिप्रतिषेधाच्च ॥ ६ ॥

यदयं 'न न्द्राः संयोगादयः' [ ६ । १ । ३ ] इति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यः 'पूर्वनिवृत्तौ व्यञ्जनस्यानिवृत्ति'रिति ।

तत्र द्वितीयाभावे प्रथमाद्द्विर्वचनं प्रतिषिद्धत्वात् ॥ ७ ॥

तत्र द्वितीयस्यैकाचोऽभावे प्रथमस्य द्विर्वचनं न प्राप्नोति । आटतुः आटुः । किं कारणम् ? 'प्रतिषिद्धत्वात्' । 'अजादेर्द्वितीयस्ये'ति प्रतिषेधात् ॥ नैष दोषः । 'सति तस्मिन्प्रतिषेधः' । सति द्वितीयद्विर्वचने प्रथमस्य प्रतिषेधः ।

प्र०—न्यायसिद्धेऽर्थे लिङ्गदर्शनमाह—न्द्रादिप्रतिषेधाच्चेति । न्द्राश्च ते आदयस्तेषां द्विर्वचनप्रतिषेधादन्यानि द्वितीयेनाचा सह द्विरुच्यन्ते ।

तत्र द्वितीयाभाव इति । इहाजादेरित्यजादिसामान्यनिर्देशात्तत्र द्वितीयद्विर्वचमारभ्यमाणं प्रथमद्विर्वचनस्य बाधकमिति यस्यामप्यजादिव्यक्तौ द्वितीयाभावाद्द्वितीयद्विर्वचनाभावस्तस्यामपि प्रथमद्विर्वचनाप्रसङ्गः । अटिटिषतीत्यादावजाद्याकृतौ विधीयमानं द्वितीयद्विर्वचनमाटतुरित्यादावपि प्रथमद्विर्वचनं बाधेतेत्यर्थः । अप्राप्तिरेवात्र प्रतिषेधत्वेन विवक्षिता ॥ सति तस्मिन्निति । अजादेरिति व्यक्तिनिर्देशो न त्वाकृतिनिर्देशः । अतो नायमपवादोऽजादिमात्रनिबन्धनः, द्वितीयस्यैकाचः संभवमभिसमीक्ष्य प्रवर्तते । यत्रेदानीं द्वितीयो नास्ति तत्रानुपजातनिमित्तोऽपवाद एव न प्रवर्तत इति प्रथमस्यैकाचो द्विर्वचनमुत्सर्गः प्रवर्तत एव । तेन यस्यामेवाजादिव्यक्तौ द्वितीयद्विर्वचनं प्रवर्तते तस्यामेव प्रथमद्विर्वचनं बाध्यते नान्यस्यामित्यर्थः । जात्युपलक्षिता

उ०—ननु न्द्रादीत्यत्र नदराणां ग्रहणादादिशब्दार्थाप्रसिद्धिरत आह—न्द्राश्च ते आदयश्चेति ।

नन्वाटतुरित्यादौ द्वितीयद्विर्वचनाप्रवृत्तेः कथं प्रथमस्य तद्बाध इत्याह—इहाजादेरिति । जात्युद्देशेन विहितस्य जात्युद्देशेनैव तद्बाधकत्वं, यथा हलादिः शेषे इति भावः । अजादिसामान्येति । 'द्वितीयस्ये'ति करणात्सूत्रकृतोऽजादिपदे बहुव्रीहिरेव संमत इति भावः । व्यपदेशिवद्भावेन द्वितीयत्वादजादेरित्येवात्र द्वित्वमिति तु न वाच्यं, द्वितीयस्येत्युपादानात्प्रथमद्वितीययोः सत्तायामेवाजादेरित्यस्य प्रवृत्तेः । ननु नानेन प्रतिषेधः क्रियते इति 'प्रतिषिद्धत्वा'दित्ययुक्तमत आह—अप्राप्तिरेवेति । ननु व्यक्तिनिर्देशे कस्यांचिद्व्यक्तावेव शास्त्रं प्रवर्तेतेति शास्त्रस्य व्यक्त्यन्तरे प्रवृत्तिर्न स्यादत आह—जात्युपलक्षितेति । जात्युपलक्षितसर्वव्यक्तिविषयकत्वाच्छास्त्रस्य न दोष इति भावः । ननु जातेः प्राधान्यं नाम न विशेष्यत्वं, तस्यां द्विरुच्चारणान्वयासंभवात् । किन्तु जातिगतामेकसङ्ख्यां व्यक्तिष्वारोप्य प्रयोग इत्येव, तेन सकलव्यक्तिसङ्ग्रहसिद्धिः । किं च तज्जात्युपलक्षितव्यक्तित्वमटोऽप्यस्त्येव । एवञ्च कथमेतदिति चेन्न; द्वितीयैकाच्सत्तासमानाधिकरणाजादित्वजातेराश्रयत्वं न तु तदसमानाधिकरणाया अपीति तात्पर्यात् । हलादिः शेषे त्वादिहल्सत्तासमानाधिकरणाभ्यासत्ववत्येव नेतरनिवृत्तिः शेषपदलभ्या किन्त्वभ्यासत्ववत्येवेति । अत्र च लक्ष्यानुसारिव्याख्यानमेव प्रमाणमिति बोध्यम् ।

सति तस्मिन्प्रतिषेध इति चेद्धलादिशेषे दोषः ॥ ८ ॥

सति तस्मिन्प्रतिषेध इति चेद्धलादिशेषे[1]† दोषो भवति । हलादिशेषे सत्याद्ये हल्यनाद्यस्य लोपः स्यात् । इहैव स्यात्–पपाच [2]पपाठेति । इह न स्यात्–आटतुः आटुरिति ।

लोकवद्धलादिशेषे ॥ ९ ॥

लोकवद्धलादिशेषे सिद्धम् । तद्यथा– लोक ईश्वर[3] आज्ञापयति 'ग्रामाद्ग्रामान्मनुष्या आनीयन्तां [4]प्रागाङ्गं [5]ग्रामेभ्यो ब्राह्मणा आनीयन्ता'मिति । येषु तत्र ग्रामेषु ब्राह्मणा न सन्ति न तर्हीदानीं ततोऽन्यस्यानयनं भवति । यथा तत्र क्वचिदपि ब्राह्मणस्य सत्ता [6]सर्वत्राब्राह्मणस्य निवर्तिका भवत्येवमिहापि क्वचिदपि हलाद्यः सन् सर्वस्यानाद्यस्य हलो निवर्तको भवति ।

क्वचिदन्यत्र लोप इति चेद्द्विर्वचनम् ॥ १० ॥

क्वचिदन्यत्र लोप इति चेद्द्विर्वचमप्येवं प्राप्नोति । क्वचिदपि द्वितीयः सन् सर्वस्य प्रथमस्य निवर्तकः स्यात् ।

तस्मादस्तु 'सति तस्मिन्प्रतिषेध' इत्येव । ननु चोक्तं 'सति तस्मिन् प्रतिषेध

प्र०—व्यक्तिः प्राधान्येनाश्रीयते न तु जातिः । तेन सर्वस्यामेवाजादिव्यक्तौ द्वितीयवत्यामिदं शास्त्रं प्रवर्तते । व्यक्तिपदार्थाश्रयणे दोषमाह—सति तस्मिन्निति ।

लोकवदिति । तत्राकृतिः पदार्थ आश्रीयत इति भावः । प्रागा[4]ङ्गमिति । यथा ग्रामाकृतेराश्रयणात्कचिदपि ग्रामे वर्तमानो ब्राह्मणो मनुष्यान्तरानयनं निवर्तयति तथाभ्यासजातेराश्रयणात्कचिदप्यभ्यासे वर्तमानो हलादिः सर्वत्रानादेर्हलो निवृत्तिं करोतीत्यर्थः ।

उ०—लोके जात्याश्रयणमुपपादयति–यथा ग्रामाकृतेरिति । भाष्ये–सर्वत्राब्राह्मणस्येति । [4]प्रागगङ्ग–'ग्राममात्रे'इत्यादिः । सर्वस्यानाद्यस्येति । सर्वाभ्याससंबन्धिन इत्यर्थः । सर्वस्येति । सर्वधातुसंबन्धिन इत्यर्थः ।

१–'हलादिः शेषे' पा० । † हलादिः शेषः ७ । ४ । ६० २–'पपाठ' इति क्वचिन्न ।

३–ईश्वर=ईशिता नियन्ता राजा ग्रामाधिपतिर्वेह ग्राह्यः । 'ईश्वरः सर्वभूतानां धर्मकोशस्य गुप्तये' ( १ । ९९ ) इति मनुः । ४–'प्रागगङ्गं' पा० ।

५–'ग्रामेभ्यो ग्रामेभ्यो' पा० । ६–'सर्वत्र' इति क्वचिन्न ।

इति चेद्धलादिशेषे दोष' इति । प्रतिविधास्यते हलादिशेषे* ॥ २ ॥

## न न्द्राः संयोगादयः ॥ ६ । १ । ३ ॥

किमर्थमिदमुच्यते ?

### न्द्रादेर्द्विर्वचनप्रसङ्गस्तत्र न्द्राणां प्रतिषेधः ॥ १ ॥

न्द्रादेरेकाचो द्विर्वचनं प्राप्नोति, तत्र न्द्राणां संयोगादीनां प्रतिषेध उच्यते ।

### ईर्ष्यतेस्तृतीयस्य ॥ २ ॥

ईर्ष्यतेस्तृतीयस्य द्वे भवत इति वक्तव्यम् । केचित्तावदाहुरेकाच इति । ईर्ष्यिषिषति । अपर आह 'व्यञ्जनस्ये'ति । ईर्ष्यियिषति ।

### कण्ड्वादीनां च ॥ ३ ॥

कण्ड्वादीनां च तृतीयस्य द्वे भवत इति वक्तव्यम् । कण्डूयियिषति असूयियिषति ।

### वा नामधातूनाम् ॥ ४ ॥

वा नामधातूनां तृतीयस्य द्वे भवत इति वक्तव्यम् । अश्वीयियिषति अशिश्वीयिषति ॥ अपर आह—'यथेष्टं वा' । यथेष्टं वा नामधातूनामिति । पुपुत्रीयिषति

प्र०—तस्मादस्त्विति । इह व्यक्तिपक्ष आश्रीयते । हलादिः शेषे तु जातिपक्षः । व्यक्तिपक्षेऽपि वा प्रतिविधास्यते–अहलभ्यासो भवतीति तत आदिशेष इति ॥ २ ॥

न न्द्राः । किमर्थमिति । पूर्वस्याचो व्यञ्जनानीति पूर्वपक्षो, नटभार्यावद्व्यञ्जनानी-

उ०—अहलभ्यास इति । 'ह्रस्वो हलादिः शेष' इति संहितापाठेऽहलिति विभज्यते । तत्राभ्यासस्येति षष्ठ्यन्तं प्रकृतमपि सामर्थ्यात्प्रथमया विपरिणम्यते । तेनाभ्यासस्थस्य सर्वस्य हलो निवृत्तिः क्रियते । 'आदिः शेष' इत्यनेन तु यत्रादौ हलः सम्भवस्तत्र सोऽभ्यनुज्ञायत इति भावः । लक्ष्यानुसारिपूर्वोक्तव्याख्यानापेक्षयेदमेव युक्तम् ॥ २ ॥

न न्द्राः । भाष्ये–कण्ड्वादीनां तृतीयस्येति । तृतीयस्यैकाच इत्यर्थः । तत्र कण्ड्वादीनां तृतीयैकाचोऽसंभवात्तद्घटितसमुदायोपलक्षणं तत् । तद्ध्वनयन्नुदाहरति–कण्डूयियिषतीति : एवञ्च चङ्यप्यस्य प्रवृत्तिरिति बोध्यं यद्यभिधानमस्ति । नामधातूनामिति । नामघटितधातूनामित्यर्थः । तत्संबन्धितृतीयैकाच इत्यर्थः । तृतीयस्य वा भवति द्वितीयस्य वेत्यर्थः । तद्ध्वनयन्नाह–अशिश्वीयिषतीति । अजादिविषयमेतत् । 'अजादे'रित्यनुवर्तत इति भावः । तन्नानुवर्तत इति मतान्तरमाह—अपर आहेति । यथेष्टमिति । उपस्थितप्रथमद्वितीयतृतीयानां पर्यायेणेत्यर्थः । युगपत्तु त्रयाणां न, बाध्यबाधकभावस्य निर्णीतत्वात् ।

* ७ । ४ । ६० वा० ४ व्याख्या द्रष्टव्या, (पृ० २६३–२६४)

१—'द्वे भवतः' इत्यधिकं केचित् पठन्ति वार्तिके ।

प्रुतित्रीयिषति पुत्रीयियिषति ॥ ३ ॥

## पूर्वोऽभ्यासः ६ । १ । ४ ॥

पूर्वोऽभ्यास इत्युच्यते, कस्य पूर्वोऽभ्याससंज्ञो भवति ? 'द्वे' इति वर्तते* । द्वयोरिति वक्तव्यम् ॥ स तर्हि तथा निर्देशः कर्तव्यः । न कर्तव्यः । अर्थाद्विभक्तिविपरिणामो भविष्यति । तद्यथा—'उच्चानि देवदत्तस्य गृहाणि, आमन्त्रयस्वैनम्' । 'देवदत्त'मिति गम्यते । 'देवदत्तस्य गावोऽश्वा हिरण्यम्, आढ्यो वैधवेयः' । 'देवदत्त' इति गम्यते । पुरस्तात्षष्ठीनिर्दिष्टं सदर्थात्प्रथमानिर्दिष्टं द्वितीयानिर्दिष्टं च भवति । एवमिहापि पुरस्तात्प्रथमानिर्दिष्टं सदर्थात्षष्ठीनिर्दिष्टं भविष्यति ॥ ४ ॥

## उभे अभ्यस्तम् ॥ ६ । १ । ५ ॥

### अभ्यस्तसंज्ञायां सहवचनम् ॥ १ ॥

अभ्यस्तसंज्ञायां सहग्रहणं कर्तव्यम् । उभे अभ्यस्तं सहेति वक्तव्यम् ।

किं प्रयोजनम् ?

### आद्युदात्तत्वे पृथगप्रसङ्गार्थम् ॥ २ ॥

प्र०—त्युत्तरः पक्षः ॥ ३ ॥

पूर्वोऽभ्यासः । कस्य पूर्व इति । अवध्यवधिमत्संबन्धे दिग्योगलक्षणा पञ्चमी भवति । यथा 'ग्रामात्पूर्व' इति । इह त्ववयवावयविसंबन्धो विवक्षितः—कस्य पूर्वोऽवयव इति पञ्चम्यभावः, यथा 'पूर्वं कायस्ये'ति । विभक्तिविपरिणाम इति । पूर्वविभक्तित्यागेन सामर्थ्याद्विभक्त्यन्तरस्योह इत्यर्थः ॥ ४ ॥

उभे अभ्यस्तम् । सहग्रहणमिति । सहभूतयोः परस्परापेक्षयोरेकाभ्यस्तसंज्ञा यथा स्यादित्येवमर्थं सहेति वक्तव्यम् । आद्युदात्तत्व इति । यस्यानुदात्तत्वे क्रियमाणे उदात्तस्वरितविधान-

उ०—अत एव पुनरत्र वाग्रहणं चरितार्थम् ॥ ३ ॥

पूर्वोऽभ्यासः । ननु कस्मात्पूर्वमिति वक्तव्यमत आह—अवधीति । इहेति । पूर्वशब्दोऽवयववाचीति भावः । विभक्त्यन्तरस्येति । स्वरितत्वप्रतिज्ञानाद्योग्यविभक्त्यन्तस्योह इति भावः । अयमेव 'प्रत्ययोह' इत्युच्यते ॥ ४ ॥

उभे अभ्यस्तम् । सहभूतयोरिति । तद्व्याख्यानं—परस्परापेक्षयोरिति । प्रत्येकं वाक्यपरिसमाप्तिन्यायाद्द्वयोर्द्वे संज्ञे स्यातामतः सहग्रहणमिति भावः । नन्वनुदात्तं पदमेकवर्जमिति वचनात्कथं द्वयोरु-

* एकाचो द्वे प्रथमस्य ६ । १ । १

१—'सहग्रहणम्' पा० ।

आद्युदात्तत्वं† सह भूतयोर्यथा स्यादेकैकस्य मा भूदिति ॥ यस्मिन्नेवाभ्यस्तकार्येऽदोषस्तदेव पठितम्—'अनुदात्तं पदमेकवर्जम्' [ ६ । १ । १५८ ] इति नास्ति यौगपद्येन संभवः । पर्यायस्तर्हि प्रसज्येत । पर्यायश्च पूर्वस्य तावत्परेण रूपेण व्यवहितत्वान्न भविष्यति । परस्य तर्हि स्यात् । तत्राचार्यप्रवृत्तिर्ज्ञापयति न परस्य भवतीति यदयं बिभेत्यादीनां पिति प्रत्ययात्पूर्वमुदात्तं भवतीत्याह‡ । एवं व्यवधानान्न पूर्वस्य, ज्ञापकान्न परस्य, उच्यते चेदमभ्यस्तानामादिरुदात्तो भवतीति, तत्र स एव दोषः पर्यायः प्रसज्येत । तस्मात्सहग्रहणं कर्तव्यम् ।

न कर्तव्यम् । उभेग्रहणं क्रियते तत्सहार्थं विज्ञास्यते । अस्त्यन्यदुभेग्रहणस्य प्रयोजनम् । किम् ? 'उभेग्रहणं संज्ञिनिर्देशार्थम्' । अन्तरेणाप्युभेग्रहणं प्रक्लृप्तः संज्ञिनिर्देशः । कथम् ? 'द्वे'* इति वर्तते ।

इदं तर्हि [1]प्रयोजनं यत्रोभे शब्दरूपे श्रूयेते तत्राभ्यस्तसंज्ञा यथा स्यात् । इह

प्र०—मनर्थकमापद्यते स वर्ज्य इति व्याख्याने प्रधानवाचिन्येकशब्दे यौगपद्यप्रसङ्गः । एकवर्जमिति सङ्ख्यावचने तु विरोधाद्यौगपद्यासंभवात्पर्यायप्रसङ्गः ।

उभेग्रहणमिति । सहभावोपसर्जनद्वित्वमुभशब्दस्यार्थ इति भावः । 'द्वे' इत्यनुवृत्त्या द्विरुक्तस्याभ्यस्तसंज्ञायां लब्धायामुभेग्रहणं सहभूतयोरेकाभ्यस्तसंज्ञार्थम् ।

उ०—दात्तत्वमत आह—यस्यानुदात्तत्वे इति । एवं व्याख्याने बीजमाह—प्रधानवाचिनीति । प्रधानमुदात्तस्वरितोद्देश्यं वर्जयित्वा शिष्टमनुदात्तमित्यर्थः । यौगपद्यासंभवे हेतुमाह-सङ्ख्यावचन इति । प्रसिद्धत्वात्तस्यैव ग्रहणमिति भावः । भाष्ये—पर्यायश्चेति । अस्य 'वक्तुमशक्य' इति शेषः । उभयोरप्यप्राप्तेरिति भावस्तदेवाह—पूर्वस्य तावदिति । यदयं बिभेत्यादीनामिति । अविद्यमानोदात्ते लसार्वधातुके परेऽभ्यस्तानामादिरुदात्त इत्यर्थकेन 'अनुदात्ते चे'त्यनेनैव सिद्धेरिति भावः । एवमेकैकस्याप्राप्त्या पर्याये दूषिते तं समर्थयितुमाह—एवमित्यादि । तत्र स एवेति । विनिगमनाविरहादिति भावः ।

उभेशब्दस्य तादृशविशिष्टार्थवृत्तित्वे मानमाह—द्वे इत्यनुवृत्त्येति । भाष्ये—विज्ञास्यते इत्युक्त्या तस्य तादृशार्थकत्वं न लोकसिद्धमिति सूचितम् । ननु 'द्वे' इत्यनुवर्तनाद्द्वयोरेव संज्ञा स्यान्नान्यतरापाये इति किमुभेग्रहणेनात आह—कृते द्विर्वचने इति । ननु ईर्त्सन्तीत्यादिवारणायोभेग्रहणं नावश्यकम् । अब्धावनुम्निषेधजुस्भावेषु यथायथमभ्यस्तरूपादङ्गात् अभ्यस्तरूपाद्धातोरित्यर्थकरणेनादोषादिति चेन्न;

† अभ्यस्तानामादिः ६ । १ । १८९

‡ भीह्रीभृहुमदजनदरिद्राजागरां प्रत्ययात् पूर्वं पिति ६ । १ । १९२

* एकाचो द्वे प्रथमस्य ६ । १ । १

१—इदं वार्तिकमिति केचित् ।

२—'प्रयोजनम् । किम् ? यत्रोभे' पा० ।

मा भूत्—ईर्त्सन्ति ईप्सन्ति। ईर्त्सन् ईप्सन्। ऐर्त्सन् ऐप्सन् । किं च स्यात् ? अद्भावो नुम्प्रतिषेधो जुस्भाव इत्येते विधयः* प्रसज्येरन् ।

प्र०—ईर्त्सन्तीति । कृते द्विर्वचनेऽकृत एवाभ्यासलोपेऽन्तरङ्गत्वादुभयोः प्रत्येकं प्रवृत्ताभ्यस्तसंज्ञा कृतेऽभ्यासलोपे परस्य न निवर्तेत। उभेग्रहणात्तु निरस्यत इति भावः। ऋध आपश्च सन्। 'सनीवन्तर्धे'तीडभावपक्षे द्विर्वचनात्परत्वात् प्रतिपदविधेर्बलवत्त्वा'दाप्ज्ञप्यृधामी'दितीत्त्वं रपरत्वं च। 'न न्द्राः संयोगादय' इति रेफस्य द्विर्वचनप्रतिषेधः। 'पूर्वत्रासिद्धीयमद्विर्वचने' इति वचनाद्धकारस्य चर्त्वेन तकारे कृते 'त्स' इत्यस्य द्विर्वचनम्। अन्ये त्वाहुः—अभ्यासलोपसंनियोगेनेत्वमुच्यमानं द्विर्वचनं प्रतीक्षत इति प्राग्द्विर्वचनम्। तच्च यदा पूर्वत्रासिद्धीयमद्विर्वचन इत्येत'दुभौ साभ्यासस्ये'ति सूत्रारम्भादनित्यत्वान्नाश्रीयते तदा 'ध् स' इत्यस्य, तदाश्रयणे तु 'त्स'इत्यस्य । तत ईत्वाभ्यासलोपौ। ईर्त्स ईप्स इति स्थिते लट्, झिः। अद्भावश्च प्राप्नोति शप्च। कृताकृतप्रसङ्गित्वान्नित्यत्वाच्च शप्। अद्भावस्तु शपि कृते तेन व्यवधानान्न प्राप्नोतीत्यनित्यः। ततो झोऽन्त इत्यन्तादेशश्च प्राप्नोति पूर्वेण सह शप एकादेशश्च। तत्र वर्णाश्रयत्वादन्तरङ्गत्वादेकादेशस्ततोऽद्भावः प्राप्नोति। अथवा शपः प्रागेव परत्वादद्भावः प्राप्नोति। सोऽपि हि नित्यः। शप एकादेशे कृतेऽन्तवद्भावात्तस्य प्रसङ्गात् ।

ईर्त्सन्निति। शतरि कृते शप् च प्राप्नोत्येकादेशश्च। तत्र वर्णाश्रयत्वादन्तरङ्गत्वादेकादेशे कृते धातुसार्वधातुकयोर्व्यपवर्गाभावाच्छपोऽप्राप्तिः। तत्र सार्वधातुकमात्रापेक्षत्वाच्छबेवान्तरङ्गत्वात्पूर्वं भवति। तत्र शब्दपरविप्रतिषेधात्परयोरकारयोः पूर्वमेकादेशस्ततः पूर्वेणेति प्रक्रियाश्रयः सिद्धान्तो भविष्यति। पूर्वपक्षे तु पूर्वयोरकारयोरेकादेशे कृते नुम्प्रतिषेधप्रसङ्गश्चोद्यते।

ऐर्त्सन्निति। ईर्त्सेर्लङ् झिः शप्। अकारयोः पररूप एकादेशे कृते तस्यान्तवद्भावा-

उ०—ऊर्णोतेर्यङ्लुगन्तात्परस्य झादेरदाद्यनापत्तेः। अङ्गस्येत्यस्य षष्ठयन्ततयाङ्गावयवस्येत्यर्थस्यैवौचित्यात्। जुस्विधावपि धातोर्विहितस्याभ्यस्तात्परस्येत्यर्थस्यैवौचित्याच्च । अत एव न पूर्वपक्षसिद्धान्तयोर्निर्दलता ।। अन्तरङ्गत्वादिति। द्विर्वचनमात्रापेक्षत्वात् । अभ्यासलोपस्त्वीकारसंनियोगेन विधीयमानो बहिरङ्ग इति भावः । यथोद्देशपक्षं वाश्रित्येदम् । परत्वादित्यस्येष्टत्वादित्यर्थस्तदाह—प्रतिपदविधेरिति । तत्रावश्यं प्राप्तेऽस्यारम्भादिति भावः। अभ्यासलोपस्तु पृथगेव विधीयते नैतत्संनियोगेनेत्यभिमानः।

सूत्रारम्भादिति। अन्यथा कृतणत्वस्य द्वित्वे प्राणिणिषतीत्यादि सिद्धेस्तत्सूत्रानर्थक्यं स्पष्टमेवेति भावः। प्रकृते तदनाश्रयणे फलाभावादाह—तदाश्रयणे त्विति । तत्र वर्णाश्रयत्वादिति। 'वार्णादाङ्ग'मिति तु न समानस्थानिकत्वाभावादिति भावः। 'एकादेशश्चे'त्युत्तरं 'यद्यपी'ति शेषः। शपोऽप्राप्तिरित्यस्य'तथापी'ति शेषः। शबेवान्तरङ्गत्वादिति। एकादेशस्त्वपदान्तत्वविशिष्टं पूर्वमकारं गुणसंज्ञकमुत्तरं चापेक्षत इति बह्वपेक्षत्वाद्बहिरङ्ग इति भावः। सिद्धान्तपूर्वपक्षयोराशयं दर्शयति–तत्र शब्देति। पूर्वयोरकारयोरिति। अन्तरङ्गत्वादिदमेवोचितम्। वस्तुतस्तु तत्र शब्देत्यादि चोद्यत इत्यन्तोऽग्रन्थः। सर्वनामस्थानोत्पत्तेः पूर्वं त्रयाणामेकादेशे कृते उभयत आश्रयणेऽन्तादिवद्भावाभावाद्व्यपवर्गाभाव इति हि सिद्धान्तभाष्ये वक्ष्यति। किं च तदा पूर्वं पूर्वयोः परयोर्वा एकादेशे न विशेषस्तस्मात्पदस्य विभज्यान्वाख्यानमिति पूर्वपक्षः। अन्यथा

* अदभ्यस्तात्; नाभ्यस्ताच्छतुः ७।१।४; ७८; सिजभ्यस्तविदिभ्यश्च ३।४।१०९

अड्भावे तावन्नदोषः। सप्तमे† योगविभागः करिष्यते । इदमस्ति 'अदभ्यस्तात्' [ ७ । १ । ४ ] इति । तत 'आत्मनेपदेषु' । आत्मनेपदेषु चाद्भवति । 'अनत' इत्युभयोः शेषः ।

यदप्युच्यते 'नुम्प्रतिषेध' इति, एकादेशे कृते‡ व्यपवर्गाभावान्न भविष्यति ।

इहदमिह संप्रधार्यम्—नुम्प्रतिषेधः क्रियतामेकादेश इति किमत्र कर्तव्यम् ? परत्वान्नुम्प्रतिषेधः । नित्य एकादेशः । कृतेऽपि नुम्प्रतिषेधे प्राप्नोत्यकृतेऽपि । एकादेशोऽप्यनित्यः । अन्यस्य कृते नुम्प्रतिषेधे प्राप्नोत्यन्यस्याकृते, शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति । अन्तरङ्गस्तर्ह्येकादेशः । कान्तरङ्गता ? वर्णावाश्रित्यैकादेशः, विधिविषये नुम्प्रतिषेधः, विधिश्च नुमः सर्वनामस्थाने*, प्राक्तु सर्वनामस्थानोत्पत्तेरेकादेशः । तत्र नित्यत्वाच्चान्तरङ्गत्वाच्चैकादेशः, एकादेशे कृते व्यपवर्गाभावान्न भविष्यति ।

यदप्युच्यते जुस्भाव इति, एकादेशे कृते व्यपवर्गाभावान्न भविष्यति । एकादेश इत्युच्यते, केन चात्रैकादेशः ? अन्तिनाऽ§ । नात्रान्तिभावः प्राप्नोति । किं कारणम् ? जुस्भावेन बाध्यते । नात्र जुस्भावः प्राप्नोति । किं कारणम् ? शपा व्यवहितत्वात् । एकादेशे कृते नास्ति व्यवधानम् । एकादेशः पूर्वविधौ स्थानिवद्भवतीति व्यवधानमेव ।

प्र०—ज्जुस्प्राप्नोति । अन्यस्याकृत इति । मितः पूर्वभक्तत्वान्नुमि कृते शब्दान्तरत्वम् ।

उ०—सिद्धान्त इति वक्तुमुचितम् । भाष्ये—अनत इत्युभयोः शेष इति । अत एव प्रतिषिद्धतीत्यादौ नाड्भावः । भाष्ये—एकादेश इति । पूर्वयोरेकादेशे कृते शतुरकारेणैकादेशस्य संप्रधारणेति बोध्यम् ।

ननु नुम्प्रतिषेधे कृतेऽकृते च द्वयोरकारयोरेवं पररूपमिति कथमनित्यत्वमत आह—मित इति । तत्राकृतेऽनवयवस्याकारस्य पररूपनिमित्तत्वं, कृते तु वर्णग्रहणेऽपि क्वचिद्यदागमा इति न्यायाङ्गीकारात्सावयवस्येत्यभिमानः । इदमपि अचोऽवयवो मिदित्यभ्युपेत्य । वस्तुतो यस्य विहितस्तस्यैवावयव इति सिद्धान्तः । इदमेव ध्वनयन्ननित्यत्वमेकादेशस्योक्त्वापि उपसंहारे 'नित्यत्वाच्चैकादेश' इति वक्ष्यति भाष्यकृत् । अत एव प्रतीषिषन्नित्यादौ न नुम्निषेधः । भाष्ये—एकादेशे कृते नास्ति व्यवधानमिति । एवञ्च जुस्भावेन बाधादन्तिभावाप्राप्तावेकादेशे कृते व्यपवर्गाभावान्न भविष्यतीत्यसङ्गतमिति भावः । एतदु-

† आत्मनेपदेष्वनतः ७ । १ । ५ ‡ कर्तरि शप् ३ । १ । ६८; अतो गुणे ६ । १ । ९७
* उगिदचां सर्वनामस्थानेऽधातोः ७ । १ । ७० § झोऽन्तः ७ । १ । ३

किं पुनः कारणं निमित्तवानन्तिरेकादेशं तावत्प्रतीक्षते न पुनस्तावत्येव निमित्तमस्तीत्यन्तिभावेन भवितव्यम् । इहापि तर्हि तावत्येव निमित्तमस्तीत्यन्तिभावः स्यात्—अनेनिजुः पर्यवेविषुः[1] । अस्तु । अन्तिभावे कृते स्थानिवद्भावाज्झिग्रहणेन ग्रहणाज्जुस्भावो भविष्यति ।

अथवा यद्यपि निमित्तवानन्तिरयं तस्य जुस्भावोऽपवादः, न चापवादविषय उत्सर्गोऽभिनिविशते[2] । पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः । प्रकल्प्य वापवादविषयं तत उत्सर्गः प्रवर्तते । न तावदत्र कदाचिदप्यन्तिभावो भवति । अपवादं जुस्भावं प्रतीक्षते ।

न खल्वपि क्वचिदभ्यस्तानां झेश्चानन्तर्यम् । सर्वत्र विकरणैर्व्यवधानम् । तेनानेनावश्यं विकरणनाशः प्रतीक्ष्यः, क्वचिल्लुका क्वचिच्श्लुना क्वचिदेकादेशेन ।

प्र०—निमित्तवानिति । अन्तादेशे प्राक्कृते एकादेशे च व्यपवर्गाभावाज्जुसोऽप्रसङ्गः । पूर्वं हीति । उत्सर्गाणां विषयान्तरस्यापि संभवादपवादविवर्जिते विषये प्रवृत्तेर्न्याय्यत्वात् ।

प्रकल्प्य वेति । यथा 'न सम्प्रसारणे संप्रसारण'मितिवचनात्परस्य यणः पूर्वं संप्रसारणं

उ०—त्वम्—'एकादेशः पूर्वविधौ स्थानिवद्भवतीति व्यवधानमेवे'ति क्वचित्पाठो दृश्यते सोऽग्रन्थः । एवं हि जुस्भावाप्राप्तावन्तिभावे कृते व्यपवर्गाभावान्न भविष्यतीत्यस्य स्थिरत्वे 'किं पुनः कारण'मित्यग्रिमग्रन्थानुत्थानापत्तेः । किञ्चेदमिह व्यपदेश्यं सदाचार्यं इत्यादेरप्यसङ्गत्यापत्तिरिति बोध्यम् । अन्तिरेकादेशं तावदिति । सनकारशकारयोरेकादेशमित्यर्थः । यदि तदुत्तरमन्तिः स्याज्जुसा बाधः संभाव्येत । ततः प्रागेव त्वन्तौ त्रयाणामकाराणां पररूपे व्यपवर्गाभावाज्जुसोऽप्राप्तिरिति भावः । न पुनस्तावत्येवेति । एकादेशात्प्रागेवेत्यर्थः । उपदेशिवद्वचनाज्झोऽन्तस्यान्तरङ्गत्वमिति भावः । अन्तिभावेनेति । 'सर्वे सर्वपदादेशा' इति न्यायेन झविशिष्टस्यान्तविशिष्ट आदेश इत्यर्थ इति भावः । इहापि तर्हीति । द्वित्वात्पूर्वमेवेत्यर्थः । अस्त्वन्तिभावे इति । झेर्जुसित्यादौ प्रक्रियालाघवाय विशिष्ट एव स्थानीति भावः । केचित्तु—झेर्जुसित्यत्रेकारस्योच्चारणार्थत्वेनात्रेतो लोपे विशिष्टस्यालिवधित्वेन स्थानिवत्त्वाभावादन्तो झत्वाभावाज्जुसोऽप्राप्तिरित्यरुचेराह—अथवा यद्यपीति—आहुः । पूर्वं हीति हिशब्दसूचितमपवादानां पूर्वं प्रवृत्तौ न्यायं दर्शयति—उत्सर्गाणामिति । यथा कर्मण्यणो विषयान्तरे सावकाशस्याकारान्तेभ्यः सन्देहान्न पूर्वं प्रवृत्तिः, कस्य निःसन्दिग्धत्वात्तत्र झटिति पूर्वं प्रवर्तत इति तेन मुक्ते विषयेऽणप्रवृत्तिरिति न्याय्यत्वमित्यर्थः । 'प्रकल्प्य वे'त्यस्य विषयं दर्शयति—यथा न संप्रसारण इति । इदं तु 'न संप्रसारण' इति सूत्रस्थभाष्यविरुद्धमिति तत्रैव स्फुटं भविष्यति । सहग्रहणवादी 'ऐरसंन्' इत्यादावपि जुसोऽपवादस्य विषयसत्त्वेन पूर्वमन्तिभावा-

१—'अवेविषुः' पा० । २—'अभिनिविशते' पा० ।

स यथैव श्लुलुकौ प्रतीक्षत एवमेकादेशमपि प्रतीक्षते ।

एवं तर्हीदमिह व्यपदेश्यं सदाचार्यो न व्यपदिशति । किम् ? स्थानिवद्भावम् । स्थानिवद्भावाद् व्यवधानम्, व्यवधानान्न भविष्यति । पूर्वविधौ स्थानिवद्भावो न चायं पूर्वस्य विधिः । पूर्वस्मादपि विधिः पूर्वविधिः ।

तदेतदसति प्रयोजन उभेग्रहणं सहार्थं विज्ञास्यते ।

कथं कृत्वैकैकस्याभ्यस्तसंज्ञा प्राप्नोति ? 'प्रत्येकं वाक्यपरिसमाप्तिर्दृष्टे'ति । तद्यथा— प्रत्येकं वृद्धिगुणसंज्ञे भवतः* । ननु चायमप्यस्ति दृष्टान्तः 'समुदाये वाक्यपरिसमाप्ति'रिति । तद्यथा–'गर्गाः शतं दण्डचन्ता'मिति । अर्थिनश्च राजानो हिरण्येन भवन्ति, न च प्रत्येकं दण्डयन्ति । सत्येतस्मिन् दृष्टान्ते तत्र यदि 'प्रत्येक'-मित्युच्यत इहापि सहग्रहणं कर्तव्यम् । अथ तत्रान्तरेण 'प्रत्येक'मिति वचनं प्रत्येकं गुणवृद्धिसंज्ञे भवत इहापि नार्थः सहग्रहणेन ॥ ५ ॥

## जक्षित्यादयः षट् ॥ ६ । १ । ६ ॥

### जक्षित्यादिषु सप्तग्रहणं वेवीत्यर्थम् ॥ १ ॥

जक्षित्यादिषु सप्तग्रहणं कर्तव्यम् । 'सप्त जक्षित्यादयोऽभ्यस्तसंज्ञका भवन्ती'ति वक्तव्यम् । किं प्रयोजनम् ? 'वेवीत्यर्थम्' । वेवीतेरभ्यस्तसंज्ञा यथा स्यात् । वेव्यते+ ।

प्र०—प्रवर्तते पूर्वस्य तु तन्निमित्त प्रतिषेधः । यदि तु परस्य यणः पूर्वं न प्रवर्तेत तदा पूर्वस्यापि प्रतिषेधो न स्यात् ॥ ५ ॥

जक्षित्यादयः । जक्षितिरादिर्येषां ते जक्षित्यादय इत्याश्रित्याह–जक्षित्य दिषि ति । वेव्यत इति । 'अभ्यस्तानामादि'रित्युदात्तत्वं भवति । अन्यथा धातुस्वरे ङित्त्वाल्ल र्वेधातुकानुदात्तत्वे

उ०—प्रवृत्तिमाह–न खल्वपीति पूर्वस्मादपीति । अत एव 'प्रत्यैषिष्व'न्नित्यादौ न दोषः । अथोभेग्रहणस्य सहार्थत्वमप्रसिद्धमिति बोधयन् तदपि प्रत्याख्यातुमाह भाष्ये–कथञ्चैकैकस्येति । इहापि नार्थ इति । लक्ष्यानुरोधादुक्तरीत्याभ्यस्तानामादिरित्यस्य पूर्वपरयोरप्रवृत्त्या वैयर्थ्याच्चात्र समुदाये वाक्यपरिसमाप्तिन्यायस्यैवाश्रयणम् । पर्यायकल्पनापेक्षयात्रैतन्न्यायाश्रयणकल्पनैवोचितेति भावः । ५ ॥

जक्षित्यादयः । वक्ष्यमाणरीत्या सप्तग्रहणस्यानावश्यकत्वादाह—जक्षितिरादिरिति । ननु वेव्यत इत्यत्रात्मनेपदेष्वनत इत्यदादेशस्य सिद्धेः किमभ्यस्तसंज्ञयेष्यत आह—अभ्यस्तानामादिरिति ।

१—'चैकैकस्याप्यभ्यस्त' पा० । * वृद्धिरादैच्; अदेङ् गुणः १ । १ । १;२

+ अभ्यस्तानामादिः ६ । १ । १८९

## अपरिगणनं वागणान्तत्वात् ॥ २ ॥

न वार्थः परिगणनेन । अस्त्वागणान्तमभ्यस्तसंज्ञा ॥ इहापि तर्हि प्राप्नोति—'आङः शासु'। अस्तु । अभ्यस्तकार्याणि कस्मान्न भवन्ति ? भूयिष्ठानि परस्मैपदेष्वात्मनेपदी चायम् । स्वरस्तर्हि प्राप्नोति । यत्राप्यस्यात्मनेपदेष्वभ्यस्तकार्यं स्वरस्तत्राप्यनुदात्तेतः परं लसार्वधातुकमनुदात्तं भवतीत्यनुदात्तत्वे कृते† नास्ति विशेषो धातुस्वरेणोदात्तत्वे सत्यभ्यस्तस्वरेण वा‡ ॥ षसिवशी छान्दसौ । दृष्टानुविधिश्छन्दसि भवति ॥ चर्करीतमभ्यस्तमेव ।

ह्नुङस्तर्हि प्राप्नोति । अस्तु । अभ्यस्तकार्याणि कस्मान्न भवन्ति ? भूयिष्ठानि परस्मैपदेष्वात्मनेपदी चायम् । स्वरस्तर्हि प्राप्नोति । अह्न्विङोरिति† प्रतिषेधविधान-

प्र०—यणादेशे च कृते[1] उदात्तस्वरितयोर्यणः' इति स्वरितत्वं प्रसज्येत ।

आङः शास्विति । वेवीङोऽनन्तरमयं कैश्चित्पठ्यत इति भावः । भूयिष्ठानीति । बहुतराणीत्यर्थः । षसिवशी इति । 'षस शास्ति स्वप्ने' इति ये न पठन्ति केवलं 'षस स्वप्ने' 'वश कान्ता'विति तन्मतेनैतदुक्तम् । अन्ये त्वाहुः—शास्तीति धातुपाठ एव शसः श्तिपानिर्देशः कृतोऽर्थभेदात्तु द्विःपठितः । अन्ये तु 'षस स्वप्ने' इति न पठन्ति । वशेर्भाषायां वार्तिककारमतेन प्रयोगः साधुः ॥ चर्करीतमिति । यङ्लुगन्तस्य पूर्वाचार्यसंज्ञा ।

अह्न्विङोरिति । यदि ह्नुङोऽभ्यस्तसंज्ञा स्यात् ह्नुवाते ह्नुवत इत्यादौ कृतेऽभ्यस्तस्वरे लसार्वधातुकस्य भवितव्यमेव निघातेनेति प्रतिषेधोऽनर्थकः स्यात् । तस्मात्प्रतिषेधसामर्थ्यात्प्रत्ययस्वर एव भवति नाभ्यस्तस्वरः । नन्वसति प्रयोजने ज्ञापकम्, अस्ति च प्रतिषेधस्य

उ०—स्वरितत्वं प्रसज्येतेति । व्यशब्दाकारस्येत्यर्थः । सिद्धान्तेऽप्युदात्तादनुदात्तस्येति स्वरितस्यैवेष्टत्वाच्चिन्त्यमिदम् । तस्माद्वेशब्दैकारे उदात्तश्रवणं न स्यादित्येव वक्तुं युक्तम् ।

ननु जक्षित्यादिभ्यः पूर्वमेव 'आस उपवेशने' इत्यनन्तर'माङः शा'स्विति पठ्यत इति कथं तस्याभ्यस्तसंज्ञा स्यादत आह—वेवीङोऽनन्तरमिति । ननु मैत्रेयादयो वेवीङनन्तरं 'षस शास्ति स्वप्ने' 'वश कान्ता'विति पठन्तीति षसिवशी इति द्वयोरेव कथमुपादानमत आह—षस शास्तीति । केचित्तु 'षस षस्ती'ति पठन्ति । 'शास्ती'तिपाठेऽपि न पृथग्धात्वन्तरमिदं तकारान्तमिदित्, किन्तु शासः श्तिपा निर्देश इति मतेन भाष्यमित्याह—अन्ये त्वाहुरिति । शास इति । आङः शास्विति अनुदात्तेत इत्यर्थः । ननु वशेश्छान्दसत्वे '[2]वष्टि भागुरि'रित्यादिप्रयोगाणां का गतिरत आह—वशेरिति । यदि भाष्यवार्तिककारौ प्रमाणं तर्ह्यसाधुरेव स प्रयोग इति भावः ॥ निघातेनेति । शेषनिघातेनेत्यर्थः । अनुदात्ते चेति । अनेना-

१—'यच्चाप्य' पा० । † तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः ६।१।१८६
‡ धातोः; अभ्यस्तानामादिः ६ । १ । १६२; १८६ २—वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः । आपं चैव हलन्तानां यथा वाचा निशा दिशा ॥ * तास्यनुदात्तेन्ङिददु० ६ । १ । १८६

सामर्थ्यात्स्वरो न भविष्यति ।

अथवा सप्तैवेमे धातवः पठ्यन्ते । जक्षभ्यस्तसंज्ञो भवति । इत्यादयश्च षट् । जक्षित्यादयः षडिति[1] ॥ ६ ॥

## तुजादीनां दीर्घोऽभ्यासस्य ॥ ६ । १ । ७ ॥

### तुजादिषु च्छन्दःप्रत्ययग्रहणम् ॥ १ ॥

तुजादिषु च्छन्दःप्रत्ययग्रहणं कर्तव्यम् । छन्दसि तुजादीनां दीर्घो भवतीति वक्तव्यम् । अस्मिंश्चास्मिंश्च प्रत्यय इति वक्तव्यम् । इह मा भूत्– तुतोज शबलान् हरी॒न् ।

### अनारम्भो वापरिगणितत्वात् ॥ २ ॥

अनारम्भो वा पुनश्छन्दसि दीर्घत्वस्य न्याय्यः । कुतः ? 'अपरिगणितत्वात्' । न हि च्छन्दसि दीर्घत्वस्य[2] परिगणनं कर्तुं शक्यम् । किं कारणम् ?

### अन्येषां च दर्शनात् ॥ ३ ॥

येषामपि दीर्घत्वं नारभ्यते तेषामपि च्छन्दसि दीर्घत्वं दृश्यते । तद्यथा— पूरु॒षः[3] नारकं[4] इति ।

प्र०—प्रयोजनं ह्नुते ह्नुषे इत्यादावनुदात्तत्वं मा भूत्प्रत्ययस्वर एव यथा स्यात् । अत्र 'ह्यभ्यस्तानामादि'रिति न प्रवर्तते, अजादौ तस्य विधानात् । तत्रासति प्रतिषेधे 'अनुदात्ते चे'त्याद्युदात्तं पदं स्यात् । सति तु प्रतिषेधेऽन्तोदात्तं भवतीति ज्ञापकत्वं नोपपद्यते । एवं तर्ह्यभ्यस्तानामादिरित्यत्राहन्विङोरित्यनुवृत्त्या प्रतिषेधवचनसामर्थ्यादित्यर्थोऽभिप्रेतः ।

अथवेति । नायं शितपा निर्देशः, किं तर्हि, 'ज'क्षिति पृथक्पदम् । 'इत्यादय' इत्यत्र इतिशब्देन जक्षि(ति): परामृश्यते । आदिशब्दश्च समीपवाची । तेन तत्समीपाः षडभ्यस्तसंज्ञा इति सप्तानामेवाभ्यस्तसंज्ञा सूत्रेण संगृहीतेत्यर्थः ॥ ६ ॥

उ०—नुदात्तत्वे हि अविद्यमानोदात्तलसार्वधातुकमस्तीत्यभ्यस्तत्वे तत्प्रवृत्तिः स्यादिति भावः । अहन्विङोरित्यनुवृत्त्येति । इङ् प्रसङ्गोच्चारितः । प्रतिषेधविधानसामर्थ्यादिति । भाष्यस्वारस्यात्तत्राचीति नानुवर्तत इत्यन्ये ।

नायं शितपेति । शितपि रुदादिभ्य इटि तद्रूपं नेत्यर्थः । समीपवाचीति । एवञ्चातद्गुणबहुव्रीहिणा जक्षेः परे षट् जक्षिश्चेति सप्तानां सिद्धा संज्ञेत्यर्थः ॥ ६ ॥

१–'जक्षिजागृदरिद्राशास्दीधीङ्वेवीङ्चकास्तथा । अभ्यस्तसंज्ञाः सप्तैते साभ्यासा ये च धातवः ॥' इत्यपि क्वचिद् दृश्यते । २–'दीर्घस्य' पा० । ३–यजु० १२ । ६१ ४–'नारकाय' इति यजु० ३० । ५

**अनेकान्तत्वाच्च ॥ ४ ॥**

येषां चाप्यारभ्यते तेषामप्यनेकान्तः । यस्मिन्नेव च प्रत्यये दीर्घत्वं दृश्यते तस्मिन्नेव च न दृश्यते । [१]मामहान उक्थपात्रम् । ममहान इति च ॥ ७ ॥

## लिटि धातोरनभ्यासस्य ॥ ६ । १ । ८ ॥

धातोरिति किमर्थम् ? ईहाञ्चक्रे । नैतदस्ति । लिटीत्युच्यते, न चात्र लिटं पश्यामः । प्रत्ययलक्षणेन* । 'न लुमता तस्मि'न्निति† प्रत्ययलक्षणप्रतिषेधः । इदं तर्हि—'सस्रुवांसो विशृण्विरे'‡ ।

**लिटि द्विर्वचने जागर्तेर्वावचनम् ॥ १ ॥**

लिटि द्विर्वचने जागर्तेर्वेति वक्तव्यम् । यो जागार तमृचः कामयन्ते§ । यो जजागार तमृचः कामयन्ते ।

अनभ्यासस्येति किम् ? कृष्णो नोनाव वृषभो यदीदम् × । नोनूयतेर्नोनाव ।

**अभ्यासप्रतिषेधानर्थक्यं च च्छन्दसि वावचनात् ॥ २ ॥**

अभ्यासप्रतिषेधश्चानर्थकः । किं कारणम् ? 'छन्दसि वावचनात्' । अवश्यं छन्दसि वा द्वे भवत इति वक्तव्यम् । किं प्रयोजनम् ?

प्र०—लिटि धातोर । अभ्यासप्रतिषेधानर्थक्यमिति । जुगुप्सिषते लोलूयिषत इत्यादौ सकृत्प्रवृत्त्या लक्षणस्य चरितार्थत्वात्पुनः प्रवृत्त्यभावादुत्तरार्थोऽप्यभ्यासप्रतिषेधो न कर्तव्यः । 'चङी'त्येतदर्थस्तु कर्तव्यः ( एव ) । यदा सन्यङन्ताण्णिचि कृते चङ्भवति अजुगुप्सत् अलोलूय-

उ०—लिटि धातोर । भाष्ये—ईहाञ्चक्रे इति । आमन्तो न धातुरिति भावः । विशृण्विरे इति । श्रुवो लिट इरेचि छन्दस्युभयथेति सार्वधातुकत्वाच्छ्रुवः शृभावः श्नुश्च । अत्र विकरणान्तसमुदायो लिट्परो न धातुरिति तदीयप्रथमैकाचो न द्वित्वमिति भावः ।

ननूत्तरार्थं तदावश्यकमत आह—जुगुप्सिषत इति । स्वार्थसनन्तादिच्छासन् । उत्तरत्र यङन्तात्सन् । तदा द्विर्वचनमिति । लक्षणभेदादित्यर्थः । एवं यङन्तात्सन्यपि लक्षणभेदो द्रष्टव्यः । अत एव 'स्तौतिण्यो'रिति सूत्रे भाष्ये यङन्तात्सनि सोषुपिषत इति प्रयुक्तं सङ्गच्छते । प्रकृतसूत्रे प्रयोजनाभावपरं तु भाष्यमिति भावः । 'अभ्यासप्रतिषेधानर्थक्यं छन्दसि वावचना'दिति भाष्यवार्तिकस्वारस्याल्लोके एषां

१—'मामहान ऽउक्थपत्र' ( यजु० १७ । ५५ ) इति वाजसनेयिनः पठन्ति ।

* आमः २ । ४ । ८१; प्रत्ययलोपे प्रत्ययलक्षणम् १ । १ । ६२ † १ । १ । ६३ वा० १३

‡ छन्दस्युभयथा ३ । ४ । ११७; श्रुवः शृ च ३ । १ । ७४

§ ऋ० ५ । ४४ । १४ साम० १८२६ ( उ० अ० २० खं० ६ )

× ऋ० १ । ७९ । २ अन्यत्रापि द्रष्टव्यम् १ । १ । ५ भाष्ये पृ० १७१

प्रयोजनमा॒दि॒त्यान् या॑चिषामहे* ॥ ३ ॥

यियाचिषामह इति प्राप्ते । देवता नो दाति॑ प्रि॒याणि॑† । ददाति प्रियाणि । म॒घवा॑ दा॑तु‡ । मघवा ददातु । स न॑ः स्तु॒तो वी॒रव॑द्धातु+ । वीरवद्धातु ।

यावतेदानीं छन्दसि वा द्वे भवत इत्युच्यते धातुग्रहणेनापि नार्थः । कस्मान्न भवति 'सस्वांसो विश्मृण्विर' इति ? छन्दसि वावचनात् ।

तदेतद्धातुग्रहणं सांन्यासिकं तिष्ठतु तावत् ॥ ८ ॥

सन्यङोः ॥ ६ । १ । ९ ॥

किमियं षष्ठी, आहोस्वित्सप्तमी ? कुतः सन्देहः ? समानो निर्देशः । किं चातः ? यदि षष्ठी, सन्यङन्तस्य द्विर्वचनेन भवितव्यम् । अथ सप्तमी, सन्यङोः परतः पूर्वस्य द्विर्वचनम् ॥ कश्चात्र विशेषः ?

सन्यङोः परत इति चेदिटो द्विर्वचनं परादि॒त्वात् ॥ १ ॥

सन्यङोः परत इति चेदिटो द्विर्वचनं कर्तव्यम् । अटिटिषति अशिशिषति । किं पुनः कारणं न सिध्यति ? 'परादित्वात्' । इट् परादिः ।

प्र०—दिति; तदा द्विर्वचनं मा भूदिति चिन्त्यमेतत् ॥ ८ ॥

सन्यङोः । किमियं षष्ठीति । विभक्तिविचारद्वारेण तदर्थो विचार्यते । किं चात इति । अर्थभेदप्रश्नः । सन्यङन्तस्येति । 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्ये'ति षष्ठीपक्षे तदन्तविधिः । सप्तमीपक्षे तु 'तस्मिन्निति निर्दिष्टे पूर्वस्ये'ति परिभाषोपस्थानात् 'धातो'रित्यधिकाराच्च पूर्वस्य धातोः कार्यभाक्त्वम् । कश्चात्र विशेष इति । लक्ष्यगतविशेषप्रश्नः ।

उ०—प्रयोगाणामसाधुत्वं कल्पयितुं युक्तमित्यपरे ।

भाष्ये-तदेतद्धातुग्रहणमिति । अयं भावः, धातुग्रहणाभावे लिटीत्यादि प्रथमैकाच एव विशेषणं स्यात्तथा च पपाचेत्यादावेव स्यान्न तु जजागारेत्यादौ, तस्य लिट्परत्वाभावादिति ॥ ८ ॥

सन्यङोः । विभक्तिविचारस्य प्रकृतानुपयोगादाह-विभक्तीति । सप्तमीपक्षेऽपि तदन्तविधिर्दुर्वारोऽत आह—परिभाषोपस्थानादिति । एवं च सनि परे इत्यर्थे कस्मादित्यवधिसाकाङ्क्षत्वेन यस्माद्विहितस्तस्मादित्यन्वये 'प्रत्ययग्रहणे चापञ्चम्या' इति निषेधान्न तदन्तविधिरिति भावः । अर्थकृतविशेषस्य स्पष्टमुक्त्वात्प्रश्नानुपपत्तेराह—लक्ष्यगतेति ।

* 'आ॒दि॒त्यान् या॑चिषामहे' ( ऋ० ८ । ६७ । १ ) † 'दाति॑ प्रि॒याणि॑' (ऋ० ४।८।३)

‡ म॒घवा॑ पुरू॒वसु॒र्गोर॑श्वस्य प्र दा॑तु नः ( ऋ० ८ । ५२ । ५ )

\+ स न॑ः स्तु॒तो वी॒रव॑द् धातु ( ऋ० १ । १९० । ८ )

## हन्तेश्चेटः ॥ २ ॥

हन्तेश्चेटो* द्विर्वचनं कर्तव्यम् । जेघ्नीयते ॥ ननु च यस्यापि सन्यङन्तस्य द्विर्वचनं तस्यापि स्थानिवद्भावप्रसङ्गः† । ईटि स्थानिवद्भावादीटो द्विर्वचनं न प्राप्नोति । नैष दोषः । द्विर्वचननिमित्तेऽचि स्थानिवदित्युच्यते‡ न चासौ द्विर्वचननिमित्तम् । यस्मिन्नपि द्विर्वचनं यस्यापि द्विर्वचनं सर्वोऽसौ द्विर्वचननिमित्तम् ॥ तस्मादीटो द्विर्वचनम् । तस्मादुभाभ्यामेवेटो द्विर्वचनं कर्तव्यम्, यश्चोभयोर्दोषो न तमेकश्चोद्यो भवति ।

## एकाच उपदेशेऽनुदात्तादित्युपदेशवचनमनुदात्तविशेषणं चेत्सन इट्प्रतिषेधः ॥ ३ ॥

'एकाच उपदेशेऽनुदात्तात्' [ ७ । २ । १० ] इत्युपदेशवचनमनुदात्तविशेषणं चेत्सन इट्प्रतिषेधो वक्तव्यः । बिभित्सति चिच्छित्सति । द्विर्वचने कृत उपदेशेऽनुदात्तादेकाचः श्रूयमाणादितीट्प्रतिषेधो न प्राप्नोति ।

प्र०—हन्तेश्चेति । 'गमहने'त्युपधालोपस्य स्थानिवद्भावाद्धन एव द्विर्वचनप्रसङ्गः । यस्यापीति । सति तस्मिन् कार्यभावादस्त्येव निमित्तत्वमिति भावः । यद्यपि रूपस्थानिवद्भावादीटो न भवति द्विर्वचनं तथापि प्राप्तिमात्राश्रयेण द्विर्वचननिमित्तत्वमीकारस्योच्यते ।

अनुदात्तविशेषणं चेदिति । यदा तूभयविशेषणं तदा न दोषः, उपदेश एकाच्त्वात् । सनन्तस्यापि द्विःप्रयोगे द्विर्वचने दोष एव, स्थाने द्विर्वचने तु प्रकृतिप्रत्ययस्य संप्रमुग्धत्वादिटः प्राप्तिरेव नास्तीति न दोषः ।

उ०—हन्तेश्चेति । हन्तेरुत्तरस्य यङ ईडिति पद्ये इदम् । ननूपधालोपेऽनच्कत्वाद्धातोर्द्विर्वचनाप्रसङ्ग एवेत्यत आह—गमहनेति । ननु सन्यङन्तस्य द्वित्वे ईटः कार्यित्वेन निमित्तत्वाभावात्कथमुपधालोपस्य स्थानिवत्त्वमत आह—सतीति । तद्भावभावितामात्रेण निमित्तता । एवञ्च ईड्विशिष्टस्य प्रथमैकाच्त्वाभावेन तस्य द्वित्वं न स्यादिति भावः । यद्यपीति । एवञ्च ईकारस्य द्वित्वनिमित्तत्वाभावात्स्थानिवत्त्वं दुर्लभमिति भावः । प्राप्तिमात्राश्रयेणेति । 'यदि स्थानिवत्त्वं न स्यात् स्यादेवेटो द्विर्वचन'मिति काल्पनिकप्राप्तिमात्राश्रयेणेत्यर्थः ।

भाष्ये सप्तमीपक्षे दोषान्तरमाह—अनुदात्तविशेषणं चेदिति । एकाच इति परविशेषणं चेदित्यपि बोध्यम् । विहितविशेषणपक्षे दोषाभावात् । सन इट्प्रतिषेध इति । अन्यथा आवृत्तिकृतद्वित्वेन श्रूयमाणैकाच्त्वस्य बाधितत्वात्स न स्यादिति भावः । षष्ठीपक्षेऽपि दोष एवेत्याह—सनन्तस्यापीति ।

* ७ । ४ । ३० वा० १ † गमहनजनखनघसां लोपः क्ङित्यनङि ६ । ४ । ९८
‡ द्विर्वचनेऽचि १ । १ । ५९ .

अस्तु तर्हि सन्यङन्तस्य ।

सन्यङन्तस्येति चेदशेः सन्यनिटः ॥ ४ ॥

सन्यङन्तस्येति चेदशेः सन्यनिटो द्विर्वचनं वक्तव्यम् । इयक्षमाणा भृगुभिः सजोषाः* ॥ यस्यापि सन्यङोः परतो द्विर्वचनं तेनाप्यत्रावश्यमिडभावे यत्नः कर्तव्यः । किं कारणम् ? अशेर्हि प्रतिपदमिड्विधीयते 'स्मिपूङ्रञ्ज्वशां सनि' [ ७ । २ । ७४ ] इति । तेनैव द्वितीयद्विर्वचनमपि न भविष्यति ।

अथवा नैतदशे रूपम् । यजेरेष च्छान्दसो वर्णलोपः । तद्यथा— तुभ्येदमग्ने† । तुभ्यमिदमग्न इति प्राप्ते । अम्बानां चरुम् । नाम्बानां चरुमिति प्राप्ते । आव्याधिनीरुगणाः‡ । सुगणा इति प्राप्ते । इष्कर्तारमध्वरस्य+ । निष्कर्तारमध्वरस्येति प्राप्ते । शिवा उद्रस्य भेषजी । शिवा रुद्रस्य भेषजीति प्राप्ते ।

अश्यर्थो वै गम्यते । कः पुनरंशेरर्थः ? अंश्नोतिर्व्याप्तिकर्मा । [ एवं तर्हि ] यजिरप्यश्यर्थे वर्तते । कथं पुनरन्यो नामान्यस्यार्थे वर्तते ? बह्वर्था अपि धातवो भवन्तीति । तद्यथा— वपिः प्रकिरणे दृष्टश्छेदने चापि वर्तते— केशान्वपतीति । ईडिः स्तुतिचोदनायाच्ञासु दृष्ट ईरणे चापि वर्तते—अग्निर्वा इतो वृष्टिमीट्टे, मरुतोऽमुतश्च्यावयन्ति । करोतिरयमभूतप्रादुर्भावे दृष्टो निर्मलीकरणे चापि वर्तते— पृष्ठं कुरु,

प्र०—इयक्षमाणा इति । अश्नोतेः सन् । 'स्मिपूङ्रञ्ज्वशां सनी'ति प्राप्त इट् छान्दसत्वान्न भवति । द्विर्वचनं, हलादिः शेषः, 'सन्यत'इतीत्वम्, 'अभ्यासस्यासवर्णे' इतीयङ्, षत्वकत्वषत्वानि । 'पूर्ववत्सन'इत्यात्मनेपदं शानच् । अचिक्षमाणा इति तु षष्ठीपक्षे प्राप्नोति । तेनैवेति । यथा छान्दसत्वादिण्न भवत्येवं द्वितीयद्विर्वचनमपि । तदभावात्प्रथमद्विर्वचनम् । वर्णलोप इति ।

उ०—नन्वश्नातेः सनि परस्मैपदित्वादियक्षमाणा इति न सिध्यतीत्यत आह–अश्नोतेरिति । द्विर्वचनमिति । अशेरश्–अश् इतीति भावः । अचिक्षमाणा इति । अश् स इत्यत्र 'पूर्वत्रासिद्धीयमद्वित्वे' इति परत्वात्कुत्वादिषु कृतेषु द्वितीयैकाचः'क्ष'इत्यस्य द्वित्वे हलादिः शेषः । ततः पूर्वत्रासिद्धीयमित्यस्य 'द्वित्वे

* यजु० १७ । ६९      † ऋ० ५ । ११ । ५      ‡ यजु० ११ । ७७
\+ ऋ० ८ । १४० । ५      १–'रश्नोत्यर्थः' पा० ।      २–'अशूङ् व्याप्तौ संघाते च ( धातुपाठे स्वादौ ) । 'अश्नुते' व्याप्तिकर्मा ( निघण्टौ २ । १८ ) ।      ३–क्वचिन्न ।

४० ‡

पादौ कुरु । उन्मृदानेति गम्यते । निक्षेपणे चापि दृश्यते– कटे कुरु, घटे कुरु, अश्मानमितः कुरु । स्थापयेति गम्यते ॥ एवं तर्हि—

दीर्घकुत्वप्रसारणषत्वमधिकस्य द्विर्वचनात् ॥ ५ ॥

दीर्घत्वं द्विर्वचनाधिकस्य न सिध्यति— चिचीषति तुष्टूषति । समुदायस्य समुदाय आदेशस्तत्र संप्रमुग्धत्वात्प्रकृतिप्रत्ययस्य नष्टः सन्भवति । तत्राजन्तानां सनीति* दीर्घत्वं न प्राप्नोति ।

इदमिह संप्रधार्यम्— दीर्घत्वं क्रियतां द्विर्वचनमिति किमत्र कर्तव्यम् ? परत्वाद्दीर्घत्वम् । नित्यं द्विर्वचनम् । कृतेऽपि दीर्घत्वे प्राप्नोत्यकृतेऽपि प्राप्नोति । दीर्घत्वमपि नित्यम् । कृतेऽपि द्विर्वचने प्राप्नोत्यकृतेऽपि प्राप्नोति । अनित्यं दीर्घत्वम्, न हि कृते द्विर्वचने प्राप्नोति । किं कारणम् ? समुदायस्य समुदाय आदेशस्तत्र संप्रमुग्धत्वात्प्रकृतिप्रत्ययस्याजन्तता नास्तीति दीर्घत्वं न प्राप्नोति । द्विर्वचनमप्यनित्यम् । अन्यस्य कृते दीर्घत्वे प्राप्नोत्यन्यस्याकृते, शब्दान्तरस्य च प्राप्नुवन्विधि-

प्र०—यियक्षमाणा इति प्राप्ते यकारस्य लोपः । उपेयप्राप्त्यर्थत्वादुपायानां धातूनां चानेकार्थत्वात्तन्नियम आदराभावः ।

दीर्घकुत्वेति । यस्माद्द्विर्वचनादाधिक्यमुपजायते तस्माद्दीर्घत्वादीनि न सिध्यन्ति । समुदायादेशत्वात्संप्रमुग्धत्वात् । यदा तु सन्यङोः परतो द्विर्वचनं तदा प्रत्ययसंप्रमोहाभावाद्दीर्घत्वादीनि सिध्यन्ति । द्विर्वचनाधिकस्येति । द्विर्वचनेन शब्दान्तरेणादेशेनाधिकत्वाद्दीर्घाद्यप्रसिद्धिः । स्थाने द्विर्वचने चायं दोषो न तु द्विःप्रयोगे, तत्र प्रकृतिप्रत्यसंमोहाभावात् । 'सर्वे सर्वपदादेशा'इत्याश्रयेण संप्रमोहः ॥ प्रागेव दीर्घत्वं भविष्यति ततो द्विर्वचनमिति मत्वाह—इदमिहेति । नित्यं द्विर्वचनमिति आकृतिपक्षे शब्दान्तरप्राप्त्यभावात् । अनित्यमिति । व्यक्तिपक्ष इति भावः ।

उ०—कर्तव्ये कृते च तदाश्रयस्य कार्यान्तरे कर्तव्येऽसिद्धत्वं ने'त्यर्थात् 'कुहोश्चु'रिति चुत्वे 'सन्यत' इतीत्वमिति भावः । तदभावादिति । अपवादाभावादुत्सर्गप्रवृत्तिरितिभावः ।

'अधिकस्य द्विर्वचना'दिति हेतुगर्भमभिधानमित्याह—यस्मादिति । आधिक्येऽपि द्विःप्रयोगद्विर्वचनेऽक्षतिरित्याह—समुदायादेशत्वादिति । षष्ठीत्पुरुषः । संप्रमुग्धत्वादिति । प्रकृतिप्रत्यययोरित्यर्थः । द्विर्वचनेनेति । शब्दान्तररूपादेशरूपद्विर्वचनेनेत्यर्थः । ननु प्रकृतिप्रत्ययैकदेशयोरयमादेश इति कथं प्रकृतिप्रत्ययसंमोहोऽत आह—सर्वे इति । अवयवसंमोहद्वारकस्तत्संमोह इत्यपि बोध्यम् । आकृतीति । प्रथमैकाच्त्वाकृतेरेकत्वात् । वस्तुत इदमग्रे भाष्ये एवोच्यते इति न किञ्चिदेतत् । भाष्ये—अजन्तता नास्तीति ।

* अज्झनगमां सनि ६ । ४ । १६

रनित्यो भवति । उभयोरनित्ययोः परत्वाद्दीर्घत्वम् ।। यत्तर्हि नाकृते द्विर्वचने दीर्घत्वं तन्न सिध्यति— जुहूषतीति† । [ दीर्घत्व ] ।

कुत्वं द्विर्वचनाधिकस्य न सिध्यति— जिघांसति जङ्घन्यते । किं कारणम् ? समुदायस्य समुदाय आदेशस्तत्र संप्रमुग्धत्वात्प्रकृतिप्रत्ययस्य नष्टो हन्तिर्भवति । तत्राभ्यासाद्धन्तिहकारस्येति‡ कुत्वं न प्राप्नोति । [ कुत्व ] ।

संप्रसारणं च द्विर्वचनाधिकस्य न सिध्यति— जुहूषति जोहूयते । समुदायस्य समुदाय आदेशस्तत्र संप्रमुग्धत्वात्प्रकृतिप्रत्ययस्य नष्टो ह्वयतिर्भवति । तत्र ह्वः सम्प्रसारणमभ्यस्तस्येति* संप्रसारणं न प्राप्नोति ।। नैष दोषः । वक्ष्यति ह्येतद् ह्वोऽभ्यस्तनिमित्तस्येति§ । यावता चेदानीं 'ह्वोऽभ्यस्तनिमित्तस्ये'त्युच्यते सोऽप्यदोषो भवति यदुक्तं 'यत्तर्हि नाकृते द्विर्वचने दीर्घत्वं तन्न सिध्यती'ति । [ सम्प्रसारण ] ।

षत्वं च द्विर्वचनाधिकस्य न सिध्यति—पिपक्षति यियक्षति । समुदायस्य समुदाय आदेशस्तत्र सम्प्रमुग्धत्वात्प्रकृतिप्रत्ययस्य नष्टः सन्भवति । तत्रेण्कुभ्यामुत्तरस्य प्रत्ययसकारस्येति+ षत्वं न प्राप्नोति ।। इदमिह संप्रधार्यम्—द्विर्वचनं क्रियतां षत्वमिति किमत्र कर्तव्यम् ? परत्वात्षत्वम् । पूर्वत्रासिद्धे षत्वम्, सिद्धासिद्धयोश्च नास्ति संप्रधारणा ।

प्र०—जुहूषतीति । ह्वातुमिच्छतीति सन् अत्राकृते द्विर्वचनेऽभ्यस्तत्वाभावात्संप्रसारणाभावाद्दीर्घाप्रसङ्ग इति पूर्वं द्विर्वचनं ततः संप्रसारणं ततो 'हल' इति दीर्घत्वात्परत्वा'दज्झनगमां सनी'ति दीर्घत्वम् ।

उ०—अजन्ताङ्गता नास्तीत्यर्थः । प्रकृतिप्रत्ययसंमोहादङ्गत्वाप्रतीतिरिति भावः । अव्यक्तीति । व्यक्त्योर्दीर्घभावाभावाभ्यां भेदात् । ननु जुहोतेः सनि दीर्घत्वे द्वित्वे जुहूषतीत्यस्य सिद्धे'यत्तर्ही'त्याद्यसङ्गतमत आह—ह्वातुमिति । 'अकृते द्विर्वचने' इत्यस्य—'दीर्घाप्रसङ्ग' इत्यनेनान्वयः । ननु द्वित्वे सम्प्रसारणे 'हल' इति दीर्घत्वेन सिद्धिरत आह—परत्वादिति । वस्तुतो 'हल' इति दीर्घत्वमपि न, प्रकृतिप्रत्ययसंमोहात्सम्प्रसारणान्ताङ्गाभावात् । संप्रसारणं तु सामर्थ्याद्भविष्यतीति बोध्यम् । भाष्ये—सोऽप्यदोष इति । द्वित्वात्प्राक् संप्रसारणे परत्वाद्दीर्घे च सिद्धेरिति भावः । नास्ति सम्प्रधारणेति । 'पूर्वत्रासिद्धीयमद्वित्वे' इत्यनाश्रित्ये-

† अभ्यस्तस्य च ६ । १ । ३३ ‡ अभ्यासाच्च ७ । ३ । ५५  १-ह्वोऽभ्यस्तस्येति' पा० ।
* ६ । १ । ३२-३३  § अभ्यस्तनिमित्तेऽनभ्यस्तप्रसारणार्थम् ६ । १ । ३२-३३ वा० ३
+ आदेशप्रत्यययोः ८ । ३ । ५६

## आवृध्योश्चाभ्यस्तविधिप्रतिषेधः ॥ ६ ॥

आवृध्योश्चाभ्यस्ताश्रयो विधिः प्राप्नोति स प्रतिषेध्यः । ईप्सन्ति ईर्त्संन्ति । ईप्सन् ईर्त्संन् । ऐप्सन् ऐर्त्संन् । किं च स्यात् ? अद्भावो नुम्प्रतिषेधो जुस्भाव इत्येते विधयः प्रसज्येरन् ॥ नैष दोषः । उक्ता अत्र परिहाराः§ ।

## सङाश्रये च समुदाय ः समुदायादेशत्वाज्झलाश्रये चाव्यपदेश आमिश्रत्वात् ॥ ७ ॥

सङाश्रये च कार्ये समुदायस्य समुदायादेशत्वाज्झलाश्रये चाव्यदेशः । किं कारणम् ? 'आमिश्रत्वात्' । आमिश्रीभूतमिवेदं भवति । तद्यथा— क्षीरोदके संपृक्ते । आमिश्रत्वान्न ज्ञायते कियत्क्षीरं कियदुदकमिति, कस्मिन्वावकाशे क्षीरं कस्मिन्नवकाश उदकमिति । एवमिहाप्यामिश्रत्वान्न ज्ञायते 'का प्रकृतिः, कः प्रत्ययः, कस्मिन्वावकाशे प्रकृतिः, कस्मिन्नवकाशे प्रत्यय' इति । तत्र को दोषः ? सङि* 'झली'-ति कुत्वादीनि† न सिध्यन्ति ॥ इदमिह संप्रधार्यम्—द्विर्वचनं क्रियतां कुत्वादीनीति किमत्र कर्तव्यम् ? परत्वात्कुत्वादीनि । पूर्वत्रासिद्धे कुत्वादीनि, सिद्धासिद्धयोश्च नास्ति संप्रधारणा ।

एवं तर्हि 'पूर्वत्रासिद्धीयमद्विर्वचन' इति वक्तव्यम् । तच्चावश्यं वक्तव्यम् । विभाषिताः प्रयोजयन्ति—द्रोग्धा द्रोग्धा । द्रोढा द्रोढा‡ । यावता चेदानीं 'पूर्वत्रा-

प्र०—क्षीरोदके इति । व्यक्तिविशेषविवक्षायां जातिपरत्वादेकवद्भावो न कृतः । सप्तम्येकवचनं वा । प्रत्ययसकारसहितस्य प्रथमस्यैकाचो द्विर्वचनादामिश्रत्वम् । सङीति । सनः सकारा-

उ०—दमुक्तम् ॥ उक्ता अत्रेति । 'उभे अभ्यस्त'मिति सूत्रे इति भावः ।

झलाश्रये चेति—स्वस्वरूपकथनम् । प्रत्ययसकारसहितस्येति । अवयवसंमोहद्वारकस्तत्संमोह इत्यर्थः । झलादौ सङादौ प्रत्यये कुत्वादिविधानादिति भावः । भाष्ये—कस्मिन्नवकाशे इति । सर्वथा प्रकृतिप्रत्ययसंमोहपरमेतद् द्रष्टव्यम् । विधय इति । घत्वादयः । अत्र घत्वादिषु कृतेषु पश्चान्नित्यवीप्सयोरिति

§ ६ । १ । ५ सूत्रभाष्ये 'अद्भावे तावन्न दोषः' इत्यारम्य पतञ्जलिनोक्ताः परिहाराः (पृ० ३०५)।

* सङि लत्वसलोपसंयोगादिलोपकुत्वदीर्घत्वानि ८ । २ । २२ वा० १

'मुतिज्किद्भ्यः सन्' ( ३ । १ । ५ ) इति सनः सकारादारभ्य 'तिसस्झि········वहिमहिङ' ( ३ । ४ । ७८ ) इत्यामहिङो ङकारेण 'सङ्' इति प्रत्याहारः । तेन धातुविहितानां सर्वप्रत्ययानां सङ्ग्रहो भवति ।

† चोः कुः ८ । २ । ३०

सिद्धीयमद्विर्वचन'इत्युच्यते सोऽप्यदोषो भवति यदुक्तं 'षत्वं न सिध्यती'ति ।

इह स्थाने द्विर्वचने णिलोपोऽपरिहृतः§ । सन्यङोः परतो द्विर्वचन इटो द्विर्वचनं वक्तव्यम् । सन्यङन्तस्य द्विर्वचने हन्तेः कुत्वमपरिहृतम् । तत्र 'सन्यङन्तस्य द्विर्वचनं द्विःप्रयोगश्चे'त्येष पक्षो निर्दोषः । तत्रेदमपरिहृतं 'सन इट् प्रतिषेध'इति । एतस्यापि सप्तमे परिहारं वक्ष्यति 'उभयविशेषणत्वात्सिद्ध'-मिति × । कथं जेघ्नीयते ? वक्ष्यत्येतद् 'यङ्प्रकरणे हन्तेर्हिंसायां घ्नी'ति+ ॥ ९ ॥

## दाश्वान्साह्वान्मीढ्वाँश्च ॥ ६ । १ । १२ ॥

'दाश्वा'निति किं निपात्यते ?

### दाशेर्वसौ द्वित्वेट्प्रतिषेधौ ॥ १ ॥

दाशेर्वसौ द्वित्वेट्प्रतिषेधौ निपात्येते । दाश्वांसो दाशुषः सुतम्¶ । दाश्वान् ।
'साह्वा'निति किं निपात्यते ?

### सहेर्दीर्घत्वं च ॥ २ ॥

किं च ? द्वित्वेट्प्रतिषेधौ च । साह्वान्बलाहकः । साह्वान् ।

प्र०—दारभ्य महिङो ङकारेण प्रत्याहारः । विभाषिता इति । विधय इत्यर्थः ॥ ९ ॥

दाश्वान् । 'षह मर्षणे' इति चौरादिकस्य 'आधृषाद्वे'ति विभाषितणिचः क्वसौ 'साह्वा'-

उ०—द्वित्वे सतीष्टसिद्धिः । अन्यथा द्रोग्धा-द्रोढेत्यनिष्टप्रसङ्ग इति भावः । भाष्ये—इह स्थाने द्विर्वचन इति । तस्मात्तदाश्रयणमशक्यमिति भावः । 'सन्यङोः परत' इति पक्षे स्थाने द्विर्वचनत्वे द्विःप्रयोगत्वे चेटो द्वित्वं वक्तव्यमिति सोऽपि दुष्टः । षष्ठीपक्षे—हन्तेः कुत्वमपरिहृतमिति । 'स्थाने द्विर्वचनत्वे इति शेषः । भाष्ये—उभयविशेषणत्वादिति । 'एकाच' इत्यस्य विहितविशेषणत्वाद्वेत्यपि बोध्यम् । कथं जेघ्नीयत इति । ईडागमपक्षेऽल्लोपस्य स्थानिवत्वाद्धन एव द्वित्वं प्राप्नोतीति भावः ॥ ९ ॥

दाश्वान् । द्वित्वेट्प्रतिषेधाविति । द्वित्वेटोः प्रतिषेधावित्यर्थः । ननु भ्वादिपठितसहेरात्मनेपदित्वात्परस्मैपदमपि निपात्यमित्यत आह—चौरादिकस्येति । 'षह षुह चक्यर्थे' इति दैवादिकस्य त्वर्थासङ्गतिरिति भावः । विभाषितणिच इति । अत्र णिच्पक्षे वृद्धया सिद्धे दीर्घत्वनिपातनं किमर्थमिति केचित् । सह्वानि-

‡ वा द्रुहमुहष्णुहष्णिहाम् ८ । २ । ३३ इत्यादिविधयः 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्यस्य प्रयोजनानि । अन्यथा 'नित्यवीप्सयोः' ८ । १ । ४ इति द्वित्वे कर्तव्ये 'वा द्रुहे'त्यादीनामसिद्धत्वात्पूर्वं द्वित्वं स्यात् ।

§ स्थाने द्विर्वचने णिलोपवचनं समुदायादेशत्वात्; यच्च सन्यङन्तस्य द्विर्वचने ६ । १ । १ वा० १६; १७  × ७ । २ । १० वा० ६  + ७ । ४ । ३० वा० १ भाष्ये ।

¶ ऋ० १ । ३ । ७

'मीढ्वा'निति किं निपात्यते ?

मिहेर्ढत्वं च ॥ ३ ॥

किं चं ? यच्च पूर्वयोः । किं च पूर्वयोः ? द्वित्वेट्प्रतिषेधौ दीर्घत्वं च । मीढ्वस्तोकाय तनयाय मृड* । यथेयमिन्द्र मीढ्वः† ॥ मह्यर्थो वै गम्यते । कः पुनर्मह्यर्थः ? मंहतिर्दानकर्मा । अतः किम् ? इत्वमपि निपात्यम् ।

मह्यर्थ इति चेन्मिहेस्तदर्थत्वात्सिद्धम् ॥ ४ ॥

मह्यर्थ इति चेन्मिहिरपि मह्यर्थे वर्तते । कथं पुनरन्यो नामान्यस्यार्थे वर्तते ? बह्वर्था अपि धातवो भवन्तीति । अस्ति पुनरन्यत्रापि क्वचिन्मिहिर्मह्यर्थे वर्तते ? अस्तीत्याह । मिहेर्मेघः[3] । मेघश्च कस्माद्भवति ? अपो ददातीति ।

द्विर्वचनप्रकरणे कृञादीनां के ॥ ५ ॥

द्विर्वचनप्रकरणे कृञादीनां क उपसङ्ख्यानं कर्तव्यम् । चक्रम् चिक्लिदम् चक्नसमिति ॥ कादिष्विति वक्तव्यम् । इहापि यथा स्यात्—बभ्रुः ययुरिति ।

चरिचलिपतिवदीनामच्याक्चाभ्यासस्य ॥ ६ ॥

चरिचलिपतिवदीनामचि द्वे भवत इति वक्तव्यम् । आक् चाभ्यासस्य । चराचरः चलाचलः पतापतः वदावदः ।

प्र०—निति रूपम् । चक्रमिति । 'घञर्थे कविधान'मिति कः । ययुरिति । 'यो[4] द्वे चे'त्यत्र 'द्वे चे'ति न वक्तव्यं भवतीति भावः ।

चराचर इति । 'अभ्यासस्यानची'ति वचनाद्धलादिशेषाभावः ।

उ०—त्यस्यासाधुत्वायेत्यन्ये । भाष्ये—[3]मेघः कस्मात्–अपो ददातीति । यद्यपि 'मिह सेचने' इति धात्वर्थानुसारात्सिञ्चतीति मेघ इति वक्तुं शक्यं, तथाप्यल्पजलदातृत्वं तथा सति प्रतीयेत, बहुजलदातृत्वं च ततः प्रतीयत इति भावः । ननु 'यो द्वे चे'ति कुप्रत्ययसन्नियोगेन द्वित्वविधानाद्ययुरिति सिद्धमत आह—यो द्वे इति । ननु चराचरादौ हलादिः शेषः स्यादत आह—अभ्यासस्येति । अभ्यासस्य यदुच्यते तदचि नेति

१–क्वचित्र । * ऋ० २ । ३३ । १४ † ऋ० १० । ८५ । २५

२–'महिर्दानकर्मा' पा० । ३–'मेघः कस्मात् ? मेहतीति सतः' । ( निरु० नैघ० २ । ६ । ४ ) 'मेहति सिञ्चति वर्षणभूमिं मेघः ।' इति देवराजयज्वा ( १ । १० ) ।

४–'यो द्वे च' ( पं० उणा० १ । २१ ) उणादीनां पाणिनीयत्वे लाघवमर्थवद्भवति ।

हन्तेर्घश्च ॥ ७ ॥

हन्तेर्घश्च वक्तव्यः । अचि द्वे भवत आक् चाभ्यासस्य । घनाघनः+ ।

पाटेर्णिलुक् च दीर्घश्चाभ्यासस्योक् च ॥ ८ ॥

पाटयतेर्णिलुक्च वक्तव्यः । अचि द्वे भवत इति वक्तव्यम्, दीर्घश्चाभ्यासस्य, ऊक्चागमः । पाटूपटः ।

द्विर्वचनं यणयवायावादेशाल्लोपोपधालोपणिलोपकिकिनोरुत्त्वेभ्यः ॥९॥

यणयवायावादेशाल्लोपोपधालोपणिलोपकिकिनोरुत्त्वेभ्यो‡ द्विर्वचनं भवति (पूर्व)विप्रतिषेधेन ॥ द्विर्वचनस्यावकाशः–बिभिदतुः बिभिदुः । यणादेशस्यावकाशः–दध्यत्र मध्वत्र । इहोभयं प्राप्नोति–चक्रतुः चक्रुरिति ।

अयवायावादेशानामवकाशः—चयनम् चायकः । लवनम् लावकः । द्विर्वचनस्य स एव । इहोभयं प्राप्नोति—चिचाय चिचयिथ । लुलाव लुलविथ ।

आल्लोपस्यावकाशः—गोदः कम्बलदः† । द्विर्वचनस्य स एव । इहोभयं प्राप्नोति–ययतुः ययुः । तस्थतुः तस्थुः ।

उपधालोपस्यावकाशः—श्लेष्मघ्नं* मधु । पित्तघ्नं घृतम् । द्विर्वचनस्य स एव । इहोभयं प्राप्नोति—जग्मतुः जग्मुः । जघ्नतुः जघ्नुः ।

णिलोपस्यावकाशः–कारणा हारणा । द्विर्वचनस्य स एव । इहोभयं प्राप्नोति–आटिटत् आशिशत् ।

उ०—तदर्थः । 'अत्र लोपोऽभ्यासस्ये'ति सूत्रे भाष्ये पठितव्यमिदम् । इदं वचनं वैकल्पिकं द्रष्टव्यं, 'रात्रिञ्चर' इत्यादिप्रयोगदर्शनात् । तत्र 'ट' इत्यन्ये । 'पाटूपट' इत्यत्र पूर्ववद्धलादिः शेषाभावः ।

'द्विर्वचनं यणयवायावे'ति वार्तिकं 'द्विर्वचनेऽचीत्यत्र व्याख्यातम् । स्वपिस्यमीति । नन्वस्य द्वित्वापवादत्वाद्विप्रतिषेधासङ्गतिरिति चेन्न, 'असम्भवे बाधकत्व'मिति वार्तिकमते तदुदाहरणसत्त्वेनाक्षतेः ।

+ यजु० १७ । ३३

‡ इको यणचि; एचोऽयवायावः ६ । १ । ७७; ७८; आतो लोप इटि च; गमहनजनखनघसां लोपः क्ङित्यनङि; णेरनिटि ६ । ४ ६४; ९८; ५१; उदोष्ठ्यपूर्वस्य; बहुलं छन्दसि ७ । १ । १०२; १०३; ( आदृगमहनजनः किकिनौ लिट् च ३ । २ । १७१ ) १–क्वचिन्न ।

† आतोऽनुपसर्गे कः ३ । २ । ३ * अमनुष्यकर्तृके च ३ । २ । ५३

उत्त्वस्यावकाशः—निपूतोः पिण्डाः । द्विर्वचनस्य स एव । इहोभयं प्राप्नोति—मित्रावरुणौ ततुरिः । दूरे ह्यध्वा जगुरिः+ ॥ द्विर्वचनं भवति पूर्वविप्रतिषेधेन ।

स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ? न वक्तव्यः । इष्टवाची 'पर'शब्दः* । विप्रतिषेधे परं यदिष्टं तद्भवतीति ।

## द्विर्वचनात्प्रसारणात्त्वधात्वादिविकाररीत्त्वेत्त्वेत्त्वोत्त्व गुणवृद्धिविधयः ॥ १० ॥

द्विर्वचनात्प्रसारणात्त्वधात्वादिविकारीत्वेत्त्वेत्त्वोत्त्वगुणवृद्धिविधयो भवन्ति विप्रतिषेधेन ॥ द्विर्वचनस्यावकाशः—विभिदतुः विभिदुः । संप्रसारणस्यावकाशः—इष्टम् सुप्तम्† । इहोभयं प्राप्नोति—ईजतुः ईजुरिति । नैतदस्ति प्रयोजनम् । अस्त्वत्र द्विर्वचनम्, द्विर्वचने कृते परस्य रूपस्य कितीति† भविष्यति, पूर्वस्य 'लिटयभ्यासस्योभयेषाम्' [ ६ । १ । १७ ] इति । इदं तर्हि—सोषुप्यते‡ ।

इदं चाप्युदाहरणम् ईजतुः ईजुरिति । ननु चोक्तमस्त्वत्र द्विर्वचनम् द्विर्वचने कृते परस्य रूपस्य कितीति भविष्यति पूर्वस्य लिटयभ्यासस्योभयेषामिति ? न सिध्यति । 'न संप्रसारणे संप्रसारणम्' [ ३७ ] इति प्रतिषेधः प्राप्नोति । अकारेण व्यवहितत्वान्न भविष्यति । एकादेशे कृते नास्ति व्यवधानम् । 'एकादेशः पूर्वविधौ स्थानिवद्भवती'ति स्थानिवद्भावाद्व्यवधानमेव । एवं तर्हि समानाङ्गग्रहणं तत्र चोदयिष्यति × ।

आत्त्वस्यावकाशः¶—ग्लाता म्लाता । द्विर्वचनस्य स एव । इहोभयं प्राप्नोति—जग्ले मम्ले ॥ धात्वादिविकाराणामवकाशः§—नमति सिञ्चति । द्विर्वचनस्य स

प्र०—सोषुप्यत इति । 'स्वपिस्यमिव्येञां यङी'ति संप्रसारणम् ॥ जग्ल इति । भावे लकारः ।

उ०—भाष्ये—इदं चापीति । 'न सम्प्रसारणे' इति ज्ञापकात्पूर्वं परस्य सम्प्रसारणं पश्चात्पूर्वस्येति भावः । एकादेशे कृत इत्यादिर्व्यवधानमेवेत्यन्तोऽग्रन्थस्तथा हि पूर्वं द्वित्वे तत उत्तरखण्डे संप्रसारणे पूर्वखण्डस्थाकारेणाद्गुणातिरिक्तैकादेशस्य प्राप्तिरेव न । तत्र कृते स्थानिवत्त्वाद्व्यवधाने निषेधाप्रवृत्त्या पूर्वयकारस्य सम्प्रसारणे

+ ऋ० १० । १०८ । १

† वचिस्वपियजादीनां किति ६ । १ । १५

× समानाङ्गग्रहणं च ६ । १ । ३७ वा० २

§ धात्वादेः षः सः; णो नः ६ । १ । ६४; ६५

* विप्रतिषेधे परं कार्यम् १ । ४ । २

‡ स्वपिस्यमिव्येञां यङि ६ । १ । १९

¶ आदेच उपदेशेऽशिति ६ । १ । ४५

एव । इहोभयं प्राप्नोति—ननाम सिषेच सस्नौ ॥ रीत्वस्यावकाशः*—मात्रीयति पित्रीयति । द्विर्वचनस्य स एव । इहोभयं प्राप्नोति—चेक्रीयते जेह्रीयते ॥ ईत्वस्यावकाशः†— पीयते गीयते । द्विर्वचनस्य स एव । इहोभयं प्राप्नोति— पेपीयते जेगीयते ॥ इत्वोत्वयोरवकाशः‡ — आस्तीर्णम् निपूर्ताः । द्विर्वचनस्य स एव । इहोभयं प्राप्नोति— आतेस्तीर्यते निपोपूर्यते ॥ गुणवृद्ध्योरवकाशः+—चेता गौः¶ । द्विर्वचनस्य स एव । इहोभयं प्राप्नोति—चिचाय चिचयिथ । लुलाव लुलविथ । नैतदस्ति प्रयोजनम् । अस्त्वत्र द्विर्वचनम्, द्विर्वचने कृते परस्य रूपस्य गुणवृद्धी भविष्यतः ।

इदं तर्हि प्रयोजनम्— इयाय इययिथ । ननु चात्राप्यस्तु द्विर्वचनम्, द्विर्वचने कृते परस्य रूपस्य गुणवृद्धी भविष्यतः । न सिध्यति । अन्तरङ्गत्वात्सवर्णदीर्घत्वं

प्र०—'अशिती'ति पर्युदासपक्षे विप्रतिषेधः । प्रसज्यप्रतिषेधे त्वनैमित्तिकत्वमन्तरङ्गम् । एवं सत्वनत्वे अपि ।

चेक्रीयत इति । यङि 'रीङ् ऋत' इति रीङादेशः ॥ उवोणेति । अमन्त्र इति प्रतिषेधा-

उ०—परेणोकारेण पूर्वत्वे इजतुरिति स्यात् तदभावे पूर्वस्य यङि इयेजतुरिति स्यादिति पूर्वं संप्रसारणप्रवृत्तये विप्रतिषेधस्यावश्यकत्वेन विप्रतिषेधप्रत्याख्यानवादिन ईदृशोक्त्यसङ्गत्यापत्तेः । 'लिट्यभ्यासस्ये'ति सूत्रस्योभयेषांग्रहणसामर्थ्येन सर्वतः पूर्वं प्रवृत्तेर्भाष्ये वक्ष्यमाणतया पूर्वमेकादेशप्रवृत्तेर्वक्तुमशक्यत्वाच्च । तस्मादकारेण व्यवहितत्वान्न भविष्यतीत्युत्तरमेवं तर्हि समानाङ्गस्यैव ग्रन्थ इति बोध्यम् । एवं तर्हि समानाङ्गेति । एव च व्यवहितेऽपि निषेधप्रवृत्तिरित्यर्थः । भावे लकार इति । न तु कर्तरि, परस्मैपदप्रसङ्गादिति भावः । आत्वमन्तरङ्गमिति । एवञ्चान्तरङ्गबहिरङ्गयोर्विप्रतिषेधोऽयुक्त इति भावः । इदं च 'द्विर्वचनेऽची'ति स्थानिवत्त्ववारणायावश्यकमिति तात्पर्यम् । एवं सत्वनत्वे अपीति । ते अप्यनैमित्तिकत्वादन्तरङ्गे इति तयोर्विप्रतिषेधायोग इत्यर्थः ।

भाष्ये—न ह्यन्तरेणेति । एवं चासवर्णाच्परात्म्यासेवर्णादीनां इयङादिविधानं व्यर्थमेव स्यादिति ज्ञापकमित्यर्थः । न चासवर्णग्रहणाकरणेनापीदं सिद्धम् । ईषतुरित्यादावपीयङापत्तेः । एवञ्चासवर्णग्रहणविशिष्टं सूत्रमेतदर्थज्ञापकमित्यर्थः । यद्यप्यसवर्णग्रहणं ज्ञापकमित्येवोक्तं तथाप्युपपादनग्रन्थेन सम्पूर्णसूत्रस्यैव ज्ञापकता लभ्यते । न चान्तरङ्गत्वाद्दीर्घेऽपि पूर्वान्तवत्त्वेनाभ्यासत्वादिवर्णत्वाच्च णल्यसवर्णे इयङ्विधानेन सूत्रं चरितार्थं, न अचाचिश्न्विन्त्यनेन सिद्धिः, वृद्धिबाधनार्थत्वादिति वाच्यं, कृदतिङ्सूत्रस्थभाष्योक्तरीत्याचः

* रीङ् ऋतः ७ । ४ । २७    † घुमास्थागापाजहातिसां हलि ६ । ४ । ६६

‡ ऋत इद्धातोः; उदोष्ठ्यपूर्वस्य ७ । १ । १००; १०२

\+ सार्वधातुकार्धधातुकयोः ७ । ३ । ८४; अचो ञ्णिति ७ । २ । ११५

¶ गोतो णित् ७ । १ । ९०    १—क्वचिन्न ।

प्राप्नोति । 'वार्णादाङ्गं बलीय' इति गुणवृद्धी भविष्यतः । किं वक्तव्यमेतत् ? न हि । कथमनुच्यमानं गंस्यते ? आचार्यप्रवृत्तिर्ज्ञापयति 'वार्णादाङ्गं बलीयो भवती'ति यदय'मभ्यासस्यासवर्णे' [ ६ । ४ । ७८ ] इत्यसवर्णग्रहणं करोति । कथं कृत्वा ज्ञापकम् ? न ह्यन्तरेण गुणवृद्धी असवर्णपरोऽभ्यासो भवति ।

नैतदस्ति ज्ञापकम् । अर्त्यर्थमेतत्स्यात्— इयृतः इयृथः । उवोख उवोखिथ । यत्तर्हि 'दीर्घ इणः किति' [ ७ । ४ । ६९ ] इति दीर्घत्वं शास्ति । एतस्याप्यस्ति वचने प्रयोजनम् । किम् ? सवर्णदीर्घबाधनार्थमेतत्स्यात् । स यथैव तर्हि सवर्णदीर्घत्वं बाधते, एवं यणादेशमपि बाधेत । एवं तर्हि यणादेशे× योगविभागः करिष्यते । इदमस्ति इणो यण् भवति+ । तत 'एरनेकाचः' । एश्चानेकाच इणो यण्भवति । ततो'ऽसंयोगपूर्वस्य' । 'एरनेकाच' इत्येव ।

असवर्णग्रहणमेव तर्हि ज्ञापकम् । ननु चोक्तमर्त्यर्थमेतत्स्यादिति । नैकमुदाहरणमसवर्णग्रहणं प्रयोजयति ।

प्र०—द्विजादेरित्याम्न भवति । नैकमुदाहरणमिति । अन्यथा'ऽभ्यासस्यार्ते'रिति ब्रूयात् । 'उवोखे'त्यादौ तु च्छान्दसत्वाद्यद्याम्न दृश्यते तत इयङादिप्रकरणे 'तन्वादीनां छन्दसि बहुल'मित्युवङ् भविष्यति, यथा 'सुवर्गो लोक' इति भावः ।

उ०—परस्मिन्निति स्थानिवत्त्वेन तदप्रवृत्तेः । तद्ध्वनयन्नाह—नैतदस्ति ज्ञापकमर्त्यर्थमेतत्स्यादिति । असवर्णग्रहणस्यैव ज्ञापकत्वे तत्खण्डनावसरे तस्यैव व्यावर्त्यं दर्शयितुमुचितम् ।

उवोखेति भाष्ये । इयङादिप्रकरणे 'तन्वादीनां छन्दसि बहुल'मिति वचनमजानत इदमपि फलमित्याशयः । यत्तर्हीति । अन्तरङ्गत्वात्सवर्णदीर्घे हि तद्वैयर्थ्यं स्पष्टमेव । ज्ञापिते तूत्तरखण्डे यण्प्रवृत्त्या तत्सार्थक्यं स्पष्टमेव । समानाश्रये एवैतत्प्रवृत्तिरिति तु नाग्रह इति भावः । एवं तर्हीति । केचित्तु यणादेशेऽप्यस्य वैयर्थ्याभावेन तद्बाधे न मानमित्येकदेश्युक्ती इमौ पूर्वपक्षसिद्धान्ताविति वदन्ति ।

कैयटे—अन्यथाभ्यासस्यार्तेरिति । न च श्तिपा निर्देशाद्यङ्लुकि न स्यादिति वाच्यं, 'भवतेर' इतिवत्तत्सत्त्वात् । 'श्तिपा शपे'त्यस्य भाष्येऽदर्शनाच्च । उदाहरणान्तरेऽन्यथासिद्धिमाह—उवोखेत्यादौ त्विति । भाष्यप्रामाण्येन 'ए' 'ओ' इत्याद्याचारक्विबन्तानां लिटि, उवोखाकीयिषतीत्यादेश्चानभिधानेन न तत्र दोष इति भावः । आचारक्विबन्तेभ्य आमा भाव्यमित्यन्ये । यदि पूर्वमिति । तदानादिष्टादचः पूर्वत्वसत्त्वादिति भावः ।

१—क्वचिन्न । × एरनेकाचोऽसंयोगपूर्वस्य ६ । ४ । ८२ + इणो यण् ६ । ४ । ८१

एवमपि स्थानिवद्भावादियङ् न प्राप्नोति । अथ सत्यपि विप्रतिषेधे यावता स्थानिवद्भावः कथमेवैतत्[1]सिध्यति । [ कस्मादेवात्र[2] न भवति ? ] योऽनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भावः, आदिष्टाच्चैषोऽचः पूर्वो[3] भवति ॥ १२ ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठस्याध्यायस्य
प्रथमे पादे प्रथममाह्निकम् ।

## ष्यङः संप्रसारणं पुत्रपत्योस्तत्पुरुषे ॥ ६ । १ । १३ ॥

### ष्यङः संप्रसारणे पुत्रपत्योस्तदादावतिप्रसङ्गः ॥ १ ॥

ष्यङः संप्रसारणे पुत्रपत्योस्तदादावतिप्रसङ्गो भवति । पुत्रपत्यादौ संप्रसारणं प्राप्नोति । कारीषगन्ध्यापुत्रकुलम् कारीषगन्ध्यापतिकुलम् ।

प्र०—एवमपीति । यदि पूर्वं द्विर्वचनं क्रियते पश्चाद्गुणवृद्धी इत्यर्थः ॥ १२ ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे षष्ठस्याध्यायस्य
प्रथमे पादे प्रथममाह्निकम् ।

ष्यङः संप्रसारणम् । कारीषगन्ध्यापुत्रकुलमिति । पुत्रस्य कुलं पुत्रकुलं, कारीषगन्ध्यायाः पुत्रकुलं कारीषगन्ध्यापुत्रकुलम् । यद्यप्यत्र तदादिविधिर्नास्ति तथापि पुत्रपतिशब्दानन्तर्याश्रयसंप्रसारणप्रसङ्गश्चोद्यते । यदा तु 'कारीषगन्धीपुत्रस्य कुल'मिति विग्रहस्तदा 'कारीषगन्धीपुत्रकुल'मिति भवत्येव ।

उ०—भाष्ये-अथ सत्यपि विप्रतिषेधे इति । द्विर्वचनेन परविप्रतिषेधे सति परत्वाद्गुणवृद्धयोः पूर्वं सत्योरित्यर्थः । कथमिवेत्यस्य विवरणं 'कस्मादेवात्र न भवती'ति । 'स्थानिवद्भाव' इति शेषः । आदिष्टाच्चैष इति । 'द्विर्वचनेऽची'ति कार्यातिदेश' इतिमते इदम् । तदा हि परत्वाद्वृद्धौ पूर्वोक्तपूर्वविप्रतिषेधेन आयादेशात्पूर्वमैशब्दस्य द्वित्वेऽभ्यासह्रस्वत्वे सिद्धम् । वस्तुतस्तत्र रूपातिदेश एव सिद्धान्त इति परत्वाद्वृद्धावपि स्थानिवत्त्वं दुर्वारमतो'ऽभ्यासस्यासवर्णे' इति सूत्रारम्भसामर्थ्यादभ्यासकार्ये तदुत्तरखण्डादेशस्य तत्कार्यप्रतिबन्धकस्थानिवत्त्वाभावकल्पनमावश्यकमिति विप्रतिषेधाभावेऽपि न दोष इति भगवतो गूढं तात्पर्यम् ॥ १२ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते षष्ठस्याध्यायस्य
प्रथमे पादे प्रथममाह्निकम् ।

ष्यङः सम्प्रसारणम् । पुत्रशब्दान्तेन कुलशब्दस्य समासे सम्प्रसारणस्येष्टत्वादाह—पुत्रस्येति । यद्यपीति । अल्ग्रहणाभावादिति भावः ।

१—'कथमिवैतत्' पा० । २—क्वचिन्न । ३—'पूर्व इति' पा० ।

'वर्णग्रहणात्सिद्धम्'। वर्णग्रहण एतद्भवति यस्मिन्विधिस्तदादाविति*, न चेदं वर्णग्रहणम्।

वर्णग्रहण इति चेत्तदन्तप्रतिषेधः ॥ २ ॥

वर्णग्रहण इति चेत्तदन्तस्य प्रतिषेधो वक्तव्यः। पुत्रपत्यन्ते संप्रसारणं प्राप्नोति। कारीषगन्ध्यापरमपुत्रः कारीषगन्ध्यापरमपतिः। कौमुदगन्ध्यापरमपुत्रः कौमुदगन्ध्यापरमपतिः। किं कारणम्? यत्र हि तदादिविधिर्नास्ति तदन्तविधिना तत्र भवितव्यम्।

प्र०—वर्णग्रहणादिति। वर्णग्रहणे तदादिविधिविज्ञानादिह च वर्णाग्रहणात्सिद्धमित्यर्थः। न च तदादिविध्यभावेऽपि तदादौ पुत्रापत्यानन्तर्याश्रयसंप्रसारणप्रसङ्गः, यस्मात्तत्पुरुष इत्यनेनाधारः ष्यङन्तस्य पुत्रपत्योश्च तत्पुरुष उपात्तः तत्पुरुषावयवत्वं पुत्रपत्योः ख्यापयति। यथा 'वृक्षे शाखे'ति वृक्षः शाखायाः प्रत्यासत्त्यावयवी प्रतीयते। यथा च 'वृक्षात्पर्णं पतती'त्यपादानत्वेनाप्युपात्तो वृक्षः पर्णस्यावयवित्वेन प्रत्यासत्त्या गम्यते। यत्तु कारकसूत्रे भाष्य उक्तं—'न ज्ञायते कङ्कस्य वा कुररस्य वे'ति, तच्छब्दव्यापाराभिप्रायेण। इह च पुत्रपत्यादौ तत्पुरुषे यौ पुत्रपती तौ ष्यङन्तावयवस्य तत्पुरुषस्यावयवौ न भवत इति संप्रसारणाभावः।

तदन्तप्रतिषेध इति। तदन्तविध्यपवादस्तदादिविधिरिति तदभावे तदन्तविधिना भाव्यम्। तत्पुरुषेण सन्निधापितमुत्तरपदं पुत्रपतिभ्यां विशेष्यत इत्यस्ति तदन्तविधिप्रसङ्गः।

उ०—वर्णग्रहणादिति हेतोर्वैयधिकरण्यं स्वरूपासिद्धत्वं वा परिहरति—वर्णग्रहणे इति। तदादिविधिवाक्ये'ऽल्ग्रहणे' इत्युक्तेरिह सिद्धमत्र वर्णग्रहणाभावादिति वार्तिकार्थ इति भावः। तत्पुरुषावयवत्वमिति। तत्पुरुषचरमावयवत्वमित्यर्थः। समासस्यावयवद्वयसाकाङ्क्षत्वादिति भावः। प्रत्यासत्त्येति। 'कस्य शाखे'त्याकाङ्क्षायामाधारत्वेन श्रुतत्वात्स एवावयवी प्रतीयत इत्यर्थः। तच्छब्दव्यापारेति। शब्दस्तदवयवत्वाप्रतीतेरिति भावः। कदाचिदन्यावयवत्वस्यापि प्रतीतेरनियमाभिप्रायं तदित्यन्ये। पुत्रपत्यादौ तत्पुरुषे—पुत्रकुलपतिकुलरूपे। ष्यङन्तावयवस्येति। ष्यङन्तपूर्वावयवस्य तत्पुरुषस्य चरमावयवौ न भवत इत्यर्थः। एतेनावयवावयवस्य समुदायावयवत्वमस्त्येवेति परास्तम्।

१—वार्तिकमेतदिति नागेशभट्टः, भाष्यमिदमित्यन्ये।

* यस्मिन् विधिस्तदादावल्ग्रहणे १।१।७२ वा० २९ पृ० ५६१

## सिद्धं तूत्तरपदवचनात् ॥ ३ ॥

सिद्धमेतत् । कथम् ? 'उत्तरपदवचनात्' । 'पुत्रपत्योरुत्तरपदयो'रिति वक्तव्यम् ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । पूर्वपदमुत्तरपदमिति सम्बन्धिशब्दावेतौ । सति पूर्वपद उत्तरपदं भवति, सति चोत्तरपदे पूर्वपदमिति, न चात्र पुत्रपती उत्तरपदे ।

इहापि तर्हि न प्राप्नोति—कारीषगन्धीपुत्रः कारीषगन्धीपतिरिति । किं कारणम् ? 'पूर्वपद'मित्युच्यते, न ह्यत्र ष्यङ् पूर्वपदमस्ति । ष्यङन्तमेतत्पूर्वपदम् । कथम् ? 'प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवती'ति ।

यदि 'प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवती'त्युच्यते परमकारीषगन्धीपुत्रः परमकारीषगन्धीपतिरिति न सिध्यति । 'प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवत्यस्त्रीप्रत्ययेने'ति ।

यद्यस्त्रीप्रत्ययेनेत्युच्यते अतिक्रान्तः कारीषगन्ध्यामतिकारीषगन्ध्यः, तस्य पुत्रोऽतिकारीषगन्ध्यपुत्रः अतिकारीषगन्ध्यपतिरित्यत्रापि प्राप्नोति । अस्त्रीप्रत्ययेनानुपसर्जनेन । यो ह्युपसर्जनं स्त्रीप्रत्ययो भवत्येषा तत्र परिभाषा 'प्रत्ययग्रहणे यस्मात्स

---

प्र०—सिद्धं त्विति । तत्पुरुषे नियतसंनिधाने पूर्वपदोत्तरपदे । विशेषणविशेष्यभावे च कामचारादुत्तरपदेन पुत्रपती विशेष्येते । तत्रोत्तरपदान्तयोः पुत्रपत्योरसंभवादुत्तरपदे एव पुत्रपती गृह्येते । पुत्रपतिभ्यां तूत्तरपदं न विशेष्यत इति तदन्तविध्यभावः । ष्यङन्तमिति ।

---

उ०—तत्पुरुष इति । उत्तरपदस्य सामर्थ्यात्सन्निहितस्य वचनाद्विशेषणत्वेन व्याख्यानात्सिद्धमिति वार्तिकयोजनेति भावः । भाष्ये—सम्बन्धिशब्दाविति । ननूत्तरपदग्रहणस्याकर्तव्यत्वे तत्पुरुषाक्षिप्तत्वं हेतुर्न त्वनयोः सम्बन्धिशब्दत्वं, यदि वा पूर्वपदग्रहणं सूत्रे स्यात्तदैवं वक्तुं योग्यमिति चेन्न, एतौ समासस्य सम्बन्धिबोधकौ शब्दावतः समासबोधकतत्पुरुषपदेन स्वार्थस्य सम्बन्ध्याकाङ्क्षायामेतयोराक्षेप इत्यर्थेनादोषात् । नन्वेकस्योत्तरपदशब्दस्यैव प्रकृतोपयोगितया सम्बन्धिशब्दत्वमुच्यतां किं द्वयोरुक्त्येति चेन्न, तयोः परस्परसापेक्षत्वेनैकेन निराकाङ्क्षप्रतिपत्त्यभावात् । तदाह—सति पूर्वपदे इत्यादि । उत्तरति—ष्यङन्तमिति । तद्व्याचष्टे—प्रत्ययग्रहणेति । स्त्रीप्रत्ययग्रहणे तदादिनियम एव निषिध्यते न तु तदन्तविधिरिति भावः । भाष्ये—स्त्रीप्रत्ययेनानुपसर्जनेनेति । प्रत्यासत्त्या यस्य समुदायस्य स्त्रीप्रत्ययान्तत्वमानेयं तदर्थं प्रत्यनुपसर्जनत्वमेवैतत्परिभाषानिमित्तमिति बोध्यम् । अत्रोपसर्जनत्वं लौकिकमेव, स्त्रीप्रत्यये शास्त्रीयस्य तस्यासम्भवात् ।

तदादेर्ग्रहणं भवती'ति ।

ष्यङन्ते यावन्तो यणस्तेषां सर्वेषां संप्रसारणं प्राप्नोति । वाराहीपुत्रः तार्णकर्णीपुत्रः तत्राप्रत्ययस्थस्य प्रतिषेधो वक्तव्यः ।

**यथागृहीतस्यादेशवचनादप्रत्ययस्थे सिद्धम् ॥ ४ ॥**

'निर्दिश्यमानस्यादेशा भवन्ती'त्येवमप्रत्ययस्थस्य न भविष्यति ।

**अनन्त्यविकारेऽन्त्यसदेशस्य वा ॥ ५ ॥**

अथवा'नन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवती'त्येषा परिभाषा कर्तव्या ।

कः पुनरत्र विशेष एषा वा परिभाषा क्रियेताप्रत्ययस्थस्य वा प्रतिषेध उच्येत ? अवश्यमेषा परिभाषा कर्तव्या । बहून्येतस्याः पतिभाषायाः प्रयोजनानि । कानि ?

**प्रयोजनं न संप्रसारणे संप्रसारणम् ॥ ६ ॥**

'न संप्रसारणे संप्रसारणम्' [ ६ । १ । ३७ ] इत्येतन्न वक्तव्यं भवति । कथं व्यधेर्विद्ध इति ? 'अनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवती'ति न दोषो भवति ।

नैतदस्ति प्रयोजनम् । क्रियते न्यास एव ।

**सान्तमहतो दीर्घत्वे ॥ ७ ॥**

सान्तमहतो दीर्घत्वे प्रयोजनम्* । पयांसि यशांसि । 'प'इत्यस्यापि प्राप्नोति । अनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवतीति न दोषो भवति ।

एतदपि नास्ति प्रयोजनम् । 'नोपधायाः' [ ६ । ४ । ७ ] इति तत्र वर्तते ।

एवमप्यनांसि मनांसीत्यत्रापि प्राप्नोति । नैष दोषः । सान्तसंयोगेन नोपधां विशेषयिष्यामः—'सान्तसंयोगस्य नोपधाया' इति ।

एवमपि हंसशिरांसि ध्वंसशिरांसीत्यत्रापि प्राप्नोति । नैष दोषः । हम्मतेर्हंसः ।

प्र०—प्रत्ययग्रहणपरिभाषया तदन्तस्य कार्यित्वात् ॥ हंसशिरांसीति । अनुस्वारस्यासिद्धत्वाद्ध-

उ०—अन्त्यसदेशस्येति । सदेशशब्दः समीपपरः । अन्त्येन समानो देशो यस्येत्यक्षरार्थः । समानदेशत्वं चेतराव्यवधाने इति भावः ॥ क्रियते न्यास एवेति । अन्त्यसमानदेशत्वाभावात् 'न सम्प्रसारणे सम्प्रसारण'मित्यस्यावश्यकत्वादिति भावः । एवमप्यनांसीति । सान्तसंयोगान्तस्य यो नकारस्तदुपधाया इत्यर्थं इति भावः । सान्तसंयोगेनेति । सान्तसंयोगावयवनस्योपधाया इत्यर्थं इति भावः । नन्वनुस्वारे नोपधत्वाभावोऽत आह-

* सान्तमहतः संयोगस्य ६ । ४ । १०

कः पुनराह 'हम्मतेर्हंस' इति । किं तर्हि ? हन्तेर्हंसः, हन्त्यध्वानमिति'[1] ।

एवं तर्हि सर्वनामस्थान† इति वर्तते, सर्वनामस्थानपरतया सान्तसंयोगं विशेषयिष्यामः सान्तसंयोगेन नोपधाम्—'सर्वनामस्थानपरस्य सान्तसंयोगस्य नोपधाया' इति ।

## अन्कारान्तस्याल्लोपे ॥ ८ ॥

अन्कारान्तस्याल्लोपे प्रयोजनम्‡—तद्गणा तद्गणे इति । 'त'इत्यत्रापि प्राप्नोति । 'अनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवती'ति न दोषो भवति ।

एतदपि नास्ति प्रयोजनम् । अनाकारं विशेषयिष्यामः—'अनो योऽकार इति ।

एवमप्यनसा अनसे इत्यत्रापि प्राप्नोति । अन्कारेणाङ्गं विशेषयिष्यामोऽनाकारम्—'अन्कारान्तस्याङ्गस्यानो योऽकार' इति ।

एवमप्यनस्तद्गणा अनस्तद्गणे इत्यत्रापि प्राप्नोति । एवं तर्हि कार्यकालं[2] संज्ञा-

प्र०—काराकारस्य दीर्घप्रसङ्गः । हन्तेरिति । 'वृत्वदिहनी'ति लक्षणसद्भावात् । हन्तीति । गच्छतीत्यर्थः ।

उ०—अनुस्वारस्येति । भाष्ये—हम्मतेर्हंस इति । एवञ्च नोपधात्वाभाव इति भावः । लक्षणसद्भावादिति । न हि हम्मतेस्तथा लक्षणमस्तीत्यर्थः । भाष्ये—एवं तर्हीति । अङ्गांशे प्रत्ययस्योत्थिताकाङ्क्षत्वादियमेकदेश्युक्तिः ।

एवं तर्हि कार्यकालमिति । अयं भावः—तत्पक्षे भस्येति श्रुते भपदार्थजिज्ञासायां 'यचि भ'मित्युपस्थितेन तच्छक्तिग्रहे प्रकृतविषयके जाते तस्य बोधः । तत्र लक्ष्यानुरोधादुपस्थित'यची'त्यस्य तन्त्रादिन्यायाश्रयेणान्विशेषणत्वमपीति । यत्तु 'तत्पक्षे हि यचि भमित्यादेर्यत्र भशब्दस्तत्र यचीति, यस्मात्प्रत्ययविधिस्तदादिप्रत्यय इति चोपतिष्ठत इत्यर्थः । एवं चोपस्थितपदानां पदैकवाक्यतयान्वये यथेष्टमभिसम्बन्धः । एतेन—प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षत्वेन तत्रैव 'यचीत्यादीनामन्वय उचित इत्यपास्तम् । भाष्यप्रामाण्येन लक्ष्यानुरोधेन चेदृशे विषये उत्थाप्याकाङ्क्षयैवान्वयाङ्गीकारादिति भाव' इति तन्न; एवं हि 'उपस्थितमिदं भवति यचि भ'मिति भाष्यासङ्गतेः । तदा हि 'उपस्थितमिदं भवति यची'त्येवेति वक्तुमुचितम् ।

१—'हन्त्यध्वानमिति हंसः' ( दश० उणा ६ । २१ ) । 'हन्तीति हंसः निर्लोभः सूर्यः पक्षिभेदो श्वभेदः शरीरस्थो वायुर्वा' इत्युणादिवृत्तौ ( ३ । ६२ ) महर्षि दयानन्दः ।

यथेह गत्यर्थाद्धन्तेर्हंसः साधित एवं 'गोघ्ने'ऽपि गत्यर्थो हन्तिर्ग्राह्यः । गतेस्त्र्यर्थाः—ज्ञानं गमनं प्राप्तिश्चेति । ततश्च गावो हन्यन्ते प्राप्यन्ते दुग्धादिपानाय यस्मै स गोघ्नोऽतिथिरिति वेदानुमतोऽर्थो ग्राह्यः । अघ्न्याया हिंसनं त्वन्याय्यं प्रतिषिद्धत्वात् ।

† सर्वनामस्थाने चासम्बुद्धौ ६ । ४ । ८　　‡ अल्लोपोऽनः ६ । ४ । १३४

२—'कालं हि' पा० ।

परिभाषं यत्र कार्यं तत्रोपस्थितं द्रष्टव्यम् । 'भस्ये'त्युपस्थितमिदं भवति 'यचि भम्' [ १ । ४ । १८ ] इति, तत्र यजादिपरतयान्कारं विशेषयिष्यामोऽनाकारम्—'यजादिपरस्यानो योऽक्कार' इति ।

## मृजेर्वृद्धिविधौ ॥ ९ ॥

मृजेर्वृद्धिविधौ प्रयोजनम्§ । न्यमार्ट् । अटोऽपि वृद्धिः प्राप्नोति । 'अनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवती'ति न दोषो भवति ॥ एतदपि नास्ति प्रयोजनम् । यथापरिभाषित'मिको गुणवृद्धी' [ १ । १ । ३ ] इतीक एव वृद्धिर्भविष्यति ॥ एवमपि मिमार्जिषतीत्यत्र प्राप्नोति । अस्तु । अभ्यासनिर्ह्रासेन ह्रस्वो भविष्यति† ।

## वसोः संप्रसारणे च ॥ १० ॥

वसोः संप्रसारणे च प्रयोजनम्× । विदुषः पश्य । विदिवकारस्यापि प्राप्नोति । 'अनन्त्यविकारेऽन्त्यसदेशस्ये'ति न दोषो भवति ॥ एतदपि नास्ति प्रयोजनम् । 'न संप्रसारणे संप्रसारणम्' [ ६ । १ । ३७ ] इति प्रतिषेधो भविष्यति । 'इंद्'कारेण व्यवहितत्वान्न प्राप्नोति । एवं तर्हि 'निर्दिश्यमानस्यादेशा भवन्ती'ति न भविष्यति ।

## युवदीनां च ॥ ११ ॥

युवादीनां च सम्प्रसारणे प्रयोजनम्+ । यूनः यूना यूने । यकारस्यापि प्राप्नोति । 'अनन्त्यविकारेऽन्त्यसदेशस्ये'ति न दोषो भवति ॥ एतदपि नास्ति प्रयोजनम् । 'न संप्रसारणे संप्रसारण'मिति न भविष्यति । उक्कारेण व्यवहितत्वान्न

प्र०—यथा परिभाषितमिति । परिभाषितानतिक्रमेणेत्यर्थः ।

उ०—किञ्च पदेकवाक्यतयान्वयेऽपि स्वोपस्थापकोपस्थापिते यतः प्रत्ययविधिस्तदादावेवान्वयापत्तिः । भाष्यप्रामाण्यात्तु मदुक्तार्थ एवोचित इति दिक् । यजादिपरतयेति । 'विधौ परिभात्रे'ति न्यायो नास्त्येवेति भावः । इयमप्येकदेश्युक्तिरुक्तयुक्तेः । आकडारात्संज्ञासु कार्यकालपक्षाभावस्य पूर्वमुपपादितत्वाच्च ।

( भाष्ये ) अभ्यासनिर्ह्रासेनेति । लक्ष्ये लक्षणस्येति न्यायानित्यत्वेन पुनः प्रवृत्तिरिति भावः । पर्जन्यवल्लक्षणप्रवृत्त्या न्यायानित्यत्वाङ्गीकारेण पुनः प्रवृत्तेरनौचित्यादियमप्येकदेश्युक्तिः ।

इद्कारेणेति । 'यून' इत्यादावेकव्यवधाने चरितार्थो निषेधोऽत्र न प्रवर्तत इत्यर्थः ।

§ मृजेर्वृद्धिः ७ । २ । ११४ † ह्रस्वः ७ । ४ । ५९ × वसोः सम्प्रसारणम् ६।४।१३१
१—'दकारेण' इति कीलहार्न पाठः । + श्वयुवमघोनामतद्धिते ६ । ४ । १३३

प्राप्नोति । एकादेशे कृते नास्ति व्यवधानम् । 'एकादेशः पूर्वविधौ स्थानिवद्भवती'ति स्थानिवद्भावाद्व्यवधानमेव । एवं तर्हि समानाङ्गग्रहणं तत्र चोदयिष्यति* ।

## वोँरुपधाग्रहणं च ॥ १२ ॥

वोँश्चोपधाग्रहणं न कर्तव्यं भवति† । इह कस्मान्न भवति—अबिभर्भवान् ? 'अनन्त्यविकारेऽन्त्यसदेशस्ये'ति न दोषो भवति ।

एतदपि नास्ति प्रयोजनम् । क्रियते न्यास एव ।

## आदित्यदादिविधिसंयोगादिलोपकुत्वढत्वभष्भावषत्वणत्वेष्वतिप्रसङ्गः ॥ १३ ॥

आदिविधावतिप्रसङ्गो भवति । 'धात्वादेः षः सः' [ ६ । १ । ६४ ] 'णो नः' [ ६५ ] इहैव स्यात् नेता सोता । इह न स्यात् नमति सिञ्चतीति । आदि ॥ त्यदादिविधि‡—इहैव स्यात् तद् सः । त्यद् स्य इत्यत्र न स्यात् । त्यदादिविधि ॥ संयोगादिलोप§—इहैव स्यात् मङ्क्ता । मङ्क्तव्यमित्यत्र न स्यात् । संयोदिलोप ॥ कुत्व¶—इहैव स्यात् पक्ता । पक्तव्यमित्यत्र न स्यात् । कुत्व ॥ ढत्व×— इहैव स्यात् लेढा । लेढव्यमित्यत्र न स्यात् । ढत्व ॥ भष्भाव+—इहैव स्यात् अभुत्सि । अभुत्सातामित्यत्र न स्यात् । भष्भाव ॥ षत्व**— इहैव स्यात् द्रष्टा । द्रष्टव्यमित्यत्र न

प्र०—अबिभरिति । डुभृञ् लङ्, तिप्सिपोरन्यतरः । शपः श्लुः । द्विर्वचनम् । 'भृञामि'दितीत्वम् । सोतेति । धात्वन्त्यसदेशस्यैव सत्वनत्वप्रसङ्गः । स्य इत्यत्रेति । 'तदोः स सावनन्त्ययो'रिति सत्वं तकारस्यान्त्यसदेशत्वाभावान्न प्राप्नोति । मङ्क्तव्यमिति । पदान्त्य-

उ०—समानाङ्गेति । एवं च व्यवधानेऽपि न दोष इति भावः ।

पदान्त्यसदेशत्वाभावादिति । 'पदस्ये'त्यधिकारात्पदावयवयोः संयोगाद्योः स्कोर्लोप इति सूत्रार्थ इति भावः । एवं णत्वान्ताः पदाधिकारप्रयुक्ता एव दोषा बोध्याः ।

* समानाङ्गग्रहणं च ६ । १ । ३७ वा० २
† वोँरुपधाया दीर्घ इकः ८ । २ । ७६
‡ तदोः सः सावनन्त्ययोः ७ । २ । १०६
§ स्कोः संयोगाद्योरन्ते च ८ । २ । २९
¶ चोः कुः ८ । २ । ३०
× हो ढः ८ । २ । ३१
+ एकाचो बशो भष् झषन्तस्य स्ध्वोः ८ । २ । ३७
** व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ८ । २ । ३६

स्यात् । षत्व ॥ णत्व†– इहैव स्यात् माषवापेण । माषवापाणामित्यत्र न स्यात् । णत्व ।

एते दोषाः समा भूयांसो वा, तस्मान्नार्थोऽनया परिभाषया ।

न हि दोषाः सन्तीति परिभाषा न कर्तव्या, लक्षणं वा न प्रणेयम् । न हि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते, न च मृगाः सन्तीति यवा नोप्यन्ते । दोषाः खल्वपि साकल्येन परिगणिताः, प्रयोजनानामुदाहरणमात्रम् । कुत एतत् ? न हि दोषाणां लक्षणमस्ति । तस्माद्यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा परिभाषा कर्तव्या, प्रतिविधेयं दोषेषु ॥ इदं प्रतिविधीयते—

उदात्तनिर्देशात्सिद्धम् ॥ १४ ॥

यत्रैषा परिभाषेष्यते तत्रोदात्तनिर्देशः कर्तव्यः । ततो वक्तव्यम् 'अनन्त्य-विकारेऽन्त्यसदेशस्य कार्यं भवत्युदात्तनिर्देश' इति ।

स तर्ह्युदात्तनिर्देशः कर्तव्यः ? न कर्तव्यः । यत्रैवान्त्यसदेशश्चानन्त्यसदेशश्च युगपत्समवस्थितौ तत्रैषा परिभाषा भवति, दोषेषु चान्यत्रान्त्यसदेशोऽन्यत्रानन्त्यस-देशः, प्रयोजनेषु पुनस्तत्रैवान्त्यसदेशश्चानन्त्यसदेशश्च । तथाजातीयकानि खल्व-प्याचार्येण प्रयोजनानि पठितानि, यान्युभयवन्ति [ भवन्ति ] । इदमेकं यथा दोष-स्तथा वोरुपधाग्रहणमिति । अविभर्भवान् । तच्चापि क्रियते न्यास एव ॥ १३ ॥

प्र०—सदेशत्वाभावात्संयोगादिलोपाप्रसङ्गः । माषवापाणामिति । विभक्तिस्थस्य नकारस्य पदान्त्यसदेशत्वाभावाण्णत्वाप्रसङ्गः ।

उदात्तनिर्देशादिति । यथा 'स्वरितेनाधिकारः', एवमुदात्तेनैषा परिभाषेत्यर्थः ।

न कर्तव्य इति । सर्वत्रापि परिभाषोपस्थाने दोषाभावात् । यत्रैवेति । विधिनिषेधयो-रेकविषयत्वाश्रयणात् । इदमेकमिति । अविभरित्यत्रान्त्यसदेशस्येकोऽसंभवादन्त्यसदेशस्येकः प्राप्तो दीर्घ उपधाग्रहणेन निवर्त्यते ॥ १३ ॥

उ०—विभक्तिस्थस्येति । 'प्रातिपदिकान्तनुम्विभक्तिषु चे'ति णत्वप्राप्तिः ।

भाष्ये—एते दोषाः समा इति । वार्तिकोक्तप्रयोजनैः समा इत्यर्थः । भूयांसो वेति—दुष्टताप्रतिपादनपरम् ।

एवमुदात्तेनेति । प्रतिज्ञाप्रापितेनेत्यर्थः ॥ विधिनिषेधयोरिति । प्रत्यासत्तेरित्यर्थः । यद्यप्यत्र परिभाषाप्रयोजनानि अन्यथा साधितानि तथाप्यदमुयङिति सिद्धयर्थं 'सान्तमहतः' 'अल्लोपोऽन' इत्यादा-वेकदेश्युक्तान्याख्यानेकक्लेशपरिहारार्थञ्च परिभाषावश्यकीति भावः ॥ १३ ॥

† प्रातिपदिकान्तनुम्विभक्तिषु च ८ । ४ । ११ १—क्वाचित्कमेतत् ।

## बन्धुनि बहुव्रीहौ ॥ ६ । १ । १४ ॥

### मातज्मातृकमातृषु च्यङ् प्रसार्यो विभाषया ।

मातच्—कारीषगन्ध्या मातास्य कारीषगन्धीमातः कारीषगन्ध्यामातः । मातच् ॥ मातृक—कारीषगन्धीमातृकः करीषगन्ध्यामातृकः । मातृक ॥ मातृ—कारीषगन्धीमाता कारीषगन्ध्यामाता ॥ १४ ॥

## ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ॥ ६ । १ । १६ ॥

वयिग्रहणं किमर्थं न वेञ् यजादिषु* पठ्यते, वेञश्च वयिरादेशः क्रियते†, तत्र यजादीनां कितीत्येव* सिद्धम् । तत्रैतस्यान्ङिदर्थोयमारम्भ इति । तच्च न । लिटयमादेशो लिट् च किदेव‡ ॥ अत उत्तरं पठति—

### वयिग्रहणं वेञः प्रतिषेधात् ॥ १ ॥

वयिग्रहणं क्रियते वेञः प्रतिषेधात् । वेञो लिटि प्रतिषेधं वक्ष्यति§ स वयेर्मा भूदिति । यथैव हि वेञ्ग्रहणाद्विधिः प्राप्यते, एवं प्रतिषेधोऽपि प्राप्नोति ।

प्र०—बन्धुनि । कारीषगन्ध्या मातास्येति बहुव्रीहौ कृतेऽस्मादेव वचनान्मातृशब्दस्य मातजादेशः । चकारः स्वरार्थः, तेन पूर्वपदप्रकृतिस्वरत्वं बाधित्वान्तोदात्तत्वं भवति । मातृमातृकशब्दयोश्च भेदेनोपादानान्नद्यृतश्चेति पक्षे समासान्ताभावः ॥ १४ ॥

उ०—बन्धुनि । अस्मादेव वचनादिति । यस्तु 'मातुर्मातच्पुत्रार्थमर्हते' इति, स संबुद्धिमात्रविषयः । प्रकृते च भाष्ये सविसर्गोदाहरणात् तद्विषयत्वाभावः स्पष्ट एव । मात्रा पुत्रस्य श्लाध्यत्वद्योतनाभावश्चेत्याहुः । पूर्वपदप्रकृतिस्वरं—बहुव्रीहित्वात्प्राप्तम्, अस्यापि वचनस्य बहुव्रीहावेव प्रवृत्तेः ॥ १४ ॥

ग्रहिज्या । भाष्ये—वेञो लिटीति । 'वेञ' इति सूत्रेण लिटि सम्प्रसारणं निषिध्यते इति भावः ।

---

* वचिस्वपियजादीनां किति ६ । १ । १५  † वेञो वयिः २ । ४ । ४१
‡ असंयोगाल्लिट् कित् १ । २ । ५  § वेञः ६ । १ । ४०

न वा यकारप्रतिषेधो ज्ञापकोऽप्रतिषेधस्य ॥ २ ॥

न वैष दोषः । किं कारणम् ? यदयं 'लिटि वयो यः' [ ६ । १ । ३८ ] इति वयेर्यकारस्य संप्रसारणप्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो 'न वेञ्ग्रहणाद्वयेः संप्रसारणप्रतिषेधो भवती'ति ।

नैतदस्ति ज्ञापकम् । पित्यभ्यासार्थमेतत्स्यात् । वयेः पित्सु वचनेष्वभ्यासस्य यकारस्य संप्रसारणं मा भूदिति । ननु च वेञ्ग्रहणादेव वयेः पित्स्वपि वचनेष्वभ्यासयकारस्य संप्रसारणप्रतिषेधः सिद्धः । न सिध्यति । किं कारणम् ? 'किती'ति¶ तत्रानुवर्तते ।

एवमपि वयेः पित्सु वचनेष्वभ्यासयकारस्य¹ संप्रसारणं न प्राप्नोति । किं कारणम् ? हलादिशेषेण² बाध्यते । नात्र हलादिशेषः प्राप्नोति । किं कारणम् ? वक्ष्यति ह्येतद् 'अभ्याससंप्रसारणं हलादिशेषाद्विप्रतिषेधेने'ति× ॥ स एष वयेर्यकारस्य संप्रसारणप्रतिषेधः पित्यभ्यासार्थो न ज्ञापकार्थो भवति ।

पित्यभ्यासार्थमिति चेन्नाविशिष्टत्वात् ॥ ३ ॥

पित्यभ्यासार्थमिति चेतन्न । किं कारणम् ? 'अविशिष्टत्वात्' । अविशेषेण प्रतिषेधः, निवृत्तं तत्र कितीति । आतश्चाविशेषेण वेञोऽपि हि पित्सु वचनेष्व-

प्र०—ग्रहिज्या । विकृतिग्रहणमिति । कश्चिद्ब्रूयाद्वेञ इति सूत्रं मा कारि । वयिग्रहणेन वेञो ग्रहणाल्लिटि संप्रसारणप्रतिषेधो भविष्यतीत्याशङ्क्योक्तं—विकृतिग्रहणमिति यद्यपि वयो यकारस्य प्रतिषेध उक्तो न च वेञो यकारोऽस्ति तथापि पुष्कलं परिहारं वक्तुमेतन्नाश्रितम् ।

अथवा 'लिटि वय' इति योगविभागः करिष्यते । तत्र वयिग्रहणेन ग्रहणात्संप्रसारण-प्रतिषेधो भविष्यति । ततो'य' इति द्वितीयो योगो नियमार्थः, यस्य यकारश्चान्यश्चास्ति

उ०—न वा यकारप्रतिषेध इति । न च वयेर्यस्यैव सम्प्रसारणं मा भूदिति नियमार्थमिदम्; एवमपि वयेर्वस्य 'वेञ'इति प्रतिषेधाभावे वेञ्वाचनादित्वे न सम्प्रसारणसिद्धौ वयिग्रहणवैयर्थ्यस्योपपत्तेः ॥ भाष्ये—ज्ञापक इत्यस्य—बोधकं प्रमाणमित्यर्थो बोद्धव्यः ॥ वक्ष्यति ह्येतदिति । अत एव विव्यथे विव्याधेत्यादि सिद्धिः ।

¶ 'वश्चास्यान्यतरस्यां किति' ६ । १ । ३९ इत्यस्मात् ।
१—'अभ्यासस्य यकारस्य' पा० ।
२—'हलादिः शेषेण' पा० ।
× ६ । १ । १७ वा० १

भ्यासस्य संप्रसारणं नेष्यते— ववौ ववियेति । विकृतिग्रहणं खल्वपि प्रतिषेधे* क्रियते, न च विकृतिः प्रकृतिं गृह्णाति ॥ १६ ॥

## लिट्यभ्यासस्योभयेषाम् ॥ ६ । १ । १७ ॥

### ग्रहिवृश्चतिपृच्छतिभृज्जतीनामविशेषः ।

यदुच्यते 'वृश्चेरविशेष' इति तन्न । यद्यत्र रेफस्य संप्रसारणं न स्याद्वकारस्य प्रसज्येत । रेफस्य पुनः संप्रसारणे सत्युरदत्त्वस्य† स्थानिवद्भावात् 'न संप्रसारणे संप्रसारणम्' [ ६ । १ । ३७ ] इति प्रतिषेधः सिद्धो भवति । तस्माद्वक्तव्यं 'ग्रहेरविशेषः पृच्छतिभृज्जत्योरविशेष' इति ।

अथोभयेषांग्रहणं किमर्थम् ? उभयेषामभ्यासस्य संप्रसारणं यथा स्याद्वचिस्वपियजादीनां ग्रहादीनां च‡ । नैतदस्ति प्रयोजनम् । प्रकृतमुभयेषाङ्ग्रहणमनुवर्तते ।

यद्यनुवर्तते 'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति चे'ति यजादीनां ङित्यपि प्राप्नोति । नैष दोषः । सम्बन्धमनुवर्तिष्यते । 'वचिस्वपियजादीनां किति' । ग्रहादीनां ङिति च 'वचिस्वपियजादीनां किति' । ततो 'लिट्यभ्यासस्योभयेषाम्' । 'किति' 'ङिती'ति निवृत्तम् ।

अथवा मण्डूकगतयोऽधिकाराः । यथा मण्डूका उत्प्लुत्योत्प्लुत्य गच्छन्ति तद्वदधिकाराः ।

प्र०—तस्य वयेर्यकारस्यैव निषेधो भवतीत्याशङ्क्योक्तं—विकृतिग्रहणमिति । प्रकृत्या विकृतिर्गृह्यते स्थानिवद्भावान्न तु विकृत्या प्रकृतिर्भिन्नरूपत्वादिति भावः । तदेवं वयिग्रहणं प्रत्याख्यातम् ॥ १६ ॥

लिट्यभ्यासस्यो । ग्रहीति । असति सूत्रे यद्रूपं तदेव सतीत्यभिप्रायेणैतदुक्तम् । भाष्यकारस्तु रेफस्य संप्रसारणे सत्यसति वा विशेषो नास्तीति मत्वा वार्तिककारेणैतदुक्तं

उ०—विकृतिग्रहणं खल्वपीतिभाष्यस्य प्रकृतानुपयोगमाशङ्क्य मन्दमतिशङ्कानिवर्तकत्वेन योजयति—कश्चिदिति । पुष्कलं—युक्ततरम् ॥ १६ ॥

लिट्यभ्यास । वृश्चतावविशेषं वदतो वार्तिककारस्याभिप्रायमाह—असतीति । सूत्राभावे हलदिः शेषेण 'वव्रश्चे'त्यादि रूपं, सत्यपि तदेवेति भावः । भाष्यकारस्त्विति । ग्रहिज्येति योगे वृश्चतिग्रहणस्य वृक्ण इत्याद्यर्थम्, अत्रोभयेषांग्रहणस्य चान्यग्रहाद्यर्थमावश्यकत्वान्न सोऽभिप्राय इति तद्भावः । रेफस्येति । 'लिट्यभ्यासविषये' इत्यादिः । भाष्ये—उरदत्त्वस्येति । तस्याङ्गाधिकारस्थत्वेनाङ्गसंज्ञाद्वारा नियमतः

* लिटि वयो यः ६।१।३८   १—वार्तिकमेतदिति प्रदीपोद्द्योताभ्यां ध्वन्यते । भाष्यमिति केचित् ।
† उरत् ७।४।६६   ‡ वचिस्वपियजादीनां किति; ग्रहिज्यावयि······ङिति च ६।१।१५; १६

अथवैकयोगः करिष्यते—'वचिस्वपियजादीनां किति ग्रहादीनां ङिति चे'ति । ततो 'लिट्यभ्यासस्ये'ति । न चैकयोगेऽनुवृत्तिर्भवति ।

अथवोभयं निवृत्तं तदपेक्षिष्यामहे ।

इदं तर्हि उभयेषांग्रहणस्य प्रयोजनमुभयेषामभ्यासस्य संप्रसारणमेव यथा स्याद्यदन्यत्प्राप्नोति तन्मा भूदिति । किं चान्यत्प्राप्नोति ? हलादिशेषः* । 'अभ्यासंप्रसारणं हलादिशेषाद्विप्रतिषेधेने'ति वक्ष्यति† स पूर्वविप्रतिषेधो न पठितव्यो भवति ।

**अभ्याससंप्रसारणं हलादिशेषाद्विप्रतिषेधेन ॥ १ ॥**

अभ्याससंप्रसारणं [१]भवति हलादिशेषाद्विप्रतिषेधेन । अभ्याससंप्रसारणस्यावकाशः-इयाज उवाप । हलादिशेषस्यावकाशः- बिभिदतुः बिभिदुः । इहोभयं प्राप्नोति-विव्याध विव्यधिथ । अभ्याससंप्रसारणं भवति पूर्वविप्रतिषेधेन ।

स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ?

**न वा संप्रसारणाश्रयबलीयस्त्वादन्यत्रापि ॥ २ ॥**

न वा वक्तव्यः । किं कारणम् ? संप्रसारणाश्रयस्य बलीयस्त्वादन्यत्रापि । संप्रसारणं संप्रसारणाश्रयं च बलीयो भवतीति वक्तव्यम् । अन्यत्रापि नावश्यमिहैव वक्तव्यम् ॥ किं प्रयोजनम् ?

प्र०—तच्चायुक्तमिति मन्यमान आह—यदुच्यत इति । इदं तर्हीति । उभयेषांग्रहणात्पुनः संप्रसारणस्य विधिर्भवन् विध्यन्तरस्य बाधको भवति ।

उ०—पूर्वं परबुद्धेरावश्यकत्वेन परनिमित्ततया'ऽचः परस्मि'न्निति स्थानिवत्त्वमिति भावः ।

उभयेषांग्रहणमिति । वच्यादीनां ग्रह्यादीनां च तत्तत्सूत्रे बोधकं यत्पदं तदनुवर्तते इत्यर्थः । न चैकयोग इति । सङ्ग्राहकवाक्यमेकमिति भावः । ननूभयेषांग्रहणे कृतेऽपि परस्य हलादिः शेषस्य कथं बाधोऽत आह—उभयेषामिति ।

इयाजेति । हलादिः शेषे कृते सम्प्रसारणमत्र सावकाशमिति भावः ।

* हलादिः शेषः ७ । ४ । ६०    † ६ । १ । १७ वा० १

१—'हलादिशेषाद्भवति' पा० ।

प्रयोजनं रमाल्लोपेयङ्यणः ॥ ३ ॥

रम्—भृष्टः भृष्टवान् । संप्रसारणं च प्राप्नोति रम्भावश्च‡ । परत्वाद्रम्भावः स्यात् । सम्प्रसारणं बलीयो भवतीति वक्तव्यम्, सम्प्रसारणं यथा स्यात् । रम् ।

आल्लोपः—जुहुवतुः जुहुवुः । सम्प्रसारणं च प्राप्नोत्याल्लोपश्च§ । परत्वादाल्लोपः स्यात् । सम्प्रसारणं बलीयो भवतीति वक्तव्यम्, सम्प्रसारणं यथा स्यात् ।

सम्प्रसारणे कृते पूर्वत्वं* च प्राप्नोत्याकारलोपश्च । परत्वादाल्लोपः स्यात् । सम्प्रसारणाश्रयं च बलीयो भवतीति वक्तव्यम्, पूर्वत्वं यथा स्यात्† ।

इयङ्—शुशुवतुः शुशुवुः । संप्रसारणं च प्राप्नोतीयङादेशश्च+ । परत्वादियङादेशः स्यात् संप्रसारणं बलीयो भवतीति वक्तव्यम्, संप्रसारणं यथा स्यात् ।

यण्—संप्रसारणे कृते पूर्वत्वं च प्राप्नोति यणादेशश्च¶ । परत्वाद्यणादेशः स्यात् । संप्रसारणाश्रयं च बलीयो भवतीति वक्तव्यम्, पूर्वत्वं यथा स्यात् ।

नैतानि सन्ति प्रयोजनानि । यत्तावदुच्यते 'र'मिति, इदमिह सम्प्रधार्यम्—रम्भावः क्रियतां संप्रसारणमिति किमत्र कर्तव्यम् ? परत्वाद्रम्भावः । नित्यं संप्रसारणम् । कृतेऽपि रम्भावे प्राप्नोत्यकृतेऽपि । रम्भावोऽपि नित्यः । कृतेऽपि सम्प्रसारणे प्राप्नोत्यकृतेऽपि । कथम् ? योऽसावृकारे रेफस्तस्य चोपधायाश्च प्राप्नोति । अनित्यो रम्भावो न हि कृते सम्प्रसारणे प्राप्नोति । किं कारणम् ? न हि वर्णैकदेशा

प्र०—आकारलोपश्चेति । सति चाकारलोपे तस्य स्थानिवद्भावादुवङ् स्यात्ततश्च यणादेशः प्रसज्येत । यणादेशश्चेति । 'एरनेकाच' इत्यनेन ।

उ०—भाष्ये—'पूर्वत्वं च प्राप्नोत्याकारलोपश्चे'त्यत्रत्यं प्रतीकम्—आकारलोपश्चेति । ननु चाकारलोपे किमनिष्टमत आह—सति चेति । इदं च 'संप्रसारणाश्रयञ्च बलव'दित्यस्यैव प्रयोजनं बोध्यम् । एरनेकाच इत्यनेनेति । शु इ अतुसिति स्थितेऽनेकाच्त्वादिकारस्य यण्प्राप्तिरिति भावः । न तूकारस्येको यणीति यण्, तस्य परत्वात् पूर्वत्वेन बाधात् ।

‡ ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ६ । १ । १६; अस्जो रोपधयो रमन्यतरस्याम् ६ । ४ । ४७ § अभ्यस्तस्य च ६ । १ । ३३; आतो लोप इटि च ६ । ४ । ६४

* सम्प्रसारणाच्च ६ । १ । १०८ † अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ६ । ४ । ७७

\+ विभाषा श्वेः ६ । १ । ३०; अचिश्नुधातुभ्रुवां य्वोरियङुवङौ ६ । ४ । ७७

¶ सम्प्रसारणाच्च ६ । १ । १०८; एरनेकाचोऽसंयोगपूर्वस्य ६ । ४ । ८२

वर्णग्रहणेन गृह्यन्ते । अथापि गृह्यन्ते, एवमप्यनित्यः । उपदेश इति वर्तते॥ । तच्चा-वश्यमुपदेशग्रहणमनुवर्त्यं बरीभृज्यत इत्येवमर्थम् ।

आल्लोपेयङ्यण इति¹ । नित्यं सम्प्रसारणम् । अन्तरङ्गं पूर्वत्वम् ।

तदेतदनन्यार्थं संप्रसारणाश्रयं बलीयो भवतीति वक्तव्यं पूर्वविप्रतिषेधो वा वक्तव्यः ॥ उभयं न वक्तव्यम् । उक्तमत्रोभयेषांग्रहणस्य प्रयोजनम् 'उभयेषामभ्यासस्य सम्प्रसारणमेव यथा स्याद्यदन्यत्प्राप्नोति तन्मा भू'दिति ।

व्यचेः कुटादित्वमनस्यञ्णिति संप्रसारणार्थम् ॥ ४ ॥

व्यचेः कुटादित्वमनसीति वक्तव्यम् । किं प्रयोजनम् ? 'अञ्णिति संप्रसारणार्थम्' । अञ्णिति संप्रसारणं यथा स्यात् × । उद्विचिता उद्विचितुम् उद्विचितव्यम् । 'अनसी'ति किमर्थम् ? उरुव्यचाः कण्टकः ॥ १७ ॥

## स्वापेश्चङि ॥ ६ । १ । १८ ॥

चङ्ग्रहणं शक्यमकर्तुम् । कथम् ? ङितीति* वर्तते, न चान्यः स्वापेर्ङिदस्त्यन्य-

प्र०—उपदेश इति । तेनोपदेशे यो रेफस्तस्य रम्भावः॥ उरुव्यचा इति । उरु विचतीति 'मिथुनेऽसिः² पूर्ववच्च सर्व'मित्यसिप्रत्ययः ॥ १७ ॥

स्वापे । ङितीति वर्तत इति । कितीत्येतत्तु चानुकृष्टत्वादस्वरितत्वाद्वा नानुवर्तिष्यत इति भावः । तच्च ङिद्ग्रहणं 'लिट्यभ्यासस्योभयेषा'मित्यत्र नानुवर्तते, लिटो ङितोऽसंभवात् । इहैव त्वनुवर्तते । न चान्य इति । यङ् तावदनेकाच्त्वात्स्वापेर्नास्ति । अपित्सार्वधातुकं तु

उ०—तेनोपदेशे इति । अत एव रीको रेफस्य न निवृत्तिरिति भावः । आल्लोपेयङ्यण इत्यस्य 'यदप्युच्यत' इत्यादिः ॥ मिथुनेऽसिरिति । धातूपपदयोगो मिथुनमिति³ भावः ॥ १७ ॥

स्वापेश्चङि । ननूभयस्मिन्प्रकृते केवलङितीत्यस्यैव कथं संबन्धोऽत आह—कितीत्येतदिति । 'चानुकृष्टं नोत्तरत्रे'त्येतल्लुप्टिचेति सूत्रस्थभाष्यविरुद्धमत आह—अस्वरितत्वाद्वेति । ग्रहिज्येति सूत्रेचेनास्वरितत्वेऽपि संबन्ध इति भावः । व्याख्यानान्नानुवृत्तिरिति तत्त्वम् । ननु ङितीत्यनुवृत्तौ मध्येऽपि सम्बन्धः

§ अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ६ । ४ । ३७

१—कश्चिन्न । × गाङ्कुटादिभ्योऽञ्णिन्ङित् १ । २ । १ * ग्रहिज्यावयि······ङिति च ६ । १ । १६ २—दधपाद्युणादि० ६ । ८२

३—'यत्रोपसर्गोपपदाभ्यां धातोः क्रियासम्बन्धस्तन्मिथुनम्' इति द० उ० वृत्तिः ६ । ८२ 'मिथुनं द्वयोः संयोगो राशिर्वा' इत्युणादिवृत्तौ ( ३ । ५५ ) महर्षिदयानन्दः ।

दतश्चङः ॥ १८ ॥

## न वशः ॥ ६ । १ । २० ॥

### वशेर्यङि प्रतिषेधः ॥ १ ॥

वशेर्यङि प्रतिषेधो वक्तव्यः संप्रसारणस्य । वावश्यते । क्व मा भूत् ? उष्टः उशन्तीति† ॥ स तर्हि तथा प्रतिषेधो वक्तव्यः ? न वक्तव्यः । यङीति वर्तते‡ । एवं तर्ह्यन्वाचष्टे 'यङीति वर्तत' इति । नैतदन्वाख्येयम् 'अधिकारा अनुवर्तन्त' इति । एष एव न्यायो यदुत 'अधिकारा अनुवर्तेर'न्निति ॥ २० ॥

## शृतं पाके ॥ ६ । १ । २७ ॥

किं निपात्यते ?

### श्राश्रप्योः शृभावः ॥ १ ॥

श्राश्रप्योः शृभावो निपात्यते ।

प्र०—विकरणैर्व्यवहितम् । अङादयः स्वापेर्न विहिताः ॥ १८ ॥

न वशः । वशेर्यङीति । यथा 'स्वापेश्चङी'त्यत्र ङिद्ग्रहणानुवृत्त्या चङीति प्रत्याख्यातं तथेहापि ङिद्ग्रहणानुवृत्त्या ङिन्मात्रे प्रतिषेध इत्याशङ्कानिवारणाय वार्तिककारो यङ्ग्रहणानुवृत्तिमन्वाचष्टे। नैतदन्वाख्येयमिति। 'स्वापेश्चङी'त्यत्र चङ्ग्रहणं कृतमेव। ततश्च ङितीत्यस्यानधिकाराद्यङेव संबध्यते, अनन्तरत्वात् ॥ २० ॥

शृतं । श्राश्रप्योरिति । 'श्रा पाके' इत्यदादौ पठ्यते । 'श्रै पाके' इति भ्वादौ । घटा-

उ०—स्यादत आह—तच्चेति । 'अन्यो नास्ती'त्यत्रान्यत्वं कुत इत्यतो भाष्ये—अन्यदतश्चङ इति ॥ १८ ॥

न वशः । ननु स्वापेश्चङीति चङ्ग्रहणेन ङितीत्यस्य निवृत्त्या यङीत्यस्यैवानुवृत्तेर्ङिन्मात्रे प्रतिषेधाप्राप्तेः किं वार्तिकेनेत्यत आह—यथा स्वापेरिति । चङ्ग्रहणं कृतमेवेति । वार्तिकमते स्थितमेव चङ्ग्रहणं भाष्यकृता प्रत्याख्यातमिति ङिद्ग्रहणानुवृत्तिशङ्कानिरासायान्वाख्यानमनर्थकमित्यर्थः । भाष्ये—अधिकारा इति । अधिकारार्थस्वरितगुणयुक्ता इत्यर्थः ॥ २० ॥

शृतं पाके । निपातनसामर्थ्याल्लुग्विकरणालुग्विकरणयोरिति लक्षणप्रतिपदोक्तपरिभाषा च न प्रवर्तते । विरोधाद्वोभयोरप्रवृत्तिरित्याशयेनाह—श्रा पाक इत्यादि । एवञ्चोभयोरप्यत्र निपातनमिति भावः । घटादिषु त्विति । एवञ्चास्यैव सोऽनुवाद इति नातिरिक्तः स इति भावः । भाष्ये—अपीति—हेतुम-

† सार्वधातुकमपित् १ । २ । ४ ‡ स्वपिस्यमिव्येञां यङि ६ । १ । १९

क्षीरहविषोरिति वक्तव्यम् । शृतं क्षीरम्, शृतं हविः । क्व मा भूत् ? श्राणा यवागूः, श्रपिता यवागूरिति ।

## श्रपेः शृतमन्यत्र हेतोः ॥ २ ॥

श्रपेः शृतमन्यत्र हेतोरिति वक्तव्यम् । इह मा भूत्— श्रपितं क्षीरं देवदत्तेन, यज्ञदत्तेनेति ॥ २७ ॥

## प्यायः पी ॥ ६ । १ । २८ ॥

## आङ्पूर्वादन्धूधसोः ॥ १ ॥

आङ्पूर्वादन्धूधसोरिति वक्तव्यम् । आपीनोऽन्धुः, आपीनमूधः । किं

---

प्र०—दिषु तु मित्त्वार्थं 'श्रा पाके' इति पठ्यते । श्रातिश्च कर्मकर्तृविषयस्य पचेरर्थे पच्यमानकर्तृकव्यापारे वर्तते । ततः पक्तृव्यापारे णिजुत्पद्यते । ततश्च पचतीति योऽर्थः स एव श्रपयतीति गम्यते । तत्र यदा श्रातेः क्त उत्पद्यते तदाकर्मकत्वात्कर्तरि भवति, श्रपेस्तु कर्मणि । शृतं क्षीरं स्वयमेव शृतं क्षीरं देवदत्तेन ।

श्रपेः शृतमन्यत्र हेतोरिति । हेतुशब्देन प्रयोजकस्य हेतोर्व्यापारः प्रेषणादिलक्षण उपचारादुच्यते । तेन पक्तुर्यः प्रयोजकस्तदीये व्यापारे पचिप्रकृतिणिज्वाच्ये श्रपयतेरुत्पन्नस्य णिचोऽभिधेये क्षीरहविषोरपि शृतमिति न भवति किं तु श्रपितमिति । तत्र 'श्राश्रप्यो'रिति वचनादाद्यपक्तृलक्षणप्रयोजकव्यापाराङ्गीकरणादन्यत्र हेतोरित्यनेन पाचयितृलक्षणप्रयोजकव्यापारनिषेधः सामर्थ्यादवसीयते । एतच्च पाकग्रहणाल्लभ्यते । द्विविधो हि पाको विक्लित्तिलक्षणो विक्लेदनालक्षणश्च । पाचयितृव्यापारे तु णिचि कृते पाचनालक्षणोऽर्थः प्राधान्येनाभिधीयते न तु पाकलक्षण इति निपातनाभावः ॥ २७ ॥

प्यायः पी । आङ्पूर्वाच्चेति । आङाश्रयणेन नियमद्वयविधानात्केवलस्य सर्वत्र

---

उ०—ण्यन्तनिर्देशः । एतदर्थमेव निपातनाश्रयणम् । ननु ण्यन्तस्य पाकानुकूलव्यापारे वर्तनेऽपि पाकेऽवृत्तेः कथं तत्र निपातनं, यथाकथञ्चित्पाकवृत्तित्वाश्रयणे तु ण्यन्ताण्यन्तावपि निपातनापत्तिरत आह—श्रातिश्चेति । उभयविधोऽपि पच्यर्थः पाकशब्देनोच्यते, अविशेषात् । अन्तर्भावितण्यर्थपच्यर्थस्तु न गृह्यते, तत्त्वस्य गमकसत्त्वे एव स्वीकारादिति भावः । पक्तृव्यापारे इति । 'निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते' इत्युक्तेः ।

स्वतन्त्रप्रयोजकरूपस्य मुख्यहेतोरत्रासंभवादाह—हेतुशब्देनेति । ननु श्राश्रप्योरिति श्रपेरभ्यनुज्ञानादन्यत्रहेतोरित्ययुक्तमत आह—तेन पक्तुरिति । पक्तृलक्षणेति । पक्तुर्लक्षणभूतो धर्मभूतो यः प्रयोजकव्यापार इत्यर्थः । एवं पाचयितृलक्षणेत्यपि व्याख्येयम् । विक्लेदना—विक्लित्त्यनुकूलो व्यापारः । पाचना—तदनुकूलो व्यापारः ॥ २७ ॥

प्यायः पी । 'आङ्पूर्वाच्चैष नियम' इतिभाष्यस्य पुनरुक्तत्वपरिहारायाह—आङाश्रयणेनेति ।

प्रयोजनम् ? नियमार्थम् । आङ्पूर्वादन्धूधसोरेव । क्व मा भूत् ? आप्यानश्चन्द्रमा इति ।

उभयतो नियमश्चायं द्रष्टव्यः– 'आङ्पूर्वादेवान्धूधसोः', 'अन्धूधसोरेवाङ्पूर्वा'– दिति । क्व मा भूत् ? प्रप्यानोऽन्धुः, प्रप्यानमूधः ॥ आङ्पूर्वाच्चैष नियमो द्रष्टव्यः । भवति हि पीनं मुखम्, पीनाः शम्बट्यः, श्लक्ष्णपीनमुखी[1] कन्येति ॥ २८ ॥

## विभाषा श्वेः ॥ ६ । १ । ३० ॥

### श्वेर्लिट्यभ्यासलक्षणप्रतिषेधः ॥ १ ॥

श्वेर्लिट्यभ्यासलक्षणं संप्रसारणं नित्यं प्राप्नोति* तस्य प्रतिषेधो वक्तव्यः । शिश्वियतुः शिश्वियुः ॥ किमुच्यते लिट्यभ्यालसक्षणस्येति, न पुनः कित्लक्षणस्यापि ? कित्लक्षलणमपि हि नित्यमत्र प्राप्नोति† । कित्लक्षणं श्वयतिलक्षणं

प्र०—पीभावः । 'आङ्पूर्वदेवान्धूधसो'रित्यनेन नियमेन तुल्यजातीयत्वादुपसर्गान्तरं निवार्यते न तु केवलः प्यायतिः ॥ २८ ॥

विभाषा श्वेः । लिटः कित्त्वाकित्त्वभेदेन द्वैविध्यादुभयत्र विभाषेयम् । तत्र संप्रसारणपक्षे कृतसंप्रसारणस्य द्विर्वचनान्नास्ति वक्तव्यं, संप्रसारणाभावपक्षे त्वभ्यासस्य 'लिट्यभ्यासस्योभयेषा'मिति संप्रसारणं प्राप्नोतीति मत्वाह—श्वेर्लिटीति । यथैवेति । किल्लक्षणं नित्यं

उ०—ननु आद्यनियमेन केवलस्यापि व्यावृत्तिः स्यादत आह—आङ्पूर्वादेवेति । अन्ये तु—'आङ्पूर्वाच्चैष इति । न त्वन्धूधसोरेव, तयोरप्याङ्पूर्वादेवेति नियमद्वयमित्यर्थः । तथा सति पीनं मुखमित्याद्यसिद्धिः स्यात्तदाह—भवति हीति । अन्धूधसोस्तु केवलाद्भवतीत्यत्र न मानम्, एवञ्च कैयटश्चिन्त्यः । 'तद्व्याख्याने हि पीनोऽन्धुरित्यादेः साधुत्वं लभ्यते, न च तत्र मानमस्ती'त्याहुः । भाष्ये—'श्लक्ष्णपीनमुखीति । 'मुखे'–त्युचितः पाठः । चतुर्थभाष्ये 'स्वाङ्गा'दिति सूत्रेऽ'स्वाङ्गपूर्वपदा'दित्यस्य कर्मधारयार्थकस्यानुवृत्तेरुक्तत्वादिति बोध्यम् । कर्मधारयपूर्वपदो वा बहुव्रीहिर्बोध्यः ॥ २८ ॥

विभाषा श्वेः । ननु शुशुवतुरित्यादावभ्यासेऽपि संप्रसारणस्येष्टत्वात्किमर्थं प्रतिषेधोऽत आह—लिटः कित्त्वेति । किति प्राप्तमकिति चाप्राप्तमिति भावः । अत्र च सूत्रे 'लिड्यङो'रिति वर्तते । कृतसंप्रसारणस्येति । परत्वापूर्वं संप्रसारणमिति भावः । तथाभ्यासेति । विशेषाभावादित्यभिमानः ।

१–'श्लक्ष्णपीनमुखा' इत्युचितः पाठ इति नागेशः । यथा 'कल्याणपाणिपादा' ( भाष्ये ४ । १ । ५४ पृ० ५१५ ) इति ।

* वचिस्वपियजादीनां किति; लिट्यभ्यासस्योभयेषाम् ६ । १ । १५; १७

† वचिस्वपियजादीनां किति ६ । १ । १५

बाधिष्यते। यथैव तर्हि किल्लक्षणं श्वयतिलक्षणं बाधते, एवमभ्यासलक्षणमपि बाधेत।

न ब्रूमोऽपवादत्वात् श्वयतिलक्षणं किल्लक्षणं बाधिष्यत इति। किं तर्हि? परत्वात्। श्वयतिलक्षणस्यावकाशः पिन्ति वचनानि— शुशाव शुशविथ। शिश्वाय शिश्वयिथ। किल्लक्षणस्यावकाशोऽन्ये कितः— शूनः शूनवान्। इहोभयं प्राप्नोति— शिश्वियतुः शिश्वियुरिति। श्वयतिलक्षणं भवति विप्रतिषेधेन।

अभ्यासलक्षणादपि तर्हि श्वयतिलक्षणं भविष्यति विप्रतितिषेधेन। अभ्यासलक्षणस्यावकाशोऽन्ये यजादयः— इयाज उवाप। श्वयतिलक्षणस्यावकाशः परं धातुरूपम्— शुशुवतुः शुशुवुः शुशविथ। श्वयतेरभ्यासस्योभयं प्राप्नोति—शिश्वियतुः शिश्वियुः। श्वयतिलक्षणं भविष्यति विप्रतिषेधेन।

नैष युक्तो विप्रतिषेधः, न हि श्वयतेरभ्यासस्यान्ये यजादयोऽवकाशः। श्वयतेर्यजादिषु यः पाठः सोऽनवकाशस्तस्यानवकाशत्वादयुक्तो विप्रतिषेधः। तस्मात्सुष्ठूच्यते 'श्वयतेर्लिटयभ्यासलक्षणप्रतिषेध' इति ॥ ३० ॥

प्र०—संप्रसारणं परत्वादियं विभाषा बाधते यथा तथाभ्यासलक्षणमपीति भावः। अन्ये यजादय इति। केषुचिदवयवेषु कृतं शास्त्रं समुदाये प्रवृत्तं भवति। न हि श्वयतेरिति। 'यजादीना'मिति व्यवस्थावाच्यादिशब्दोपादानाद्यथापाठं सर्वेषां चोदितत्वात्कार्येण भाव्यम्। सर्वकार्यार्थश्च गणपाठ इति 'किति संप्रसारणं, यजादिपु श्वयतिपाठस्यावकाश' इत्यपि न शक्यते वक्तुम् ॥ ३० ॥

उ०—भाष्ये—वक्ष्यमाणरीत्याभ्यासलक्षणांशे विप्रतिषेधासंभवं मत्वोभयोरप्यपवादत्वादिदं बाधकमिति तदाशयं परिकल्प्याह—न ब्रूमोऽपवादत्वादिति। केषुचिदिति। यथा 'कर्मण्यण्' क्वचित्सावकाश आकारान्तेषु केन बाध्यत इति भावः। भाष्ये—परं धातुरूपमिति। अभ्यासोत्तरखण्डे तदभावो विभाषाफलमिति भावः। अभ्यासस्योभयमिति। 'लिट्यभ्यासस्ये'ति संप्रसारणं, 'विभाषा श्वे'रिति पाक्षिकाभावश्चेत्यर्थः। यथापाठमिति। संमुग्धनिर्देशे हि तथा वक्तुं शक्यम्। अत्र त्ववयवा एव पृथङ्निर्दिष्टा इति भावः। शून इत्याद्यार्थं यजादिपाठः सावकाशः स्यादत आह—सर्वेति। एवं चैतत्कार्योद्देश्यकः पाठोऽनवकाश इति भावः। लिट्परश्वयत्यभ्यासविषयकलक्षणस्योपप्लुतस्याचारितार्थ्यमिति तात्पर्यम्। न च विप्रतिषेधशास्त्रसहकृतेनानेन तदभाव एव कल्प्यतामिति वाच्यं, द्वित्वात्पूर्वं परत्वाद्विभाषाप्राप्त्या द्वित्वोत्तरमभ्यासस्य प्राप्त्यायुगपत्प्राप्त्यभावात्। एतदेवानवकाशत्वोक्त्या भाष्ये सूचितमित्याहुः ॥ ३० ॥

# ह्वः संप्रसारणमभ्यस्तस्य च ॥ ६ । १ । ३२-३३ ॥

## ह्वः संप्रसारणे योगविभागः ॥ १ ॥

ह्वः संप्रसारणे योगविभागः कर्तव्यः । ह्वः संप्रसारणं भवति णौ च संश्चङोः* ततो 'ऽभ्यस्तस्य च' । अभ्यस्तस्य च ह्वः संप्रसारणं भवतीति ॥ किमर्थो योगविभागः ?

## णौ च संश्चङ्विषयार्थः ॥ २ ॥

णौ च संश्चङ्विषये ह्वः संप्रसारणं यथा स्यात् । जुहावयिषति अजूहवत् ।

किं पुनः कारणं न सिध्यति ? 'ह्वोऽभ्यस्तस्ये'त्युच्यते, न चैतद्ह्वोऽभ्यस्तम् । कस्य तर्हि ? ह्वाययतेः । ह्व एतदभ्यस्तम् । कथम् ? 'एकाचो द्वे प्रथमस्य' [ ६।१।१ ] । एवं तर्हि 'ह्वयतेरभ्यस्तस्ये'त्युच्यते, न चात्र ह्वयतिरभ्यस्तः । कस्तर्हि ?

---

प्र०—ह्वः सं । ह्वः संप्रसारणे योगविभाग इति । इहैकमनेकं वा कार्यं विधातुं कालविच्छेदाभावेन निर्देश एकयोग । तत्रैकस्मिन्योगे पठ्यमानेऽव्याप्तिरिति योगविभागः कर्तव्यः । 'ह्वोऽभ्यस्तस्येत्युच्यत' इत्यभिहिते 'एवं तर्हि ह्वयतेरभ्यस्तस्ये'त्यादिकमर्थभेदाभावात्पुनरुक्तमित्याहुः । तत्र पौनरुक्त्यं परिहरन्ति—जिह्वायकीयिषतीत्यादौ संप्रसारणं मा प्रवर्तिष्टेति ह्वयतेरर्थाव्यतिरेको वा रूपाव्यतिरेको वाश्रयितव्यस्तत्र पूर्वग्रन्थोऽर्थव्यतिरेकाश्रयः, उत्तरस्तु रूपव्यतिरेकाश्रयः । इह ह्वायतेरर्थो यत्र न व्यतिरिच्यते, यथा जुहाव जुहविथेति, तत्र संप्रसारणेन भाव्यं न त्वर्थव्यतिरेके । ह्वाययतौ च ण्यर्थस्य प्राधान्याद्व्यतिरिक्तार्थो ह्वयतिरिति पूर्वपक्षः । न चैतदिति । अव्यतिरिक्तार्थस्येति भावः । अव्यतिरिक्तार्थे त्वाश्रीयमाणे जुहूषतीत्यत्र न प्राप्नोति । प्रत्ययार्थस्येच्छायाः प्राधान्यात्प्रकृत्यर्थस्य गुणभावादिति मत्वाह—ह्व एतदिति । णिचि तर्हि युकि कृते रूपस्य व्यतिरिक्तत्वात्संप्रसारणाप्राप्तिरिति मत्वाह—एवं तर्हि

---

उ०—ह्वः संप्रसारणमभ्य । एकमनेकं वेति । यथा 'नद्यादिभ्यो ढ'गित्यादि, 'रथाघ्वोरिचे'त्यादि च । तत्रैकयोगे 'जुहावे'त्यादि सिद्धयति, 'जुहावयिषती'त्यादि न सिद्धयति । ण्यन्तस्याभ्यस्तत्वेऽपि ह्वयतेरभ्यस्तत्वाभावात् । तदाह—अव्याप्तिरिति । भाष्ये 'संश्चङ्विषये' इत्युक्तिरभ्यासेऽपि संप्रसारणार्थेति बोध्यम् । अर्थाव्यतिरेक इति । व्यतिरेको नाम अधिकार्थसंवलितता । तद्विशेषणिकोपस्थितिः । प्रकृतिप्रत्ययाभ्यां तथैवोपस्थितेः । तदभावोऽव्यतिरेकः, तेन स्वार्थप्राधान्यमित्यर्थः । 'आश्रयितव्य' इत्यस्य 'संप्रसारणनिमित्तत्वेने'ति शेषः । ततश्च यत्र ह्वयतिः स्वार्थं प्राधान्येनाभिधत्ते तत्र संप्रसारणमित्यर्थः । रूपाव्यतिरेक इति । रूपभेदाभाव इत्यर्थः । तदेव विशदयति—इह ह्वयतेरित्यादिना । व्यतिरिक्तार्थः—

---

* णौ च संश्चङोः ६ । १ । ३१  १—'अभ्यस्तम्' पा० ।

ह्वाययतिः । ह्वयतिरेवात्राभ्यस्तः । कथम् ? 'एकाचो द्वे प्रथमस्ये'ति ॥ एवमपि—

अभ्यस्तनिमित्तेऽनभ्यस्तप्रसारणार्थम् ॥ ३ ॥

'अभ्यस्तनिमित्त' इति वक्तव्यम् । किं प्रयोजनम् ? 'अनभ्यस्तप्रसारणार्थम्' । अनभ्यस्तस्य प्रसारणं यथा स्यात्— जुहूषति जोहूयते ।

अभ्यस्तप्रसारणे ह्यभ्यासप्रसारणाप्राप्तिः ॥ ४ ॥

अभ्यस्तप्रसारणे ह्यभ्यासप्रसारणस्याप्राप्तिः स्यात् । 'न संप्रसारणे संप्रसारणम्' [ ६ । १ । ३७ ] इति प्रतिषेधः प्रसज्येत । नैष दोषः । व्यवहितत्वान्न भविष्यति ।

समानाङ्गे प्रसारणप्रतिषेधात् प्रतिषेधः ॥ ५ ॥

समानाङ्गे प्रसारणप्रतिषेधात्प्रतिषेधः प्राप्नोति । समानाङ्गग्रहणं तत्र चोदयिष्यति* ।

कृदन्तप्रतिषेधार्थं च ॥ ६ ॥

कृदन्तप्रतिषेधार्थं चाभ्यस्तनिमित्त इति वक्तव्यम् । किं प्रयोजनम् ? ह्वायकमिच्छति ह्वायकीयति । ह्वायकीयतेः सन् जिह्वायकीयिषति ।

स तर्हि निमित्तशब्द उपादेयः, न ह्यन्तरेण निमित्तशब्दं निमित्तार्थो [१]गम्यते । अन्तरेणापि निमित्तशब्दं निमित्तार्थो [२]गम्यते । तद्यथा— 'दधित्रपुसं[३] प्रत्यक्षो ज्वरः' ।

प्र०—ह्वयतेरिति । युगागमस्य तद्भक्ततया नास्ति रूपव्यतिरेक इत्याह— ह्वयतिरिति । प्रकारान्तरेण संश्चङ्परे णावप्राप्तिमाह—एवमपीति ।

अनभ्यस्तस्येति । अकृतद्विर्वचनस्येत्यर्थः । व्यवहितत्वादिति । अवर्णहकाराभ्यां पूर्वो यण् व्यवहित इति तस्य संप्रसारणप्रतिषेधो न भविष्यतीत्यर्थः ॥ तद्यथेति । ननु दृष्टान्तेषु

उ०—अधिकमर्थं प्रति गुणभूतस्वार्थकः । न प्राप्नोतीति । एवं तु रूपाव्यतिरेक एवाश्रयणीयः । जुहावयिषति जिह्वायकीयिषतीत्यादौ च युक्ता रूपव्यतिरेकान्न दोषः । तत्र चाश्रिते सिद्धयत्येव जुहूषतीति भावः । युगागमस्य तद्भक्ततयेति । जिह्वायकीयिषतीत्येतद्व्यावृत्तये उपायान्तरं वक्ष्यतीति भावः ।

प्रतिषेधो न भविष्यतीति । तदभावे सकृत्प्रवृत्त्यैवोभयोः संप्रसारणसिद्धिरिति भावः । लक्ष्यसं-

१—'अभ्यस्तम्' पा० ।

२—'अवगम्यते' पा० ।

३—'त्रपुसम्='खीरा' इति भाषायाम् । Cucumber इत्याङ्गलाः ।

'बालं सनीलं त्रपुसं तेषां पित्तहरं स्मृतम् । तत्पाण्डु कफकृज्जीर्णमम्लं वातकफापहम् ॥' इति ।

* समानाङ्गग्रहणं च ६ । १ । ३७ वा० २

ज्वरनिमित्तमिति गम्यते । 'नड्वलोदकं पादरोगः' । पादरोगनिमित्तमिति गम्यते । 'आयुर्घृतम्' । आयुषो निमित्तमिति गम्यते ।

अथवाकारो मत्वर्थीयः । अभ्यस्तमस्मिन्नस्ति सोऽयमभ्यस्तः, अभ्यस्तस्येति । अथवाभ्यस्तस्येति नैषा ह्वयतिसमानाधिकरणा षष्ठी । का तर्हि ? सम्बन्ध-

प्र०—विरुद्धपदसामानाधिकरण्याद्गौणार्थत्वं प्रतीयते, इह तु मुख्यार्थसंभवे कथं गौणस्य ग्रहणम् । लक्ष्यसंस्कारार्थत्वाल्लक्षणस्य तत्सिद्धये गौणस्याप्यर्थस्येहाङ्गीकरणाददोषः । अथवेति । यौगिकत्वान्निमित्तेऽभ्यस्तशब्दस्य गौणार्थत्वाभावः । ह्वयतिरेवाभ्यस्तशब्देनोच्यते न तु सनादिः प्रत्यय इति षष्ठीनिर्देशो न चोदनीयः । अभ्यस्तमस्मिन्नस्तीत्यधिकरणत्वेन ह्वयतिरेव निर्दिष्टः । प्रत्ययाभिधाने वा सप्तम्याः स्थाने षष्ठी कृता । व्यधिकरणे वा षष्ठ्यौ । अभ्यस्तस्य सनादेः प्रकृतिर्यो

उ०—स्कारेति । तात्पर्यानुपपत्तिरपि लक्षणाबीजमिति भावः । नन्वभ्यस्तनिमित्तप्रत्ययस्याभ्यस्तशब्देनाभिधाने सप्तमी युक्तेति षष्ठीनिर्देशोऽयुक्तोऽत आह—ह्वयतिरेवेति । ननु सप्तम्यर्थवृत्तिनाभ्यस्तशब्देन कथं ह्वयतेरभिधानमत आह—अभ्यस्तमस्मिन्निति । ह्वयतेरभ्यस्तकारणत्वात्, कारणे च कार्यस्य भावादित्यर्थः । अत्र पक्षे जिह्वायकीयिषतीति सिद्धिर्वक्ष्यमाणस्वीयप्रकारेणेति भावः । इत एव वास्वरसादाह—सप्तम्याः स्थाने इति । भाष्ये वक्ष्यमाणवैयधिकरण्यान्वयापेक्षया स्वोक्ते वैलक्षण्यं दर्शयितुं व्यधिकरण-

( सुश्रुते सूत्र० ४६ । २१८ ) । भावप्रकाशे आम्रादिवर्गे विस्तरेण द्रष्टव्या अस्य गुणाः ।

उदाहरणमिदं १ । १ । ५६ वा० ६ ( पृ० ४६३ ) भाष्येऽपि वर्तते । तत्र 'दध्येव विशिष्टावस्थायुक्तं त्रपुसमुच्यते' इति कैयटश्चिन्त्यः ।

१—'नडस्तु धमनः पोटगलः' इत्यमरः । 'नरसल' 'नरकट' 'नरई' इति भाषायाम् ।

नडा अस्मिन् सन्तीति 'नडशादाड्ड्वलच्' ४ । २ । ८८ इति ड्वलचि नड्वलो नलबहुलो देशः । नड्वलोदकसंयोगेन 'खारवा'प्रभृतयः पादरोगाः स्युः ।

नडैः कटाः क्रियन्त इत्यथर्ववेदे द्रष्टव्यम्—'यथा नडं कशिपुने स्त्रियो भिन्दन्त्यश्मना' ( ६ । १३८ । ५ ) "स्त्रियः कशिपुने कटाय कटं निर्मातुं यथा येन प्रकारेण नडम् कटोपादानं तृणविशेषम्" इति भाष्ये सायणाचार्यः ।

'यो नड्वलानीव गजः परेषां बलान्यमृद्नान्नलिनाभवक्त्रः ।' ( रघुवंशे १८ । ५ )

नड्वल—यह मारवाड़ का नाडौल नगर ( पृथ्वीराजविजय १० । ५० ) प्रतीत होता है । ( पाणिनिकालीन भारत पृ० ८६ )

'तैर्दुर्गे गूर्जराणां नृतनुभिरसुरैर्नड्वलाख्ये निमग्नम्' ( पृथ्वी० १० । ५० पृ० २५६ ) "तैर्मनुष्यरूपैरसुरैर्नड्वलनाम्नि दुर्गे यावन्निमग्नं तावत्" इत्यत्र जोनराजस्य विवरणम् ।

२—मैत्रायणीसंहिता २ । ३ । ५; काठक० १ । १ । ८

षष्ठी। अभ्यस्तस्य यो ह्वयतिः। किं चाभ्यस्तस्य ह्वयतिः? प्रकृतिः। 'ह्वोऽभ्यस्तस्य प्रकृते'रिति ॥ योगविभागस्तु कर्तव्य एव। नात्र ह्वयतिरभ्यस्तस्य प्रकृतिः। किं तर्हि? ह्वाययतिः ॥ ३२-३३ ॥

## अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताः श्रितमाशीराशीर्तः[1] ॥ ६।१।३६ ॥

अपस्पृधेथामिति किं निपात्यते? स्पर्धेर्लङ्यात्मनेपदानां मध्यमपुरुषस्य द्विवचन आथामि द्विर्वचनं संप्रसारणमकारलोपश्च निपात्यते। 'इन्द्रश्च विष्णो यदपस्पृधेथाम्'*। अस्पर्धेथामिति भाषायाम्।

अपर आह—अपपूर्वात्स्पर्धेर्लङ्यात्मनेपदानां मध्यमपुरुषस्य द्विवचन आथामि संप्रसारणमकारलोपश्च निपात्यते। 'इन्द्रश्च विष्णो यदपस्पृधेथाम्'*। अपास्पर्धेथामिति भाषायाम्।

प्र०—ह्वयतिस्तस्येत्यर्थः। अभ्यस्तस्य यो ह्वयतिरिति। एवं चोभयप्रसङ्गे परत्वात् संप्रसारणे कृते द्विर्वचनमित्यदोषः। 'जिह्वायकीयिषती'त्यत्र तु न भवत्यभ्यस्तेन प्रत्ययविशेषस्याक्षेपादभ्यस्तनिमित्ते प्रत्ययेऽनन्तरस्य ह्वयतेः संप्रसारणस्य भावात्। अत एव सन्चङ्परे णौ न प्राप्नोतीति योगविभागः कर्तव्यः ॥ ३२-३३ ॥

अपस्पृ। कस्यांचिच्छाखायामपस्पृधेथामित्येकं पदमाद्युदात्तं पठ्यते। पदद्वयं चान्यस्याम्। तत्र द्वितीयमाद्युदात्तम्। तदुभयमप्यनेन संगृह्यते। एकश्रुत्या स्वरसर्वनाम्ना पाठात्। तत्रैकपक्षे 'तिङ्ङतिङ' इति निघातः प्राप्तो 'यद्वृत्तान्नित्य'मिति प्रतिषिद्धः। ततोऽट्स्वरेणाद्युदात्तं पदं भवति। यदा द्वे पदे तदा 'निपातैर्यद्यदी'ति निघाते प्रतिषिद्धे 'तास्यनुदात्ते'दिति लसार्वधातुकानुदात्तत्वे धातुस्वरेण 'स्पृधेथा'मिति पदमाद्युदात्तम्। 'तिङि चोदात्तवती'त्यप-

उ०—षष्ठीपक्षेऽन्वयमाह—अभ्यस्तस्य सनादेरिति। अदोष इति। जुहूषतीत्यादि सिद्धेरिति भावः। कथं तर्हि तृतीयपक्षे कृदन्ते संप्रसारणाभावोऽत आह—जिह्वायकीयिषतीति। ननु 'सन्यङो'रिति षष्ठीनिर्देशादभ्यासेन स्वघटितसमुदायस्य द्वित्वनिमित्तप्रत्ययान्तत्वाक्षेपेऽपि तत्परत्वाक्षेपे मानाभावः। तदन्तत्वं च तद्घटितसमुदायस्य प्रकृतेऽभ्यस्तस्येवेति चेच्चिन्त्यमेवैतत्, भाष्योक्तेनाभ्यस्तस्य प्रकृतेर्ह्वयतेरित्यनेनास्यापि वारणात्। यद्गतधातुत्वमादायावयवस्य द्वित्वं स हि तत्प्रकृतिः। स चात्र क्यजन्तः। अत एव 'ह्वः संप्रसारण'मिति चरितार्थम् ॥ ३२-३३ ॥

अपस्पृ। भाष्ये—अकारलोप इति। 'स्प'शब्दाकारस्येत्यर्थः। कथं पुनरेकप्रयोगे एकपदत्वानेकपदत्वे अत आह—कस्यांचिदिति। सूत्रे कथमुभयोः सङ्ग्रहोऽत आह—एकश्रुत्येति। द्वितीयपक्षे

[1] 'राशीर्ताः' पा०  * ऋ० सं० ६।६९।८

श्राताः श्रितमिति किं निपात्यते ? श्रीणातेः क्ते श्राभावश्रिभावौ निपात्येते । क्व पुनः श्राभावः, क्व वा श्रिभावः ? सोमे श्राभावोऽन्यत्र श्रिभावः । न तर्हीदानीमिदं भवति श्रितः सोम इति ? बहुवचने श्राभावः । न तर्हीदानीमिदं भवति श्रिता नो ग्रहा इति ? सोमबहुत्वे श्राभावोऽन्यत्र श्रिभावः ॥ ३६ ॥

## न संप्रसारणे संप्रसारणम् ॥ ६ । १ । ३७ ॥

किमर्थमिदमुच्यते ? वचिस्वपियजादीनां ग्रहादीनां च संप्रसारणमुक्तम्* । तत्र यावन्तो यणः सर्वेषां सम्प्रसारणं प्राप्नोति । इष्यते च परस्य यथा स्यान्न पूर्वस्य, तच्चान्तरेण यत्नं न सिध्यतीति 'न संप्रसारणे संप्रसारणम्' । एवमर्थमिदमुच्यते ।

किमन्येऽप्येवं विधयो (न[3]) भवन्ति ? 'अतो दीर्घो यञि' 'सुपि च' [ ७ । ३ । १०१; १०२ ] इति । घटाभ्याम्—अकारमात्रस्य दीर्घत्वं कस्मान्न भवति ? अस्त्यत्र विशेषः । इयमत्र परिभाषोपतिष्ठते 'अलोन्त्यस्य' [ १ । १ । ५२ ] इति । ननु चेदानीमेतया परिभाषयेहापि[4] शक्यमुपस्थातुम् । 'ने'त्याह, न हि वचिस्वपिय-

प्र०—शब्दस्य निघातः । सोमबहुत्व इति । सोमस्यैव बहुत्वे श्राभाव इति नियमाश्रयणात्सोमादन्यत्रैकत्वेऽपि श्राभावः क्वचिद् दृश्यते ॥ ३६ ॥

उ०—अडभावश्छान्दसत्वात् । सोमस्यैवेति । बहुत्वे चेत् श्राभावः सोमस्यैवेत्यर्थः । दृश्यते इति । '[2]यदि[1] श्रातो जुहोतने'त्यादौ ॥ ३६ ॥

१–सुश्रुते चिकित्सास्थाने २९ अध्याये सोमस्य चतुर्विंशतिभेदाः स्थाननामाकृतिवीर्यविशेषैरुपवर्णिताः । तत्सोमसंज्ञितममृतं जरामृत्युविनाशाय ब्रह्मादयोऽसृजन् । ( १—४ )

सर्वेषामेव सोमानां पत्राणि दश पञ्च च । तानि शुक्ले च कृष्णे च जायन्ते निपतन्ति च ॥ २० ॥

एकैकं जायते पत्रं सोमस्याहरहस्तदा । शुक्लस्य पौर्णमास्यां तु भवेत् पञ्चदशच्छदः ॥ २१ ॥

शीर्यते पत्रमेकैकं दिवसे दिवसे पुनः । कृष्णपक्षक्षये चापि लता भवति केवला ॥ २२ ॥

सर्व एव तु विज्ञेयाः सोमाः पञ्चदशच्छदाः । क्षीरकन्दलतावन्त पत्रैर्नानाविधैः स्मृताः ॥ २६ ॥

'सुनोति सूयते वा सोम—यज्ञद्रव्यं, चन्द्रमाश्च' ( दश० उणा० ६ । ७६; तथा ७ ; २६ )

'मत्सरः सोमो मन्दतेस्तृप्तिकर्मणः' ( निरुक्ते नैघ० २ । २ । ५ )

२–ऋ० सं० १० । १७६ । १; अथर्व० ७ । ७५ । १

* वचिस्वपियजादीनां किति; ग्रहिज्यावयि······ङिति च ६ । १ । १५; १६

३–क्वचिन्न ।    ४–'अपि' क्वचिन्न ।

जादीनां ग्रहादीनां चान्त्यो यणस्ति । एवं तर्ह्यनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवतीत्यन्त्यसदेशो यो यण् तस्य कार्यं भविष्यति । नैतस्याः परिभाषायाः सन्ति प्रयोजनानि ।

एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति 'न सर्वस्य यणः संप्रसारणं भवती'ति यदयं प्यायः पीभावं शास्ति† । कथं कृत्वा ज्ञापकम् ? पीभाववचन एतत्प्रयोजनम् 'आपीनोऽन्धुः' 'आपीनमूधः' एतद्रूपं यथा स्यादिति । यदि चात्र सर्वस्य यणः संप्रसारणं स्यात्पीभाववचनमनर्थकं स्यात् । संप्रसारणे कृते संप्रसारणपरपूर्वत्वे च द्वयोरिकारयोरेकादेशे सिद्धं रूपं स्यात् 'आपीनोऽन्धुः' 'आपीनमूध' इति । पश्यति त्वाचार्यो 'न सर्वस्य यणः संप्रसारणं भवती'ति ततः प्यायः पीभावं शास्ति ।

नैतदस्ति ज्ञापकम् । सिद्धे हि विधिरारभ्यमाणो ज्ञापकार्थो भवति, न च प्यायः संप्रसारणेन सिध्यति । संप्रसारणे हि सत्यन्त्यस्य प्रसज्येत ।

एवमपि ज्ञापकमेव । कथम् ? 'प्याय' इति नैषा स्थानषष्ठी । का तर्हि ? विशेषणषष्ठी । 'प्यायो यो य'णिति । तदेतज्ज्ञापयत्याचार्यो 'न सर्वस्य यणः संप्रसारणं भवती'ति यदयं प्यायः पीभावं शास्ति ।

एवमप्यनैकान्तिकमेतत् । एतावज्ज्ञाप्यते 'न सर्वस्य यणः सम्प्रसारणं भवती'ति । तत्र कुत एतत् परस्य भविष्यति न पूर्वस्येति ।

उच्यमानेऽप्येतस्मिन् कुत एतत्परस्य भविष्यति न पूर्वस्येति । एकयोगलक्षणं खल्वपि सम्प्रसारणम् । तद्यदि तावत्परमभिनिर्वृत्तं पूर्वमप्यभिनिर्वृत्तमेव । प्रसक्तस्य चानभिनिर्वृत्तस्य प्रतिषेधेन निवृत्तिः शक्या कर्तुं नाभिनिर्वृत्तस्य । यो

उ०—न संप्रसारणे । भाष्ये नैतस्याः परिभाषाया इति । एतद्विषयोदाहरणानि न परिभाषया सिद्ध्यन्ति । व्यधादौ यणोऽन्त्येन समानदेशत्वाभावात् । एतत्साद्ध्यानि प्रयोजनानि नास्याः परिभाषाया भवन्तीति भाष्याक्षरार्थः । अत एव च 'नैषास्ति परिभाषे'ति नोक्तम् । अत एव 'ष्यङः' इति सूत्रे प्रयोजनान्यथासिद्धिकरणोत्तरमपि 'एषा कर्तव्या, प्रतिविधेयं दोषे'ष्विति उपसंहृतम् । अत एवादमुयङिति सिद्धिरिति दिक् ।

† प्यायः पी ६ । १ । २८

हि भुक्तवन्तं ब्रूयान्मा भुक्था[1] इति किं तेन कृतं स्यात् । अथापि पूर्वमनभिनिर्वृत्तं परमप्यनभिनिर्वृत्तमेव । तत्र निमित्तसंश्रयोऽनुपपन्नो 'न सम्प्रसारणे सम्प्रसारण–' मिति ।

नैष दोषः । यत्तावदुच्यत 'उच्यमानेऽप्येतस्मिन् कुत एतत्परस्य भविष्यति न पूर्वस्ये'ति, इहेङ्गितेन चेष्टितेन निमिषितेन महता वा सूत्रप्रबन्धेनाचार्याणामभिप्रायो गम्यते । एतदेव ज्ञापयति 'परस्य भविष्यति न पूर्वस्ये'ति यदयं 'न सम्प्रसारणे संप्रसारण'मिति प्रतिषेधं शास्ति ।

यदप्युच्यत 'एकयोगलक्षणं खल्वपि सम्प्रसारणं तद्यदि तावत्परमभिनिर्वृत्तं पूर्वमप्यभिनिर्वृत्तमेव, 'प्रसक्तस्य चानभिनिर्वृत्तस्य प्रतिषेधेन निवृत्तिः शक्या कर्तु'मिति, अस्तूभयोरभिनिर्वृत्तिः । न वयं पूर्वस्य प्रतिषेधं शिष्मः । किं तर्हि ? सम्प्रसारणाश्रयं यत्प्राप्नोति तस्य प्रतिषेधम् । ततः पूर्वत्वे प्रतिषिद्धे यणादेशेन सिद्धम् ।

यदप्युच्यते'ऽथापि पूर्वमनभिनिर्वृत्तं परमप्यनभिनिर्वृत्तमेव, तत्र निमित्तसंश्रयोऽनुपपन्न' इति, तादर्थ्यात्ताच्छब्द्यं भविष्यति । तद्यथा—'इन्द्रार्था स्थूणा इन्द्र' इति । एवमिहापि सम्प्रसारणार्थं सम्प्रसारणम् । तद्यत्प्रसारणार्थं प्रसारणं तस्मिन् प्रतिषेधो भविष्यति ।

अथ सम्प्रसारणमिति* वर्तमाने पुनः सम्प्रसारणग्रहणं किमर्थम् ?

---

प्र०—न संप्र । किं तर्हीति । संप्रसारणनिमित्तं पूर्वत्वं संप्रसारणशब्देनोपचाराढुच्यते ।

---

उ०—यदि तावदिति । अत एव 'लक्ष्ये लक्षणस्ये'ति न्यायस्यायमविषयः ।

( भाष्ये ) इहेङ्गितेनेति । इङ्गितं—मनोव्यापारः । चेष्टितं–शारीरव्यापार उच्चारणम् । निमिषितं–नेत्रव्यापारः । एते प्रत्यक्षे आचार्ये तदभिप्रायगमकाः । प्रकृते तु तादृशसूत्रोच्चारणेनैव तादृशार्थविषयकमाचार्यतात्पर्यं गमयतीत्यर्थः । भाष्ये–एतदेव ज्ञापयति परस्येति । न पूर्वं पूर्वस्य भविष्यतीत्यर्थः । पश्चात्प्राप्तं त्वनेन निषिध्यते । लक्ष्यभेदाच्च न लक्ष्ये लक्षणस्येति न्याय इति भावः । एतेन 'प्रकल्प्य वापवादविषय'-मित्यनेन पूर्वं परस्य यणः संप्रसारणमित्युभे अभ्यस्तमिति सूत्रकैयटोक्तमपास्तम् । तत्र 'प्रकल्प्ये'त्यस्य परित्यज्येत्येवार्थाच्च ॥ एवं रीत्या प्रागुक्तदोषत्रयस्याप्युद्धारे कृतेऽपि तथा गूढाशयानभिज्ञं प्रति अन्त्ययोरुद्धारं प्रौढया प्रकारान्तरेणाप्याह—यदप्युच्यत इत्यादिना । न वयं पूर्वस्येति । पूर्वस्य संप्रसारणस्येत्यर्थः ।

---

१—'भुङ्क्था' पा० ।   * ष्वः सम्प्रसारणम् ६ । १ । ३२

**प्रसारणप्रकरणे पुनः प्रसारणग्रहणमतोऽन्यत्र प्रसारणप्रतिषेधार्थम् ॥ १ ॥**

सम्प्रसारणमिति वर्तमाने पुनः संम्प्रसारणग्रहण एतत्प्रयोजनं विदेशस्थमपि यत्सम्प्रसारणं तस्यापि प्रतिषेधो यथा स्यात्—'व्यथो लिटि' [ ७ । ४ । ६८ ] विव्यथे ।

नैतदस्ति प्रयोजनम् । हलादिशेषापवादोऽत्र सम्प्रसारणम् ॥ इदं तर्हि—'श्वयुवमघोनामतद्धिते' [ ६ । ४१ । १३३ ]यूना यूने ॥ उच्यमानेऽप्येतस्मिन्न सिध्यति । किं कारणम् ? उकारेण व्यवधानात् । एकादेशे कृते नास्ति व्यवधानम् । एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यवधानमेव ॥ एवं तर्हि—

**समानाङ्गग्रहणं च ॥ २ ॥**

समानाङ्गग्रहणं च कर्तव्यम् । 'न सम्प्रसारणे संप्रसारणं समानाङ्ग' इति वक्तव्यम् ।

**तत्रोपोषुषि दोषः ॥ ३ ॥**

तत्रोपोषुषि दोषो भवति† । उपोषुषा उपोषुषे उपोषुषीति ।

**न वा यस्याङ्गस्य प्रसारणप्राप्तिस्तस्मिन् प्राप्तिप्रतिषेधात् ॥ ४ ॥**

न वैष दोषः । किं कारणम् ? यस्याङ्गस्य प्रसारणप्राप्तिस्तस्मिन् द्वितीया या प्राप्तिः सा प्रतिषिध्यते । अत्र च वसिः क्वसावङ्गम्, क्वस्वन्तं पुनर्विभक्तौ ।

प्र०—हलादिशेषापवाद इति । उत्सर्गसदेशश्चापवादो भवतीति परस्यैव संप्रसारणं भवति न पूर्वस्य । एकादेशे कृते इति । परं प्रत्यादिवद्भावात् ।

उपोषुषेति । उपपूर्वाद्वसेर्भाषायां 'सदवसश्रुव' इति क्वस्वादेशविधानाद्भूतसामान्ये लिडनुमीयते, तस्य क्वसौ 'वचिस्वपी'ति संप्रसारणम् । द्विर्वचनम् । अकः सवर्णे दीर्घः । 'वस्वेका-

उ०—ननु संप्रसारणस्य हलादिःशेषापवादत्वेऽपि कथं वस्य संप्रसारणाभावोऽत आह—उत्सर्गेति । बहुजकच्श्मसु 'प्राक् टेः' 'पुरस्ता'च्छब्दाभ्यां मित्वाच्च तद्बाधेऽप्यन्यत्र तद्बाधे मानाभाव इति भावः । ननु हलादिःशेषेऽपि वकारेऽस्य चारितार्थ्यात्कथमपवादत्वं परत्वेन बाधे तु नास्य न्यायस्य विषय इति चेन्न; तत्तद्विषयेऽवश्यप्राप्त्या कृते चारितार्थ्येऽपि बाध इत्यर्थस्याजादेरिति सूत्रे भाष्ये स्पष्टमुक्तत्वेनादोषात् । यकारसंबन्धिनिवृत्तेरेवायमपवाद इति यकारनिवृत्तिर्भवत्येवेति बोध्यम् । नन्वेकादेशे संप्रसारणपरत्वाभावात् कथं निषेधोऽत आह—परं प्रतीति । वर्णाश्रयेऽन्तादिवद्भावप्रतिषेधादिदं चिन्त्यम् । किन्त्वचः परस्मिन्निति स्थानिवत्त्वेनैव संप्रसारणत्वमिति युक्तम् । एवञ्च तेनैवातिदेशेन व्यवधानमित्याह—एकादेशः पूर्वेति ।

भाष्ये—एवं तर्हि समानाङ्गेति । एवञ्च तत्सामर्थ्यान्निर्दिष्टांशविकलपरिभाषोपस्थितिरिति भावः ।

१—'प्रसारण' पा० । † वचिस्वपियजादीनां किति ६ । १ । १५; वसोः सम्प्रसारणम् ६ । ४ । १३१

अथवा 'यस्याङ्गस्य प्रसारणप्राप्ति'रित्यनेन किं क्रियते। यावद्ब्रूयात्प्रसक्तस्यानभिनिर्वृत्तस्य प्रतिषेधेन निवृत्तिः शक्या कर्तुमिति। अत्र च यदा वसेर्न तदा क्सोः, यदा च क्सोरभिनिर्वृत्तं तदा वसेर्भवति।

अथवा यस्याङ्गस्य प्रसारणप्राप्तिरित्यनेन किं क्रियते। यावद्ब्रूयादसिद्धं बहिरङ्गमन्तरङ्ग इति। असिद्धत्वाद्बहिरङ्गलक्षणस्य वसुसम्प्रसारणस्यान्तरङ्गलक्षणः प्रतिषेधो न भविष्यति।

ऋचि त्रेरुत्तरपदादिलोपश्छन्दसि ॥ ५ ॥

ऋचि त्रेः सम्प्रसारणं वक्तव्यम्। उत्तरपदादिलोपश्छन्दसि वक्तव्यः। तृचं* सूक्तम्। तृचं साम। छन्दसीति किम्? त्र्यृचानि।

रयेर्मतौ बहुलम् ॥ ६ ॥

रयेर्मतौ सम्प्रसारणं बहुलं वक्तव्यम्। आ रेवानेतु नो विशः। न च भवति— रयिमान् पुष्टिवर्धनः† ।

कक्ष्यायाः संज्ञायाम् ॥ ७ ॥

कक्ष्यायाः संज्ञायां मतौ सम्प्रसारणं वक्तव्यम्। कुक्षीवन्तं य आशिजः‡ ।

प्र०—चाद्घसा'मितीट्। 'शासिवसी'ति षत्वम्। तृतीयैकवचनम्। 'वसोः संप्रसारण'मिति संप्रसारणम्। वलादित्वाभावादिडभावः। अत्र समानाङ्गग्रहणाद्वचिस्वपीति संप्रसारणस्य निषेधप्रसङ्गः।

तृचमिति। तिस्र ऋचोऽस्मिन्निति समासः। 'ऋक्पूरब्धू'रिति समासान्तः।
कक्ष्याया इति। 'आसन्दीवदष्ठीव'दित्यत्र कक्षीवच्छब्दस्य निपातनाद्वार्तिकं नारब्धव्यमिति।

उ०—समानाङ्गग्रहणप्रत्याख्याने तु 'यूनस्ति'रित्यादिनिर्देशात्तदर्थलाभ इति बोध्यम्।

भाष्ये—यस्याङ्गस्येति। यत्प्रत्ययनिमित्ता संप्रसारणप्राप्तिस्तत्प्रत्ययनिरूपिताङ्गे या द्वितीया प्राप्तिरित्यर्थः। एतच्च 'पदस्य विभज्यान्वाख्यान'मितिपक्षे बोध्यम्। क्रमेणान्वाख्यानमाश्रित्याप्याह—अथवेति। पदावधिकान्वाख्याने प्रकारान्तरमाह—अथवेति। अन्तरङ्गलक्षणः—एकनिमित्तकान्तरङ्गसंप्रसारणमादाय चरितार्थं इत्यर्थः। नारब्धव्यमिति। एतद्भाष्यप्रामाण्यात्तत्र सूत्रे कक्षीवच्छब्दपाठोऽनार्ष इत्यन्ये ॥ ३७ ॥

* ऋक्पूरब्धूःपथामानक्षे ५। ४। ७४    † यजु० ३। ४०
‡ ऋ० सं० १। १८। १

कएवः कत्तीवान् । संज्ञायामिति किमर्थम् ? कक्ष्यावान् हस्ती ॥ ३७ ॥

## वश्चास्यान्यतरस्यां किति ॥ ६ । १ । ३९ ॥

'वश्चास्य'ग्रहणं शक्यमकर्तुम् । 'अन्यतरस्यां किति वेञोऽ न संम्प्रसारणं भवती'त्येव सिद्धम् । कथम् ? संप्रसारणे कृत उवङादेशे च द्विर्वचनं सवर्णदीर्घत्वम् । तेन सिद्धं ववतुः वव्रुः, ऊवतुः ऊवुः । वयेरपि नित्यं यकारस्य प्रतिषेधः संप्रसारणस्य¶ । ऊयतुः ऊयुः । त्रैशब्द्यं चेह साध्यम्, तच्चैवं सति सिद्धं भवति ।

यद्येवं ववौ वविथेति न सिध्यति । 'ल्यपि च' [ ६ । १ । ४१ ] इत्यनेन चकारेण लिडप्यनुकृष्यते¶ । तस्मिन्नित्ये प्रसारणप्रतिषेधे प्राप्त इयं किति विभाषारभ्यते ॥ ३८ ॥

इति श्रीद्भगवत्पतञ्जलिविरचिते व्याकरणमाहाभाष्ये षष्ठस्याध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ।

प्र०—व्यम् ॥ ३७ ॥

वश्चास्यान्यतरस्यां । 'अन्यतरस्यां किति वेञ' इति सूत्रं कर्तव्यम् । तत्र लिटीत्यनुवर्तनात्किति लिटि वेञः संप्रसारणविकल्पे सति अकिति लिटि 'ल्यपि चे'ति चकारेण लिटोऽनुकर्षणात्संप्रसारणनिषेधात्सर्वेष्टसिद्धिरिति भाष्यार्थः ॥ ३८ ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे षष्ठस्याध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ।

उ०—वश्चास्यान्यतरस्यां । 'वेञः' 'ल्यपि चे'ति सूत्रक्रमः । किति लिटि वयो यस्य वः स्याद्वा तस्य च संप्रसारणं नेत्यर्थः, चेन 'न संप्रसारण'मित्यस्यानुकर्षणात् । भाष्ये—संप्रसारणे कृते इति । द्वित्वात्परत्वादिति भावः । उवङादेशे च द्विर्वचनमिति । द्विर्वचनेऽचीति स्थानिवत्त्वादुकारस्य द्वित्वेऽपि वार्णादाङ्गमिति न्यायेनोवङि सवर्णदीर्घत्वमिति भावः ॥ ३८ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्योते षष्ठस्याध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ।

१—'दूष्या कक्ष्या वरत्रा स्या'दित्यमरः । 'गजमध्यबन्धनचर्मरज्जुः' इति सारसुन्दरी । 'कक्ष्या रज्जुरश्वस्य, कक्षं सेवते' ( निरु० नैघ० २ । १ । ५ ) । या अश्वस्य सन्नाहरज्जुः सा कक्ष्येत्युच्यते । इत्यत्र दुर्गाचार्यः । § वेञः ६ । १ । ४० ¶ लिटि वयो यः ६ । १ । ३८

## आदेच उपदेशेऽशिति ॥ ६ । १ । ४५ ॥

कथमिदं विज्ञायत— एज् य उपदेश इति, आहोस्विदेजन्तं यदुपदेश इति । किं चातः ? यदि विज्ञायत 'एज् य उपदेश' इति ढौकिता त्रौकिता अत्रापि प्राप्नोति । अथ विज्ञायत 'एजन्तं यदुपदेश' इति न दोषो भवति ।

ननु चैजन्तं यदुपदेश इत्यपि विज्ञायमानेऽत्रापि प्राप्नोति । एतदपि हि व्यपदेशिवद्भावेनैजन्तं भवत्युपदेशे । अर्थवता व्यपदेशिवद्भावः ।

ननु 'चैज् य उपदेश' इत्यपि विज्ञायमाने न दोषो भवति । 'अशिती'त्युच्यते, न चात्राशितं पश्यामः । ननु च ककार एवात्राशित् । न ककारे भवितव्यम् । किं कारणम् ? 'नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः' । नञ्युक्तमिवयुक्तं चान्यस्मिंस्तत्सदृशे कार्यं विज्ञायते, तथा ह्यर्थो गम्यते । तद्यथा— लोकेऽब्राह्मणमानयेत्युक्ते ब्राह्मणसदृशमानयति, नासौ लोष्टमानीय कृती भवति । एवमिहाप्यशितीति शित्प्रति-

प्र०—आदेच उपदेशेऽशिति । कथमिदमिति । यदोपदेशशब्देन करणसाधनेन शास्त्रमुच्यते तदा विशेष्यस्यानुपादानादेव नास्ति तदन्तविधिरित्ययं पक्षो भवति–'एज् य उपदेश' इति । यदा तु कर्मसाधन उपदेशशब्द उपदिश्यमानार्थवाची' षष्ठ्यर्थे च सप्तमी, तदा उपदेशस्यैचा विशेषणात्तदन्तविधौ सत्ययं पक्षो भवति—'एजन्तं यदुपदेश' इति । समुदायश्च ग्लैप्रभृतिः प्राधान्येनोपदिश्यते धातुसंज्ञाद्यर्थो नान्तरीयकत्वेन त्ववयवः ॥ एतदपीति । उपदेशोऽप्ययमौकारो भवति, 'नान्तरीयकत्वादवयवानामुपदेशा'दित्युक्तत्वात् । अर्थवतेति । यः शब्दोऽर्थवांस्तदर्थोपादानपरित्यागाभ्यां व्यपदेशिवद्भावो भवति बुद्ध्या नानात्वकल्पनात् । यथेयायेतीण एकाज्व्यपदेशः । लोकेऽपि 'स्थूलशिरा राहु'रिति शिरोमात्रस्य समुदायस्यार्थक्रियाकरणाद्भेदविवक्षया व्यपदेशो

उ०—आदेच उउदेशे । ननु 'धातो'रित्यस्य 'उपदेशे'इत्यस्य वा विशेष्यस्य सन्निधानात्तदन्तपक्ष एव युक्त इति सन्देहोऽयुक्त इत्यत आह–यदेति । शास्त्रमिति । आद्योच्चारणमुपदेश इत्यर्थेऽपि तदन्तविध्यभावादिदमुपलक्षणम् । धातोरित्यननुवृत्तिमाश्रित्येदमिति बोध्यम् । ननु समुदायावयवयोरुपदिश्यमानत्वे इदं वक्तुं शक्यम्—'एज्य उपदिश्यमान' इति; विशेषणत्वज्ञानोत्तरमेव तदन्तविधिप्रवृत्तेरत आह—समुदायश्चेति । अवयव इति । प्रत्येकवर्णरूप इत्यर्थः । 'ढौ' इति समुदायोपदेशे तु मानाभाव इति भावः । कार्योद्देश्यकस्यैवोच्चारणस्योपदेशपदार्थत्वं सूचयितुं 'धातुसंज्ञाद्यर्थ' इत्युक्तम् । अवयवोपदेशफलं तु तत्तत्कार्योद्देश्यसमुदायनिष्पत्तिरेवेति बोध्यम् । भाष्ये—एतदपीति । ढौमुपदेशे प्रत्येकं वर्णानां वोपदेशः, कान्तसमुदायस्य वा तत्तत्कार्यार्थो न तु ढौ इत्यौकारान्तसमुदायस्येति व्यपदेशिवद्भावेनौकारस्यैजन्तत्वमिति भावः । असहायत्वाभावादिति । अनेनैव व्यपदेशिवद्भावाप्रवृत्तिरपि बोध्या, 'व्यपदेशिवदेकस्मि'न्निति पाठात् । भाष्येऽर्थ-

पेक्षादन्यस्मिन्नशिति शित्सदृशे कार्यं विज्ञास्यते। किं चान्यदशिच्छित्सदृशम्? प्रत्ययः।

इह तर्हि ग्लै ग्लानीयम्, म्लै म्लानीयम्, वेञ् वानीयम्, शो निशानीयम्, परत्वादायादयः प्राप्नुवति*। ननु चैजन्तं यदुपदेश इत्यपि विज्ञायमाने परत्वादायादयः प्राप्नुवन्ति। सन्तु। आयादिषु कृतेषु स्थानिवद्भावादेज्ग्रहणेन ग्रहणात्पुनरात्त्वं भविष्यति। ननु चैज् य उपदेश इत्यपि विज्ञायमाने परत्वादायादिषु कृतेषु स्थानिवद्भावादेज्ग्रहणेन ग्रहणादात्त्वं भविष्यति। न भविष्यति। अनल्विधौ† स्थानिवद्भावोऽल्विधिश्चायम्।

प्र०—भवति न त्वनर्थके छिन्ने देवदत्तशिरसि 'स्थूलशिरा अयं देवदत्त' इति व्यपदेशः प्रवर्तते। 'आद्यन्तवदेकस्मि'न्नित्यतिदेशोऽत्र न प्रवर्ततेऽसहायत्वाभावादौकारस्य।

'इह तर्हीति। 'एज्य उपदेश' इत्यस्मिन् पक्षे दोषोद्भावनम्। परत्वादिति। पर्युदासपक्षे समानाश्रयत्वादात्त्वस्यायादीनां च नित्यत्वाच्च तेषां विप्रतिषेधोपपत्तिः।

अल्विधिश्चायमिति। नन्वेजन्तं यदुपदेश इत्यत्रापि पक्षे आत्त्वमल्विधिरेव, गुणभूतालाश्रयस्याप्यल्विधित्वेनाश्रयणात्, तथा च प्रपठ्येत्यादाविडभावः। नैतदस्ति। एजन्तस्यात्त्वं भवतीत्येवं विज्ञायमाने स्यादात्त्वमल्विधिः। यदा त्वेवं व्याख्यायते—'उपदेशे यदेजन्तं दृष्टं तस्यात्त्वं भवती'ति, तदात्त्वस्याल्विधित्वाभावः। 'एज् य उपदेशे तस्यात्त्व'मित्यत्र तु पक्षे एचः स्थानित्वेनोपादानादात्त्वस्याल्विधित्वादायादिषु कृतेषु स्थानिवत्त्वाभावादप्राप्तिः॥ नन्वायादिषु कृतेष्वलोऽन्त्यस्यात्त्वे कृते यद्यपि ग्लानीयमित्यादि सिध्यति, तथापि जग्लतुरित्यादि न सिध्यति, यकारस्यात्त्वे कृते पूर्वेण सहैकादेशश्च प्राप्नोति लोपश्च, तत्र यद्यपि वर्णाश्रयत्वादेकादेशोऽन्तर-

उ०—वतेत्यनेनेदमेवोपलक्ष्यते ससहायत्वे एव तस्यानर्थकत्वात्। भाष्ये—शित्सदृशं प्रत्यय इति। कर्मधारयाश्रयणेन वक्ष्यमाणरीत्या शित्प्रत्यय एवेति तत्सदृशोऽपि प्रत्यय एवेति भावः। एवञ्च पक्षद्वयेऽपि 'ढौकिते' इत्यत्र न दोष इति तात्पर्यम्। इत्यस्मिन्पक्षे इति। तदन्तविधिपक्षे वक्ष्यमाणरीत्या दोषाभावादिति भावः। ननु प्रसज्यप्रतिषेधेऽनैमित्तिकत्वेनात्वमन्तरङ्गमत आह—पर्युदासेति।

तस्यात्वमिति। एवं चायादिषुकृतेष्वपि उपदेशे एजन्तमेवैतद्दृष्टमिति न स्थानिवत्त्वोपयोग इति भावः। परे तु उपदिश्यमानस्यैजन्तस्येत्ये तत्पक्षेऽर्थस्य स्वयमुक्तत्वादेतद्व्याख्यानासंभवः। तस्मात्प्राधान्येनालाश्रय एवाल्विविधित्वमित्यभिमानिनोऽयं ग्रन्थ इत्येवोचितम्। अत एवाग्रेऽशितीति ज्ञापकादिमं दोषं परिहरिष्यतीत्याहुः। एचः स्थानित्वेनोपादानादिति। तत्पक्षे उपलक्षणताया वक्तुमशक्यत्वादिति भावः। तदन्तग्रहणपक्षेऽपि 'जग्लतु'रित्याद्यसिद्धिमाशङ्कते—नन्वायादिष्विति। लोपश्चेति। 'आतो लोप इटि

१–'इदं तर्हि' पा०। * एचोऽयवायावः ६।१।७८ † स्थानिवदादेशोऽनल्विधौ १।१।५६

एवं तर्ह्येजन्तं यदुपदेश इत्यपि विज्ञायमाने हूतः हूतवानित्यत्रापि प्राप्नोति । भवत्येवात्रात्त्वम् । श्रवणं कस्मान्न भवति ? पूर्वत्वमस्य भवति‡ । न सिध्यति । इदमिह संप्रधार्यम्—आत्त्वं क्रियतां पूर्वत्वमिति किमत्र कर्तव्यम् । परत्वात्पूर्वत्वम् । एवं तर्हीदमिह संप्रधार्यम्—आत्त्वं क्रियतां संप्रसारणमिति¶ किमत्र कर्तव्यम् । परत्वादात्त्वम् । नित्यं संप्रसारणम्, कृतेऽप्यात्त्वे प्राप्नोत्यकृतेऽपि । आत्त्वमपि नित्यम्, कृतेऽपि संप्रसारणे प्राप्नोत्यकृतेऽपि । अनित्यमात्त्वं न हि कृते संप्रसारणे प्राप्नोति । किं कारणम् ? अन्तरङ्गं पूर्वत्वं तेन बाध्यते । यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् । न च संप्रसारणमेवात्त्वस्य निमित्तं विहन्ति । अवश्यं लक्षणान्तरं पूर्वत्वं प्रतीक्ष्यम् । उभयोर्नित्ययोः परत्वादात्त्वे कृते संप्रसारणम्, संप्रसारणपूर्वत्वम् । कार्यकृतत्वात्पुनरात्त्वं न भविष्यति । अथापि कथंचिदात्त्वमनित्यं स्यात् । एवमपि न दोषः । उपदेशग्रहणं न करिष्यते ।

यदि न क्रियते चेता स्तोतेत्यत्रापि प्राप्नोति । नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति 'न परनिमित्तकस्यात्त्वं भवती'ति यदयं क्रीङ्जीनां णावात्त्वंशास्ति* ।

प्र०—ङ्गस्तथापि 'वार्णादाङ्गं बलव'दित्याकारलोपः प्राप्नोति । यथा—आह्वः प्रह्व इत्यादौ । तत्राकारलोपस्य स्थानिवद्भावा'दसिद्धवदत्राभा'दित्यसिद्धत्वाच्च पूर्वस्याकारस्य लोपो न प्राप्नोति । एवं तर्हि 'वार्णादाङ्गं बलव'दित्यनाश्रित्येदमुक्तम् । अत एवात्र परिहारेऽसमाश्वासादशितीति ज्ञापकादायादय आत्त्वं न बाधन्त इति सिद्धान्तो भविष्यति ।

हूत इति । ह्वेञः संप्रसारणादिषु कृतेषूपदेश एजन्तत्वादुत्तरकालमसत्यप्येजन्तत्वेऽलोन्त्यस्येति वचनादूकारस्यात्त्वप्रसङ्गः । भवत्येवेति । प्रागेव संप्रसारणादिति भावः । इतरस्तु पश्चादात्त्वमनेनोक्तमिति मत्वाह—श्रवणमिति । अथापीति । यदि 'यस्य लक्षणान्तरेणे'ति नाश्रीयत इति भावः । उपदेशग्रहणमिति । उपदेशग्रहणात् संप्रसारणादिषु कृतेष्वात्त्वप्रसङ्गान्न कर्तव्यम् ।

उ०—चे'त्यनेन । यथाह्व इति । आङ्पूर्वात् ह्वयतेरातश्चोपसर्गे इति के संप्रसारणे यदि एकादेशः स्यात्तदा आल्लोपो न स्यादित्युवङि रूपासिद्धिः । 'प्रसारणिभ्यो ड' इत्यस्य भाष्ये प्रत्याख्यानादिति भावः । अनाश्रित्येति । अनाश्रयणं चानित्यत्वाद्बोध्यम् ।

संप्रसारणादिषु—संप्रसारणपूर्वत्वदीर्घत्वेषु । ननु ऊकारस्यात्त्वे प्रयोगासिद्ध्या भवत्येवात्त्वमित्ययुक्तमत आह—प्रागेवेति । परत्वादात्त्वे संप्रसारणमिति भावः । ननूपदेशग्रहणाभावेऽपि संप्रसारणादिषु कृतेषु स्थानिवत्त्वेनैजन्तत्वादात्त्वं प्राप्नोत्येवेत्यत आह—कृते चेति । एजन्तस्येति । विशेष्याभावाच्चिन्त्यमिदम् ।

‡ सम्प्रसारणाच्च ६ । १ । १०८ ¶ वचिस्वपियजादीनां किति ६ । १ । १५

* क्रीङ्जीनां णौ ६ । १ । ४८

नैतदस्ति ज्ञापकम् । नियमार्थमेतत्स्यात्—'क्रीङ्जीनां णावे'ति । यत्तर्हि 'मीनातिमिनोतिदीङां ल्यपि च' [ ५० ] इत्यत्रैज्ग्रहणमनुवर्तयति ।

इह तर्हि ग्लै ग्लानीयम्, म्लै म्लानीयम्, वेञ् वानीयम्, शो निशानीयम्, परत्वादायादयः प्राप्नुवन्ति । अत्राप्याचार्यप्रवृत्तिर्ज्ञापयति 'नायादय आत्त्वं बाधन्त' इति यदयमशितीति प्रतिषेधं शास्ति । यदि हि बाधेरन्, शित्यपि बाधेरन् । [ तंत्राशित्करणमनर्थकं स्यात् । ]

अथवा पुनरस्तु 'एज् य उपदेश' इति । ननु चोक्तं ग्लै 'ग्लानीयम्, म्लै म्लानीयम्, वेञ् वानीयम् शो निशानीयम्, परत्वादायादयः प्राप्नुवन्तीति । अत्रापि शित्प्रतिषेधो ज्ञापको 'नायादय आत्त्वं बाधन्त' इति ।

## आत्त्व एश्युपसङ्ख्यानम् ॥ १ ॥

आत्त्व एश्युपसङ्ख्यानं कर्तव्यम् । जग्ले मम्ले† । अशितीति प्रतिषेधः प्राप्नोति ।

प्र०—अकृते च तस्मिन्नेजन्तस्यात्त्वं भवतीति सूत्रार्थाश्रयणादात्त्वस्याल्विधित्वात्स्थानिवत्त्वाभावात्संप्रसारणादिषु कृतेष्वप्रसङ्गः । शित्यपि बाधेरन्निति । ततश्च ग्लायतीत्यादीनां सिद्धत्वादशितीति प्रतिषेधोऽनर्थकः स्यात् । तस्मात् पूर्वविप्रतिषेधेनात्त्वं भवतीति ज्ञायते । नन्वशितीत्यास्यान्यत्प्रयोजनमस्ति, द्यतिस्यतीत्यादौ हलादावात्त्वं मा भूत् । नैतदस्ति । 'ओतः श्यनी'त्योकारलोपविधानादात्त्वं श्यनि न भवतीति ज्ञायते ।

उ०—'एच' इति वक्तुं युक्तम् । सूत्रार्थाश्रयणादिति । न तूपदेशे यदेजन्तं दृष्टं तस्येत्यर्थाश्रयणमित्यर्थः । ननूपदेशग्रहणाभावे गोशब्दादिभ्य आचारक्विबन्तेभ्योऽगवीदित्यादावात्त्वापत्तिरिति चेन्न; अनभिधानेनैजन्तेभ्य आचारक्विबभावात् । भाष्ये—एज्ग्रहणमनुवर्तयतीति । एजन्तानां मीनात्यादीनामात्त्वमित्यर्थेऽनेनैवात्त्वसिद्धेस्तत्सूत्रं व्यर्थं सदेतदर्थज्ञापकमिति भावः । अत्र चकारलब्धमशित्यात्त्वमेज्ग्रहणसहितं ज्ञापकं बोध्यम् । चेतेत्यादौ लक्षणप्रतिदोक्तपरिभाषाया तु न वारणम् । अवयवद्वारानिष्पन्नमेव तत्र लाक्षणिकशब्देन गृह्यत इत्यभिमानात् । वस्तुतोऽनेन ज्ञापकेन तत्परिभाषाप्रवृत्तिरेव बोध्यत इति बोध्यम् । भाष्ये—परत्वादायादय इति । अल्विधित्वेन स्थानिवत्त्वाभावान्न पुनरात्वप्राप्तिः । निर्दिश्यमानस्येति परिभाषणाच्चेति भावः । ओतः श्यनीति । यद्यात्त्वं स्यात्तर्हि ओकाराभावाल्लोपविधानमनर्थकं स्यादिति भावः । अत्रेदं तत्त्वम्, अशितीत्यस्य प्रसज्यप्रतिषेधत्वादात्त्वस्यान्तरङ्गत्वेन पक्षद्वयेऽपि दोषपरिहार इति ढौकितेत्यादावाद्यपक्षेऽपि न दोषः, एजुपदेशसामर्थ्यात् । न च ढौकत इत्यादौ स चरितार्थः, ककारव्यवधानेन तत्रापि शित्परत्वाभावादिति दिक् ।

---

१—इदं क्वाचित्कम् । † लिटस्तझयोरेशिरेच् ३ । ४ । ८१

नैष दोषः । नैवं विज्ञायते शकार इद्यस्य सोऽयं शित्, न शिदशित्, अशितीति । कथं तर्हि ? शकार इत् शित्, न शित् अशित्, अशितीति । यद्येवं स्तनन्धय इत्यत्रापि प्राप्नोति‡ । अत्रापि शप् शिद्भवति§ ।

किं पुनरयं पर्युदासो यदन्यच्छित' इति, आहोस्वित्प्रसज्यायं प्रतिषेधः 'शिति ने'ति । कश्चात्र विशेषः ?

**अशित्येकादेशे प्रतिषेध आदिवत्त्वात् ॥ २ ॥**

अशित्येकादेशे प्रतिषेधो वक्तव्यः ग्लायन्ति म्लायन्ति । किं कारणम् ? 'आदिवत्त्वात्' । शिदशितोरेकादेशोऽशित आदिवत्स्यात् । अस्त्यन्यच्छित इति कृत्वात्त्वं प्राप्नोति ।

प्र०—शकार इदिति । तत्रेता शकारेण प्रत्ययस्याक्षेपाद्यस्मिन्विधिस्तदादावल्ग्रहण इति परिभाषोपस्थानात् शिदादावात्त्वनिषेधादेश्यात्त्वं भवत्येव । यद्येवं स्तनन्धय इति । विकरणोऽत्र रूपे विशेषाभावात्प्रयोजनाभावान्न भवतीति मन्यते । अत्रापि शबिति । आत्त्वनिवृत्तिरेव शपः प्रयोजनम् ।

किं पुनरिति । तत्र पर्युदासे एकवाक्यत्वम्, उत्तरपदार्थेन नञः संबन्धात्समर्थसमासः । उत्तरपदार्थसदृशं वस्त्वन्तरं समासार्थः । प्रसज्यप्रतिषेधे तु विधिनिषेधलक्षणार्थद्वयविधानाद्वाक्यभेदो नञः क्रियया संबन्धादसमर्थसमासः । स चाकर्तरि च कारक इति कारकग्रहणेन ज्ञापितः ।

ग्लायन्तीति । लावस्थयामेवाकृतेषु तिबादिष्वात्त्वं न प्रवर्तते, ग्लैप्रभृतीनामेजन्तानामुपदेशसामर्थ्यादशितीति वचनसामर्थ्याद्वा । 'पाघ्राध्माधेट्दृशः श' इत्येषोऽशितीति वचन-

उ०—तत्रेता शकारेणेति । यद्यप्यप्रत्यय ईशादिः शिदस्ति तथापि एजन्ताच्छितः प्रत्ययस्यैव संभव इति भावः । नन्वत्रापि शपः शिदादेः प्रत्ययस्य सत्त्वात् कथमात्त्वमत आह—विकरणोऽत्रेति ।

स चाकर्तरीति । अन्यथा कर्तृसदृशस्य कारकस्यैव ग्रहणे सिद्धे कारकग्रहणमनर्थकं प्रसज्यप्रतिषेधेऽपि समासं ज्ञापयति । एवं च तच्छङ्कानिवृत्त्या कारकग्रहणं चरितार्थमिति भावः ।

ननु एकादेशविषय एव किमित्यात्त्वप्राप्तिर्नोद्यते, ग्लायतीत्यादावपि लकारेऽशित्यात्त्वप्राप्तेरत आह—लावस्थायामेवेति । नित्यत्वान्तरङ्गत्वाभ्यामिति । आत्त्वं तु तेषु कृतेषु नित्यत्वाच्छपः प्राप्त्यानित्यं, प्रकृतिप्रत्ययोभयाश्रयत्वाद्बहिरङ्गं च । भाष्ये—आदिवत्त्वादिति । तत्प्रयुक्तकार्यस्य सत्त्वात्तस्यैव प्रवृत्तिरिति भावः । प्रसज्यप्रतिषेधे तु एकादेशस्य पूर्वान्तवत्त्वेन शित्त्वान्नात्त्वमिति बोध्यम् ।

‡ नासिकास्तनयोर्ध्माधेटोः ३ । २ । २९        § तिङ्शित् सार्वधातुकम् ३ । ४ । ११३; कर्तरि शप् ३ । १ । ६८

## प्रत्ययविधिः ॥ ३ ॥

प्रत्ययविधिश्च न सिध्यति— सुग्लः सुम्लः। आकारान्तलक्षणः* प्रत्ययविधिर्न प्राप्नोति। अनिष्टे प्रत्ययेऽवस्थित आत्त्वम्। अनिष्टस्य प्रत्ययस्य श्रवणं प्रसज्येत।

## अभ्यासरूपं च ॥ ४ ॥

अभ्यासरूपं च न सिध्यति—जग्ले मम्ले। इवर्णाभ्यासता प्राप्नोति†।

## अयवायावां प्रतिषेधश्च ॥ ५ ॥

अयवायावां च प्रतिषेधो वक्तव्यः। ग्लै ग्लानीयम्, म्लै म्लानीयम्, शो निशानीयम्, वेञ् वानीयम्, परत्वादायादयः प्राप्नुवन्ति‡।

अस्तु तर्हि प्रसज्य प्रतिषेधः 'शिति ने'ति।

## शिति प्रतिषेधे श्लुलुकोरुपसङ्ख्यानम् ररीध्वम् त्राध्वम् शिशीते ॥ ६ ॥

शिति प्रतिषेधे श्लुलुकोरुपसङ्ख्यानं कर्तव्यम्। 'दिवो नो वृष्टिं मरुतो ररीध्वम्'§। लुक्—'त्राध्वं नो देवा निजुरो वृकस्य'+। 'शिशीते शृङ्गे रक्षसे विनिक्षे'×।

नैष दोषः। इह तावद्दिवो नो वृष्टिं मरुतो ररीध्वमिति नैतद्रै इत्यस्य रूपम्। कस्य तर्हि? रातेर्दानकर्मणः। 'शिशीते शृङ्गे' इति नैतच्छ्यते रूपम्। कस्य तर्हि? शीङः। श्यत्यर्थो वै गम्यते। कः पुनः श्यतेरर्थः? श्यतिर्निशाने वर्तते। शीङपि श्यत्यर्थे वर्तते। कथं पुनरन्यो नामान्यस्यार्थे वर्तते? बह्वर्था अपि धातवो

प्र०—स्यावकाश इति चेत्, नैकमुदाहरणमशिद्ग्रहणं प्रयोजयति, अन्यथा'ऽशे'इति ब्रूयात्। अथवा नित्यत्वान्तरङ्गत्वाभ्यां पूर्वं तिबादयो भवन्ति तेषु नित्यत्वाच्छब्भवति। ततोऽकारयोः पररूप एकादेशे कृते तस्य परं प्रत्यादिवद्भावादात्त्वप्रसङ्गः॥ जग्ले इति। एशि परत आत्त्वं तस्य 'द्विर्वचनेऽची'ति स्थानिवद्भावाद्द ग्लैशब्दस्य द्विर्वचने ह्रस्वत्वे चाभ्यास इवर्णान्तता स्यात्।

ररीध्वमिति। 'रै शब्द' इत्यस्माल्लोटो व्यत्ययेनात्मनेपदम्। शपो'बहुलं छन्दसी'ति श्लुः। तत्र प्रसज्यप्रतिषेध आत्त्वं न प्राप्नोति, शबाश्रयप्रतिषेधप्रसङ्गात्। पर्युदासे तु ध्वमाश्रयमात्त्वं भवति। श्लौ द्विर्वचनम् 'ई हल्यघो'रितीत्त्वम्। शिशीत इति। श्यतेर्लटो व्यत्ययेनात्मनेपदम्।

उ०—शबाश्रयेति। प्रत्ययलक्षणेनेति भावः। नलुमतेति निषेधस्त्वनाङ्गत्वान्नेत्यभिमानः। शप्चेति। व्यत्ययेनेति शेषः। श्लुः—'बहुलं छन्दसी'त्यनेन। भाष्ये—विनिक्षे इति। विनिपूर्वान्नशेरन्तर्भावितण्य-

* आतश्चोपसर्गे ३।१।१३६ † द्विर्वचनेऽचि १।१।५६ १—,अयादीनां' पा०।

‡ एचोऽयवायावः ६।१।७८ § ऋ० सं० ५।८३।६

\+ ऋ० सं० २।२९।६ × ऋ० सं० ५।२।९

भवन्ति । तद्यथा— वपिः प्रकिरणे दृष्टश्छेदने चापि वर्तते— केशान्वपतीति । ईडिः स्तुतिचोदनायाच्ञासु दृष्टः प्रेरणे चापि वर्तते—अग्निर्वा इतो वृष्टिमीट्टे, मरुतोऽमुतश्च्यावयन्ति । करोतिरभूतप्रादुर्भावे दृष्टो निर्मलीकरणे चापि वर्तते— पृष्ठं कुरु, पादौ कुरु । उन्मृदानेति गम्यते । निक्षेपणे चापि वर्तते— घटे कुरु, कटे कुरु, अश्मानमितः कुरु । स्थापयेति गम्यते ।

सर्वेषामेवं परिहारः—'शिती'त्युच्यते न चात्र शितं पश्यामः । प्रत्ययलक्षणेन । 'न लुमता तस्मि'न्नितिः§ प्रत्ययलक्षण प्रतिषेधः ॥ त्राध्वमिति लुङेष व्यत्ययेन भविष्यति ।

अथवा पुनरस्तु पर्युदासः । ननु चोक्तमशित्येकादेशे प्रतिषेध आदिवत्त्वादिति । नैष दोषः । एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यवधानम् ।

यदपि 'प्रत्ययविधि'रिति, आचार्यप्रवृत्तिर्ज्ञापयति भवत्येजन्तेभ्य आकारान्तलक्षणः प्रत्ययविधिरिति यदयं 'ह्वावामश्च' [ ३ । २ । २ ] इत्यणं कबाधनार्थं शास्ति ।

यदप्यभ्यासरूपमिति, प्रत्याख्यायते स योगः* । अथापि क्रियते । एवमपि न दोषः । कथम् ? 'लिटी'त्यनुवर्तते† । द्विलकारकश्चायं निर्देशः—'लिटि लका-

प्र०—शप् च । तस्य श्लुः । तस्य द्विर्वचनम् । अभ्यासस्य 'बहुलं छन्दसी'तीत्वम् । 'ई हल्यघो'रितीत्वम् । त्राध्वमिति । त्रैङ् पालने । लोट् । ध्वम् । शपो 'बहुलं छन्दसी'ति लुक् । श्यत्यर्थे इति । वृषभः शृङ्गे तीक्ष्णीकरोति । रक्षसे—रक्षोर्थम्, विनिक्षे—विनिपातनायेत्यर्थः । त्राध्वमिति लोडर्थे व्यत्ययेन लुङ् । ध्वम् । 'धि चे'ति सलोपः । 'बहुलं छन्दस्यमाङ्योगेऽपी'ति अडभावः । यदयमिति ।

'आत्मभाविन एजन्तादाकारान्तनिमित्तकः ।
प्रत्ययो ज्ञाप्यते सर्वो ह्वावामश्चेत्यणा पुनः' ।

प्रत्ययाख्यात इति । 'द्विर्वचनेऽची'त्ययं योगः पूर्वविप्रतिषेधाश्रयेण प्रत्याख्यायते । तत्प्रत्याख्यानात्स्थानिवत्त्वाभावः । द्विलकार इति । 'लिटि वयो य' इत्यत्र द्विलकारको निर्देश-

उ०—र्थोत्तुमर्थे इति सेन्नत्वे । छान्दसो वर्णलोपः । सर्वं इति । यजादिरपीत्यर्थः । पूर्वविप्रतिषेधाश्रयेणेति । द्विर्वचनं ययावयावेत्यत्राकारपाठाभावात्परत्वादात्वे कृते द्वित्वमिति भावः । अनुवृत्ते कथं द्विलकारको निर्देशोऽत आह—लिटि वय इति । 'न संप्रसारणे'इत्यनेन संहितया पाठे इत्यर्थः । लावस्थायामिति ।

१–'मेष; पा० ।　§ न लुमता तस्मिन्निति चेद्धनिणिङादेशास्तलोपे १ । १ । ६३ वा० १३
* द्विर्वचनेऽचि १ । १ । ५६　　† लिटि वयो यः ६ । १ । ३८

रादा'विति । एवं च कृत्वा सोऽप्यदोषो भवति यदुक्तमात्त्व एश्युपसङ्ख्यानमिति ।

यदप्युक्तमयवायावां प्रतिषेधश्चेति, शिति प्रतिषेधो ज्ञापको 'नायादय आत्त्वं बाधन्त' इति ।

## प्रातिपदिकप्रतिषेधः ॥ ७ ॥

प्रातिपदिकानां प्रतिषेधो वक्तव्यः । गोभ्याम् गोभिः । नौभ्याम् नौभिः ।

स तर्हि वक्तव्यः ? न वक्तव्यः । आचार्यप्रवृत्तिर्ज्ञापयति 'न प्रातिपदिकानामात्त्वं भवती'ति यदयं 'रायो हलि' [ ७ । २ । ८५ ] इत्यात्वं शास्ति । नैतदस्ति ज्ञापकम् । नियमार्थमेतत्स्यात्—'रायो हल्येवे'ति । यत्तर्हि 'औतोऽम्शसोः' [ ६ । १ । ९३ ] इत्यात्वं शास्ति । एतस्याप्यस्ति वचने प्रयोजनम् । अमि‡ वृद्धिबाधनार्थमेतत्स्यात्, शसि प्रतिषेधार्थं च । तस्मात् प्रातिपदिकानां प्रतिषेधो वक्तव्यः ॥ न वक्तव्यः ।

## धात्वधिकारात्प्रातिपदिकस्याप्राप्तिः ॥ ८ ॥

धात्वधिकारात्प्रातिपदिकस्यात्त्वं न भविष्यति । धातोरितिवर्तते । क्व प्रकृतम् ?

प्र०—स्तत्र च द्वितीयस्य लकारस्य प्रयोजनाभावादिहार्थत्वं विज्ञायते—'लावस्थायामेव लिट्यात्वं न त्वजादा'विति स्थानिवत्त्वाभावाज्जग्ले इत्यादि सिध्यति ।

प्रातिपदिकप्रतिषेध इति । उणादीनां व्युत्पत्तिपक्षे 'गमेर्डोर्ग्लानुदिभ्यां डा'वित्यादावुपदेशे भवत्ययमेच् । एजन्तो वार्थवत्त्वाद्व्यपदेशिवद्भावादिति भावः । अमि वृद्धिबाधनार्थमिति । 'गां पश्ये'त्यत्र 'गोतो णि'दिति णित्त्वे वृद्धिप्रसङ्गात् । 'गाः पश्ये'त्यत्राशितीत्यात्वाप्रसङ्गः ।

उ०—वाक्यभेदेन संबन्धः । अशित्यात्वं, लिटि तु लकारादावितीति भावः । स्थानिवत्त्वाभावादिति । द्विर्वचननिमित्ताज्निमित्तत्वाभावादित्यर्थः ।

ननु गवादीनामुपदेशाभावात्कथमतिप्रसङ्गोऽत आह—उणादीनामिति । तदन्तविधिपक्षेऽप्याह—एजन्तो वेति । भाष्ये—नियमार्थमेतत्स्यादिति । इदं प्रौढ्या । अतिरिशब्दे नपुंसकेऽनेजन्ते आत्वार्थं तस्यावश्यकत्वात् । स्पष्टञ्चेद'मिकोऽची'ति सूत्रे भाष्ये ।

भाष्ये—अथापि निवृत्तमिति । 'ष्यङः संप्रसारण'मित्यादावसम्बन्धादिति भावः । नोपदेश इति । अनिर्ज्ञातस्वरूपस्य कार्यार्थस्वरूपज्ञापनार्थमपूर्वोच्चारणं ह्युपदेशः । गुणैः प्रापणं चोद्देशः । नन्वत्रापि व्युत्पत्तिपक्षे 'डो' इत्यादीनामुपदेशोऽस्त्येवेत्यत आह—उणादय इति । परार्था इति । परार्था एवेत्यर्थः । येषां तु परार्थमुपादानेऽपि तेनैव लक्षणेन स्वरूपसिद्धिरपि तेषामुपदेशत्वमस्त्येवेति भावः । अत्रेदं बोध्यम्—प्रसज्यप्रतिषेध एव युक्तः, पर्युदासपक्षे बहुप्रतिविधेयत्वात् । उपदिश्यमानस्य एजन्तस्येत्यर्थाच्च गोभ्याम्

‡ गोतो णित् ७ । १ । ९०; अचो ञ्णिति ७ । २ । ११५

'लिटि धातोरनभ्यासस्य' [ ६ । १ । ८ ] इति ॥ अथापि निवृत्तम् । एवमप्य-दोषः । 'उपदेश' इत्युच्यते, उद्देशश्च प्रातिपदिकानां नोपदेशः ॥ ४५ ॥

## क्रीङ्जीनां णौ ॥ ६ । १ । ४८ ॥

### आत्वे णौ लीयतेरुपसङ्ख्यानं प्रलम्भनशालीनीकरणयोः ॥ १ ॥

आत्वे णौ लीयतेरुपसङ्ख्यानं कर्तव्यम्* । किं प्रयोजनम् ? प्रलम्भने चार्थे शालीनीकरणे च नित्यमात्त्वं यथा स्यात् । प्रलम्भने तावत्- जटाभिरालापयते । श्मश्रुभिरालापयते । शालीनीकरणे-श्येनो वर्तिकामुल्लापयते । रथी रथिनमपलापयते† ॥ ४८ ॥

प्र०—उद्देशश्चेति । 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानी'ति भावः । एतच्चातः कृकमिकंसेत्यत्र कंसशब्दस्य भेदेनोपादानाद्विज्ञायते । 'उणादयो बहुल'मित्यस्य तु सूत्रस्योदाहरणप्रदर्शनायोणादिपाठ इत्युणादीनामुपदेशाभावः । ननूगवादिभ्यो यदित्यत्र गवादिगणे 'गो-हविष्-अष्टके'ति गोशब्दस्यास्त्युपदेशः, तथा 'नौवयोधर्मे'त्यत्र 'नौ'शब्दस्य । नैष दोषः । अर्थवदिति प्रातिपदिकसंज्ञाविधानाल्लब्धसाधिमानः प्रत्ययविधानाय परार्था गवादय उपात्ताः । येषां तु स्वरूपज्ञानायापूर्वमुच्चारणं तेषामेवोपदेशव्यवहारः ॥ ४५ ॥

क्रीङ्जीनां णौ । आत्वे णाविति । 'विभाषा लीयते'रिति विकल्पे प्राप्ते नित्यार्थं वचनम् । संमानने तु विकल्प एव भवति । अन्ये त्वाहुः—प्रलम्भनशालीनीकरणग्रहणमात्मनेपदविषयोपलक्षणार्थ'मिति संमाननेऽपि नित्यमात्वं भवति ॥ ४८ ॥

उ०—दौकितेत्यादौ न दोषः । धातुग्रहणानुवृत्तौ तु 'उदीचां माङ' इत्यादावात्वानापत्तिः, ङकारविशिष्टे धातुत्वाभावात् । अनुबन्धलोपोत्तरं तद्विनिर्मुक्तस्यैव धातुताया 'न धातुलोप' इति सूत्रे भाष्ये स्पष्टमुक्तत्वात् । अयमेवाथापि निवृत्तमिति भाष्यस्याशयः । उपदेशग्रहणं तु कार्यमेव, ज्ञापकाश्रयणे गौरवात्, गोभ्यामित्यस्य व्यावृत्त्यर्थमावश्यकत्वाच्च, 'उद्देशश्चे'त्यादि भाष्येण तदर्थतायास्तस्य बोधितत्वात् । 'तन्न करिष्यते' इति प्राक्तनभाष्यं त्वेकदेश्युक्तिः । अन्त्यानुबन्धसहितधेडादिधातूनां तु अनुबन्धलोपे कृते उपदेशविषयैजन्तत्वादात्वं भवत्येव, धातुसंज्ञाद्यर्थं तस्याप्युपदेशविषयत्वात् । सति त्वनुबन्धे न प्राप्नोति, परस्य सत्त्वेन तदा तस्यैजन्तत्वाभावात् । तत्रापि 'माङ' इति निर्देशज्ञापितेन नानुबन्धकृतमनेजन्तत्वमित्यनेन सिध्यति । अत एव दैपोऽदाबिति प्रतिषेधः सिद्ध्यति । एवञ्चगोशब्दादिव्यावृत्तये उपदेशग्रहणावश्यकत्वे तस्य लक्षणप्रतिपदोक्तपरिभाषानित्यत्वज्ञापकता नव्योक्ता चिन्त्यैवेति दिक् ॥ ४५ ॥

क्रीङ्जी ननु 'विभाषा लीयते'रित्यात्वस्य सिद्धत्वात् किं वचनेनेत्यत आह—विभाषेति । शालीनीकरणं—न्यक्कारः । अन्ये त्वाहुरिति मतं भाष्याननुगुणम्, 'आत्मनेपदविषये इति वक्तव्ये तयोर्ग्रहणात् ॥ ४८ ॥

* विभाषा लीयतेः ६ । १ । ५१　　† लियः सम्माननशालीनीकरणयोश्च १ । ३ । ७०

## सिध्यतेरपारलौकिके ॥ ६ । १ । ४९ ॥

### सिध्यतेरज्ञानार्थस्य ॥ १ ॥

सिध्यतेरज्ञानार्थस्येति वक्तव्यम् ।

### इतरथा ह्यनिष्टप्रसङ्गः ॥ २ ॥

'अपारलौकिक' इत्युच्यमानेऽनिष्टं प्रसज्येत । अन्नं साधयति ब्राह्मणेभ्यो दास्यामीति ॥ अस्ति पुनरयं सिध्यतिः क्वचिदन्यत्रापि ज्ञानार्थे वर्तते ? अस्तीत्याह । तपस्तापसं सेधयति । ज्ञानमस्य प्रकाशयति । स्वान्येवैनं कर्माणि सेधयन्ति ।

प्र०—सिध्यते । परलोकः प्रयोजनमस्येति पारलौकिकम् । 'प्रयोजन'मिति ठञ् । 'अनुशतिकादीनां चे'त्युभयपदवृद्धिः । धात्वर्थोपाधिश्चायं 'न चेत्सिध्यतिरदृष्टफलेऽर्थे वर्तते तदा तस्यात्त्वं भवति' ॥ सिध्यतेरज्ञानार्थस्येति । सांकाश्ये सिद्ध इत्यादौ सिध्यतिर्ज्ञानार्थः प्रयुज्यते, सांकाश्ये ज्ञायत इत्यर्थावगमात् । इह तु ज्ञायमानकर्तृकार्थवृत्तिः सिध्यतिरिति प्रतिषेधो न भवति— 'राजकुले देवदत्तं साधयती'ति । ज्ञातृव्यापारवृत्तेस्त्वात्त्वं निषिध्यते, तत्रैव ज्ञानस्य मुख्यत्वात् । सिध्यति तापसः । आविर्भूतज्ञानलक्षणप्रकाशो भवतीत्यर्थः । तपः सेधयतीति । ज्ञानपूर्विकायां तु संपत्तौ यो वर्तते तत्र ज्ञानस्य गुणभावात्प्रतिषेधाभावो 'राजकुले देवदत्तं साधयती'ति ।

अन्नं साधयतीति । ननु 'ब्राह्मणेभ्यो दास्यामी'ति वाक्यात् पारलौकिकत्वं गम्यते न तु पदात्, धात्वर्थस्तन्निष्पत्तिमात्रम्, 'अन्नं निष्पादयती'त्यर्थावगमादिति प्रतिषेधो न भविष्यति । नैतदस्ति । 'तपस्तापसं सेधयती'त्यत्रापि पदान्तरसंनिधानात्सिध्यर्थस्य पारलौकिकत्वं प्रतीयत इति सर्वत्र वाक्यगम्यत्वात्पारलौकिकत्वस्य प्रतिषेधप्रसङ्गः । वार्तिककारेण सूत्रार्थ एव व्याख्यात

उ०—सिध्यतेर । परलोक इति । तेन देहान्तरोपभोग्यफलकेऽर्थे यदि सिध्यतिस्तदात्त्वं नेष्यत्यर्थस्तदाह—अदृष्टफले इति ॥ ननु सिध्यतिनिष्पत्तौ न ज्ञाने इति तत्पर्युदासो व्यर्थोऽत आह—साङ्काश्ये इति । ननु राजकुले देवदत्तं साधयतीत्यतो ज्ञापयतीत्यर्थप्रतीतेस्तत्राप्यात्वं न स्यादत आह—इह तु ज्ञायमानेति । स च ज्ञानविषयीभवनरूपः, देवदत्तो ज्ञानविषयो भवति, तमपरो ज्ञानविषयीकरोतीत्यर्थावगतेः । कथमत्र प्रतिषेधो न भवतीत्यत आह—ज्ञातृव्यापारेति । तत्र हेतुमाह—मुख्यत्वादिति । एवञ्च तत्र चरितार्थे गौणेऽप्रसिद्धे न प्रवर्तत इति भावः । आविर्भूतेत्यादेर्ज्ञानवान्भवतीत्यर्थः । तपः सेधयतीति । ततोऽयं णिचि प्रयोगोऽज्ञानार्थस्येत्यस्य व्यावर्त्यमिति भावः । 'राजकुले देवदत्तं साधयती'त्यस्य प्रकारान्तरेणोपपत्तिमाह—ज्ञानपूर्विकायां तु संपत्ताविति । संपत्तिः—संबन्धः । देवदत्तो राजकुले ज्ञानपूर्वं संबद्धो भवति, तमन्यस्तथा सम्बद्धं करोतीत्यर्थ इति भावः ।

न तु पदादिति । 'साधयती'तिपदादित्यर्थः । पदान्तरसन्निधानादिति । 'तपस्तापस'मिति पदसन्निधानादिति भावः । इत्याहुरिति । अत्रारुचिबीजं तु 'इतरथा ह्यनिष्टप्रसङ्ग' इति वार्तिकशेषविरोधः । अन्नलक्षणं—अन्ननिष्पत्तिलक्षणम् । सिध्यत्यर्थस्य तदर्थव्यापारस्य । दानं त्वदृष्टफलम् । एवञ्च

ज्ञानमस्य प्रकाशयन्तीत्यर्थः ॥ ४९ ॥

## मीनातिमिनोतिदीङां ल्यपि च ॥ ६ । १ । ५० ॥

### मीनात्यादीनामात्व उपदेशवचनं प्रत्ययविध्यर्थम् ॥ १ ॥

मीनात्यादीनामात्व उपदेशिवद्भावो वक्तव्यः । उपदेशावस्थायामात्त्वं भवतीति वक्तव्यम् । किं प्रयोजनम् ? 'प्रत्ययविध्यर्थम्' । उपदेशावस्थायामात्त्वे कृत इष्टः प्रत्ययविधिर्यथा स्यात् ।

के पुनः प्रत्यया उददेशिवद्भावं प्रयोजयन्ति ? काः* । कास्तावन्न प्रयोजयन्ति । किं कारणम् ? 'एच' इत्युच्यते, न च केष्वेजस्ति† ।

णघञ्युज्विधयस्तर्हि प्रयोजयन्ति । ण—अवदायः । 'आत' इति णः सिद्धो भवति‡ । ण ॥ घञ्—अवदायो वर्तते । आत इति घञ्सिद्धो भवति । किं च भो

प्र०—इत्याहुः । अन्नं साधयतीत्यत्र दृष्टमेवान्नलक्षणं फलं सिध्यत्यर्थस्येति निषेधो न भवति, हेयोपादेयतत्त्वप्रत्यक्षीकारलक्षणं तु ज्ञानं पारलौकिकमिति तत्रैव प्रतिषेधः प्रवर्तते ॥ ४९ ॥

मीनाति । उपदेशवचनमिति । आद्य उच्चारणेऽनुत्पन्न एव प्रत्यय आत्व कर्तव्यमित्यर्थः ॥ भाष्यकारस्त्वेनमेवार्थमन्यथा व्याचष्टे—उपदेशिवद्भावो वक्तव्य इति । उपदेशिन आकारान्ता यावाप्रभृतय आकारान्तनिमित्तप्रत्ययप्रकृतित्वं यथा प्रतिपद्यन्ते तथा मीनात्यादयोऽपीत्यर्थः । का इति । 'आतश्चोपसर्गे'.इति कः । 'आतोऽनुपसर्गे क' इति कः । कौ च अङ् च काः । आतश्चोपसर्गे इत्यङत्र निर्दिष्टः । न च केष्विति । शकन्ध्वादित्वात्पररूपम् । अन्यथा कास्विति

उ०—साक्षाददृष्टफले धात्वर्थे सावकाशः पर्युदासो व्यवधानेनादृष्टफले न प्रवर्तत इति भावः । तदेवाह—हेयोपादेयेति । हेयोपादेययोर्यत्तत्त्वं हेयेत्वादिकं तत्प्रत्यक्षीकारो विवेकज्ञानमित्यर्थः । तपो हि चान्द्रायणादिकमनुष्ठीयामानमनुष्ठातुर्विवेकविषज्ञानातिशयमुत्पादयतीति भावः ॥ ४९ ॥

मीनातिमिनो । आद्ये उच्चारणे इति । तदव्यवहितोत्तरकाले इत्यर्थः । यद्ययं वार्तिकार्थस्तत्कथं भाष्ये उक्तम्—'उपदेशिवद्भावे' इति ? अत आह—भाष्येति । तमेवार्थं शब्दान्तरेण विवृणोतीत्यर्थः । तदाह—भाष्ये—उपदेशावस्थायामिति । उपदेशावस्थासदृशावस्थायामित्यर्थः । ननु द्वावेव काविती बहुवचनानुपपत्तेराह—आतश्चेत्यादि । शकन्ध्वादित्वादिति । छत्रिण इतिवदङ्यपि कत्वारोपेण प्रयोग

* आतश्चोपसर्गे ३ । १ । १३६; आतोऽनुपसर्गे कः ३ । २ । ३; आतश्चोपसर्गे ३ । ३ । १०६
† असंयोगाल्लिट् कित् १ । २ । ५   ‡ श्याद्व्यध......श्लिषश्वसश्च ३ । १ । १४१
४६ ‡

आत इति घञुच्यते ? न खल्वप्यात इत्युच्यते, आतस्तु विज्ञायते । कथम् ? अविशेषेण घञुत्सर्गस्तस्येवर्णान्तादुवर्णान्ताच्चाजपावपत्रादौ§ । तत्रोपदेशावस्थायामात्वे कृतेऽपवादस्य निमित्तं नास्तीति कृत्स्नोत्सर्गेण घञ्सिद्धो भवति¶ । एवं च कृत्वा न चात इत्युच्यते, आतस्तु विज्ञायते ॥ युच्—ईषदवदानं स्ववदानम् । 'आत' इति युच्सिद्धो भवति× ।

इदं विप्रतिषिद्धमेच उपदेश इति । यद्येचो नोपदेशेऽथोपदेशे नैचः । एचश्चोपदेशे चेति विप्रतिषिद्धम् ॥ नैतद्विप्रतिषिद्धम् । आहायमेच उपदेश इति । यद्येचो नोपदेशेऽथोपदेशे नैचः । ते वयं विषयं विज्ञास्यामः—'एज्विषय' इति ।

तत्तर्ह्युपदेशग्रहणं कर्तव्यम् ? न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् ? 'आदेच उपदेशेऽशिति' [ ४५ ] इति । तद्वै प्रकृतिविशेषणं विषयविशेषणेन चेहार्थः । न चान्यार्थं प्रकृतमन्यार्थं भवति । न खल्वप्यन्यत्प्रकृतमनुवर्तनादन्यद्भवति, न हि

प्र०—स्यात् । 'क्ङिति चे'ति गुणप्रतिषेधात्तत्रैजभावः । आतस्तु विज्ञायत इति । सामर्थ्यात् । तथा हि-मीनात्यादीनामुपदेश एवात्वे कृते इवर्णान्तलक्षणोऽजपवादो न प्रवर्तत इति घञेव स्यात् ।

इदं विप्रतिषिद्धमिति । न हि मीनात्यादीनामुपदेश एजस्ति, प्रत्ययनिमित्तत्वादेचः । ते वयं विषयमिति । स तु विषयः—प्रत्ययः । यस्मिन् प्रत्यये एचा भाव्यं तस्मिन्ननुत्पन्न एवात्त्वम् । अन्ये त्विवर्णमेज्विषयमाहुः । यस्येवर्णस्यैचा भाव्यं तस्यात्त्वम् । केचित्त्वेजेव विषय इत्याहुः । एचि भावित्वेन बुद्ध्याश्रिते आत्वं भवतीत्यर्थः । न चान्यार्थमिति । तस्यैव तदर्थ-

उ०—इत्यन्ये । तत्रैजभाव इति । एवञ्चैज्विषयाभावान्न तद्विषये आत्वप्राप्तिरिति भावः । 'आत' इति वचनाभावे कथमातो विज्ञानमत आह—सामर्थ्यादिति । अपवादप्रवृत्तिप्रतिबन्धद्वाराकारान्तत्वनिमित्तको घञिति भावः ।

न हीति । अत्राप्येच इत्यनुवृत्त्यैजन्तानां मीनात्यादीनामुपदेशे आत्वमिति विरुद्धमित्यर्थः । स तु विषय इति । एचो विषय इति षष्ठीसमास इति भावः । अत्र पक्षे विषय इति सप्तम्यन्ताध्याहारेणानुत्पन्न एवेत्यर्थलाभ उपदेशग्रहणात् । तस्यात्वमिति । तच्चानैमित्तिकमिति भावः । अत्र पक्षे एज्विषय इति सप्तमी स्थानिनोऽधिकरणत्वविवक्षया बोध्या । अत एवारुचेराह—केचिदिति । अनयोरपि पक्षयोरुपदेशग्रहणादेवानुत्पन्ने प्रत्यये आत्वमिति बोध्यम् । तस्यैवेति । तदानुपूर्वीकस्येत्यर्थः । तदर्थस्यैवेति । यो यदर्थः

§ एरच्; ऋदोरप् ३ । ३ । ५६; ५७ ¶ भावे; अकर्तरि च कारके संज्ञायाम् ३ । ३ । १८; १९ × आतो युच् ३ । ३ । १२८

गोधा सर्पन्ती सर्पणादहिर्भवति ।

यत्तावदुच्यते 'न चान्यार्थं प्रकृतमन्यार्थं भवती'ति, अन्यार्थमपि प्रकृतमन्यार्थं भवति । तद्यथा—शाल्यर्थं कुल्याः प्रणीयन्ते, ताभ्यश्च पानीयं पीयते, उपस्पृश्यंते च, शालयश्च भाव्यन्ते । यदप्युच्यते 'न खल्वप्यन्यत्प्रकृतमनुवर्तनादन्यद्भवति, न हि गोधा सर्पन्ती सर्पणादहिर्भवती'ति, भवेद्द्रव्येष्वेतदेवं स्यात् । शब्दस्तु खलु येन येनाभिसम्बध्यते तस्य तस्य विशेषको भवति । तद्यथा—गौः शुक्लः, अश्वश्च । 'शुक्ल' इति गम्यते ।

प्र०—स्यैवोत्तरत्रानुवर्तनादिति भावः । तत्रैतत्स्यादन्यदेव शब्दरूपं वाक्यान्तरेष्वनुमीयते इत्याशङ्क्याह—न खल्वपीति ।

अन्यार्थमपीति । स्वरितत्वप्रतिज्ञानाच्छब्दस्वरूपमात्रमुत्तरत्रानुवर्तते, तस्य यदर्थस्योपयोगस्तदर्थमेवावतिष्ठते । शब्दस्त्विति । स्वरितत्वप्रतिज्ञानात्तत्सदृशं शब्दान्तरं वाक्यार्थानुगुणार्थमनुमीयते । सादृश्यात्तु तदेवेदमिति तत्त्वाध्यवसायो भिन्नेष्वपि शब्दरूपेषु भवति । तत्रोपदेशशब्देन प्रत्ययोऽभिधीयते । उपदिश्यते तस्मिन्नेजित्युपदेशः । विषयसप्तमी चेयं न परसप्तमी । तेनानुत्पन्न एव प्रत्यय आत्वम् । इवर्णो वोपदेशः । अथवोपदेशनमुपदेशः—तत्प्रतिपादनम् । तत्र पूर्वसूत्रउपदेशग्रहणं प्रकृत्याभिसंबन्धात्तद्विशेषणमिह तु विषयविशेषणमिति न

उ०—प्रकृत इत्यर्थः । उत्तरभाष्यं शङ्कोत्तरत्वेन योजयति- तत्रैतत्स्यादिति । प्रत्यभिज्ञानुपपत्त्या नान्यत्वमित्युत्तरम् ।

ननु लोकवेदयोः प्रकृतार्थस्यैवोत्तरत्रान्वयो दृष्टो न त्वन्यार्थशब्दस्यान्यार्थत्वमतोऽत्र शास्त्रे विशेषमाह—स्वरितत्वेति । तत्सदृशमिति । अर्थभेदेन शब्दभेदादिति भावः । ननु प्रत्यभिज्ञाविरोधान्न शब्दान्तरत्वमत आह—सादृश्यात्त्विति । अत्रोपदेश इत्यस्य कोऽन्योर्थस्तत्राह—उपदिश्यत इति । विषयसप्तमीति । एच उपदेशे प्रत्यये विषय इत्यर्थः । इवर्णो वोपदेश इति । उपदिश्यत इत्युपदेशः । एचः सम्बन्धिन्युपदेशभूते इवर्णे विषय इति अर्थस्थानिनो विषयत्वेन निर्देशः । तत्प्रतिपादनमिति । एचः प्रतिपादनमित्यर्थः । प्रतिपादनमात्रमुपदेशो न तूच्चारणमिति भावः । एचः प्रतिपादनविषये एचो बुद्धिस्थत्वे सति प्रागेव प्रत्ययोत्पत्तेरात्वमितीष्टप्रयोगसिद्धिरिति तात्पर्यम् । तद्विशेषणं—बहुव्रीहिणा प्रकृतिभूतस्यैचो विशेष्यमित्यर्थः । विषयविशेषणमिति । विषयसप्तम्यन्ततया विधेयविशेषणमित्यर्थः । भाष्ये—अश्वश्च शुक्ल इति गम्यते

## निमिमीलियां खलचोः प्रतिषेधः ॥ २ ॥

निमिमीलियां खलचोः* प्रतिषेधो वक्तव्यः । ईषन्निमयम् सुनिमयम् । निमयो वर्तते । निमयः । मि ॥ मी—ईषत्प्रमयम् सुप्रमयम् । प्रमयो वर्तते । प्रमयः । मी ॥ ली—ईषद्विलयम् सुविलयम् । विलयो वर्तते । विलयः ॥ ५० ॥

## विभाषा लीयतेः ॥ ६ । १ । ५१ ॥

किमिदं लीयतेरिति ? लिनातिलीयत्योर्यका निर्देशः ॥ ५१ ॥

## बिभेतेर्हेतुभये ॥ ६ । १ । ५६ ॥

हेतुभय इति किमर्थम् ? कुञ्चिकयैनं भाययति । अहिनैनं भाययति । हेतुभय इत्युच्यमानेऽप्यत्र प्राप्नोति । एतदपि हि हेतुभयम् ॥ हेतुभय इति

प्र०—कश्चिद्दोषः ॥ खलचोरिति । पचाद्यच एरचश्च सामान्यग्रहणम् ॥ ५० ॥

विभाषा लीयतेः । यका निर्देश इति । श्यना निर्देशे लिनातेर्ग्रहणं न स्यादिति सामान्यग्रहणाय यका निर्देश आश्रीयते । यक्च शितपः शित्करणसामर्थ्यादभावकर्मवाचित्वेऽपि प्रवर्तते, यथा शबादयोऽकर्तृवाचित्वेऽपीति भावः ॥ ५१ ॥

बिभेतेर्हेतुभये । हेतुभय इति किमर्थमिति । इह णाविति वर्तते, प्रयोजकव्यापारे च णिज्विधीयत इति सर्वत्र हेतुसंबन्धिभयसद्भावाद्व्यावर्त्याभावादनर्थकं हेतुभयग्रहणमिति मत्वा प्रश्नः । हेतुरेव भयमिति । अपादानसाधनो भयशब्दो न तु भावसाधनः । समानाधिकरणपदः

उ०—इति । आश्रयभेदाद्गुणभेद इति मते इदम् ॥ खलचोरिति । तयोर्विषये आत्वस्य प्रतिषेध इत्यर्थः । पचाद्यच एरचश्चेति । अत एव भाष्ये—निमयो वर्तते, निमय इत्याद्युदाहृतम् ॥ ५० ॥

विभाषा ली । सामान्यग्रहणायेति । दैवादिकमात्रग्रहणे हि 'लीङ' इत्येव निर्दिशेदिति भावः । ननु भावकर्मवाचित्वाभावात्कथं यगत आह—यक्चेति । यथा शबादय इति । 'इन्धिभवती'त्यादौ । वस्तुत इदं चिन्त्यम्, पिबतिग्लायतीत्यादौ पिबाद्यादेशप्रवृत्त्या आत्वनिवृत्त्या च शित्त्वस्य चारितार्थ्यात् । तस्मात् 'उपसर्गात्सुनोती'त्यादिनिर्देशादकर्त्रादिवाचकेऽपि विकरण इति तत्त्वम् ॥ ५१ ॥

बिभेतेर्हे । इहेति । भयशब्दो भावसाधनः । षष्ठ्या च समास इति प्रश्नाशय इत्यर्थः । यदा

* ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ३ । ३ । १२६; नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ३ । १ । १३४; एरच् ३ । ३ । ५६

नैवं विज्ञायते हेतोर्भयं हेतुभयम् हेतुभय इति । कथं तर्हि ? हेतुरेव भयं हेतुभयम् हेतुभय इति । यदि स एव हेतुर्भयं भवतीति ॥ ५६ ॥

## सृजिदृशोर्झल्यमकिति ॥ ६ । १ । ५८ ॥

### अमि सङ्ग्रहणम् ॥ १ ॥

अमि सङ्ग्रहणं कर्तव्यम् । किमिदं 'स'ङिति ? प्रत्याहारग्रहणम् । क्व सन्निविष्टानां प्रत्याहारः ? सनः प्रभृत्यामहिङो ङकारात्* । किं प्रयोजनम् ?

### क्विप्प्रतिषेधार्थम् ॥ २ ॥

क्विबन्तस्य मा भूत् । रज्जुसृड्भ्याम् रज्जुसृड्भिः । देवदृग्भ्याम् देवदृग्भिः† ।

### उक्तं वा ॥ ३ ॥

किमुक्तम् ? 'धातोः स्वरूपग्रहणे तत्प्रत्ययविज्ञानात्सिद्ध'मिति‡ ॥ ५८ ॥

## शीर्षश्छन्दसि ॥ ६ । १ । ६० ॥

### शीर्षन् छन्दसि प्रकृत्यन्तरम् ॥ १ ॥

शीर्षन् छन्दसि प्रकृत्यन्तरं द्रष्टव्यम् । किं प्रयोजनम् ?

### आदेशप्रतिषेधार्थम् ॥ २ ॥

---

प्र०—समासो न षष्ठीसमासः । तेन यदा साक्षात्प्रयोजको भयस्यापादानं तदैतदात्त्वम् । यदा तु कुञ्चिकादीनि भयस्यापादानं तदात्वाभावः । एतच्च हेतुभयग्रहणसामर्थ्यादाश्रीयते । भावसाधनत्वे षष्ठीसमासे च तदनर्थकं स्यात् । यद्यपि भावसाधनपक्षेऽपि पञ्चमीसमासाश्रयणेनायमेवार्थो लभ्यते, तथापि षष्ठीसमासनिराकरणपरत्वाद्भाष्यस्य हेतोरपादानत्वमवश्याश्रयिव्यमित्यत्र तात्पर्यात्पञ्चमीसमासो न निवार्यते ॥ ५६ ॥

सृजिदृ । अकितीति यदि पर्युदासोऽथापि प्रसज्यप्रतिषेधो 'झल्यम् भवति, किति झलि ने'ति, सर्वथा रज्जुसृड्भ्यामित्यादौ प्राप्नोतीति मत्वाह—अमि सङ्ग्रहणमिति ॥ ५८ ॥

शीर्षन् । आदेशप्रतिषेधार्थमिति । यद्यपि 'शिरस' इति स्थानी साक्षान्न निर्दिष्टस्तथापि

---

उ०—साक्षादिति । यथा मुण्डो भाययत इत्यादौ । मुण्डो हि तत्र भयहेतुर्न तु कारणान्तरसहकृत इति भावः । यद्यपि भावेति । वृत्ताविदं स्पष्टम् । लाघवात्कर्मधारय एवोचित इति भाष्याशय इत्यन्ये ॥ ५६ ॥

शीर्षश्छन्दसि । ननु स्थानिनिर्देशाभावेनादेशत्वाप्रसक्तेः किं 'प्रकृत्यन्तरं द्रष्टव्य'मित्यनेनेत्यत

---

* मुक्तिजकिद्भ्यः सन्—तिसस्भिसिप्थस्थ······मिङ्वहिमहिङ् ३ । १ । ५—३ । ४ । ७८

† स्वौजसमौट्छष्टा······ङ्योस्सुप् ४ । १ । २ ‡ ७ । २ । ११४ वा० २ पृ० १८३

१—भाष्यमिति केचित् ।

आदेशो मा विज्ञायि, प्रकृत्यन्तरं यथा विज्ञायेत । किं च स्यात् ? असका-रान्तस्य छन्दसि श्रवणं न स्यात् । शिरो मे शीर्यते मुखे । इदं ते शिरो भिनद्मीति । तद्वा अथर्वणः शिरः ॥ ६० ॥

## ये च तद्धिते ॥ ६ । १ । ६१ ॥

### ये च तद्धिते शिरस आदेशार्थम् ॥ १ ॥

ये च तद्धित इत्यत्र शिरसो ग्रहणं कर्तव्यम् । किं प्रयोजनम् ? आदेशार्थम् । आदेशो यथा विज्ञायेत, प्रकृत्यन्तरं मा विज्ञायि । किं च स्यात् ? यकारादौ तद्धितेऽ-स्कारान्तस्य श्रवणं प्रसज्येत । शीर्षण्यो हि मुख्यो भवति । शीर्षण्यः स्वरः ।

### वा केशेषु ॥ २ ॥

वा केशेषु शिरसः शीर्षन्भावो वक्तव्यः । शीर्षण्याः केशाः । शिरस्याः ।

### अचि शीर्षः ॥ ३ ॥

अचि परतः शिरसः शीर्षभावो वक्तव्यः । हास्तिशीर्षिः स्थौलशीर्षिः

प्र०—समानार्थत्वादादेशेनाक्षिप्येत, यथा शिवादिषु विश्रवणशब्देन विश्रवशब्द इति स्थानिनोऽ-त्यन्तमप्रयोगः स्यादिति स्थान्यादेशभावपरिहारेण प्रकृत्यन्तरत्वमाश्रयणीयमित्यर्थः । यद्यपि पूर्वसूत्रादन्यतरस्याङ्ग्रहणानुवृत्त्येष्टसिद्धिर्भवति तथाप्युत्तरत्र तदनुवृत्तिराशङ्क्येतेति तत्परित्यागेन प्रकृत्यन्तरपक्षो निर्दोष आश्रितः ॥ ६० ॥

ये च । वा केशेष्विति । तत्र शिरस्यशब्दस्य केशविषयत्वाच्छिरस्यशब्दादेव केशा-र्थावगमात्केशशब्दो न प्रयोक्तव्यः । शीर्षण्यशब्दस्तु सामान्यवाचीति तत्प्रयोगे विशेषावगमाय केशशब्दः प्रयुज्यत इत्याहुः ।

अचि शीर्ष इति—वार्तिकं दृष्ट्वा सूत्रेषु कैश्चित्प्रक्षिप्तम् । हास्तिशीर्षिरिति । बाह्वादिषु

उ०—आह—यद्यपीत्यादिना । पद्दन्नादिसूत्रेऽपि प्रकृत्यन्तरत्वमेव द्रष्टव्यम् । अत एव तत्र भाष्ये 'पादादीनामिति वाच्य'मिति नोक्तम् । उत्तरत्र 'ये च तद्धिते' इत्यत्र । निर्दोष इति । छन्दसि सर्वविधीनां वैकल्पिकत्वेऽप्य-गतिकगतिः सेत्येतदुक्तं भाष्ये इत्याहुः ॥ ६० ॥

ये च तद्धिते । 'शीर्षण्या' इत्यत्र 'केशा' इत्युपादाने 'शिरस्या' इत्यत्र च तदनुपादाने बीजमाह—तत्रेति । अत्र छन्दसीति नानुवर्तते, 'छन्दसि चे'ति वार्तिकवैयर्थ्यापत्तेरित्याहुः ।

ननु शिरस्शब्दान्तरस्यानदन्तत्वात् कथमिञत आह—बाह्वादिष्विति ।

अजादाविति । अत एव 'शिरो मे विश', 'शिरो वा एतद्यज्ञस्ये'त्यादि सिद्धम् । सति दर्शने

पैलुशीर्षिः* ।

छन्दसि च ॥ ४ ॥

छन्दसि च शिरसः शीर्षभावो वक्तव्यः । द्वे शीर्षे† ।

इह हास्तिशीर्ष्या पैलुशीर्ष्येति‡ शिरसो ग्रहणेन ग्रहणाच्छीर्षन्भावः प्राप्नोति । अस्तु । 'नस्तद्धिते' [ ६ । ४ । १४४ ] इति टिलोपो भविष्यति । न सिध्यति । 'ये चाभावकर्मणोः' [ ६ । ४ । १६८ ] इति प्रकृतिभावः प्रसज्येत ।

यदि पुनर्येऽचि तद्धित इत्युच्येत । किं कृतं भवति ? इञि शीर्षन्भावे कृते टिलोपेन सिद्धम् । नैवं शक्यम् । इह हि स्थूलशिरस इदं स्थौलशीर्षमिति, अनणीति प्रकृभावः प्रसज्येत+ । तस्मान्नैवं शक्यम् । न चेदेवं शिरसो ग्रहणेन ग्रहणाच्छीर्षन्भावः प्राप्नोति ।

पाक्षिक एष दोषः । कतरस्मिन्पक्षे ? ष्यङ्विधौ द्वैतं भवति×। अणिञोर्वादेशः ष्यङ्, अणिञ्भ्यां वा पर इति ? तद्यदा तावदणिञोरादेशस्तदैष दोषः । यदा

प्र०—शिरश्शब्दस्य पाठात्केवलस्यापत्येनायोगात्तदन्तविधिः ।

छन्दसि चेति । अतद्धितेऽप्यजादौ यथा स्यादिति वचनम् । यद्येवमजादौ छन्दसि शिरश्शब्दप्रयोगो न प्राप्नोति, शीर्षादेशेन बाधनात् । सति दर्शने 'सर्वे विधयश्छन्दसि विकल्पन्त' इति दोषाभावः ।

येऽचि तद्धित इति । यकारादावजादौ च तद्धिते शीर्षन् भवति । तत्रेञि प्रत्यये

उ०—इति । 'इमेऽस्मिन् शिरसि प्राणा' इति दृश्यत एव ।

भाष्ये—इह हास्तीति । स्थानिवद्भावेन शिरश्शब्दत्वात् 'ये च तद्धिते' इति शीर्षन् प्राप्नोतीति भावः । शिरसो ग्रहणेनेति । शिरः शब्दग्राहकेण शिरस इत्यनेन ग्रहणेनेत्यर्थः ।

करिष्यत इति । कृतत्वाच्च पुनर्न प्रवृत्तिरिति भावः । ष्यङ आदेशत्वेऽपि सन्निपातपरिभाषया नादेशः, शीर्षादेशसन्निपातेन जातस्य ष्यङस्तदविघातकत्वादिति बोध्यम् । ध्वनितं चेद'मणिञो'रिति सूत्रे भाष्ये । अत्रत्यं भाष्यं त्वेकदेश्युक्तिः । 'अणिञो'रिति सूत्रभाष्यप्रामाण्यादनयोरभिधानमेवेत्यपि कश्चित् । यद्वा क्रौड्यादिगणे एतयोः पाठादत्र ष्यङः प्रत्ययत्वमेवेत्यणिञ्भ्यां व्यवधानादत्र शीर्षनादेशाभाव

* बाह्वादिभ्यश्च ४ । १ । ९६　　† ऋ० सं० ४ । ५८ । ३; यजु० १७ । ९१ तै० आ० १० । १० । २; निरु० १३ । ७ कृत्स्नमन्त्रव्याख्यानं भाष्ये पस्पशायां १६ पृष्ठे द्रष्टव्यम् ।

‡ अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे ४ । १ । ७८

\+ तस्येदम् ४ । ३ । १२०; अन् ६ । ४ । १६७

× ४ । १ । ७८ वा० १—४ पृ० ५३०—५३२

ह्यणिभ्यां परो न तदा दोषो भवत्यणिभ्यां व्यवहितत्वात् ॥ ६१ ॥

**पद्दन्नोमासृहन्निशसन्यूषन्दोषन्यकञ्शकनुदन्ना-**
**सञ्शस्प्रभृतिषु ॥ ६ । १ । ६३ ॥**

शस्प्रभृतिष्वित्युच्यतेऽशस्प्रभतिष्वपि दृश्यते । शलादोषणी । ककुद्दोषणी याचते महादेवः ।

**पदादिषु मांस्पृत्स्नूनामुपसङ्ख्यानम् ॥ १ ॥**

पदादिषु मांस्पृत्स्नूनामुपसङ्ख्यानं कर्तव्यम् । मांस्—यन्नीक्षणं मांस्पचन्याः‡ । 'मांसपचन्या' इति प्राप्ते । मांस् ॥ पृत्—पृत्सु मर्त्यम्§ । 'पृतनासु मर्त्य'मिति प्राप्ते । पृत् ॥ स्नु—न ते दिवो न पृथिव्या अधि स्नुषु¶ । 'अधिसानु'ष्विति प्राप्ते ।

**नस्नासिकाया यत्तस्क्षुद्रेषु ॥ २ ॥**

यत्तस्क्षुद्रेषु परतो नासिकाया नस्भावो वक्तव्यः । यत्—नस्यम् × । यत् ॥ तस्—नस्तः । तस् ॥ क्षुद्र— नःक्षुद्रः ।

---

प्र०—शीर्षन्भावे कृते टिलोपे च ष्यङादेशः करिष्यत इत्यर्थः ॥ ६१ ॥

पद्दन्नो । 'सर्वे विधयश्छन्दसि विकल्पन्त' इति पादादयोपि छन्दसि प्रयुज्यन्ते । दोषणी याचत इति । औटि दोःशब्दस्य दोषन्नादेशः । यत्तस्क्षुद्रेष्विति । यत्तसी प्रत्ययौ क्षुद्रशब्द उत्तरपदम् । नस्यमिति । नासिकायां भवं, नासिकायै हितमिति वा शरीरावयवाद्यत् । नस्त इति । 'अपादाने चाहीयरुहो'रिति तसिः । नःक्षुद्र इति । नासिकाया क्षुद्र इति सुप्सुपेति

---

उ०—इत्याशयः ॥ ६१ ॥

पद्दन्नो । सर्वे विधयश्छन्दसीति । एवञ्च लोके पादादीनां शसादौ प्रयोगोऽसाधुरेव । वाग्रहणस्य तु नानुवृत्तिरिति भावः । वस्तुतस्तु तुल्यास्यसूत्रादि भाष्ये 'आस्ये' पादेनोपहतम्' 'मासेन पूर्वाये'त्यादिप्रयोगदर्शनेन 'हृदयस्य प्रिय' इत्यादिसौत्रप्रयोगेण च लोकेऽप्यस्य वैकल्पिकत्वेन प्रकृत्यन्तरत्वपक्षोऽत्रावश्यकः । 'छन्दसी'ति नानुवर्तते, विच्छिन्नत्वात्, कैयटादयश्चिन्त्या एवेति बोध्यम् । यत्तु 'ककुद्दोषणी' इत्यत्र प्राण्यङ्गत्वात्समाहारद्वन्द्वगर्भ एकशेष इति तन्न, अल्पाच्तरत्वेन दोःशब्दस्य पूर्वनिपातापत्तेः, तस्मात्ककुदिति

---

‡ यजु० २५ । ३६ § ऋ० सं० १ । २७ । ७; यजु० ६ । २६; साम० उ० १२ । ५ । १ (१४ १५ ); तै० सं० १ । ३ । १३ । २ ¶ यजु० १७ । १४

× शरीरावयवाद्यत् ५ । १ । ६ + अपादाने चाहीयरुहोः ५ । ४ । ४५

अवर्णनगरयोरिति[1] वक्तव्यम् । इह मा भूत्—नासिक्यो वर्णः । नासिक्यं नगरम् ॥ तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । इह तावन्नासिक्यो वर्ण इति परिमुखादिषु* पाठः करिष्यते । नासिक्यं नगरमिति सङ्काशादिषु† पाठः करिष्यते ॥६३॥

## धात्वादेः षः सः ॥ ६ । १ । ६४ ॥

धातुग्रहणं किमर्थम् ? इह मा भूत्—षोडन् षण्डः षडिकः ।

अथादिग्रहणं किमर्थम् ? इह मा भूत्—पेष्टा पेष्टुम् । नैतदस्ति प्रयोजनम् । अस्त्वत्र सत्वं सत्वे कृत इण उत्तरस्यादेशसकारस्येति‡ षत्वं भविष्यति ।

---

प्र०—समासः । अवर्णनगरयोरिति । यत एतद्विशेषणम् । परिमुखादिषु पाठ इति । तत्र ञ्ये कृते सिद्धं—नासिक्यमिति । ननु यति 'तित्स्वरित'मिति स्वरितत्वं भवति, ण्यञ्ञ्ययोस्त्वाद्युदात्तत्वान्तोदात्तत्वे भवत इति स्वरभेदप्रसङ्गः । 'राजन्यसाङ्काश्यकाम्पिल्यनासिक्यदार्वाघाटानामादिर्वान्तो वे'ति प्रतिपदं स्वरविधानादाद्युदात्तत्वान्तोदात्तत्वाभ्यां पर्यायेण भाव्यमिति नास्ति स्वरभेदः । यत्प्रत्यये च सत्यनासिक्यमित्यत्र 'ययतोश्चातदर्थे' इत्युत्तरपदान्तोदात्तत्वं प्रसज्येत । अव्ययपूर्वपदप्रकृतिस्वरेण त्वाद्युदात्तत्वमिष्यत इति प्रत्याख्यानमेव युक्तम् ॥ ६३ ॥

धात्वादेः । उपदेशग्रहणानुवृत्त्या प्रातिपदिकानां सत्वं न भविष्यतीति मत्वाह—धातुग्रहणं किमर्थमिति । इतरः पूर्वसूत्रेषु विच्छिन्न उपदेशाधिकार इत्याह—षोडन्निति । षड्दन्ता अस्येति बहुव्रीहिः । 'वयसि दन्तस्य द'त्रिति दत्रादेशः । 'षष उत्व दतृदशधासूत्तरपदादेः ष्टुत्वं चे'ति उत्वष्टुत्वे । षण्डशब्दोऽव्युत्पन्नं प्रातिपदिकम् । षडिक इति । अनुकम्पितः षडङ्गु-

---

उ०—पृथक्पदं तद्ध्वनयन् तद्रहितं प्रतीकं गृह्णाति—दोषणी याचत इति । भाष्ये-'शलादोषणी' इत्यस्य शलाकाकारे दोषणी इत्यर्थः । पूर्वपदे कादिलोपश्छान्दसः । अंह्रिगुप्रैषस्थमेतत् ॥ मांस्पचन्येति । 'न लुमते'ति निषेधानित्यत्वान्ङसिपरे आदेशः ॥ शरीरावयवाद्यदिति । भवे 'शरीरावयवाच्चे'त्यनेन, हिते 'शरीरावयवाद्य'दित्यनेनेति बोध्यम् । यत एवैतदिति । इतरयोरसंभवादिति भावः ॥ ६३ ॥

धात्वादेः । उपदेशग्रहणानुवृत्त्येति । 'प्रातिपदिकानां नोपदेश' इत्युक्तेरिति भावः । अत्र 'षण्ड' इति षडित्यादेरप्युपलक्षणम् । नन्वेवं सति प्रतिपत्तिलाघवाय सकारमेवोपदिशेदत आह—

---

१—अस्मात्पूर्वं 'अवर्णनगरयोः' इति वार्तिकं क्वचिद्वर्तते

* ञ्यप्रकरणे परिमुखादिभ्य उपसंख्यानम् ४ । ३ । ५८ वा० १

† वुञ्छण्कठजिलसेनिरढञ्ण्य·········सङ्काश··········कुमुदादिभ्यः ४ । २ । ८०

‡ आदेशप्रत्यययोः ८ । ३ । ५६

इदं तर्हि—लषिता लषितुम्। इदं चाप्युदाहरणम्—पेष्टा पेष्टुम्। ननु चोक्तमस्त्वत्र सत्वं सत्वे कृत इण उत्तरस्यादेशसकारस्येति षत्वं भविष्यतीति। नैवं शक्यम्। इह हि पेक्ष्यतीति षत्वस्यासिद्धत्वात् 'षढोः कः सि' [ ८। २। ४२ ] इति कत्वं न स्यात्।

सादेशे सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेधः ॥ १ ॥

सादेशे सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेधो वक्तव्यः। सुब्धातु—षोडीयति षण्डीयति। ष्ठिवु—ष्ठीवति। ष्वष्क–ष्वष्कते।

सुब्धातूनां तावन्न वक्तव्यः। उपदेश इति* वर्तते, उद्देशश्च प्रातिपदिकानां नोपदेशः॥ यद्येवं नार्थो धातुग्रहणेन। कस्मान्न भवति षोडन् षण्डः षडिक इति? उपदेश इति वर्तते, उद्देशश्च प्रातिपदिकानां नोपदेशः।

ष्ठिवेरपि द्वितीयो वर्णष्ठकारः†। यदि ठकारस्तेष्ठीव्यत इति न सिध्यति। एवं तर्हि थकारः। यदि थकारष्टुष्ठ्यूषति तेष्ठीव्यत इति न सिध्यति। एवं तर्हि द्वाविमौ ष्ठिवू। एकस्य द्वितीयो वर्णष्ठकारोऽपरस्य थकारः। यस्य थकारस्तस्य सत्वं प्राप्नोति।

प्र०—लिरिति 'बह्वचो मनुष्यनाम्नः ठज्वे'ति ठच्। 'ठाजादावूर्ध्वं'मिति 'ङ्गुलि'शब्दस्य लोपः। 'ठस्येक' इतीकादेशः। 'यस्येति चे'त्यकारलोपः। लषितेति। षकारोपदेशस्तु प्रनिलषतीत्यादौ 'शेषे विभाषा कखादावषान्त उपदेश'इति नेर्णत्वप्रतिषेधार्थः स्यात्।

षोडीयतीति। षोडन्तमाचष्टे इति णिचि टिलोपे पचाद्यचि कृते षोडमिच्छति आत्मन इति क्यच्। 'क्यचि चे'तीत्त्वम्। उद्देश इति। लक्षणेन प्रतिपादनं सुब्धातूनां न तु साक्षादुच्चारणमित्यर्थः। द्वितीयो वर्णष्ठकार इति। तत्र षस्य सत्वे कृते ष्टुत्वं क्रियते। लुप्तनिर्दिष्ट

उ०—षकारोपदेश्यस्त्विति।

वार्तिके सुब्धातुग्रहणं नामघटितधातोरुपलक्षणमिति ध्वनयन् उभयात्मकमुदाहरणमाह—षोडीयतीति। आख्यानणिचः प्रातिपदिकादेवोत्पत्तेरुपात्तसुब्धातोरुदाहरणलाभाय तत्प्रकृतिकक्यजन्तपर्यन्तधावनम्। भाष्ये—ष्टुट्प्रसज्येतेति। एवञ्च द्वितीयठकारकस्यापि सत्वापत्तिर्दोष इति बोध्यम्। समाधत्ते—षकारादी

* आदेच उपदेशेऽशिति ६। १। ४५ † ष्टुना ष्टुः ८। ४। ४१

एवं तर्हि द्वाविमौ द्विषकारौ[1] ष्ठिवुष्वष्कतौ[2] । किं कृतं भवति ? पूर्वस्य[3] सत्वे कृते परेण सन्निपाते ष्टुत्वं भविष्यति† । नैवं शक्यम् । इह हि श्वलिट् ष्ठीव्यति मधुलिट् ष्वष्कते ष्टुत्वस्यासिद्धत्वाड् 'डः सि धुट्' [ ८ । ३ । २९ ] इति धुट् प्रसज्येत ।

एवं तर्हि यकारादी ष्ठिवुष्वष्कती । किं यकारो न श्रूयते ? लुप्तनिर्दिष्टो‡ यकारः ।

अथ किमर्थं षकारमुपदिश्य तस्य सकार आदेशः क्रियते न सकार एवोपदिश्येत ? लघ्वर्थमित्याह । कथम् ? अविशेषेणायं षकारमुपदिश्य सकारमादेशमुक्त्वा लघुनोपायेन षत्वं निर्वर्तयति 'आदेशप्रत्यययोः' [ ८ । ३ । ५९ ] इति । इतरथा हि येषां षत्वमिष्यते तेषां तत्र ग्रहणं कर्तव्यं स्यात् ।

के पुनः षोपदेशा धातवः ? पठितव्याः[4] । कोऽत्र भवतः पुरुषकारः ? यद्यन्तरेण पाठं किंचिच्छक्यते वक्तुं तदुच्यताम् । अन्तरेणापि पाठं किंचिच्छक्यते वक्तुम् । कथम् ? अज्दन्त्यपराः सादयः षोपदेशाः, स्मिङ्स्वदिस्विदिस्वञ्जिस्वपयश्च, सृपिसृजिस्तृस्त्यासेकृसृवर्जम् ॥ ६४ ॥

प्र०—इति । 'लोपो व्योर्वली'ति लक्षणेन लुप्तः । तत उपदेशे धात्वादित्वाभावात्सत्वाभावः । तत्र यदा ष्ठिवुद्वितीयो वर्णस्थकारस्तदा पूर्वत्रासिद्धीयमद्विर्वचन इति कृतष्टुत्वस्यापि द्विर्वचने 'शर्पूर्वाः खय' इति शरो लोपे कर्तव्ये पूर्वत्रासिद्धत्वात् ष्टुत्वनिवृत्तौ तेष्ठीव्यत इति भवति । के पुनरिति । पाठभ्रंशसंभवात्प्रश्नः । अज्दन्त्यपरा इति । दन्त्यग्रहणेन वकारो न गृह्यते इत्याशङ्का स्यादिति स्विदादयो भेदेन निर्दिष्टाः ॥ ६४ ॥

उ०—इति । ष्ठिवुत्वेनैक्यात् द्विवचननिर्देश इति बोध्यम् । ननु द्वितीयवर्णस्य थकारत्वेऽपि कृतष्टुत्वस्य द्वित्वविधानात्तेष्ठीव्यत इति कथं सिद्ध्येदत आह—तत्र यदेति । शरो लोपे कर्तव्ये पूर्वत्रासिद्धत्वात् । ष्टुत्वनिवृत्ताविति । पूर्वत्रासिद्धीय'मित्यस्य द्विर्वचने कर्तव्ये कृते चेत्यर्थादसिद्धत्वेन सिद्धस्य निवृत्त्यभावाच्च चिन्त्यमिदम् । तस्मात्पूर्वत्रासिद्धीयमित्यस्य अनित्यत्वादकृतष्टुत्वस्यैव द्वित्वादीति वक्तुमुचितम् । पाठेन निर्णयात्प्रश्नोऽनुपपन्न इत्यत आह—पाठभ्रंशेति । वकारस्यापि दन्त्यत्वात्स्वदादीनां भेदेन निर्देशोऽयुक्त इत्यत आह—दन्त्यग्रहणेनेति । आशङ्का स्यादित्यंशश्चिन्त्यः । तेन स्वादधातोर्न षोपदेशत्वमित्यसिस्वददिति सिद्धम् । अज्दन्त्यौ सात्परौ येषां ते सकारादयः सर्वे षोपदेशा इत्यर्थः ॥ ६४ ॥

१–'द्विषकारकौ' पा० ।
२–'ष्ठिवुष्वष्कती' पा० ।
३–'पूर्वस्य षकारस्य' पा० ।
‡ लोपो व्योर्वलि ६ । १ । ६६
† ष्टुना ष्टुः ८ । ४ । ४१
४–'के पुनः षोपदेशा धातवः पठितव्याः ।' पा० ।

## णो नः ॥ ६ । १ । ६५ ॥

अथ किमर्थं णकारमुपदिश्य तस्य नकार आदेशः क्रियते न नकार एवोपदिश्येत ? लघ्वर्थमित्याह । कथम् ? अविशेषेणायं णकारमुपदिश्य तस्य नकारमादेशमुक्त्वा तस्य लघुनोपायेन णत्वं निर्वर्तयति 'उपसर्गादसमासेऽपि णोपदेशस्य' [ ८ । ४ । १४ ] इति । इतरथा हि येषां णत्वमिष्यते तेषां तत्र ग्रहणं कर्तव्यं स्यात् ।

के पुनर्णोपदेशा धातवः[1] ? पठितव्याः । कोऽत्र भवतः पुरुषकारः ? यद्यन्तरेण पाठं किञ्चिच्छक्यते वक्तुं- तदुच्यताम् । अन्तरेणापि पाठं किंचिच्छक्यते वक्तुम् । कथम् ? सर्वे नादयो णोपदेशाः, नृतिनन्दिनर्दिनकिनाटिनाथनाधृनॄवर्जम् ॥ ६५ ॥

## लोपो व्योर्वलि ॥ ६ । १ । ६६ ॥

### व्योर्लोपे क्वावुपसङ्ख्यानम् ॥ १ ॥

व्योर्लोपे क्वावुपसङ्ख्यानं कर्तव्यम् । इहापि यथा स्यात्—कण्डूयतेरप्रत्ययः कण्डूरिति । किं पुनः कारणं न सिध्यति ? 'वली'त्युच्यते न चात्र वलादिं पश्यामः । ननु चायं क्विवेव वलादिर्भवति । क्विब्लोपे† कृते वलाद्यभावान्न प्राप्नोति ।

प्र०—लोपो व्योः । कण्डूयतेरप्रत्यय इति । ननु च 'कण्ड्वादिभ्यो य'गित्यत्र 'नैतेभ्यः क्विप् दृश्यत' इत्युक्तं तत्कथमप्रत्ययः । एवं तर्हि कण्डूमिच्छतीति क्यजन्तात् क्विप् क्रियते । द्विविधा हि कण्ड्वादयः । तत्र धातुभ्यो यग्विधानात्प्रातिपदिकेभ्यः क्यजादयो भवन्त्येव । तत्र क्यजन्तात्कण्डूयशब्दात् क्विपि कृते वेरपृक्तस्येति लोपे अतो लोपे च वलः परस्याभावाद्यलोपो न प्राप्नोतीति वचनम् ॥ न चात्र वलादिमिति । यद्यपि विशेष्यासंनिधानात्तदादिविधेरभावस्तथापि सम्भवमात्रेणैतदुक्तम् । संभवति हि क्नूतमित्यादौ वलादिप्रत्ययः ॥ ननु चायमिति । अतो लोपस्य चात्र यलोपविधिं प्रति स्थानिवत्त्वनिषेधः । अथ कण्डूयशब्दस्य धातुत्वाद्यलोपे कृते परिशिष्टस्य धातुसंज्ञासद्भावादतो लोपस्य स्थानिवद्भावादुवङ् कस्मान्न भवति ? उच्यते । अतो

उ०—लोपो व्योः । ननु कण्ड्वादीनां धातुत्वात्कथं तेभ्यः सुबन्ताद्विहितः क्यजत आह—द्विविधा हीति । यद्यपीति । तदन्तविध्यपवादत्वात्तदादिविधिरपि विशेषणेनैवेति भावः । तथापीति । उदाहरणेषु प्रायो वलादिप्रत्ययसंभवादिति भावः । 'गौधेर'इत्यादौ व्यभिचाराप्राय इति । नन्वत्राल्लोपस्याचः परस्मिन्निति स्थानिवत्त्वात्कथं क्विप्परत्वं यस्येत्यत आह—अतो लोपस्येति । परिशिष्टस्य धातुसंज्ञासद्भावे 'कण्डूय'शब्दस्य

[1] 'के पुनर्णोपदेशा धातवः पठितव्याः ।' पा० ।

† वेरपृक्तस्य ६ । १ । ६७

इदमिह[1] संप्रधार्यम्—क्विब्लोपः क्रियतां यलोप इति किमत्र कर्तव्यम् ? परत्वात्क्विब्लोपो नित्यत्वाच्च । नित्यः खल्वपि क्विब्लोपः । कृतेऽपि यल्लोपे प्राप्नोत्यकृतेऽपि प्राप्नोति । नित्यत्वात्परत्वाच्च क्विब्लोपः । क्विब्लोपे कृते वलाद्यभावाद्यलोपो न प्राप्नोति ।

एवं तर्हि प्रयलक्षणेन* भविष्यति । वर्णाश्रये नास्ति प्रत्ययलक्षणम् । यदि वा [2]कानिचिद्वर्णाश्रयाणि प्रत्ययलक्षणेन भवन्ति तथेदमपि भविष्यति ।

अथवैवं वक्ष्यामि—'लोपो व्योर्वलि' । ततो 'वेः'† । व्यन्तयोश्च व्योर्लोपो भवति । ततो'ऽपृक्तस्य' । अपृक्तस्य च लोपो भवति । 'वे'रित्येव ।

प्र०—लोपस्य स्थानिवद्भावादेव कण्डूशब्दस्य धातुत्वाभावादुवङोऽप्रसङ्गः । तस्य हि स्थानिवत्त्वे पूर्वस्य धातुत्वं नास्ति, यणादेशस्तर्ह्यल्लोपस्य स्थानिवद्भावात् प्राप्नोति । भवतु, तस्य क्विबाश्रय ऊठ् करिष्यते । ऊठि च कर्तव्ये नास्ति स्थानिवद्भावः,—आदिष्टादचः पूर्वत्वाद्वकारस्य । अत एव 'कण्डुवौ' 'कण्डुव' इत्यादावूठ उवङि कर्तव्ये नास्त्यल्लोपस्य स्थानिवद्भावः । यदा तु कण्डूशब्दात् प्रातिपदिकाद्विभक्तिस्तदोवङ् न भवति कण्ड्वौ कण्ड्व इति ॥ परत्वादिति । नन्वकृतेऽतो लोपे यलोपस्याप्रसङ्गः तत्राल्लोपादन्तरङ्गत्वात् पूर्वं विलोपेन भाव्यमिति यलोपक्विब्लोपयोर्विप्रतिषेधाभावः । एवं तर्ह्यार्धधातुक इति विषयसप्तम्याश्रयणात् पूर्वमतो लोपः पश्चात्क्विबिति भवति विप्रतिषेधः । यदि वेति । यथातृणेडित्यत्रेमागमः । ननु यस्य प्रत्ययत्वं निमित्तं वर्णस्तु प्रत्ययविशेषणत्वेनोपादीयते तद्भवतु प्रत्ययलक्षणेन, यथेमागमो हलादौ पिति सार्वधातुके विधीयमानः । यलोपस्तु वर्णनिमित्तो न प्रत्ययनिमित्त इति कथं प्रत्ययलक्षणेन स्यादित्याशङ्क्य परिहारान्तरमाह—अथवेति । 'वेरपृक्तस्ये'त्ययं योगो विभज्यते । 'वे'रित्येको योगः । तत्र व्योरिति वर्तते । वेरिति च प्रत्ययग्रहणपरिभाषया तदन्तस्य ग्रहणं, तस्यैव व्योरिति विशेषणम् ।

उ०—धातुत्वं हेतुः । धातुत्वं नास्तीति । किन्तु धात्ववयवत्वमेवेति भावः । यणादेश इति । 'इको यणची'त्यनेन । उवङि कर्तव्य इति । ऊठ ऊकारस्यादिष्टादचः पूर्वत्वादिति भावः । 'ओः सुपी'ति यणादेशस्तु न, संयोगपूर्वत्वात् । वस्तुतः 'क्वौ लुप्तं न स्थानिव'दिति नात्र यणादेशप्राप्तिः । सखीयतेः सखीरितिवदिति बोध्यम् । एवं तर्हीति । परविषयेऽपि जायमानस्य परनिमित्तत्वमिति कथयतीत्यादावल्लोपस्य स्थानिवत्त्वेन वृद्ध्यभावसिद्धिरिति भावः ॥ प्रत्ययत्वं निमित्तमिति । प्रत्ययत्वं तद्व्याप्यधर्मो वा निमित्ततावच्छेदक इत्यर्थः । 'प्रत्ययो निमित्तमिति पाठान्तरम् । वर्णनिमित्त इति । अस्य प्रत्ययनिमित्तत्वे 'गौधेर' इत्यादौ यलोपानापत्तिस्तदर्थालाभश्चेति भावः ।

१-'एवं तर्हीदमिह' पा० ।
२-'कानिचिदन्यान्यपि वर्णाश्रयाणि' पा० ।

* प्रत्ययलोपे प्रत्ययलक्षणम् १ । १ । ६२
† वेरपृक्तस्य ६ । १ । ६७

**वलोपाप्रसिद्धिरूड्भाववचनात् ॥ २ ॥**

वलोपस्याप्रसिद्धिः । आस्रेमाणम् 'जीरदानुरिति । किं कारणम् ? 'ऊड्भाववचनात्' । 'च्छ्वोः शूडनुनासिके च' [ ६ । ४ । १९ ] इत्यूठ् प्राप्नोति ।

**अतिप्रसङ्गो व्रश्चादिषु ॥ ३ ॥**

व्रश्चादिषु चातिप्रसङ्गो भवति । इहापि प्राप्नोति—व्रश्चनः व्रीहिः व्रण इति ।

उपदेशसामर्थ्यात्सिद्धम् । उपदेशसामर्थ्याद्व्रश्चादिषु लोपो न भविष्यति ।

**उपदेशसामर्थ्यात्सिद्धमिति चेत्संप्रसारणहलादिशेषेषु सामर्थ्यम् ॥ ४ ॥**

उपदेशसामर्थ्यात्सिद्धमिति चेदस्त्यन्यदुपदेशवचने प्रयोजनम् । संप्रसारणहलादिशेषेषु कृतेषु वकारस्य श्रवणं यथा स्यात् । वृक्णः वृक्णवान् वृश्चति[2] विव्रश्चिषतीति ।

**न वा बहिरङ्गलक्षणत्वात् ॥ ५ ॥**

न वैतत्प्रयोजनमस्ति । किं कारणम् ? 'बहिरङ्गलक्षणत्वात्' । बहिरङ्गाः संप्रसारणहलादिशेषाः । अन्तरङ्गो लोपः । असिद्धं बहिरङ्गमन्तरङ्गे ।

**अनारम्भो वा ॥ ६ ॥**

प्र०—तेन वकारयकारान्तस्य विप्रत्ययान्तस्यालोऽन्त्यस्य लोपो भवति । प्रत्ययलक्षणेन च विप्रत्ययान्तत्वम् ।

जीरदानुरिति । ननु नात्रोठ् प्राप्नोति । एवं तर्हि तुल्यप्रतिविधानत्वादुपक्षिप्तम् । वलोपावकाशप्रदर्शनेन वास्रेमाणमित्यत्रवलोपासिद्धिः प्रदर्श्यते ।

अन्तरङ्गो लोप इति । ततश्चाकृतयोरेव संप्रसारणहलादिःशेषयोर्वलोपः प्राप्त उपदेशसामर्थ्यान्न भवति ॥ अनारम्भो वेति वाग्रहणात्समाधानं वास्रेमाणमित्यत्राश्रयणीयं—

उ०—भाष्ये-वलोपाप्रसिद्धिरिति । वलोपस्यास्रेमाणमित्यादावप्रसिद्धिरसिद्धिरूठा बाधादिति वार्तिकार्थः । तुल्यप्रतिविधानत्वादिति । यथा सूत्रानारंभे छान्दसत्वादास्रेमाणमित्यत्र वर्णलोप, एवं जीरदानुरित्यत्रापीति प्रदर्शनायोपन्यास इत्यर्थः । वलोपावकाशेति । वचनसामर्थ्यादूठं बाधित्वा वलोप इति यो भ्राम्येत्तं प्रतीत्यर्थः ।

नन्वन्तरङ्गत्वाद्वलोपप्राप्तौ कथं दोषनिवृत्तिरत आह—ततश्चेति ॥ वाग्रहणादिति । एवं चारम्भ-

१–जीवे रदानुक् ( दश० उणा० १ । १६३ ) "जीवेर्धातो रदानुक् प्रत्ययो भवति ।……… जीवति जीव्यते वा जीरदानुः—औषधम् ।" इति वृत्तिः ।

"जीवे रदानुक् जीरदानुः । वलीति लोपो न प्राप्नोति ।" हयवरट्सूत्रभाष्ये पृ० ६६

पञ्चपाद्यां त्वेतत् सूत्रं न विद्यते । महर्षिदयानन्दस्तु २ । २४ उणादिवृत्तौ महाभाष्यकारसम्मत्या 'वैदिकं रूपमेतत्' साधयाञ्चकार ।

२–क्वचिन्न ।

अनारम्भो वा पुनर्वलोपस्य न्याय्यः । कथमास्रेमाणम् जीरदानुरिति ।

आस्रेमाणं जीरदानुरिति वर्णलोपात्

आस्रेमाणम् जीरदानुरिति च्छान्दसाद्वर्णलोपात्सिद्धम् ।

यथा संस्फानो गयस्फानः ॥ ७ ॥

तद्यथा—संस्फायनः संस्फानः । गयस्फायनो गयस्फान इति ॥ ६६ ॥

वेरपृक्तस्य ॥ ६ । १ । ६७ ॥

दर्विजागृव्योः प्रतिषेधो वक्तव्यः । दर्विः जागृविः ॥ किमुच्यते दर्विजागृव्योः प्रतिषेधो वक्तव्य इति यदापृक्तस्येत्युच्यते ? भवति वै किंचिदाचार्याः क्रियमाणमपि चोदयन्ति । तद्वा कर्तव्यं दर्विजागृव्योर्वा प्रतिषेधो वक्तव्यः ।

वेर्लोपे दर्विजागृव्योरप्रतिषेधोऽनुनासिकपरत्वात् ॥ १ ॥

वेर्लोपे दर्विजागृव्योरप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः । लोपः कस्मान्न भवति ? 'अनुनासिकपरत्वात्' । अनुनासिकपरस्य विशब्दस्य ग्रहणं न चात्रानुनासिकपरो विशब्दः, शुद्धपरश्चात्र विशब्दः ।

प्र०—'छान्दसत्वादूरण भवती'त्युक्तं भवति । वलोपश्चात्र प्रत्याख्यायते न यलोपः । गौधेरः पचेरन्नित्यादौ तस्योपयोगात् ॥ ६६ ॥

वेरपृक्तस्य । भवति वै किंचिदिति । यत्सूत्रे क्रियते वस्तु तदाचार्याश्चोदयन्ति । तदर्थस्यान्यथासिद्धत्वप्रतिपादनाय तत्र भवति वै किंचिदित्येकं वाक्यम् । किं तदित्याह—आचार्याः क्रियमाणमपि चोदयन्तीति । अथवा चोदनक्रिया भवतिक्रियायाः कर्त्री भवतीत्येकमेव वाक्यम् ॥ अप्रतिषेध इति । अपृक्तस्येति न वक्तव्यमित्यर्थः । अनुनासिकपरत्वादिति ।

उ०—वादिनापि 'आस्रेमाण'मित्यत्र छान्दसत्वाश्रयणावश्यकत्वेनारम्भ एव न्याय्य इति भाष्यतात्पर्यमिति भावः । तदेव ध्वनयन्नाह—वलोपश्चात्रेति । एवं च धिविप्रभृतिभ्यो वान्तेभ्यो विजनभिधानान्नेति बोध्यम् ॥ ६६ ॥

वेरपृक्तस्य । यत्सूत्रे इति । एवं चापृक्तस्येति वाच्यमिदं वेति तदर्थ इति भावः । चोदनक्रियेति । किञ्चिदाचार्याः क्रियमाणमपि चोदयन्तीत्यन्तप्रतिपाद्या ॥ विशिष्टदेशेति । विशिष्टः परत्वविशिष्टो देशो यस्य तादृशावयववाचीत्यर्थः । न त्ववधिसापेक्षार्थवाचीति भावः । अत एवेत्संज्ञक इति विधेयविषये

१–अस्मात्पूर्वं 'दर्विजागृव्योः प्रतिषेधः' इति वार्तिकं क्वचित् ।

यद्यनुनासिकपरस्य विशब्दस्य ग्रहणमित्युच्यते घृतस्पृक् दलस्पृक्* अत्र न प्राप्नोति, न ह्येतस्माद्विशब्दादनुनासिकं परं पश्यामः । अनुनासिकपरत्वादिति नैवं विज्ञायते अनुनासिक परोऽस्मात्सोऽयमनुनासिकपरः अनुनासिकपरत्वादिति । कथं तर्हि ? अनुनासिकः परोऽस्मिन्सोऽयमनुनासिकपरः अनुनासिकपरत्वादिति ।

एवमपि प्रियदर्वि† अत्र प्राप्नोति । असिद्धोऽत्रानुनासिकः ।

एवमपि धात्वन्तस्य प्रतिषेधो वक्तव्यः । इवि दिवि धिवि ।

**धात्वन्तस्य चार्थवद्ग्रहणात् ॥ २ ॥**

अर्थवतो विशब्दस्य ग्रहणं न धात्वन्तोऽर्थवान् ।

**वस्य वानुनासिकत्वात्सिद्धम् ॥ ३ ॥**

अथवा वकारस्यैवेदमनुनासिकस्य ग्रहणम् । सन्ति हि यणः सानुनासिका निरनुनासिकाश्च ॥ ६७ ॥

प्र०—परशब्दो विशिष्टदेशावयववाची । यस्य विशब्दस्य पर इकारोऽनुनासिकोऽत एवेत्संज्ञकः स एवानुकृतो लोपविधानाय न त्वननुनासिकपर इत्यर्थः । इतरः पञ्चम्यर्थे बहुव्रीहिं मत्वा चोदयति—यदीति । क्विनो नकारस्य लुप्तत्वादनुनासिकपरत्वाभावान्मा भूल्लोपो घृतस्पृगित्यादावेव तु न प्राप्नोति क्विनो नकारस्य लुप्तत्वात् । नैवं विज्ञाययत इति । एवं हि विज्ञायमाने प्रियदर्विमन्य इत्यादौ स्यादिष्टे च विषये न स्यात् प्रियदर्वीति । अत्र'णोप्रगृह्यस्यानुनासिक' इत्यनुनासिकः । प्रिया दर्विर्यस्य तत्प्रियदर्वि । असिद्ध इति । 'पूर्वत्रासिद्ध'मिति वचनात् ॥ अर्थवत इति । क्विबादयः 'कर्तरि कृ'दिति प्रतिज्ञाप्रापितेनार्थेनार्थवन्तः । वस्येति । अनुनासिकवकारस्येदमनुकरणं वेरिति ॥ ६७ ॥

उ०—उच्चारणार्थानामपीत्संज्ञकत्वादिति भावः । ननु दर्विरित्यादौ जातस्य विनोऽनुनासिकपरत्वाल्लोपः स्यादित्येव किं नापादितमत आह—लुप्तत्वादिति । इत्यादावेव त्विति । इत्यादावपि त्वित्यर्थः ॥ ननु क्विबादीनामपि लोकेऽप्रयोगेणानर्थकत्वात्तेषामपि लोपो न स्यादत आह—क्विबादय इति । शास्त्रीयं काल्पनिकमर्थवत्त्वं तेषामप्यस्त्येवेति भावः । अनुनासिकेति । क्विबादिषु चानुनासिको वकारः प्रतिज्ञात इत्यर्थः ॥ ६७ ॥

* स्पृशोऽनुदके क्विन् ३ । २ । ५८

† अणोऽप्रगृह्यस्यानुनासिकः ८ । ४ । ५७

## हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् ॥ ६ । १ । ६८ ॥

यदि पुनरयमपृक्तलोपः संयोगान्तलोपो* विज्ञायेत । किं कृतं भवति ? द्विहल्-पृक्तग्रहणं तिस्योश्च ग्रहणं न कर्तव्यं भवति ।

**हलन्तादपृक्तलोपः संयोगान्तलोपश्चेन्नलोपाभावो यथा पचन्निति ॥१॥**

हलन्तादपृक्तलोपः संयोगान्तलोपश्चेन्नलोपाभावः । राजा तक्षा । संयोगान्तलो-पस्यासिद्धत्वान्नलोपो† न प्राप्नोति । 'यथा पचन्निति' । तद्यथा– पचन् यजन्नित्यत्र संयोगान्तलोपस्यासिद्धत्वान्नलोपो न भवति ।

नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति 'सिद्धः संयोगान्तलोपो नलोप' इति यदयं 'न ङिसंबुद्ध्योः' [ ८ । २ । ८ ] इति संबुद्धौ प्रतिषेधं शास्ति । इहापि तर्हि प्राप्नोति–पचन् यजन् । तुल्यजातीयस्य ज्ञापकं भवति । कश्च तुल्यजातीयः ? यः संबुद्धावनन्तरः ।

प्र०—हल्ङ्याब्भ्यो । द्विहलपृक्तग्रहणमिति । 'ङ्यापोदीर्घात्सो'रित्येव वक्तव्यमित्यर्थः ॥ राजेति । नलोपे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वान्नकारान्तं पदं न भवति, किं तर्हि ? सकारान्तम् । यदा तु 'स्वादिष्वसर्वनामस्थानेऽयची'ति, अयचि सर्वनामस्थाने पूर्वं पदमिति व्याख्यानं, तदा सावपि परतः पदसंज्ञायां सत्यां नलोपः सिद्ध्यति । कृते तु नलोपे संयोगान्तत्वा-भावात् सुलोपो न प्राप्नोतीत्युभयथा दोषप्रसङ्गः । पचन्निति । ननु चात्र तकारलोप एव न प्राप्नोति सुलोपस्यासिद्धत्वात् । नैष दोषः। पूर्वत्र परस्यासिद्धत्वमुच्यते । ततश्च संयोगान्तलोपे संयोगान्तलोपस्य सिद्धत्वाद्भवत्येव तलोपः । तस्य त्वसिद्धत्वान्नलोपाभावः । आद्यन्यासे वा रूपे सिद्धे दृष्टान्त उपात्तः ।

यः संबुद्धावनन्तर इति । पचन्नित्यत्र नकारस्तकारेण व्यवहितः ।

उ०—हल्ङ्याप् । ङ्यापोर्दीर्घात्सोरिति । ङ्याबन्तात्तिस्योरनभिधानादिति भावः । अनभिधाने चेदमेव भाष्यं मानम् । 'प्रत्ययाप्रत्यययो'रिति न्यायेनानुनासिकोकारविशिष्टपाठेन च सोः प्रत्ययस्यैव ग्रहणमिति सुरासुतमाचष्टे–सुराः सुरासावित्यादौ न लोपापत्तिरिति न तद्व्यावृत्तयेऽपृक्तग्रहणमिति बोध्यम् ॥ कृते तु नलोप इति । संयोगान्तलोपस्यासिद्धत्वादिति भावः । पूर्वत्र परस्येति । पूर्वपराश्रितत्वादस्यासिद्धत्वस्य चिणो लुङ्न्यायोऽत्र नास्तीत्यर्थः । प्रौढिवादेनाह—आद्यन्यासेवेति । 'हल्ङ्या'विति न्यास इत्यर्थः ।

भाष्ये—संयोगान्तलोपो नलोप इति । न च 'राजैधते' 'चक्र्यत्र' 'राजाच्छत्र'मित्यादौ वृद्धिय-

* संयोगान्तस्य लोपः ८ । २ । २३ † नलोपः प्रातिपदिकान्तस्य ८ । २ । ७

## वस्वादिषु दत्वं संयोगादिलोपबलीयस्त्वात्

वस्वादिषु दत्वं* न सिध्यति । उखास्रत् पर्णध्वत् । किं कारणम् ? 'संयोगादिलोपबलीयस्त्वात्' । संयोगान्तलोपात्संयोगादिलोपो† बलीयान् ।

## यथा कूटतडिति ॥ २ ॥

तद्यथा,—कूटतट् काष्ठतडित्यत्र संयोगान्तलोपात्संयोगादिलोपो बलीयान्भवति ।

ननु च दत्वे कृते न भविष्यति । असिद्धं दत्वं तस्यासिद्धत्वात्प्राप्नोति । सिद्धकाण्डे‡ पठितं 'वस्वादिषु दत्वं सौ दीर्घत्व' इति । तत्र सौ दीर्घत्वग्रहणं न करिष्यते । 'वस्वादिषु दत्व'मित्येव ।

एवमप्यपदान्तत्वान्न प्राप्नोति । अथ सावपि पदं भवति राजा तक्षा नलोपे कृते विभक्तेः श्रवणं प्राप्नोति । सैषोभयतस्पाशा रज्जुर्भवति ।

प्र०—उखास्रदिति । उखास्रस् स् इति स्थिते संयोगान्तलोपमपवादत्वाद्बाधित्वा संयोगादिलोपः प्राप्नोति । परोऽपि ह्यपवादो वचनप्रामाण्यादुत्सर्गे कर्तव्ये नासिद्धो भवति । संयोगादिलोपे च कृते संयोगाभावात् संगान्तलोपाभावः । ततो विभक्तिसकारः स्रंसतेरवयवो न भवतीति दत्वं न प्राप्नोति ।

काष्ठतडिति । काष्ठं तक्षतीति क्विप् । संयोगादिलोपे कृते षस्य जश्त्वेन डकारः । दत्वे कृते इति । 'सावपि पद'मिति दत्वभावः । उभयतस्पाशेति । 'स्पश बाधनस्पर्शनयो'रिति

उ०—णत्वुगादिकं न स्यात्, संयोगान्तलोपस्यासिद्धत्वादिति वाच्यं, नलोपविषये सामान्यतः सिद्धत्वज्ञापनेनादोषात् । 'अचीका राज्य'मित्यादीनां त्वनभिधानमेव । व्यवहित इति । 'यः संबुद्धावनन्तर' इति भाष्येण विभक्तिःसंयोगान्तलोप उपलक्ष्यत इति बोध्यम् । संबुद्धौ वा नपुंसकानां नलोपो वाच्य इति सत्त्वेन हे ब्रह्मन्निति नपुंसके स्वमोर्लुकि नलोपनिषेधार्थं तदावश्यकमिति न वाच्यम् । तच्च विभाषार्थमावश्यकम् ।

वचनप्रामाण्यादिति । तथा च तत्र वार्तिक'मपवादो वचनप्रामाण्या'दिति । संयोगादिलोप इति । संयोगान्तलोपे हि काष्ठतगिति स्यादिति भावः ।

नलोपे कृते विभक्तेः श्रवणं प्राप्नोतीति । एवं च 'न ङिसंबुद्ध्यो'रिति सूत्रस्य चरितार्थत्वाज्ज्ञापकत्वासंभव इति भावः । न च 'ङिसंबुद्ध्यो'रिति षष्ठी, अत एव ङौ नलोपनिषेधश्चरितार्थः । अन्यथा

* वसुस्रंसुध्वंस्वनडुहां दः ८ । २ । ७२ । † स्कोः संयोगाद्योरन्ते च ८ । २ । २९ ।
‡ वस्वादिषु दत्वं सौ दीर्घत्वे ८ । २ । ६ वा० ८ पृ० ३७१ ।

## रात्तलोपो नियमवचनात् ॥ ३ ॥

[1]रात्तस्य लोपो वक्तव्यः । अबिभर्भवान्, अजागर्भवान् । किं पुनः कारणं न सिध्यति ? 'नियमवचनात्' । 'रात्सस्य' [ ८ । २ । २४ ] इत्येतस्मान्नियमान्न प्राप्नोति ।

नैष दोषः । 'रात्सस्ये'त्यत्र तकारोऽपि निर्दिश्यते । यद्येवं कीर्तयतेरप्रत्ययः 'की'रिति प्राप्नोति, 'कीर्त्' इति चेष्यते । यथालक्षणमप्रयुक्ते ।

## रोरुत्वं च ॥ ४ ॥

रोरुत्वं च वक्तव्यम् । अभिनोऽत्र, अच्छिनोऽत्र । संयोगान्तलोपस्यासिद्धत्वादतोऽतीत्युत्त्वं* न प्राप्नोति ।

## न वा संयोगान्तलोपस्योत्वे सिद्धत्वात्

[2]न वा वक्तव्यम् । किं कारणम् ? 'संयोगान्तलोपस्योत्त्वे सिद्धत्वात्' । संयो-

प्र०—भौवादिकस्य 'स्पश ग्रहणसंश्लेषणयो'रिति चौरादिकस्य वा रूपमेतत् । रात्तस्येति । रेफात्परस्य तकारस्येत्यर्थः । तकारोऽपीति । 'रात्तस्ये'ति द्वितकारको निर्देशः । यथालक्षणमिति । लोके प्रयुक्तानामिदमन्वाख्यानमित्यप्रयुक्ते लक्षणानामप्रवृत्तिलक्षणं लक्षणमित्यर्थः । तत्रास्य प्रयोगाभावान्न दोषो न प्रयोजनमित्युक्तं भवति ।

अभिनोऽत्रेति । भिदेर्लङि सिपि श्नमि संयोगान्तलोपः । स च परत्वाद्रुत्वस्य तत्र सिद्ध

उ०—ङेर्लुका लुप्ततया 'न लुमते'ति निषेधात् ङिपरत्वाभावेन तद्वैयर्थ्यं स्यात् । एवं च संबुद्धिग्रहणं ज्ञापकमेव विभक्तिसंयोगान्तलोपस्यासिद्धत्वाभावे । न हि प्रथमसंयोगान्तलोपं विना संबुद्ध्यन्तं प्रातिपदिकं लभ्यत इति वाच्यं, न लुमतेति निषेधस्यानित्यत्वे न सप्तम्यामपि दोषाभावात्, षष्ठीत्वं प्रकल्प्य ज्ञापकसिद्धवचनकल्पनापेक्षया हल्ग्रहणस्यैव लघुत्वाच्च । किं च सप्तमीपक्ष एव युक्तः । एवं च 'न लुमते'ति निषेधस्यानित्यत्वेनैव नपुंसकनान्ते रूपद्वयस्य सिद्धतया 'वा नपुंसकाना'मिति न वाचनिकम् । एवं च नपुंसके निषेधाय संबुद्धिग्रहणस्यावश्यकत्वेन ज्ञापकं दुरुपपादमित्याशयात् । एवं 'सुपीः' 'सुपिसा'वित्यादौ संयोगादिलोपे 'र्वोरुपधाया' इति रेफान्तधातोरुपधाया विधीयमानो दीर्घो न स्यात् । 'तिप्यनस्तेः', 'सिपि धातो रुर्वा'इत्यनयोः प्रकृतिप्रत्ययसंबन्धिवर्णसंयोगमाश्रित्य पदान्ते संयोगादिलोपाप्राप्तिज्ञापकत्वाश्रयणे तु विपरीतं गौरवम् । स्पश बाधनेति । उभयतः स्पाशः संश्लेषो बाधकत्वं स्पर्शो वा यस्याः सा रज्जुः । यथा काचिद्रज्जुः पूर्वापरकोटी स्पृशति तथायं दोषः सौ पदत्वे अपदत्वे च न निवर्तत इत्यर्थः ।

रात्तस्येति । भाष्ये—तस्येति न तच्छब्दस्य रूपमित्याह—रेफात्परस्य तकारस्येति । अप्रवृत्तिलक्षणं

१–'रात्तलोपो' पा० ।  * द्रष्ट ८ । २ । ७५; अतो रोरप्लुतादप्लुते ६ । १ । ११३ ।
२–'न वैष दोषः' पा० ।

गान्तलोप उत्त्वे सिद्धो भवति ।

यथा हरिवो मेदिनमिति ॥ ५ ॥

तद्यथा—'हरिवो मेदिनं त्वे'त्यत्र संयोगान्तलोप उत्त्वे सिद्धो भवति ।

स एव तर्हि दोषः 'सैषोभयतस्पाशे'ति । तस्मादशक्योऽपृक्तलोपः संयोगान्तलोपो विज्ञातुम् । न चेद्विज्ञायते द्विहलपृक्तग्रहणं तिस्योश्च ग्रहणं कर्तव्यमेव ॥ ६८ ॥

## एङ्ह्रस्वात्संबुद्धेः ॥ ६ । १ । ६९ ॥

संबुद्धिलोपे डतरादिभ्यः प्रतिषेधः ॥ १ ॥

सम्बुद्धिलोपे डतरादिभ्यः प्रतिषेधो वक्तव्यः । हे कतरत्, हे कतमत्† ॥ किमुच्यते 'डतरादिभ्यः प्रतिषेधो वक्तव्य' इति यदापृक्तस्येत्यनुवर्तते‡ ।

अपृक्ताधिकारस्य निवृत्तत्वात् ॥ २ ॥

निवृत्तोऽपृक्ताधिकारः ॥ किं डतरादिभ्यः प्रतिषेधं वक्ष्यामीत्यतोऽपृक्ताधिकारो निवर्त्यते १ 'ने'त्याह ।

प्र०—इति 'दश्चे'ति रुत्वम् । उत्वे तु संयोगान्तलोपस्यासिद्धत्वाद्व्यवधानाद्रुत्वं न प्राप्नोति ॥ उत्वे सिद्ध इति । 'संयोगान्तलोपो रोरुत्वे सिद्धो वक्तव्य' इत्यवश्यं वक्तव्यमित्यर्थः ॥ ६८ ॥

एङ् ह्रस्वात् । हेकतरदिति । कतर स् इति स्थिते संबुद्धिलोपश्च प्राप्नोति अद्भावश्च । तत्र

उ०—लक्षणमिति । अप्रवृत्तिस्वभावमित्यर्थः । अप्रयुक्ते लक्षणभावस्य योग्यतेत्यक्षरार्थः ॥ उत्वे सिद्ध इति । अत्र 'कृते' 'कर्तव्ये चे'ति शेषः । तेन पूर्वरूपसिद्धिः । इत्यवश्यं वक्तव्यमिति । हरयोऽस्य सन्तीति मतुपि 'छन्दसीर' इति वत्वे हरिवच्छब्दात्सौ तल्लोपे पुनस्तकारलोपे मतुवसोरिति रुत्वे संयोगान्तलोपस्यासिद्धत्वादुत्वाप्राप्तौ तस्य सिद्धत्वमवश्यं वक्तव्यमित्यर्थः । भाष्ये-तिस्योश्च ग्रहणमिति । 'अभिनोऽत्रे'त्यादावुत्वार्थमिति भावः । 'हरिवो मेदिनं त्वे'ति छान्दसवर्णविकारेण सिद्धमिति सिद्धत्ववचनारंभापेक्षयैतदेव ज्याय इति तात्पर्यम् ॥ ६८ ॥

एङ्ह्रस्वात् । ननु परत्वादद्भावः संबुद्धिलोपस्य बाधकः स्यादत आह—कतर सिति । अद्भावे कृत इति । ततः परत्वात्पररूपेऽपि कृते वक्ष्यमाणरीत्या ह्रस्वान्तात्परस्य संबुद्धिहल इत्यर्थाल्लोपप्राप्तिर्बोध्या ।

† अद्ड्डतरादिभ्यः पञ्चभ्यः ७ । १ । २५ । ‡ वेरपृक्तस्य ६ । १ । ६७ ।
१—'निवर्तते' पा० ।

## तच्चामर्थम् ॥ ३ ॥

स चावश्यमपृक्ताधिकारो निवर्त्यः । किमर्थम् ? 'अमर्थम्' । अमो§ लोपो यथा स्यात् । हे कुण्ड, हे पीठ ।

निवृत्तेऽपि वा अपृक्ताधिकारेऽमो लोपो न प्राप्नोति । किं कारणम् ? न हि लोपः सर्वापहारी । मा भूत्सर्वस्य लोपः । 'अलोऽन्त्यस्य विधयो भवन्ती'त्यन्त्यस्य लोपे कृते द्वयोरकारयोः पररूपेण¶ सिद्धं रूपं स्यात् हे कुण्ड, हे पीठेति ।

यद्येतल्लभ्येत कृतं स्यात् । तत्तु न लभ्यम् । किं कारणम् ? अत्र हि 'तस्मादित्युत्तरस्यादेः परस्य' [ १ । १ । ६७; ५४ ] इत्यकारस्य लोपः प्राप्नोति । अकारलोपे च सति मकारे'ऽतो दीर्घो यञि सुपि च' [ ७ । ३ । १०१; १०२ ] इति दीर्घत्वे हे कुण्डाम् हे पीठामित्येतद्रूपं प्रसज्येत ।

एवं तर्हि हलो लोपः संबुद्धिलोपः¹ । तद्धल्ग्रहणं कर्तव्यम् ? न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् ? 'हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्' [ ६८ ] इति । तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः । नैष दोषः । 'एङ्ह्रस्वा'दित्येषा पञ्चमी 'ह'लित्यस्याः प्रथमायाः षष्ठीं प्रकल्पयिष्यति 'तस्मादित्युत्तरस्ये'ति । एवमपि प्रथमयोः पूर्वसवर्णदीर्घत्वे‡ कृते हे पीठा इत्येतद्रूपं प्रसज्येत । अमि पूर्वत्वमत्र बाधकं भविष्यति* । 'अमी'त्युच्यते न चात्रामं पश्यामः । 'एकदेशविकृतमनन्यवद्भवती'ति ।

प्र०—शब्दान्तरप्राप्त्या संबुद्धिलोपोऽनित्यः । अङ्भावस्तु कृते संबुद्धिलोपे न प्राप्नोतीत्यनित्यः । उभयोरनित्ययोः परत्वादङ्भावे कृते पुनःप्रसङ्गविज्ञानात्संबुद्धिलोपप्रसङ्गः ।

अकारलोप इति । अकारलोपस्यापरनिमित्तत्वाद्दीर्घविधौ प्रतिषेधाद्वा स्थानिवत्त्वाभावः । एवमपीति । एकदेशविकृतस्यानन्यत्वादिति भावः । न चात्राममिति । मकारस्य

उ०—नन्वल्लोपस्य स्थानिवत्त्वाद्यञः परत्वाभावेन कथं दीर्घ इत्यत आह—अकारलोपस्येति । न च संनिपातपरिभाषया दीर्घाप्राप्तिः । तस्या अनित्यत्वादित्यभिमानः । ननु मलोपेऽकारमात्रस्य विभक्तित्वा-

§ अतोऽम् ७ । १ । २४ ।　¶ अलोऽन्त्यस्य १ । १ । ५२; अतो गुणे ६ । १ । ९७ ।
१—'संबुद्धिलोपः करिष्यते' पा० ।　‡ प्रथमयोः पूर्वसवर्णः ६ । १ । १०२ ।
* अमि पूर्वः ६ । १ । १०७ ।

अथवेदमिह संप्रधार्यम्—संबुद्धिलोपः क्रियतामेकादेश इति किमत्र कर्तव्यम् ? परत्वादेकादेशः । एवमप्येकादेशे कृते व्यपवर्गाभावात्संबुद्धिलोपो न प्राप्नोति । अन्तादिवद्भावेन व्यपवर्गो भविष्यति । 'उभयत आश्रये नान्तादिवत्' । नोभयत आश्रयः करिष्यते । कथम् ? नैवं विज्ञायते 'ह्रस्वादुत्तरस्याः संबुद्धेर्लोपो भवती'ति । कथं तर्हि ? 'ह्रस्वादुत्तरस्य हलो लोपो भवति स चेत्संबुद्धे'रिति ।

[१]स तर्हि प्रतिषेधो वक्तव्यः ? न वक्तव्यः ।

## उक्तं वा ॥ ४ ॥

किमुक्तम् ? 'सिद्धमनुनासिकोपधत्वा'दिति¶ ॥ एवमपि दलोपः साधीयः प्राप्नोति । 'दुकरणाद्वा'* । अथवा 'दुग्डतरादीना'मिति वक्ष्यामि† ॥ 'डित्करणाद्वा'× ।

प्र०—लुप्तत्वात् । अथवेति । सत्यामेव हल्ग्रहणानुवृत्तावयं विचारः । व्यपवर्गाभावादिति । 'ह्रस्वात्संबुद्धे'रित्युच्यमाने कृते चैकादेशे नास्ति ह्रस्वसंबुद्ध्योः पौर्वापर्यमित्यर्थः । ह्रस्वादुत्तरस्येति । पूर्वं प्रत्यन्तवद्भावाद्ध्रस्वान्तमेतद्भवति । संबुद्ध्याक्षिप्तं हि प्रकृतिरूपमेङ्ह्रस्वेन विशेष्यत इति तदन्तविधिः ।

उक्तं वेति । वक्ष्यमाणपरिहारापेक्षो वाशब्दः । अनुनासिकोपधत्वादिति । आदेशस्याकारोऽनुनासिक इत्संज्ञको लुप्त इति दकारोऽवशिष्यते । स च भेदाभावात्संबुद्ध्यवयवो न भवतीति न लुप्यत इति भावः । साधीय इति । व्यपदेशिवद्भावाद्यथा हे वृक्षेत्यादाविति भावः । दुकरणाद्वेति दुकि कृते 'स्वमोर्नपुंसका'दिति स्वमोर्लुक् क्रियते । एवमपीति ।

उ०—भावोऽत आह—एकदेशेति । स्थानिवद्भावेनेत्यर्थः । भाष्ये—परत्वादेकादेश इति । यद्यपि एकादेशे कृते संबुद्धिलोपस्याप्राप्त्या तस्यानित्यत्वमित्येकादेशो नित्यस्तथापि वक्ष्यमाणार्थेनोभयोरपि नित्यत्वात्परत्वादित्युक्तम् । पूर्वं हल्ग्रहणानुवृत्त्या हे कुण्डेति रूपे साधिते तदनाश्रयेणेदं पक्षान्तरमिति भ्रमनिवृत्तये आह—सत्यामेवेति । ननु 'नोभयत आश्रयः करिष्यत'इति प्रतिज्ञयान्यतराश्रयो लभ्यते । तस्माद्ध्रस्वादुत्तरस्येत्यस्य ह्रस्वान्तादुत्तरस्येत्यर्थः कार्यस्तत्रापि पूर्वत्वेन ह्रस्वान्ताङ्गात्परत्वं हल इत्यत आह—पूर्वं प्रतोति । विशेष्यासंनिधानात्कथं तदन्तविधिरत आह—संबुद्ध्याक्षिप्तं हीति । प्रकृतिरूपं—प्रत्ययग्रहणे यस्मात्स विहितस्तदादीत्युपस्थित्योपस्थितप्रातिपदिकरूपम् ।

ननु पूर्वं कस्यचित्परिहारस्यानुक्तत्वादुक्तं वेति वाशब्दोऽयुक्तोऽत आह—वक्ष्यमाणेति ।

१—'आश्रयणे' पा० ।
२—'डतरादिभ्यः स तर्हि' पा० ।
¶ ७ । १ । २५ वा० २ पृ० २८ ।
* ७ । १ । २५ वा० ३ पृ० २६ ।
† स्वमोर्नपुंसकात् ७ । १ । २३ ।
× ७ । १ । २५ वा० ४ पृ० २६ ।

अथवा डिदच्छब्दः करिष्यते । स तर्हि डकारः कर्तव्यः ? न कर्तव्यः । क्रियते न्यास एव । द्विडकारको निर्देशः—'अद्डुतरादिभ्य' इति ॥ एवमपि लोपः प्राप्नोति । विहितविशेषणं ह्रस्वग्रहणम्—'यस्माद्ध्रस्वात्संबुद्धिर्विहिते'ति ।

अपृक्तसंबुद्धिलोपाभ्यां लुक् ॥ ५ ॥

अपृक्तसंबुद्धिलोपाभ्यां लुग्भवति विप्रतिषेधेन । अपृक्तलोपस्यावकाशः*—गोमान् यवमान् । लुकोऽवकाशः†—त्रपु जतु । इहोभयं प्राप्नोति—तद्[1]ब्राह्मणकुलम् 'यद्ब्राह्मणकुलम् । संबुद्धिलोपस्यावकाशः—हे[2] अग्ने हे[2] वायो । लुकः स एव । इहोभयं प्राप्नोति—हे त्रपु, हे जतु । लुग्भवति विप्रतिषेधेन‡ ।

स तर्हि विप्रतिषेधो वक्तव्यः ? न वक्तव्यः ।

न वा लोपलुकोर्लुगवधारणाद्यथानडुह्यत इति ॥ ६ ॥

न वार्थो विप्रतिषेधेन । किं कारणम् ? 'लोपलुकोर्लुगवधारणात्' । लोपलुकोर्हि

प्र०—अकाराद्ध्रस्वात्परत्वाद्दकारस्येति भावः । विहितविशेषणमिति । प्रतिपादितस्वात्तदन्तविधेर्ह्रस्वान्तात्परस्य संबुद्धिसंबन्धिनो हलो लोपो भवतीति सूत्रार्थः । ततश्च सामर्थ्यात्प्रकृतिरूपावयवह्रस्वग्रहणाद्यस्माद्ध्रस्वात्संबुद्धिर्विहिता तस्मादेव परस्य हलो लोप इत्यर्थोऽवतिष्ठते । तेन कतरदित्यत्र टिलोपे कृते प्रकृतेर्ह्रस्वान्तत्वाभावाद्दकारलोपाभावः ।

हे त्रप्विति । लुकि कृते प्रत्ययलक्षणप्रतिषेधात्संबुद्धिगुणाभावः । 'इकोऽचि विभक्ता'वित्यत्र त्वज्ग्रहणस्य प्रयोजनं वक्ष्यते—'इह किंचित्त्रपो' इति, ततो गुणेन भाव्यम् । न वक्तव्य इति । न व्याख्यातव्यः ॥ कस्मादित्याह—न वेति । 'अन्तरङ्गानपि विधीन् बाधमानो लुग्

उ०—अकारादिति । विशेष्यासंनिधानात्तदन्ताग्रहणं मन्यते । ननु ह्रस्वात्संबुद्धेर्विधानाभावेन ह्रस्वाद्विहितेत्यसङ्गतमत आह—प्रतिपादितस्वादिति । ह्रस्वान्तात्परस्येति । ह्रस्वान्तात्प्रातिपदिकात्परस्येत्यर्थः । 'यस्माद्ध्रस्वात्संबुद्धिर्विहितेति तु फलितार्थकथनं न तु शाब्दोऽर्थ इत्याह—ततश्चेति ।

ननु लोपेनैव सिद्धे किं लुकेत्यत आह—लुकीति : गुणेन भाव्यमिति । एवञ्च भाष्यद्वयप्रामाण्याद्विकल्प इति भावः । ननु 'विप्रतिषेधे पर'मिति सिद्धत्वान्नायं विप्रतिषेधो वक्तव्यस्वार्होऽत आह—न व्याख्यातव्य इति ॥ 'लुग्लोपे'त्यादि विप्रतिषेधसूत्रशेषे वार्तिकम्, वस्तुतस्तदपि न कार्यमित्याह—अन्तरङ्ग-

* हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् ६ । १ । ६८ । † स्वमोर्नपुंसकात् ७ । १ । २३ ।

१–इह 'तत्' 'यत्' इत्येवोदाहरणम् । ब्राह्मणकुलमिति तु नपुंसकत्वप्रदर्शनार्थम् ।

२–'हे' इति क्वचिन्न ।

‡ ह्रस्वस्य गुणः ७ । ३ । १०८; न लुमताङ्गस्य १ । १ । ६३ ।

लुगवधार्यते । 'लुग्लोपयणयवायावेकादेशेभ्यः'§ । 'यथानडुह्यत' इति । तद्यथा—अनड्वानिवाचरत्यनडुह्यत इत्यत्र लोपलुकोर्लुगधार्यते¶ । एवमिहापि ॥ ६९ ॥

## शेश्छन्दसि बहुलम् ॥ ६ । १ । ७० ॥

अयं योगः शक्योऽवक्तुम् । कथमग्ने त्री ते वाजिना त्री षधस्था× ताता पिण्डानामिति+ । पूर्वसवर्णेनाप्येतत्सिद्धम्* ॥ न सिध्यति । नुमा** व्यवहितत्वात् पूर्वसवर्णो न प्राप्नोति ॥ छन्दसि नपुंसकस्य पुंवद्भावो वक्तव्यो मधोर्गृह्णाति मधोस्तृप्ता इवासत इत्येवमर्थम् । तत्र पुंवद्भावेन नुमो निवृत्तिः । नुमि निवृत्ते पूर्वसवर्णेन सिद्धम् ॥ भवेत्सिद्धमग्ने त्री ते वाजिना त्री षधस्थेति । इदं तु न सिध्यति ताता†† पिण्डानामिति ॥ इदमपि सिद्धम् । कथम्? साप्तमिके† पूर्वसवर्णे कृते पुनः षाष्ठिको भविष्यति ॥ एवमपि जसि गुणः‡ प्राप्नोति ॥ वक्ष्यत्येतत्'ज्जसादिषु च्छन्दोवावचनं प्राङ् णौ चङ्युपधायाः' इति§§ ॥ ७० ॥

प्र०—बलवा'न्नित्यतुल्यबलेन लोपेन स्पर्धां नार्हतीति'विप्रतिषेधो नोपन्यसनीयः । अनडुह्यत इति । सुलोपे सति प्रत्ययलक्षणेन नुमामौ स्याताम् । लुकि प्रत्ययलक्षणप्रतिषेधान्न भवतः ॥ ६९ ॥

शेश्छ । नुमो निवृत्तिरिति । अप्रवृत्तिरेव निवृत्तिः । ताता पिण्डानामिति । 'त इ' इति स्थिते 'नादिची'ति पूर्वसवर्णदीर्घप्रतिषेधाद्गुणः प्राप्नोति । साप्तमिक इति । 'सुपां सुलु'गितीकारस्याकारे कृते षाष्ठिकः पूर्वसवर्णदीर्घः क्रियते । जसि गुण इति । अग्ने त्री त इत्यत्रेति भावः ॥ ७० ॥

उ०—लपीति । तत्र हि लुक्शब्देन सर्वोऽपि गृह्यत इति भावः । अन्यथा तद्वचनकर्तव्यतापत्त्या गौरवं स्यात् ॥ ६९ ॥

§ १ । ४ । २ वा० २५ । पृ० ३३६ । ¶ सुपो धातुप्रातिपदिकयोः २ । ४ । ७१; हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् ६ । १ । ६८ । × ऋ० सं० ३ । २० । २ ।
+ ऋ० सं० १ । १६२ । १९ । इदं नवाह्निकभागे ३५४ पृ० द्रष्टव्यम् ।
* प्रथमयोः पूर्वसवर्णः ६ । १ । १०२ । ** नपुंसकस्य झलचः ७ । १ । ७२ ।
†† नादिचि ६ । १ । १०४ । † सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः ७ । १ । ३९ ।
‡ जसि च ७ । ३ । १०९ । §§ ७ । ३ । १०९ वा० १ पृ० २३७ ।

# ह्रस्वस्य पिति कृति तुक् ॥ ६ । १ । ७१ ॥

## तुकि पूर्वान्ते नपुंसकोपसर्जनह्रस्वत्वं द्विगुस्वरश्च ॥ १ ॥

तुकि × पूर्वान्ते नपुंसकोपसर्जनह्रस्वत्वं द्विगुस्वरश्च न सिध्यति¶ । आराशस्त्रिच्छत्रम् धानाशष्कुलिच्छत्रम् । निष्कौशाम्बिच्छत्रम् निर्वाराणसिच्छत्रम् । द्विगुस्वर । पञ्चारत्निच्छत्रम् दशारत्निच्छत्रम् । तुकि कृतेऽनन्त्यत्वादेते विधयो न प्राप्नुवन्ति ।

## न वा बहिरङ्गलक्षणत्वात् ॥ २ ॥

न वैष दोषः । किं कारणम् ? 'बहिरङ्गलक्षणत्वात्' । बहिरङ्गलक्षणस्तुक् । अन्तरङ्गा एते विधयः । असिद्धं बहिरङ्गमन्तरङ्गे ।

इह तर्हि ग्रामणिपुत्रः सेनानिपुत्र इति ह्रस्वत्वे+ कृते तुक् प्राप्नोति ।

## ग्रामणिपुत्रादिषु चाप्राप्तिः ॥ ३ ॥

ग्रामणिपुत्रादिषु चाप्राप्तिः । किं कारणम् ? बहिरङ्गलक्षणत्वादेव ।

अथवा परादिः करिष्यते ।

## परादौ संयोगादेरित्यतिप्रसङ्गः ॥ ४ ॥

परादौ 'संयोगादे'रित्यतिप्रसङ्गो भवति । अग्नच्छायात् । 'वान्यस्य संयोगादेः' [ ६ । ४ । ६८ ] इत्येत्वं प्रसज्येत ।

## विलोपवचनं च ॥ ५ ॥

वेश्च लोपो वक्तव्यः । अग्निचित् सोमसुत् । 'अपृक्तस्ये'ति* वेर्लोपो न प्राप्नोति ।

प्र०—ह्रस्वस्य । पूर्वान्तकरणे प्रेक्षापूर्वकारित्वप्रदर्शनायात्र विचारः ॥ ग्रामणिपुत्र इति ।

उ०—ह्रस्वस्य । ननु सूत्रकृता पूर्वान्तत्वकरणात् पक्षान्तरानुत्थानेन तुकि पूर्वान्त इत्ययुक्तमत आह—पूर्वान्तेति । परायभक्तपक्षयोर्वक्ष्यमाणरीत्या दुष्टत्वाद्विमृश्य पूर्वान्तः कृत इति बोधनाय विचार

× छे च; दीर्घात्; पदान्ताद्वा ६ । १ । ७३; ७५; ७६ ।  ¶ ह्रस्वो नपुंसके प्रातिपदिकस्य; कृत्तद्धितसमासाश्च १ । २ । ४७; ४८; इगन्तकालकपालभगालशरावेषु द्विगौ ६ । २ । २९ ।

+ इको ह्रस्वोऽङ्यो गालवस्य ६ । ३ । ६१ ।  * वेरपृक्तस्य ६ । १ । ६७ ।

नैष दोषः । अपृक्तग्रहणं न करिष्यते । यदि न क्रियते, दर्विः जागृविः अत्रापि प्राप्नोति । अनुनासिकपरस्य विशब्दस्य ग्रहणं शुद्धपरश्चात्र विशब्दः । एवमपि सतुकस्य लोपः प्राप्नोति । 'निर्दिश्यमानस्यादेशा भवन्ती'त्येवं न भविष्यति ।

इट्प्रतिषेधश्च ॥ ६ ॥

इट्प्रतिषेधश्च वक्तव्यः । परीतत्* । सतुकस्य वलादिलक्षण इट् प्रसज्येत† ।

एवं तर्ह्यभक्तः करिष्यते ।

अभक्ते स्वरः ॥ ७ ॥

यद्यभक्तस्तर्हि स्वरे दोषो भवति । दधिच्छादयति, मधुच्छादयति । 'तिङ्‌ङतिङः' [ ८ । १ । २८ ] इति निघातो न प्राप्नोति । ननु च तुगेवातिङ् । न तुकः परस्य निघातः प्राप्नोति । किं कारणम् ? 'नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः' । नञ्युक्त इवयुक्ते वान्यस्मिंस्तत्सदृशे कार्यं विज्ञायते तथा ह्यर्थो गम्यते । तद्यथा—'अब्राह्मणमानये'त्युक्ते ब्राह्मणसदृशमेवानयति नासौ लोष्टमानीय कृती भवति । एवमिहाप्यतिङिति तिङ्प्रतिषेधादन्यस्मादतिङस्तिङ्सदृशात्कार्यं विज्ञास्यते । किं चान्यदतिङ् तिङ्सदृशम् ? पदम् ॥ ७१ ॥

प्र०—अत्र तुगन्तरङ्गो ह्रस्वो बहिरङ्गः । पूर्वत्र तुग्बहिरङ्गः स्वरह्रस्वावन्तरङ्गौ । परीतदिति । तनोतेः क्विपि 'गमः क्वौ' च गमादीना'मित्यनुनासिकलोपः । तत्र तुटि परादौ क्रियमाण इट्प्रसङ्गः । 'नहिवृती'ति दीर्घः ॥ ७१ ॥

उ०—इत्यर्थः । उदाहरणेषु 'छे च' 'दीर्घात्पदान्ताद्वे'ति तुक् वाक्यसंस्कारपक्षे ह्रस्वस्वराभ्यां तुको नित्यत्वं मन्यते ॥ पूर्वस्माद्विशेषेऽपि तुल्यन्यायत्वप्रतिपादनाय दर्शयति—अत्रेति । 'नाजानन्तर्य' इति न्यायस्तु नास्त्येवेति भावः ॥ ७१ ॥

* गमादीनामिति वक्तव्यम् । इहापि यथा स्यात्—परीतत् सहकपिठका । संयत् सुनदिति ६ । ४ । ४० भा०; नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ६ । ३ । ११६

† आर्धधातुकस्येड्वलादेः ७ । २ । ३५

## संहितायाम् ॥ ६ । १ । ७२ ॥

अयं योगः शक्योऽवक्तुम् । कथम् ? अधिकरणं नाम त्रिप्रकारं व्यापक-मौपश्लेषिकं वैषयिकमिति । शब्दस्य च शब्देन कोऽन्योऽभिसंबन्धो भवितुमर्हत्य-न्यदत उपश्लेषात् । 'इको यणचि' [ ६ । १ । ७७ ] अच्युपश्लिष्टस्येति । तत्रा-

प्र०—संहितायाम् । परो यः सन्निकर्षो वर्णानां वर्णशून्येन कालेनाव्यवधानं सा संहिता । ह्लादाविरामो वा । ह्लादशब्देन वर्णाभिव्यक्तिहेतवो नादा उच्यन्ते । तेनैकवर्णाभिव्यक्तिहेतुनादा-नन्तरमेव यदा नादान्तरं वर्णान्तराभिव्यक्तये उच्चार्यते तदा संहिता । सा च निरन्तरवर्णद्वय-विषया । ततश्चाग्निचिदत्रेत्यादाविकाराकारयोस्तवर्गीयेण विच्छेदात्संहिताभावाद्यणोऽप्रसङ्गा-न्निर्दिष्टग्रहणमानन्तर्यार्थं न कर्तव्यमित्याहुः ।

त्रिप्रकारमिति । आधारास्त्रयो भेदाः । तद्भेदानां त्वानन्त्यमित्याहुः । व्यापकमिति । यथा दध्नि सर्पिः, तिलेषु तैलमिति । औपश्लेषिकमिति । यथा कटे तिष्ठति, मथुरायां वस-तीति । सर्वावयवव्याप्त्यभावात्कटादेर्व्यापकत्वाभावः । वैषयिकमिति । यथा खे शकुनयः । गुरौ वसतीति । अन्यदत उपश्लेषादिति । ननु चार्धधातुक इत्यादौ विषयसप्तमीपक्षस्याश्रि-तत्वात् कथमिह संबन्धान्तराभावः ? उच्यते । यदा सामान्यस्य प्राधान्यमाश्रीयते तदा तेन पौर्वापर्याभावाद्विषयविषयिभाव आश्रीयते । विशेषस्य तु प्राधान्ये आश्रीयमाणे तेन पौर्वापर्यसंभवादुपश्लेषाश्रयणम् । तत्रेको यणचीत्यादौ विशेषः प्राधान्येनाश्रीयते न तु सामान्य-

उ०—संहितायाम् । सूत्रप्रयोजने ज्ञाते तत्प्रत्याख्यानं सुज्ञानं भवतीत्यादौ सूत्रप्रयोजनं दर्शयति—परो य इति । वर्णानाम्—इति प्रत्यासत्तिलभ्यम् । उत्कृष्टत्वापरपर्यायं परत्वमुपपादयति—वर्णशून्येनेति । तेनापीत्यर्थः । ततश्चेति । निरन्तरवर्णद्वयविषयसंहिताया ग्रहणादित्यर्थः । संहितायामिति विषयसप्तमी । तेनेगचोर्नैरन्तर्येणोच्चारणे एव यण् न तु वर्णव्यवधाने, नापि तद्रहितकालव्यवधाने इति भावः । 'इत्याहु'-रित्यरुचिबीजं तु संहिताधिकारबहिर्भूतानां व्यवधानेऽप्यप्रवृत्त्यर्थं निर्दिष्टग्रहणमावश्यकमिति सूत्रमतमिति ।

तद्भेदानां त्विति । उपकारभेदादिति भावः । औपश्लेषिकशब्देन संयोगसमवायमूलको गौण आधारः सर्वोऽप्युच्यते इति तद्भावः । व्यापकाधार एव मुख्य आधार इति 'स्वरितेन' 'साधकतमं'मिति सूत्रभाष्ययोः स्पष्टम् । अत एव 'मासेऽतिक्रान्ते यद्दीयते तस्य मास औपश्लेषिकमधिकरणं'मिति 'तत्र च दीयत' इति सूत्रे भाष्ये स्पष्टम् । 'गङ्गायां घोष' इत्यौपश्लेषिकमधिकरणम् । उप–समीपे श्लेषः संबन्धस्त-त्कृतमौपश्लेषिकम् । किं च श्लेषस्य मुख्यस्य सर्वाधारव्याप्तिरूपस्य समीपं यत् आधारीययत्किञ्चिदवयव-व्याप्तिरूपं तत्कृतमौपश्लेषिकम् । यथा कटे आस्त इति । गौणमुख्यसाधारण्येन त्रेधा विभागो भाष्ये । सर्वञ्चेदं सप्तमीवाच्यमेवेति गङ्गायां घोष इत्यादौ न प्रकृतेर्नापि प्रत्ययस्य लक्षणेति बोध्यम् । 'खे शकुनय' इत्यादौ आकाशकल्पितदेशसंबन्धाद्वैषयिकत्वम् । 'गुरौ वसती'त्यत्र शिष्यस्य गुर्वधीनायां वृत्तौ वैषयिकमधि-करणत्वं बोध्यम् । संयोगसमवायसंबन्धेन य आधारस्तदतिरिक्तं सर्वं वैषयिकमिति तत्त्वम् ।

( भाष्ये ) अच्युपश्लिष्टस्येति । अच्समीपस्थस्येत्यर्थः । यत्तु अचि सति यण् भवतीत्यर्थ इति तन्न; एवं हि यत्र क्वापि अच्सत्तामादाय यणापत्तेः । न च तस्मिन्निति परिभाषया निर्वाहः । यस्यां क्रियायां तस्यान्वयस्तत्क्रियाकर्तुर्विधेयतया तेन पौर्वापर्यासंभवात्, पूर्वस्येति षष्ठ्या अनन्वयाच्च । तस्यान्यत्रान्व-

न्तरेण संहिताग्रहणं संहितायामेव भविष्यति ॥ ७२ ॥

## आङ्माङोश्च ॥ ६ । १ । ७४ ॥

अथ किमर्थमाङ्माङोः सानुबन्धकयोर्निर्देशः ?

**आङ्माङोः सानुबन्धकनिर्देशो गतिकर्मप्रवचनीयप्रतिधसंप्रत्ययार्थः ॥ १ ॥**

आङ्माङोः सानुबन्धकयोर्निर्देशः क्रियत आङो गतिकर्मप्रवचनीयसंप्रत्ययार्थो माङः प्रतिषेधसंप्रत्ययार्थः । इह मा भूत्—आ छाया, आ च्छाया । प्रमा छन्दः, प्रमा च्छन्दः* ॥ ७४ ॥

प्र०—मिति न कश्चिद्दोषः । उपश्लेषे चाश्रिते निर्दिष्टग्रहणमपि न कर्तव्यम् । व्यवहितयोरुपश्लेषाभावादुपश्लेषनिमित्तकार्याप्रसङ्गात् । संहिताधिकारे च प्रत्याख्याते संहितासंज्ञापि प्रयोजनाभावात् प्रत्याख्यातैव ॥ ७२ ॥

आङ्माङोश्च । आङ्माङोरिति । कर्मप्रवचनीयग्रहणमुपलक्षणार्थम्, तेनेषदर्थस्याप्याङो ग्रहणम्—ईषच्छाया आच्छायेति । वाक्यस्मरणयोस्त्वाकारस्येह ग्रहणाभावाद्विकल्पो भवति-आच्छाया आछायेति ॥ ७४ ॥

उ०—योऽन्यत्र तन्निरूपितपूर्वत्वान्वय इत्यस्य व्युत्पत्तिविरुद्धत्वाच्च । तस्मादुपश्लिष्टपदाध्याहारेण सप्तमीत्येव युक्तम् । 'उपपदविभक्ते'रिति न्यायेन 'यस्य च भावेने'त्यस्याप्राप्तेश्च । स्पष्टं चेदं 'तत्र च दीयते' इति सूत्रे कैयटे । एतदेवाभिप्रेत्य 'श्नान्नलोप'इत्यत्र वक्ष्यति—'नैषा परसप्तमी, किं तर्हि ? सत्सप्तमी'ति ।

आर्धधातुक इत्यादाविति । द्वितीयाध्यायस्थे इत्यर्थः । यदा सामान्यस्येति । यत्रोपश्लेषासंभवो यथा सामान्यस्य शब्दार्थत्वे, तत्र विषयसप्तमी । तत्संभवे त्वौपश्लेषिक्येवेति भाष्याशय इति भावः । विशेषस्य त्विति । व्यक्तेरित्यर्थः । व्यवहितयोरिति । शुद्धकालव्यवाय एवोपश्लेषाभावे वर्णव्यवाये सुतरां तदभावः । अव्यवहितसामीप्यस्यैवोपश्लेषपदार्थत्वात्, तस्यैव सप्तमीनियामकत्वादिति तात्पर्यम् । अवग्रहे तु सम्प्रदाय एव शरणम् ॥ ७२ ॥

आङ्माङोश्च । तेनेषदिति । 'आङीषदर्थे' इति वार्तिकादिति भावः । सानुबन्धकग्रहणव्यावर्त्यं दर्शयति—वाक्येति । 'आछाया'मिति भाष्योदाहरणे आकारेण स्मृतिः सूच्यते । तद्विषयनिर्देशश्छायेति । आ स्मृतं छायां तत्साधनमानयतीति भाष्योदाहरणार्थः । विकल्प इति । 'पदान्ताद्वे'त्यनेन । प्रमेत्यत्र प्रपूर्वान्माङ 'आतश्चोपसर्गे इत्यङ् । अत्र यद्यपि धातुर्ङित्तथापि टाबन्तो न ङिदिति भावः । एतेनाङि माशब्दो निषेधार्थोऽव्ययं तेन मास्त्वित्यादिसिद्धिरिति नव्योक्तमपास्तम्, एतद्भाष्यविरोधात् ॥ ७४ ॥

१-'आ छायामानयति । प्रमा छन्दः' पा० ।

* पदान्ताद्वा ६ । १ । ७६

## दीर्घात् ॥ ६ । १ । ७५ ॥ पदान्ताद्वा ॥ ६ । १ । ७६ ॥

### दीर्घात्पदान्ताद्वा विश्वजनादीनां छन्दसि ॥ १ ॥

दीर्घात् पदान्ताद्वेत्यत्र विश्वजनादीनां छन्दस्युपसङ्ख्यानं कर्तव्यम् । विश्वजनस्य छत्रम्, विश्वजनस्य च्छत्रम्, । न छायां कुरवोऽपराम् न च्छायां कुरवोऽपराम्† । ॥ ७५ ॥ ७६ ॥

## इको यणचि ॥ ६ । १ । ७७ ॥

इग्ग्रहणं किमर्थम् ? इह मा भूत्—अग्निचिदत्र सोमसुदत्र । नैतदस्ति प्रयोजनम् । जश्त्वमत्र बाधकं भविष्यति‡ ।

**जश्त्वं न सिद्धं यणमत्र पश्य**

असिद्धमत्र जश्त्वं तस्यासिद्धत्वाद्यणादेशः प्राप्नोति ।

**यश्चापदान्तो हलचश्च पूर्वः ।**

यश्चापदान्तो हलचश्च पूर्वस्तस्य प्राप्नोति—पचतीति ॥ एवं तर्हि

**दीर्घस्य यण्**

दीर्घस्य यणादेशं वक्ष्यामि । तद्दीर्घग्रहणं कर्तव्यम् ? न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् ? 'दीर्घात्पदान्ताद्वा' [ ७५; ७६ ] इति । तद्वै पञ्चमीनिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः। 'अची'त्येषा सप्तमी 'दीर्घा'दिति पञ्चम्याः षष्ठीं प्रकल्पयिष्यति 'तस्मिन्निति निर्दिष्टे पूर्वस्य' [ १ । १ । ६६ ] इति ।

प्र०—इको यणचि । इग्ग्रहणमिति । वक्ष्यमाणोऽभिप्रायः । जश्त्वमत्रेति । परत्वादिति भावः । उभयोरप्यनित्यत्वादस्ति विप्रतिषेधः । तत्र शब्दान्तरप्राप्त्या यणोऽनित्यत्वम्, जश्त्वस्य तु कृते यण्यप्राप्त्या । जश्त्वमिति । 'पूर्वत्रासिद्ध'मिति जश्त्वस्यासिद्धत्वात्, सिद्धासिद्धयोर्विप्रतिषेधाभावाद्यणादेशमेवात्र निष्प्रतिद्वन्द्विनं प्राप्तं पश्य । यश्चेति । पदान्तस्य जश्त्वविधानादपदान्तहलोऽचि यण् स्यादेवेत्यर्थः । अचीत्येषेति । अकृतार्था सप्तमी दीर्घादिति पञ्चम्याः पूर्वत्र पौर्वापर्यकल्पने कृतार्थायाः षष्ठ्याः प्रकल्पिकेति भावः । पूर्वत्र तु 'छे' इति सप्तम्याश्'छे चे'त्यत्र कृतार्थाया अपि 'दीर्घा'दिति पञ्चम्या 'शाच्छासाह्वे'त्यादेर्ज्ञापकात् षष्ठी न प्रकल्पिता ।

उ०—इको यणचि । ननु 'दीर्घा'दिति पञ्चमी, 'अची'ति सप्तम्या एव षष्ठीं किं न कल्पयतीत्यत आह—अकृतार्थेत्यादि । नन्वनेनैव न्यायेन दीर्घादिति पञ्चमी 'छे'इति सप्तम्याः षष्ठीं प्रकल्पयेदत आह—पूर्वत्र त्विति । किन्तु ज्ञापकाद्दीर्घादिति पंचम्या एव षष्ठी कल्पितेति भावः । शाच्छासेति । अन्यथा

† अथर्ववेदे त्वेवं पाठ उपलभ्यते 'न च्छायां करवोऽपरम्' ( १३ । १ । ५६ ) इति ।

‡ झलां जशोऽन्ते ८ । २ । ३९

भवेत्सिद्धं कुमार्यत्र ब्रह्मबन्ध्वर्थमिति। इदं तु न सिध्यति दध्यत्र मध्वत्रेति।

ह्रस्व इति प्रवृत्तं

ह्रस्वग्रहणमपि प्रकृतमनुवर्तते। क्व प्रकृतम्? 'ह्रस्वस्य पिति कृति' [ ७१ ] इति॥ यदि तदनुवर्तते 'दीर्घात्पदान्ताद्वा ह्रस्वस्ये'ति ह्रस्वादपि पदान्ताद्विकल्पेन प्राप्नोति।

सम्बन्धवृत्त्या

सम्बन्धमनुवर्तिष्यते। 'ह्रस्वस्य पिति कृति तुक्' [ ७१ ]। 'संहितायाम्' [ ७२ ] 'ह्रस्वस्य पिति कृति तुक्'। 'छे च' [ ७३ ] 'ह्रस्वस्य पिति कृति तुक्'। 'आङ्माङोश्च' [ ७४ ] 'ह्रस्वस्य पिति कृति तुक्'। 'दीर्घात्पदान्ताद्वा' [७५; ७६ ] 'ह्रस्वस्य पिति कृति तुक्'। तत 'इको यणचि'। 'ह्रस्वस्ये'ति वर्तते 'पिति कृति तु'गिति निवृत्तम्।

इह तर्हि प्राप्नोति—चयनम् चायकः। लवनम् लावकः। अयादयोऽत्र बाधका भविष्यन्ति*॥ इह तर्हि प्राप्नोति खट्वेन्द्रः मालेन्द्रः। खट्वैलका मालैलका।

प्र०—ह्रस्वादपीति। 'छे चे'त्यस्य तु अपदान्तो ह्रस्वोऽवकाशः—इच्छति गच्छतीति।

संबन्धमिति। यद्येवं 'छे चे'त्यत्रापि दोषः, पिति कृतीतिसंबद्धस्य ह्रस्वस्य छेन संबन्धाभावप्रसङ्गात्। नैष दोषः। 'छे चे'ति समुच्चयस्य चशब्देन द्योतनाच्छे च पिति कृति च ह्रस्वस्य तुग् भवति। तदेवं ह्रस्वदीर्घयोर्यण्विधानात् प्लुतस्य प्रकृतिभावस्येष्टत्वान्नार्थ इग्ग्रहणेन हल्व्यावृत्त्यर्थेन।

चयनमिति। व्यक्तौ पदार्थे प्रतिव्यक्ति लक्षणेन प्रवर्तितव्यमित्येचोऽपि यणादेशोऽयादयश्च पर्यायेण प्रवर्तेरन्। अयादयोऽत्रेति। द्रव्येऽपि पदार्थे उत्सर्गापवादभावः सन्दिग्धासन्दिग्धत्वाश्रयोऽस्त्येव। स न वक्तव्य इति। इग्ग्रहणमन्तरेणापि इको यणि सिद्धे पुनरिग्ग्रहणं

उ०—'शाचे'ति स्यादिति भावः। वैकल्पिकेष्वनुष्ठानपक्ष एव ज्यायानिति तात्पर्यम्। ननु 'पदान्ताद्वे'त्यत्रानुवृत्त्या ह्रस्वस्य विकल्पेन तुग्विधाने 'छे चे'ति नित्यतुगनवकाशोऽत आह—छे चेत्यस्य त्विति।

प्लुतस्य प्रकृतिभावस्येति। अप्लुतवद्भावे त्वप्लुतशब्दस्य पर्युदासवृत्त्या ह्रस्वदीर्घपरत्वेन तत्कार्यातिदेशात् प्लुतस्यासिद्धत्वाच्च न दोष इति भावः। यत्तु तत्र पर्युदासे 'अग्नी इती'त्यादौ प्रगृह्याश्रयं प्रकृतिभावं बाधित्वा परत्वादप्लुतवद्भावेन दीर्घादिकं स्यादिति तन्न, अप्लुतवद्भावस्य शब्दत 'इति' रूपपदसापेक्षत्वेन तदपेक्षया वर्णमात्रापेक्षप्रकृतिभावस्यान्तरङ्गत्वादिति दिक्। नन्वनवकाशैरयादिभिर्बाधात् कथमत्रापत्तिरित्यत आह—व्यक्ताविति। द्रव्येऽपीति। अपवादस्तु स्वविषयेऽसंदिग्धत्वेन तात्पर्यवान्, उत्सर्गस्तु तदतिरिक्तविषयो वा तद्विषयोऽपि वेति सन्दिग्धोऽसंदिग्धेनापवादेन स्वविषयातिरिक्तविषयः

* एचोऽयवायावः। ६। १। ७८

## गुणवृद्धिबाध्यः ॥

गुणवृद्धी अत्र बाधिके भविष्यतः† ॥ इदं तर्हि प्रयोजनमिकोऽचि यणेव यथा स्याद्यदन्यत्प्राप्नोति तन्मा भूदिति । किं चान्यत्प्राप्नोति ? शाकलम् । सिन्नित्यसमासयोः शाकलप्रतिषेधं चोदयिष्यति‡ स न वक्तव्यो भवति ।

## यणादेशः प्लुतपूर्वस्य च ॥ १ ॥

यणादेशः प्लुतपूर्वस्य चेति वक्तव्यम् । अग्ना३इ इन्द्रम्, अग्ना३यिन्द्रम् । पटा३उ उदकम्, पटा३वुदकम् । अग्ना३ इ आशा, अग्ना३याशा । पटा३ उ आशा, पटा३ वाशा§ । किं पुनः कारणं न सिध्यति ? असिद्धः प्लुतः, प्लुतविकारौचेमौ ।

सिद्धः प्लुतः स्वरसन्धिषु । कथं ज्ञायते ? यदयं 'प्लुतप्रगृह्या अचि' [ ६ । १ । १२५ ] इति प्लुतस्य प्रकृतिभावं शास्ति तज्ज्ञापयत्याचार्यः 'सिद्धः प्लुतः

प्र०—शाकलयणादेशयोरेकविषयत्वाद्विकल्पितयोर्व्यवस्थितविभाषार्थं विज्ञायते । तेन सिन्नित्यसमासयोर्यणादेश एव, अन्यत्र तूभयम् ।

अग्ना३ यिन्द्रमिति । अग्ने इन्द्रमिति स्थिते 'एचोऽप्रगृह्यस्ये'ति पूर्वस्यार्धस्य मात्राया आकार आदेशः । स च प्लुतः । उत्तरस्य त्वर्धस्य मात्राया इदुतावुदात्तत्वमाकारस्येदुतोश्च युगपद्भवति । प्लुतविकाराविति । प्लुतसहितौ विकारावित्यर्थः । यद्यपि स्वतो सिद्धत्वमिदुतोरस्ति तथापि प्लुतसिद्धया तयोः सिद्धत्वं प्रतिपादयितुं प्लुतासिद्धया तयोरसिद्धत्वमुच्यते । वार्तिकारम्भे तु आश्रयादिदुतोः सिद्धत्वम् ।

स्वरसन्धिष्विति । सन्धिः संहिता, तत्कार्येषु सिद्ध इत्यर्थः । यदयमिति । ननु च

उ०—कल्प्यते । एवं चापवादविषयव्यक्त्यतिरिक्तव्यक्तिविषयलक्षणानामेवोपप्लव इति भावः । नन्वत्रेग्ग्रहणेन सिन्नित्यसमासयोः कथं शाकलप्रतिषेधो लभ्यतेऽत आह—इग्ग्रहणमिति । तच्च वाक्यभेदेन नियमार्थम् । तत्रेक एवाच्येवेति च न नियमः, फलाभावात्, किन्तु यणेवेति । स च नियमः शाकलारम्भसामर्थ्याल्लक्ष्यविशेषविषय एवेति भावः ।

प्लुतपूर्वत्वमिदुतोर्दर्शयति—एच इति । अर्धस्य मात्राया इति । मात्रारूपार्धस्येत्यर्थः । स च प्लुत इत्यनेनेदुतोरप्लुतत्वं ध्वनयति । युगपद्भवतीति । त्रिपाद्यां शेषनिघाताप्रवृत्तेरिति भावः । ईदूतौ न प्लुतस्य विकारावत आह—प्लुतसहिताविति । नन्विदुतोः स्वत एवासिद्धत्वात्प्लुतद्वारा सिद्धत्वकथनमयुक्तमत आह—यद्यपीति । ननु वार्तिकारम्भेऽपि इदुतोरसिद्धत्वात्कथं सिद्धिरत आह—वार्तिकारम्भे इति ।

† आद् गुणः; वृद्धिरेचि ६ । १ । ८७; ८८ ‡ सिन्नित्यसमासयोः शाकलप्रतिषेधः ६ । १ । २७ वा० १ § एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ ८ । २ । १०७

स्वरसन्धि'ष्विति। कथं कृत्वा ज्ञापकम् ? सतो हि कार्यिणः कार्येण भवितव्यम्।

इदं तर्हि प्रयोजनम्—

दीर्घशाकलप्रतिषेधार्थम्॥ २॥

दीर्घत्वं शाकलं च¶ मा भूदिति।

एतदपि नास्ति प्रयोजनम्। आरभ्यते प्लुतपूर्वस्य यणादेशस्तयोर्य्वावचि संहितायाम् [ ८। २। १०८ ] इति तद्दीर्घशाकलप्रतिषेधार्थं भविष्यति॥ तन्न वक्तव्यं भवति॥ ननु च तस्मिन्नप्युच्यमान इदं न वक्तव्यं भवति॥ अवश्यमिदं वक्तव्यं यौ प्लुतपूर्वाविदुतावप्लुतविकारौ तदर्थम्—भो३इ इन्द्रम्, भो३ यिन्द्रम्। भो३ इ इह, भो३ यिहेति॥ यदि तर्ह्यस्य निबन्धनमस्तीदमेव वक्तव्यं तन्न वक्तव्यम्॥ तदप्यवश्यं स्वरार्थं वक्तव्यम्। अनेन हि सत्युदात्तस्वरितयोर्यणः [ ८। २। ४ ] इत्येष स्वरः प्रसज्येत। तेन पुनः सत्यसिद्धत्वान्न भविष्यति॥ यदि तर्हि तस्य निबन्धनमस्ति तदेव वक्तव्यमिदं न वक्तव्यम्। ननु चोक्त'मिदमप्यवश्यं वक्तव्यं यौ प्लुतपूर्वाविदुतावप्लुतविकारौ तदर्थं भो३ यिन्द्रम् भो३ यिहेति। छान्दसमेतद्दृष्टानुविधिश्छन्दसि भवति। यत्तर्हि न च्छान्दसम्—भो३यिन्द्रम् भो३यिहेति

प्र०—प्रकृतिभाव एव कर्तव्ये प्लुतस्याश्रयणात्सिद्धत्वं स्यादिति कथं ज्ञापकम् ? नैष दोषः। अनेककल्पनासंभवेऽपीष्टसिद्ध्यर्थमियमेव कल्पनाश्रीयते, स्वरसन्धिकार्येषु सिद्धं प्लुतप्रकरणमितीदुतोरपि सिद्धत्वं भवति।

दीर्घेति। 'अग्नायिन्द्र'मित्यादा'वकः सवर्णे दीर्घ'इति दीर्घः प्राप्नोति। 'अग्नायाशे'त्यादौ त्विकोऽसवर्णे शाकल्यस्य ह्रस्वश्चेति प्रकृतिभावः॥ भो यिन्द्रमिति। भोशब्दस्य वर्णव्यत्ययेन छान्दसः प्लुतः। इकारो निपातः, तस्य 'निपात एकाजना'ङिति प्रगृह्यसंज्ञा। 'प्लुतप्रगृह्या अची'ति प्रकृतिभावे प्राप्ते यणविधानम्। अनेन हीति। स्वरे कर्तव्येऽस्य यणः सिद्धत्वात्।

उ०—तत्कार्येष्विति। सन्धिशब्देन संहिताकार्यमुपचारादुच्यत इति भावः। अनेकेति। प्लुतशब्दस्य प्लुतस्थानिनि लक्षणेत्यादीति भावः। ननु प्लुतस्य सिद्धत्वेऽपि कथमिदुतोः सिद्धत्वमत आह—प्लुतप्रकरणमिति।

भाष्ये—तन्न वक्तव्यमिति। अत्र वार्तिके कृते तयोर्य्वाविति सूत्रं न कार्यमिति लाघवमित्यर्थः। तत्र विनिगमनाविरहं शङ्कते—ननु चेति। अत्रत्यस्यावश्यकत्वं प्रतिपादयति—अवश्यमिति। क्वचित्तु 'तदेव दीर्घशाकलप्रतिषेधार्थं भविष्यतीति—इदं न वक्तव्यं भवति। अवश्यमिदमित्येव पाठः। छान्दसः प्लुत इति। गीतिवशात्प्लुत इति हरदत्तः, तन्न, भो३यिहेत्यनुकरणे गीत्यभावेऽपि प्लुतदर्शनात्। अत्र

¶ अकः सवर्णे दीर्घः; इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ६। १। १०१; १२७

साम गायति । एषोऽपि च्छन्दसि दृष्टस्यानुप्रयोगः क्रियते ।

जश्त्वं न सिद्धं यणमत्र पश्य यश्चापदान्तो हलचश्च पूर्वः ।
दीर्घस्य यण् ह्रस्व इति प्रवृत्तं सम्बन्धवृत्त्या गुणवृद्धिबाध्यः ॥ १ ॥

नित्ये च यः शाकलभाक्समासे तदर्थमेतद्भगवांश्चकार ।
सामर्थ्ययोगान्नहि किंचिदस्मिन्पश्यामि शास्त्रे यदनर्थकं स्यात् ॥ २ ॥

## वान्तो यि प्रत्यये ॥ ६ । १ । ७९ ॥

### वान्तादेशे स्थानिनिर्देशः ॥ १ ॥

वान्तादेशे स्थानिनिर्देशः कर्तव्यः । ओकारौकारयोरिति वक्तव्यम्[1] । एकारैकारयोर्मा भूदिति ।

स तर्हि कर्तव्यः ? न कर्तव्यः । वान्तग्रहणं न करिष्यते । 'एचो यि प्रत्ययेऽयादयो भवन्ती'त्येव सिद्धम् । यदि वान्तग्रहणं न क्रियते चेयम् जेयमित्यत्रापि प्राप्नोति । 'क्षय्यजय्यौ शक्यार्थे' [ ६ । १ । ८१ ] इत्येतन्नियमार्थं भविष्यति–

प्र०—तयोर्य्वावित्यनेन तु यणादेशे 'उदात्तस्वरितयोर्यण' इति स्वरेऽसिद्ध इति ततः परस्यानुदात्तस्य स्वरितत्वाभावः । दृष्टानुविधिरिति । 'सर्वे विधयश्छन्दसि विकल्पन्त' इति प्रकृतिभाव सवर्णदीर्घत्वाभावे यण् भविष्यतीत्यर्थः । एषोऽपीति । छान्दसस्येदमनुकरणम् । साम्नो नामधेयत्त्वेन प्रसिद्धमित्यर्थः । गीतिरहितश्च स्वरूपमात्रमनुक्रियते इत्यनुकरणे गीत्यभावः । सामर्थ्ययोगादिति । शास्त्रसामर्थ्यात् सूत्रार्थव्यवस्थापनान्न किञ्चित्पदमात्रमपीहानर्थकमित्यर्थः ॥ ७७ ॥

वान्तो यि । वान्तादेश इति । पूर्वत्र स्थानिविशेषलाभो यथासङ्ख्यसंबन्धात् । इह

उ०—हि तयोर्य्वाविति सूत्रस्य न प्राप्तिः, तत्र पूर्वसूत्रविहितयोरेव तयोरित्यनेन परामर्शादिति भावः । 'अप्लुतविकारा'विति भाष्यस्य प्लुतसहितविकारभिन्नावित्यर्थः । अस्य यण इति । एतत्प्रदेशविहितस्येत्यर्थः । तेन पुनरिति व्याचष्टे—तयोर्य्वाविति । ननु छन्दसि दृष्टस्याप्यनुविधानं लक्षणेन कर्तव्यमत आह—सर्वे विधय इति । छान्दसस्येति । अनुकार्यरूपभङ्गभिया हि कृतप्लुतस्यैवेदमनुकरणमिति भावः । साम्नोऽनुकरणे कथं गीत्यभावोऽत आह—गीतिरहितं चेति । पदमात्रमपीति । यत्र तु प्रत्याख्यायते तत्र स्पष्टप्रतिपत्त्याद्येव प्रयोजनम् । प्रत्याख्यानं तु तत्सामर्थ्याद्याश्रयणेन शुष्कतर्कैर्विरुद्धकल्पनाकरणाभावायेति द्रष्टव्यम् । एवं प्रयोजनाकथनेऽपि बोध्यमिति भावः ॥ ७७ ॥

वान्तो यि । वान्तो यीतिसूत्रस्थभाष्यं कैयटश्च स्थानेऽन्तरतम इति सूत्रे व्याख्यातम् । 'गव्यूति'रित्यत्र

१–'वक्तव्यः' पा० ।

'च्विज्योरेवैच' इति। तयोस्तर्हि शक्यार्थादन्यत्रापि प्राप्नोति—च्वेयं पापम् जेयो वृषल इति। उभयतो नियमो विज्ञास्यते—च्विज्योरेवैचः, तयोश्च शक्यार्थ एवेति। इहापि तर्हि नियमान्न प्राप्नोति—लव्यम् पव्यम्। अवश्यलाव्यम् अवश्यपाव्यम्। तुल्यजातीयस्य नियमः। कश्च तुल्यजातीयः? यथाजातीयकः च्विज्योरेच्। कथंजातीयकः च्विज्योरेच्? एकारः। एवमपि रायमिच्छति रैयति अत्रापि प्राप्नोति। रायिश्छान्दसो दृष्टानुविधिश्छन्दसि भवति।

गोर्यूतौ छन्दसि ॥ २ ॥

गोर्यूतौ छन्दस्युपसङ्ख्यानं कर्तव्यम्। 'आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम्*। 'गोयूति'मित्येवान्यत्र।

अध्वपरिमाणे च ॥ ३ ॥

अध्वपरिमाणे च गोर्यूतावुपसङ्ख्यानं कर्तव्यम्। गव्यूतिमध्वानं गतः। 'गोयूति'मित्येवान्यत्र ॥ ७६ ॥

## धातोस्तन्निमित्तस्यैव ॥ ६ । १ । ८० ॥

एवकारः किमर्थः? नियमार्थः। नैतदस्ति प्रयोजनम्। सिद्धे विधिरारभ्यमाणोऽन्तरेणैवकारं नियमार्थो भविष्यति।

इष्टतोऽवधारणार्थस्तर्हि। यथैवं विज्ञायेत 'धातोस्तन्निमित्तस्यैवे'ति। मैवं विज्ञायि 'धातोरेव तन्निमित्तस्ये'ति। किं च स्यात्? अधातोस्तन्निमित्तस्य न स्यात्—शङ्कव्यं+ दारु, पिचव्यः+ कार्पास इति ॥ ८० ॥

प्र०—तु निमित्ताभावात्तल्लाभाभावः। उभयतो नियम इति। योगविभागाश्रयणादिति भावः। रायिश्छान्दस इति। एतद्भाष्यवशाद्भाषायां रैशब्दोऽसाधुरिति लक्ष्यते। अथवा क्यचपर एव रायिः छान्दस इति व्याख्यायते ॥ ७९ ॥

उ०—'लोपः शाकल्यस्ये'ति लोपस्तु न छन्दसि सर्वविधीनां वैकल्पिकत्वात्। अध्वपरिमाणेऽपि संज्ञात्वभङ्गापत्तेर्न वलोपः। यथा रघुनाथशब्दे नित्यस्यापि णत्वस्याभावः। ध्वनितं चेदं 'भृञोऽज्ञाया'मिति सूत्रे भाष्य इति दिक् ॥ ७६ ॥

* यजु० २१।८ १–'गव्यूतिः स्त्री क्रोशयुग'मित्यमरः। 'द्वाभ्यां धनुः सहस्राभ्यां गव्यूतिः पुंसि भाषितः' इति शब्दार्णवः।

'गव्यूतिमात्रमासन्ने देवीधामनि धैर्यवान्' इति राजतरङ्गिण्याम् ३।४०७ प्रयोगः।

+ उगवादिभ्यो यत् ५।१।२; ओर्गुणः ६।४।१४६

## क्रय्यस्तदर्थे ॥ ६ । १ । ८२ ॥

'त'दित्यनेन किं प्रतिनिर्दिश्यते ? स एव क्रीणात्यर्थः । इह मा भूत्—क्रेयं नो धान्यम्[1], न चास्ति क्रय्यमिति ॥ ८२ ॥

## भय्यप्रवय्ये च च्छन्दसि ॥ ६ । १ । ८३ ॥

### भय्यादिप्रकरणे ह्रद्य्या उपसङ्ख्यानम् ॥ १ ॥

भय्यादिप्रकरणे ह्रद्य्या† उपसङ्ख्यानं कर्तव्यम् । ह्रद्य्या आपः ।

### अव् शरस्य च ॥ २ ॥

[2]शरस्य च ह्रदस्य च चातोऽव् वक्तव्यः । ह्रदव्या आपः, शारव्या वै तेजनम् । शरव्यस्य पशूनभिघातुकः स्यात् ।

प्र०—क्रय्यस्त । तदित्यनेनेति । प्रकृत्यर्थस्याप्राधान्यात्परामर्शो न युक्तः । प्रत्ययार्थपरामर्शेऽपि तदर्थग्रहणमयुक्तम् । तथा हि—यदि स एवार्थस्तदर्थ इति तत्पुरुष आश्रीयते तदावश्यमेव स्वस्मिन्नर्थे क्रय्यशब्दो वर्तत इति नार्थस्तदर्थग्रहणेन । अथ सोऽर्थो यस्यासौ तदर्थः शब्दः, तदा शब्दे शब्दस्य वृत्त्यसंभवात्तदर्थग्रहणमनर्थकमिति मत्वा पृच्छति—स एवेति । प्रधानस्य परामर्शासंभवे गुणभूतस्य प्रकृत्यर्थस्य विनिमयलक्षणस्य परामर्शः । तस्मै क्रयाय यदापणे गवादिद्रव्यं व्यवस्थापितं तत्र क्रय्यशब्दो निपात्यते । क्रेयमिति । मूल्येनोपादातव्यमित्यर्थः । न चास्ति क्रय्यमिति । आपणे क्रयाय प्रसारितं धान्यं नास्तीत्यर्थः । केचित्तु क्रय्यशब्दे क्रीणातिर्विक्रये वर्तत इति व्याचक्षते । तेनापणे विक्रयार्थं यद्द्रव्यं न्यस्तं तत्क्रय्यमित्यर्थः ॥ ८२ ॥

भय्यप्रवय्ये । ह्रद्य्या इति । ह्रदे भवाः । 'भवे छन्दसी'ति यत्प्रत्ययः । अकारस्याया-

उ०—क्रय्यस्त । ननु प्रकृतक्रय्यशब्दार्थपरामर्शे संभवति किं प्रश्नेनेत्यत आह—प्रकृत्यर्थस्येत्यादि । गुणभूतस्येति । सामर्थ्यादित्यर्थः । यदापण इति । क्रेतॄणां क्रयार्थं यदापणे स्थापितमित्यर्थः । तद्व्यनक्ति—'आपणे क्रयाय प्रसारित'मिति । अत्रापि 'क्रयायेत्यस्य 'क्रेतॄणा'मित्यादिः । क्रयार्थत्वं च फलोपधानरूपं न तु योग्यतामात्रं, तदर्थ इति विशेषणसामर्थ्यादिति भावः । भाष्योक्तोदाहरणप्रत्युदाहरणयोरर्थमाह—मूल्येनेति । केनचित्—'अस्मभ्यं धान्यं दातव्य'मिति क्रेतारं प्रति पृष्टे इदमुत्तरं—'क्रेयं नो धान्यं, न चास्ति क्रय्य'मिति । क्रयो नाम धान्यार्थिभिर्द्रव्यं दत्त्वा ग्रहणम् । केचित्त्विति । विक्रयो नाम लाभेच्छया द्रव्यग्रहणपूर्वं धान्यादिदानम् । अत्र बोधे एव विशेषो न तु फले इति बोध्यम् ॥ ८२ ॥

---

१—'धान्यम्, क्रेतव्यमित्यर्थः । न चास्ति' पा० ।     † भवे छन्दसि ४ । ४ । ११०

२—'अवादेशो भवतीति वक्तव्यम् । शरस्य च ह्रदस्य च वान्तोवादेशो वक्तव्यः' पा० ।

**शरुवृत्ताद्वा सिद्धम् ॥ ३ ॥**

शरुवृत्ताद्वा पुनः सिद्धमेतत्‡ ।

**ऋञ्जती शरुरित्यपि दृश्यते ॥ ४ ॥**

'ऋञ्जती शरुः'§ इत्यपि शरुशब्दप्रवृत्तिर्दृश्यते ।

**शरुहस्त इति च लोके ॥ ५ ॥**

शरुहस्त इति च लोके शरहस्तमुपाचरन्ति ॥ ८३ ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठस्याध्यायस्य
प्रथमे पादे तृतीयमाह्निकम् ।

## एकः पूर्वपरयोः ॥ ६ । १ । ८४ ॥

एकवचनं किमर्थम् ?

**एकवचनं पृथगादेशप्रतिषेधार्थम् ॥ १ ॥**

एकवचनं क्रियत एक आदेशो यथा स्यात् पृथगादेशो मा भूदिति ।

प्र०—देशः ॥ शरव्यस्येति । शरशब्दस्य यति परतोऽकारस्यावादेशः । शरुवृत्तादिति । शरुशब्दः 'शस्वृस्निही'त्यौणादिकस्तस्माद्यति कृते 'ओर्गुण' इति गुणे 'वान्तो यि प्रत्यय' इति वान्तादेशे च सिद्धः शरव्य इति ॥ ८३ ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे षष्ठस्याध्यायस्य
प्रथमे पादे तृतीयमाह्निकम् ।

एकः पूर्वपरयोः । एकवचनमिति । 'आद्गुण' इत्यादावेकस्यादेशस्य सूत्र उपादानात् सङ्ख्यायाश्च विवक्षितत्वाच्छब्दोपात्तसङ्ख्यात्यागे कारणाभावाद्गुणभेदे प्रधानस्याभेदात् स्थानिभेदेऽप्येकस्यैवादेशस्य प्रवृत्तिः सिद्धेति प्रश्नः ॥ पृथगादेशप्रतिषेधार्थमिति । आदेशस्य

उ०—भव्यप्रवय्ये । शरुवृत्ताद्वेति । शरुशब्दप्रवृत्तेरित्यर्थः ॥ ८३ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते षष्ठस्याध्यायस्य
प्रथमे पादे तृतीयमाह्निकम् ।

एकः पूर्वपरयोः । ननु स्थानिभेदादादेशद्वयप्राप्तेस्तन्निवृत्त्यर्थमेकग्रहणमिति प्रश्नासङ्गतिरत आह—आद्गुण इत्यादाविति । विवक्षायां हेतुः—शब्दोपात्तेति । गुणभेद इति । गुणानुरोधेन प्रधानावृत्तेरयोगा-

‡ ओर्गुणः ६ । ४ । १४६; वान्तो यि प्रत्यये ६ । १ । ७९
§ ऋ० सं० १ । १७२ । २

**न वा द्रव्यवत्कर्मचोदनायां द्वयोरेकस्याभिनिर्वृत्तेः ॥ २ ॥**

न वैतत्प्रयोजनमस्ति । किं कारणम् ? द्रव्यवत्कर्मचोदनायां द्वयोरेकस्याभिनिर्वृत्तेरेक आदेशो भविष्यति । तद्यथा—द्रव्येषु कर्मचोदनायां द्वयोरेकस्याभिनिर्वृत्तिर्भवति—अनयोः पूलयोः कटं कुरु, अनयोर्मृत्पिण्डयोर्घटं कुर्विति । न चोच्यत एकमिति, एकं चासौ करोति ॥ किं पुनः कारणं द्रव्येषु कर्मचोदनायां द्वयोरेकस्याभिनिर्वृत्तिर्भवति ?

**तच्चैकवाक्यभावात् ॥ ३ ॥**

एकवाक्यभावाद् द्रव्येषु कर्मचोदनायां द्वयोरेकस्याभिनिर्वृत्तिर्भवति । आतश्चैकवाक्यभावाद् व्याकरणेऽपि ह्यन्यत्र द्वयोः स्थानिनोरेक आदेशो भवति—'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' [ ६ । ४ । २० ] 'भ्रस्जो रोपधयो रमन्यतरस्याम्' [ ६ । ४ । ४७ ] इति ।

यत्तावदुच्यत एकवाक्यभावादिति तन्न । अर्थात्प्रकरणाद्वा लोके द्वयोरेकस्याभिनिर्वृत्तिर्भवति । अर्थो वास्यैकेन भवति, प्रकृतं वा तत्र भवतीदमेकमेव कर्तव्यमिति । आतश्चार्थात्प्रकरणाद्वा व्याकरणेऽपि ह्यन्यत्र द्वयोः स्थानिनोर्द्वावादेशौ भवतः—

प्र०—विधेयत्वात्प्राधान्यात् प्रधाने च 'ग्रहं संमार्ष्टी'त्यादौ सङ्ख्याया अविवक्षितत्वात् स्थानिभेदाद्द्वावादेशौ स्यातामित्येकग्रहणं कृतम् ।

न वेति । कर्मचोदना—कर्मणः कारकस्य क्रियमाणत्वेन या चोदना तस्यामित्यर्थः । एकवाक्यभावादिति । यथोपात्तविशिष्टकारकान्विता क्रियैव साध्यमाना वाक्यार्थ इत्यर्थः ।

उ०—दिति भावः ॥ प्रधाने च ग्रहमिति । अत्र च संस्कार्यत्वात्प्राधान्यं बोध्यम् । अत्रापि विधेयस्य गुणादेः साधुत्वेन संस्कार्यत्वात्प्राधान्यमित्याशयः । केचित्तु ग्रहस्यानुवाद्यत्वेन तत्र सङ्ख्याया अविवक्षैव, अत्र तु विधेयगतत्वात्तद्विवक्षैवेति चिन्त्यमिदम् । तस्मादनन्ताच्परावर्णानामत्रोद्देश्यतया प्रत्येकं तेष्वेकैकगुणवत् शब्दोपात्तपूर्वपररूपानुवाद्यभेदेनाप्यादेशभेदः स्यादिति तत्प्रतिषेधार्थमेकग्रहणमिति भाष्याशयमाहुः ।

वार्त्तिके कर्मशब्दः कारकपरो न क्रियापरः । द्रव्येष्विव द्रव्यवत् । कर्मचोदनायां संबन्धिद्रव्येषु द्वित्वेऽपि यथा एकमेव निष्पाद्यते तद्वदित्यर्थः । तदाह—कर्मण इति । यथोपात्तेति । यत्सङ्ख्याकं यद्रूपं कारकमुपात्तं तत्संख्याकेन तद्रूपोपात्तेनान्विता क्रियैव वाक्यार्थ इत्यर्थः । साध्यमानेति । एवं च भूतभव्यन्यायेन यद्रूपेण क्रियाविशिष्टस्य साध्यत्वं बुद्धं तत्रैव संबंधिनः सिद्धस्य साधनत्वकल्पनादेकत्वं, कटस्य उपात्तसङ्ख्याया अविवक्षायां मानाभावादिति भावः । एवं व्याख्याने 'एकवाक्यभावा'दिति भाष्यसामञ्जस्यं

१–प्रकरणं' पा० ।

'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' [ ८ । २ । ४२ ] 'उभौ साभ्यासस्य' [ ८ । ४ । २१ ] इति । कथं यत्तदुक्तं 'व्याकरणेऽपि ह्यन्यत्र द्वयोः स्थानिनोरेक आदेशो भवति—ज्वरत्वरास्रिव्यविमवामुपधायाश्च भ्रस्जो रोपधयो रमन्यतरस्या'मिति । इह तावज्ज्वरत्वरस्रिव्यविमवामुपधायाश्चेति स्तां द्वावूठौ नास्ति दोषः, सवर्णदीर्घत्वेन सिद्धम् । इह 'भ्रस्जो रोपधयो रमन्यतरस्या'मिति वक्ष्यति ह्येतद् 'भ्रस्जो रोपधयोर्लोप आगमो रम्विधीयत' इति* ।

यदुच्यते'ऽर्था'त्प्रकरणाद्वे'ति तन्न । किं कारणम् ? एकवाक्यभावादेव लोके द्वयोरेकस्याभिनिर्वृत्तिर्भवति । आतश्चैकवाक्यभावात् । अङ्ग हि भवान् ग्राम्यं पांसुलपादमप्रकरणज्ञमागतं ब्रवीतु 'अनयोः पूलयोः कटं कुरु' 'अनयोर्मृत्पिण्डयोर्घटं कुर्वि'ति. एकमेवासौ करिष्यति । कथं यदुक्तं व्याकरणेऽपि ह्यन्यत्र द्वयोः स्थानिनोर्द्वावादेशौ भवतः 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः उभौ साभ्यासस्ये'ति । इह तावद् 'रदाभ्यां निष्ठातो नः पूर्वस्य च द' इति द्वे वाक्ये । कथम् ? योगविभागः करिष्यते । 'रदाभ्यां निष्ठातो नः' । ततः 'पूर्वस्य च द' इति । इहाप्युभौ साभ्यासस्येत्युभौग्रहणसामर्थ्याद्द्वावादेशौ भविष्यतः ।

प्र०—आगमो रमिति । तेन नासौ द्वयोः स्थाने विधीयते इत्यनेको न भविष्यतीत्यर्थः । उभौग्रहणसामर्थ्यादिति । 'प्राणिणिषती'त्यादा'वनिते'रित्यनेनोपसर्गादनन्तरस्य नकारस्य णत्वे सिद्धे 'साभ्यासस्ये'त्येतावतैव द्वयोर्नकारयोर्णत्वं सिद्धमित्युभौग्रहणमादेशनिर्देशार्थं विज्ञायते—'साभ्यासस्यानितेरुभौ णकारौ भवत' इति । तदेवमेकग्रहणं प्रत्याख्यातम् । 'आद्गुण' इत्यादौ सङ्ख्यायाः

उ०—कथमिति चिन्त्यम् । तस्मादयमत्र भाष्यार्थः—एकवाक्येऽनेकसाधनैकविधेये एकस्य विधेयत्वप्रतीतिर्यथा प्रकृते वाक्ये । अत एवास्य पूलस्य कटं कुरु अस्य च पूलस्य कटं कुर्विति वाक्यभेदेनैककटस्य विधेयत्वप्रतीतिरिति ।

भाष्ये—योगविभाग इति । भिन्नविभक्त्युच्चारणादिति भावः । ननु उभौग्रहणं स्थानिद्वयसमर्पणार्थमावश्यकमत आह—प्राणिणिषतीति । साभ्यासस्येति च 'गुणः कृतात्मसंस्कार'इति न्यायेनानितिविशे-

* ६ । ४ । ४७ भा०

१—'पांसुर' पांशुर' 'पांशुल' पा० । 'संज्ञाच्छन्दसोर्वा कपिलकादीनाम्' ८ । २ । १८ वा० ३ पृ० ३८३ इत्यनेन पांसुरम् पांसुलमित्युभयं सिध्यति । 'तालव्या अपि दन्त्याः स्युः शस्यशूकरपांशवः' इति वचनाद्दन्त्ये सकारे तालव्ये वा नास्त्यर्थभेदः ।

पांशुर्धूलौ च शस्यार्थचिरसञ्चितगोमये' इति मेदिनी । 'धूलिः पांशु'रित्यमरः ।

'पंश्यतेऽसावल्पेनापि वायुनेति पांशुः—रेणुः' ( दश० उणादिवृत्तिः १ । ११२ )

'पंसयति नष्टमिव भवतीति पांसुः धूलिर्वा । 'पंस'धातोर्दीर्घः । क्षेत्रार्थं चिरकालात्सञ्चितं गोमयं वा, इत्याद्येवार्थेषु पांशुरिति तालव्यान्तोऽपि शब्दो दृश्यते ।' ( उणादिवृत्तौ १ । २७ दयानन्दः )

'कर्णश्रवेऽनिले रात्रौ दिवा पांसुसमूहने' इति मनुः ( ४ । १०२ )

तत्रावयवे शास्त्रार्थसम्प्रत्ययो यथा लोके ॥ ४ ॥

तत्रावयवे शास्त्रार्थसम्प्रत्ययः प्राप्नोति यथा लोके । तद्यथा— लोके 'वसन्ते ब्राह्मणोऽग्नीनादधीते'ति सकृदाधाय कृतः शास्त्रार्थ इति कृत्वा पुनः प्रवृत्तिर्न भवति । तथा ''गर्भाष्टमे ब्राह्मण उपनेय' इति सकृदुपनीय कृतः शास्त्रार्थ इति कृत्वा पुनः प्रवृत्तिर्न भवति । तथा 'त्रिर्हृदयङ्गमाभिरद्भिरशब्दाभिरुपस्पृशे'दिति सकृदुपस्पृश्य कृतः शास्त्रार्थ इति कृत्वा पुनः प्रवृत्तिर्न भवति । एवमिहापि खट्वेन्द्रे कृतः शास्त्रार्थ इति कृत्वा मालेन्द्रादिषु न स्यात्* ।

प्र०—शब्दोपात्ताया विवक्षणात् । यत्र तु सङ्ख्या न विवक्ष्यते तत्र लक्ष्यसिद्धिरविवक्षितत्वे हेतुः ।

तत्रावयव इति । व्यक्तिसमुदायापेक्षया एका व्यक्तिरवयवः तत्रैव शास्त्रीयं कार्यं प्राप्नोति । तावतैव शास्त्रार्थस्यानुष्ठानात् न तु सर्वासु व्यक्तिष्वित्यर्थः ।

उ०—षष्ठं न नकारविशेषणम् । एतेन प्राधान्यान्नकारविशेषणत्वेऽभ्याससहितनस्येत्यर्थेन विशिष्टस्य स्थानित्वलाभेऽपि नद्वयस्य स्थानित्वालाभः । रमागमेन रोपधयोरिवाभ्यासनिवृत्त्यापत्तिश्चेति परास्तम् । तत्रोठ्वत् सकृत्प्रवृत्त्यैव नद्वयस्यापि निवृत्तेः स्थान्यभावादेव पुनः प्रवृत्त्यभावेनादेशद्वयलाभार्थमुभौग्रहणमिति भावः । विवक्षणादिति । शब्दोपात्तत्वाविद्विवक्षैव न्याय्या, नाविवक्षा कारणाभावादिति भावः । विशिष्टविधिसम्भवेन विधेयगतैकत्वविवक्षायां बाधकाभावात् । एवं यत्र विशिष्टस्योद्देश्यत्वे विरोधस्तत्राविवक्षा । यथा ग्रहं संमार्ष्टीत्यादौ 'प्राजापत्या नवग्रहा' इति नवत्वसङ्ख्याविशिष्टानामेव प्राप्तेरित्यन्यत्र विस्तरः । नन्वेवं तस्यापत्यमित्यादावपि सङ्ख्याविवक्षा स्यादत आह—यत्र त्विति । लक्ष्यसिद्धिरिति । वस्तुतोऽनुवाद्यगता सङ्ख्याविवक्षिता, विधेयगता विवक्षितैवेति मीमांसकसरणिरेवास्माकमित्यन्यत्र प्रपञ्चितम् ।

भाष्ये—तत्रावयव इति । अयं भावः—सर्वान्शास्त्राधिकारिणः पुरुषान्प्रति प्रवृत्तं तत्तच्छास्त्रं प्रतिपुरुषमेकवाक्यतया सकृदेव बोधकं स्यात् । यथाधानेनाग्निं संस्कुर्यादित्याद्यर्थकमाधानादिवाक्यं प्रतिब्राह्मणं सकृदेवार्थबोधकमत एव पुनःपुनर्नाधानादिसंस्कारः । तत्र व्याकरणशास्त्रस्यावर्णादचि पूर्वपरयोर्गुणो भवति, तद्वच्च साधु भवति, तच्च प्रयोक्तव्यमित्येतावत्पर्यन्तं व्यापारात्तत्संस्कृतस्यैकस्य खट्वेन्द्रस्य प्रयोगेण शास्त्रार्थस्य करणान्मालेन्द्रादिप्रयोगो न स्यादतस्तत्तल्लक्ष्यविषयभिन्नसूत्रोपप्लवेन वाक्यभेदोऽवश्यं वाच्यः । तद्वत्पूर्वपरविषयेऽपि स्यादित्यावश्यकमेकग्रहणम् । गुणादिविधिर्यथा लक्ष्यसंस्कारकस्तथा प्रयोगविधिरपि पुरुषसंस्कारक इति । तदाह—व्यक्तिसमुदायेति । मालेन्द्रादिषु न स्यादिति भाष्ये—तद्विषयः प्रयोगो न स्यादित्यर्थः ।

१—"अष्टमे वर्षे ब्राह्मणमुपनयेत् ॥ १ ॥ गर्भाष्टमे वा ॥ २ ॥ एकादशे क्षत्रियम् ॥ ३ ॥ द्वादशे वैश्यम् ॥ ४ ॥" ( आश्वलायनगृह्यसूत्रम् अ० १ खं० १६ )

'गर्भाष्टमेषु ब्राह्मणमुपनयीत' ( आप० गृह्य० प० ४ ख० १० । सू० २ ); ( बोधा० गृह्य० प्र० २ । अ० ५ । सू० २ )

* आद् गुणः ६ । १ । ८७ ।

सिद्धं तु धर्मोपदेशनेऽनवयवविज्ञानाद्यथा लौकिकवैदिकेषु ॥ ५ ॥

सिद्धमेतत् । कथम् ? धर्मोपदेशनमिदं शास्त्रम्, धर्मोपदेशने चास्मिञ्छास्त्रेऽनवयवेन शास्त्रार्थः सम्प्रतीयते यथा लौकिकेषु वैदिकेषु च कृतान्तेषु ।

लोके तावद् 'ब्राह्मणो न हन्तव्यः' 'सुरा न पेये'ति ब्राह्मणमात्रं न हन्यते सुरामात्रं च न पीयते। यदि चावयवेन शास्त्रार्थसम्प्रत्ययः स्यादेकं च ब्राह्मणमहत्वैकां च सुरामपीत्वान्यत्र कामचारः स्यात् । तथा 'पूर्ववया ब्राह्मणः प्रत्युत्थेय'इति पूर्ववयोमात्रं प्रत्युत्थीयते । यदि चावयवेन शास्त्रार्थसम्प्रत्ययः स्यादेकं पूर्ववयसम्प्रत्युत्थायान्यत्र कामचारः स्यात् ।

तथा वेदे खल्वपि 'वसन्ते ब्राह्मणोऽग्निष्टोमादिभिः क्रतुभिर्यजेते'त्यग्न्याधाननिमित्तं वसन्ते वसन्त इज्यते । यदि चावयवेन शास्त्रार्थसम्प्रत्ययः स्यात् सकृदिष्ट्वा पुनरिज्या न प्रवर्तेत ।

प्र०—सिद्धं त्विति । 'साधुभिर्भाषितव्य'मिति धर्मनियमोऽनेन क्रियते इत्यर्थप्रतिपादनाय प्रयुज्यमानेषु सर्वेष्वेव शब्देष्विदं शास्त्रमन्वाख्यानाय प्रवर्तते, न तु कस्यांचिदेव शब्दव्यक्तावित्यर्थः । अनवयवेनेति । साकल्येनेत्यर्थः । तथा पूर्ववया इति । न केवलं निषेधः सर्वविषयोऽनुष्ठीयते यावद्विधिरपि यथासम्भवमिति दर्शयितुमुपन्यासः । अग्न्याधाननिमित्तमिति ।

उ०—समाधत्ते भाष्ये—धर्मोपदेशन इति । धर्मशब्देन नित्यनैमित्तिककाम्यानां ग्रहणम् । यदभावे पापजनकं तन्नित्यम्, यथा—ब्राह्मणाहिंसादि । नैमित्तिकं यथा-वृद्धागमने प्रत्युत्थानम् । काम्यं ज्योतिष्टोमादि । तत्रैतच्छास्त्रविषयप्रयोगविधेर्नित्यसमता, शास्त्रसंस्कृतशब्दप्रयोगस्य 'नापभाषितवै' इति श्रुत्या स्वाभावे तदर्थकान्यशब्दप्रयोगे पापबोधनादित्याशयेनाह—साधुभिरिति । 'साधुभिर्भाषितव्य'मिति यत उक्तमतोऽनेन व्याकरणेन तद्विषयो धर्मनियमः क्रियत इत्यर्थः । धर्मोपदेशने इति करणल्युडन्तं शास्त्रवाचि । अर्थप्रतिपादनाय प्रयुज्यमानेषु इत्यनेन स्वातन्त्र्यं वारयति । एवं वक्ष्यमाणो भाष्योक्तः फलसम्बन्धोऽपि तत्रैवेति सर्वविषयता शास्त्रस्य बोधिता । दृष्टान्तान्तरोपन्यासे प्रयोजनमाह—न केवलमिति । निषेध इति । नित्यविध्युपलक्षणम् । अग्न्याधाननिमित्तमिति यजनक्रियाविशेषणमित्याह—बहुव्रीहिरिति ।

१-सुरापानं धर्मशास्त्रे प्रतिषिद्धम् ( वासिष्ठधर्मशास्त्रे २१ । ११ ); ( मनुस्मृतौ ११ । ९३ ); २ । १ । ३६ वा० ३ पृ० ५९९ भाष्ये विमर्शटिप्पणी द्रष्टव्या ।

उभयथेह लोके दृश्यतेऽवयवेनापि शास्त्रार्थसम्प्रत्ययोऽनवयवेनापि । कथं पुनरिदमुभयं लभ्यम् ? लभ्यमित्याह । कथम् ? इह तावद् 'वसन्ते ब्राह्मणोऽग्नीनादधीते'त्यग्न्याधानं यज्ञमुखप्रतिपत्त्यर्थम् । सकृदाधाय कृतः शास्त्रार्थः प्रतिपन्नं यज्ञमिति कृत्वा पुनःप्रवृत्तिर्न भवति । अतोऽत्रावयवेन शास्त्रार्थः सम्प्रतीयते । तथा 'गर्भाष्टमे ब्राह्मण उपनेय' इत्युपनयनं संस्कारार्थम् । सकृच्चासावुपनीतः संस्कृतो भवति । अतोऽत्राप्यवयवेन शास्त्रार्थः सम्प्रतीयते । तथा 'त्रिर्हृदयङ्गमाभिरद्भिरशब्दाभिरुपस्पृशे'दित्युपस्पर्शनं शौचार्थम् । सकृच्चासावुपस्पृश्य शुचिर्भवति । अतोऽत्राप्यवयवेन शास्त्रार्थः सम्प्रतीयते ।

इहेदानीं 'ब्राह्मणो न हन्तव्यः' 'सुरा न पेये'ति ब्राह्मणवधे सुरापाने च महान्दोष उक्तः । स ब्राह्मणवधमात्रे सुरापानमात्रे च प्रसक्तः । अतोऽत्रानवयवेन शास्त्रार्थः सम्प्रतीयते । तथा 'पूर्ववया ब्राह्मणः प्रत्युत्थेय' इति पूर्ववयसोऽप्रत्युत्थाने दोष उक्तः प्रत्युत्थाने च गुणः । कथम् ?

'ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति ।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते' ॥ इति ।

प्र०—अग्न्याधानं निमित्तमस्येति बहुव्रीहिः । सत्यग्न्याधानेऽग्निष्टोमादिष्वधिकारात् । यज्ञमुखमिति । यज्ञद्वारम् । यज्ञोपायमित्यर्थः । ब्राह्मणवध इति । एकस्मिन्नपि ब्राह्मणे हते निषेधातिक्रमात्सर्वब्राह्मणविषयो हननिषेधः प्रतीयते । ऊर्ध्वं प्राणा इति । अर्थवादोऽयं प्रत्युत्थानप्रशंसापरः ।

उ०—यज्ञोपाय इति । संस्कृताग्निसम्पादनार्थत्वादाधानस्य सम्पन्नेष्वग्निषु प्रयोजनाभावान्न पुनः करणमिति भावः ॥ भाष्ये—संस्कारार्थमिति । वेदाध्ययनाद्युपयोगिसंस्कारार्थमित्यर्थः । निषेधातिक्रमादिति । तदतिक्रमे प्रत्यवायोत्पत्तेरित्यर्थः । अर्थवादोऽयमिति । प्रत्युत्थानाकरणे प्राणोत्क्रमणरूपमसंतमपि दोषमुद्भाव्य तत्प्रशंसा क्रियते तदननुष्ठाने दोषदर्शनेन तदनुष्ठानार्थम् ।

व्याघ्रादिव्यपदेशेन यथा बालो निवर्त्यते ।
असत्योऽपि तथा कश्चित्प्रत्यवायोऽभिधीयते ॥' इत्युक्तेः ।

अथ शब्दप्रयोगस्य नित्यकाम्यत्वात्तस्य पुनः पुनरनुष्ठाने पुनरनुष्ठानबोधनाय नित्यनैमित्तिककाम्यानां पुनः पुनरनुष्ठाने हेतुमाह-अङ्गभूयस्त्वादिति । अङ्गशब्देन फलं प्रत्यङ्गभूतो याग उच्यते । अधिकारिभिः कामानावद्भिस्त्रैवर्णिकैरग्निविद्यायुक्तैः । नैमित्तिकानि-प्रत्युत्थानादीनि । नित्यानाम् अग्निहोत्रादीनाम् । नित्यत्वात् यावज्जीवं

१—मनुस्मृतिः २ । १२० अतोऽग्रेऽभिवादनविधिर्मनुस्मृतौ विस्तरेण द्रष्टव्यः ।
आपस्तम्बधर्मसूत्रे प्रथमप्रश्ने द्वितीयपटले १२—२२ कण्डिकास्वभिवादनप्रकारो द्रष्टव्यः ।

स च पूर्ववयोमात्रे प्रसक्तः। अतोऽत्राप्यनवयवेन शास्त्रार्थः सम्प्रतीयते। तथा 'वसन्ते ब्राह्मणोऽग्निष्टोमादिभिः क्रतुभिर्यजेते'तीज्यायाः किंचित्प्रयोजनमुक्तम्। किम्? 'स्वर्गे लोकेऽप्सरस एनं जाया भूत्वोपशेरत' इति। तच्च द्वितीयस्यास्तृतीयस्याश्चेज्यायाः फलं भवितुमर्हति। अतोऽत्राप्यनवयेन शास्त्रार्थः सम्प्रतीयते। तथा शब्दस्यापि ज्ञाने प्रयोगे प्रयोजनमुक्तम्। किम्? 'एकः शब्दः सम्यग्ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके कामधुग्भवती'ति। यद्येकः शब्दः सम्यग्ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके कामधुग्भवति किमर्थं द्वितीयस्तृतीयश्च प्रयुज्यते? न वै कामानां तृप्तिरस्ति[2]।

अथ पूर्वपरग्रहणं किमर्थम्?

**पूर्वपरग्रहणं परस्यादेशप्रतिषेधार्थम् ॥ ६ ॥**

पूर्वपरग्रहणं क्रियते परस्यादेशप्रतिषेधार्थम्। परस्यादेशो मा भूत्—'आद्गुणः'

---

प्र०—वसन्त इति। अङ्गभूयस्त्वात् फलभूयस्त्वमिति काम्यानि कर्माणि पुनः पुनरधिकारिभिरनुष्ठीयन्ते। यस्य पुनः कामना नास्ति नासौ पुनरनुतिष्ठति। नैमित्तिकान्यपि कर्माणि यदा यदा निमित्तावगमस्तदा तदावश्यानुष्ठेयानि। नित्यानां तु नित्यत्वादेवाविच्छेदः।

अथ पूर्वेति। 'आद्गुण' इत्यादावादित्यादिका पञ्चमी अचीत्यादेः षष्ठीं प्रकल्पयिष्यति, अचीत्यादिका सप्तम्यादित्यादेरिति मत्वा प्रश्नः।

पूर्वपरग्रहणमिति। परस्यैवादेशो मा भूत्, पूर्वपरयोर्यथा स्यादित्यर्थः। षष्ठीनि-

---

उ०—तद्विषयाधिकारसत्त्वादकरणे प्रत्यवायश्रवणाच्चेति भावः। शब्दप्रयोगस्य काम्यत्वं दर्शयति—एक इति भाष्ये। नैमित्तिकत्वं स्वर्थबोधनार्थत्वेन स्पष्टमेव। सम्यक् ज्ञात एकोऽप्यर्थबोधनाय सुप्रयुक्तश्चेत्कामधुग्भवति किं वक्तव्यं सर्वोऽपीति तदर्थः। एवं व्यवहारे प्रयोगविषयाणां सर्वेषां शास्त्रविषयता सूचिता। 'शास्त्रान्वित' इत्यनेन शास्त्रस्मरणपूर्वकं प्रयोगे धर्मः सूचितः। अत्र प्रयुक्तिलाघवादर्थबोधनाय प्राप्ते एव प्रयोगे फलसम्बन्धबोधनं, दर्शपूर्णमासयोरिव। एतेनैकस्यैव पुनः पुनः प्रयोगेणानेककामनाफलसिद्धिरित्यपास्तम्। एवं च नित्यनैमित्तिककाम्यविधिविषये प्रत्यवायपरिहाराय फलप्राप्तये च तत्तल्लक्ष्यविषयानन्तवाक्योपप्लवेन वाक्यभेदात्पुनः पुनरनुष्ठानसिद्धिः। तत्र तत्तल्लक्ष्यविषयोपप्लुतवाक्ये 'गुणो भवती'त्याद्यन्तोऽश आधानादिवल्लक्ष्यसंस्कारक एव, फलाश्रवणात्। अत एव आवृत्तौ मानाभावात्पूर्वपरघटितमेकमेव वाक्यमिति नादेशद्वयम्। अत एवैकलक्ष्ये शास्त्रस्य पुनः पुनर्न प्रवृत्तिः। एतन्मूलकमेव पठ्यते—'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्ति'रिति। 'सङ्ग्राहकवाक्याल्लक्ष्यसंस्कारकवाक्योपप्लव' इति चेति दिक्॥ ननु तद्विना कथं पूर्वपरयोः स्थानित्वमत आह—आद्गुण इत्यदाविति।

---

१—क्वचिन्न। २ 'न वित्तेन तर्पणीयो मनुष्यः' (कठोपनिषद् १।१।२७) 'न जातु कामः कामानामुपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते'॥ इति मनुः २।९४

[ ६ । १ । ८७ ] इति ॥ कथं च प्राप्नोति ।

**पञ्चमीनिर्दिष्टाद्धि परस्य ॥ ७ ॥**

पञ्चमीनिर्दिष्टाद्धि परस्य कार्यमुच्यते । तद्यथा—'द्व्यन्तरुपसर्गेभ्योऽप ईत्' [ ६ । ३ । ९७ ] इति ।

**षष्ठीनिर्दिष्टार्थं तु ॥ ८ ॥**

षष्ठीनिर्देशार्थं च पूर्वपरग्रहणं क्रियते । षष्ठीनिर्देशो यथा प्रकल्पेत ।

**अनिर्दिष्टे हि षष्ठ्यर्थाप्रसिद्धिः ॥ ९ ॥**

अक्रियमाणे हि पूर्वपरग्रहणे षष्ठ्यर्थस्याप्रसिद्धिः स्यात् । कस्य ? स्थानेयोगत्वस्य ॥ नैष दोषः । आदित्येषा पञ्चम्यचीति सप्तम्याः षष्ठीं प्रकल्पयिष्यति 'तस्मादित्युत्तरस्य' [ १ । १ । ६७ ] इति । तथाचीत्येषा सप्तम्यादिति पञ्चम्याः षष्ठीं प्रकल्पयिष्यति 'तस्मिन्निति निर्दिष्टे पूर्वस्य' [ १ । १ । ६६ ] इति ।

एवं तर्हि सिद्धे सति यत्पूर्वपरग्रहणं करोति तज्ज्ञापयत्याचार्यो 'नोभे युगपत्प्रकल्पिके भवत' इति । किमेतस्य ज्ञापने प्रयोजनम् ? यदुक्तं 'सप्तमीपञ्चम्योश्च भावादुभयत्र षष्ठीप्रक्लृप्तिस्तत्रोभयकार्यप्रसङ्ग' इति* स न दोषो भवति ॥ ८४ ॥

प्र०—दिष्टार्थं त्विति । निर्देशो निर्दिष्टम् । तुशब्दश्चशब्दस्यार्थे । अनिष्टनिवृत्तिरिष्टसिद्धिश्च प्रयोजनमित्यर्थः । यदुक्तमिति । 'तस्मादित्युत्तरस्ये'त्यत्र । सप्तमीपञ्चम्योश्चेति । 'आने मुक्,' 'ईदास' इत्यादौ । न चोभयोः प्रकल्पनं विरुद्धं यतो विरोधान्न भवेत् ।

सूत्रद्वयप्रमाणत्वाद्द्वे भवेतां प्रकल्पिके ।
षष्ठ्या विभक्ती तेनात्र ज्ञापकार्थत्वमाश्रितम् ॥ ८४ ॥

उ०—ननु परस्थानेऽप्यादेशस्येष्टत्वात्तत्प्रतिषेधार्थत्वमयुक्तमत आह—परस्यैवेति । 'आ'दिति पञ्चम्या अकृतार्थया पूर्वत्र कृतार्थाया 'अची'ति सप्तम्या एव षष्ठीप्रकल्पनादिति भावः । अनिष्टनिवृत्तिरिति । तदभावे परस्यैवादेशः स्यादित्यनिष्टम् । सत्त्वे तु पूर्वपरयोरुभयोरिष्टस्थानित्वसिद्धिरिति वार्तिकद्वयेन प्रतिपाद्यत इत्यर्थः ॥ कथमुभयोः प्रकल्पने विरोधाभावोऽत आह—सूत्रद्वयेति । ज्ञापकेन चोभयोः प्रकल्पने निरस्ते परत्वानवकाशत्वाभ्यां व्यवस्थेत्यर्थः ॥ ८४ ॥

* १ । १ । ६६ वा० १७ पृ० ५१६

## अन्तादिवच्च । ६ । १ । ८५ ।

किमर्थमिदमुच्यते ?

**अन्तादिवद्वचनमामिश्रस्यादेशवचनात् ॥ १ ॥**

'अन्तादिव'दित्युच्यत आमिश्रस्यादेशवचनात् । आमिश्रस्यायमादेश उच्यते स नैव पूर्वग्रहणेन गृह्यते नापि परग्रहणेन । तद्यथा—क्षीरोदके सम्पृक्ते आमिश्रत्वान्नैव क्षीरग्रहणेन गृह्येते नाप्युदकग्रहणेन । इष्यते च ग्रहणं स्यादिति, तच्चान्तरेण यत्नं न सिध्यतीत्यन्तादिवद्वचनम् । एवमर्थमिदमुच्यते ॥ अस्ति प्रयोजनमेतत् ? किं तर्हीति ।

**तत्र यस्यान्तादिवत्तन्निर्देशः ॥ २ ॥**

प्र०—अन्ता । किमर्थमिति । स्थानिवद्भावेन कार्याणां सिद्धिं मत्वा प्रश्नः । आमिश्रस्येति । समुदायस्येत्यर्थः । पूर्वपरसमुदायो ह्येकादेशस्य स्थानी, न प्रत्येकं पूर्वपराविति तदाश्रयं कार्यं स्थानिवद्भावादप्राप्तमनेनातिदिश्यते । क्षीरोदके इति । नियतव्यक्तिविवक्षायां जातिप्राधान्याभावादेकवद्भावाभावः । यदि तर्हि समुदायः स्थानी नावयवः, तत्कथमुक्तं 'यो ह्युभयोः स्थाने भवति लभतेऽसावन्यतरतो व्यपदेश'मिति, 'खट्वर्श्य' इत्यादौ रपरत्वं भवतीति । समुदायिव्यतिरिक्तसमुदायाभावाद्वस्तुस्थित्याश्रयेणान्यतरतो व्यपदेशाविरोधः । स्थानिवद्भावे तु स्थानी साक्षान्निर्दिष्ट आश्रीयते ॥ नन्वादेशग्रहणादानुमानिकस्याप्यादेशस्य स्थानिवद्भावात् स्थान्यप्यानुमानिक आश्रीयते । यथोदाहृतम्—एरुः पचतु । अत्र ह्नीकारेणोकारान्तः स्थान्यनुमीयते, उकारेणाप्युकारान्त आदेशः । तस्य स्थानिवद्भावात्तिङन्तं पदमिति पदसंज्ञा भवति । एवमेकादेशस्यानुमीयमानस्थानित्वपूर्वपरावयवाश्रयं कार्यं सिद्धमिति किमनेनातिदेशेन ? एवं तर्ह्यनल्विधाविति स्थानिवद्भाव उक्तः, अल्विध्यर्थमिदम् । तथा च क्षीरपेणेत्यादा'वेकाजुत्तरपदे णः' इति णत्वमल्विधिरप्यन्तवद्भावाद्भवति । यत्त्विह वार्तिकमन्तादिवद्वचनमामिश्रस्यादेशवचनादिति, तदादेशग्रहणप्रयोजनापरामर्शेन ।

तत्र यस्येति । अन्तादिशब्दयोरवयवविशेषवाचित्वादवयविमात्राक्षेपेऽपि अवयविविशेष-

उ०—अन्तादिवच्च । स्थानिवद्भावेनेति । ब्रह्मबन्धूरित्यादौ प्रातिपदिकत्वादिकार्याणामित्यर्थः ।। अनुमीयमानेति । अनुमीयमानं स्थानित्वं ययोः पूर्वपरावयवयोः, पूर्वपरवर्णघटितावयवयोस्तदाश्रयमित्यर्थः । अवयवस्य स्थानित्वे तदवयवकयोरपि तदनुमानमिति भावः । क्षीरपेणेति । एकादेशे एकाजुत्तरपदत्वाभावाण्णत्वं न स्यात् । अन्तवद्भावात्तु भवति । उभयत आश्रयणाभावात् । 'अतादृरूप्यातिदेशा'दित्यनेन वर्णमात्रवृत्तिधर्माश्रयकार्यातिदेशाभाव एव बोध्यते । न चेदं तथा, स्थानिवत्त्वं तु अप्राधान्येनाप्यलाश्रये

१—'अन्तादिवद्वचनं क्रियते' पा० ।

तत्र यस्यान्तादिवद्भाव इष्यते तन्निर्देशः कर्तव्यः । 'अस्यान्तवद्भवत्यस्यादिवद्भवती'ति वक्तव्यम् ।

**सिद्धं तु पूर्वपराधिकारात् ॥ ३ ॥**

सिद्धमेतत् । कथम् ? 'पूर्वपराधिकारात्' । 'पूर्वपरयो'रिति† वर्तते । पूर्वस्य कार्यं प्रत्यन्तवद्भवति । परस्य कार्यं प्रत्यादिवद्भवति ।

अथ यत्रोभयमाश्रीयते किं तत्र पूर्वस्यान्तवद्भवत्याहोस्वित्परस्यादिवद्भवति ? 'उभयत आश्रये नान्तादिवत्' । किं वक्तव्यमेतत् ? न हि । कथमनुच्यमानं गंस्यते ? लौकिकोऽयं दृष्टान्तः । तद्यथा—लोके यो द्वयोस्तुल्यबलयोरेकः प्रेष्यो भवति स

प्र०—प्रतिपादनाय तन्निर्देशः कर्तव्य इत्यर्थः ॥ पूर्वस्येति । क्वचिदादेशविधानात् प्राग्यौ पूर्वपरौ तौ गृह्येते । यथा—'वृक्ष औ' 'वृक्षा'वित्यत्र सुपमौकारं परं प्रत्यादिवद्भावादेकादेशस्य 'सुबन्तं पद'मिति पदसंज्ञा भवति । क्वचित्तु कृत एकादेशे यौ पूर्वपरौ तौ गृह्येते ॥ उभयत इति । यथा 'एतेर्लिङी'ति ह्रस्वत्वमुपसर्गात्परस्य विधीयमान'मतीयात् परीया'दित्यादौ न भवति । तथा ह्यन्तादिशब्दाववयवविशेषवाचिनौ । तत्र यदि पूर्वं प्रत्यवयवबुद्ध्या एकादेश आश्रीयते तदा तस्यैव परं प्रति कथमादिवद्भावः स्यात् ? एवं परं प्रत्यादिवत्त्वे पूर्वं प्रत्यन्तवद्भावो न

उ०—नेति प्रसिद्धमेवेति भावः । णत्वमद्रिध्रिरपीत्यादि परामर्शेनेत्यन्तं चिन्त्यम् । एकाच्त्वस्य श्रुत्या सत्त्वेनोत्तरपदत्वस्य स्थानिवत्त्वेनापि सुलभत्वात् । तस्मादयमत्र भाष्याशयः-स्थानिवद्भावेन सर्वशब्दे पूर्वान्तवत्त्वलभ्यमानसर्वनामत्वाप्रसङ्गः । तस्यैकादेशस्थानिधर्मत्वाभावात् । सिद्धान्तिन आदेशग्रहणप्रयोजनाज्ञानस्य वक्तुमशक्यत्वाच्च । न चानुमानिकादेशे समुदाययोरपि स्थानित्वं, तत्कल्पकवाक्यं हि पूर्वपरघटितसमुदायस्यैकादेशघटित आदेश इत्येव न तु तयोः समुदाययोः प्रत्येकं स्थानित्वबोधकं मानाभावात् । तथा कल्पने च स्वाश्वशब्दस्य समुदायस्यानुमानिकस्थान्यादेशभावं गृहीत्वा स्थानिवत्त्वेन तस्य स्वशब्दत्वात्तत ईरिन्शब्दे वृद्ध्यापत्तिरतः स्थानिवत्त्वाप्रवृत्तिः । किं च स्थानिवद्भावाङ्गीकारे क्षीरपेणेत्याद्यसिद्धिः । एकादेशस्थानित्वस्य वर्णयोस्तद्घटितार्थवत्समुदाययोर्वा कल्पनेऽपि उत्तरपदभूत'प'शब्दे तत्कल्पने मानाभावात् । अत एव 'राजकीय'मित्यादावल्लोपो न । अक्षरार्थस्त्वेवम्—आनुमानिकस्थान्यादेशभावेऽपि आमिश्रस्यान्तादिरूपवर्णद्वयघटितसमुदायस्यायमादेश उच्यते इति । तदेव दृष्टान्तव्याजेनाह—तद्यथेति । यत्तु 'आमिश्रस्ये'त्यस्य पूर्वपरवर्णसमुदायस्येत्यर्थ इति, तन्न; 'पूर्वपरयो'रिति द्विवचनेन वाच्यस्थानिवत्त्वस्य प्रत्येकमेव विश्रान्तेः । ध्वनितं चेदमुरणरपरसूत्रे भाष्ये ।

यथा वृक्ष औ इति । कृते एकादेशे इह पूर्वपरयोर्भेदेन—निर्देशाभावादित्यर्थः । क्वचित्त्विति । क्षीरपेणेत्यादौ । तत्र हि कृते एकादेशे पूर्वः पान्तस्तदन्तवत्त्वादेकादेशस्यैकाजुत्तरपदत्वात् णत्वं भवति ।

† एकः पूर्वपरयोः ६ । १ । ८४

तयोः पर्यायेण कार्यं करोति। यदा तु तमुभौ युगपत्प्रेषयतो नानादिक्षु च कार्ये भवतस्तत्र यद्यसावविरोधार्थी भवति तत उभयोर्न करोति। किं पुनः कारणमुभयोर्न करोति? 'यौगपद्यासम्भवात्'। नास्ति यौगपद्येन सम्भवः।

अथान्तवत्त्वे कानि प्रयोजनानि?

**अन्तवत्त्वे प्रयोजनं बह्वच्पूर्वपदाट्ठज्विधाने ॥ ४ ॥**

अन्तवत्त्वे बह्वच्पूर्वपदाट्ठज्विधाने प्रयोजनम्। द्वादशान्यिकः। पूर्वपदोत्तरपदयोरेकादेशः पूर्वपदस्यान्तवद्भवति। यथा शक्येत कर्तुं 'बह्वच्पूर्वपदाट्ठज्भवती'ति*। क्व तर्हि स्यात्? यत्र कृतेऽप्येकादेशे बह्वच्पूर्वपदं भवति—त्रयोदशान्यिकः।

**प्रत्ययैकादेशः पूर्वविधौ ॥ ५ ॥**

प्रत्ययैकादेशः पूर्वविधौ प्रयोजनम्। मधु पिबन्ति। शिदशितोरेकादेशः शितोऽन्तवद्भवति। यथा शक्येत कर्तुं शितीति पिबादेशः†। क्व तर्हि स्यात्? यत्रैकादेशो न भवति—पिबति।

प्र०—स्यादेकस्योभयापेक्षया पारतन्त्र्यविरोधादिति भावः।

द्वादशान्यिक इति। द्वादशान्यानि कर्माणि अध्ययने वृत्तान्यस्येति 'तद्धितार्थ' इति समासः। एकादेशस्यान्तवत्त्वाद्बह्वच्पूर्वमदं भवतीति ठच् सिध्यति। अत्रोत्तरपदविशेषः शब्देन नाश्रित इत्युभयाश्रयाभावात् प्रतिषेधाभावः। क्व तर्हीति। वचनाद्भूतपूर्वगतिराश्रयिष्यत इति मन्यते। यत्रेति। साम्प्रतिकसद्भावे भूतपूर्वगत्याश्रयणस्यायुक्तत्वात्।

पिबन्तीति। पा अ अन्ति इति स्थिते अन्तरङ्गत्वाच्चैकादेशे कृते पिबादेशो न प्राप्नोति, शितं प्रत्यन्तवद्भावाद्भवति। वार्णादाङ्गमित्यनाश्रित्येदमुक्तम्।

उ०—यद्यपीदं प्राक्तनपूर्वपरग्रहणेनापि सिध्यति तथापि एवमपि सिध्यतीत्यभिमानः। पूर्वपरौ चात्रान्तादिघटितौ द्रष्टव्यौ भाष्ये। भाष्योक्तं न्यायसिद्धत्वमुपपादयति—तथा हीति। पारतन्त्र्यविरोधादिति। पूर्वपरशब्दाभ्यां च मान्तादिशब्दाभ्यां च विरोधस्य पुरः स्फूर्तिकत्वादिति भावः। अत एव स्थानिवद्भाव उभयत्र आश्रयणेऽपि भवति। अत एव 'पलायते' इत्यादौ 'उपसर्गस्यायता'विति लत्वसिद्धिरित्यग्रमे भाष्ये स्पष्टम्। ननु वतिघटितवाक्येनारोपमात्रं बोध्यते कार्यनिर्वाहाय, आरोपितपूर्वान्तत्वपरादित्वयोश्च न विरोध इति चेन्न; विरुद्धविषयारोपयोर्युगपदसम्भव इत्याशयात्। वस्तुतः शास्त्रस्याहार्यारोपमात्रपरत्वेन तस्य च विरुद्धविषयस्यापि सम्भवेन। अथ यत्रोभयमित्यादि भाष्यमेकदेश्युक्तिः। कैयटोक्तोदाहरणस्यापि प्रकारान्तरेण सिद्धेरग्रे वक्ष्यमाणतया नैतदप्येतदर्थस्य फलमिति बोध्यम्।

अन्यानि कर्माणि—अपपाठः॥ ननु एकादेशात्पूर्वं पिबादेशस्य सिद्धेः किमन्तवत्त्वेनेत्यत आह—पा अ अन्तीति। अनाश्रित्येति। भिन्नस्थानिकत्वान्न तदाश्रयणमिति भावः।

* बह्वच्पूर्वपदाट्ठच् ४।४।६४ † पाघ्राध्मास्थाम्ना·········धौशीयसीदाः ७।३।७८

वैभक्तस्य णत्वे ॥ ६ ॥

वैभक्तस्य णत्वे प्रयोजनम् । क्षीरपेण सुरापेण । उत्तरपदविभक्त्योरेकादेश उत्तरपदस्यान्तवद्भवति । यथा शक्येत कर्तुमेकाजुत्तरपदे णो भवतीति‡ । क्व तर्हि स्यात् ? यत्रैकादेशो न भवति—क्षीरपाणाम् सुरापाणाम् ।

अदस ईत्त्वोत्त्वे ॥ ७ ॥

अदस ईत्त्वोत्त्वे प्रयोजनम् । अमी§ अत्र, अमी आसते । अमू अत्र, अमू आसाते । अदस्विभक्त्योरेकादेशोऽदसोऽन्तवद्भवति । यथा शक्येत कर्तुमदसोऽसेर्दादुदो म एत ईद्बहुवचने [ ८ । २ । ८०; ८१ ] इति । क्व तर्हि स्यात् ? यत्रैकादेशो न भवति—अमीभिः अमूभ्याम् ।

स्वरितत्वे प्रयोजनम् । कार्या हार्या । तिदतितोरेकादेशस्तितोऽन्तवद्भवति । यथा शक्येत कर्तुं तित्स्वरितम् [ ६ । १ । १८५ ] इति । क्व तर्हि स्यात् ? यत्रैकादेशो न भवति—कार्यः हार्यः ।

स्वरितत्वं विप्रतिषेधात् ॥ ८ ॥

स्वरितत्वं क्रियतामेकादेश* इति किमत्र कर्तव्यम् ? परत्वात्स्वरितत्वं भवि-

प्र०—वैभक्तस्येति । विभक्तौ भवो वैभक्तः ॥ अमी इति । अदसस्त्यदाद्यत्व'मतोगुण' इति पररूपे 'जसः शी' 'आद्गुणः', 'अदे' इति स्थिते ईत्वमत्रे । अमू इति । 'अदौ' इति स्थिते ऊत्वमत्रे । क्व तर्हीति । 'अदस' इति पञ्चम्याश्रयिष्यते न षष्ठी, आनन्तर्यसम्बन्धे वा षष्ठी विज्ञास्यत इति भावः । अमीभिरिति । पूर्वोक्तार्थाश्रयणेऽत्र न स्यातामीत्वोत्वे इत्यवयवावयविसम्बन्धे षष्ठ्याश्रीयते । कार्येति । 'कार्य आ' इति विभज्यान्वाख्याने विचारः । यदा तु 'स्वार्थमभिधाये'ति क्रम आश्रीयते तदा लब्धसंस्कारात् स्वरितान्तात् कार्यशब्दाट्टाबुत्पत्तौ

उ०—वैभक्तस्य—विभक्तिस्थनस्य । अत्रैकाजुत्तरपदत्वमेतल्लभ्यम् ॥ अदस इति पञ्चमीति । अदसः परस्य एकारस्य बहुर्थोकावीकार इत्याद्यर्थे 'अदे'इत्यादौ दकारान्तस्यैकदेशविकृतन्यायेनादस्त्वद्धयुत्पादात्ततः परत्वादेकारादेरीत्वादिसिद्धिरित्यभिमानः । पूर्वोक्तार्थेति । अत्र हि एकारोऽदसवयव इति न दान्तस्याद-सशब्दत्वं तेन न्यायेन लभ्यमिति भावः । लब्धसंस्कारादिति । बहिर्भूतलिङ्गापेक्षटाबपेक्षया स्वरादीनाम-न्तरङ्गत्वादित्यर्थः । अर्थकृतबहिरङ्गत्वानाश्रयणेन,पूर्वमेव स्त्रीत्वविशिष्टयोग्यकर्मत्वविवक्षणेन च पूर्वमेव

‡ एकाजुत्तरपदे णः ८ । ४ । १२ § त्यदादीनामः ७ । २ । १०२; अतो गुणे; ६ । १ । ९७; जसः शी ७ । १ । १७; आद्गुणः; वृद्धिरेचि ६ । १ । ८७; ८८

* अकः सवर्णे दीर्घः ६ । १ । १०१

ष्यति विप्रतिषेधेन ।

नैष युक्तो विप्रतिषेधः । नित्य एकादेशः । कृतेऽपि स्वरितत्वे प्राप्नोत्यकृतेऽपि । अनित्य एकादेशः । अन्यथास्वरस्य कृते स्वरितत्वे प्राप्नोत्यन्यथास्वरस्याकृते स्वरितत्वे प्राप्नोति, 'स्वरभिन्नस्य च प्राप्नुवन्विधिरनित्यो भवति' । अन्तरङ्गस्तर्ह्येकादेशः । कान्तरङ्गता ? वर्णावाश्रित्यैकादेशः पदस्य स्वरितत्वम् । स्वरितत्वमप्यन्तरङ्गम् । कथम् ? उक्तमेतत् 'पदग्रहणं परिमाणार्थ'मिति† । उभयोरन्तरङ्गयोः परत्वात्स्वरितत्वम्, स्वरितत्वे कृत आन्तर्यतः स्वरितानुदात्तयोरेकादेशः स्वरितो भविष्यति ।

## लिङ्गविशिष्टग्रहणाद्वा ॥ ९ ॥

अथवा प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीत्येवमत्र स्वरितत्वं भविष्यति ।

पूर्वपदान्तोदात्तत्वं च प्रयोजनम् । गुडोदकम् मथितोदकम् । पूर्वपदोत्तरपदयोरेकादेशः पूर्वपदस्यान्तवद्भवति । यथा शक्येत कर्तुमुदकेऽकेवले पूर्वपदस्यान्त उदात्तो भवतीति‡ । क्व तर्हि स्यात् ? यत्रैकादेशो नास्ति—उदश्विदुदकम् ।

प्र०—प्रयोजनाभावः ।

नित्य एकादेश इति । स्वरितत्वं तु कृत एकादेशेऽनचकत्वान्न प्राप्नोतीत्यनित्यम् । पदस्य स्वरितत्वमिति । तित्स्वरितमित्यस्यानुदात्तं पदमेकवर्जमित्यनेनैकवाक्यत्वात् । आन्तर्यत इति । स्वरितेऽनुदात्तस्य सद्भावात् ।

लिङ्गविशिष्टेति । 'तित्स्वरित'मित्यत्र 'तिदिति प्रत्ययग्रहण'मिति वचनात् 'प्रत्ययग्रहणे यस्मात्स विहित' इति तदन्तस्य ग्रहणात्, तस्य च प्रातिपदिकत्वात् 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहण'मिति परिभाषोपस्थानात् । न चेयं स्वरूपविधावेव परिभाषोपतिष्ठते इति 'ङ्याप्प्रातिपदिका'दित्यत्र प्रतिपादितम् । गुडोदकमिति । उभयाश्रयत्वादत्र निषेधो न भवति । एकदेशविकृतस्यानन्यत्वादकशब्दस्याप्युदकशब्देन ग्रहणात् पूर्वपदं प्रत्यन्तवत्त्वमेवोपयुज्यते ।

उ०—टाबुचित इति केचित् ।

ननु 'तित्स्वरित'मित्यत्र तितः शब्दरूपस्य ग्रहणात्प्रातिपदिकग्रहणाभावेन कथं लिङ्गविशिष्टग्रहणमत आह—तित्स्वरितमित्यत्रेति । ननूदकशब्दे परतः पूर्वपदस्यान्तोदात्तत्वविधानेनोभयाश्रयत्वात्कथमेतदन्तवत्त्वप्रयोजनमत आह—उभयेति । निषेधः—अन्तादिवद्भावाभावः । एकदेशेति । ननु तेनैव न्यायेनौकारान्तस्य

† ४ । ३ । १४० वा० ४ ‡ उदकेऽकेवले ६ । २ । ९६

## पूर्वपदान्तोदात्तत्वं च ॥ १० ॥

पूर्वपदान्तोदात्तत्वं च विप्रतिषेधात् । पूर्वपदान्तोदात्तत्वं क्रियतामेकादेश इति किमत्र कर्तव्यम् ? परत्वात्पूर्वपदान्तोदात्तत्वम् । पूर्वपदान्तोदात्तत्वस्यावकाशः—उदश्विदुदकम् । एकादेशस्यावकाशः—दण्डाग्रम् क्षुपाग्रम् । इहोभयं प्राप्नोति—मथितोदकम् गुडोदकम् । पूर्वपदान्तोदात्तत्वं भवति विप्रतिषेधेन ॥ स चावश्यं विप्रतिषेध आश्रयितव्यः ।

## एकादेशे हि स्वरिताप्रसिद्धिः ॥ ११ ॥

एकादेशे हि स्वरितस्याप्रसिद्धिः स्यात् । यो हि मन्यतेऽस्त्वत्रैकादेश एकादेशे कृते पूर्वपदान्तोदात्तत्वं भविष्यतीति स्वरितत्वं तस्य न सिध्यति 'स्वरितो वानुदात्ते पदादौ' [ ८ । २ । ६ ] इति । गुडोदकम् मथितोदकम् ।

कृदन्तप्रकृतिस्वरत्वं च प्रयोजनम् । प्राटिता प्राशिता । कृद्गत्योरेकादेशो गतेरन्तवद्भवति । यथा शक्येत कर्तुं गतिकारकोपपदात्कृदन्तमुत्तरपदं प्रकृतिस्वरं भवतीति* । क्व तर्हि स्यात् ? यत्र नैकादेशः—प्रकारकः प्रकरणम् ।

## कृदन्तप्रकृतिस्वरत्वं च ॥ १२ ॥

कृदन्तप्रकृतिस्वरत्वं च विप्रतिषेधात् । कृदन्तप्रकृतिस्वरत्वं क्रियतामेकादेश

---

प्र०—एतत्प्रयोजननिराकरणायाह—पूर्वपदान्तोदात्तत्वमिति । ननु वर्णाश्रयत्वादेकादेशोन्तरङ्गः, पूर्वपदोत्तरपदाश्रयत्वात् स्वरो बहिरङ्ग इत्ययुक्तोऽयं विप्रतिषेधः । नेदमपूर्वं चोद्यते । 'एकादेशप्रसङ्गस्त्वन्तरङ्गबलीयस्त्वा'दिति वक्ष्यमाणत्वात् 'नेन्द्रस्य परस्ये'ति ज्ञापकाश्रयेण च परिहरिष्यते ।

स्वरितत्वं तस्य न सिध्यतीति । एकादेशस्योदात्तत्वमेव पूर्वपदान्तोदात्तत्वेन स्यात् । पूर्वं तु पूर्वपदान्तोदात्तत्वे स'त्यनुवृत्तं पदमेकवर्ज'मित्युदकशब्दोऽनुदात्त इत्येकादेशः पक्षे

---

उ०—पूर्वपदत्वमपि स्यादिति भाष्यासङ्गतिरिति चेन्न । तदेकदेशमात्रस्य विकाराभावात् । ज्ञापकेति । अन्तरङ्गोऽप्येकादेशः पूर्वपदोत्तरपदनिमित्तकार्यात्पूर्वं न प्रवर्तत इत्यर्थः ।

पक्षे स्वरित इति । पदादावनुदात्ते परत उदात्तेन सहैकादेशो वा स्वरित इत्यर्थकेन 'स्वरितो

---

* गतिकारकोपपदात् कृत् ६ । २ । १३६ ।

इति किमत्र कर्तव्यम् ? परत्वात् कृदन्तप्रकृतिस्वरत्वं भवति विप्रतिषेधेन । कृदन्तप्रकृतिस्वरस्यावकाशः—प्रकारकः प्रकरणम् । एकादेशस्यावकाशः—दण्डाग्रम् क्षुपाग्रम् । इहोभयं प्राप्नोति—प्राटिता प्राशिता । कृदन्तप्रकृतिस्वरत्वं भवति विप्रतिषेधेन ॥ स चावश्यं विप्रतिषेध आश्रयितव्यः ।

**एकादेशे ह्यप्रसिद्धिरुत्तरपदस्यापरत्वात् ॥ १३ ॥**

यो हि मन्यतेऽस्त्वत्रैकादेश एकादेशे कृते कृदन्तप्रकृतिस्वरत्वं भविष्यतीति कृदन्तप्रकृतिस्वरत्वं तस्य न सिध्यति । किं कारणम् ? उत्तरपदस्यापरत्वात् । न हीदानीमेकादेशे कृत उत्तरपदं परं भवति । ननु चान्तादिवद्भावेन परम् । 'उभयत आश्रये नान्तादिवत्' ।

**उत्तरपदवृद्धिश्चैकादेशात् ॥ १४ ॥**

उत्तरपदवृद्धिश्चैकादेशाद् भवति विप्रतिषेधेन । उत्तरपदवृद्धेरवकाशः—पूर्वत्रैगर्तकः अपरत्रैगर्तकः । एकादेशस्यावकाशः—दण्डाग्रम् क्षुपाग्रम् । इहोभयं प्राप्नोति—

प्र०—स्वरितो भवति । प्राशितेति । तृच् । तृनि तु 'तादौ च निति कृत्यतौ'विति पूर्वपदप्रकृतिस्वरो भवति ॥ न हीदानीमिति । एकादेशेन व्यवधानात् । न चैकदेशविकृतस्यानन्यत्वेनोत्तरपदं परं भविष्यति, एकादेशस्य तु पूर्वं प्रत्यन्तवद्भावेन स्वरः सेत्स्यतीति युक्तं कल्पयितुम्, 'प्राशन'-मित्यादौ दोषप्रसङ्गात् । तथा ह्यशनशब्दो लित्स्वरेणाद्युदात्तस्तत्रैकादेशस्य पूर्वं प्रत्यन्तवत्त्वे प्रत्ययात् पूर्वं उदात्तभावी नास्तीति कथमुत्तरपदस्य स्वरः स्यात् । तस्मात् पूर्वं स्वरः कर्तव्यः, पश्चादेकादेशः ।

पूर्वत्रैगर्तक इति । पूर्वेषु त्रिगर्तेषु भव इति तद्धितार्थे समासः । 'सुसर्वार्धादिक्शब्देभ्यो जनपदस्ये'ति तदन्तविधिना 'अवृद्धादपी'ति वुञ्प्रत्ययः । 'दिशोऽमद्राणा'मित्युत्तरपदवृद्धिः ।

उ०—वे'ति सूत्रेणेत्यर्थः ॥ एकादेशेन व्यवधानादिति । एकादेशेन तयोर्भेदस्य तिरोधानादित्यर्थः । कथमुत्तरपदस्येति । 'बहुव्रीहौ प्रकृत्ये'त्यादिनेवानेनापि उदात्तस्वरितयोगिन एवोत्तरस्य प्रकृतिस्वर इति भावः । कृतः प्रत्ययत्वेन 'प्रत्ययग्रहणे' इति परिभाषया यतः कृद्विहितस्तदन्तमुत्तरपदं न परं भवतीति भाष्यार्थः । टकारादिमात्रेऽदत्वादिप्रत्यभिज्ञानाभावेनैकदेशविकृतन्यायविषयाभावात् । स्थानिवत्त्वं तु न, शास्त्रीयादेशाभावात् । 'ननु चान्तवद्भावेने'त्येकदेशिना शङ्किते ऽपर एकदेश्याह—उभयत इति । तेनातिदेशेन परत्वालाभादिति परे ।

अथैकादेशस्यान्तरङ्गत्वेन विप्रतिषेधायुक्तत्वं निरसितुं ज्ञापकेनात्रान्तरङ्गपरिभाषाया अप्रवृत्तिमाह—उत्तरपदवृद्धिश्चैकादेशादिति । ननु च प्राचामिति । इषुकामशमीशब्दस्य प्राग्ग्रामवाचित्वात् 'प्राचां ग्रामनगराणा'मित्यस्या एव वृद्धेः प्राप्तत्वादित्यर्थः । त्रिगर्तस्तु जनपदो न ग्रामनगरवाचीति

पूर्वैषुकामशमः अपरैषुकामशमः । उत्तरपदवृद्धिर्भवति विप्रतिषेधेन† ।

**एकादेशप्रसङ्गस्त्वन्तरङ्गबलीयस्त्वात् ॥ १५ ॥**

एकादेशस्तु प्राप्नोति । किं कारणम् ? अन्तरङ्गस्य बलीयस्त्वात् । अन्तरङ्गं बलीयो भवति ॥ तत्र को दोषः ?

**तत्र वृद्धिविधानम् ॥ १६ ॥**

तत्र वृद्धिर्विधेया ॥ नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति 'पूर्वपदोत्तरपदयोस्तावत्कार्यं भवति नैकादेश' इति यदयं 'नेन्द्रस्य परस्य' [ ७ । ३ । २२ ] इति प्रतिषेधं शास्ति । कथं कृत्वा ज्ञापकम् ? इन्द्रे द्वावचौ । तत्रैको यस्येति* लोपेन ह्रियतेऽपर एकादेशेन । अनच्क इन्द्रः सम्पन्नः । तत्र को वृद्धेः प्रसङ्गः ? पश्यति त्वाचार्यः 'पूर्वपदोत्तरपदयोस्तावत्कार्यं भवति नैकादेश' इति ततो 'नेन्द्रस्य परस्ये'ति प्रतिषेधं शास्ति ।

अथादिवत्त्वे कानि प्रयोजनानि ?

**आदिवत्त्वे प्रयोजनं प्रगृह्यसंज्ञायाम् ॥ १७ ॥**

आदिवत्त्वे प्रगृह्यसंज्ञायां प्रयोजनम् । अग्नी इति वायू इति× । द्विवचनाद्विवचनयोरेकादेशो द्विवचनस्यादिवद्भवति । यथा शक्येत कर्तुमीदूदेद्द्विवचनं प्रगृह्यम् [ १ । १ । ११ ] इति । क्व तर्हि स्यात् ? यत्रैकादेशो न भवति—त्रपुणी इति जतुनी इति ।

**सुप्तिङ्विधिषु ॥ १८ ॥**

सुप्तिङ्विधिषु प्रयोजनम् । सुप्—वृक्षे तिष्ठति, प्लक्षे तिष्ठति । सुबसुपोरेकादेशः सुप आदिवद्भवति । यथा शक्येत कर्तुं सुबन्तं पदमिति‡ । क्व तर्हि स्यात् ? यत्रैकादेशो न भवति—वृक्षस्तिष्ठति प्लक्षस्तिष्ठति । सुप् ।

प्र०—ननु 'प्राचां ग्रामनगराणा'मित्यस्या वृद्धेरवकाशो दर्शनीयः। एवं तर्हि प्रकरणाश्रयेणोक्तम्। इदं

उ०—भावः । प्रकरणेति । उत्तरपदवृद्धिप्रकरणस्यैकादेशस्य च विप्रतिषेध आश्रीयत इत्यर्थः। विशेषाश्रयणे तूदाहरणं दर्शयति—पूर्वकार्येति । 'उभयाश्रयणादन्तादिवद्भावा'दिति पाठः । ज्ञापकपरं भाष्यं विप्रतिषेधसूत्रे व्याख्यातम् । वृक्षे पक्षे वृक्षावित्यादौ यस्माद्विधिरित्याश्रणादुभयाश्रयणेनोदाहारणत्वं चिन्त्यमिति केचित्

† प्राचां ग्रामनगराणाम् ७ । ३ । १४ ।
× प्रथमयोः पूर्वसवर्णः ६ । १ । १०२ ।
* यस्येति च ६ । ४ । १४८ ।
‡ सुप्तिङन्तं पदम् १ । ४ । १४ ।

तिङ्—पचे यज इति । तिङतिङोरेकादेशस्तिङ आदिवद्भवति । यथा शक्येत कर्तुं तिङन्तं पदमिति× । क्व तर्हि स्यात् ? यत्रैकादेशो न भवति—पचति यजति । तिङ् ।

आप्—खट्वा माला । आबनापोरेकादेश आप आदिवद्भवति । यथा शक्येत कर्तुमाबन्तात्सोर्लोपो भवतीति§ । क्व तर्हि स्यात् ? यत्रैकादेशो न—क्रुञ्चा उष्णिहा देवविशा ।

## आङ्ग्रहणे पदविधौ ॥ १९ ॥

आङ्ग्रहणे पदविधौ प्रयोजनम् । अद्याहते, कदाहते । आङ्नाङोरेकादेश आङ आदिवद्भवति । यथा शक्येत कर्तुमाङो यमहनः [ १ । ३ । २८ ] इत्यात्मनेपदं भवतीति । क्व तर्हि स्यात् ? यत्रैकादेशो न—आहते ।

## आटश्च वृद्धिविधौ ॥ २० ॥

आटश्च वृद्धिविधौ प्रयोजनम् । अद्यैहिष्ट, कदैहिष्ट । आटोऽद्यशब्दस्य चैकादेश आट आदिवद्भवति । यथा शक्येत कर्तुमाटश्चाचि वृद्धिर्भवतीति* । क्व तर्हि स्यात् ? यत्रैकादेशो न—ऐहिष्ट ऐक्षिष्ट ।

## कृदन्तप्रातिपदिकत्वे च ॥ २१ ॥

कृदन्तप्रातिपदिकत्वे च प्रयोजनम् । धारयः पारयः† । कृदकृतोरेकादेशः कृत आदिवद्भवति । यथा शक्येत कर्तुं कृदन्तं प्रातिपदिकमिति‡ । क्व तर्हि स्यात् ? यत्रैकादेशो न—कारकः हारकः ।

प्र०—तूदाहरणं 'पूर्वकार्ष्णमृत्तिक' इति ॥ तत्र वृद्धिविधानमिति । एकादेशस्योभयाश्रयणादन्तादिवद्भावाभावाद्वृद्धेरप्रसङ्गात् ।

अद्याहत इति । वाक्यसंस्कारपक्षाश्रयाण्येतान्युदाहरणानि । धारय इति । धारयतीति

उ०—तत्र । एकदेशविकृतन्यायेन वृद्धित्यस्य वृद्धशब्दत्वेन पूर्वान्तवत्त्वानुपयोग इत्याशयात् ।

वाक्यसंस्कारेति । पदसंस्कारे तु आहत इत्यादौ आत्मनेपदे कृते पश्चादद्यशब्देन सम्बन्धे दीर्घ

× सुप्तिङन्तं पदम् १ । ४ । १४
§ हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् ६ । १ । ६८ ।
* आटश्च ६ । १ । ९० ।
† अनुपसर्गाल्लिम्पविन्दधारिपारि..........साहिभ्यश्च; कर्तरि शप् ३ । १ । १३८; ६८ ।
‡ कृत्तद्धितसमासाश्च १ । २ । ४६ ।

नाभ्यासादीनां ह्रस्वत्वे ॥ २२ ॥

अभ्यासादीनां ह्रस्वत्वे नान्तादिवद्भवतीति वक्तव्यम् । के पुनरभ्यासादयः ? अभ्यासोहाम्बार्थनदीनपुंसकोपसर्जनह्रस्वत्वानि§ । अभ्यासह्रस्वत्वम्—उपेयाज उपोवाप । ऊहेर्ह्रस्वत्वम्—उपोह्यते प्रोह्यते परोह्यते । अम्बार्थनदीनपुंसकोपसर्जनह्रस्वत्वानि—अम्बात्र अक्कात्र । कुमारीदम् किशोरीदम् । आराशस्त्रीदम् धानाशष्कुलीदम् । निष्कौशाम्बीदम् निर्वाराणसीदम् । अभ्यासोहाम्बार्थनदीनपुंसकोपसर्जनग्रहणेन ग्रहणाद्ध्रस्वत्वं प्राप्नोति ।

न वा बहिरङ्गलक्षणत्वात् ॥ २३ ॥

न वैतद्वक्तव्यम् । किं कारणम् ? बहिरङ्गलक्षणत्वात् । अन्तरङ्गं ह्रस्वत्वम् । बहिरङ्गा एते विधयः । 'असिद्धं बहिरङ्गमन्तरङ्गे' ।

वर्णाश्रयविधौ च ॥ २४ ॥

वर्णाश्रयविधौ च नान्तादिवद्भवतीति वक्तव्यम् । किं प्रयोजनम् ?

प्र०—धारयः । 'अनुपसर्गाल्लिम्पे'ति शः । कर्तरि शप् ।। उपेयाजेति । उप इयाज इति स्थिते आद्गुणः, तस्य परं प्रत्यादिवद्भावाद्ध्रस्वत्वप्रसङ्गः । प्रोह्यत इति । अणग्रहणानुवृत्तिमुभयत आश्रये नान्तादिवदित्येतच्चानपेक्ष्येदमुक्तम् । अम्बात्रेति । 'अम्बार्थनद्योर्ह्रस्व'इति ह्रस्वत्वे कृते एकादेशे च तस्यान्तवद्भावात् पुनर्ह्रस्वत्वप्रसङ्गः । निष्कौशाम्बीदमिति । नपुंसकह्रस्वात्परत्वादुपसर्जनह्रस्वः । जुहावेति । ह्वयतेर्लिटि तिपि णल्यभ्यस्तस्य चे'ति सम्प्रसारणम् । 'सम्प्रसारणाच्चे'ति पूर्वैकादेशस्तस्याकारं प्रत्यादिवद्भावाण्णल औत्वप्रसङ्गः । अस्या अश्व इति । इदमश्वतुर्थ्ये-

उ०—इतीष्टं सिध्यतीति भावः ।। अणग्रहणानुवृत्तिमिति । आ उह्यते समोह्यते इत्यत्र ह्रस्वव्यावृत्तये 'केऽण' इत्यत 'उपसर्गाद्ध्रस्व' इति सूत्रेऽण इत्यनुवृत्तिराश्रितेति भावः । परत्वादुपसर्जनह्रस्व इति । कार्यैक्ये विप्रतिषेधाभावादिदं चिन्त्यम् । तस्मात्पदान्तरसंबन्धावगम्यनपुंसकत्वप्रयुक्तह्रस्वत्वात्पूर्वमेवोपसर्जनह्रस्वमिति भाष्याशयमन्ये ।। भाष्ये—अन्तरङ्गं ह्रस्वत्वमिति । अन्तरङ्गत्वात्पूर्वं ह्रस्वत्वे कृते लक्ष्ये लक्षणस्येति न्यायेन पुनरप्रवृत्तिः । विकारभेदेन न लक्ष्यभेद इति भावः । एवं च 'ह्रस्वत्वे कृते' इति कैयटश्चिन्त्यः । ननूहेर्ह्रस्वत्वं कथमन्तरङ्गम्, उपसर्गसम्बन्धनिमित्तत्वदिति चेन्न । बहिरङ्गलक्षणत्वादित्यस्योपलक्षणत्वात् ।

§ ह्रस्वः; उपसर्गाद्ध्रस्व ऊहतेः ७ । ४ । ५९; २३; अम्बार्थनद्योर्ह्रस्वः ७ । ३ । १०७; ऊकालोऽज्झ्रस्वदीर्घप्लुतः; गोस्त्रियोरुपसर्जनस्य १ । २ । २७; ४८ ।

**प्रयोजनं खट्वाभिर्जुहावास्या अश्व इति ॥ २५ ॥**

इह खट्वाभिः मालाभिः अतो भिस ऐस्भवतीत्यैस्भावः प्राप्नोति¶ । नैष दोषः । तपरकरणसामर्थ्यान्न भविष्यति । अस्त्यन्यत्तपरकरणे प्रयोजनम् । किम् ? कीलालपाभिः शुभंयाभिः ॥ जुहाव* । आत औ णलः [ ७ । १ । ३४ ] इत्यौत्वं प्राप्नोति ॥ अस्या अश्व इति । एङः पदान्तादति [ ६ । १ । १०९ ] इति पूर्वत्वं प्राप्नोति ।

**न वातादूरूप्यातिदेशात् ॥ २६ ॥**

न वा वक्तव्यम् । किं कारणम् ? अतादूरूप्यातिदेशात् । नेहतादूरूप्यमतिदिश्यते । रूपाश्रया वा एते विधयोऽतादूरूप्यान्न भविष्यन्ति ॥ ८५ ॥

## षत्वतुकोरसिद्धः ॥ ६ । १ । ८६ ॥

किमर्थमिदमुच्यते ?

**षत्वतुकोरसिद्धवचनमादेशलक्षणप्रतिषेधार्थमुत्सर्गलक्षणभावार्थं च ॥१॥**

षत्वतुकोरसिद्धत्वमुच्यत आदेशलक्षणप्रतिषेधार्थमुत्सर्गलक्षणभावार्थं च ।

प्र०—कवचनम् । त्यदाद्यत्वम्, टाप्, 'सर्वनाम्नः स्याड्ढ्रस्वश्चे'ति स्याट्, ह्रस्वश्च, 'वृद्धिरेची'ति वृद्धिरेकादेशः, 'हलि लोपः' इति इद्रूपस्य लोपः, एचोऽयवायाव'इत्यैकारस्यायादेशः, 'लोपः शाकल्यस्ये'ति यलोपः ॥ न वेति । कार्यमात्रमनेनातिदिश्यते न तु रूपम् । विशिष्टवर्णरूपाश्रयाश्चैते विधयो नातिदिश्यन्ते । तुक्यसिद्धवचनं चास्यार्थस्य लिङ्गम् । यदि हि वर्णाश्रयो विधिरनेनातिदिश्येत तदाधीत्य प्रेत्येत्यादावेकादेशस्य ह्रस्वत्वं प्रत्यादिवद्भावात्तुकः सिद्धत्वात्तुक्यसिद्धत्वं न ब्रूयात् ॥ ८५ ॥

षत्वतुको । उत्सर्गेति । उत्सर्गः—स्थानी । सामान्येनोत्सृष्टत्वात् ।

उ०—'वार्णादाङ्ग'मित्यनेन तत्र पूर्वं ह्रस्वत्वमिति बोध्यम् । एवञ्चाभीयादित्यादेरपि सत्यभिधानेऽनयैव रीत्या सिद्धो उभयत आश्रयणे नान्तादिवदित्यस्योदाहरणान्तरं मृग्यम् । प्रकृतसूत्रे भाष्ये तु न किञ्चित्तदुदाहरणं दर्शितम् ॥ कार्यमात्रमिति । अवयववाचकान्तादिशब्दाभ्यामाक्षिप्तसमुदायनिमित्तकार्यमात्रमित्यर्थः । न तु रूपमिति । न त्वन्ताद्यवयवमात्रनिबन्धनकार्यमित्यर्थः । अमुमर्थं ज्ञापकेन साधयति—तुक्यसिद्धत्वेति ॥ ८५ ॥

षत्वतुको । 'रूढिर्योगमपहरती'ति न्यायस्य प्रकरणपर्यालोचनया त्याग इत्याशयेनाह—उत्सर्ग

¶ अतो भिस ऐस् ७ । १ । ९ । * अभ्यस्तस्य च; सम्प्रसारणाच्च ६ । १ । ३३; १०८ ।

आदेशलक्षणप्रतिषेधार्थं तावत्—कोऽसिञ्चत्, योऽसिञ्चत् । एकादेशे† कृत 'इण' इति षत्वं‡ प्राप्नोति । असिद्धत्वान्न भवति । उत्सर्गलक्षणभावार्थं च—अधीत्य प्रेत्य । एकादेशे कृते 'ह्रस्वस्ये'ति§ तुग्न प्राप्नोति । असिद्धत्वाद्भवति ।

अस्ति प्रयोजनमेतत् ? किं तर्हीति ।

**तत्रोत्सर्गलक्षणाप्रसिद्धिरुत्सर्गाभावात् ॥ २ ॥**

तत्रोत्सर्गलक्षणस्य कार्यस्याप्रसिद्धिः । अधीत्य प्रेत्येति । किं कारणम् ? उत्सर्गाभावात् । ह्रस्वस्येत्युच्यते न चात्र ह्रस्वं पश्यामः ॥ ननु चात्राप्यसिद्धवचनात्सिद्धम् ।

**असिद्धवचनात्सिद्धमिति चेन्नान्यस्यासिद्धवचनादन्यस्य भावः ॥ ३ ॥**

असिद्धवचनात्सिद्धमिति चेत्तन्न । किं कारणम् ? नान्यस्यासिद्धवचनादन्यस्य भावः । न ह्यन्यस्यासिद्धवचनादन्यस्य प्रादुर्भावो भवति । न हि देवदत्तस्य हन्तरि हते देवदत्तस्य प्रादुर्भावो भवति ।

**तस्मात्स्थानिवद्वचनमसिद्धत्वं च ॥ ४ ॥**

तस्मात् स्थानिवद्भावो वक्तव्योऽसिद्धत्वं च । अधीत्य प्रेत्येति स्थानिवद्भावः । कोऽसिञ्चत् योऽसिञ्चदित्यत्रासिद्धत्वम् ।

**स्थानिवद्वचनानर्थक्यं शास्त्रासिद्धत्वात् ॥ ५ ॥**

स्थानिवद्वचनमनर्थकम् । किं कारणम् ? शास्त्रासिद्धत्वात् । नानेन कार्यासिद्धत्वं क्रियते । किं तर्हि ? शास्त्रासिद्धत्वमनेन क्रियते—'एकादेशशास्त्रं तुक्शास्त्रेऽसिद्धं भवतीति ।

प्र०—नान्यस्येति । कार्यासिद्धत्वाश्रयेदणेमुच्यते । आदेशेन स्थानिनो निर्वर्तितत्वात् सत्यप्यादेशस्यासिद्धत्वे स्थानिनः प्रत्यापत्त्यभावात् ॥ असिद्धत्वं चेति । षत्वेऽसिद्धत्वं, स्थानिवद्भावे तु स्वाश्रस्यानिवर्तनात् षत्वप्रसङ्गः । एकादेशशास्त्रमिति । ततश्च पूर्वं तुक्शास्त्रं प्रवर्तते, पश्चा-

उ०—इति । सामान्येन—साधारण्येन । उत्सृष्टवात्—बोधितत्वादित्यर्थः ।

कार्यासिद्धत्वेति । अत्र पक्षे निरधिष्ठानारोपासम्भवेन लक्ष्ये कार्यप्रवृत्तिरावश्यकीति भावः ॥ ननु षत्वमपि स्थानिवत्त्वेन सिद्धमत आह—स्थानिवद्भावे त्विति । न च स्थानिवद्भावेन षत्वविषयेऽभावातिदेशो

† एङः पदान्तादति ६ । १ । १०९ ।   ‡ आदेशप्रत्यययोः ८ । ३ । ५९ ।
§ ह्रस्वस्य पिति कृति तुक् ६ । १ । ७१ ।   १—'ननु चासिद्ध' पा० ।
२—'कोऽसिचत् योऽसिचत्' पा० ।

सम्प्रसारणङीट्सुसिद्धः। सम्प्रसारणङीट्सु सिद्ध एकादेश इति वक्तव्यम्। शकहूषु परिवीषु*। सम्प्रसारण। ङि—वृचे च्छत्रम् वृचे छत्रम्[1]। ङि। इट्—अपचे च्छत्रम् अपचे छत्रम्[2]†।

## संप्रसारणङीट्सु सिद्धः पदान्तपदाद्योरेकादेशस्यासिद्धवचनात्॥ ६॥

सम्प्रसारणङीट्सु सिद्ध एकादेशः। कुतः[3]? पदान्तपदाद्योरेकादेशस्यासिद्धवचनात्। 'पदान्तपदाद्योरेकादेशोऽसिद्धो भवती'त्युच्यते न चैष पदान्तपदाद्योरेकादेशः।

यदि पदान्तपदाद्योरेकादेशोऽसिद्धः 'सुसस्या ओषधीस्कृधि'[4] '[5]सुपिप्पला ओषधीस्कृधि' अत्र षत्वं प्राप्नोति‡। तुग्विधिं प्रति पदान्तपदाद्योरेकादेशोऽसिद्धः

प्र०—देकादेशशास्त्रमित्युक्तं भवति। शकहूष्विति। शकान् ह्वयन्तीति क्विप्, सम्प्रसारणम्, पूर्वैकादेशः, 'हल' इति दीर्घत्वम्। तत्रैकादेशस्यासिद्धत्वादिण उत्तरस्य विधीयमानं षत्वं न स्यात्। वृचे छत्रमिति। एकादेशस्यासिद्धत्वान्नित्यो ह्रस्वाश्रयस्तुक् स्यात् 'दीर्घात्पदान्ताद्वे'ति विकल्पेन त्विष्यते।

पदान्तपदयोरिति। ननु तुल्ये वाचनिकत्वे को विशेषो येन 'सम्प्रसारणङीट्सु सिद्ध' इति प्रत्याख्यायते, 'पदान्तपदाद्यो'रिति तु क्रियते? उच्यते। लाघवात्पदस्येत्येव वक्तव्यम्। अन्तादिग्रहणं च पूर्वसूत्रादनुवर्तते। तेन 'पदान्तपदाद्योरेकादेशोऽसिद्धो भवती'त्यर्थो लभ्यते। ओषधीस्कृधीति। ओषधिशब्दाद्द्वितीयाबहुवचनम्। 'ओषधेश्च विभक्तावप्रथमाया'मिति दीर्घः।

उ०—वाच्यः। एवञ्च तद्विरुद्धत्वात्स्वाश्रयं षत्वं नेति वाच्यम्। एकेन स्थानिवत्पदेन तुगंशे भावातिदेश इत्यस्य द्वन्द्वसमासेन दुरुपपादत्वात्। योगविभागेऽर्थाधिकारशङ्का स्यादिति तद्वारणेन स्पष्टार्थमसिद्धत्वातिदेश एवाश्रित इति भावः।

सम्प्रसारणङीट्स्विति। स्थानिनोऽधिकरणत्वविवक्षया सप्तमी। ननु 'वृचेछत्र'मित्यत्रेष्यत एव तुगत आह—एकादेशस्येति। ओषधेश्च विभक्ताविति। मन्त्रविषयेऽस्य प्राप्त्यैतदुपन्यासः। एकादेशस्य—

* वचिस्वपियजादीनां किति; सम्प्रसारणाच्च ६।१।१५; १०८; हलः ६।४।२; आदेशप्रत्यययोः ८।३।५६।    १—'प्लक्षे च्छत्रम् प्लक्षे छत्रम्' इत्यधिकं क्वचित्।

२—'अयजे च्छत्रम् अयजे छत्रम्' इत्यधिकं क्वचित्।    † पदान्ताद्वा ६।१।७६।

३—'किं कारणम्' पा०।    ४—'सुसस्याः कृषीस्कृधि' यजु० ४।१०।

५—'सुपिप्पला ओषधीः कर्तमस्मै' अथर्व० ३।१७।५।

‡ ओषधेश्च विभक्तावप्रथमायाम् ६।३।१३२; प्रथमयोः पूर्वसवर्णः ६।१।१०२; ससजुषो रुः ८।२।६६; खरवसानयोर्विसर्जनीयः; कः करत्करतिकृधिकृतेष्वनदितेः; (आदेशप्रत्यययोः) ८।३।१५; ५०; (५६)

षत्वं प्रत्येकादेशमात्रमसिद्धं भवति ।

यदि षत्वं प्रत्येकादेशमात्रमासिद्धं शकहूषु परिवीषु अत्र षत्वं न प्राप्नोति । अस्तु तर्ह्यविशेषेण । कथं 'सुसस्या ओषधीस्कृधि' 'सुपिङ्गला ओषधीस्कृधी'ति ? नैष दोषः । भ्रातुष्पुत्रग्रहणं ज्ञापकमेकादेशनिमित्तात्षत्वप्रतिषेधस्य§ । यदयं कस्कादिषु भ्रातुष्पुत्रग्रहणं करोति तज्ज्ञापयत्याचार्यो 'नैकादेशनिमित्तात्षत्वं भवती'ति । यद्येतज्ज्ञाप्यते शकहूषु परिवीष्वित्यत्र षत्वं न प्राप्नोति । तुल्यजातीयस्य ज्ञापकम् । किं च तुल्यजातीयम् ? यः कुप्वोः ।

यद्येवं वेञोऽप्रत्यये परत 'उ'रिति प्राप्नोति, 'उ'दिति चेष्यते¶ । यथालक्षणमप्रयुक्ते । अथवा नैवं विज्ञायते पूर्वस्य च पदादेः परस्य च पदान्तस्येति । कथं

प्र०—ततः पूर्वसवर्णदीर्घो, रुत्वविसर्जनीयौ, 'कःकरत्करती'ति विसर्जनीयस्य सकारो विधीयते । 'इणः ष' इत्यधिकारादिण उत्तरस्य षकारः, तत्रैकादेशस्य पदान्तपदाद्योरिति वचनादसिद्धत्वाभावात्षत्वप्रसङ्गः । असिद्धत्वे त्वेकादेशस्य षत्वाप्रसङ्गात्सकारः सिध्यति ।। भ्रातुष्पुत्रग्रहणमिति । 'ऋतो विद्यायोनिसम्बन्धेभ्य' इत्यलुक्, 'ऋत उ'दित्युकार एकादेशो रपरत्वं, 'रात्सस्ये'ति सलोपो, रेफस्य विसर्जनीयः । तत्रैकादेशस्य सिद्धत्वा'दिदुदुपधस्य चाप्रत्ययस्ये'ति षत्वे सिद्धे कस्कादिषु षत्वार्थं भ्रातुष्पुत्रग्रहणं ज्ञापयति 'नैकादेशात्परस्य विसर्जनीयस्य षत्वं भवती'ति ।। वेञ इति । वकारस्य सम्प्रसारणं, प्रथमैकवचनं, ततः, सावपि पदमिति पदसञ्ज्ञायां सत्यामुकारः पदादिराकारः पदान्त इति तयोरेकादेशस्यासिद्धत्वाभावाद्ध्रस्वान्तत्वाभावात्तुग्न प्राप्नोतीति भावः ।। यथालक्षणमिति । मा भूत्तुगागम इत्यर्थः ।। अथवेति । पूर्वपरयोरित्यनुवर्तते, अन्तादिग्रहणं च । तत्र यथासङ्ख्यसम्बन्धात् पूर्वस्य पदस्यान्तस्य, परस्य पदस्यादेश्चैकादेशोऽसिद्ध इत्यर्थः सम्पद्यते । आकारश्चात्र पदादिर्न भवति, नाप्युकारः पदान्त इत्यसिद्धत्वाभावात्तुग्भवत्येवेत्यर्थः ।। किमर्थं षत्वतुकोरेकादेशस्यासिद्धत्वमुच्यते यावता द्विपदाश्रयत्वाद्बहिरङ्गत्वा-

उ०—पूर्वसवर्णदीर्घरूपस्य । असिद्धत्वे त्विति । इण उत्तरत्वाभावादिति भावः । एकादेशात्परस्येति । एकादेशशास्त्रं निमित्तं यस्येति वार्तिकार्थ इति भावः । भाष्ये—यद्येवमिति । 'संप्रसारणङी'ति वार्तिकप्रत्याख्याने इत्यर्थः । प्रथमैकवचनमिति । यद्यप्यन्तरङ्गत्वात्सुपः पूर्वमेकादेशस्तुक्च, तथापि पदस्य विभज्यान्वाख्यानमिदम् । पूर्वपरयोरित्यनुवर्तत इति । 'अधीत्ये'त्यादौ तुक्सिद्धिस्तु सुबन्तेन समासे बोध्येति भावः । पदशब्देनार्थवत उपलक्षणाददोष इत्यन्ये । यावतेति । एतद्विप्रतिषेधसूत्रे व्याख्यातम् । वस्तुतस्तु षत्वस्य त्रैपादिकत्वात्तत्र बहिरङ्गपरिभाषा प्राप्तिरेव न । यद्यपि तुकि सा प्रवर्तते तथापि तस्या अनित्यत्वं तुक्यसिद्धवच-

§ ८ । ३ । ४१ वा० ४ पृ० ४५८ ।

¶ वचिस्वपियजादीनां किति; सम्प्रसारणाच्च; ह्रस्वस्य पिति कृति तुक् ६ । १ । १५; १०८; ७१ ।

तर्हि ?- परस्य च पदादेः पूर्वस्य च पदान्तस्येति ॥ ८६ ॥

## आद्गुणः ॥ ६ । १ । ८७ ।

गुणग्रहणं किमर्थं नादेको भवतीत्येवोच्येत ?

आदेकश्चेद्गुणः केन

आदेकश्चेद्गुणः केनेदानीं भविष्यति । खट्वेन्द्रः मालेन्द्रः । खट्वोदकम् मालोदकम् ।

स्थानेऽन्तरतमो हि सः ।

स्थाने प्राप्यमाणानामन्तरतम आदेशो भवति ॥ ऐदौतावपि तर्हि प्राप्नुतः ।

ऐदौतौ नैचि तावुक्तौ

ऐदौतौ न भविष्यतः । किं कारणम् ? एचि ह्यैदौतावुच्येते* ।

इह तर्हि खट्वर्श्यः मालर्श्यः ऋकारस्तर्हि प्राप्नोति ।

ऋकारो नोभयान्तरः ॥ १ ॥

उभयोर्योऽन्तरतमस्तेन भवितव्यं न च ऋकार उभयोरन्तरतमः ।

प्र०—देवैकादेशस्यासिद्धत्वं सिद्धम् ? एवं तर्हि ज्ञापनार्थम् । एतज्ज्ञापयत्यचोरानन्तर्ये बहिरङ्गस्यापि नासिद्धत्वं भवति । तेनाक्ष्यूरित्यत्रोठोऽसिद्धत्वाभावाद्यणादेश उपपन्नो भवति ॥ ८६ ॥

आद्गुणः । गुणग्रहणमिति । वक्ष्यमाणान्नियमादाद्गुण एव भविष्यतीति प्रश्नः । स्थानेऽन्तरतमो हि स इति । पूर्वपरयोः कण्ठ्यतालव्ययोरन्तरतमः कण्ठ्यतालव्य एकारः कण्ठ्योष्ठ्ययोस्तु कण्ठ्योष्ठ्य ओकारः । ऐदौतावपीति । ऐकारस्यापि कण्ठ्यतालव्यत्वादौकारस्य कण्ठ्योष्ठ्यत्वाच्चेति भावः । ऐदौतौ नैचीति । ऐदौतोरनेन सिद्धयो'र्वृद्धिरेची'ति नियमार्थं भविष्यति—'एच्येव वृद्धिर्भवती'ति । उभयतो नियमश्च व्याख्यास्यते—'वृद्धिरेवैची'ति । नोभ-

उ०—नाज्ञायते । अत एव 'ह्रस्वस्ये'ति सूत्रे ग्रामणिपुत्रे तुगसिद्धपरिभाषया व्यावर्तितः । क्वचित्तत्प्रवृत्तेः । नाजानन्तर्यपरिभाषा तु नास्त्येव । 'वाह ऊ'डिति सूत्रे पुनरसिद्धपरिभाषोपन्यासवदिह तदुपन्यासाभावादित्याहुः ॥ ८६ ॥

आद्गुणः । वक्ष्यमाणादिति । 'एचि वृद्धिरेव' 'एच्येव वृद्धिः' । 'उपसर्गादृति धातावेव वृद्धिः' 'तादृशे धातौ वृद्धिरेवे'त्यादिकादित्यर्थः ॥ नन्वेवं नियमे एचि एदोतावपि प्राप्नुत इत्यत आह—उभयत इति । तन्त्रादिनेति भावः ॥ स्थानत उभयान्तर इति । 'अ'रित्यवयवद्वारा कण्ठ्यमूर्धन्य इत्यर्थः ।

* वृद्धिरेचि ६ । १ । ८८ ।

आकारस्तर्हि प्राप्नोति ।

**आकारो नर्ति धातौ सः**

आकारो न भविष्यति । किं कारणम् ? ऋति धातावाकार उच्यते† तन्नियमार्थं भविष्यति—'ऋकारादौ धातावेव नान्यत्रे'ति ॥ प्लुतस्तर्हि प्राप्नोति ।

**प्लुतश्च विषये स्मृतः ।**

विषये प्लुत उच्यते‡ यदा च स विषयो भवितव्यमेव तदा प्लुतेन ।

**आन्तर्यात् त्रिचतुर्मात्राः**

इदं तर्हि प्रयोजन'मान्तर्यतस्त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा मा भूव'न्निति । खट्वा इन्द्रः खट्वेन्द्रः । खट्वा उदकं खट्वोदकम् । खट्वा ईषा खट्वेषा । खट्वा ऊढा खट्वोढा । खट्वा एलका खट्वैलका । खट्वा ओदनः खट्वौदनः । खट्वा ऐतिकायनः खट्वैतिकायनः । खट्वा औपगवः खट्वौपगवः ।

अथ क्रियमाणेऽपि गुणग्रहणे कस्मादेवात्र त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा न भवन्ति ?

प्र०—यान्तर इति । अकारस्तु शिष्यमाण एव रपरो भवतीति स्थानत उभयान्तरः ।

प्लुतश्चेति । प्लुतविधाने सति यस्मिन्विषये प्लुतो विहितस्तस्मिन्नप्यनेनैव भाव्यम् । अस्मिन् कर्तव्ये आष्टमिकस्य प्लुतस्यासिद्धत्वादिति पक्षेऽनुवादप्रसङ्गात् प्लुतो न भविष्यतीत्यर्थः । त्रिचतुर्मात्रा इति । प्लुताप्लुतप्रसङ्गे 'प्लुतश्च विषये स्मृत' इति न्यायो न प्लुतप्रसङ्ग

उ०—ननु दूराद्धूतादिविषये प्लुतविधानेऽप्यन्यत्र अनेन प्लुतः प्राप्नोत्येवेत्यत आह—प्लुतविधाने इति । तत्र दूराद्धूतादिविषयरूपे पक्षेऽनुवादस्वरूपवैयर्थ्यदोषप्रसङ्गः । क्वचिदनुवादत्वं क्वचिद्विधिरिति वैरूप्यप्रसङ्गश्चेत्यर्थः । केचित्तु—यदा स विषय इति । यदा दूराद्धूतादिविषयस्तदा भवत्येव प्लुत इति न विशेषः । दूराद्धूतादिविषयाभावे तु नानेन प्लुतविधानम्, उपेन्द्रादावनान्तर्यादिति भावः । त्रिमात्रे स्थानिनि प्लुतापत्तिस्त्वग्रे क्रियत एवेत्याहुः ॥ नन्वनेनैव न्यायेन त्रिमात्रापादनमसङ्गतमत आह—

† उपसर्गादृति धातौ ६ । ६१ । १ ।

‡ वाक्यस्य टेः प्लुत उदात्तः—अनन्त्यस्यापि प्रश्नाख्यानयोः ८ । २ । ८२—१०५ ।

तपरत्वान्न ते स्मृताः ॥ २ ॥

तपरे गुणवृद्धी§ । ननु च तः परो यस्मात्सोऽयं तपरः 'ने'त्याह । तादपि परस्तपरः । यदि तादपि परस्तपर 'ऋदोरप्' [ ३ । ३ । ५७ ] इहैव स्यात् यवः स्तवः । लवः पव इत्यत्र न स्यात् । नैष तकारः । कस्तर्हि ? दकारः । किं दकारे प्रयोजनम् ? अथ किं तकारे ? असन्देहार्थस्तकारः । यद्यसन्देहार्थस्तकारो दकारोऽपि । अथ मुखसुखार्थस्तकारो दकारोऽपि ।

गुणे ङिशीटामुपसङ्ख्यानं दीर्घत्वबाधनार्थम् ॥ १ ॥

गुणे ङिशीटामुपसङ्ख्यानं कर्तव्यम् । ङि—वृक्ष इन्द्रः प्लक्ष इन्द्रः । शी—य इन्द्रम् त इन्द्रम् । इट्—अपच इन्द्रम् अयज इन्द्रम् । किं प्रयोजनम् ? दीर्घत्वबाधनार्थम् । सवर्णदीर्घत्वं* मा भूदिति ।

न वा बहिरङ्गलक्षणत्वात् ॥ २ ॥

न वा कर्तव्यम् । किं कारणम् ? बहिरङ्गलक्षणत्वात् । बहिरङ्गलक्षणं सवर्णदीर्घत्वम् । अन्तरङ्गो गुणः । असिद्धं बहिरङ्गमन्तरङ्गे ।

आदेकश्चेद्गुणः केन स्थानेऽन्तरतमो हि सः ।
ऐदौतौ नैचि तावुक्तादृकारो नोभयान्तरः ॥ १ ॥
आकारो नर्ति धातौ स प्लुतश्च विषये स्मृतः ।
आन्तर्यात्त्रिचतुर्मात्रास्तपरत्वान्न ते स्मृताः ॥ २ ॥ ॥ ८७ ॥

प्र०—इति त्रिमात्रप्रसङ्ग उच्यते । तपरत्वान्न ते स्मृता इति । सतीह गुणग्रहणे गुणसंज्ञाविधौ तपरकरणात्त्रिमात्रचतुर्मात्राणां गुणसंज्ञाया अभावादप्रसङ्ग इत्यर्थः ॥ वृक्ष इन्द्र इति । वृक्ष इ इन्द्र इति स्थिते 'आद्गुण' इत्यकारेकारयोर्गुणः प्राप्नोति, इकारयोः सवर्णदीर्घत्वं च । तत्र शब्दपरविप्रतिषेधाद्दीर्घत्वप्रसङ्गे गुण उच्यते ।

न वेति । एकापदाश्रयत्वाद्गुणोऽत्रान्तरङ्गः ॥ ८७ ॥

उ०—प्लुताप्लुतेति । यथोपेन्द्रे । अत्र तु सर्वदा त्रिमात्र एव प्राप्नोतीति भावः ॥ भाष्ये—तव किं तकारे इति । 'पञ्चमीसमासाभाववादिनस्तवे'ति शेषः । शब्दपरेति । गुणे कृते दीर्घाप्राप्त्यासंभवरूपो विरोधः । शास्त्रतोऽपि दीर्घस्य परत्वमस्तीति शब्दग्रहणं चिन्त्यप्रयोजनम् ॥ ८७ ॥

§ वृद्धिरादैच्; अदेङ् गुणः १ । १ । १; २ * अकः सवर्णे दीर्घः ६ । १ । १०१

## एत्येधत्यूठ्सु ॥ ६ । १ । ८६ ॥

किमिदमेत्येधत्यो रूपग्रहणमाहोस्विद्धातुग्रहणम् । किं चातः ? यदि रूपग्रहणं सिद्धमुपैति प्रैति, उपैषि प्रैषि उपैमि प्रैमीति न सिध्यति । अथ धातुग्रहणं सिद्धमेतद्भवति ॥ किं तर्हीति ।

### इणीकारादौ वृद्धिप्रतिषेधः ॥ १ ॥

इणीकारादौ वृद्धेः प्रतिषेधो वक्तव्यः । उपेतः प्रेत इति ।

### योगविभागात्सिद्धम् ॥ २ ॥

योगविभागः करिष्यते । 'वृद्धिरेचि' [ ८८ ] । तत 'एत्येधत्योः' । एत्येधत्योश्चैचि वृद्धिर्भवति । तत 'ऊठि' । ऊठि च वृद्धिर्भवतीति ।

एवमपि आ इत एतः उपेतः प्रेत इत्यत्रापि प्राप्नोति ॥ आङि पररूपमत्र बाधकं भविष्यति* । नाप्राप्ते पररूप इयं वृद्धिरारभ्यते सा यथैङि पररूपं† बाधत

प्र०—एत्येध । एत्येधत्यो'रेङि पररूप'मिति प्राप्ते, ऊठ्याद्गुणे च वृद्धिविधानम् । किमिदमिति । एतिरेवात्र विचार्यते । एधेस्त्वात्मनेपदित्वाद्रूपग्रहणाभावः । साहचर्यात्तु द्वयोर्निर्देशः । यद्येतीति तिङन्तानुकरणं ततो रूपग्रहणम् । अथेश्तिपाविति श्तिपा निर्देशस्ततो धातुग्रहणमिति संशयात्प्रश्नः ॥ योगविभागादिति । एकस्मिन्योगे एचीत्यस्योठा सम्बन्धाभावादेकस्य द्वन्द्वार्थस्य विशेषणसंबन्धाय विभागस्य कर्तुमशक्यत्वाद्योगविभागसंश्रयः । सा यथैवेति । बाध्यमात्रापेक्षायां

उ०—एत्येध । नन्वेत्येधत्यो'र्वृद्धिरेची'त्येव सिद्धमत आह—एत्येधेति । नन्वेधतेरात्मनेपदित्वेन रूपग्रहणासंभवादुभयोर्ग्रहणमसङ्गतमत आह—एतिरेवेति । नन्वेवं प्रश्नभाष्ये 'एत्येधत्यो'रित्यसङ्गतमत आह—साहचर्यादिति । श्तिपो धातुनिर्देश एव सत्त्वेन विचारानुपपत्तेराह—यद्येतीति ॥ योगविभागाश्रयणे बीजमाह—एकस्मिन्निति । प्रतिषेधवार्तिके 'इणी'त्युपलक्षणमेधतेरपि । अत एवैत्येधत्योरिति योगं विभज्य तस्यैचीतिविशेषणमुक्तं भाष्ये, मा भवान्प्रेदिधदित्यादौ व्यभिचारसंभवात् । ऊठा तु न संबन्धः, असंभवात् । वस्तुतो वार्तिकानुरोधादेधत्यंशे उपरञ्जकतया विशेषणमित्येव भाष्यतात्पर्यम् । 'मा भवान्प्रेदिध'-दित्यादेरनभिधानमित्येवोचितम् । बाध्यमात्रेति । 'येन नाप्राप्ते' इत्यस्य स्वेतरेणेत्यर्थ इति भावः । यद्वा

* ओमाङोश्च ६ । १ । ९५

† एङि पररूपम् ६ । १ । ९४

१—अस्मात्पूर्वं 'न भविष्यति' इत्यधिकं क्वचित् ।

एवमाङि पररूपं बाधेत । न बाधते । किं कारणम् ? येन नाप्राप्ते तस्य बाधनं भवति न चाप्राप्त एङि पररूप इयं वृद्धिरारभ्यते, आङि पररूपे पुनः प्राप्ते चाप्राप्ते च । अथवा 'पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते' इतीयं वृद्धिरेङि पररूपं बाधिष्यते नाङि पररूपम् ।

**अक्षादूहिन्याम् ॥ ३ ॥**

अक्षादूहिन्यां वृद्धिर्वक्तव्या । 'अक्षौहिणी ।

**प्रादूहोढोढ्येषैष्येषु ॥ ४ ॥**

प्रादूह ऊढ ऊढि एष एष्येत्येतेषु वृद्धिर्वक्तव्या । प्रौहः प्रौढः प्रौढिः प्रैषः प्रैष्यः ।

**स्वादीरेरिणोः ॥ ५ ॥**

स्वादीर ईरिनित्येतयोर्वृद्धिर्वक्तव्या । स्वैरः स्वैरी ॥ ईरिन्ग्रहणं शक्यमकर्तुम् । कथं स्वैरीति ? इनिनैतन्मत्वर्थीयेन सिद्धम्‡ । स्वैरोऽस्यास्तीति स्वैरी ।

प्र०—सर्वस्य बाधाप्रसङ्ग इति भावः । येन नाप्राप्त इति । कार्यविशेषचिन्तायां सर्वविषयव्यापिबाधस्य न्याय्यत्वात् । अथवेति । अनन्तरे बाध्ये विज्ञाते तद्बाधया वचनस्य चरितार्थत्वादुत्तरेण सह स्पर्धायां परत्वादुत्तरं भवतीत्यर्थः ॥ अक्षादिति । अक्षानूहतेऽवश्यमित्यावश्यके णिनिः, 'साधन कृते'ति समासः । प्रादिति । प्रेष्यशब्दस्त्वीष्यशब्दे भवति प्रोढाशब्दे आ ऊढा ओढा प्रओढा इति स्थिते 'ओमाङोश्चेति पररूपं भवति । स्वैरीति । स्वेनात्मनेर्ते गच्छत्यवश्यमिति णिनिः । इनिनेति ।

उ०—'येने'त्यस्य यद्धर्मावच्छिन्नेन कार्येणेत्यर्थः । कार्यविशेषेति । 'येने'त्यस्य यच्छास्त्रेण प्राप्तेनेत्यर्थ इति भावः । अनन्तरे इति । प्रथमोपस्थितत्वेनेति भावः ॥ अक्षानिति । ऊहिरत्र वहार्थः । अक्षाः—रथावयवाः । इदं च रथतुरगादीनामुपलक्षणम् । तान्परसेनां प्रति नियमेन प्रापयतीत्यर्थः । 'अक्षौहिणीशब्दः—सेनाविशेषे रूढः । आवश्यके द्योत्ये निरुपपदो णिनिरित्युपपदसमासाभावादाह—साधनमिति । नन्वेवं प्रेष्यशब्दस्यासाधुत्वं स्यादत आह— प्रेष्यशब्दस्त्विति । ईष्यशब्द ईष गतीति दीर्घादेर्ण्यति साधुः । ईर्ते इति ।

१—'दशानीकिन्यक्षौहिणी' इत्यमरः । रथगजतुरङ्गपदातिसंख्याविशेषान्विता चतुरङ्गिणी सेना= अक्षौहिणी । महाभारत आदिपर्वणि द्वितीयाध्यायेऽक्षौहिणीलक्षणं द्रष्टव्यम् ।

"अक्षौहिण्याः प्रसंख्याता रथानां द्विजसत्तमाः । संख्या गणिततत्त्वज्ञैः सहस्राण्येकविंशतिः ॥२३॥
शतान्युपरि चैवाष्टौ तथा भूयश्च सप्ततिः । गजानां च परीमाणमेतदेव विनिर्दिशेत् ॥ २४ ॥
ज्ञेयं शतसहस्रं तु सहस्राणि नवैव तु । नराणामपि पञ्चाशच्छतानि त्रीणि चानघाः ॥ २५ ॥
पञ्चषष्टिसहस्राणि तथाश्वानां शतानि च । दशोत्तराणि षट् प्राहुर्यथावदिह संख्यया '। २६ ॥"

२१८७० रथाः, २१८७० गजाः, ६५६१० अश्वाः ( रथाश्वेभिन्नाः ), १०९३५० नराः पदातयोऽक्षौहिण्यां भवन्तीति संक्षेपतः ।

‡ अत इनिठनौ ५ । २ । ११५

## ऋते च तृतीयासमासे ॥ ६ ॥

ऋते च तृतीयासमासे वृद्धिर्वक्तव्या । सुखार्तः दुःखार्तः । ऋत इति किम् ? सुखेतः दुःखेतः । तृतीयाग्रहणं किम् ? परमर्तः । समास इति किम् ? सुखेनर्तः ।

## प्रवत्सतरकम्बलवसनानां चर्णे ॥ ७ ॥

प्रवत्सतरकम्बलवसनानां चर्णे वृद्धिर्वक्तव्या । प्रार्णम् वत्सतरार्णम् कम्बलार्णम् वसनार्णम् ।

## ऋणदशाभ्यां च ॥ ८ ॥

ऋणदशाभ्यां च वृद्धिर्वक्तव्या । ऋणार्णम् दशार्णम् ॥ ८९ ॥

## आटश्च ॥ ६ । १ । ९० ॥

किमर्थश्चकारः ? वृद्धेरनुकर्षणार्थः । नैतदस्ति प्रयोजनम् । प्रकृता* वृद्धिरनुवर्तिष्यते ॥ इदं तर्हि प्रयोजनमाटोऽचि वृद्धिरेव यथा स्याद्यदन्यत्प्राप्नोति तन्मा भूदिति । किं चान्यत्प्राप्नोति ? पररूपम् । उस्योमाङ्क्ष्वाटः पररूपप्रतिषेधं चोदयिष्यति† स न वक्तव्यो भवति ॥ ९० ॥

## उपसर्गादृति धातौ ॥ ६ । १ । ९१ ॥

धाताविति किमर्थम् ? इह मा भूत्—प्रर्षभं वनम् ।

## उपसर्गाद्वृद्धिविधौ धातुग्रहण उक्तम् ॥ १ ॥

किमुक्तम् ? 'गत्युपसर्गसंज्ञाः क्रियायोगे यत्क्रियायुक्ताः प्रादयस्तं प्रतीति

प्र०—णिनिस्त्वनभिधानान्न भविष्यति, स्त्रेरीति प्रयोगाभावादिति भावः । दशार्णशब्दो नदीविशेषस्य देशविशेषस्य च संज्ञा ॥ ८९ ॥

उपसर्गादृ । प्रर्षभमिति । प्रगता ऋषभा अस्मादितिबहुव्रीहिः । उणादीनामव्युत्पत्तिपक्षे

उ०—ईर गतावादादिकः । स्वच्छन्दचारीत्यर्थः । ननु णिनावनिष्टरूपापत्तिरत आह–णिनिस्त्विति ॥८९॥

आटश्च । भाष्ये—यदन्यदिति । 'च'शब्द एवकारार्थ इति भावः ॥ ९० ॥

उपसर्गादृ । ननु ऋषेरभचि कित्वातिदेशे ऋषभशब्द इति नेदं धातुग्रहणस्य प्रयोजनं युक्तमत

* वृद्धिरेचि ६ । १ । ८८   † उस्योमाङ्क्ष्वाटः प्रतिषेधः ६ । १ । ९५ वा० १

वचन'मिति‡ ॥ क्रियमाणेऽपि धातुग्रहणे प्रर्च्छक इति प्राप्नोति । 'यत्क्रियायुक्ताः प्रादयस्तं प्रती'ति वचनान्न भवति ।

इदं तर्हि प्रयोजनमुपसर्गादृति धातौ वृद्धिरेव यथा स्याद्यदन्यत्प्राप्नोति तन्मा भूदिति । किं चान्यत्प्राप्नोति ? ह्रस्वत्वम् 'ऋत्यकः' [ ६ । १ । १२८ ] इति । 'ऋति ह्रस्वादुपसर्गाद्वृद्धिः पूर्वविप्रतिषेधेने'ति चोदयिष्यति§ स न वक्तव्यो भवति ।

छे तुकः संबुद्धिगुणः ॥ २ ॥

छे तुग्भवतीत्यस्मात्संबुद्धिगुणो भवति विप्रतिषेधेन¶ । छे तुग्भवतीत्यस्यावकाशः—इच्छति गच्छति । संबुद्धिगुणस्यावकाशः—अग्ने वायो । इहोभयं प्राप्नोति—अग्ने च्छत्रम् अग्ने च्छत्रम् । वायो च्छत्रम् वायो छत्रम् । संबुद्धिगुणो भवति विप्रतिषेधेन ॥ स तर्हि विप्रतिषेधो वक्तव्यः ?

न वा बहिरङ्गलक्षणत्वात् ॥ ३ ॥

न वा वक्तव्यः । किं कारणम् ? बहिरङ्गलक्षणत्वात् । बहिरङ्गलक्षणस्तुक् । अन्तरङ्गलक्षणः सम्बुद्धिगुणः । असिद्धं बहिरङ्गमन्तरङ्गे ।

प्र०—धातुर्ऋषभशब्दे नास्ति ॥ उपसर्गादिति । उपसर्गेणैव धातोराक्षेपाद्धातुग्रहणं न कर्तव्यम् । यत्र चोपसर्गत्वं न संभवति तत्रोपसर्गग्रहणेन प्रादयो लक्ष्यन्ते, यथा नासिकाया नस्भावविधौ न तु सम्भवत्युपसर्गत्वे । प्रर्च्छक इति । प्रगता ऋच्छका अस्मादिति बहुव्रीहिः । यदन्यदिति । सति धातुग्रहणे योगविभागेन पुनर्वृद्धिर्विधीयते इति शाकलं बाध्यते । अग्ने छत्रमिति । अग्निस् छत्रमिति स्थिते 'एङ्ह्रस्वात्संबुद्धे'रिति सुलोपे कृते यदि पूर्वं तुक्स्यात्तदा ह्रस्वान्तत्वाभावाद्गुणो न स्यात् । पूर्वं तु गुणे ह्रस्वाभावात्तुक् न स्यादिति विप्रतिषेधोपन्यासः । बहिरङ्गलक्षणस्तुगिति ।

उ०—आह-उणादीनामिति । नन्विदमुपसर्गग्रहणमुपसर्गाच्चेत्यादिवत् प्रादीनामुपलक्षणमिति न धात्वाक्षेपकं स्यादत आह—यत्र चेति । ननु धातुग्रहणमात्राद् 'ऋत्यक' इति प्राप्तं ह्रस्वं कथं बाधतेऽत आह—सतीति ॥ द्विपदेति । एवं च गुणे कृते दीर्घात्पदान्ताद्वेति वैकल्पिकस्तुगिति भावः । 'अनित्यो गुण' इति

‡ १ । ४ । ६० वा० ३ पृ० ४४६ § ६ । १ । १२८ वा० ३

¶ छे च; आङ्माङोश्च; दीर्घात्; पदान्ताद्वा ६ । १ । ७३—७६; ह्रस्वस्य गुणः ७ । ३ । १०८

अन्तरेण विप्रतिषेधमन्तरेणापि चैतां परिभाषां सिद्धम् । कथम् ? इदमिह संप्रश्नार्यम्—संबुद्धिलोपः* क्रियतां गुण इति किमत्र कर्तव्यम् ? परत्वाद्गुणः । नित्यः संबुद्धिलोपः । कृतेऽपि गुणे प्राप्नोत्यकृतेऽपि । गुणोऽपि नित्यः । कृतेऽपि संबुद्धिलोपे प्राप्नोत्यकृतेऽपि । अनित्यो गुणो न हि कृते संबुद्धिलोपे प्राप्नोति । तावत्येव छेनानन्तर्यं तत्र तुका भवितव्यम् । तस्मात्सुष्ठूच्यते 'छे तुकः संबुद्धिगुणो न वा बहिरङ्गलक्षणत्वा'दिति ।

संप्रसारणदीर्घत्वणयल्लोपाभ्यासगुणादयश्च ॥ ४ ॥

संप्रसारणदीर्घत्वणयल्लोपाभ्यासगुणादयश्च तुको भवन्ति विप्रतिषेधेन ।

संप्रसारणदीर्घत्वस्यावकाशः†—हूतः जीनः संवीतः शूनः । तुकोऽवकाशः—अग्निचित् सोमसुत्‡ । इहोभयं प्राप्नोति—परिवीषु शकृहूषु ।

णिलोपस्यावकाशः§—कारणा हारणा । तुकः स एव । इहोभयं प्राप्नोति—प्रकार्य गतः, प्रहार्य गतः ।

अल्लोपस्यावकाशः¶—चिकीर्षिता[1] जिहीर्षिता । तुकः स एव । इहोभयं प्राप्नोति—प्रचिकीर्ष्य गतः, प्रजिहीर्ष्य गतः ।

अभ्यासगुणादयश्च तुको भवन्ति विप्रतिषेधेन । के पुनरभ्यासगुणादयः ? ह्रस्वत्वात्त्वेत्त्वगुणाः× । ह्रस्वत्वस्यावकाशः—पपतुः पपुः । तस्थतुः तस्थुः । तुकः स

प्र०—द्विपदाश्रयत्वात् । आचार्यदेशीय पण्डितंमन्यत्वादाह—अन्तरङ्गेणापीति । आचार्य आह—अनित्यो गुण इति । तस्मादिति—पूर्वोक्तार्थं निगमयति ।

शकृहूष्विति । ह्वयतेः क्विपि संप्रसारणे पूर्वरूपादेशे च कृते 'ह्रस्वस्य पिति कृती'ति तुक् प्राप्नोति, 'हल' इति दीर्घत्वं च । प्रकार्येति । तुकि सति तेन व्यवधानाण्णिलोपाप्रसङ्गः ।

उ०—भाष्यं 'यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्य'मिति न्यायानाश्रयणेनेति बोध्यम् । निगमयतीति । साध्यावधारणाय हेतुपूर्वं पुनः पक्षं साध्यवन्तं करोतीत्यर्थः ।

तेन व्यवधानादिति । णिलोपात्परत्वाल्ल्यपि कृते तुकि 'णेरनिटी'त्यत्र निर्दिश्यमानस्य णेर्णकारे-

* एङ्ह्रस्वात् सम्बुद्धेः ६ । १ , ६९ † हलः ६ । ४ । २
‡ ह्रस्वस्य पिति कृति तुक् ६ । १ । ७१ § णेरनिटि ६ । ४ । ५१
¶ अतो लोपः ६ । ४ । ४८ १—'प्रचिकीर्षिता प्रजिहीर्षिता' पा० ।
× ह्रस्वः; उरत्; सन्यतः; गुणो यङ्लुकोः ७ । ४ । ५९; ६६; ७९; ८२

एव । इहोभयं प्राप्नोति—अपचच्छतुः अपचच्छुः । अत्वस्यावकाशः—चक्रतुः चक्रुः । तुकः स एव । इहोभयं प्राप्नोति—अपचच्छदतुः अपचच्छदुः । इत्वस्यावकाशः—पिपक्षति यियक्षति । तुकः स एव । इहोभयं प्राप्नोति—चिच्छादयिषति चिच्छर्दयिषति । गुणस्यावकाशः—लोलूयते बेभिद्यते । तुकः स एव । इहोभयं प्राप्नोति—चेच्छिद्यते चोच्छुप्यते ।

## यणादेशादाद् गुणः ॥ ५ ॥

यणादेशादाद्गुणो भवति विप्रतिषेधेन† । यणादेशस्यावकाशः—दध्यत्र मध्वत्र । आद्गुणस्यावकाशः—खट्वेन्द्रः खट्वोदकम् । इहोभयं प्राप्नोति—वृक्षोऽत्र प्लक्षोऽत्र‡ ।

## इरुर्गुणवृद्धिविधयश्च ॥ ६ ॥

इरुर्गुणवृद्धिविधयश्च यणादेशाद्भवन्ति विप्रतिषेधेन ॥ इरुरोरवकाशः§—आस्तीर्णम् निपूर्ताः पिण्डाः । यणादेशस्यावकाशः—चक्रतुः चक्रुः । इहोभयं

प्र०—अपचच्छतुरिति । 'छो छेदने', आत्वम्, अतुस्, 'आतो लोप इटि चे'त्यालोपः । तस्य स्थानिवत्त्वाद्द्विर्वचनम् । 'छा छ्' इति स्थिते यदि दीर्घादिति पूर्वं तुक् स्यात्तदाजन्तत्वाभावाद्ध्रस्वो न स्यात् । अपचच्छदतुरिति । 'उच्छृदिर्दीप्तिदेवनयो'रित्यस्य द्विर्वचने कृते यदि पूर्वं तुक् स्यात्तत ऋकारान्तत्वाभावादुरदित्यत्वं न स्यात् । चिच्छर्दयिषतीति । 'छर्द वमने' चुरादिः ।

वृक्षोऽत्रेति । वृक्ष स्—अत्रेति स्थिते 'ससजुषो रुः' । 'अतो रो'रित्युत्वम् । तत उत्वारस्याकाराश्रयो यण् प्राप्नोति, पूर्वेण सहाद्गुणश्च ।

उ०—रुसंज्ञकेकारस्य व्यवधानादिति भावः । स्थानिवत्त्वादिति । 'द्विर्वचनेऽची'त्यनेन । ह्रस्वो न स्यादिति । ह्रस्वश्रुत्याप्परिभाषोपस्थितेः । पूर्वं तु ह्रस्वे 'छे चे'ति तुकि सति रूपसिद्धिरिति भावः । हलादिः शेषस्तु न, अभ्याससंज्ञाप्रवृत्तिकाले साक्षात्स्थानिद्वारा वा संनिहितानामेव हलां तेन निवृत्तेः । अत्र च 'नुगत' इति नुग्विधानं ज्ञापकमिति तात्पर्यम् । ऋकारान्तत्वाभावादिति । 'वतृते' इत्यादौ पूर्वं हलादिः शेषे पश्चादपि रपरत्वे पुनर्हलादिः शेषो लक्ष्यभेदादिति भावः । भाष्ये—गुणस्येति । 'गुणो यङ्लुको'रित्यस्य ।

† इको यणचि; आद्गुणः ६ । १ । ७७; ८७

‡ ससजुषो रुः ८ । २ । ६६; अतो रोरप्लुतादप्लुते ६ । १ । ११३

§ ऋत इद्धातोः; उपधायाश्च; उदोष्ठ्यपूर्वस्य; बहुलं छन्दसि ७ । १ । १००—१०३

प्राप्नोति—'दूरे ह्यध्वा जगुरिः'¶ । मित्रावरुणौ ततुरिः । किरति गिरति ।

गुणवृद्ध्योरवकाशः—चेता† गौः × । यणादेशस्य स एव । इहोभयं प्राप्नोति—चयनम् चायकः । लवनम् लावकः ।

भलोपधातुप्रातिपदिकप्रत्ययसमासान्तोदात्तोदात्तनिवृत्तिस्वरा एकादेशाच्च ॥ ७ ॥

भलोपधातुप्रातिपदिकप्रत्ययसमासान्तोदात्तोदात्तनिवृत्तिस्वरा एकादेशाच्च यणादेशाच्च भवन्ति विप्रतिषेधेन । भलोपस्यावकाशः—गार्ग्यः वात्स्यः‡ । एकादेशयणादेशयोरवकाशः—दधीन्द्रः मधूदकम् । दध्यत्र मध्वत्र§ । इहोभयं प्राप्नोति—दाक्षी¶ दाक्षायणः* । प्लाक्षी प्लाक्षायणः ।

[ अचि भलोप एकादेशाद्भवति विप्रतिषेधेन । अचि भलोपस्यावकाशः—दाक्षी दाक्षायणः । प्लाक्षी प्लाक्षायणः । एकादेशस्यावकाशः—दण्डाग्रम् क्षुपाग्रम् ।

प्र०—ततुरिरिति । 'आदृगमे'ति किकिनोरन्यतरः । लिड्वद्भावाद्द्विर्वचनम्, 'बहुलं छन्दसी' त्युत्वम्, रपरत्वं च ।

दाक्षीति । दक्षस्यापत्यं स्त्री 'अत इञ्', इतो मनुष्यजाते'रिति ङीष् । सवर्णदीर्घत्वं बाधित्वा 'यस्ये'ति लोपो भवति । दाक्षायण इति । दाक्षेरपत्यं युवा 'यञिञोश्चे'ति फक्, फस्यायनादेशः, तत इकारस्य यण् च प्राप्नोति, लोपश्च ।

उ०—ततुरिरित्यादि—'वार्णादाङ्गं बलीय' इत्यनाश्रित्य, यणादेशदेशस्यान्तरङ्गत्वं चानाश्रित्य । सवर्णदीर्घं बाधित्वेति । न्यायप्रदर्शनार्थमिदम् । न हि रूपे स्वरे वात्र विशेषोऽस्ति । अतिसखेरित्यादौ तु विशेषो बोध्यः । 'दाक्षी'त्यादौ यद्यपि यणेकादेशावन्तरङ्गौ तथाप्यनित्यत्वात्तदप्रवृत्तिर्बोध्याः ।

¶ ऋ० १० । १०८ । १; निरु० ११ । २५  † सार्वधातुकार्धधातुकयोः ७ । ३ । ८४
× गोतो णित् ७ । १ । ९०; अचो ञ्णिति ७ । २ । ११५  ‡ यस्येति च ६ । ४ । १४८
§ अकः सवर्णे दीर्घः; इको यणचि ६ । १ । १०१; ७७
¶ अत इञ्; इतो मनुष्यजातेः ४ । १ । ९५; ६५ यस्येति च ६ । ४ । १४८
* यञिञोश्च ४ । १ । १०१; आयनेयीनीयियः फढखच्छघां प्रत्ययादीनाम् ७ । १ । २; यस्येति च ६ । ४ । १४८

इहोभयं प्राप्नोति—गाङ्गेयः† गाङ्गः‡ । ]

धातुस्वरस्यावकाशः—पचति पठति+ । एकादेशयणादेशयोः स एव । इहोभयं प्राप्नोति—श्र्यर्थम्× श्रीषा** । प्रातिपदिकस्वरस्यावकाशः—आम्रः । [ शालः² । ] एकादेशयणादेशयोः स एव । इहोभयं प्राप्नोति—अग्न्युदकम्* वृद्ध्यर्थम्§ ।

प्र०—[ गाङ्गेय इति । 'शुभ्रादिभ्यश्चे'ति ढक् ढस्य एयादेशः, 'वृद्धिरेची'ति वृद्धिर्लोपेन बाध्यते । गाङ्ग इति । शिवाद्यणा सवर्णदीर्घत्वं लोपेन बाध्यते । ]

श्र्यर्थमिति । 'अर्थे' इति पूर्वपदप्रकृतिस्वरेण धातुस्वरे सति यणादेशे च 'उदात्तस्वरितयोर्यण' इति स्वरितत्वं भवति । श्रीषेति । ईषेरिगुपधलक्षणः कः, श्रीरीषा यस्येति बहुव्रीहिः । बहुव्रीहौ प्रकृत्ये'ति पूर्वपदप्रकृतिस्वरेण धातुस्वरः । तत एकादेशः । स च 'स्वरितो वानुदात्ते पदादा'विति स्वरित उदात्तो वा। अथवा श्रियमिच्छतीति क्विप् । कृदुत्तरपदप्रकृतिस्वरेण धात्वन्तोदात्तत्वे सत्यन्तोदात्तादुत्तरपदादिति विभक्तेरुदात्तत्वं वा भवति । अग्न्युदकमिति । अग्निस-

उ०—एतदुत्तरम्–अचि भलोप एकादेशाद्विप्रतिषेधेनेत्यादि 'गाङ्गेयो गाङ्ग'इत्यन्तं पठ्यते । तस्य पूर्वस्मात्को भेदः ? दाक्षी दाक्षायण इत्यप्यचि भलोपस्यैव विप्रतिषेधस्थानं, गाङ्गदाद्योश्च को विशेष इति चिन्त्यम् । तस्मादयं 'प्रक्षिप्तो ग्रन्थो भाष्यकैयटयोरिति बहवः । इति वृद्धिरिति । एकादेशत्वसामान्यापेक्षया तु दण्डाग्रमित्यवकाशप्रदर्शनं बोध्यम् । श्र्यर्थमित्यादि । पदसंस्कारपक्षे पूर्वपदप्रकृतिस्वरेण च मूलशास्त्रस्यैव प्रवृत्तिरित्याशयेन 'पचतीत्याद्यवकाशकथनमित्याहुः । ननु श्र्यर्थमित्यत्र 'समासस्ये'त्यन्तोदात्तत्वेन भाव्यमिति कथमत्र धातुस्वरप्राप्तिः । सति वा धातुस्वरे यणि तस्य श्रवणाभावात्फलाभाव इति किं विप्रतिषेधेनेत्यत आह—अर्थे इति । श्रीरीषा यस्या इति पाठः, भाष्ये 'श्रीषा' इति दीर्घपाठात् । अथवा श्रियमिच्छतीति तृतीयैकवचनं श्रीषेति । अत्र पूर्वमेकादेशे व्यपवर्गाभावात्कृदुत्तरपदप्रकृतिस्वर एव न स्यादिति तन्निबन्धनं विभक्त्युदात्तत्वं न स्यादिति भावः । न सिध्येदिति । पूर्वं यण्युदात्तयण्त्वाभावात्स्वरितो न स्यादित्यर्थः ।

१–कोष्ठबद्धं भाष्यं प्रदीपश्च 'प्रक्षिप्तो ग्रन्थ' इत्युद्द्योतः ।

† शुभ्रादिभ्यश्च ४ । १ । १२३; आयनेयीनीयियः फढख०, ७ । १ । २; यस्येति च ६।४।१४८

‡ शिवादिभ्योऽण् ४ । १ । ११२; यस्येति च ६ । ४ । १४८

+ धातोः ६ । १ । १६२ × अर्थे ६ । २ । ४४; इको यणचि ६ । १ । ७७; उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ८ । २ । ४

** बहुव्रीहौ प्रकृत्या पूर्वपदम् ६ । २ । १; अकः सवर्णे दीर्घः ६ । १ । १०१; स्वरितो वानुदात्ते पदादौ ८ । २ । ६;–गतिकारकोपपदात् कृत् ६ । २ । १३९; अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे ६ । १ । १६९

२–क्वाचित्कः पाठः ।

* बहुव्रीहौ प्रकृत्या पूर्वपदम् ६ । २ । १; उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ८ । २ । ४

§ अर्थे ६ । २ । ४४; स्वरितो वानुदात्ते पदादौ ८ । २ । ६

प्रत्ययस्वरस्यावकाशः—चिकीर्षुः औपगवः‡ । एकादेशयणादेशयोः स एव । इहोभयं प्राप्नोति—चिकीर्ष्वर्थम् औपगवार्थम् ।

समासान्तोदात्तस्यावकाशः—राजपुरुषः ब्राह्मणकम्बलः§ । एकादेशयणादेशयोः स एव । इहोभयं प्राप्नोति—राजवैद्यर्थम् राजवैदीहते ।

उदात्तनिवृत्तिस्वरस्यावकाशः—नदी कुमारी¶ । एकादेशयणादेशयोः स एव । इहोभयं प्राप्नोति—कुमार्यर्थम् कुमारीहते ।

अल्लोपाल्लोपौ चार्धधातुके ॥ ८ ॥

अल्लोपाल्लोपौ चार्धधातुक एकादेशाद्भवतो विप्रतिषेधेन । अल्लोपस्यावकाशः—चिकीर्षिता जिहीर्षिता× । एकादेशस्यावकाशः—पचन्ति पठन्ति+ । इहोभयं प्राप्नोति—चिकीर्षकः जिहीर्षकः+ ।

आल्लोपस्यावकाशः**—पपिः सोमं ददिर्गाः†† । एकादेशस्यावकाशः—यान्ति वान्ति । इहोभयं प्राप्नोति—ययतुः ययुः ।

प्र०—हितमुदकमग्न्युदकम् । 'समानाधिकरणाधिकारे तस्तृतीयापूर्वपद उत्तरपदलोपश्चे'ति समासः । 'उदकेऽकेवल' इति पूर्वपदान्तोदात्तत्वम् । एवं तु व्याख्यायमाने प्रातिपदिकस्वरो न प्रदर्शितो भवति । तस्मादग्निरुदकमस्यौष्णत्वाद्दाहकत्वाद्यस्मिन्निति बहुव्रीहिः कर्तव्यः । ततो 'बहुव्रीहौ प्रकृत्ये'ति पूर्वपदप्रकृतिस्वरेण प्रातिपदिकस्वरे सति यणादेशे चोदात्तस्वरितयोरिति स्वरितत्वं भवति । पूर्वं तु यणि सति न सिद्धयेत् ॥ वृत्त्यर्थमिति । 'अर्थ' इति पूर्वपदप्रकृतिस्वरे सति एकादेशे 'स्वरितो वानुदात्ते पदादाविति सिध्यति । पूर्वं तत्रैकादेशे न सिध्येत् । चिकीर्ष्वर्थमिति । 'उदात्तस्वरितयोर्यण' इति अकारस्य स्वरितत्वम् । औपगवार्थमिति । 'स्वरितो वानुदात्ते पदादा'विति वा स्वरितत्वम् । राजवैदीहत इति । राज्ञो वैदीति षष्ठीसमासः । 'ईहते' इत्यस्य 'तिङतिङ' इति निघातः ।

उ०—पूर्वं त्विति । उदात्तानुदात्तैकादेशाभावात्स्वरिताद्यभावः स्यादित्यर्थः । उदात्तस्वरितयोरिति । 'अर्थे' इति पूर्वपदप्रकृतिस्वरे यणि चेति भावः । राजवैद्यर्थमित्यादि वाक्यसंस्कारे उदाहरणम् । निघात इति । तत्र पूर्वमेकादेशे यणि वा स्वरितादि न स्यात् । विदस्यापत्यं वैदी । धातु-प्रातिपदिकादिस्वराणामप्यन्तरङ्गत्वात्पूर्वं प्रवृत्तानामेव पूर्वपदप्रकृतिस्वरेण तन्मात्रानुमत्या सिद्धानीमान्यप्य-न्तरङ्गत्वादिति कश्चित् ॥ भाष्ये—अल्लोपाल्लोपयोरवकाशौ—चिकीर्षिता पपिरिति । अत्राप्याद्गुणरूपैका-

‡ आद्युदात्तश्च ३ । १ । ३
§ समासस्य ६ । १ । २२३
¶ अनुदात्तस्य च यत्रोदात्तलोपः ६ । १ । १६१
× अतो लोपः ६ । ४ । ४८ ।
+ अतो गुणे ६ । १ । ९७
† लिति ६ । १ । १९३
** आतो लोप इटि च ६ । ४ । ६४
†† ऋ० ६ । २३ । ४

## इयङुवङ्गुणवृद्धिटित्किन्मित्पूर्वपदविकाराश्च ॥ ६ ॥

इयङुवङ्गुणवृद्धिटित्किन्मित्पूर्वपदविकाराश्चैकादेशयणादेशाभ्यां भवन्ति विप्रतिषेधेन । इयङुवङोरवकाशः‡‡—श्रियौ श्रियः । भ्रुवौ भ्रुवः । एकादेशयणादेशयोः स एव । इहोभयं प्राप्नोति—चिक्षियिव चिक्षियिम । लुलुवतुः लुलुवुः पुपुवतुः पुपुवुः ।

गुणवृद्ध्योरवकाशः—चेता* गौः† । एकादेशयणादेशयोः स एव । इहोभयं प्राप्नोति—साधुचायी‡ सुचायी§ । नग्नंभावुकोऽध्वर्युः¶ । शयिता शयितुम् ।

टितोऽवकाशः×—[1]अग्नीनाम् इन्दूनाम् । एकदेशयणादेशयोः स एव । इहोभयं प्राप्नोति—वृक्षाणाम् प्लक्षाणाम् ।

कितोऽवकाशः+—साधुदायी सुष्ठुदायी । एकदेशयणादेशयोः स एव । इहोभयं

प्र०—चिक्षियिवेति । 'क्षि क्षये' लिट् । क्रादिनियमादिट् । सवर्णदीर्घत्वे प्राप्ते इयङ् । येननाप्राप्तिन्यायेन यणोऽपवादावियङुवङौ, सवर्णदीर्घस्य तु परत्वाद्बाधकौ । साधु चिनोतीति साधुचायी । 'साधुकारिणि चे'ति णिनिः । सुचिनोतीति तच्छीलः सुचायी । 'सुप्यजाता'विति णिनिः । 'सुपीति वर्तमाने सुब्ग्रहणं सुब्मात्रे यथा स्या'दिति भाष्ये ह्युक्तम् । अनग्नो नग्नो भवतीति नग्नंभावुकः । 'आढ्यसुभगे' त्यनुवर्तमाने 'कर्तरि भुवः खिष्णुच्खुकञा'विति खुकञ्प्रत्ययः । तत्र सवर्णदीर्घत्वे प्राप्ते वृद्धिः । वृक्षाणामिति । नुडागममात्रमनपेक्षितलक्षणभेदमाश्रित्य विप्रतिषेधोपन्यासः । न हि ह्रस्वलक्षणस्य नुटः 'पञ्चाना'मित्यादिरवकाशः । क्वचित् 'अग्नीना'मिति

उ०—देशप्राप्तेश्चिन्त्यमिदम् । एकादेशस्यान्तरङ्गतया 'वार्णादाङ्ग'मिति परिभाषयास्य सिद्धेरवश्यवाच्यतया नात्यन्तं चोदः कृतो भगवतेति बोध्यम् । 'चिकीर्षक' इत्यत्र लोपे ईकारस्य लित्स्वरेणोदात्तत्वं फलम् ।

नन्वियुवाभ्यां यणेव दीर्घोऽप्यपवादत्वादेव बाधिष्यते किं विप्रतिषेधेनेत्यत आह· येन नाप्राप्तीति । ननु 'सुपीति वर्तमाने सुब्ग्रहणमुपसर्गनिवृत्त्यर्थ'मिति वृत्तावुक्तत्वेन कथमत्रोपसर्गे णिनिरत आह—सुपीति । न तद्भाष्यकृतो मतमिति भावः । ननु ह्रस्वलक्षणनुटा विप्रतिषेधस्योदाहरणात् षड्नुटोऽवकाशप्रदर्शनमसङ्गतमत आह—नुडागममात्रमिति । क्वचिदिति । 'टिदवकाशप्रदर्शने' इति शेषः । ननु यणदीर्घयोर-

‡‡ अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ६ । ४ । ७७

* सार्वधातुकार्धधातुकयो ७ । ३ । ८४ † गोतोणित् ७।१।६०; अचो ञ्णिति ७।२।११५

‡ णिन्विधौ साधुकारिण्युपसंख्यानम् ३ । २ । ७८ वा० १ पृ० २४७

§ सुप्यजातौ णिनिस्ताच्छील्ये ३ । २ । ७८ ¶ कर्तरि भुवः खिष्णुच्खुकञौ ३ । २ । ५७

× ह्रस्वनद्यापो नुट् ७ । १ । ५४ १—'षण्णाम् सप्तानाम् पञ्चानाम्' पा० ।

+ आतो युक् चिण्कृतोः ७ । ३ । ३३

प्राप्नोति—दायकः धायकः ।

मितोऽवकाशः+—त्रपुणी जतुनी । एकादेशयणादेशयोः स एव । इहोभयं प्राप्नोति—अस्थीनि दधीनि । अतिसखीनि ब्राह्मणकुलानि ।

पूर्वपदविकाराणामवकाशः*—होतापोतारौ । एकादेशयणादेशयोः स एव । इहोभयं प्राप्नोति—नेष्टोद्गातारौ आग्नेन्द्रम् ।

## उत्तरपदविकाराश्च ॥

उत्तरपदविकाराश्चेति वक्तव्यम् । उत्तरपदविकाराणामवकाशः¶—समीपम् दुरीपम् । एकादेशयणादेशयोः स एव । इहोभयं प्राप्नोति—नीपम् वीपम् । प्रेपम् परेपम् ॥ ९१ ॥

## ओतोऽम्शसोः ॥ ६ । १ । ९३ ॥

## ओतस्तिङि प्रतिषेधः ॥ १ ॥

ओतस्तिङि प्रतिषेधो वक्तव्यः । अचिनवम् असुनवम् ॥ स तर्हि प्रतिषेधो वक्तव्यः ? न वक्तव्यः । गोग्रहणं करिष्यते । आ गोत इति वक्तव्यम् ।

प्र०—पाठः । तत्रायं भावः, अधि कविषयव्यापिनो यण एवापवादो नुट्, दीर्घस्य तु परत्वाद्बाधकः ॥ दायक इति । येननाप्राप्तिन्यायेन युगागम आद्गुणं बाधते, परत्वेन तु सवर्णदीर्घत्वमिति मत्वा विप्रतिषेधोपन्यासः । अस्थीनीति । येननाप्राप्तिन्यायेन नुमागमो यणादेशं बाधते, परत्वेन तु सवर्णदीर्घत्वम् । अतिसखीनीति । बहुव्रीहिः । वीपमिति । अत्र यण्प्राप्तः । प्रेपमिति । सवर्णदीर्घत्वं चेत्तेन बाध्यते । 'ईत्वमनवर्णान्तादिति वक्तव्य'मित्येकीयमतत्वान्नाश्रीयते ॥ ९१ ॥

ओतो । ओतस्तिङीति । साहचर्यस्य व्यवस्थाहेतुत्वमनाश्रित्योच्यते । सुप एव हि

उ०—पवादत्वादेव नुड्बाधक इति विप्रतिषेधोऽयुक्तोऽत आह—तत्रायमिति । ननु सर्वत्र कार्यान्तरे प्राप्ते युक्त आरम्भादपवादत्वादेवासौ बाधको न तु परत्वादत आह—येने नेति । बहुविषयव्यापित्वादित्यभिमानः । नुमागम इति । इकोऽचीति नुमत्र । प्रादिसमासे टच्स्यादत आह—बहुव्रीहिरिति ॥ नन्वीत्वमनवर्णान्तादित्युक्तेः 'प्रेप'मित्यत्रेत्वं दुर्लभमत आह—ईत्वमिति । एवं चवर्णान्ते विकल्प इति भावः । एतद्वार्तिकप्रयोजनान्यपि वार्णस्यान्तरङ्गत्वाद्वार्णादाङ्गमिति परिभाषयैव सिद्धानीति बोध्यम् ॥ ९१ ॥

ओतोऽम् । ननु शसा साहचर्यात्सुप एवामो ग्रहणमत आह—साहचर्यस्येति । ननु तद्धितोऽपि

+ नपुंसकस्य झलचः; इकोऽचि विभक्तौ ७ । १ । ७२; ७३

* आनङ् ऋतो द्वन्द्वे; देवताद्वन्द्वे च ६ । ३ । २५; २६ १—क्वचिन्न ।

¶ द्व्यन्तरुपसर्गेभ्योऽप ईत् ६ । ३ । ९७

**गोग्रहणे द्योरुपसङ्ख्यानम् ॥ २ ॥**

गोग्रहणे द्योरुपसङ्ख्यानं कर्तव्यम् । द्यां गच्छ§ ।

**समासाच्च प्रतिषेधः ॥ ३ ॥**

समासाच्च प्रतिषेधो वक्तव्यः । चित्रगुं पश्य । शबलगुं पश्य ।

ननु चौत इत्युच्यमानेऽपि समासात्प्रतिषेधो वक्तव्यः । न वक्तव्यः । ह्रस्वत्वे* कृते न भविष्यति । इदमिह संप्रधार्यम्—आत्वं क्रियतां ह्रस्वत्वमिति किमत्र कर्तव्यम् ? परत्वादात्वम् ।

**न वा बहिरङ्गलक्षणत्वात् ॥ ४ ॥**

न वा वक्तव्यः । किं कारणम् ? बहिरङ्गलक्षणत्वात् । बहिरङ्गलक्षणमात्वम् । अन्तरङ्गं ह्रस्वत्वम् । असिद्धं बहिरङ्गमन्तरङ्गे ।

ननु चा गोत इत्युच्यमानेऽपि समासात्प्रतिषेधो [ वक्तव्यः । ] न वक्तव्यः । कथम् ? ह्रस्वत्वे कृते न भविष्यति ! स्थानिवद्भावात्प्राप्नोति । ननु चौत इत्युच्यमानेऽपि स्थानिवद्भावात्प्राप्नोति । नेत्याह । अनल्विधौ स्थानिवद्भावः । 'आ गोत' इत्युच्यमानेऽपि न दोषः । प्रतिषिध्यतेऽत्र स्थानिवद्भावः—गोः पूर्वणित्त्वात्त्वस्वरेषु स्थानिवन्न भवतीति† ।

स एव तर्हि दोषो 'गोग्रहणे द्योरुपसङ्ख्यान'मिति । सूत्रं च भिद्यते ॥ यथान्यासमेवास्तु । ननु चोक्तमोतस्तिङि प्रतिषेध इति ।

**सुबधिकारात्सिद्धम् ॥ ५ ॥**

सुपीति वर्तते । क्व प्रकृतम् ? 'वा सुप्यापिशलेः' [ ९२ ] इति ।

प्र०—शसोऽत्र संभवः, अचीत्यधिकारात्तद्धितस्याग्रहणात् । अचिन्त्यमिति । लङ्, मिप्, अम्भाव, विकरणस्य गुणे कृते आत्वप्रसङ्गः ॥ न्यासान्तराश्रयणेऽव्याप्तिरिति दर्शयन्नाह—गोग्रहण इति ।

उ०—शसस्तीति तत्साहचर्यात्कथं सुपो ग्रहणमत आह—अचीत्यधिकारादिति ॥ यस्य स्वरितत्वमिति । समासनिर्देशेऽपि 'सङ्ख्याव्ययादे'रित्यादावेकदेशानुवृत्तिर्दृश्यते, तत्र किं वक्तव्यमसमासनिर्देश इति भावः । एवं च निवृत्तमिति भाष्येऽननुवृत्तिरेव निवृत्तिरित्यर्थः । केचित्तु निवृत्तमिति भाष्यस्वरसात्तस्यापि स्वरितत्व-

§ मैत्रायणीसंहिता १ । ३ । ३७ । १०२; काठकसंहिता ४ । ६ । ४८

* गोस्त्रियोरुपसर्जनस्य १ । २ । ४८ १—क्वचिन्न ।

† गोः पूर्वणित्त्वात्त्वस्वरेषु १ । १ । ५६ वा० २६ पृ० ४२०

यद्यनुवर्तेत इहापि विभाषा प्राप्नोति । सुब्ग्रहणमनुवर्तते, वाग्रहणं निवृत्तम् । कथं पुनरेकयोगनिर्दिष्टयोरेकदेशोऽनुवर्तेत एकदेशो न ?

**एकयोगे चैकदेशानुवृत्तिरन्यत्रापि ॥ ६ ॥**

एकयोगनिर्दिष्टानामप्येकदेशानुवृत्तिर्भवति । अन्यत्रापि नावश्यमिहैव । क्वान्यत्र ? अलुगधिकारः प्रागानङः, उत्तरपदाधिकारः प्रागङ्गाधिकारात्‡ ॥ एवमपि—

**अम्युपसङ्ख्यानं वृद्धिबलीयस्त्वात् ॥ ७ ॥**

अम्युपसङ्ख्यानं कर्तव्यम् । गां पश्य । किं पुनः कारणं न सिध्यति ? वृद्धिबलीयस्त्वात् । परत्वाद्वृद्धिः प्राप्नोति§ ।

**न वानवकाशत्वात् ॥ ८ ॥**

न वा वक्तव्यम् । किं कारणम् ? अनवकाशत्वात् । अनवकाशमात्वं वृद्धिं बाधिष्यते ॥ सावकाशमात्वम् । कोऽवकाशः ? द्यां गच्छ ।

**द्योश्च सर्वनामस्थाने वृद्धिविधिः ॥ ९ ॥**

द्योश्च सर्वनामस्थाने वृद्धिर्विधेया । किं प्रयोजनम् ?

**यद्द्याव इन्द्रेति दर्शनात् ॥ १० ॥**

यद्द्याव इन्द्र ते शतं शतं भूमीरुत स्युः* । यावता चेदानीं द्योरपि सर्वनामस्थाने वृद्धिरुच्यतेऽनवकाशमात्वं वृद्धिं बाधिष्यते ॥ ९३ ॥

प्र०—अतिव्याप्तिरप्यत्रेति दर्शयति—समासाच्चेति । एकयोगे चेति । यस्य स्वरितत्वं प्रतिज्ञायते तदेवानुवर्तते नान्यदिति भावः । द्योश्चेति । 'ओतो णि'दिति सूत्रं पठितव्यं, गोत इत्योकारान्तोपलक्षणार्थं वा व्याख्येयम् । वर्णनिर्देशे हि तपरत्वं प्रसिद्धम् ॥ ९३ ॥

उ०—मस्त्येव, दृष्टान्तस्य तादृशस्यैवोक्तत्वात् । तत्फलं तु 'एङि पररूप'मिति सूत्रे 'वा सुपी'त्यनुवर्त्य वाक्यभेदेन व्याख्यानमित्याहुः ॥ भाष्ये—एवमप्युपसङ्ख्यानमिति । 'गोशब्दे वृथग्भावस्ये'ति शेषः । वक्ष्यमाणोऽभिप्रायः । ननु 'गोतो णि'दिति न्यासेन कथं द्योर्वृद्धिरत आह—ओतो णिदिति । उपलक्षणत्वेन व्याख्याने बीजमाह—वर्णेति । एतद्द्वयभिन्नानामोकारान्तानां त्वनभिधानमाहुः ॥ ९३ ॥

‡ अलुगुत्तरपदे ६ । ३ । १; आनङ् ऋतो द्वन्द्वे ६ । ३ । २५ अङ्गस्य ६।४।१

§ गोतो णित् ७ । १ । ९०; अचो ञ्णिति ७ । २ । ११५

* ऋ० ८ । ७० । ५; साम० २७८; ८६२; अथर्व० २० । ८१ । १; ९ । २ । २०; तै० सं० २ । ४ । १४ । ३; तै० आ० १ । ७ । ५; निरु० १३ । १

## एङि पररूपम् ॥ ६ । १ । ९४ ॥

### पररूपप्रकरणे तुन्वोर्वि निपात उपसङ्ख्यानम् ॥ १ ॥

पररूपप्रकरणे 'तु' 'नु' इत्येतयोर्वकारादौ निपात उपसङ्ख्यानं कर्तव्यम् । तु वै त्वै । नु वै न्वै । वकारादाविति किमर्थम् ? त्वावत् न्वावत् । निपात इति किमर्थम् ? तु वानि । नु वानि ।

### न वा निपातैकत्वात् ॥ २ ॥

न वा कर्तव्यम् । किं कारणम् ? निपातैकत्वात् । एक एवायं निपातः— त्वै न्वै ।

### एवे चानियोगे ॥ ३ ॥

एवे चानियोगे[1] पररूपं वक्तव्यम् । इह एव इहेव । अद्येव । अनियोग इति किमर्थम् ? इहैव[2] भव मा स्म गाः । अत्रैव त्वमिह वयं सुशेवाः* ।

### शकन्ध्वादिषु च ॥ ४ ॥

शकन्ध्वादिषु च पररूपं वक्तव्यम् । शक अन्धुः शकन्धुः । कुल अटा कुलटा । सीम अन्तः सीमन्तः । केशेष्विति वक्तव्यम् । यो हि सीम्नोऽन्तः सीमान्तः स भवति ।

प्र०—एङि । तुन्वोरिति । सप्तमीनिर्देशात्तदादिविधिः । तु—आवत् त्वावत् । नु वानीति । वातेर्लोडुत्तमैकवचने 'वानी'ति रूपम् । एक एवेति । अर्थभेदाभावादेको निपातः । एवे चानियोग इति । नियोगोऽवश्यंभावः, अवधारणं, तस्मादन्यत्रार्थे पररूपं भवति । यथा—क्वेव भोक्ष्यते । अत्रानवक्लृप्तावेवशब्दः । यदा त्ववधारणे वर्तते तदा वृद्धिः । शकन्धुरिति ।

उ०—एङि पररूपम् । आवदिति निपातः । एकनिपातत्वं कथं ज्ञायतेऽत आह—अर्थे भेदाभावादिति । यथा क्वेति । अनवक्लृप्तिः—असंभावना । भोजनं क्वचिदपि न संभाव्यत इत्यर्थः । उदपानमिति ।

१–अनियोगोऽसम्भवः । 'एवशब्दस्यार्थोऽवधारणमसम्भवश्च' । इति परमलघुमञ्जूषायां निपातार्थविचारे नागेशः । २–'इहैव भव मा नु गाः' अथर्व० ५ । ३० । १

* तै० आ० ६ । १ । ३; ऋ० १० । १८ । ६ 'सुवीराः' पा० ।

ओत्वोष्ठयोः समासे वा ॥ ५ ॥

ओत्वोष्ठयोः समासे वा पररूपं वक्तव्यम् । स्थूलौतुः स्थूलोतुः । बिम्बौष्ठी बिम्बोष्ठी ।

एमन्नादिषु छन्दसि ॥ ६ ॥

एमन्नादिषु छन्दसि पररूपं वक्तव्यम् । 'अपां त्वेमन्त्सादयाम्यपां त्वोद्मन्त्सादयामि'† ॥ ९४ ॥

ओमाङोश्च ॥ ६ । १ । ९५ ॥

किमर्थश्चकारः ? एङीत्यनुकृष्यते* । किं प्रयोजनम् ? इह मा भूत्—अद्य आ ऋश्यात् अद्याश्यर्यात् । कदाश्यर्यात् ॥ नैतदस्ति प्रयोजनम् । 'अद्यर्श्या'दित्येव भवितव्यम् । एवं हि सौनागाः पठन्ति—चोऽनर्थकोऽनधिकारादेङः ।

उस्योमाङ्क्ष्वाटः प्रतिषेधः ॥ १ ॥

उसि§ पररूप ओमाङोश्चाटः प्रतिषेधो वक्तव्यः । औस्रीयत् औढीयत् औङ्कारीयत् ॥ स तर्हि प्रतिषेधो वक्तव्यः ? न वक्तव्यः । उक्त'माटश्च' [ ९० ] इत्यत्र चकारस्य प्रयोजनं [ आटोऽचि ] वृद्धिरेव यथा स्याद्यदन्यत्प्राप्नोति तन्मा भूदिति‡ ॥ ९५ ॥

प्र०—अन्धुः—उदपानम् । कुलटेति । अटति इत्यटा । पचाद्यच् । पश्चात् कुलेन सम्बन्धः । अन्यथा 'कर्मण्य'णित्यणप्रसङ्गः । ओत्वोष्ठयोरिति । ओतुर्बिडालः ॥ ९४ ॥

ओमा । अद्यर्श्यादिति । प्रतिपदविधेर्बलवत्त्वात्परोऽपि सवर्णदीर्घो बाध्यते । औढीयदिति । वहेराङ्पूर्वस्य क्तप्रत्यये परे ओढमिति रूपं, ततः क्यचि लङि रूपमेतत् ॥ ९५ ॥

उ०—उदकं पीयते यत इति संज्ञायामुदभावः । कूप इत्यर्थः । कुलटा—भिक्षुकी स्वैरविहारिणी च । बिडालः—मार्जारः । वार्तिके ओष्ठशब्दस्य परनिपातः, पूर्वनिपातप्रकरणानित्यत्वात् । स्त्रियामुदाहरणं तु तत्रैव प्रयोगमभिप्रेत्येत्याहुः ॥ ९४ ॥

ओमाङो । नन्वत्र परत्वाद्दीर्घप्रसङ्गोऽत आह—प्रतिपदेति १ तत्त्वं च सत्यपि चारितार्थ्ये प्रथमप्रवृत्तौ नियामकम् । प्रवृत्ते च तस्मिन् तदप्राप्तिरेवेति भावः ॥ ९५ ॥

† यजु० १३ । ५३ ; तै० सं० ४ । ३ । १ । १; मै० सं० २ । ७ । १८; का० सं० १६।१८
* एङि पररूपम् ६ । १ । ९४
१—क्वचिन्न ।
§ उस्यपदान्तात् ६ । १ । ९६
‡ ६ । १ । ९० भाष्यम् ।

## उस्यपदान्तात् ॥ ६ । १ । ९६ ॥

अपदान्तादिति किमर्थम् ? का उस्रा कोस्रा ।

अपदान्तादिति शक्यमकर्तुम् । कस्मान्न भवति का उस्रा कोस्रा ? अर्थवद्ग्रहणे नानर्थकस्येति । नैषा परिभाषेह शक्या विज्ञातुम् । इह हि दोषः स्यात्—भिन्द्या उस् भिन्द्युः । छिन्द्या उस् छिन्द्युः ।

एवं तर्हि 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यै'वेत्येवं न भविष्यति ॥ उत्तरार्थं तर्ह्यपदान्तग्रहणं कर्तव्यम् । 'अतो गुणे' [ ९७ ] अपदान्ताद्यथा स्यादिति । इह मा भूत्—दण्डाग्रम् क्षुपाग्रमिति ॥ ९६ ॥

## अव्यक्तानुकरणस्यात इतौ ॥ ६ । १ । ९८ ॥

### इतावनेकाज्ग्रहणं अदर्थम् ॥ १ ॥

इतावनेकाज्ग्रहणं कर्तव्यम् । किं प्रयोजनम् ? अदर्थम् । इह मा भूत्—श्रदिति ॥ ९८ ॥

प्र०—उस्यप । अर्थवद्ग्रहण इति । अव्युत्पन्नं प्रातिपदिकमुस्रशब्द इत्युस आनर्थक्यम् । नैषेति । ननु 'न प्रयोजनानुवर्ति प्रमाण'मिति कथमनाश्रयणमुपपद्यते ? अनित्यत्वादस्याः परिभाषायाः । तच्चानित्यत्वमप्तृन्तृजिति तृन्तृचोर्भेदेनोपादानेनार्वदिशतृनिवृत्त्यर्थेन ज्ञापितम् । नित्यत्वे ह्यानर्थक्यादर्वादिशग्रहणाप्रसङ्गात्तन्निवृत्तेः सिद्धत्वात् । भिन्द्युरिति । 'अनागमकानां सागमका आदेशा' इति न्यायाद्यासुडादेः प्रत्ययस्यार्थवत्त्वं, न तु तदेकदेशस्य । यदा त्व'र्थवतो ह्यागमस्तद्गुणीभूतस्तद्ग्रहणेन गृह्यत' इति न्यायस्तदार्थवत्त्वमेवोसः । एवं तर्हीति । उस्राशब्दो वसेः 'स्फायितञ्ची'ति रकि संप्रसारणे व्युत्पाद्यते । 'शासिवसी'ति षत्वं 'न रपरे'ति प्रतिषेधान्न भवति । एवमत्रोसिति लाक्षणिकं रूपम् ॥ ९६ ॥

उ०—उस्यप । अव्युत्पन्नमिति । औणादिकत्वादिति भावः । अर्वादेशमिति । 'प्रत्ययाप्रत्ययो'रिति परिभाषयास्याग्रहणाच्चिन्त्यमिदम् । तस्या अप्यनित्यत्वं ज्ञाप्यत इत्याशय इत्यन्ये । वस्तुत 'इणः षीध्व'मिति सूत्रस्थाङ्गग्रहणेन द्वयोरप्यनित्यत्वज्ञापनसिद्धेस्तयोर्भेदेनोपादानं चिन्त्यप्रयोजनम् । ध्वनितं चेदं 'ण्वुलतृचा'-वित्यत्र भाष्ये इति बोध्यम् । यदा त्विति । अन्यथार्थवतो ह्यागम इत्युक्त्यसङ्गतिरिति भावः । चिन्त्यमिदं, तदाप्यागमविशिष्टस्यैवार्थवत्त्वात् । अन्यथा भूयास्तामित्यादौ तामादेरिडागमापत्तिः । अर्थवतो ह्यागम इत्यस्यागमाभावेऽर्थवत इत्यर्थ इति बोध्यम् ॥ ९६ ॥

## नाम्रेडितस्यान्त्यस्य तु वा ॥ ६ । १ । ९९ ॥

### नित्यमाम्रेडिते डाचि ॥ १ ॥

नित्यमाम्रेडिते डाचि पररूपं कर्तव्यम् । पटपटायति* ।

### अकारान्तानुकरणाद्वा ॥ २ ॥

अथवाकारान्तमेतदनुकरणम् ॥ भवेत्सिद्धं यदाकारान्तं यदा तु खल्वच्छब्दान्तं तदा न सिध्यति । विचित्रास्तद्धितवृत्तयः । नातस्तद्धित उत्पद्यते ॥ ९९ ॥

## अकः सवर्णे दीर्घः ॥ ६ । १ । १०१ ॥

### सवर्णदीर्घत्वे ऋति ऋवावचनम् ॥ १ ॥

सवर्णदीर्घत्वे ऋति ऋ वा भवतीति वक्तव्यम् । होतृ ऋकारः होतृकारः ।

### लृति ऌवावचनम् ॥ २ ॥

लृति ऌ वा भवतीति वक्तव्यम् । होतृ लृकारः । होतॢकारः ।

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठस्याध्यायस्य
प्रथमे पादे चतुर्थमाह्निकम् ।

---

प्र०—नाम्रेडि । 'नित्यमाम्रेडिते डाची'ति वार्तिकदर्शनात्सूत्रे कैश्चित्प्रक्षिप्तम् । विचित्रा इति । प्रयोगमूलत्वादस्य शास्त्रस्य प्रयोगाऽभावेऽप्रवृत्तिरिति भावः ॥ ९९ ॥

अकः । ऋ वेति । 'ऋ' 'लृ' इत्येतयोः संवृतत्वाद्विवृताभ्यामृकारलृकाराभ्यामसावर्ण्यादज्ग्रहणेनाग्रहणादर्धतृतीयमात्रत्वाद्वा ऊकालत्वाभावाद्दीर्घसंज्ञाया अभावाद्वचनम् ॥ १०१ ॥

इत्युपाध्यायजैयटपुत्रकैयटविरचिते भाष्यप्रदीपे षष्ठस्याध्यायस्य
प्रथमे पादे चतुर्थमाह्निकम् ।

---

उ०—अकः स । वार्तिकप्रयोजनं वक्तुं सूत्रेणासिद्धिं दर्शयति—ऋ लृ इति । सावर्ण्याभावाय विवृतत्वाभावेऽपि उपस्थितरेफाद्यैषत्स्पृष्टप्रयत्नत्वमेव वक्तुं युक्तम् । 'तुल्यास्ये'ति सूत्रे कैयटेनाप्येवमेवोक्तमिति चिन्त्यमेतत् । अर्धतृतीयमात्रत्वाद्वेत्यपि चिन्त्यम्, तुल्यास्यसूत्रस्थभाष्यविरोधात् ॥ १०१ ॥

इतिश्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते
षष्ठस्याध्यायस्य प्रथमे पादे चतुर्थमाह्निकम् ।

---

* लोहितादिडाज्भ्यः क्यष् ३ । १ । १३

# प्रथमयोः पूर्वसवर्णः ॥ ६ । १ । १०२ ॥

प्रथमयोरित्युच्यते कयोरिदं प्रथमयोर्ग्रहणं किं विभक्त्योराहोस्वित्प्रत्यययोः ? 'विभक्त्यो'रित्याह । कथं ज्ञायते ? अचीति* वर्तते न चाजादी प्रथमौ प्रत्ययौ

प्र०—प्रथमयोः पूर्वसवर्णः । प्रथमशब्दः । संनिवेशविशेषापेक्षोऽभिधेये वर्तते । तत्र विशेषानवधारणात् पृच्छति-कयोरिति । ननु धातुनिपातादीनामपि प्राथम्यसंभवाद्विशेषविषयः प्रश्नो नोपपद्यते । नैष दोषः । 'दीर्घाज्जसि चे'ति लिङ्गाद्धात्वादीनामग्रहणाद्विभक्त्योः प्रत्यययोर्वा ग्रहणम् । यतः प्रतिषेध उपपद्यते, न तु धात्वादीनामन्यतमग्रहणात् । ननु सामान्यग्रहणेऽपि प्रतिषेधोपपत्तौ लिङ्गत्वानुपपत्तिः । नैतदस्ति ।'प्रथमयो'रिति कस्यचिदेव विशेषस्य ग्रहणं न तु यौगपद्येन सर्वेषां विशेषाणाम् । सर्वविशेषविषयस्य संनिवेशापेक्षस्य प्राथम्यस्य युगपद्बुद्ध्यापेक्षितुमशक्यत्वात् । प्रतिनियतविशेषालम्बित्वात्प्राथम्यज्ञानस्य । तत्र प्रसिद्ध्याश्रयेण विभक्तिग्रहणमाशङ्कितम्, 'प्रातिपदिकार्थे'त्यादौ विभक्तिग्रहणस्य प्रसिद्धत्वात् । अन्तरङ्गत्वात्तु प्रत्ययग्रहणमाशङ्कितम् । प्रत्ययस्य हि प्रथमत्वमन्तरङ्गं, त्रिकस्य तु बहिरङ्गम् । तत्र प्रथमसाहचर्यात्प्राथम्यारोपणाद्द्वितीयस्यापि प्रथमशब्देनाभिधानम् । यथार्धर्चाः पुंसि चेति गोमयादीनामर्धर्चशब्देन । तथा च बहुवचनं कृतम् ।

अन्ये त्वाहुः—द्वितीयस्य तु प्रथमापेक्षया द्वितीयत्वं नान्यथा । ततः प्रथमद्वितीययोरनपेक्षितपरस्परयोर्द्वयोरपि परापेक्षं प्राथम्यं मुख्यमेव । तत्र 'प्रथमयो'रिति स्त्रीलिङ्गनिर्देशे विभक्तिग्रहणम् । पुंल्लिङ्गनिर्देशे तु प्रत्ययग्रहणम् । समानश्च निर्देश इति सन्देहः ।

न चाजादी इति । 'प्रथमयो'रिति विशेष्यं, तद्विशेषणमचीति । तेनाजाद्योः प्रथमयोरिह ग्रहणं, न च सुशब्दोऽजादिर्भवतीति नासाविह प्रथशब्देन गृह्यते, विभक्त्योस्त्वजादित्वं

उ०—प्रथमयोः पूर्वं । तत्र विशेषेति । 'प्रथयो'रिति निर्देशस्य स्त्रीपुरुषसाधारणत्वादित्यर्थः । क्वचित्सन्निवेशे क्रमेण सन्निविष्टानामादिभूतो हि प्रथमशब्देन बोध्यते । विशेषविषय इति । विभक्तिप्रत्ययविषय इति भावः । "सर्वेषां विशेषाणा'मित्यस्य 'ग्रहण'मिति शेषः । तत्र हेतुमाह—सर्वेत्यादि । सर्वसन्निवेशानां युगपद्बुद्ध्यारोहासम्भवादिति भावः । तदाह-प्रतिनियतेति । तत्तत्सन्निवेशस्थिततत्तत्पदार्थालम्बनत्वादित्यर्थः । तत्र विभक्तिप्रत्ययविषयसन्देहे बीजमाह—तत्र प्रसिद्धीति । उभयोरप्येकसन्निवेशापेक्षत्वात्प्राथम्यस्येत्यर्थः । अन्तरङ्गमिति । तत्तत्सन्निवेशस्थितसर्वापेक्षया प्रथमत्वादिति भावः । नन्वेवं सर्वाद्यस्य प्राथम्यं मुख्यमिति तस्यैव ग्रहणं न्याय्यमिति द्विवचननिर्देशोऽनुपपन्नोऽत आह—तत्र प्रथमसाहचर्यादिति । द्विवचननिर्देशसामर्थ्यादिति भावः । द्वितीयायाः प्रथमापेक्षया द्वितीयत्वबुद्धिवारणायाह—अनपेक्षितपरस्परापेक्षेति । अनपेक्षितपरस्परापेक्षप्रथमत्वद्वितीयत्वयोरित्यर्थः । 'अनपेक्षितपरस्परयो'रिति पाठः क्वचित् । अत्रारुचिबीजं त्वेवंविधं प्राथम्यं तृतीयादेरपीति । निर्देशादपि न सन्देहनिवृत्तिः प्रत्युत सन्देह एवेत्याह—तत्रेति । विभक्तीति । समुदायस्य विभक्तिसंज्ञेति भावः ।

* इको यणचि ६ । १ । ७७

स्तः । ननु चैवं विज्ञायते'ऽजादी यौ प्रथमावजादीनां वा यौ प्रथमा'विति । यत्तर्हि 'तस्माच्छसो नः पुंसि' [ १०३ ] इत्यनुक्रान्तं पूर्वसवर्णं प्रतिनिर्दिशति तज्ज्ञापयत्याचार्यो 'विभक्त्योर्ग्रहण'मिति । अथवा सुपीति† वर्तते ।

अथ किमर्थं पूर्वसवर्णदीर्घोऽमि पूर्वत्वं‡ चोच्यते न 'प्रथमयोः पूर्वसवर्ण'

प्र०—संभवतीति तयोरेव ग्रहणम् । यद्यपि प्रथमे त्रिके सुशब्दस्याजादित्वासंभवस्तथाप्यवयवान्तरद्वारकत्रिकस्याजादिव्यपदेश इति 'अजाद्योः प्रथमयो'रिति संबन्धोपपत्तिः । प्रत्यययोस्तु ग्रहणे सुशब्दस्यानजादित्वादौजसौश्चाप्राथम्यात्प्रत्यययोरजाद्योरिति संबन्धायोगः । अजादी यौ प्रथमाविति । अजादी विशेष्यौ, तद्विशेषणं प्रथमयोरिति । तेनायमर्थो भवति-'अजादी यौ प्रत्ययौ अन्यापेक्षया लब्धप्रथमव्यपदेशौ तयोः परतः पूर्वसवर्णदीर्घ' इत्येवमौजसोरेव ग्रहणं प्राप्नोतीति विभक्तिद्वयग्रहणस्याज्ग्रहणं न लिङ्गम् । अजादीनां वेति । अचीति वर्तते, निर्धारणसप्तमी चेहाश्रीयते, जातौ चैकवचनम् । तुल्यजातीयस्य च निर्धारणं भवतीत्यजादीनां मध्ये प्रथमौ यावजादी अन्याजादिप्रत्ययापेक्षया लब्धप्रथमव्यपदेशौ, तौ चौजसावेवेति विभक्तिग्रहणे लिङ्गाभावः । अथवेति । 'वा सुप्यापिशले'रित्यतः 'सुपी'ति वर्तते । तत्र 'दीर्घाज्जसि चे'ति प्रतिषेधाल्लिङ्गात्सुपः परिग्रहे सिद्धे सुब्ग्रहणानुवृत्त्या सुपां प्रसिद्धो यो धर्मः स परिगृह्यते । सुपो विभक्तिश्चेत्यत्र त्रीणीत्यनुवृत्त्या त्रिकस्य विभक्तित्वं प्रसिद्धः सुब्धर्म इति विभक्त्योर्ग्रहणं संपत्स्यते ।

अथ किमर्थमिति । 'खट्वाम्' 'कुमारी'मित्यादौ लक्षणयोः फलाभेदं दृष्ट्वा प्रश्नः ।

उ०—तदादिविधिसिद्धये विशेष्यं दर्शयति-प्रथमयोरिति । सिद्धप्रथमत्वकयोरजादित्वं विशेषणमिति भावः । यद्यपीति । विभक्तिसंज्ञकत्रिकस्य सर्वस्याजादित्वासंभव इति भावः । परिहरति—तथापीति । छत्रिन्यायेनेति भावः । तन्वजादी यौ प्रथमावित्युच्यमाने कथं लिङ्गविघटनमत आह-अजादी विशेष्याविति । सिद्धाजादित्वस्य प्राथम्यं विशेषणमिति भावः । न च विशेष्यत्वे कथं तदादिविधिरिति वाच्यं 'दीर्घाज्जसी'ति लिङ्गात् प्रत्यययोर्बुद्धिसन्निधानादचीत्यस्य तद्विशेषणत्वात्तदादिविधिः, अजादित्वविशिष्टप्रत्ययरूपौ यौ प्रथमावित्यर्थ इति भावः । निर्धारणसप्तमी चेहेति । शब्दाधिकारादिति भावः । जातौ चेति । वचनविपरिणाम इत्यन्ये । अयं पक्ष एकदेशयुक्तिः, 'कारके' इति सूत्रस्थभाष्यविरुद्धत्वात् । तुल्यजातीयस्येति । 'गवां कृष्णा संपन्नक्षीरे'त्यादौ यथा गौरेव प्रतीयते न महिष्यादि तथेति भावः । ननु सुपीत्यनुवृत्तावपि कथं विभक्तिग्रहणं न प्रत्ययग्रहणमत आह—तत्रेति । प्रसिद्धो यो धर्म इति । सुप्शब्देन विहितधर्मो लक्ष्यते, तेन सुबुद्देशेन विहितधर्मयुक्तयोः प्रथमयोरित्यर्थ इति विभक्तिग्रहणसिद्धिस्तदाह—सुपो विभक्तिश्चेति । त्रीणीत्यनुवृ-

† वा सुप्यापिशलेः ६ । १ । ९२; सुपः; विभक्तिश्च १ । ४ । १०३; १०४
‡ अमि पूर्वः ६ । १ । १०७

इत्येव सिद्धम् । न सिध्यति । 'प्रथमयोः पूर्वसवर्ण' इत्युच्यमानेऽम्यपि दीर्घः प्राप्नोति । वृत्तम् प्लत्तम् । नैष दोषः । यत्पूर्वस्मिन्योगे§ दीर्घग्रहणं तदुत्तरत्र निवृत्तम् । एवमपीदमिह पूर्वसवर्णग्रहणं क्रियते तेनाम्यपि पूर्वसवर्णः प्रसज्येत । वृत्तम् प्लत्तम् । द्विमात्रः प्राप्नोति । नैष दोषः । सवर्णग्रहणं न करिष्यते । यदि सवर्णग्रहणं न क्रियते कुतो व्यवस्था ? आन्तर्यतः । यद्येवमग्नी वायू त्रिमात्रः प्राप्नोति, वृत्तम् प्लत्तम् द्विमात्रः । तस्मात्सवर्णग्रहणं कर्तव्यं तस्मिंश्च क्रियमाणे दीर्घग्रहणमनुवर्तते, तस्मिन्ननुवर्तमानेऽमि पूर्व' इत्यपि वक्तव्यम् ।

अथ किमर्थं पृथगुच्यते नेहैवोच्येत 'प्रथमयोः पूर्वसवर्णोऽमि चे'ति । यदि प्रथमयोः पूर्वसवर्णदीर्घो भवत्यमि चेत्युच्यते तेनाम्यपि दीर्घः प्रसज्येत । वृत्तम्

प्र०—इतरो वृक्षमग्निमित्यादौ फलभेदं मत्वाह–न सिध्यतीति । यत्पूर्वस्मिन्निति । 'अकः सवर्णे दीर्घ' इत्यतो दीर्घग्रहणमिह नानुवर्तत इत्यर्थः । एवमपीति । अग्नी इत्यादिसिध्यर्थं सवर्णग्रहणमवश्यं कर्तव्यम् । सवर्णग्रहणमिति । ततश्च वृत्तमग्निं कुमारीं, कुमारीः पश्य, वधूं वधूरित्यादि सर्वं सिध्यति । कुतो व्यवस्थेति । वृत्तमग्निं वायुमित्यादौ ह्रस्व एवाग्नी वायू वृक्षा इत्यादौ दीर्घ एवेति व्यवस्था न सिध्यति । तथा हि—यदि पूर्वा व्यक्तिराश्रीयते तदाग्नी इत्यादवपि ह्रस्वप्रसङ्गः । अथ पूर्वाकृतिराश्रीयते तदाग्निमित्यादावपि दीर्घप्रसङ्ग इति भावः ।

आन्तर्यत इति । पूर्वाकृतिराश्रीयते, 'प्लुतश्च विषये स्मृत' इति प्लुतो न भविष्यति, दीर्घश्च भविष्यतीति मन्यते । त्रिमात्रः प्राप्नोतीति । प्लुताप्लुतप्रसङ्गे 'प्लुतश्च विषये स्मृत' इत्युच्यते, इह तु प्लुतस्यैव प्रसङ्ग इति भावः । तस्मादिति । यस्मात्पूर्वाकृतिपक्षे पूर्वव्यक्तिपक्षे च दोषस्तस्मादित्यर्थः ।

अमि चेति । पुनः पूर्वग्रहणं न कर्तव्यं भवतीति भावः । दीर्घग्रहणमिति । 'अमि

उ०—त्येति । एतेन विभक्तिसंज्ञाया अपि प्रत्येकवृत्तितया पक्षयोरविशेष इत्यपास्तम् । यदापि विभक्तिसंज्ञा प्रत्येकं तदापि 'तस्माच्छस' इति ज्ञापकात्प्रथमयोस्त्रिकयोर्ग्रहणमिति 'विभक्तिश्चे'त्यत्र भाष्ये स्पष्टम् । एवं चाथवा सुपीत्युक्तिरेकदेशिन इति बोध्यम् ।

फलभेदमिति । तथा चामि पूर्व इति सूत्रं व्यर्थमिति भावः । नानुवर्तते इति । 'प्रथमयो'रित्यत्र अननुवृत्तिरेव निवृत्तिरिति भावः । अग्नी इत्यादिसिध्यर्थमिति । अन्यथा पूर्वो ह्रस्व एवोभयोः स्थाने स्यादित्यर्थः । भाष्ये—पूर्वसवर्णः प्रसज्येतेति । तथा च 'वृत्त'मित्यादावपि दीर्घः स्यादिति भावः । ततश्चेति । क्वचिदिष्टसिद्धिरित्यर्थः । एवमप्यग्नी इत्यादौ प्लुतः प्राप्नोतीत्यत आह—प्लुतश्चेति । इह तु प्लुतस्यैवेति । अन्तरतमपरिभाषयेति भावः । भाष्ये—तस्मिंश्च क्रियमाणे दीर्घग्रहणमनुवर्त्यमिति ।

§ अकः सवर्णे दीर्घः ६ । १ । १०१

प्लक्षम् । नैष दोषः । दीर्घग्रहणं निवर्तयिष्यते । एवमपि पूर्वसवर्णः प्रसज्येत । सवर्णग्रहणं न करिष्यते । यदि सवर्णग्रहणं न क्रियते पूर्वस्मिन्योगे विप्रतिषिद्धम् । यदि पूर्वो न दीर्घोऽथ दीर्घो न पूर्वः, पूर्वो दीर्घश्चेति विप्रतिषिद्धम् । तस्मादुभयमारब्धव्यं पृथक् च वक्तव्यम् ।

**प्रथमयोरिति योगविभागः सवर्णदीर्घार्थः ॥ १ ॥**

प्रथमयोरिति योगविभागः कर्तव्यः । प्रथमयोरकः सवर्णदीर्घो भवति । ततः पूर्वसवर्णः । पूर्वसवर्णदीर्घो भवत्यकः प्रथमयोरिति । किमर्थो योगविभागः ? सवर्णदीर्घार्थः । सवर्णदीर्घत्वं यथा स्यात् । [ वृक्षाः प्लक्षाः । वृक्षान् प्लक्षान् । ]

**एकयोगे हि जस्शसोः पररूपप्रसङ्गः ॥ २ ॥**

एकयोगे हि सति जश्शसोः पररूपं+ प्रसज्येत । वृक्षाः प्लक्षाः । वृक्षान् प्लक्षान् ॥ ननु च पूर्वसवर्णदीर्घत्वं पररूपं बाधिष्यते । नोत्सहते बाधितुम् । किं कारणम् ?

प्र०—चे'त्यत्रेति भावः । एवमपीति । ततश्च 'कुमारी'मित्यादौ त्रिमात्रप्रसङ्गः । पूर्वस्मिन्योग इति । पूर्वव्यक्त्याश्रये 'अग्नी' इत्यादौ पूर्वव्यक्तिर्न दीर्घेति विप्रतिषिद्धं स्यात् । पूर्वो दीर्घ इत्याकृत्याश्रये तूक्त एव दोषः । 'प्रथमयोः पूर्व' इत्यत्रानुवृत्त्या पूर्वाकृतिराश्रयिष्यते । 'अमि चे'त्यत्र तु दीर्घग्रहणनिवृत्त्या व्यक्तिरिति दुर्लभमेतत् । तस्मादुभयमिति । अथोभयस्मिन् पृथक्कर्तव्ये 'प्रथमयोः पूर्वसवर्ण' इत्यत्र सवर्णग्रहणं किमर्थं कृतम् । यावता दीर्घानुवृत्त्या पूर्वाकृतिराश्रयिष्यते । नैतदस्ति । व्यक्तिपक्षस्यापि संभवादग्नी इत्यादौ विरोधाशङ्का स्यात् ।

वृक्षा इति । अत्रादेङ्गुणः प्राप्तः, ततो दीर्घः, ततः परत्वात् पूर्वसवर्णदीर्घः, ततः

उ०—तत्र दीर्घः पूर्व इति विरोधवारणाय सवर्णग्रहणं कर्तव्यम् । तत्र कृतेऽग्नी इत्यत्र प्लुतव्यावृत्तये दीर्घग्रहणं कार्यम् । जात्या दीर्घस्य सामानाधिकरण्यासंभवाज्जातिपक्षेऽपि विप्रतिषिद्धमेवेति भावः ।

ननु 'प्रथमयो'रित्यत्र दीर्घानुवृत्तिरावश्यकी 'अग्नी' इत्यादौ त्रिमात्रव्यावृत्तयेऽत आह—अमि चेत्यत्रेति । त्रिमात्रप्रसङ्ग इति । 'वृक्ष'मित्यादौ द्विमात्रस्तु नापाद्यः, वचनसामर्थ्यात्, 'प्रथमयो'रित्यनेनैव तस्य सिद्धत्वात् । उपलक्षणं वा । उक्त एवेति । आकृत्यर्थकपूर्वग्रहणस्यैव वामि पूर्व इत्यत्रानुवृत्त्या आन्तरतम्यात्कुमारीमित्यादौ पूर्वजातीयस्त्रिमात्रः स्यादित्यर्थः । अनुवृत्त्येति । 'दीर्घग्रहणस्ये'त्यादिः । दुर्लभमेतदिति । प्रतिपत्तिगौरवप्रसङ्गादयुक्तमेतदित्यर्थः । व्यक्तिपक्षस्यापीति । अत्रेदं बोध्यम्—आकृतिग्रहणेऽपि कथं 'दीर्घ' इत्यनेन सामानाधिकरण्यं जातौ दीर्घत्वादेरभावात् । तस्मात्पूर्वशब्देन पूर्वजातीयो लक्षणीय इत्याकृतिग्रहणतात्पर्यम् । व्यक्तिपक्षस्यापीत्यादेस्तु लक्षणया प्रयोगस्यान्याय्यत्वं रूढिप्रयोजनयोरभावादिति ।

१ क्वाचित्कः पाठः ।  + अतो गुणे ६ । १ । ९७

५६ ‡

आद्गुणयणादेशयोरपवादा वृद्धिसवर्णदीर्घपूर्वसवर्णादेशास्तेषां परपरूपं स्वरसन्धिषु ॥ ३ ॥

आद्गुणयणादेशावुत्सर्गौ । तयोरपवादा वृद्धिसवर्णदीर्घपूर्वसवर्णादेशाः । तेषां सर्वेषां पररूपमपवादः । तत्सर्वबाधकम् । सर्वबाधकत्वात्प्राप्नोति ।

अथ क्रियमाणेऽपि योगविभागे यावता पररूपमपवादः कस्मादेव न बाधते ? 'योगविभागोऽन्यशास्त्रनिवृत्त्यर्थः' । योगविभागोऽन्यशास्त्रनिवृत्त्यर्थो विज्ञायते ।

योगविभागोऽन्यशास्त्रनिवृत्त्यर्थश्चेदम्यतिप्रसङ्गः ॥ ४ ॥

योगविभागोऽन्यशास्त्रनिवृत्त्यर्थश्चेदम्यतिप्रसङ्गो भवति । वृक्षम् प्लक्षम् । यथैव हि योगविभागः पररूपं बाधत एवममि पूर्वत्वमपि* बाधेत ।

नकाराभावश्च तस्मादित्यनन्तरनिर्देशात् ॥ ५ ॥

नत्वस्य† चाभावः । वृक्षान् प्लक्षान् । किं कारणम् ? तस्मादित्यनन्तरनिर्देशात् । तस्मादित्यनेनानन्तरो योगः प्रतिनिर्दिश्यते । किं पुनः कारणं तस्मादित्यने-

प्र०—पररूपप्रसङ्गः ॥ आद्गुणेति । तत्र वृद्ध्यादयो द्वितीयकक्ष्या प्राप्ताः, पररूपं तु तृतीयकक्ष्या-प्राप्तमिति भावः ॥ अथ क्रियमाणेऽपीति । यथा 'वृक्षा' इत्यादौ योगविभागेन पररूपं 'पचन्ती'-त्यादौ सावकाशं बाध्यते तथाग्नि वायुमित्यादौ सावकाशममि पूर्वत्वं वृक्षमित्यादौ बाध्येत । अथामि पूर्वत्वं न बाध्यते, पररूपमेव बाध्यत इत्युच्यते तदास्य विभागस्य कारणं वाच्यमिति भावः । अथवा अयमभिप्रायो यदि पररूपं सवर्णदीर्घस्येव पूर्वसवर्णस्यापि बाधकं ततो योग-विभागेऽपि क्रियमाणे बाधकं स्यादिति । योगविभाग इति । चतुर्थकक्ष्याप्राप्तत्वाद्योगविभागः पररूपस्य बाधक इत्यर्थः ।

नत्वस्येति । 'तस्माच्छसो नः पुंसी'त्यत्र तच्छब्देनानन्तरस्य पूर्वसवर्ण इत्यनेन विहि-तस्य परामर्शाद्गिरीन् वायूनित्यादावेव नत्वं स्यान्न तु 'वृक्षा'नित्यादौ, 'प्रथमयो'रितियोगवि-

उ०—अत्राद्गुण इति । ततश्चतुर्थकक्षान्तरप्राप्तपररूपबाधनाय योगविभाग इत्यर्थः । ततः पर-रूपेति । सर्वापवादत्वादिति भावः ॥ ननु योगविभागस्य सर्वापवादत्वात्पररूपस्यापि बाधस्तेन स्यादत आह—यथा वृक्षा इति । 'अग्नि'मित्यादौ सावकाशत्वं योगविभागीयप्रथमसूत्रापेक्षया । अस्य चोद्यस्य भाष्य एव वक्ष्यमाणत्वान्नायमेतद्भाष्यार्थोऽत आह—अथवेति । एवं च तृतीयकक्षाप्राप्तं पररूपं चतुर्थकक्षाप्राप्तो योगविभागो बाधत इति भावः ।

'अनन्तरनिर्देशा'दिति हेतोरसिद्धिं परिहरति—तस्माच्छस इति । वायूनित्यादावेवेति । तत्रापवाद-पररूपाप्राप्तेः परत्वात्पूर्वसवर्णदीर्घ एवेत्यर्थः । समुदायस्यैकबुद्ध्यापेक्षणे दृष्टान्तमाह—यथोच्यत इत्यादि ।

* अमि पूर्वः ६ । १ । १०७ । † तस्माच्छसो नः पुंसि ६ । १ । १०३ ।

नानन्तरो योगः प्रतिनिर्दिश्यते ? इह मा भूत्—'एतान् गाश्वतुरो बलिवर्दान् पश्येति‡ ॥ अस्तु तर्ह्येकयोग एव । ननु चोक्तमेकयोगे हि जस्शसोः पररूपप्रसङ्ग इति । नैष दोषः ।

इज्ग्रहणं तु ज्ञापकं पररूपाभावस्य ॥ ६ ॥

यदयं 'नादिचि' [ १०४ ] इतीज्ग्रहणं करोति तज्ज्ञापयत्याचार्यो 'न जस्शसोः पररूपं भवती'ति । कथं कृत्वा ज्ञापकम् ? इज्ग्रहणस्यैतत्प्रयोजनमिह मा भूत्—वृक्षाः प्लक्षाः । वृक्षान् प्लक्षान् । यदि च जस्शसोः पररूपं स्यादिज्ग्रहणमनर्थकं स्यात् । पश्यति त्वाचार्यो 'न जस्शसोः पररूपं भवती'ति तत इज्ग्रहणं करोति ।

नैतदस्ति ज्ञापकम् । उत्तरार्थमेतत्स्यात्—दीर्घाज्जसि च [ १०५ ] इचि चेति । यद्युत्तरार्थमेतत्स्यात्तत्रैवायमिज्ग्रहणं कुर्वीत । इहापि तर्हि क्रियमाणं यद्युत्तरार्थं न ज्ञापकं भवति ।

एवं तर्हि यद्युत्तरार्थमेतत्स्यान्नैवायमिज्ग्रहणं कुर्वीत नापि जस्ग्रहणम् । एताव-

प्र०—भागेन दीर्घे विधीयमान इत्यर्थः । एतच्च भेदेन लक्षणयोरेच्छामाश्रित्य चोदितम्, यत्रोच्यते 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वे'ति । यदा तु सूत्रद्वयसमुदायमेकया बुद्ध्यापेक्ष्य 'तस्मा'-दिति परामर्शः क्रियते तदा नास्ति दोषः, यत्रोच्यते—'उभयं निवृत्तं तदपेक्षिष्यामह' इति । एतान् गा इति । 'औतोऽम्शसो'रित्याकार एकादेशः ।

इज्ग्रहणं त्विति । यदि जस्शसोः पररूपं स्यात्तदा 'ना'दित्येव ब्रूयात्, इच्येव पूर्वसवर्णदीर्घप्रसङ्गात्, प्राप्तिपूर्वकत्वाच्च प्रतिषेधस्येति भावः । उत्तरार्थमिति । कुमार्यौ वध्वावित्यादौ पूर्वसवर्णदीर्घप्रतिषेधार्थमित्यर्थः । यद्युत्तरार्थमिति । एवं सति पृथग्विभक्त्यनुच्चारणाच्चकाराकरणाच्च 'दीर्घादिज्जसो'रिति लाघवं भवति । इहापीति । सर्वत्र लाघवं प्रत्यनादरादिहापि

उ०—'यत्रोच्यत' इति पाठे यत्रोक्तेऽर्थे स्थित्वा इदमुच्यते 'उभयं निवृत्त'मित्यादीत्यर्थः । प्रकृतैकादेशमात्रपरामर्शेऽपि भाष्योक्तोऽतिप्रसङ्ग इत्याह—औतोमिति । तस्मादनन्तरनिर्देश एवावश्यक इति भावः । ''एतान् गाश्वतुर'इति भाष्यस्य—एतान्बलीवर्दरूपान् चतुःसङ्ख्याकान् गाश्वरतः पश्येत्यर्थः । पुंस्त्वाभिव्यक्तये विशेषणनिर्देशः । अर्थान्तरवारणायानेकविशेषणोपादानम् । क्वचित्तु 'एतान् गाः पश्ये'त्येव पाठः ।

प्राप्तिपूर्वकत्वाच्चेति । एवं चेज्ग्रहणाभावेऽपि तत्रैव प्रतिषेधसिद्धेस्तदृव्यर्थं सजस्शसोः पररूपाभावं ज्ञापयतीत्यर्थः । उत्तरार्थंतयेति । 'इह किंचित् त्रपो' इत्यनाश्रित्येदम् । ननु विधेर्नियमो दुष्टोऽत आह—

१—'एतान्गाः पश्य' इति कीलहार्नपाठः । ‡ औतोऽम्शसोः ६ । १ । ६३ ।

दयं ब्रूयाद् 'दीर्घाच्छसि पूर्वसवर्णो भवती'ति । तन्नियमार्थं भविष्यति—'दीर्घाच्छस्येव नान्यत्रे'ति । सोऽयमेवं लघीयसा न्यासेन सिद्धे यदिज्ग्रहणं करोति तज्ज्ञापयत्याचार्यो 'न जस्शसोः पररूपं भवती'ति ।

अथवा पुनरस्तु योगविभागः । ननु चोक्तं 'योगविभागोऽन्यशास्त्रनिवृत्त्यर्थश्चेदम्यतिप्रसङ्ग' इति । नैष दोषः । अम्यपि* योगविभागः करिष्यते । 'अमि' । अमि यदुक्तं तन्न भवतीति । ततः 'पूर्वः' । पूर्वश्च भवत्यमीति ।

यदप्युच्यते 'नकाराभावश्च तस्मादित्यनन्तरनिर्देशा'दिति, कः पुनरर्हति तस्मादित्यनेनानन्तरं योगं प्रति निर्देष्टुम् । एवं किल प्रतिनिर्दिश्येत 'तस्मात्पूर्वसवर्णदीर्घा'दिति । तच्च न । एवं प्रतिनिर्दिश्यते 'तस्मादको दीर्घा'दिति । अथवा 'तस्मात्प्रथमयोर्दीर्घा'दिति ।

अथवा पुनरस्त्वम्येकयोगः । ननु चोक्तं 'योगविभागोऽन्यशास्त्रनिवृत्त्यर्थश्चेददम्यतिप्रसङ्ग' इति । नैष दोषः । 'मध्येऽपवादाः पूर्वान्विधीन्बाधन्त' इत्येवमयं योगविभागः पररूपं बाधिष्यतेऽमि पूर्वत्वं न बाधिष्यते । यद्येतदस्ति 'मध्येपवादाः'

प्र०—क्रियमाणस्य इज्ग्रहस्योत्तरार्थतया प्रयोजनवत्त्वाज्ज्ञापकत्वाभाव इत्यर्थः । दीर्घाच्छसीति । 'दीर्घादिज्जसो'रित्यस्मादपि लघुतरोऽयं सूत्रन्यास इति भावः । तस्मादिज्ग्रहणं नोत्तरार्थमेव क्रियते किंत्विहार्थमपीति ज्ञापकमेवेत्यर्थः ॥ अमि यदुक्तमिति । 'प्रथमयो'रिति योगविभागेन दीर्घत्वमित्यर्थः । तस्मादको दीर्घादिति । एकया बुद्धया अवस्थानिकत्रिसूत्रीविहितो दीर्घः परामृश्यत इत्यर्थः । 'अकः सवर्णे दीर्घ' इत्यनेन विहितस्य दीर्घस्यानर्थकः परामर्श इति मत्वाह—अथवेति । 'प्रथमयो'रित्येवं यो विहितो दीर्घः परामृश्यते इति सूत्रद्वयविषये नत्वं सिध्यति ।

मध्येऽपवादा इति । न्यायश्चायं न तु वचनम् । यद्वक्ष्यति—यद्येतदस्तीति । न हि

उ०—'लघुतरोऽयमिति । किंचिल्लाघवं प्रति क्वचिदनादरोऽस्तु, प्रकृष्टे तु लाघवे तदनादरो नोचित इत्ययं नियमो न दुष्ट इति भावः । भाष्ये—'दीर्घाच्छस्येवे'ति विपरीतनियमस्तु न, व्याख्यानात् । 'पश्चिमस्त्यमृगान् हन्ती'ति निर्देशाच्चेति भावः । 'अमी'ति विभक्ते 'नादिची'त्यतो 'ने'ति वर्तते । नन्वनन्तरस्येति न्यायात् पूर्वसवर्ण इति विहितदीर्घस्यैव परामर्शो युक्तोऽत आह—एकया बुद्ध्येति ।

न हि वचनस्येति । वचनं स्वविषये सर्वत्र प्रवर्तत इति न क्वचिन्न भवतीत्यर्थः । न्यायस्त्विति ।

* अमि पूर्वः ६ । १ । १०७ ।

'पुरस्तादपवादा' इति नार्थ एकेनापि योगविभागेन । 'पुरस्तादपवादा अनन्तरान्विधीन्बाधन्त' इत्येवं पररूपं सवर्णदीर्घत्वं बाधिष्यते, प्रथमयोः पूर्वसवर्णदीर्घत्वं न बाधिष्यते ।

अथवा सप्तमे* योगविभागः करिष्यते । इदमस्त्यतो दीर्घो यञि सुपि च [ ७ । ३ । १०१; १०२ ] इति । ततो वक्ष्यामि 'बहुवचने' । बहुवचने चातो दीर्घो भवति । ततो 'झल्येत्' । एकारश्च भवति बहुवचने झलीति ।

इहापि तर्हि प्राप्नोति—वृक्षाणाम् प्लक्षाणाम् । तत्र को दोषः ? दीर्घत्वे कृते ह्रस्वाश्रयो नुण्न प्राप्नोति† । इदमिह संप्रधार्यम्—दीर्घत्वं क्रियतां नुडिति किमत्र कर्तव्यम् ? परत्वाद्दीर्घत्वम् । नित्यं खल्वपि दीर्घत्वम् । कृतेऽपि नुटि प्राप्नोत्यकृतेऽपि । नित्यत्वात्परत्वाच्च दीर्घत्वे कृते ह्रस्वाश्रयो नुण्न प्राप्नोति । एवं तर्ह्याड्ग्रहणमिहापि प्रकृतमनुवर्तते । क्व प्रकृतम् ? 'आज्जसेरसुक्' [ ७ । १ । ५० ] इति । तेन कृतेऽपि दीर्घत्वे नुड्भविष्यति । इहापि तर्हि प्राप्नोति—कीलालपाम् शुभंयाम् । आतो लोपोऽत्र‡ बाधको भविष्यति । इदमिह संप्रधार्यम्—लोपः क्रियतां नुडिति किमत्र कर्तव्यम् ? परत्वान्नुट् । एवं तर्हि ह्रस्वनद्यापो नुडित्यत्रातो धातोः

प्र०—वचनस्यासत्तासंभावना । न्यायस्तु क्वचित्कश्चिदाश्रीयत इति युज्यते वक्तुम्–'यद्येतदस्ती'ति । यदा बाध्यानि लक्षणानि भेदेनापेक्ष्यन्ते तदा क्रमव्यतिक्रमे हेत्वभावात् पूर्वविज्ञातबाध्यविषयलाभाद्वा 'मध्येऽपवादा' इति 'पुरस्तादपवादा' इति चाश्रीयते । यदा तु लक्षणसमुदायो बाध्यत्वेनापेक्ष्यते तदा तस्यैकत्वान्नास्त्येवैतन्मध्येऽपवादा इति पुरस्तादपवादा इति च ।

अथवा सप्तम इति । 'वृक्ष अस्' इति स्थिते पूर्वस्य दीर्घविधानात्पररूपाभावाज्जस्यकः सवर्णे दीर्घ इति दीर्घः, शसि तु 'प्रथमयोः पूर्वसवर्ण' इति । एवं तर्हीति । अकारेण चाण्त्वादाकारो गृह्यते । कीलालपानामिति । 'ह्रस्वो नपुंसक' इति ह्रस्वत्वे, 'बहुवचने' इति दीर्घत्वे

उ०—लक्ष्यानुरोधादिति भावः । न्यायसिद्धत्वमेव दर्शयति–यदेति । क्वचिदनाश्रयणे बीजं दर्शयति–यदा त्विति । तदपेक्षायां च लक्ष्यानुरोध एव बीजम् । ननु 'निजां त्रयाणा'मित्यत्र त्रयाणाङ्ग्रहणेनात्र शास्त्रे क्रमव्यतिक्रमाश्रयणात्, क्रमव्यतिक्रमे हेत्वभावादिति चिन्त्यम् ।

अकः सवर्ण इतीति । 'दीर्घाज्जसि चे'ति पूर्वसवर्णदीर्घनिषेधादिति भावः । 'झल्ये'दिति च पूर्वविहितदीर्घापवादः । नन्वादित्यनुवृत्तावपि कथमाकारान्तान्नुडत आह—अकारेणेति । एवं चाड्ग्रहणं न कार्यमिति लाघवम् । ननु नपुंसकह्रस्वे कथमातो धातोरिति लोपोऽत आह—ह्रस्वो नपुंसक इति ।

* बहुवचने झल्येत् ७ । ३ । १०३ ।       † ह्रस्वनद्यापो नुट् ७ । १ । ५४ ।
‡ आतो धातोः ६ । ४ । १४० ।

[ ६ । ४ । १४० ] इत्यातो लोपः संबन्धमनुवर्तिष्यते । इहापि तर्हि प्राप्नोति—कीलालपानां+ ब्राह्मणकुलानाम् । 'नपुंसकस्य ने'त्यप्यनुवर्तिष्यते† ॥ १०२ ॥

## तस्माच्छसो नः पुंसि ॥ ६ । १ । १०३ ॥

किमिदं नत्वं पुंसां बहुत्वे भवत्याहोस्वित्पुंशब्दाद्बहुषु । कश्चात्र विशेषः ?

**नत्वं पुंसां बहुत्वे चेत्पुंशब्दादिष्यते स्त्रियाम् ।**

तन्न सिध्यति । भ्रूकुंसान्पश्येति ।

**नपुंसके तथैवेष्टं**

तन्न सिध्यति । षण्ढान्पश्य । पण्डकान्पश्येति ।

**स्त्रीशब्दाच्च प्रसज्यते ॥ १ ॥**

स्त्रीशब्दाच्च प्राप्नोति । चञ्चाः पश्य । वध्रिकाः पश्य । खरकुटीः* पश्य ।

अस्तु तर्हि पुंशब्दाद्बहुषु ।

प्र०—कृते, 'आतो धातो'रित्यधिकाराद् आकारलोपप्रसङ्गः । नपुंसकस्य नेति । 'ह्रस्वनद्यापो नु'डित्यत्र सूत्रे 'स्वमोर्नपुंसका'दित्यतो नपुंसकग्रहणं नेतराच्छन्दसी'त्यतो 'ने'ति चानुवर्तते, आतो धातोर्लोप इति च । ततो नपुंसकस्यातो धातोर्लोपाभावे नुडेव भविष्यतीत्यर्थः ॥ १०२ ॥

तस्मात् । किमिदमिति । 'पुंसी'ति किं शसो विशेषणं पुंबहुत्वे यः शसुत्पन्न' इति, अथ प्रकृतेः 'पुंशब्दाद्यः श'सिति प्रश्नः । भ्रूकुंसान् पश्येति । स्तनकेशसंबन्धात् स्त्रीप्रतिभासं भ्रूकुंसार्थं मन्यते । षण्ढानिति । षण्ढशब्देन प्रसवासमर्थस्य नपुंसकस्याभिधानम् ।

चञ्चा इति । चञ्चेव चञ्चा । 'इवे प्रतिकृतौ' 'संज्ञाया'मिति कन् । 'लुम्मनुष्य' इति

उ०—धातुभिन्नाकारान्तशब्दस्य आमि प्रयोग एव नानभिधानादिति न तत्र दोषः । 'आत' इति योगविभागात्तत्राप्यालोपो वा ॥ १०२ ॥

तस्माच्छसो । भाष्योक्तपक्षद्वये उपपत्तिमाह—पुंसीतीति । प्रत्ययार्थबहुत्वबोधकस्याध्याहृतपदस्य विशेषणमध्याहृतप्रकृतिवाचकस्य वेत्यत्र विनिगमकाभावादिति भावः । ननु पुंशब्दाद्यः शस पुंबहुत्व एवेति पक्षयोरविशेषोऽत आह-भाष्ये—पुंशब्दाद्बहुष्विति । यत्किञ्चिद्बहुत्वे इत्यर्थः । वस्तुतः स्त्रीत्वाभावेऽपि आरोपितलौकिकस्त्रीत्वाश्रयेणात्र दोषोद्भावनमित्याह—स्तनेत्यादि । स्त्रीवेषधारी नर्तकः पुरुषो भ्रूकुंसः । अत्र न पुंगतं बहुत्वं, पुंशब्दात्किञ्चिद्गते बहुत्वे तु शसस्ति ।

चञ्चाशब्दस्य नित्यस्त्रीत्वात्तदुत्तरशसः पुंबहुत्वे वृत्तिं दर्शयति—चञ्चेति । स्थूरादीनां स्त्रीशब्दत्वं

+ ह्रस्वो नपुंसके प्रातिपदिकस्य १ । २ । ४७; बहुवचने झल्येत् ७ । ३ । १०३ ।
† स्वमोर्नपुंसकात्; नेतराच्छन्दसि ७ । १ । २३; २६ ।
* संज्ञायां च; लुम्मनुष्ये ५ । ३ । ९७; ९८ ।

पुंशब्दादिति चेदिष्टं स्थूरापत्यं न सिध्यति ।

स्थूरान्पश्येति† ।

कुण्डिन्या अररकायाः

अपत्यं च न सिध्यति । कुण्डिनान्पश्य‡ । अररकान्पश्य† ।

पुंस्प्राधान्यात्प्रसिध्यति ॥ २ ॥

पुंस्प्रधाना एते शब्दास्ततो नत्वं भविष्यति ।

पुंस्प्राधान्ये त एव स्युर्ये दोषाः पूर्वचोदिताः ।

भ्रुकुंसान्पश्य । षण्ढान्पश्य । षण्डकान्पश्य । चञ्चाः पश्य । वध्रिकाः पश्य । खरकुटीः पश्येति ।

तस्माद्यस्मिन्पक्षेऽल्पीयांसो दोषास्तमास्थाय प्रतिविधेयं दोषेषु ।

प्र०—लुप् । चञ्चाशब्देन । पुंसोऽभिधानान्नत्वप्रसङ्गः । स्थूरानिति । स्थूराया अपत्यानि । 'गर्गादिभ्यो यञ्' । 'यञञोश्चे'ति लुक् । 'लुक्तद्धितलुकी'ति टापो लुक् । ततः स्थूरशब्दस्य स्त्रीलिङ्गत्वान्नत्वाप्रसङ्गः । कुण्डिनानिति । कुण्डिन्या अपत्यानि । 'गर्गादिभ्यो यञ्' । 'आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच्' इति यञो लुक् । कुण्डिनीशब्दस्य कुण्डिनजादेशः । स च स्त्रीलिङ्गादेशत्वात् स्त्रीशब्दः । अररकायाः पूर्ववद्यञादि ।

तस्माद्यस्मिन्निति । अर्थपक्षं परत आश्रयिष्यति । द्वयोरपि तु पक्षयोर्दोषाभावः, तथा हि पुंवाची शब्दः 'पुंशब्द' उच्यते । ततो भ्रुकुंसादयः शब्दाः पुमांसमाचक्षाणाः पुंशब्दा उच्यन्त इति नानयोः पक्षयोः फलभेदः । षण्ढषण्डकशब्दाभ्यामपि पुंस्त्वानुगत एव नपुंसकरूपोऽर्थ उच्यते । यथा 'नपुंसकोऽभव'दिति नपुंसकशब्देन । स्त्रीसूत्रे हि न वैयाकरणैः शक्यं

उ०—दर्शयति-स्थूराया इति । यद्यपि द्वितीयपक्षे षण्ढानिति न सिध्यति तथापि 'भ्रुकुंसान्' 'चञ्चा' इति सिध्यतीत्याशयः । भाष्ये—पुंस्प्राधान्ये इति । यदि स्थूरादीनां पुंस्प्राधान्यात्पुंशब्दत्वं तदा भ्रुकुंसादीनां तत्त्वाभावाच्चञ्चादीनां च तत्त्वादुक्तदोषा अत्रापीत्यर्थः ।

'तस्मा'दित्यादिभाष्येण यः पक्षः परिगृहीतस्तं दर्शयति—अर्थपक्षमिति । शास्त्रीयार्थपक्षमित्यर्थः । द्वयोरपि त्विति । शास्त्रीयलिङ्गग्रहणे पुंसां बहुत्वे पुंशब्दाद्बहुष्विति द्वयोः पक्षयोरित्यर्थः । लौकिकलिङ्गग्रहणे पक्षद्वयस्याप्यधिकदोषग्रस्तत्वाच्छास्त्रीयलिङ्गग्रहणमास्थाय लिङ्गस्य प्रातिपदिकार्थत्वात्पुंसि वर्तमानात्प्रातिपदिकादित्येवं व्याख्येयम् । तत्र हि चञ्चा इत्याद्यधिद्धिरेक एव दोष इति 'तस्माद्यस्मिन्पक्षे' इत्यादिभाष्यार्थं

† गर्गादिभ्यो यञ् ४ । १ । १०५; यञञोश्च २ । ४ । ६४; लुक् तद्धितलुकि १ । २ । ४९ ।
‡ गर्गादिभ्यो यञ् ४ । १ । १०५; आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् २ । ४ । ७० ।

नत्वं पुसां बहुत्वे चेत्पुंशब्दादिष्यते स्त्रियाम् ।
नपुंसके तथैवेष्टं स्त्रीशब्दाच्च प्रसज्यते ॥ १ ॥
पुंशब्दादिति चेदिष्टं स्थूरापत्यं न सिध्यति ।
कुण्डिन्या अररकायाः पुंस्प्राधान्यात्प्रसिध्यति ॥ २ ॥
पुंस्प्राधान्ये त एव स्युर्थे दोषाः पूर्वचोदिताः ।
तस्मादर्थे भवेन्नत्वं वध्रिकादिषु युक्तवत्§ ॥ ३ ॥ १०३ ॥

## अमि पूर्वः ॥ ६ । १ । १०७ ॥

'वा छन्दसी'त्येव* । यमीं च यम्यं च, शमीं च शम्यं च, गौरीं च गौर्यं च, किशोरीं च किशोर्यं च ॥ १०७ ॥

## संप्रसारणाच्च ॥ ६ । १ । १०८ ॥

'वा छन्दसी'त्येव* । मित्रावरुणौ यज्यमानः । मित्रावरुणौ इज्यमानः ।

---

प्र०—लौकिकलिङ्गमास्थातु'मित्यादिना विशिष्टमेव लिङ्गलक्षणं भाष्यकारेणाश्रितम् । स्थूराद-योऽपि प्रत्ययलुकि कृते पुंसि वर्तमानाः पुंशब्दा एव भवन्ति । वध्रिकादिषु युक्तवदिति । 'लुपि युक्तवद्व्यक्तिवचने'इति पुंसः स्त्रीत्वातिदेशान्नत्वाभाव इत्यर्थः ॥ १०३ ॥

अमि पूर्वः । वा च्छन्दसीत्येवेति । एतच्च वाक्यभेदेन संबध्यते । अन्यथा भाषायां न स्यात् । शम्यं चेति । विकल्पविधानसामर्थ्यात्पूर्वत्वाभावे पूर्वसवर्णदीर्घोऽपि न भवति तयोरत्र विशेषाभावादिति यणादेश एव भवति । १०७ ॥

संप्रसारणाच्च । समानाङ्गग्रहणमिति । यदि संप्रसारणं तस्माच्च परोऽजेकस्मिन्नङ्गे

---

उ०—इत्यर्थः । प्रतिविधानं तु 'वध्रिकादि'ष्विति वक्ष्यति । पुंशब्दा उच्यन्त इति । एवं च पुंस्त्वविशिष्टवा-चकतया तेषां पुंशब्दाद्बहुत्वे इत्यर्थे पुंस्त्वविशिष्टानां बहुत्वे इत्यर्थे वा न दोष इत्यर्थः । शास्त्रीयार्थग्रहणमेव दर्शयति—स्त्रीसूत्रे हीति । अतएव नपुंसकस्य पुंस्त्वानुगतता । नन्वनेन न्यायेन वध्रिकादयोऽपि पुंशब्दा अत आह—लुपीति । स्वलिङ्गप्रयुक्तकार्याभावोऽपि तेनातिदिश्यत इति भावः ॥ १०३ ॥

अमि पूर्वः । ननु यणादेशबाधकपूर्वसवर्णदीर्घबाधकपूर्वरूपत्वे विकल्पितेऽपि तदभावे दीर्घ एव स्यादत आह—विकल्पेति । 'अमि'मित्यादौ विशेषसत्त्वेऽप्येतद्विषयकलक्षणवैयर्थ्यापत्तिरिति भावः ॥१०७॥

संप्रसारणाच्च । समानशब्द एकपर्यायस्तदाह—एकस्मिन्नङ्गे इति । यद्यपि

---

§ लुपि युक्तवद् व्यक्तिवचने १ । २ । ५१ । * वा छन्दसि ६ । १ । १०६ ।

संप्रसारणात्परपूर्वत्वे समानाङ्गग्रहणमसमानाङ्गप्रतिषेधार्थम् ॥ १ ॥

संप्रसारणात्परपूर्वत्वे समानाङ्गग्रहणं कर्तव्यम् । किं प्रयोजनम् ? असमानाङ्गप्रतिषेधार्थम् । असमानाङ्गस्य मा भूदिति । शकहूर्थम् परिव्यर्थम्† ।

सिद्धमसंप्रसारणात् ॥ २ ॥

सिद्धमेतत् । कथम् ? असंप्रसारणात् । [ १कथमसंप्रसारणम् ? ] वाक्यस्य संप्रसारणसंज्ञा न वर्णस्य ।

अथ वर्णस्य संप्रसारणसंज्ञायां दोष एव । वर्णस्य च संप्रसारणसंज्ञायां न दोषः । कथम् ? अन्योऽयं संप्रसारणासंप्रसारणयोः स्थान एक आदिश्यते ।

कार्यकृतत्वाद्वा ॥ ३ ॥

अथवा सकृत्कृतं पूर्वत्वमिति कृत्वा पुनर्न भविष्यति । तद्यथा—'वसन्ते ब्राह्मणोऽग्नीनादधीते'ति सकृदाधाय कृतः शास्त्रार्थ इति कृत्वा पुनःप्रवृत्तिर्न भवति ।

प्र०—भवतस्तदा पूर्वैकादेशो भवति नान्यथा । शकहूर्थमिति । अन्यस्मिन्नङ्गे संप्रसारणमन्यस्मिन्नजिति पूर्वैकादेशाभावः । अत्रान्तवद्भावेनोकारस्य संप्रसारणत्वम् ।

सिद्धमिति । वाक्यस्य संप्रसारणसंज्ञायां वर्णस्य नास्ति संप्रसारणसंज्ञा । स तु संप्रसारणनिर्वर्तितत्वात्संप्रसारणव्यपदेशमौपचारिकं लभते । 'शकहूर्थ'मित्यादौ त्वेकादेशशास्त्रेण निर्वर्तित उकार इति नास्ति संप्रसारणव्यपदेशः । वर्णस्य चेति । यणः स्थाने यो वर्णः स संप्रसारणसंज्ञः, एकादेशस्तु न यण्स्थानिकः । अन्तवद्भावोऽपि नास्ति, वर्णविधावन्तादिवद्भावप्रतिषेधात् । अन्तरङ्गत्वाच्च 'हल' इति संप्रसारणदीर्घे कृते उकारस्य संप्रसारणसंज्ञाया अभावात्पूर्वैकादेशाभावः । संप्रसारणदीर्घे तु वचनसामर्थ्यादेकादेशस्यान्तवद्भावात्संप्रसारणव्यपदेश आश्रीयते ।

उ०—'शकहूर्थ'मित्यस्य सुनिरूपितमेकमङ्गत्वं तथापि भिन्नाङ्गस्थत्वभावोऽत्र विवक्षित इति बोध्यम् । ननु संप्रसारणस्थानिकोऽयं न संप्रसारणमत आह—अत्रान्तवदिति । 'हल'इत्यादिज्ञापकात्तादूरूप्यस्याप्यतिदेश इत्यभिमानः ।

निर्वर्तित उकार इति । संप्रसारणनिर्वर्तितत्वं स्वशास्त्रीयत्वान्नातिदिश्यत इति भावः । दीर्घे कृते इति । तद्वचनसामर्थ्यात्साक्षात्संप्रसारणस्थानिकस्य वर्णरूपमपि संप्रसारणत्वमतिदिश्यते न तु तत्स्थानिकस्यापीति भावस्तदाह—संप्रसारणदीर्घे त्विति । 'एक' इति भाष्यस्य तस्यैवातत्त्वे तत्स्थानिकस्य सुतरामतत्त्वमिति भावः ।

† वचिस्वपियजादीनां किति; सम्प्रसारणाच्च ६ । १ । १५; १०८; हलः ६ । ४ । २; इको यणचि ६ । १ । ७७ । १—क्वचित्कः पाठः

विषम उपन्यासः । युक्तं यत्तस्यैव पुनःप्रवृत्तिर्न भवति, यत्तु तदाश्रयं प्राप्नोति न तच्छक्यं बाधितुम् । तद्यथा—'वसन्ते ब्राह्मणोऽग्निष्टोमादिभिः क्रतुभिर्यजेते'त्यग्न्याधाननिमित्तं वसन्ते वसन्त इज्यते । तस्मात्पूर्वोक्त एव परिहारः 'सिद्धमसंप्रसारणा'दिति ॥ यदि तर्हि नेदं संप्रसारणं 'हूत' इति दीर्घत्वं‡ न प्राप्नोति ।

## दीर्घत्वं वचनप्रामाण्यात् ॥ ४ ॥

अनवकाशं दीर्घत्वं तद्वचनप्रामाण्याद्भविष्यति ।

## अन्तवत्त्वाद्वा ॥ ५ ॥

अथवा पूर्वस्य कार्यं प्रत्यन्तवद्भवतीति दीर्घत्वं भविष्यति ।

## आटो वृद्धेरियङ् ॥ ६ ॥

आटो वृद्धिर्भवतीत्येतस्मादियङ् भवति विप्रतिषेधेन+ । आटो वृद्धिर्भवतीत्य-

प्र०—कार्यकृतत्वाद्वेति । शास्त्रस्यास्मिन्विषये प्रवृत्तत्वात्पुनः प्रवृत्त्यभावः । युक्तं यत्तस्यैवेति । पराङ्गमग्न्याधानं यज्ञमुखप्रतिपत्त्यर्थमिति पुनः क्रियमाणं फलभेदाभावत्तदेवेत्युच्यते । तत्प्रयोजनाभाभावान्नानुष्ठीयते । यत्तु तदाश्रयमिति । यस्मात् फलावाप्तिस्तत् फलभेदाद्भिद्यमानमसकृदनुष्ठीयते इति भावः । अग्न्याधाननिमित्तमिति । अग्न्याधानं निमित्तं हेतुरस्येति बहुव्रीहिः । क्रियाविशेषणं चैतत् । एवमिहापि शास्त्रपूर्वके ज्ञाने प्रयोगे वा फलमिति फलान्तरार्थी शब्दान्तरे लक्षणमावर्तयेदित्यपरिहारः 'कार्यकृतत्वा'दिति ।

उ०—शास्त्रस्येति । 'लक्ष्ये लक्षणस्ये'ति न्यायादिति भावः । लक्ष्यसंस्कार एव हि शास्त्रीयकार्यविधेः फलमिति तात्पर्यम् । ननु पुनः क्रियमाणं कर्मान्तरमेवेति 'तस्यैवे'त्युक्तमत आह—पराङ्गमिति । परस्याग्निहोत्रादेरङ्गमित्यर्थः । तदेवाह—यज्ञमुखेति । यज्ञोपादेरित्यर्थः । प्रतिपत्तिरत्र प्राप्तिः । आधानादिसंस्कृताग्निष्वेव ज्योतिष्टोमाग्निहोत्रादिविधानादिति भावः । यस्मात्फलावाप्तिरिति । 'अङ्गभूयस्त्वात्फलभूयस्त्व'मिति न्यायेनेत्यर्थः । इदमुपलक्षणं नैमित्तिकानां तेषामपि प्रतिनिमित्तमावृत्तेः । अग्न्याधाननिमित्तमिति षष्ठीतत्पुरुष इति भ्रमवारणायाह—बहुव्रीहिरिति । प्रकृते योजयति—एवमिहापीति । 'एकः शब्दः सम्यग्ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके कामधुग्भवती'ति श्रुतेः शास्त्रस्यापि प्रयोगपर्यन्तं व्यापार इत्युक्तमिति भावः । प्रयोगे वेति । वाशब्दश्चार्थे । शब्दान्तरे इति । 'हूत'इत्यादाविव 'शकन्ध्व'मित्यादावपि लक्षणमावर्तयेत्तद्विषयलक्षणोपप्लवमपि कुर्यात् । एवं च यथाधानमूलकं क्रतोः करणं भवति लक्षणान्तरविहितत्वात्,

‡ हलः ६ । ४ । २ ।
+ आटश्च ६ । १ । ९०; अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ६ । ४ । ७७

स्यावकाशः—ऐन्द्रिष्ट ऐहिष्ट । इयङोऽवकाशः—अधीयाते अधीयते । इहोभयं प्राप्नोति—अध्यैयाताम् अध्यैयत । इयङादेशो भवति विप्रतिषेधेन ।

नैष युक्तो विप्रतिषेधः । अन्तरङ्गाटो वृद्धिः । कान्तरङ्गता ? वर्णावाश्रित्याटो वृद्धिरङ्गस्येयङादेशः । एवं तर्हीदमिह संप्रधार्यम्—आट् क्रियतामियङादेश इति किमत्र कर्तव्यम्* ? परत्वादियङ् । नित्य आडागमः । कृतेऽपीयङि प्राप्नोत्यकृतेऽपि । इयङपि नित्यः । कृतेऽप्याटि प्राप्नोत्यकृतेऽपि । अनित्य इयङ् न हि कृत आटि प्राप्नोति । किं कारणम् ? अन्तरङ्गाटो वृद्धिः । यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् । न चात्राडेवेयङो निमित्तं विहन्त्यवश्यं लक्षणान्तरमाटो वृद्धिः प्रतीक्ष्या । उभयोर्नित्ययोः परत्वादियङादेशः ।

## आद्गुणात्सवर्णदीर्घत्वमाङभ्यासयोः ॥ ७ ॥

आद्गुणात्सवर्णदीर्घत्वं भवति विप्रतिषेधेन† । क्व ? आङभ्यासयोः । आद्गु-

प्र०—अध्यैयातामिति । कृतेषु लादेशेष्वाट् क्रियते इति प्रक्रियामाश्रित्य विचार्यते । अन्तरङ्गेति । 'वार्णादाङ्ग'मित्यनाश्रित्येदमुच्यते । यस्य च लक्षणान्तरेणेति । एतत् कचिदाश्रीयते कचिन्न । यथोक्तं 'तद्ब्राह्मणकुलमित्यादौ त्यदादिभ्यो लुग्वक्तव्य'इति । यस्य च लक्षणान्तरेणेति त्वाश्रीयमाणे नित्यत्वाल्लुक्सिद्धस्तस्य ह्यतोऽमिति लक्षणेन निमित्तं विहन्यते न पुनस्त्यदाद्यत्वे-नैवेति न स्यादनित्यत्वं लुकः । तत्र यदा लक्षणयोरेव विचारः 'किं लक्षणं नित्यं किमनित्य'मिति

उ०—तथास्यापि 'शकह्वर्थ'मित्यादौ 'शकहू'रित्येतद्विषयकैतल्लक्षणविहितसंप्रसारणैकादेशमूलकात्तद्विषयकलक्षणान्तरात्स्यादेव संप्रसारणैकादेश इति तात्पर्यम् ॥ भाष्ये—अन्तवत्त्वाद्वेति । वर्णाश्रयेऽपि तत्प्रवृत्तिस्तु 'हल'इति ज्ञापकादेवेति बोध्यम् । वचनप्रामाण्यादिति पूर्वभाष्यस्य तत्रत्यसंप्रसारणपदं संप्रसारणस्थानिकपरमित्यर्थ इति पक्षयोर्भेदः ।

ननु परत्वाल्लादेशेषु अकृतेष्वाडिति कथमियङ्वृद्ध्योर्युगपत्प्राप्तिरत आह—कृतेष्विति । लमात्रापेक्षत्वेनान्तरङ्गत्वादिति भावः । 'लावस्थायाम'डिति पक्षे तु अन्तरङ्गत्वादवृद्धावेतद्रूपासिद्धिः । कथचिद्वार्णादाङ्गमित्याश्रयणेऽप्यनेकाच्त्वाद्यणापत्तिः । तस्मादध्यैयातामित्यादि छान्दसम् । तत्र हि 'बहुलं छन्दस्यमाङ्योगेऽपी'ति बहुलग्रहणादादेशोत्तरं परत्वादियङि तत आटि वृद्धिरिति बोध्यम् । यथोक्तमिति । 'स्वमोर्नपुंसका'दित्यत्र भाष्ये इदमुक्तम् । त्यदादिभ्यः परयोः स्वमोः परमपि त्यदाद्यत्वं बाधित्वा लुग्वक्तव्य इति तदर्थः । तत्र नित्यत्वं लुक आशङ्क्यात्वे कृते अमा बाधादनित्यो लुगिति भाष्ये उक्तम् । तत्र यदेति । अन्येन बाधेऽपि लक्षणस्य कृतेऽकृते च तस्मिन्प्रसङ्गसत्त्वादस्त्येव नित्यत्वमिति भावः । बाधकाबाधितप्रसङ्ग

* आडजादीनाम्; अचि श्नुधातु० ६ । ४ । ७२; ७७ ।

† आद् गुणः; अकः सवर्णे दीर्घः ६ । १ । ८७; १०१ ।

णस्यावकाशः—खट्वेन्द्रः खट्वोदकम्। सवर्णदीर्घत्वस्यावकाशः—दण्डाग्रम् क्षुपाग्रम्। इहोभयं प्राप्नोति—अद्य आ ऊढा अद्योढा। कदा आ ऊढा कदोढा। उप इ इजतुः उपेजतुः। उप उ उप्तुः उपोपतुः। सवर्णदीर्घत्वं भवति विप्रतिषेधेन।

अभ्यासार्थेन तावन्नार्थः। अस्त्वत्राद्गुणः, [ आद्गुणे कृते ] अयवौ च हलादिशेषः‡ पुनराद्गुणो भविष्यति। भवेत्सिद्धम् उपेजतुः उपेजुरिति। इदं तु न सिध्यति उपोपतुः उपोपुरिति। अत्र ह्याद्गुणे कृत 'ओदन्तो निपात' इति प्रगृह्यसंज्ञा, 'प्रगृह्यः प्रकृत्ये'ति* प्रगृह्याश्रयः प्रकृतिभावः प्राप्नोति। पदान्तप्रकरणे प्रकृतिभावो न चैष पदान्तः। पदान्तभक्तः पदान्तग्रहणेन ग्राहिष्यते। एवं तर्ह्येतदेवात्र नास्त्योदन्तो निपात इति। किं कारणम्? 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवे'ति।

इहापि तर्हि अद्योढा कदोढेति भवेद्रूपं सिद्धं स्यात्।

---

प्र०—तदा च 'यस्य च लक्षणान्तरेणे'ति न्यायः। यदा तु कार्ययोर्विचारः 'कस्मिन् कार्ये प्रवृत्ते किं न प्रवर्तत' इति तदा नास्त्येतद्'यस्य च लक्षणान्तरेणे'ति।

उप इ इजतुरिति। पूर्वं सवर्णदीर्घत्वं भवति पश्चादाद्गुणः। अन्तरङ्गत्वादप्येतत्सिध्यति। प्रकारान्तरेण तत्सिद्धिं प्रदर्शयितुमाह—अभ्यासेति। हलादिशेष इति। अभ्यासानभ्यासयोरेकादेश एकारोऽभ्यासस्यादिवद्भावादभ्यासग्रहणेन गृह्यते, तत्स्थानिकोऽप्ययादेशः स्थानिवद्भावादभ्यास इति भावः। एकारस्य त्वभ्यासह्रस्वो न भवति। ह्रस्वे कर्तव्ये नाभ्यासादिर्वित्यन्तादिवद्भावनिषेधात्। पदान्तभक्त इति। अन्तवद्भावात्पदान्तकार्यं लभत इत्यर्थः। इहापीति—विप्रतिषेधोपालम्भः।

---

उ०—एत्र ग्राह्य इत्यत्र न मानमिति तात्पर्यम्। यदा त्विति। बाधकाबाधितप्रसङ्ग एव यदा गृह्यत इति तात्पर्यम्। 'किं प्रवर्तत' इति शब्देन सूचितमेतत्।

पश्चादाद्गुण इति। पूर्वं ह्याद्गुणेऽनिष्टं स्यादतो विप्रतिषेधाश्रय इति भावः। अन्तरङ्गत्वादपीति। एकपदाश्रयत्वाद्दीर्घोऽन्तरङ्ग इत्यर्थः। अभ्यासानभ्यासैकादेशतत्स्थानिकायादेशयोरभ्यासत्वाभावोऽत आह—अभ्यासेत्यादि। 'लक्ष्ये लक्षणस्ये'ति तु न लक्ष्यभेदादिति भावः। अन्तवद्भावनिषेधादिति। तत्प्रत्याख्याने तु बहिरङ्गस्य गुणस्यासिद्धत्वाल्लक्ष्यभेदाभावेन तत्प्रवृत्तिरिति बोध्यम्। ओकारस्य कथं पदान्तत्वमत आह—अन्तवद्भावादिति। भाष्ये—पदान्तभक्त इत्यस्य पदान्तस्थानिक इत्यर्थः। विप्रतिषे-

---

१—क्वाचित्कः पाठः।

‡ एचोऽयवायावः ६।१।७८; हलादिः शेषः ७।४।६०।

* ओत् १।१।१५; प्लुतप्रगृह्या अचि नित्यम् ६।१।१२५।

**स्वरदोषस्तु ॥ ८ ॥**

स्वरे तु दोषो भवति । अद्योढा* एवं स्वरः प्रसज्येत, अद्योढा† इति चेष्यते ॥ आङि पररूपवचनं‡ चेदानीमनर्थकं स्यात् । नानर्थकम् । ज्ञापकार्थम् । किं ज्ञाप्यम् ?

**आङि पररूपवचनं तु ज्ञापकमन्तरङ्गबलीयस्त्वस्य ॥ ९ ॥**

एतज्ज्ञापयत्याचार्योऽन्तरङ्गं बलीयो भवतीति । किं पुनरिहान्तरङ्गं किं बहिरङ्गं यावता द्वे पदे आश्रित्य सवर्णदीर्घत्वमपि भवत्याद्गुणोऽपि । धातूपसर्गयोर्यत्कार्यं तदन्तरङ्गम् । कुत एतत् ? पूर्वमुपसर्गस्य हि धातुना योगो भवति नाद्यशब्देन । किमर्थं तर्ह्यद्यशब्दः प्रयुज्यते ? अद्यशब्दस्यापि समुदायेन योगो भवति ॥ किमेतस्य ज्ञापने प्रयोजनम् ?

प्र०—स्वरदोषस्त्विति । अद्यशब्द प्रत्ययस्वरेणान्तोदात्तः । आङ् 'गतिरनन्तर' इति पूर्वपदप्रकृतिस्वरेणोदात्तः । शिष्टमनुदात्तम् । तत्र यदि पूर्वं सवर्णदीर्घः स्यात्तदा द्वयोरुदात्तयोरेकादेश उदात्तस्तदाद्गुण 'एकादेश उदात्तेनोदात्तः' 'स्वरितो वानुदात्ते पदादा'विति पक्ष उदात्तः स्यात्पक्षे स्वरितः । यदा तु पूर्वमाद्गुणः पश्चा'दोमाङोश्चे'ति पररूपं तदा 'पूर्वत्रासिद्ध'मिति पररूपे कर्तव्ये एकादेशस्वरयोरुदात्तस्वरितयोरसिद्धत्वाच्छ्रावदृष्ट्यास्वरस्यैकादेशस्य पूर्वेणोदात्तेन सहैकादेश आन्तरतम्यादुदात्त एव भवति ।

आङि पररूपवचनं चेति । न केवलं स्वरदोषो यावदाचार्यवचनमपि त्वया न प्रमाणीकृतमित्यर्थः । विप्रतिषेधवाद्यानर्थक्यं परिहर्तुमाह—नानर्थकमिति । यदा पूर्वमाद्गुणः प्रवर्तते तदा 'वृद्धिरेची'ति वृद्धिबाधनार्थमोमाङोश्चेति वक्तव्यमित्यज्ञापकम् । विप्रतिषेधे त्वाश्रीयमाणे सवर्णदीर्घेण सिद्धे रूपे पररूपवचन ज्ञापकं भवति ।

नाद्यशब्देनेति । अद्येत्यस्याधारार्थस्याङा संबन्धो नास्ति, क्रियासापेक्षत्वादाधारस्य ।

उ०—धोपालम्भ इति । विप्रतिषेधाङ्गीकारे रूपसिद्धावपि स्वरदोष इत्यर्थः ।

ननु पूर्वमाद्गुणे तस्य पक्षे स्वरितत्वेन पररूपस्य स्वरितत्वं, पक्षे तूदात्तत्वमेवेति न विशेषोऽत आह—एकादेशस्वरयोरिति । उदात्त एवेति । तत्त्वमेवेष्यत इति विप्रतिषेधो दुष्ट इति भावः । पररूपवचनं चेति । 'च'शब्दार्थं दर्शयति—न केवलमिति । न प्रमाणीकृतमिति । विप्रतिषेधेन पूर्वं सवर्णदीर्घे पश्चादाद्गुणेन सिद्धेः पररूपविधानं व्यर्थमिति भावः । ज्ञापकं भवतीति । एवं चान्तरङ्गबलीयस्त्वज्ञापकबोधनायायं विप्रतिषेधो मयोक्तो न तु स्थितोऽयमिति न स्वरे दोष इत्यर्थः ।

१—'स्वरे दोषस्तु' इति कीलहार्नपाठः ।

* गतिरनन्तरः ६ । २ । ४९; स्वरितो वानुदात्ते पदादौ ८ । २ । ६ ।

† स्वरितो वानुदात्ते पदादौ; नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ८ । २ । ६; २ ।

‡ ओमाङोश्च ६ । १ । ९५ ।

प्रयोजनं पूर्वसवर्णपूर्वत्वतद्दिलोपटेनङेर्यङिस्मिन्ङिणलौत्वमन्तरङ्गं बहिरङ्गलक्षणाद्वर्णविकारात् ॥ १० ॥

पूर्वसवर्णः प्रयोजनम् । अग्नी अत्र । आयू अत्र । पूर्वसवर्णश्च प्राप्नोति बहिरङ्गलक्षणश्च वर्णविकार आवादेशः* । पूर्वसवर्णदीर्घत्वं भवत्यन्तरङ्गतः । पूर्वसवर्ण ।

पूर्वत्व—शकह्वर्थम् परिव्यर्थम् । पूर्वत्वं च प्राप्नोति बहिरङ्गलक्षणश्च वर्णविकारः सवर्णदीर्घत्वम्† । पूर्वत्वं भवत्यन्तरङ्गतः । पूर्वत्व ।

तद्दिलोप । अकार्यत्र अहार्यत्र । पचेदम् । तद्दिलोपौ च प्राप्नुतो बहिरङ्गलक्षणश्च वर्णविकारः सवर्णदीर्घत्वम्‡ । तद्दिलोपौ भवतोऽन्तरङ्गतः । तद्दिलोप ।

टेन—वृक्षेणात्र प्लक्षेणात्र । इनादेशश्च प्राप्नोति बहिरङ्गलक्षणश्च वर्णविकारः सवर्णदीर्घत्वम्§ । इनादेशो भवत्यन्तरङ्गतः । टेन ।

ङेर्य—वृक्षायात्र प्लक्षायात्र । ङेर्यादेशश्च¶ प्राप्नोति बहिरङ्गलक्षणश्च वर्णविकार 'एङः पदान्तादति' [ ६ । १ । १०९ ] इति परपूर्वत्वम् । ङेर्यादेशो भवत्यन्तरङ्गतः । ङेर्य ।

प्र०—अडादिव्यवस्थार्थं तु धातूपसर्गौ पृथगुपदिष्टौ । परमार्थतस्तु धातूपसर्गसमुदायः सङ्ग्रामयतिवत् क्रियाविशेषवाचीति भावः ।

अग्नी अत्रेति । अग्नि औ अत्रेति स्थिते विचारः । एवं शकहू आ अर्थम्, अकारि त

उ०—भाष्ये—पूर्वमुपसर्गस्य हीति । धातोस्तदर्थान्तर्भावेण बोधजनकत्वस्य तत्संबन्धं विनाभावादित्यर्थः । नाद्यशब्देनेति । पृथगुपसर्गस्यार्थाभावादिति भावः । किमर्थं तर्हीति । आङ इव विशिष्टस्याप्यधातुत्वादिति भावः । समुदायेनेति । उपसर्गद्योत्यार्थसहितधात्वर्थेनेत्यर्थः । एवं चान्तरङ्गार्थकशब्दनिमित्तत्वेनोपसर्गधातुकार्यमन्तरङ्गमिति भावः । निरूपयिष्यते चेदं 'सुट्कात्पूर्व' इत्यत्र । एवं च भिन्नपदवाच्यकारकसंबन्ध उपसर्गसंज्ञकशब्दयोगादनन्तरमेवेति सूचितमिति दिक् । ननूपसर्गस्य क्रियाविशेषप्रतीतिहेतुत्वात्तेनापि संबन्धो युक्त एवेत्यत आह—अडादीति । 'अग्नी अत्रे'त्यादौ सर्वत्र पदान्तरापेक्षत्वाद्वर्णविकाराणां बहिरङ्गत्वं बोध्यम् ।

* प्रथमयोः पूर्वसवर्णः; एचोऽयवायावः ६ । १ । १०२; ७८ ।

† सम्प्रसारणाच्च; अकः सवर्णे दीर्घः ६ । १ । १०८; १०१ ।

‡ चिलो लुक्; अतो हेः ६ । ४ । १०४; १०५; अकः सवर्णे दीर्घः ६ । १ । १०१ ।

§ टाङसिङसामिनात्स्याः ७ । १ । १२; अकः सवर्णे दीर्घः ६ । १ । १०१ ।

¶ ङेर्यः ७ । १ । १३ ।

ङिस्मिन्—यस्मिन्निदम् तस्मिन्निदम् । स्मिन्भावश्च प्राप्नोति बहिरङ्गलक्षणश्च वर्णविकारः सवर्णदीर्घत्वम्× । स्मिन्भावो भवत्यन्तरङ्गतः । ङिस्मिन् ।

ङिणलौत्वम्—अग्नाविदम् । ययावत्र । ङिणलौत्वं प्राप्नोति बहिरङ्गलक्षणश्च वर्णविकारः सवर्णदीर्घत्वम्* । औत्वं भवत्यन्तरङ्गतः ।

नैतानि सन्ति प्रयोजनानि । विप्रतिषेधेनाप्येतानि सिद्धानि† ।

इदं तर्हि प्रयोजनम्—वृक्षा अत्र । प्लक्षा अत्र । पूर्वसवर्णश्च‡ प्राप्नोति बहिरङ्गलक्षणश्च वर्णविकारोऽतो रोरप्लुतादप्लुते [ ६ । १ । ११३ ] इत्युत्वम् । पूर्वसवर्णो भवत्यन्तरङ्गतः । न चावश्यमिदमेव प्रयोजनम् । आद्ये योगे बहूनि प्रयोजनानि सन्ति यदर्थमेषा परिभाषा कर्तव्या । प्रतिविधेयं दोषेषु§ ॥ १०८ ॥

## ख्यत्यात्परस्य ॥ ६ । १ । ११२ ॥

किमिदं ख्यत्यादिति ? सखिपत्योर्विकृतग्रहणम्+ । किं पुनः कारणं सखिपत्योर्विकृतग्रहणं क्रियते न 'सखिपतिभ्या'मित्येवोच्येत ? नैवं शक्यम् । गरीयांश्चैव हि

---

प्र०—अत्र, पच हि इदम्, वृक्ष आ अत्र. वृक्ष ए अत्र, अग्नि इ इदम्, यया अ अत्र ।

वृक्षा अत्रेति । अनुदाहरणमेतदित्याहुः । 'वृक्ष अस् अत्र' इति स्थिते कृते रुत्वे उत्वस्य प्राप्तिः । तच्च रुत्वं 'पूर्वत्रासिद्धि'मिति पूर्वसवर्णदीर्घे क्रियमाणेऽसिद्धम्, उत्वे एव त्वाश्रयात्सिद्धं वृक्षोऽत्रेति । ततश्च पूर्वसवर्णदीर्घेणैव पूर्वं भाव्यम् । तत्र कृते अतः परो रुर्न भवतीत्युत्वाभावः । प्रतिविधेयमिति । 'पूर्वोत्तरपदयोर्वृद्धिस्वरावेकादेशा'दित्यादयो दोषा विप्रतिषेधसूत्रे उक्ताः ॥१०८॥

ख्यत्यात् । किमिदमिति । किमकारान्तयोर्ग्रहणमथ कृतयणादेशयोः ? आद्ये पक्षे मुख्यापत्यादीनां ग्रहणप्रसङ्ग इति मत्वा प्रश्नः । सखिपत्योरिति । 'सख्युर्य.' 'पत्युर्न' इति

---

उ०—आहुरिति । तद्ध्वनयन्नाह—नावश्यमिदमेवेति भाष्ये । आद्ययोग इति । विप्रतिषेधसूत्रे इत्यर्थः । प्रतिविधेयं दोषेष्विति । अनित्यत्वमङ्गीकार्यमिति भावः॥ १०८ ॥

ख्यत्यात् । अथ कृतयणेति । आगन्तुनाकारेणेति भावः । मुख्याद्यग्रहणे हेतुमाह—सख्युर्य इत्यादि । ननु 'सखिपतिभ्या'मित्युक्ते मात्राधिक्याद्विपरीतं गौरवमत आह—विकारेति । गरीयांश्चेति

---

× ङसिङ्योः स्मात्स्मिनौ ७ । १ । १५; अकः सवर्णे दीर्घः ६ । १ । १०१ ।

* इदुद्भ्याम्; औदच्च घेः ७ । ३ । ११७—११८; आत औ णलः ७ । १ । ३४; अकः सवर्णे दीर्घः ६ । १ । १०१

† विप्रतिषेधे परं कार्यम् १ । ४ । २

‡ प्रथमयोः पूर्वसवर्णः ६ । १ । १०२

§ प्रयोजनं यणेकादेशेत्त्वोत्त्वानि गुणवृद्धिद्विर्वचनाल्लोपस्वरेभ्यः १ । ४ । २ वा० ६पृ० ३२५

+ शेषो घ्यसखि; पतिः समास एव १ । ४ । ७; ८ ( घेर्ङिति ७ । ३ । १११ )

निर्देशः स्यात् । इह च प्रसज्येत—अतिसखेरागच्छामि, अतिसखेः स्वम् । इह च न स्यात् । सखीयतेरप्रत्ययः—सख्युः पत्युः । लूनीयतेरप्रत्ययः—लून्युः पून्युः* ॥११२॥

प्र०—लिङ्गादकारान्तयोर्न ग्रहणमपि तु कृतयणादेशयोः । न सखिपतिभ्यामिति । विकारनिर्देशे क्लेशेन तयोः प्रतिपत्तिः । साक्षान्निर्देशे तु स्पष्टावगतिः । अतिसखेरिति । अतिक्रान्तः सखा येनेति बहुव्रीहिः । अथवा शोभनः सखा अतिसखा । 'न पूजना'दिति समासान्तनिषेधः । सखिपतिभ्यामुत्तरावत्र ङसिङसावित्युत्वप्रसङ्गः । अथ तु विहितविशेषणपक्ष आश्रीयते 'सखिपतिभ्यां यौ विहितौ ङसिङसा'विति तदात्रोत्वप्रसङ्गः । अव्याप्तिस्तु प्रसज्येत, तदाह—इह चेति । अतिसखेरित्यत्रासखीति घिसंज्ञाप्रातिषेधो न भवति । ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधात् । केवलस्यैव सखिशब्दस्य प्रतिषेधविज्ञानात् । सखीयतेरिति । विद्यमानं खमस्य सखः, तमिच्छत्यात्मन इति क्यच् । 'क्यचि चे'तीत्वम् । लून्युरिति । लूनमिच्छतीति क्यच् । अत्र पूर्वत्रासिद्धमिति नत्वस्यासिद्धत्वात्यशब्दो भवति । अत्र चोदयन्ति 'सखीयादिभ्यः क्विपि कृते अल्लोपयलोपयोश्चाल्लोपस्य स्थानिवत्त्वा'दिको यणची'ति इकारस्य यणा भाव्यम् । तत्र कृते यलोपे स्थानिवत्त्वनिषेधादादिष्टादचः पूर्वत्वात् स्थानिवत्त्वाप्रसङ्गाद्वा 'लोपो व्योर्वली'ति यलोपप्रसङ्गः । ततश्च 'सख्यु'रित्यादिरूपाणि न सिध्यन्ति । नैतदस्ति । 'क्वौ लुप्तं न स्थानिव'-दिति स्थानिवत्त्वनिषेधात् ॥ ११२ ॥

उ०—भाष्यस्य त्वत्यन्तं मात्रागौरवमिति प्रतिपत्तिगौरवं न दोषायेति भावः । समासान्ताभावायाह—अतिक्रान्तः सखा येनेति । इदं चिन्त्यं यस्येतिसूत्रस्थभाष्यप्रामाण्येन तदन्तेऽपि घिसंज्ञानिषेधेन तत्र गुणाप्राप्तेः । तस्मात्सखीमतिक्रान्त इति विग्रहः । एवं च समासान्तविधौ लिङ्गविशिष्टपरिभाषाभावस्य ङ्याप्सूत्रभाष्ये उक्तत्वेन समासान्ताप्रसक्तिरेव । उपसर्जनह्रस्वत्वे च सखिशब्दत्वं, लाक्षणिकत्वाच्च न घित्वप्रतिषेधः । प्रकृत-भाष्यं तु लक्षणप्रतिपदोक्तपरिभाषानाश्रयेण प्रवृत्तमिति बोध्यम्, विहितविशेषणानाश्रयणवत् । न च 'परस्ये'त्यनेन विरोधाद्विहितविशेषणासंभवः । सखिपतिभ्यां विहितङसादेरतीत्यर्थे 'पूर्वपरयो'रिति निवृत्तस्या परस्यैवादेशलाभार्थं तत्सत्त्वेन तद्विरोधाभावात् । तदाश्रयणे प्रतिपदोक्तपरिभाषाश्रयणे च दोषमाह—भाष्ये—इह च नेत्यादिना । ग्रहणवतेति । इदं चिन्त्यं तस्य प्रत्ययविधिविषयत्वात् । 'यस्येति'सूत्रस्थ-भाष्यप्रामाण्येनात्र शब्दरूपं विशेष्यमादायापि तदन्तविधिरिति बोध्यम् । अधिकं 'यस्येति चे'त्यत्र निरूप-यिष्यामः । सखिशब्दात्क्यचि त्वेकदेशविकृतन्यायेन सखिशब्दत्वं दुर्वारम् । 'अभिव्यक्तपदार्था' इति न्यायस्तु पदकार्यविषय एवेत्यत आह—विद्यमानं खमिति । 'वोपसर्जनस्ये'ति सत्वम् । स्थानिवत्त्वनिषेधा-दिति । ङसुनिमित्तयणस्तु बहिरङ्गतया तस्य न लोपः ॥ ११२ ॥

१—'रागच्छति' पा० । * ल्वादिभ्यः; पूर्वत्रासिद्धम् ८ । २ । ४४; १

## अतो रोरप्लुतादप्लुते ॥ ६ । १ । ११३ ॥

किमर्थमप्लुतादप्लुत इत्युच्यते ? प्लुतात्परस्य प्लुते वा परतो मा भूदिति । प्लुतात्परस्य—सुस्रोता३अत्र न्वसि† । प्लुते परतः—तिष्ठतु पय आ३ग्निदत्त‡ । अतोऽतीत्युच्यते कः प्रसङ्गः प्लुतात्परस्य प्लुते वा परतः स्यात् ? असिद्धः+ प्लुतस्तस्यासिद्धत्वात्प्राप्नोति । अथाप्लुतादप्लुत इत्युच्यमाने यावतासिद्धः प्लुतः कस्मादेवात्र न प्राप्नोति ? अप्लुतभाविनोऽप्लुतभाविनीत्येवमेतद्विज्ञायते ।

नैतदस्ति प्रयोजनम् । सिद्धः प्लुतः स्वरसन्धिषु । कथं ज्ञायते ? यदयं 'प्लुतः प्रकृत्ये'ति× प्लुतस्य प्रकृतिभावं शास्ति । सतो हि कार्यिणः कार्येण भवितव्यम् ।

प्र०—अतो रोरप्लुताद । किमर्थमिति । प्रकृतिभावविधानाज्ज्ञापकात् स्वरसन्धिप्रकरणे प्लुतस्य सिद्धत्वात्तत्परकरणेनैव उत्वं निवारितमिति मत्वा प्रश्नः । असिद्ध इति । प्रकृतिभाव एव सिद्धः प्लुतः । अप्लुतभाविन इति । प्लुतभावित्वादुपचारात् स्थान्येवाकारः 'प्लुत'शब्देनोच्यते इत्यर्थः । यद्यपि 'प्रतिषेधोपादानसामर्थ्यात्सिद्धः प्लुत' इति परिहारोऽस्ति तथापि परिहारान्तरसद्भावादेष परिहारो नाश्रितः । यदयमिति । सामान्येन संहिताधिकारविहितकार्यपेक्षया ज्ञापकमाश्रीयते ।

उ०—अतो रोरप्लुताद । ज्ञापकात्स्वरसन्धीति । सामान्यापेक्षं ज्ञापकमित्यभिमानः । भाष्ये समाधत्ते—प्लुतात्परस्येति । अयं भावः—प्रकृतिभाव एव तेनाश्रयात्सिद्धत्वं लभ्यते । सामान्यापेक्षज्ञापके फलाभावात् । एवं च प्लुतस्यासिद्धत्वात्तपरकरणेन न वारणम् । एतत्करणे तु प्रतियोगित्वेनाश्रयादुत्वदृष्ट्या सिद्धत्वमित्यनेन तद्वारणमिति । तमिममाशयमजानानावेकदेशिनावाहतुः—अतोऽतीत्यादि कार्येण भवितव्यमित्यन्तेन । प्रकृतिभाव एवेति । अर्थापत्तेः साक्षादुपपादकविषयताया औत्सर्गिकत्वादिति भावः । उपचारादिति । सामर्थ्याद्गौणस्याश्रयणमिति भावः । सिद्धः प्लुत इति । ज्ञापितेऽपि प्रवर्तकत्वनिवर्तकत्वाभ्यां चारितार्थ्याभावाच्चिन्त्यमिदम् । यदि तु भाष्ये वक्ष्यमाणमाश्रयात्सिद्धत्वमेवैतदक्षरार्थस्तदा 'एष परिहारो नाश्रित' इत्युक्तिरसङ्गतेति सहृदया भावयन्तु । सामान्येनेति । तदेवमत्र पक्षेऽप्लुतादप्लुते इत्येतद्प्रत्याख्यातम् ।

† दूराद्धूते च ८ । २ । ८४　　‡ गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम् ८ । २ । ८६
+ पूर्वत्रासिद्धम् ८ । २ । १　　× प्लुतप्रगृह्या अचि नित्यम् ६ । १ । १२५

**अप्लुतादप्लुतवचनेऽकारहशोः समानपदे प्रतिषेधः ॥ १ ॥**

अप्लुतादप्लुतवचनेऽकारहशोः‡ समानपदे प्रतिषेधो वक्तव्यः । पयो३ट् पयो३द ।

**न वा बहिरङ्गलक्षणत्वात् ॥ २ ॥**

न वा वक्तव्यः । किं कारणम् ? बहिरङ्गलक्षणत्वात् । बहिरङ्गः प्लुतः । अन्तरङ्गमुत्त्वम् । असिद्धं बहिरङ्गमन्तरङ्गे ॥ इहापि तर्हि प्राप्नोति सुस्रोता३ अत्र न्वसि । अन्तरङ्गोऽत्र प्लुतो बहिरङ्गमुत्त्वम् ।

क्व पुनरिहान्तरङ्गः प्लुतः क्व वा बहिरङ्गमुत्त्वम्, उत्त्वं वान्तरङ्गं प्लुतो वा बहिरङ्गः ? वाक्यान्तस्य वाक्यादावन्तरङ्गः प्लुतो बहिरङ्गमुत्त्वम् । समानवाक्ये पदान्तस्य पदादावुत्त्वमन्तरङ्गं बहिरङ्गः प्लुतः ।

प्र०—अकारहशोरिति । उत्त्वप्रतिषेधस्य प्रतिषेध इत्यर्थः । तत उत्त्वे कृते आद्गुणः । 'एङः पदान्तादती'ति पूर्वैकादेशः, ततः प्लुतः । पयो३ डिति । पयोऽटतीति क्विप् । ततः सम्बुद्धिः । 'दूराद्धूते चे'त्यकारस्य वाक्यस्य टेः प्लुतभावित्वादुत्वप्रतिषेधप्रसङ्गः । पयो३देति । पयो ददातीति कप्रत्ययः । ततः संयोगपरस्याकारस्य गुरुत्वाद् 'गुरोरनृत' इति प्लुतभावित्वा-'दप्लुता'दिति निषेधा'द्धशि चे'त्युत्वं न प्राप्नोति । वाक्यान्तस्येति । 'सुस्रोता३' इत्यादौ पदान्तरानपेक्षणात् प्लुतोऽन्तरङ्गः । वाक्यादाविति । वाक्यादौ परतो वाक्यान्तस्येत्यर्थः । उत्वप्रसङ्गकथनार्थं चैतत् । उत्वं तु तत्र पदद्वयापेक्षत्वाद्बहिरङ्गम् । प्लुतो बहिरङ्ग इति । दूराद्धूताद्यर्थापेक्षत्वात् ।

उ०—'अप्लुता'दिति क्रियमाणे दोषमाह–अप्लुतादप्लुतवचनेऽकारेत्यादि । निमित्तभूतयोरकारहशोः समानपदस्थत्वे इत्यर्थः । तदा हि प्लुतस्य सिद्धत्वेन परत्वात्प्लुते कृते उत्वाप्रसङ्ग इति बोध्यम् । भाष्ये—न वा बहिरङ्गत्वादिति । ज्ञापकेन तु पूर्वत्रासिद्धत्वस्यैव बाध इति भावः । पदान्तरानपेक्षणादिति । वाक्यान्तरस्थपदान्तरानपेक्षणादित्यर्थः । उत्त्वं तु वाक्यान्तरस्थपदसापेक्षमिति भावः ॥ वाक्यादौ परत इति । 'आगच्छे'त्यादिपूरणात्सुस्रोता इत्यन्तमेकं वाक्यम्, 'अत्र न्वसी'त्यपरमिति भावः । दूराद्धूताद्यर्थापेक्षत्वादिति । बहिर्भूतसंबोधनाद्यपेक्षत्वादित्यर्थः । यदि त्वर्थापेक्षं न बहिरङ्गं तर्हि वाक्यत्वसंपादकपदान्तरसापेक्षत्वात्प्लुतस्यात्र बहिरङ्गत्वं बोध्यम् । यद्यपि बहिरङ्गपरिभाषादृष्ट्या बहिरङ्गः प्लुतोऽसिद्धस्तथापि न क्षतिः । स्वदृष्ट्यासिद्धस्यापि परं प्रत्यसिद्धत्वप्रतिपादनसंभवात्, स्वदृष्ट्या विद्यमानस्य घटस्य परं प्रत्यविद्यमानत्वप्रतिपादनवत् ।

‡ हशि च ६ । १ । ११४

किं पुनः कारणं बहिरङ्गत्वमुक्त्वे हेतुर्व्यपदिश्यते न पुनरसिद्धत्वमपि । यथैव ह्ययं बहिरङ्ग एवमसिद्धोऽपि । एवं मन्यते—असिद्धः प्लुत आश्रयात्सिद्धो भवति । अथवा यस्यां नाप्राप्तायां परिभाषायामुक्त्वमारभ्यते साश्रयात्सिद्धा स्यात् । कस्यां च नाप्राप्तायाम् ? असिद्धपरिभाषायाम् । बहिरङ्गपरिभाषायां पुनः प्राप्तायामप्राप्तायां च ॥ ११३ ॥

## नान्तःपादमव्यपरे ॥ ६ । १ । ११५ ॥

कस्यायं प्रतिषेधः ? नान्तःपादमिति सर्वप्रतिषेधः । नान्तःपादमिति सर्वस्यायं प्रतिषेधः । कथम् ? अचीति* वर्तते । अचि यत्प्राप्नोति तस्य प्रतिषेधः ।

### नान्तःपादमिति सर्वप्रतिषेधश्चेदतिप्रसङ्गः ॥ १ ॥

नान्तःपादमिति सर्वप्रतिषेधश्चेदतिप्रसङ्गो भवति । इहापि प्राप्नोति—'अन्व-

---

प्र०—किं पुनः कारणमिति । द्विविधेऽसिद्धत्वे संभवति कस्माद्बहिरङ्गासिद्धत्वमुच्यते न तु पूर्वत्रासिद्धत्वमपि । अथाश्रयात्सिद्धत्वेनासिद्धत्व बाध्यते तथा बहिरङ्गासिद्धत्वमपि बाध्यतामिति मत्वा प्रश्नः । असिद्ध इति । 'पूर्वत्रासिद्ध'मिति वचनात् । आश्रयादिति । 'अप्लुतादप्लुत' इति प्रतिषेधाश्रयणसामर्थ्यात् 'पूर्वत्रासिद्ध'मित्येतदसिद्धत्वं प्रत्यासत्त्या बाध्यते न तु बहिरङ्गासिद्धत्वमौपसङ्ख्यानिकं 'व ह ऊ'डित्यत्र ज्ञापितं च, विप्रकृष्टत्वात् । पयो३डित्यादौ तु बहिरङ्गपरिभाषया प्लुतस्यासिद्धत्वापादनात् 'पूर्वत्रासिद्ध'मित्यस्याप्रवृत्तावाश्रयात्सिद्धत्वाभावः ॥ आश्रयात्सिद्धा स्यादिति । तद्विषयस्य प्लुतस्य सिद्धत्वात् 'सिद्धे'त्युक्तम् । अनाश्रयणं तु तस्या अत्राभिमतम् ॥ ११३ ॥

नान्तः । कस्यायमिति । यद्येङः पदान्तादतीति प्राप्तस्य पूर्वैकादेशस्य प्रतिषेधस्तदायवौ प्राप्नुत इति प्रश्नः । सर्वप्रतिषेध इति । विशेषमनपेक्ष्य प्रतिषेधविधानात् । अन्वग्निरिति ।

---

उ०—तथा बहिरङ्गेति । एवं च 'न वा बहिरङ्गासिद्धत्वा'दिति परिहारोऽसङ्गत इति भावः । प्रत्यासत्त्येति । पाणिनीयस्वरूपपरत्वेत्यर्थः । ज्ञापितं चेति । अनेनानुमानिकात् प्रत्यक्षशिष्टं संनिहितमिति सूचितम् । 'विप्रकृष्टत्वान्न तु बाध्यत' इत्यन्वयः । बहिरङ्गासिद्धत्वाबाधे युक्त्यन्तरमाह भाष्ये—अथवेति । ननु प्लुत आश्रयात्सिद्धो न तु पूर्वत्रासिद्धमिति परिभाषेति किमुच्यते 'सा आश्रयात्सिद्धे'त्यत आह—तद्विषयेति । अनाश्रयणं त्विति । 'पूर्वत्रासिद्ध'मित्यस्यात्रानाश्रयणमित्यर्थः ॥ ११३ ॥

नान्तः पादम । यद्येङ इति । 'अनन्तरस्ये'ति न्यायादित्यर्थः । अथवाविति । 'सुजाते अश्वे'त्यादौ । विशेषमनपेक्ष्येति । व्याप्तिन्यायेन लक्ष्यानुरोधेन च बाध्यसामान्यचिन्ताश्रयणादिति भावः ।

---

* इको यणचि ६ । १ । ७७

ग्निरुषसामग्रंमरुयत्† 'प्रत्यग्निरुषसामग्रंमरुयत्'× ।

एवं तर्ह्यतीति‡ वर्तते । अकाराश्रयं यत्प्राप्नोति तस्य प्रतिषेधः ।

**अकाराश्रयमिति चेदुत्त्ववचनम् ॥ २ ॥**

अकाराश्रयमिति चेदुत्त्वं+ वक्तव्यम् । कालो अश्वः* । शतधारो अयं मणिः ।

**अयवोः प्रतिषेधश्च ॥ ३ ॥**

अयवोश्च§ प्रतिषेधो वक्तव्यः । सुजाते अश्वसूनृते[1] । अध्वर्यो । अद्रिभिः सुतम्[2] । शुक्रं ते अन्यत्[3] ॥ एङ्प्रकरणात्सिद्धम् । एङोऽतीति‡ वर्तते । एङोऽति यत्प्राप्नोति तस्य प्रतिषेधः ।

**एङ्प्रकरणात्सिद्धमिति चेदुत्त्वप्रतिषेधः ॥ ४ ॥**

एङ्प्रकरणात्सिद्धमिति चेदुत्त्वस्य प्रतिषेधो वक्तव्यः । अग्नेरत्र । वायोरत्र । 'अतो रोरप्लुतादप्लुते' [ ११३ ] एङश्चेत्युत्त्वं प्राप्नोति ।

---

प्र०—यणादेशस्यात्र प्रतिषेधप्रसङ्गः । अकाराश्रयमिति । अकार एव निमित्तं यस्य तस्य प्रतिषेधो यणादेशस्त्वज्मात्रनिमित्तो नाकाराश्रय इति न प्रतिषिध्यते ।

अयवोश्चेति । अयवौ ह्यज्मात्राश्रयौ नाकाराश्रयौ ।

उत्त्वप्रतिषेध इति । एङ्ग्रहणमिहानुवर्तमान'मतो रोरप्लुतादप्लुत' इत्यत्रापि अनुवर्तत

---

उ०—यणादेशस्येति । 'एङ' इति नानुवर्तत इति भावः । ननु यणप्यत्राकारनिमित्तक एवेत्यत आह—अकार एवेति ।

भाष्ये—न चैङः पदान्तादिति । एवं च मण्डूकानुवृत्तिरिति भावः । सेः सयावित्यादौ न दोषः, 'सावपि पद'मिति पदस्यानाश्रयणादिति भावः । यद्वा तेषामनभिधानमेव साविति बोध्यम् । 'प्रकृत्यान्त'रिति पाठे तु नायं विचारः, तत्र हि प्रकृतिशब्दः स्वभावे कारणे वा । 'एङ' इत्यस्य च प्रथमया विपरिणाम इति बोध्यम् । यद्यपि 'नान्त'इति पाठेऽपि आनन्तर्यात्पूर्वरूपस्यैव निषेधाद्भ्रष्टावसरन्यायाच्चायादीनामप्यभाव

---

† यजु० वा० ११ । १७; अथर्व० ७ । ८२ । ४; तै० सं० ४ । १ । २ । २; मै० सं० १ । ८ । ६; का० सं० १६ । २; तै० ब्रा० १ । २ । १ । २३

× ऋ० सं० ४ । १३ । १; अथर्व० ७ । ८२ । ५; १८ । १ । २८

‡ एङः पदान्तादति ६ । १ । १०९ + अतो रोरप्लुतादप्लुते ६ । १ । ११३

* अथर्व० १६ । ५३ । १ § एचोऽयवायावः ६ । १ । ७८

१–ऋ० ५ । ७९ । १—१० २–ऋ० ६ । ५१ । १

३–ऋ० ६ । ५८ । १ उदाहरणमिदं भाष्ये प्र० सू० ३ पृ० ८१; १ । १ । ३ वा १० पृ० १५६ पं० १; १ । १ । ४८ वा० ३ पृ० ३५६ पं० ३ स्थानेषु द्रष्टुं शक्यम् ।

## पुनरेङ्ग्रहणात्सिद्धम् ॥ ५ ॥

पुनरेङ्ग्रहणं कर्तव्यम् ॥ तत्तर्हि कर्तव्यम् ? न कर्तव्यम् । प्रकृतमनुवर्तते । ननु चोक्त'मेङ्प्रकरणात् सिद्धमिति चेदुत्त्वप्रतिषेध' इति । नैष दोषः । पदान्ताभिसंबद्धमेङ्ग्रहणमनुवर्तते, न चैङः पदान्तात्परो रुरस्ति ॥ ११५ ॥

## अवङ् स्फोटायनस्य ॥ ६ । १ । १२३ ॥

## गोरग्वचनं गवाग्रे स्वरसिद्ध्यर्थम् ॥ १ ॥

गोरग्वक्तव्यः । किं प्रयोजनम् ? 'गवाग्रे स्वरसिद्ध्यर्थम्' । गवाग्रे स्वरसिद्धिर्यथा स्यात् । गवाग्रम्+ ।

## अवङादेशे हि स्वरे दोषः ॥ २ ॥

अवङादेशे हि स्वरे दोषः स्यात् । अन्तोदात्तस्यान्तर्यतोऽन्तोदात्त आदेशः प्रसज्येत । कथं पुनरयमन्तोदात्तो यदैकाच् ? व्यपदेशिवद्भावेन । यथैव तर्हि व्यपदेशिवद्भावेनान्तोदात्त एवमाद्युदात्तोऽपि, तत्रान्तर्यत आद्युदात्तस्याद्युदात्त आदेशो भवति । सत्यमेवमेतत् । न त्विदं लक्षणमस्ति 'प्रातिपदिकस्यादिरुदात्तो भवती'ति । इदं पुनरस्ति 'प्रातिपदिकस्यान्त उदात्तो भवती'ति । सोऽसौ लक्षणेनान्तोदात्तस्त-

प्र०—इत्येङः परस्य रोरुत्त्वप्रसङ्गः ॥ ११५ ॥

अवङ् । गोरग्वचनमिति । अव्युत्पत्तिपक्षे गोशब्दः 'फि'षित्यन्तोदात्त इत्योकारस्यान्तोदात्तस्य स्थानेऽवङ् भवन्नन्तोदात्तः प्राप्नोतीति अग्विधेयः । स चागमा अनुदात्ता इत्यनुदात्तः । तेन चौकारस्य पदान्तताया विघातात् पूर्वैकादेशाभावेऽवादेशो भवति ॥ गवाग्रमिति । बहुव्रीहिः । तत्र पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वं भवति । तत्पुरुषे तु समासान्तोदात्तत्वेन भाव्यम् । यदि

उ०—इति 'इको गुणवृद्धी' इत्यत्रोक्तं तथापि 'तौ स'दित्याद्यनुपपत्त्या भ्रष्टावसरन्यायस्यात्र शास्त्रेऽनङ्गीकार इत्याशयेन बाध्यसामान्यचिन्तया सर्वनिषेधः प्रतिपादित इति बोध्यम् ॥ ११५ ॥

अवङ् । ननु गमेर्डोप्रत्ययस्वरेणाद्युदात्तस्यौकारस्याद्युदात्तोऽवङ् सिद्ध इति किमनेनेत्यत आह—अव्युत्पत्तीति । अन्तोदात्तस्येति । अन्तोदात्तशब्देन विधानात्तथा व्यवहारविषयस्येत्यर्थः । एतेनास्यैकाच्त्वादाद्युदात्तोऽप्ययमित्यपास्तम् । अग्विधौ चेष्टसिद्धिर्लाघवं चेति भावः । नन्वकि 'एङः पदान्ता'दिति पूर्वरूपापत्तिरत आह—तेन चेति । आद्युदात्तत्वं भवतीति । गोशब्दीयान्तोदात्तस्थित्या 'गवाग्र'मिति

+ बहुव्रीहौ प्रकृत्या पूर्वपदम् ६ । २ । १

त्रान्तर्यतोऽन्तोदात्तस्यान्तोदात्त आदेशः प्रसज्येत ।

यदि पुनर्गमेर्डो विधीयते । किं कृतं भवति ? प्रत्ययाद्युदात्तत्वे कृत आन्तर्यत आद्युदात्तस्याद्युदात्त आदेशो भविष्यति । कथं पुनरयमाद्युदात्तो यदैकाच् ? व्यपदेशिवद्भावेन । यथैव तर्हि व्यपदेशिवद्भावेनाद्युदात्त एवमन्तोदात्तोऽपि तत्रान्तर्यतोऽन्तोदात्तस्यान्तोदात्त आदेशः प्रसज्येत । सत्यमेवमेतत् । न त्विदं लक्षणमस्ति 'प्रत्ययस्यान्त उदात्तो भवती'ति । इदं पुनरस्ति 'प्रत्ययस्यादिरुदात्तो भवती'ति* । सोऽसौ लक्षणेनाद्युदात्तस्तत्रान्तर्यत आद्युदात्तस्याद्युदात्त आदेशो भविष्यति ।

एतदप्यादेशे नास्त्यादेशस्यादिरुदात्तो भवतीति । प्रकृतितोऽनेन स्वरो लभ्यः । प्रकृतिश्चास्य यथैवाद्युदात्तैवमन्तोदात्तापि ।

प्र०—पुनरिति । आद्युदात्तविधानशास्त्रप्रवृत्तये व्युत्पत्तिपक्ष आश्रीयत इत्यर्थः ।

एतदपीति । 'आद्यन्तवदेकस्मि'न्निति शास्त्रातिदेशे त्वदुक्तं स्यात् । यदा त्वनेन कार्यमात्रमुदात्तत्वमसत्येवादित्वेऽन्तत्वे वातिदिश्यते तदौकारस्यादिव्यदेशाभावः, कुतस्तदादेशस्याद्युदात्तत्वम् । उदात्तत्वं चानियतदेशं पर्यायेण स्यादिति पक्षेऽनिष्टस्वरप्रसङ्गः ।

उ०—समुदाये आद्युदात्तत्वं भवतीत्यर्थः । समासान्तोदात्तत्वे त्वनुदात्तस्योकारस्यानुदात्त एवावङ्, अवादेशश्चेति न विशेष इति भावः । आद्युदात्तविधानशास्त्रेति । आद्युदात्तविधायकशास्त्रेत्यर्थः ।

ननु स्थानिनो लक्षणत आद्युदात्तत्वात्किमुच्यते 'प्रकृतिश्चास्ये'त्यात आह—आद्यन्तवदिति । शास्त्रातिदेशेति । 'आद्युदात्तश्चे'ति शास्त्रस्यातिदेशे तदनुपपत्त्या तस्यादित्वव्यपदेशोऽप्यतिदिश्येतेत्यर्थः । क्वचित्तु 'व्यपदेशातिदेशे' इति पाठः । यदा त्विति । एवं चौकारस्यादित्वव्यपदेशाभावेन नियताद्युदात्तव्यपदेशस्य सुतरामभावेन तदादेशे तदभावः सुतरां सिद्ध इत्यर्थः । गौणस्य च व्यवहारस्योभयविधस्यापि सत्त्वादादेशेऽपि पर्यायप्रसङ्ग इत्याह—उदात्तत्वं चेति । तस्मादवक्तव्यः । न च 'चित्रगवग्र'मित्यादावगवङोविशेषः, 'एङ' इत्यनुवृत्त्या तत्रैतत्सूत्राप्रवृत्तेः ।

लाघवमनादृत्यापि सूत्रकृतावङ्पदे समाधत्ते भाष्ये—एवं तर्हीति । नन्वनङ्गुदात्तग्रहणेनासति यत्नविशेषे स्वरूपत उच्चारितमुणस्याविवक्षाज्ञापनादिदमसङ्गतमत आह—एकश्रुत्येति । अव्युत्पन्नत्वे तु न्याय्ये प्रकृतितः प्राप्ते स्वरे उच्चारणीये आद्युदात्तोच्चारणं विवक्षार्थमिति बोध्यम् । ननु पूर्वमवङि समासस्वरे

* आद्युदात्तश्च ३ । १ । ३

एवं तर्ह्याद्युदात्तनिपातनं करिष्यते, स निपातनस्वरः प्रकृतिस्वरस्य बाधको भविष्यति । एवमप्युपदेशिवद्भावो वक्तव्यः । यथैव निपातनस्वरः प्रकृतिस्वरस्य बाधक एवं समासस्वरस्यापि । गवाग्रं गवाग्रमिति† ॥ १२३ ॥

## इन्द्रे च ॥ ६ । १ । १२४ ॥

इन्द्रादाविति वक्तव्यम् । इहापि यथा स्यात्—गवेन्द्रयज्ञे वीहीति ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । नैवं विज्ञायत 'इन्द्रेऽची'ति । कथं तर्हि ? अचि भवति । कतरस्मिन् ? इन्द्रेऽचीति ॥ १२४ ॥

प्र०—स निपातनस्वर इति । एकश्रुत्या सूत्रपाठे यत्नेनाद्युदात्तोच्चारणमन्तोदात्तत्वबाधनार्थं विज्ञायते । एवमपीति । परत्वात् पूर्वं समासान्तोदात्तत्वे सत्यवङ्प्रसङ्ग इत्युपदेशिवद्भावात् पूर्वमवङि सतिशिष्टं समासान्तोदात्तत्वं भवति ॥ १२३ ॥

इन्द्रे । इन्द्रादाविति । इन्द्रशब्द आदिर्यस्य तस्मिन् परत इत्यर्थः । केवले चेन्द्रशब्दे व्यपदेशिवद्भावाद्भवति । 'व्यपदेशिवद्भावोऽप्रातिपदिकेने'ति तु निषेधः प्रत्ययविधिविषयः । इन्द्रेऽचीति । इन्द्रशब्दो विशेष्योऽचीति विशेषणम् । सिद्धान्ते त्वज्विशेष्यः, इन्द्रशब्दो विशेषणम् । तदादावपि इन्द्रशब्दस्थोऽज् भवतीत्यवङ्सिद्धिः ॥ १२४ ॥

उ०—इष्टसिद्धेः किमुपदेशिवद्भावेनेत्यत आह–परत्वादिति । अवङ्प्रसङ्ग इति । स च निपातनस्वरेणोदात्तः प्रसज्येतेत्यनुदात्तश्रवणार्थं तदावश्यकमिति भावः । न च उपदेशिवद्भावस्य समानकालप्रवृत्तिकसमासस्वर-बाधनेन चरितार्थतया हे चित्रगोऽग्र'मित्यत्र चित्रगोशब्दस्य पदसंस्कारपक्षे गुणापेक्षयाप्याद्यावामन्त्रिताद्यु-दात्तत्वेनान्तोऽनुदात्तः । तत्राक्यागमेऽनुदात्ते उभयोरनुदात्तयोः श्रवणम्, अवङ्पक्षे तन्निपातनस्वरेण गकाराकारस्योदात्ततेति विशेष इति वाच्यम् । अस्यैको लाक्षणिकत्वेनात्रैतदप्रवृत्तेरिति दिक् ॥ १२३ ॥

इन्द्रे च । नन्विन्द्रस्यादिरिति तत्पुरुषे इन्द्रशब्दपूर्ववर्तिशब्दे परत इत्यर्थे उदाहरणासङ्गतिरत आह—इन्द्रशब्द इति । प्रत्ययविधिविषय इति । 'पूर्वादिनिः' 'सपूर्वाच्चे'ति ज्ञापकस्य सजातीयविषयत्वा-दिति भावः । वस्तुतस्तत्पुरुष एव, इन्द्रशब्दाद्यवयवे परत इत्यर्थः । तत्किं बहुव्रीह्याश्रयणेनेति चिन्त्यम् । वाक्ये गोशब्दस्येन्द्रपरत्वासंभवेन समासान्तेपातप्रत्यासत्त्येन्द्रस्योत्तरपदत्वे एव प्रवृत्तिः स्यादिति वार्तिकारम्भः । उदाहरणे उत्तरषष्ठीतत्पुरुषगर्भः षष्ठीतत्पुरुषः । इन्द्रशब्दो विशेष्य इति । ततश्चाजादाविन्द्रे उत्तरपदे इत्यर्थः स्यात्, अचीति च व्यर्थं स्यादिति भावः । सिद्धान्ते त्विति । 'अची'त्यनुवृत्तिसामर्थ्यादिति भावः ॥१२४॥

† समासस्य ६ । १ । २२३

## प्लुतप्रगृह्या अचि नित्यम् ॥ ६ । १ । १२५ ॥

नित्यग्रहणं किमर्थम् ? विभाषा मा भूदिति । नैतदस्ति प्रयोजनम् । पूर्वस्मिन्नेव योगे* विभाषाग्रहणं निवृत्तम् ।

इदं तर्हि प्रयोजनं प्लुतप्रगृह्याणामचि प्रकृतिभाव एव यथा स्याद्यदन्यत्प्राप्नोति तन्मा भूदिति । किं चान्यत्प्राप्नोति ? शाकलम्† । [1]सिन्नित्यसमासयोः शाकलप्रतिषेधं वक्ष्यति‡ स न वक्तव्यो भवति ।

अथाज्ग्रहणं किमर्थम् ? अचि प्रकृतिभावो यथा स्यात् ।

### प्लुतप्रगृह्येष्वज्ग्रहणमनर्थकमधिकारात्सिद्धम् ॥ १ ॥

प्लुतप्रगृह्येष्वज्ग्रहणमनर्थकम् । किं कारणम् ? अधिकारादेव सिद्धम् । अचीति प्रकृतमनुवर्तते । क्व प्रकृतम् ? 'इको यणचि' [ ६ । १ । ७७ ] इति ।

### तत्तु तस्मिन्प्रकृतिभावार्थम् ॥ २ ॥

प्र०—प्लुत। नित्यग्रहणमिति। 'इन्द्रे चे'ति ये सूत्रं पठन्ति, 'प्लुतप्रगृह्या अचि नित्य'मिति तु द्वितीयं, तन्मतेनैष प्रश्नः । पूर्वस्मिन्नेवेति । 'इन्द्रे चे'त्यत्र । शाकलमिति । ह्रस्वत्वमित्यर्थः । नित्यग्रहणादयमर्थो लभ्यते 'प्लुतप्रगृह्यरूपा एव नित्यं प्रकृतिभावं प्रतिपद्यन्ते न तु रूपान्तरयुक्ता' इति । अथवा प्लुतप्रगृह्याणामयमेव प्रकृतिभावो नित्यं भवति न तु सूत्रान्तरेण कार्यान्तरसहितः ।

तत्तु तस्मिन्निति । यस्मिन्नच्यादेशो विधीयते तस्मिन्नेवाचि परतः प्लुतप्रगृह्याणां

उ०—प्लुतप्रगृह्या । नन्विन्द्रे च नित्यं प्लुतप्रगृह्या अचीति पाठात्प्रश्नोऽयमयुक्तोऽत आह—इन्द्र इतीति । इन्द्रे चेत्यत्रेति । आरम्भसामर्थ्यादिति भावः । शाकल्यमतविधीयमानप्रकृतिभावस्येष्टत्वादाह—ह्रस्वत्वमित्यर्थ इति । अन्यथा 'वायू इती'त्यादौ पक्षे ह्रस्वत्वं स्यादिति भावः । नित्यग्रहणेन शाकलनिवृत्तिः कथं लभ्यतेऽत आह—नित्यग्रहणादिति । नित्यमित्येवकारार्थं । प्लुतप्रगृह्यरूपा एवेति । प्लुतरूपा एव' यादृशानां प्रगृह्यप्रवृत्तिस्तद्रूपा एव चेत्यर्थः । नित्यमिति विभाषाधिकारनिवृत्तिमूलकम् । अथवेति । अत्र पक्षे 'नित्य'मिति योगो विभज्यते । 'अय'मित्यध्याहारः । 'प्लुत'इत्याद्यनुवर्तते । तेनोक्तार्थलाभः । परे त्वेवकारार्थनित्यपदस्य प्रकृत्येत्यनेनान्वयेन यथाश्रुतभाष्यसामञ्जस्ये कैयटोक्तः क्लेशः किमर्थ इति चिन्त्यमित्याहुः । भाष्ये—'सिन्नित्यसमासयोः शाकलप्रतिषेधं वक्ष्यति स न वक्तव्यो भवती'त्यग्रन्थः[1], उपपत्त्यभावादित्याहुः ।

यस्मिन्नचीति । पुनस्तदुपादानसामर्थ्यात्प्रत्यासत्त्याश्रयेण यत्तच्छब्दावध्याहृत्य व्याख्यानादेक-

* इन्द्रे च ६ । १ । १२४ † इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ६ । १ । १२७

१—नायं भाष्यपाठ इति नागेशाभिप्रायः ।

‡ सिन्नित्यसमासयोः शाकलप्रतिषेधः ६ । १ । १२७ वा० १

तत्तु द्वितीयमज्ग्रहणं कर्तव्यं प्रकृतिभावार्थम् । तस्मिन्नचि पूर्वस्य प्रकृतिभावो यथा स्यात् । इह मा भूत्—जानु उ+ अस्य रुजति । जानू† अस्य रुजति । जान्वस्य* रुजतीति ।

अथ किमर्थं प्लुतस्य प्रकृतिभाव उच्यते ? स्वरसन्धिर्मा भूदिति । उच्यमानेऽप्येतस्मिन्स्वरसन्धिः प्राप्नोति । प्लुते कृते न भविष्यति । असिद्धः‡ प्लुतस्तस्यासिद्धत्वात्प्राप्नोति ।

**प्लुतप्रकृतिभाववचनं तु ज्ञापकमेकादेशात् प्लुतो विप्रतिषेधेनेति ॥३॥**

यदयं 'प्लुतः प्रकृत्ये'ति प्रकृतिभावं शास्ति तज्ज्ञापयत्याचार्य 'एकादेशाप्लुतो भवति विप्रतिषेधेने'ति ।

**एकादेशात् प्लुतो विप्रतिषेधेनेति चेच्छालेन्द्रेऽतिप्रसङ्गः ॥ ४ ॥**

एकादेशात्प्लुतो विप्रतिषेधेने'ति चेच्छालेन्द्रेऽतिप्रसङ्गो भवति । शालायामिन्द्रः शालेन्द्रः ।

प्र०—प्रकृतिभावो यथा स्यादित्यर्थः । जानु उ अस्येति । उञ्निपातः, तस्य पूर्वेण सहैकादेशे कर्तव्ये अकारस्य निमित्तत्वाभावात् प्रकृतिभावाभावादेकादेशो भवत्येव । तत्रादिवद्भावादेकादेशः प्रगृह्यः, तस्येको यणचीति यणादेशः प्रकृतिभावान्न भवति । 'मय उञो वो वे'ति पक्षे वकारः ।

अथ किमर्थमिति । 'पूर्वत्रासिद्ध'मिति प्लुतस्यासिद्धत्वादेकादेशः प्रागेव प्राप्नोतीत्यनर्थकः प्रकृतिभाव इति प्रश्नः ।

प्लुतप्रकृतिभाववचनमिति । ज्ञापकादस्मात् प्लुतः सिद्ध इति भावः । न वेति । शालेन्द्रे एकादेशोऽन्तरङ्गः, प्लुतो दूराद्धूताद्यर्थापेक्षत्वाद्बहिरङ्गः । एवं तु सति 'देवदत्ता३अत्र

उ०—निमित्ततादेशप्रकृतिभावयोर्लभ्यते इत्यर्थः । इदमेवदाहरणमपीत्याह—तत्रादिवदिति । प्रगृह्यत्वं परादिवर्णमात्रवृत्तिधर्मो नेति तत्प्रवृत्तिर्बोध्या । कथं तर्हि 'जान्वस्ये'ति वकारोऽत आह—मय इति । प्रकृतिभावस्य सन्ध्यभावप्रयोजकत्वात्प्रश्नानुपपत्तेराह—पूर्वत्रेति ।

इदं न साक्षाद्विप्रतिषेधज्ञापकं, किन्तु प्लुतसिद्धत्वज्ञापनद्वारा, भाष्यान्तरैकवाक्यत्वादित्याह—ज्ञापकादिति । भाष्ये 'शालेन्द्रे'ति पाठः । अत्र पूर्वं प्लुते प्रकृतिभावादेकादेशो न स्यात् ।

+ निपात एकाजनाङ् १ । १ । १४

† अकः सवर्णे दीर्घः; प्लुतप्रगृह्या अचि नित्यम् ६ । १ । १०१; १२५

* मय उञो वो वा ८ । ३ । ३३

‡ पूर्वत्रासिद्धम् ८ । २ । १

## न वा बहिरङ्गलक्षणत्वात् ॥ ५ ॥

न वातिप्रसङ्गः । किं कारणम् ? बहिरङ्गलक्षणत्वात् । बहिरङ्गः प्लुतः । अन्तरङ्ग एकादेशः । असिद्धं बहिरङ्गमन्तरङ्गे ॥ १२५ ॥

# आङोऽनुनासिकश्छन्दसि ॥ ६ । १ । १२६ ॥

## आङोऽनर्थकस्य ॥ १ ॥

आङोऽनर्थकस्येति वक्तव्यम् । इह मा भूत्—इन्द्रो बाहुभ्यामातरत् ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । बहुलवचनान्न भविष्यति । आङोऽनुनासिकश्छन्दसि बहुलम् ॥ १२६ ॥

प्र०—न्वसी'ति प्लुतैकादेशयोर्विप्रतिषेधो नोपपद्यते, प्लुतस्यैकपदाश्रयत्वादन्तरङ्गत्वात्, एकादेशस्य तु पदद्वयाश्रयत्वाद्बहिरङ्गत्वादिति चिन्त्यमेतत् । १२५ ॥

आङो । आङोऽनर्थकस्येति । 'अभ्र आँ अप' इत्यादौ सप्तम्यैव तदर्थस्योक्तत्वात्तदर्थवृत्तिरेवाङनर्थकः, अनर्थान्तरवाचित्वात् । यथा 'अधिपरी अनर्थका'वित्युक्तम् । 'आतर'दित्यत्र तु क्रियाविशेषणत्वादर्थवानाङ् ॥ १२६ ॥

उ०—बहिरङ्ग इति । त्रैपादिकासिद्धत्वमेव नाप्राप्तत्वादनेन बाध्यते, न बहिरङ्गासिद्धत्वमपीति भावः । चिन्त्यमेतदिति । एवं चान्तरङ्गबहिरङ्गयोर्विप्रतिषेधायोगेन विप्रतिषेधोक्तिरयुक्ता, एतद्विषये येन नाप्राप्तिन्यायेन त्रैपादिकासिद्धत्वाभावो ज्ञाप्यते । अन्तरङ्गत्वाच्चात्र प्लुत इति वक्तुमुचितमिति तात्पर्यम् । परे तु प्लुतस्यापि वाक्यत्वसंपादकपदान्तरसापेक्षतयैकादेशसमत्वमेवेति चिन्त्यमेव चिन्त्यमित्याहुः ।

[ [1]ननु कैयटोक्तान्तरङ्गत्वाभावेऽपि एकवाक्यसापेक्षप्लुतापेक्षया भिन्नवाक्यस्याकारसापेक्षत्वेनैकादेशस्य बहिरङ्गत्वेन विप्रतिषेधानुपपत्तिस्तदवस्थेति चेन्न । त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषाया अप्रवृत्तेर्ग्रन्थकृत्संमतत्वात् । 'अतो रो'रिति सूत्रस्थाप्लुतस्यान्तरङ्गत्वाभिधायकभाष्यशेखरादिकं तु बहिरङ्गत्वाभावतात्पर्यकमिति दिक् । ]

असिद्धं बहिरङ्गमिति । स्वदृष्ट्यासिद्धस्यापि बहिरङ्गस्यान्तरङ्गं प्रत्यसिद्धत्वव्युत्पादनमनया नानुपपन्नमित्यतो रोरित्यत्र निरूपितम् ॥ १२५ ॥

अङोऽनुना । नन्वर्थबोधनाय शब्दप्रयोगादनर्थकत्वमनुपपन्नमत आह—अभ्र इत्यादि । क्रियाविशेषणत्वादिति । क्रियागतविशेषद्योतकत्वादित्यर्थः । भाष्ये—बहुलवचनादिति । सर्वविधीनां छन्दसि वैकल्पिकत्वादिति भावः ॥ १२६ ॥

---

१–अयमुद्द्योतग्रन्थो न सार्वत्रिकः ।

## इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ॥ ६ । १ । १२७ ॥

किमर्थश्चकारः ? प्रकृत्येत्येतदनुकृष्यते*। किं प्रयोजनम् ? स्वरसन्धिर्मा भूदिति ॥ नैतदस्ति प्रयोजनम् । ह्रस्ववचनसामर्थ्यान्न भविष्यति ।

भवेद्दीर्घाणां ह्रस्ववचनसामर्थ्यात्स्वरसन्धिर्न स्याद्ध्रस्वानां तु खलु स्वरसन्धिः प्राप्नोति । ह्रस्वानामपि ह्रस्ववचनसामर्थ्यात्स्वरसन्धिर्न भविष्यति । न ह्रस्वानां ह्रस्वाः प्राप्नुवन्ति, न हि भुक्तवान्पुनर्भुङ्क्ते, न च कृतश्मश्रुः पुनः श्मश्रूणि कारयति । ननु च पुनःप्रवृत्तिरपि दृष्टा । भुक्तवानपि पुनर्भुङ्क्ते, कृतश्मश्रुश्च पुनः श्मश्रूणि कारयति । सामर्थ्यात्तत्र पुनःप्रवृत्तिर्भवति भोजनविशेषाच्छिल्पिविशेषाद्वा, ह्रस्वानां पुनर्ह्रस्ववचने न किंचित्प्रयोजनमस्ति । अकृतकारि खल्वपि शास्त्रमग्निवत् । तद्यथा—अग्निर्यददग्धं तद्दहति ।

---

प्र०—इकोऽसवर्णे । 'लुटि च क्लृप' इत्यत्र व्याख्यानादधिकारस्य सिद्धत्वात्सर्वचकाराणां प्रत्याख्यानात्, अधिकाराभिव्यक्तये क्रियमाणेष्वपि वा चकारेषु ह्रस्वविधानसामर्थ्यात् स्वरसन्ध्यभावस्य सिद्धत्वादनर्थकश्चकार इति मत्वाह—किमर्थ इति । भवेदिति । दीर्घा ह्रस्वाश्चेकः सन्ति कुमारी अत्र, दधि अत्रेति । ह्रस्वश्च दीर्घाणामारभ्यते न ह्रस्वानाम्, स्वत एव ह्रस्वरूपत्वात् । न हि भुक्तवानिति । भुजेस्तृप्तिफलत्वात् फलाभावात्पुनर्भोजनाप्रवृत्तिः । अनैकान्तिकमेतदित्याह—ननु चेति । सामर्थ्यादिति । फलविशेषसद्भावादित्यर्थः । प्रीत्यतिशयो भोजनविशेषस्य फलम् । इह तु फलाभावात्प्रवृत्तिर्नास्तीत्यर्थः । स्वरसन्धिर्मा भूदिति । यणादेशबाधनार्थं ह्रस्वस्य ह्रस्वविधानं स्वरूपप्रत्यापत्त्यर्थमित्यर्थः । 'अग्निर्दग्धं न दहति अयोग्य-

---

उ०—इकोऽसवर्णे । ननु 'लुटि च क्लृप' इत्यत्र सर्वचकाराणां प्रत्याख्यानात्पुनः प्रश्नोऽयुक्तोऽत आह—लुटि चेत्यादि । अधिकाराभिव्यक्तये इति । स्फुटप्रतिपत्तये क्रियमाणेष्वपि अत्र व्यर्थः फलाभावादिति भावः । स्वत एवेति । अप्राप्ते हि विधिरर्थवान्न तु प्राप्ते इति भावः । नन्वभ्यासदार्ढ्याय सकृत्पठितोऽप्यनुवाकः पुनः पठ्यते इत्याशङ्क्य यत्र सकृत्प्रवृत्त्या फलसंपत्तिस्तत्र पुनः प्रवृत्तिर्नेत्याह—भुजेरिति । भाष्ये—सामर्थ्यादित्यस्य समीचीनोऽर्थः प्रयोजनं यस्य तद्भावादित्यर्थस्तदाह—फलविशेषेति । ह्रस्वविधानेन स्वरसन्ध्यभावमुपपादयति—ह्रस्वस्य ह्रस्वेति । अग्निदृष्टान्तो वैधर्म्यान्न युक्त इत्याह—अग्निर्दग्धमिति । न च

---

* प्रकृत्यान्तःपादमव्यपरे ६ । १ । ११५

ह्रस्वानामपि ह्रस्ववचन एतत्प्रयोजनं स्वरसन्धिर्मा भूदिति । कृतकारि खल्वपि शास्त्रं पर्जन्यवत् । तद्यथा—पर्जन्यो यावदूनं पूर्णं च तत्सर्वमभिवर्षति ।

इदं तर्हि प्रयोजनं 'प्लुतप्रगृह्या' अनुकृष्यन्ते । इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च प्लुतप्रगृह्याश्च प्रकृत्या† । नित्यग्रहणस्याप्येतत्प्रयोजनमुक्तम्‡ । अन्यतरच्छक्यमवक्तुम् ।

**सिन्नित्यसमासयोः शाकलप्रतिषेधः ॥ १ ॥**

सिन्नित्यसमासयोः शाकलस्य प्रतिषेधो वक्तव्यः । अयं ते योनिर्ऋत्वियः[1]§ । प्रजां विन्दाम ऋत्वियाम्[2] । वैयाकरणः सौवश्वः ।

नित्यग्रहणेन नार्थः । 'सित्समासयोः शाकलं न भवती'त्येव । इदमपि सिद्धं भवति—वाप्यामश्वो वाप्यश्वः । नद्यामातिर्नद्यातिः ।

**ईषा अक्षादिषु च्छन्दसि प्रकृतिभावमात्रम् ॥ २ ॥**

ईषा अक्षादिषु च्छन्दसि प्रकृतिभावमात्रं द्रष्टव्यम् । ईषा अक्षः[3] । का ईमरे पिशङ्गिला । यथा अङ्गदः ॥ १२७ ॥

प्र०—त्वा'दिति नासौ दृष्टान्त उपादेयः । इहापि [ पुनः ] न दुर्लभो दृष्टान्त इत्याह–कृतकारीति ।

सिन्नित्यसमासयोरिति । नित्याधिकारविहितः समासो नित्यसमासः । यो वा विग्रहाभावादस्वपदविग्रहत्वान्नित्यः समासः सोऽपि नित्यसमासः । वैयाकरणः सौवश्व इति । प्रदेशान्तरपाठाश्रयेणैवं पठितम् । 'व्याकरणं' 'स्वश्व' इत्येतावदप्यत्रोदाहरणं संभवति । वाप्यश्व इति । 'सुप्सुपे'ति समासः । 'संज्ञाया'मिति तु समासस्य नित्यत्वात्सिद्धः प्रतिषेधः ॥ १२७ ॥

उ०—ह्रस्वस्य वैकल्पिकतया ह्रस्वाभावे प्रकृतिभावार्थ चकारः । तेन 'चक्री अत्रे'त्यादिसिद्धिः । प्रकृतिभावस्यापि वैकल्पिकत्वापत्तेः चक्र्यत्रेत्यपीति वाच्यम् । चक्री अत्रेत्यस्य संहिताया अविवक्षायां सिद्धेः । न चोत्तरसूत्रस्य समासेऽपि प्रवृत्त्या तद्विषये 'विश्वपा ऋषीणा'मित्यर्थं चकारः । भाष्यविरुद्धसूत्राशयकल्पनापेक्षया सामर्थ्यसिद्धानुवादकश्चकार इत्येव सूत्राशयस्य वक्तुमुचितत्वात् । भाष्ये—प्लुतप्रगृह्याश्च प्रकृत्येति । प्रकृत्यैवेत्यर्थः । व्याकरणस्वश्वयोः 'कुगती'ति नित्यसमासः । विग्रहाभावोऽस्वपदविग्रहत्वं च नित्यसमासत्वे हेतुः । अस्वपदविग्रहोदाहरणं कुमार्यै इदं कुमर्यार्थमिति ।

नित्यत्वादिति । समासार्थान्न्यूनाधिकार्थविग्रहाभावेनास्य नित्यसमासत्वव्यवहारादिति भावः ॥ १२७ ॥

† प्लुतप्रगृह्या अचि नित्यम् ६ । १ । १२५ ‡ ६ । १ । १२५ सूत्रभाष्यारम्भे ।

१–ऋ० सं० ३ । २९ । १०; यजु० वा० ३ । १४; १२ । ५२; १५ । ५६; अथर्व० ३ । २० । १; तै० सं० १ । ५ । ५ । २; मै० सं० १ । ५ । १; का० सं० २ । ४; जै० ब्रा० १ । ६१; श० ब्रा० २ । ३ । ४ । १३; तै० ब्रा० १ । २ । १ । १६ § छन्दसि घस् ५ । १ । १०६

२–ऋ० सं० ८ । ५ । २९ ३–यजु० वा० २३ । ५५

## ऋत्यकः ॥ ६ । १ । १२८ ॥

किमर्थमिदमुच्यते ?

ऋत्यकः सवर्णार्थम् ॥ १ ॥

सवर्णार्थोऽयमारम्भः । होतृ ऋश्यः ।

अनिगन्तार्थं च ॥ २ ॥

खट्व ऋश्यः । माल ऋश्यः ।

ऋति ह्रस्वादुपसर्गाद्वृद्धिर्विप्रतिषेधेन ॥ ३ ॥

ऋति ह्रस्वो भवतीत्येतस्मादुपसर्गाद्वृद्धिर्भवति विप्रतिषेधेन* । ऋति ह्रस्वो भवतीत्येतस्यावकाशः—खट्व ऋश्यः, माल ऋश्यः । उपसर्गाद्वृद्धेरवकाशः—विभाषा ह्रस्वत्वं यदा न ह्रस्वत्वं सोऽवकाशः । ह्रस्वप्रसङ्ग उभयं प्राप्नोति—उपार्ध्नोति प्रार्ध्नोति । उपसर्गाद् वृद्धिर्भवति विप्रतिषेधेन ।

स तर्हि विप्रतिषेधो वक्तव्यः ? न वक्तव्यः । उक्तं तत्र† धातुग्रहणस्य प्रयोजनमुपसर्गादृति धातौ वृद्धिरेव यथा स्याद्यदन्यत्प्राप्नोति तन्मा भूदिति ॥ १२८ ॥

## अप्लुतवदुपस्थिते ॥ ६ । १ । १२९ ॥

उपस्थित इत्युच्यते किमिदमुपस्थितं नाम ? अनार्ष इतिकरणः । सुश्लोका३ इति सुश्लोकेति ।

अथ वद्वचनं किमर्थम् ?

वद्वचनं प्लुतकार्यप्रतिषेधार्थम् ॥ १ ॥

वद्वचनं क्रियते प्लुतकार्यप्रतिषेधार्थम् । प्लुतकार्यं प्रतिषिध्यते, त्रिमात्रता न

प्र०—अप्लुतव । अनार्ष इति । पदस्येयत्तापरिज्ञानाय स्वरूपेऽवस्थापनार्थं य इतिः प्रयुज्यत इत्यर्थः ॥ अथेति । प्लुतस्य श्रवणेन न भाव्यमिति प्लुत एव निषिध्यतां किमतिदेशार्थेन वद्वचनेनेति भावः । अग्नी३इति । अत्र प्लुताश्रयोऽपि प्रकृतिभावः प्राप्नोति प्रगृह्याश्रयोऽपि । तत्र प्लुताश्रये

उ०—अप्लुतव । ऋषिर्वेदः । तत्र भव आर्षः । यथा 'इला इति' 'मे मन इति' । ततोऽन्योऽनार्षः । स कुत्रेत्यत आह—पदस्येति । 'प्रयुज्यते' इत्यस्य पदकारैः सोऽपी'ति शेषः । ननु प्लुतप्रतिषेधाय वतिरिति प्रश्नोऽनुपपन्नोऽत आह—प्लुतस्येति । स्वरसन्धेरवश्यं भावादिति भावः । 'अन्येन विहितत्वा'-

* उपसर्गादृति धातौ ६ । १ । ९१ † ६ । १ । ९१ वा० १ भाष्ये ।

प्रतिषिध्यते । किं चेदानीं त्रिमात्रताया अप्रतिषेधे प्रयोजनं यावता प्लुतकार्ये प्रतिषिद्धे स्वरसन्धिना भवितव्यम् ।

**प्लुतप्रतिषेधे हि प्रगृह्यप्लुतप्रतिषेधप्रसङ्गोऽन्येन विहितत्वात् ॥ २ ॥**

प्लुतप्रतिषेधे हि सति प्रगृह्यस्यापि प्लुतस्य त्रिमात्रतायाः प्रतिषेधः प्रसज्येत । अग्नी३इति । वायू३इति । किं चेदानीं तस्या अपि त्रिमात्रताया अप्रतिषेधे प्रयोजनं यावता प्लुतकार्ये प्रतिषिद्धे स्वरसन्धिना भवितव्यम् । न भवितव्यम् । किं कारणम् ? अन्येन विहितत्वात् । अन्येन हि लक्षणेन प्लुतप्रगृह्यस्य प्रकृतिभाव उच्यते 'प्रगृह्याः प्रकृत्ये'ति* ॥ १२९ ॥

## ई३ चाक्रवर्मणस्य ६ । १ । १३० ॥

किमर्थमिदमुच्यते ?

**ई३ चाक्रवर्मणस्येत्यनुपस्थितार्थम् ॥ १ ॥**

अनुपस्थितार्थोऽयमारम्भः । चिनु ही ३ इदम् चिनु हीदम् । सुनु ही३ इदम् सुनु हीदम् ॥ ईकारग्रहणेन नार्थः । अविशेषेण 'चाक्रवर्मणस्याचार्यस्य प्लुतवद्भवती'-त्येव । इदमपि सिद्धं भवति वशा३ इयम् वशेयम् ॥ १३० ॥

प्र०—प्रतिषिद्धेऽपि प्रगृह्याश्रयप्रकृतिभावात् प्लुतस्य श्रवणं सिध्यति । प्लुतस्य तु निषेधे क्रियमाणे श्रवणं न स्यात् ॥ १२९ ॥

ई३चाक्रव । 'ई३' इति त्रिमात्रस्य निर्देशः । किमर्थमिति । किमुपस्थितग्रहणानुवृत्त्या प्राप्तविभाषेयम्, अथ तन्निवृत्त्या पूर्वविप्रतिषेधादप्राप्तविभाषा, अथ परविप्रतिषेधादुभयतो विभाषेति प्रश्नः । अनुपस्थितार्थमिति । उभयत्र विभाषेयं, परविप्रतिषेधस्य न्याय्यत्वात् ॥ १३० ॥

उ०—दिति वार्तिकांशमवतारयति भाष्ये—किं चेदानीं तस्या अपीति । प्रगृह्यसंज्ञकप्लुतनिष्ठाया इत्यर्थः । 'अन्येन विहितत्वा'दिति हेतुं व्याचष्टे—तत्रेति ॥ १२९ ॥

ई३चाक्रव । प्रयोजनविषयसन्देहोपपत्तिं दर्शयति—किमिति । अन्ये तु 'उपस्थित' इत्यनुवृत्तिमभिप्रेत्यारम्भसामर्थ्यादेव विकल्पे सिद्धे चाक्रवर्मणस्येति किमर्थमिति प्रश्नः । उत्तरार्थस्तु स्पष्ट इत्याहुः । उभयत्र विभाषेयमिति । नन्विदमीकारप्रत्याख्यानपरभाष्येण विरुद्धं, तत्प्रत्याख्याने हि सुश्लोकेतीत्यादाविव 'चिनुहीती'त्यादावपि नित्याप्लुतवद्भाव एवेष्टः । तेन वैकल्पिकबोधिताभावस्य येन नाप्राप्तिन्यायेन बाधौचित्यादिति चेच्चिन्त्यमेवैतत् ॥ १३० ॥

* प्लुतप्रगृह्या अचि नित्यम् ६ । १ । १२५

## दिव उत् ॥ ६ । १ । १३१ ॥

किमर्थस्तकारः ? 'तपरस्तत्कालस्य' [ १ । १ । ७० ] इति तत्कालो यथा स्यात् । नैतदस्ति प्रयोजनम् । आन्तर्यतोऽर्धमात्रिकस्य व्यञ्जनस्य मात्रिको भविष्यति ॥ न सिध्यति । ऊठि† कृत आन्तर्यतो दीर्घस्य दीर्घः प्राप्नोति—

**तदर्थं तपरः कृतः ।**

एवमर्थं तपरः क्रियते ॥ १३१ ॥

## सुट् कात्पूर्वः ॥ ६ । १ । १३५ ॥

कात्पूर्वग्रहणं किमर्थम् ? कात्पूर्वो यथा स्यात् । संस्कर्ता संस्कर्तुम् । नैतदस्ति प्रयोजनम् । सुडित्यादिलिङ्गोऽयं* करोतिश्च ककारादिस्तत्रान्तरेण कात्पूर्वग्रहणं कात्पूर्व एव भविष्यति ॥ अत उत्तरं पठति—

---

प्र०—दिव उत् । कृत इति । द्युभ्यामित्यादौ परत्वादूठि कृते पुनः प्रसङ्गविज्ञानादुत्त्वं क्रियते, ऊड्विधौ तु क्ङितीति नानुवर्त्तत इति पक्षमाश्रित्येदमुक्तम् । ननु भाव्यमानत्वादुकारो भिन्नकालं न ग्रहीष्यतीति नार्थस्तकारेण । एवं तर्हि तपरत्वमेव ज्ञापकं 'भाव्यमानोऽप्युकारो भिन्नकालं सवर्णं गृह्णाती'ति । तेनामूभ्यामित्यादौ दीर्घस्य दीर्घो भवति ॥ १३१ ॥

सुट्कात् । वक्ष्यमाणैः सूत्रैः ककारादेरेव धातोः सुड्विधीयत इति पृच्छति—कात्पूर्वग्रहणमिति । अथवा धातूपसर्गयोः कार्यमन्तरङ्गमित्यडभ्यासाभ्यां पूर्वमेव सुड्भविष्यति, स च

---

उ०—दिव उत् । परत्वादिति । उत्वं तु 'विमलद्यु'इत्यादौ सावकाशम् । तत्र सोर्लुका लुप्तत्वेनोठः प्राप्त्यभावात् । भाव्यमानोऽपीति । तेनादसोसेर्दादु दो म इत्यत्र दीर्घविधानसिद्धिः । तदाह—तेनेति । यत्तु तत्र समाहारद्वन्द्वनिर्देशेनैव सिद्धे ज्ञापनस्य फलाभाव इति, तन्न । समाहारद्वन्द्वे प्रातिपदिकत्वेऽन्तर्वर्तिसुपोर्लुकि ह्रस्वदीर्घयोः प्राप्तयोर्दीर्घस्य शब्दान्तरप्राप्त्यानित्यत्वेन नित्यत्वाद्ध्रस्वे, वर्णद्वयाश्रयदीर्घापेक्षयान्तरङ्गत्वाद्वा ह्रस्वे कृते पश्चाद्दीर्घे 'उ' इति रूपासिद्धेः ॥ अत एव 'ऊकाल' इति सूत्रे 'उकाल' इति सूत्राकारीत्याशयात् ॥ १३१ ॥

सुट् कात्पूर्वः । सुटो देशविशेषप्रतिपत्तये कात्पूर्वग्रहणस्यावश्यकत्वेन प्रश्नानुपपत्तेराह—वक्ष्यमाणैरिति । अस्याधिकारतया वक्ष्यमाणसूत्रैकवाक्यत्वात्तत्र च करोतिकिरत्योः काद्योरेव निर्देशादिति भावः । नन्वडभ्यासविषये मध्यप्रवेशार्थं तदावश्यकमत आह—अथवेति । वक्ष्यमाणानेकेति । अडभ्यासवति

---

† च्छ्वोः शूडनुनासिके च ६ । ४ । १९  * आद्यन्तौ टकितौ १ । १ । ४६

सुटि कात्पूर्ववचनमककारादौ कात्पूर्वार्थम् । सुटि कात्पूर्ववचनं क्रियतेऽककारादौ करोतौ कात्पूर्वो यथा स्यात् । संचस्करतुः संचस्करुः ।

**सुटि कात्पूर्ववचनमककारादौ कात्पूर्वार्थमिति चेदन्तरेणापि तत्सिद्धम् ॥ १ ॥**

सुटि कात्पूर्ववचनमककारादौ कात्पूर्वार्थमिति चेदन्तरेणापि कात्पूर्वग्रहणं सिद्धम् । कथम् ?

द्विर्वचनात् सुड्विप्रतिषेधेन । द्विर्वचनं† क्रियतां सुडिति सुड्भविष्यति विप्रतिषेधेन । तत्र द्विर्वचनं भवतीत्यस्यावकाशः—विभिदतुः बिभिदुः । सुटोऽवकाशः—संस्कर्ता संस्कर्तुम् । इहोभयं प्राप्नोति—संचस्करतुः संचस्करुरिति । सुड्भवति विप्रतिषेधेन ।

**द्विर्वचनात्सुड्विप्रतिषेधेनेति चेद् द्विर्भूते शब्दान्तरभावात्पुनः प्रसङ्गः ॥ २ ॥**

द्विर्वचनात्सुड्विप्रतिषेधेनेति चेद्द्विर्भूते शब्दान्तरस्याकृतः सुडिति पुनः सुट् स्यात् ।

प्र०—टित्त्वात्पूर्व इति प्रश्नः । अथवा वक्ष्यमाणानेकप्रयोजनसंभवे तद्विशेषज्ञानाय प्रश्नः । आदिलिङ्ग इति । आदिलिङ्गमस्यास्तीत्यकारो मत्वर्थीयः । सुटि कात्पूर्ववचनमिति । अडभ्यासयोरन्तङ्गत्वं मन्यते ।

द्विर्वचनात्सुडिति अन्तरङ्गबहिरङ्गभावमनपेक्ष्य विप्रतिषेध उच्यते । तत्र सुटि कृते पुनः प्रसङ्गविज्ञानात् 'स्कृ'शब्दस्य द्विर्वचने 'शर्पूर्वाः खय' इति खयः शेषे सिद्धं रूपम् ।

शब्दान्तरस्येति । स्थाने द्विर्वचने शब्दान्तरत्वम् । व्यक्तौ पदार्थे चक्रकदोषानवतारः । 'सकृद्गतौ विप्रतिषेध' इति सुटि कृते द्विर्वचनाप्रसङ्गात् । तस्मादाकृतिपक्षे पुनः प्रसङ्गाविज्ञात्सुटि कृते द्विर्वचनमिति व्यक्त्यन्तरेऽपि जातिसद्भावात्तद्द्वारेण पुनः कार्यप्रवृत्त्या चक्रकदोषापत्तिः ।

उ०—सुण्निवृत्त्यर्थं वा, तत्रापि प्रवृत्त्यर्थं वेत्यनेकेत्यर्थः । ननु लिङ्गशब्दस्य नपुंसकत्वात्पुंस्त्वानुपपत्तिः, सामानाधिकरण्यानुपपत्तिश्चेत्यत आह—आदिलिङ्गमिति । आदित्वप्रयोजकं लिङ्गमित्यर्थः । ननु परत्वाद्धतूपसर्गकार्यस्यान्तरङ्गत्वाच्च सुटि द्विर्वचनादौ सिद्धिं मत्वाह—अडभ्यासयोरिति । अड्ग्रहणं व्यर्थम्, अग्रे 'संचस्करतु'रित्यस्यैवोदाहरणात् । किं च विकरणविशिष्टस्याङ्गस्याटि व्यवधानात्सुट्प्राप्तिरेव न, द्वित्वस्य तु स्थाने द्विर्वचनत्वपक्षे तत्र कृते प्राप्तिरिति बोध्यम् । 'पूर्वं धातुः साधनेन युज्यते' इतिपक्षे इदम् । 'मन्यते' इत्यनेनास्यासिद्धान्तत्वं दर्शयति ।

नन्वन्तरङ्गबहिरङ्गयोः कथं विप्रतिषेधोऽत आह—अन्तरङ्गेति ॥ द्विःप्रयोगपक्षे शब्दान्तरत्वाभावादाह—स्थाने इति । व्यक्तावित्याकृतीति च सकृद्गत्यादिपक्षत्रीजोपलक्षणम् । ननु 'न प्रयोजनानुवर्ति प्रमाण'मिति 'न ह्यव्यवस्थाकारिण'त्यादिना कथं चक्रकदोषपरिहारोऽत आह—सकृत्प्रवृत्त्यैवेति । विकार-

† लिटि धातोरनभ्यासस्य ६ । १ । ८

**द्विर्भूते शब्दान्तरभावात्पुनःप्रसङ्ग इति चेद् द्विर्वचनम् ॥ ३ ॥**

सुटि कृते शब्दान्तरस्याकृतं द्विर्वचनमिति पुनर्द्विर्वचनं प्राप्नोति ।

**तथा चानवस्था ॥ ४ ॥**

पुनः सुट् पुनर्द्विर्वचनमिति चक्रकमनवस्था प्रसज्येत ।

नास्ति चक्रकप्रसङ्गः । न ह्यव्यवस्थाकारिणा शास्त्रेण भवितव्यम् । शास्त्रतो हि नाम व्यवस्था । तत्र सुटि कृते द्विर्वचनं द्विर्वचनेनावस्थानं भविष्यति ।

**अड्व्यवाय उपसङ्ख्यानम् ॥ ५ ॥**

अड्व्यवाय उपसङ्ख्यानं कर्तव्यम् । समस्करोत् समस्कार्षीत् ।

**अभ्यासव्यवाये च ॥ ६ ॥**

अभ्यासव्यवाये चोपसङ्ख्यानं कर्तव्यम् । संचस्करतुः संचस्करुः ॥ किमुच्यते 'अभ्यासव्यवाय' इति यदेदानीमेवोक्तं 'द्विर्वचनात्सुड्विप्रतिषेधेने'ति ।

प्र०—सकृत्प्रवृत्त्यैव लक्षणस्य चरितार्थत्वमाश्रित्य परिहारः। चक्रमिव विपरिवर्तनात्-चक्रकम् । इवार्थे 'संज्ञाया'मिति कन्प्रत्ययः । पुनर्द्विर्वचनप्रसङ्गश्चानभ्यासस्येत्यस्य प्रत्याख्यानादुच्यते । अथवा साभ्यासाद्यः प्रत्ययो विधीयते तत्रानभ्यासस्येति प्रतिषेधः ।

अड्व्यवाय इति । 'अडभ्यासव्यवायेऽपी'ति सूत्रस्यापाठे वार्तिकप्रवृत्तिः । परत्वाद्विकरणान्तस्याङ्गस्याडागमे कृते तेन व्यवधानात्समोऽनन्तरः करोतिर्न भवतीति वचनम् ।

अभ्यासव्यवाये चेति । नाप्राप्तः सुडुपसङ्ख्यायते, अपि तु प्राप्त एव वचनेन देशविशेषेऽ-

उ०—कृतशब्दान्तरत्वेन लक्ष्यभेदो नाश्रीयत इति भावः। अथवा साभ्यासभ्यादिति। 'अनभ्यासस्ये'ति 'लिटी'-त्यादि निमित्तविशेषणम्, अनभ्याससंबन्धिनि लिटीत्यादि क्रमेणार्थः संबन्धश्च विहितत्वमेवेति भावः । एवं च 'कात्पूर्वग्रहणमभ्यासविषये देशविशेषप्रतिपत्त्यर्थ'मित्युक्ते तत्र अड्विषये च ताभ्यां व्यवायात्सुट एवाप्राप्तिरिति वाक्यकारो वार्तिकमारभते—अड्व्यवाय इत्यादिना । सुट उपसङ्ख्यानमित्यर्थः । सूत्रस्यापाठे इति । एवं चाडभ्यासव्यवायेऽपीत्यनार्षः सूत्रपाठ इति भावः । ननु पूर्वं सुटि ततोऽटि सिध्यति, किं च 'यदागमा' इति न्यायात्स्वाङ्गस्याव्यवधायकत्वान्न दोषोऽत आह—परत्वादिति । नित्यत्वाद्विकरणे तदन्ताङ्गस्यावयवोऽडिति धातोर्व्यवधायक इति भावः ।

नन्वभ्यासस्य व्यवधायकत्वं प्रसिद्धमिति किं वचनेनेत्यत आह—नाप्राप्त इति । अन्तरङ्गत्वात्पूर्वं द्वित्वेऽभ्यासात्पूर्वः सुट्प्राप्त उपसङ्ख्यानेन परस्तान्नीयत इत्यर्थः । परे तूत्तरखण्डस्यैवार्थवत्त्वाद्धातुत्वम्, अतोऽत्रापि व्यवधानादप्राप्तस्यैवोपसङ्ख्यानमित्याहुः । एवं चैतदर्थं कात्पूर्वग्रहणं न कर्तव्यमिति तात्पर्यम् ।

**अविप्रतिषेधो वा बहिरङ्गलक्षणत्वात् ॥ ७ ॥**

अविप्रतिषेधो वा पुनः सुटः । किं कारणम् ? बहिरङ्गलक्षणत्वात् । बहिरङ्गलक्षणः सुट् । अन्तरङ्गं द्विर्वचनम् । असिद्धं बहिरङ्गमन्तरङ्गे ।

एवमर्थमेव तर्हि कात्पूर्वग्रहणं कर्तव्यं कात्पूर्वो यथा स्यात् ।

क्रियमाणेऽपि वै कात्पूर्वग्रहणेऽत्र न सिध्यति न ह्ययं कात्पूर्वग्रहणेन शक्यो मध्ये प्रवेशयितुम् । किं कारणम् ? आदिलिङ्गोऽयं क्रियते करोतिश्च ककारादिः, दृष्टश्च पुनरातिदेशिकः करोतिरककारादिः ।

प्र०—वक्ष्याप्यते ॥ अविप्रतिषेध इति । पदद्वयाश्रयत्वात्सुड् बहिरङ्गः । एकपदाश्रयत्वात्तु द्विर्वचनमन्तरङ्गमिति तुल्यबलत्वाभावाद्विप्रतिषेधाभावः । एवमर्थमिति । अन्तरङ्गत्वाद्द्विर्वचने कृते परत्वादन्तरङ्गत्वाच्चाडागमे मध्यानुप्रवेशार्थं सुटः कात्पूर्वग्रहणम् । कालावधारणार्थं वा, करोतेः कादित्वावस्थायामेव सुड्भवति । कृते सुटयड्द्विर्वचने भवतः । क्रियमाणेऽपीति । परत्वान्तरङ्गत्वाभ्यामड्द्विर्वचनयोः कृतयोष्टित्त्वात्सुटो मध्येऽनुप्रवेशाभावः । करोतिश्चेति । संस्कर्तेत्यादौ । ततश्चात्रैव स्यात् । अड्द्विर्वचनयोस्तु कृतयोष्टित्त्वात्कात्पूर्वग्रहणाच्च विरुद्धदेशसमर्पणादप्रवृत्तिरेव सुटः स्यात् । दृष्टश्चेति । अडभ्यासवानित्यर्थः । स हि स्थानिवद्भावादातिदेशिकः । 'अनागमकानां सागमका आदेशा' इत्यडागमयुक्तोऽप्यातिदेशिकः, ततश्च कात्पूर्वग्रहणात्ककारादेरेव स्यान्न त्वडभ्यासवत इत्यर्थः ।

उ०—इदानीं भाष्यकारो वचनारम्भेण सूत्रप्रत्याख्यानमयुक्तं मन्यमान आह—एवमर्थमेवेति । तत्राड्व्यवाये यथा सूत्रेण सिध्यति तदाह—परत्वादन्तरङ्गत्वाच्चेति । सुटो विकरणाच्च पूर्वमडागम इत्यर्थः । वस्तुत इदं भाष्यं 'स्थाने द्विर्वचनं, देशप्रक्लृप्त्यर्थं कात्पूर्वग्रहण'मिति पक्षेऽभ्यासविषयमेव । अड्विषये त्वटि कृते सुटोऽप्राप्त्या तद्विषयता वक्तुमयोग्येति बोध्यम् । अग्रिमग्रन्थस्य तदभिप्रायेणैव प्रवृत्तेश्चेत्याहुः । ननु कात्पूर्वग्रहणेन मध्यानुप्रवेशोऽयुक्तः, टित्त्वकात्पूर्वग्रहणाभ्यां विरुद्धदेशसमर्पणेन परस्परव्याघातादत आह—कालावधारणार्थं वेति । कात्पूर्वग्रहणेन सुट्प्रवृत्तेः कालो लक्ष्यते । यदा करोतिः कादिस्तदा सुडित्यर्थः । एवं चाड्द्विर्वचनाभ्यां पूर्वमेव सुडिति न व्यवधानमिति वार्तिकद्वयं प्रत्याख्यातम् ।

इदानीं वार्तिकारम्भवादी सूत्रमात्रेण न सिध्यतीत्याह भाष्ये—क्रियमाणेऽपीति । कात्पूर्वग्रहणस्य लक्षणायां मानाभावाद्देशप्रक्लृप्त्यर्थमेव शब्दमर्यादया लभ्यते, तच्च यत्र प्राप्तिस्तद्विषयमेव स्यादिति संस्कर्तेत्यादावेव स्यात् । अड्द्विर्वचनयोस्तु व्यवधानादप्राप्तिरेव नेति तद्वैयर्थ्यं, वार्तिकारम्भं विना प्रयोगासिद्धिश्चेति तात्पर्यम् । करोतिश्च कादिरिति । ग्रन्थस्य प्रकृतोपयोगं दर्शयति—ततश्चेति । अप्रवृत्तिरेवेति । अविरोधेन प्रवृत्तौ संभवत्यां विरोधे प्रवृत्त्ययोगो व्यवधानाच्च तत्राप्रवृत्तिरिति भावः । यः ककारादिः करोतिर्दृष्टस्तत्रैव स्यात्, यस्त्वातिदेशिकोऽककारादिर्दृष्टस्तत्र न स्या'दिति भाष्याक्षरार्थः । स हीति । अभ्यासवानित्यर्थः । स्थाने द्विर्वचनपक्षे इदम् । चुत्वे कृते वा करोतित्वमतिदेशेनेति बोध्यम् । अनागमकानामिति । चिन्त्यमिदं, बुद्धिविपरिणामेनादेशत्वव्यवहारेऽपि स्थानषष्ठ्या निर्देशाभावादतिदेशाप्राप्तेः । यदागमा इतिन्यायेन ग्रहणमप्यातिदेशिकमिति तु भाष्याशयः ।

पाक्षिक एष दोषः । कतरस्मिन्पक्षे ? सुड्विधौ द्वैतं भवति । अविशेषेण वा वा विहितस्य सुटः कात्पूर्वग्रहणं देशप्रक्लृप्त्यर्थं स्याद्विशेषेण वा विधिरिति । द्विर्वचनविधौ चापि द्वैतं भवति । स्थाने द्विर्वचनं स्याद्द्विःप्रयोगो वा द्विर्वचनमिति । तद्यदा द्विःप्रयोगो द्विर्वचनमविशेषेण विहितस्य च सुटः कात्पूर्वग्रहणं देशप्रक्लृप्त्यर्थं तदैष दोषः । यदा हि स्थाने द्विर्वचनं तदा यद्यप्यविशेषेण विहितस्य सुटः कात्पूर्वग्रहणं देशप्रक्लृप्त्यर्थमथापि विशेषविधिर्न तदा दोषो भवति ।

द्विःप्रयोगे चापि द्विर्वचने न दोषः । संपरिभ्यामिति* नैषा पञ्चमी । का तर्हि ?

प्र०—सुड्विधौ द्वैतमिति । कात्पूर्वग्रहणमडभ्यासव्यवायनिवृत्त्यर्थं वा स्यात्, प्राप्त्यर्थं वेति पक्षद्वयसंभवः । अविशेषेणेति । कालविशेषानङ्गीकरणमविशेषः । 'तस्मिन् करोतौ सुड्भवति यत्र भवन् कात्पूर्वो भवती'त्यडभ्यासविषये निवृत्त्यर्थं कात्पूर्वग्रहणं भवति । विशेषेण वेति । यत्रानेकलक्षणसंनिपाताभावस्तत्रानर्थकं कात्पूर्वग्रहणमित्यनेकलक्षणसंनिपाते कात्पूर्वग्रहणं कालावधारणार्थं विज्ञायते 'कात्पूर्वः सुट्कर्तव्यः' कार्यान्तराच्च प्राग्भवन् कात्पूर्वः कृतो भवति । तद्यदा द्विःप्रयोग इति । उच्चारणक्रियाभेदाच्छब्दो भिद्यत इत्यभ्यासेन परस्य ककारादे रूपस्य व्यवधानात्संपरिभ्यामुत्तरोऽनन्तरः करोतिः ककारादिर्न [सं]भवतीति सुटोऽप्रसङ्गः । यदा तु कालावधारणार्थं कात्पूर्वग्रहणं तदा विशेषविधिर्भवतीत्यकृत एव द्विर्वचने सुट् क्रियत इति न दोषः । स्थाने द्विर्वचने स्थानिवद्भावादेक एव करोतिः स चाव्यवहित इति चकारात्पूर्वं सुट् प्राप्तः कात्पूर्वग्रहणेन ककारात्पूर्वः क्रियते इति दोषाभावः । विशेषविधाने तु पूर्वमेव सुट् क्रियते इति पक्षद्वयेऽपि दोषाभावः ॥ उपसृष्ट इति । संबद्ध इत्यर्थः । द्विःप्रयोगे च द्विर्वचने द्वयोः साधा-

उ०—कात्पूर्वग्रहणेनाऽभ्यासविषये यथा सुटो निवृत्तिस्तथा दर्शयति—कालविशेषानङ्गीकरणमिति । यत्रेति । संस्कर्तेत्यादौ । तत्र टित्त्वादेव कात्पूर्वत्वं सिद्धमिति भावः । अनेकेति । यथाऽभ्यासविषये तद्विधायकवचनं सन्निपातः । कार्यान्तराच्चेति । तदा सुट्कार्यो यदा कृतः कात्पूर्व इति वाक्यार्थ इति भावः । अनन्तरः करोतिः ककारादिर्न संभवतीति । देशप्रक्लृप्त्यर्थत्वपक्षे समादेः परस्य कादेः करोतेः सुडित्यर्थ इति भावः । एवमड्व्यवायेऽपि सुटोऽप्रसङ्गो बोध्यः । संपरिभ्यामुत्तरः करोतिर्न भवतीत्येतावदेव तु वक्तुमुचितम् । यदा हि स्थाने इत्यादि भाष्यं व्याचष्टे स्थाने द्विर्वचने इति । चकारात्पूर्व इति । कात्पूर्वग्रहणसामर्थ्यात्संस्कर्तेत्यादौ चरितार्थटित्त्वस्य सङ्कोच इत्यर्थः । अथापि विशेषेत्यादि भाष्यं व्याचष्टे—विशेषेति ।। भाष्ये—द्विःप्रयोगे चापीति । देशप्रक्लृप्त्यर्थत्वपक्षेऽपि न दोष इत्यर्थः । लक्ष्यासिद्धिरूपदोषस्यायं परिहारः । वैयर्थ्यरूपो दोषस्त्वस्त्येवेति बोध्यम् । समुदायस्य त्विति । अर्थावृत्त्यभावादिदमेव युक्तम् । वक्ष्यते इति । 'सुविनिर्दुर्भ्यः सुपिसूती'ति सूत्रे । तत्र 'विस्वप् अ' इति स्थिते 'पूर्वत्रासिद्धमद्विर्वचने' इत्युक्तेरुपसर्गसंसर्गाश्रयत्वेनान्तरङ्गत्वाच्च द्वित्वात्पूर्वं प्राप्तषत्वनिवृत्तये सुपीति कृतसंप्रसारणग्रहणम् । अभ्यासस्य

* संपर्युपेभ्यः करोतौ भूषणे ६ । १ । १३७ ।

तृतीया । संपरिभ्यामुपसृष्टस्येति । व्यवहितश्चाप्युपसृष्टो भवति ।

उपदेशिवद्वचनं च ॥ ८ ॥

उपदेशिवद्भावश्च वक्तव्यः । किं प्रयोजनम् ?

लिटिगुणचङ्दीर्घप्रतिषेधार्थम् ॥ ९ ॥

लिटि गुणार्थं चङि दीर्घप्रतिषेधार्थम् । लिटि गुणार्थं† तावत्—संचस्करतुः संचस्करुः । चङि दीर्घप्रतिषेधार्थं च‡—समचिस्करत् ।

लिटि गुणार्थेन तावन्नार्थः । वक्ष्यत्येतत् 'संयोगादेर्गुणविधाने संयोगोपधग्रहणं कृञर्थ'मिति§ । चङि दीर्घप्रतिषेधार्थेनापि नार्थः । 'पद'मितीयं भगवतः कृत्रिमा

प्र०—रणोऽर्थ इति द्वावप्यर्थवन्ताविति परस्य रूपस्यार्थद्वारक उपसर्गसंबन्धो न विरुध्यते । समुदायस्य त्वर्थवत्तामाश्रित्य वक्ष्यते—'विसुष्वापेति केन न अनर्थक' इति ।

उपदेशिवद्वचनं चेति । अन्यथा पदद्वयाश्रयत्वात् सुटो बहिरङ्गत्वासिद्धत्वाल्लिटि गुणो न स्यात् । चङि च 'दीर्घो लघोरिति दीर्घप्रसङ्गः । संयोगोपधग्रहणमिति । ततो वचनेनासिद्धत्वं बाध्यते । पदमिति । अनेन पदद्वयाश्रयत्वं सुटो निवार्यते । अनुत्पन्नेष्वेव तिङ्क्षु धातूपसर्गसंबन्धे सुटा भाव्यमित्यर्थः । करोतिना चेह तदादिविधिर्नास्ति, विशेष्यस्यासंनिधानात् । 'अतःकृकमी'त्यत्र

उ०—संप्रसारणे कृतेऽपि तस्यानर्थकत्वाभ्यस्त्वाभाव इत्युक्तम् । इह तु प्रकारान्तरेण दोषनिवृत्ते रुक्तत्वादनास्थावादेन भगवतेदमुक्तमिति भावः । वस्तुतोऽभ्यासोऽनर्थक एव, उत्तरखण्डस्त्वर्थवानेवेति 'एकाचो द्वे'इत्यत्र निरूपितमिति न भाष्ययोः कश्चिद्विरोध इति बोध्यम् । 'द्वावप्यर्थवन्ता'विति कैयटस्तु चिन्त्य एवेति दिक् । केन नेत्यन्ता शङ्का । अनर्थक इत्युत्तरम् । संपरिभ्यामित्यस्य तृतीयान्तत्वेऽड्व्यवाये इत्यपि न कार्यम्, एवं स्थाने द्विर्वचने कात्पूर्वग्रहणसार्थक्यमुक्तम् । तेन द्विःप्रयोगे तद्व्यर्थमेवेति सूचितम् ।

ननु सुटि संयोगादित्वाद्गुरुत्वाच्च गुणदीर्घाभावौ सिद्धाविति किमुपदेशिवद्वचनेनेत्यत आह—अन्यथेति । उपदेशिवद्वचने तु सुटोऽन्तरङ्गत्वेनासिद्धत्वाभावाद्गुणदीर्घाभावौ सिद्धाविति भावः । 'उपदेशिव'दित्यस्य च प्रत्ययोत्पत्तेः पूर्वमित्यर्थः । एवञ्चास्य बहिर्भूतोपसर्गापेक्षत्वं, गुणदीर्घयोश्च बहिर्भूतप्रत्ययापेक्षत्वमिति समतेत्याशयः । ननु कृतेऽपि संयोगोपधग्रहणे सुटोऽसिद्धत्वात्कथं गुणोऽत आह—तत इति । निवार्यत इति । पदद्वयाश्रयत्वात्सुटो बहिरङ्गत्वं यदुक्तं तन्निराक्रियते इत्यर्थः । अनुत्पन्नेष्विति । करोतौ धातौ परतस्तद्विधानादिति भावः । नन्वतः कृ इत्यादिवत्करोत्यादौ पदे इत्यर्थात्कथं तिङुत्पत्तेः पूर्वं सुडत आह—करोतिना चेति । सत्वविधौ त्वस्ति तत्सन्निधानमित्याह—अतः कृ इति । समासाधिकारश्च 'नित्यं

† ऋतश्च संयोगादेर्गुणः ७ । ४ । १० । ‡ दीर्घो लघोः ७ । ४ । ९४ ।
§ ७ । ४ । १० वा० १ पृ० २५२ ।

संज्ञा । युक्तमिह द्रष्टव्यं किमन्तरङ्गं किं बहिरङ्गमिति । धातूपसर्गयोः कार्यं यत्त-दन्तरङ्गम् । कुत एतत् ? पूर्वं हि धातुरुपसर्गेण युज्यते पश्चात्साधनेनेति । नैत-त्सारम् । पूर्वं धातु साधनेन युज्यते पश्चादुपसर्गेण । साधनं हि क्रियां निर्वर्तयति तामुपसर्गो विशिनष्टि, अभिनिर्वृत्तस्य चार्थस्योपसर्गेण विशेषः शक्यो वक्तुम् । सत्यमे-वमेतत् । यस्त्वसौ धातूपसर्गयोरभिसंबन्धस्तमभ्यन्तरं कृत्वा धातुः साधनेन युज्यते । अवश्यं चैतदेवं विज्ञेयम् । यो हि मन्यते 'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणे'ति

प्र०—समासाधिकारात्समासेनाक्षिप्तमुत्तरपदं कृशब्देन विशेष्यत इति भवति तदादिविधिः । 'अनिगन्तोऽञ्चतौ वप्रत्यय' इत्यत्र वप्रत्ययग्रहणेन ज्ञापितं 'धातुना विशेषणेन तदादिविधिर्भवती'ति ।

युक्तमिति । यद्युक्तं तदेव दर्शनमर्हति । तदेवाश्रयणीयमित्यर्थः । पूर्वं धातुरिति । विशिष्टक्रिया साधनेनार्थलाभाय सम्बध्यत इति पूर्वं विशेषणेन युज्यत इत्यर्थः । इतरो लब्ध-स्वरूपा क्रिया विशेषणमाकाङ्क्षतीति मत्वाह—नैतदिति । इतरो विशिष्टा क्रिया साधनेन साध्यते न तु साधनाल्लब्धस्वरूपान्यतो विशेषं लभते इति मत्वा बुद्धिनिरूपितविशिष्टसाध्यभा-विसाधनसंबन्धाश्रयेणाह—सत्यमिति ॥ सर्वत इति । धातुसंज्ञाया अपीत्यर्थः । यस्माद्धातूप-सर्गसमुदायेन विशिष्टा क्रिया प्रतिपाद्यते । अडादिव्यवस्थार्थं तु पृथग्धातूपसर्गप्रकल्पनम् । तत्र

उ०—समासे' इष्यतः । अनेनात्र 'कर्णोष्ठत्तरपदेषु' इति वाक्यैकदेश उच्चारित इति बोध्यते । अयमेवाक्षेप इति बोध्यम् । ननु वर्णग्रहणाभावात्कथं तदादिग्रहणमत आह—अनिगन्त इति । भाष्ये—द्रष्टव्यमित्य-र्हेऽर्थे भावे कृत्य इत्याह—तदेव दर्शनमिति । 'किमन्तरङ्गं बहिरङ्ग'मिति प्रश्ने यदुक्तं तदेवाश्रयणीयमिति भाष्यार्थः । युक्तं दर्शनमेवाह—भाष्ये-धातूपसर्गयोरिति । एवञ्च सुटोऽन्तरङ्गत्वेनासिद्धत्वाभावाल्लघुत्वा-भावेन न दीर्घप्रसङ्गः । संयोगादित्वाच्च गुणसिद्धिरित्यर्थः । अर्थलाभायेति । 'उपास्यते गुरु'रित्यादौ साधनेन कर्मणा स्वान्वययोग्यार्थलाभायेत्यर्थः ।

भाष्ये—नैतत्सारमिति । वक्ष्यमाणोऽभिप्रायः । तस्यासारतां दर्शयन् 'पूर्वं धातुः साधनेने'त्यस्य युक्तत्वं दर्शयति—साधनं हीति । क्रियां—तत्प्रतीतिम् । साधनयोगेन हि साध्यत्वेन धात्वर्थप्रतीतिः, साध्यत्वस्य साधननिरूप्यत्वात् । क्रियायोगे चोपसर्गत्वमिति भावः । तदाह—तामुपसर्ग इति । तां-साध्यत्वेन प्रतीताम् । तत्र विशेषणीभूतमर्थमुपसर्गो द्योतयतीत्यर्थः । अभिनिर्वृत्तस्य—साध्यत्वेन ज्ञातस्य, विशेषो—विशेषणम्, उपसर्गेण शक्यो द्योतयितुम् । एवञ्च पूर्वं धातुरुपसर्गेणेति न सारमिति भावः । इतर एतदङ्गीकुर्वन्नेवान्तरङ्गत्वं व्युत्पादयितुमाह—सत्यमेवमेतत् । यस्त्वसाविति । उपसर्गसंज्ञकशब्दयोगात् पूर्वं साधनयोग इति सत्यमेव । परन्तु त्वदभिमतं धातूपसर्गसंबन्धकृतमर्थमभ्यन्तरं कृत्वा स्वबोध्यं कृत्वा धातोः पूर्वं नियमेनाकाङ्क्षितार्थत्वात् साधनसंबन्धः । तत्कार्यप्रत्यययोगे कृते क्रियात्वावगतौ उपसर्गसंज्ञकशब्द-

तस्य आस्यते गुरुणेत्यकर्मक उपास्यते गुरुरिति केन सकर्मकः स्यात् । एवं च कृत्वा सुट् सर्वतोऽन्तरङ्गतरको भवति, कात्पूर्वग्रहणं चापि शक्यमकर्तुम् ।

यदि पुनरयं सुट् कात्पूर्वान्तः क्रियेत ?

**कात्पूर्वान्त इति चेद्रुविधिप्रतिषेधः ॥ १० ॥**

कात्पूर्वान्त इति चेद्रुः कश्चिद्विधेयः कश्चित्प्रतिषेध्यः । संस्कर्ता । समो विधेयः सुटः प्रतिषेध्यः ।

समस्तावन्न विधेयः । वक्ष्यत्येतत् 'संपुंकानां सत्वं रुविधौ ह्यनिष्टप्रसङ्ग' इति* । सुटश्चापि न प्रतिषेध्यः । 'समः सुटि' [ ८ । ३ । ५ ] इति द्विसकारको निर्देशः—सुटि सकारादाविति ।

प्र०—'संकृ'शब्दे व्यवस्थित एव सुड्भवति । पश्चात्समुदायावयवस्य तेनार्थेनार्थवतो धातुसंज्ञा ।

यदिपुनरिति । 'सु' गिति ककारानुबन्धं कृत्वेत्यर्थः ।

संस्कर्तेति । 'समः सुकी'त्युच्यमाने 'सं'भक्तत्वात्सुकः पौर्वापर्याभावान्मकारस्य रुत्वं न प्राप्नोति । सुकस्तु पदान्तत्वाद्रुत्वप्रसङ्गः । संपुंकानामिति । एतच्च यथान्यासेऽपि वक्तव्यमिति भावः । सुटि सकारादाविति । यथान्यासाश्रयेणैतदुच्यते, 'सुकि सकारादा'विति तु वक्तव्यं, तत्र सकारादित्वविशेषणान्यथानुपपत्त्या सुको रुत्वाभावः पौर्वापर्यं च श्रुतिक्रमाश्रयिष्यते ।

उ०—योगः । अन्यथा केवलधातुतः सर्वत्राप्रतीयमानः सोऽर्थः कथं श्रोत्रा बुध्येतेति भावः । यो हि मन्यते इति । शब्दसंबन्धवदर्थसंबन्धोऽपि पश्चादिति यो मन्यत इत्यर्थः । अन्तरङ्गतरक इति । साधनसंबन्धोत्तरमुपसर्गसंबन्धे संकृतिरिति स्थितेऽन्तर्भूतार्थनिमित्तकत्वाद्बाह्यसाधनसंबन्धनिमित्तद्वित्वादिकार्यात्सुडन्तरङ्गतर इत्यर्थः । ईदृशे स्थलेऽयमेव साधुत्वान्वाख्यानप्रकारः । अत एवोपपदमतिङिति सूत्रे धातूपसर्गयोः समासमाशङ्क्य 'पूर्वं धातुः साधनेने'ति पूर्वं तिङि, विशिष्टेनैव सामर्थ्यं स्यात् । तत्रातिङिति निषेधान्न तिङन्तेनैकार्थीभाव इति समाहितम् । तिङां द्योतकत्वमेवेति तद्भावः । किं च संपरिभ्यामुपसृष्टस्येत्यर्थेन समो योगात्पूर्वमेव सुट् । संपरिभ्यामित्यस्य पञ्चम्यन्तत्वेऽपि ताभ्यां परत्वयोग्यस्येत्यर्थेन ततः पूर्वमेव सुट् । अत एव निविशते इत्यादौ न समासः । नेः परत्वयोग्यादित्यर्थेन पूर्वमेवात्मनेपदप्राप्तेः । नेर्विशेष्यस्येत्यर्थाद्वा । स्पष्टं चेदं 'नेर्विश' इत्यत्र भाष्ये इति परे ।

लब्धस्वरूपेति । प्रतिपन्नस्वरूपेत्यर्थः । तल्लाभश्च साधनायत्त इति भावः । निष्पन्नस्वरूपेति तु नार्थः । निष्पत्तेर्विशेषणसंबन्धेऽनुपयोगात् । 'सत्य'मित्यङ्गीकाराशयमाह—बुद्धीति । बुध्या निरूपितं विशिष्टं यत्साध्यं तस्य भावी यः साधनसंबन्धस्तदाश्रयेणेत्यर्थः । एवमपि पूर्वोक्तार्थस्यानुपपत्त्या कथं भाष्यस्वारस्यमिति चिन्त्यम् । धातुसंज्ञाया इति । करोताविति श्तिपा निर्देशात्कथं ततः प्राक्सुडिति चिन्त्यम् ।

* ८ । ३ । ५ वा० १ पृ० ४३२ ।

अथवा परादिः करिष्यते ।

परादाविड्गुणप्रसङ्गः ॥ ११ ॥

यदि परादिरिड्गुणौ प्राप्नुतः । संस्कृषीष्ट । 'ऋतश्च संयोगादेः' [ ७ । २ । ४३ ] इतीट् प्राप्नोति । संस्क्रियते । 'गुणोऽर्तिसंयोगाद्योः' [ ७ । ४ । २९ ] इति गुणः प्राप्नोति ।

एवं तर्ह्यभक्तः करिष्यते ।

अभक्ते स्वरः ॥ १२ ॥

यद्यभक्तः स्वरो न सिध्यति । संस्करोति । 'तिङ्ङतिङः' [ ८ । १ । २८ ] इति निघातो न प्राप्नोति । ननु च सुडेवातिङ् । न सुटः परस्य निघातेन भवितव्यम् । किं कारणम् ? नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः । नञ्युक्तमिवयुक्तं चान्यस्मिंस्तत्सदृशे कार्यं विज्ञायते, तथा ह्यर्थो गम्यते । तद्यथा—अब्राह्मणमानयेत्युक्ते ब्राह्मणसदृशं क्षत्रियमानयति, नासौ लोष्टमानीय कृती भवति । एवमिहाप्यतिङिति

प्र०—अभक्त इति । टकारोऽनुबन्धो न करिष्यते । 'स्वरो न सिध्यतीति । स्वरविधौ व्यञ्जनमविद्यमानव'दिति परिभाषा नास्ति, कथं तर्हि 'हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानव'दिति । तदेवमभक्तपक्षे स्वरदोषप्रसङ्गात्परादिः सुट् क्रियते । इड्गुणयोस्तु प्रतिषेधो वक्तव्य एव । अथवा एकाच उपदेशेऽनुदात्ता'दित्यत उपदेशग्रहण'मृतश्च संयोगादे'रित्यत्रानुवर्तते । तेनोपदेशे संयोगादेरिड्विधानात्सुटि कृते न भविष्यति । 'गुणोऽर्तिसंयोगाद्यो'रित्यत्रापि'नित्यं छन्दसी'त्यतो नित्य-

उ०—यस्माद्धात्वित्यादिकमपि कथं भाष्यस्वरससिद्धमिति चिन्त्यम् । सं-कृ शब्दे इत्यपि चिन्त्यम्, भाष्येण साधनकार्योत्तरमुपसर्गयोगप्रतीतेः । एवं च सं-कृति इति प्रयोक्तुमुचितम् । अन्यथात्रैव धातूपसर्गयोः समासापत्तिः । तेनार्थेन—समुदायार्थेन आरोपादिति भावः । भाष्ये—कात्पूर्वमहणं चापीति । द्विस्वाडादिभ्यः प्रागेव सुडुत्पत्तेः स्थाने द्विर्वचनपक्षेऽपि तन्न कर्तव्यमिति भावः ॥ ननु 'सुट्पूर्वान्त' इति विरुद्धमत आह—ककारमिति ।

पौर्वापर्याभावादिति । एवं च मस्य रुत्वाप्राप्तिस्तत्सूत्रमसंबद्धं च स्यादिति भावः । पदान्तत्वादिति । 'ससजुषो'रित्यनेन यथान्यासेऽपीति । अन्यथा संस्कर्तेत्यादौ 'वा शरी'ति पक्षे विसर्जनीयः स्यादिति भावः । पौर्वापर्यं चेति । वचनसामर्थ्यादिति भावः । इदं च संपुंकानामिति वार्तिकारम्भेऽप्यावश्यकम् । अन्यथा तस्यापि सुकि परत्व एव प्रवृत्तेर्दोषतादवस्थ्यमेव । रुर्विधेय इति वदन्तं प्रति वार्तिकविरोधप्रदर्शनाय तु सूत्रं विहाय वार्तिकाश्रयेण समाहितमिति बोध्यम् ।

१—'स्वरे दोषः' पाठ । २—'चात्र' पा० ।

प्रतिषेधाद्यदन्यस्मादतिङस्तिङ्सदृशात्कार्यं विज्ञास्यते । किं चान्यदतिङ् तिङ्सदृशम् ? पदम् ॥ १३५ ॥

## अपाच्चतुष्पाच्छकुनिष्वालेखने ॥ ६ । १ । १४२ ॥

### किरतेर्हर्षजीविकाकुलायकरणेषु ॥ १ ॥

किरतेर्हर्षजीविकाकुलायकरणेष्विति वक्तव्यम् । अपस्किरते वृषभो हृष्टः । अपस्किरते कुक्कुटो भक्षार्थी । अपस्किरते श्वाश्रयार्थी† ॥ १४२ ॥

## अपरस्पराः क्रियासातत्ये ॥ ६ । १ । १४४ ॥

किमिदं सातत्य इति ? संततभावः सातत्यम् । यद्येवं सान्तत्य इति भवितव्यम् ।

### समो हिततततयोर्वा लोपः ॥ १ ॥

समो हिततततयोर्वा लोपो वक्तव्यः । संहितम् सहितम् । संततम् सततम् ।

प्र०—ग्रहणानुवृत्त्या नित्यं यः संयोगादिस्तस्य गुणविधानात् सुटि कृते संयोगादेर्गुणाभावः ॥१३५॥

अपाच्चतु । किरतेरिति । हर्षादय एवोपाधय उपादातव्या न चतुष्पाच्छकुनयः । तथा चात्मनेपदविधौ हर्षादय एवोपात्ता न चतुष्पाच्छकुनयः । न चातिप्रसङ्गो विशिष्टहर्षादिविषयत्वात्सुडात्मनेपदयोः प्रयुक्तानां साधुत्वान्वाख्यानात् ॥ १४२ ॥

अपरस्पराः । किमिदमिति । मकारलोपलक्षणानुपलम्भात्, निपातनाश्रयणे बाधकत्वान्निपातनानां संततशब्दस्य बाधप्रसङ्गात्प्रश्नः । इतरो लक्षणान्तरं शब्दान्तरसिध्यर्थमवश्याश्रयितव्यमिति मन्यमान आह—समो हिततततयोर्वेति । अव्यविकन्यायाश्रयेण तु संततस्य भाव

उ०—अथवेति । 'हलोऽनन्तरा' इति सूत्रे 'प्रत्येकं संयोगसंज्ञे'ति पक्षे संह्वषीष्ट संह्वियत इत्यत्रानयोरिङ्गुणयोरापादनपरमाष्यविरोधादिदं चिन्त्यम् । तस्माद्वचनमेव शरणम् ॥ १३५ ॥

अपाच्चतुष्पात् । सूत्रोपात्तोपाधेर्विशेषेऽवस्थापनाय वार्तिकम् । तत्रात्मनेपदवत्सुटोऽपि विषयविशेषेऽभिधानस्वाभाव्यादेव सिद्धौ सत्यां सूत्रोपात्तोपाधिरनर्थक इत्याह—हर्षादय एवेति । एतत्समानाकारमेवात्मनेपदविधायकमेतान्येव चोदाहरणानि ॥ १४२ ॥

अपरस्पराः । ननु मलोपस्य लक्षणाभावेऽपि निपातनादेव साधुत्वं स्यादत आह—निपातनाश्रयण इति । निपातनानां बाधकत्वं च सर्वादिसूत्रे भाष्ये स्थापितम् । ननु सन्ततस्य साधुत्वे सान्तत्यमित्यपि स्यादत आह—अव्यविकेति । अत एव सर्वादिसूत्रे भाष्ये 'निपातानां मलोपे सन्ततमिति न सिध्यति'

† १ । ३ । २१ वा० ४ पृ० २५२ ।

१—'संततस्य भावः पा० ।

## सम्तुमुनोः कामे ॥ २ ॥

सम्तुमुनोः कामे लोपो वक्तव्यः । सकामः भोक्तुकामः ।
मनसि चेति वक्तव्यम् । समनाः भोक्तुमनाः ।

## अवश्यमः कृत्ये ॥ ३ ॥

अवश्यमः कृत्ये लोपो वक्तव्यः । अवश्यभाव्यम् ॥ १४४ ॥

## गोष्पदं सेवितासेवितप्रमाणेषु ॥ ६ । १ । १४५ ॥

इदमतिबहु क्रियते सेविते असेविते प्रमाण इति । सेवितप्रमाणयोरित्येव सिद्धम् । केनेदानीमसेविते भविष्यति ? नञा सेवितप्रतिषेधं विज्ञास्यामः ।

नैवं शक्यम् । सेवितप्रसङ्ग एव स्यादसेविते न स्यात् । असेवितग्रहणे पुनः क्रियमाणे बहुव्रीहिरयं विज्ञास्यते । अविद्यमानसेवितेऽसेवित इति । तस्मादसेवितग्रहणं कर्तव्यम् ॥ १४५ ॥

प्र०—इति वाक्यमेव भवति,न तु ष्यन्निति, सांतत्यमिति न भवति । संहितायां समासे चैषां मकारलोप इष्यते, नान्यत्रेत्याहुः ॥ १४४ ॥

गोष्पदं । सेवितप्रसङ्ग इति । यत्र सेवनं संभवति तत्रैव स्यात्, यत्र तु गवामत्यन्तमसंभवस्तत्र न स्यात् । असेवितग्रहणसामर्थ्यात्तु बहुव्रीहिराश्रीयते । तेन यत्र गवामत्यन्तमसंभवस्तत्रैव गोष्पदशब्दः प्रयोक्तव्यो न तु सेवितप्रसङ्ग इति केचिदाहुः । अन्ये त्वविशेषेण गोष्पदशब्दप्रयोगमिच्छन्ति । असेविते गोष्पदशब्दस्यासंभवाद्गोष्पदशब्दार्थमसेवितग्रहणम् । इह प्रमाणे गोष्पदशब्दो निपात्यते, यदा वर्षादेः परिच्छेदः प्रतिपाद्यते—'गोष्पदपूरं वृष्टो देवः' 'गोष्पदमात्रं क्षेत्र'मिति । नात्र गोष्पदं स्वार्थमुपादीयते । यथा 'चेलक्नोपं वृष्टो देव' इत्यसत्यपि चेलक्नोपे प्रयुज्यते तथा 'गोष्पदपूरं वृष्टो देव' इत्यसत्यपि गोपादपूरणे ॥ १४५ ॥

उ०—इत्युक्तम्, न तु 'सूत्रेचारितसजातीयं सान्तत्यमिति न सिध्यती'त्युक्तम्। अत्र च 'सान्तत्य इति भवितव्य'मित्युक्तम् । नन्वेव'मवश्यं कर्तव्य'मिति न स्यादत आह—संहितायां समासे चेति ॥ १४४ ॥

गोष्पदं । यत्र सेवनमिति । ग्रामादौ । नञिवयुक्तन्यायादिति भावः । नन्वसेवितग्रहणेऽप्ययं दोषस्तदवस्थोऽत आह—सामर्थ्यादिति । तेन यत्रेति । अरण्यादौ । अविशेषेणेति । अरण्यादौ, ग्रामादौ चेत्यर्थः । अत्राद्यन्त्रिबीजं तु बहुव्रीहिसमासमात्रप्रदर्शकभाष्यविरोधः । किं च गोष्पदशब्देनैव नञ्समासबहुव्रीहिभ्यां सिद्धेऽसेवितग्रहणसार्थक्यं दुरुपपादमेवेत्याहुः । नन्वसेवितेऽपि गोष्पदस्यैव निपातनादगोष्पदानीत्युदाहरणमयुक्तमत आह—असेवित इति । गवां यत्पदं स्थानं तत्र गोभिरसेवनासंभवादिति भावः । परिच्छेदः—अल्पत्वरूपः । एवं च गोष्पदशब्दः स्वार्थपरित्यागपूर्वकमल्पत्वरूपे प्रमाणमात्रे वर्तत इति तात्पर्यम् । तत्र दृष्टान्तमाह—यथेति । 'चेले क्नोपे'रित्यत्र हि 'वर्षप्रमाणे' इति वर्तते ॥ १४५ ॥

## विष्किरः शकुनौ वा ॥ ६ । १ । १५० ॥

### विष्किरः शकुनौ विकिरो वा ॥ १ ॥

विष्किरः शकुनौ विकिरो वेति वक्तव्यम् । शकुनौ वेति ह्युच्यमाने शकुनौ वा स्यादन्यत्रापि नित्यम् ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । न वावचनेन शकुनिरभिसंबध्यते । किं तर्हि ? निपातनमभिसंबध्यते । विष्किर इत्येतन्निपातनं शकुनौ वा निपात्यत इति ॥ १५० ॥

## आश्चर्यमनित्ये ॥ ६ । १ । १४७ ॥

### आश्चर्यमद्भुते ॥ १ ॥

आश्चर्यमद्भुत इति वक्तव्यम् । इहापि यथा स्यात्—आश्चर्यमुच्चता वृक्षस्य । आश्चर्यं नीला द्यौः । आश्चर्यमन्तरिक्षेऽबन्धनानि नक्षत्राणि न पतन्तीति ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । अनित्य इत्येव सिद्धम् । इह तावदाश्चर्यमुच्चता वृक्षस्येत्याश्चर्यग्रहणेन न वृक्षोऽभिसंबध्यते । किं तर्हि ? उच्चता, सा चानित्या ।

प्र०—विष्करः । 'विष्करः शकुनौ वे'तिसूत्रपाठमाश्रित्य वार्तिकारम्भः । शकुनौ वा स्यादिति । इह सिद्धस्य शब्दस्य विकल्पेनाभिसंबन्धो नास्ति, यथा 'मेध्यः पशुर्विभाषित' इति । नात्र पशुत्वं विकल्प्यते, किं तर्ह्यालम्भनम् । ततश्चाधिकरणविकल्पः प्राप्नोतीति भावः । यदि तर्ह्यन्यत्रापि स्यात्, किमर्थं शकुनिग्रहणमिति चेत्तत्तुल्यजातीयप्रतिपत्त्यर्थं स्यात् शकुनौ वा भवति तत्तुल्यजातीये चान्यस्मिन्नर्थ इति । न वावचनेनेति । सुटो भावो विकल्प्यत इत्यर्थः ॥ १५० ॥

आश्चर्यम । आश्चर्यमद्भुत इति । अद्भुतं विस्मयहेतुः । अनित्य इत्येवेति । निपातनाचानित्यविशेषो विस्मयहेतुर्गृह्यते । सा चानित्येति । वृक्षान्तरे तथाविधाया उच्चताया

उ०—विष्करः । इति सूत्रपाठमिति । 'विष्किरः शकुनिर्विकिरो वे'त्यनार्षः पाठ इति भावः । ननु शकुनौ सुडागमनिपातनस्य विकल्पे विकल्पे विकिरस्य सिद्धेर्वार्तिकं व्यर्थमत आह—इहेति । अधिकरणविकल्प इति । शकुनौ वान्यत्र वेत्याकारः । तदुक्तं भाष्ये—अन्यत्रापि नित्यमिति । तुल्यजातीये इति । प्राणित्वादिना तुल्यजातीय इत्यर्थः । भाष्ये 'निपातन'शब्देन कर्मव्युत्पत्त्या सुडुच्यते, निपातनद्वारा सुडप्राप्तो विधीयते इति तस्यैव विकल्पेन योगः । यथा 'व्रीहिभिर्यजेते'त्यादौ व्रीहिसाधनो यवसाधनश्च यागो विकल्पेन विधीयत इत्यर्थः । 'विष्किर' इत्येतन्निपातनमित्यनेन निपात्यमानः सुट् शकुनौ वा निपात्यते-बोध्यते इति भाष्याक्षरार्थः ॥ १५० ॥

आश्चर्यम । नन्वनित्य इत्युच्यमाने घटादावप्याश्चर्यशब्दप्रयोगः स्यादत आह—निपातनाच्चेति ।

आश्चर्यं नीला द्यौरिति नाश्चर्यग्रहणेन द्यौरभिसंबध्यते । किं तर्हि ? नीलता, सा चानित्या । आश्चर्यमन्तरिक्षेऽबन्धनानि नक्षत्राणि न पतन्तीति नाश्चर्यग्रहणेन नक्षत्राण्यभिसंबध्यन्ते । किं तर्हि ? पतनक्रिया, सा चानित्या । तत्रानित्य इत्येव सिद्धम् ॥ १४७ ॥

## मस्करमस्करिणौ वेणुपरिव्राजकयोः ॥ ६ । १ । १५४ ॥

मस्करिग्रहणं शक्यमकर्तुम् । कथं मस्करी परिव्राजक इति ? इनिनैतन्मत्वर्थीयेन सिद्धम्* । मस्करोऽस्यास्तीति ॥ न वै मस्करोऽस्यास्तीति मस्करी परिव्राजकः । किं तर्हि ? मा कृत कर्माणि मा कृत कर्माणि शान्तिर्वः श्रेयसीत्याहातो मस्करी परिव्राजकः ॥ १५४ ॥

## पारस्करप्रभृतीनि च संज्ञायाम् ॥ ६ । १ । १५७ ॥

अविहितलक्षणः सुट् पारस्करप्रभृतिषु द्रष्टव्यः । [1]पारस्करो देशः । कारस्करो वृक्षः । रथस्पा नदी । किष्किन्धा गुहा । किष्कुः ।

प्र० अदर्शनात् । नीलतेति । सा च सदा दिवि न दृश्यते इत्यनित्यता । पतनक्रियेति । नत्रर्थेऽनि भावः अबन्धनस्यान्यस्यापतनं न दृश्यत इत्यनित्यम् ॥ १४७ ॥

मस्कर । मा कृतेति । अयं मा कृत अयं मा कृतेत्युपक्रम्य शान्तितः काम्यकर्मपरिहारिणर्युष्याकं श्रेयसीत्युपदेष्टा मस्करीत्युच्यते । माङ्पूर्वात्करोतेरिनिः, सुडागमो माङो ह्रस्वश्च निपात्यते ॥ १५४ ॥

पारस्कर । तत्करोतीति तस्करः । तच्छब्देन चौरकर्म प्रसिद्धं नित्यं परामृश्यते ।

उ०—अनित्यम्—अनियतम् ॥ १४७ ॥

मस्कर । भाष्ये–न वै मस्करी मस्करोऽस्येति । एतदर्थको न मस्करिशब्दः, न हि सर्वः परिव्राजको दण्डधरो नापि तन्मात्रेण परिव्राजकत्वमिति भावः । अयं मा कृतेति । 'अयं त्यक्तवानयं त्यक्तवान्कर्माणि'-त्युपक्रम्य कर्माणि परित्यज्य परान्प्रत्येवमुपदेष्टेत्यर्थः । भाष्ये 'कर्म'शब्देन काम्यकर्माण्युच्यन्ते । नित्यनैमित्तिकानि तु मुमुक्षोरपि कर्तव्यान्येव । अत एव 'काम्यानां कर्मणां न्यासं संन्यासं कवयो विदु'रिति गीतायामुक्तमिति भावः । करोतेरिति । ताच्छील्ये णिनौ प्राप्ते इनिर्निपात्यत इत्यर्थः ॥ १५४ ॥

पारस्कर । नित्यं प्रसिद्धं चौरकर्मेत्यन्वयः । अस्य स्थाने इति । प्रायशब्दान्त्याकारस्थाने इत्यर्थः ।

* अत इनिठनौ ५ । २ । ११५ ।

१–'पारं करोतीति पारस्करः' इति न्यासः ।

• तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च । तस्करः बृहस्पतिः । प्रायस्य चित्तिचित्तयोः सुडस्कारो वा । प्रायश्चित्तिः प्रायश्चित्तम् ॥१५७॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठस्याध्यायस्य
प्रथमे पादे पञ्चममाह्निकम् ।

## अनुदात्तं पदमेकवर्जम् ॥ ६ । १ । १५८ ॥

किमनुदात्तानि पदानि भवन्त्येकं पदं वर्जयित्वा ? 'ने'त्याह । पदे येषामुदात्तप्रसङ्गस्तेऽनुदात्ता भवन्त्येकमचं वर्जयित्वा । स तर्हि तथा निर्देशः कर्तव्यः—अनुदात्ताः पदे अनुदात्ताः पदस्येति वा ।

प्र०—अस्कार इति । अस्य स्थानेऽस्कारोऽऽस्कारः । शकन्ध्वादित्वात् पररूपम् ॥ १५७ ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे षष्ठस्याध्यायस्य
प्रथमे पादे पञ्चममाह्निकम् ।

अनुदात्तं पदमेकवर्जम् । किमनुदात्तानीति । 'पद'मिति जातावेकवचनं मन्यते । यथा 'ग्रहं संमार्ष्टी'ति ग्रहार्थस्य संस्कार्यत्वात् प्राधान्यात् संख्याया अविवक्षा, तथा 'पद'मित्यत्रापि पदस्य संस्कार्यत्वात् । अनुदात्तशब्दं च लौकिकं मन्यते । लोका ह्युदात्तं पदमनुदात्तं पदमिति व्यपदिशन्ति । अनुदात्तगुणयोगात्पदमनुदात्तम् । तत्राचामनुदात्तगुणयोगे व्यञ्जनमपि तत्साहचर्यात्तद्धर्मा गृह्यत इत्यज्झलसमुदायरूपं पदमनुदात्तगुणयोगादनुदात्तमिति सामानाधिकरण्येन निर्देश उपपद्यते । 'एकवर्ज'मित्यत्रैकशब्देन प्रत्यासत्त्या पदमेवोच्यते । तत्रायं सूत्रार्थः । 'वाक्ये पदमेकं वर्जयित्वा पदान्तराण्यनुदात्तानि भवन्ती'ति पूर्वपक्षः । पदे येषामिति । यथा 'पशुना यजेते'ति

उ०—अन्यथा सर्वादेशः स्यादिति भावः । चिनोतेः क्तिन्पुंसके भावे कश्च ॥ १५७ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते षष्ठस्याध्यायस्य
प्रथमे पादे पञ्चममाह्निकम् ।

अनुदात्तं पदमेकवर्जम् । ननु सूत्रे 'पद'मित्युक्तेः पदानीति भाष्यमयुक्तमत आह—जाताविति । तत्र दृष्टान्तमाह—यथा ग्रहमिति । सङ्ख्याया अविवक्षा चेयमेव यज्जातावेकवचनकरणम् । संस्कार्यत्वम्—अनुवाद्यत्वम् । नन्वनुदात्तादिशब्दस्याचि परिभाषितत्वात्पदेन सामानाधिकरण्यमयुक्तमत आह—अनुदात्तशब्दमिति । गुणयोगादिति । गुणगुणिनोरभेदोपचारादित्यर्थः । नन्वज्धर्मोनुदात्तत्वादिना कथं झलसमुदायरूपपदस्य व्यपदेशोऽत आह—तत्राचामिति । तद्धर्मेति । बहुव्रीहावनिजन्तम् । भाष्ये—नेत्याहेति । लक्ष्यविरोधादिति भावः । भाष्ये—पदे येषामुदात्तप्रसङ्ग इति । येषामचां मध्ये कस्यचिदुदात्तप्रसङ्ग

१—"तस्करस्तत्करो भवति यत्पापकमिति नैरुक्तास्तनोतेर्वा स्यात्सन्ततकर्मा भवत्यहोरात्रकर्मा वा ।" ( निरु० १ । ३ । ३ । १४ )

न कर्तव्यः । 'अनुदात्तं पदमेकवर्ज'मित्येव सिद्धम् । कथम् ? मतुब्लोपोऽत्र द्रष्टव्यः । तद्यथा—पुष्पका एषां [ ते[२] ] पुष्पकाः । कालका एषां [ ते[२] ] कालका इति । अथवाकारो मत्वर्थीयः । यद्यथा—तुन्दः घाट इति ।

किमर्थं पुनरिदमुच्यते ?

आगमस्य विकारस्य प्रकृतेः प्रत्ययस्य च ।
पृथक्स्वरनिवृत्त्यर्थमेकवर्जं पदस्वरः ॥

आगमस्य—'चतुरनडुहोरामुदात्तः' [ ७ । १ । ९८ । चत्वारः अनड्वाहः ।

प्र०—व्यक्तिगतमेकत्वं पशोर्गुणत्वाद्यागस्य प्राधान्याद्विवक्ष्यते, तथा पदमित्यत्रापि, पदानुवादेनाचामनुदात्तविधानात्पदस्य गुणत्वाद्गुणे च सङ्ख्याया विवक्षितत्वात् । 'कृत्रिमाकृत्रिमयोः कृत्रिमे संप्रत्यय' इति च न्यायादनुदात्तशब्देनाच उच्यन्ते । 'एकवर्ज'मित्यत्राप्येकशब्देनाजेव गृह्यते । यदि ह्येकशब्देन पदं गृह्येत ततो नियमकारणाभावात्सर्वेषां पदानां पर्यायेण वर्जनात् स्वरनियमो न स्यात् । अचस्तु ग्रहणे यस्याचः स्वरो बलवान् स वर्ज्यत इत्यनियमाभावः । स तर्हीति । अज्झलसमुदायवाचिनः पदशब्दस्याज्मात्रवाचिनानुदात्तशब्देन सामानाधिकरण्यमनुपपन्नमिति भावः ।

मतुब्लोप इति । अवयवावयविनोरभेदोपचारादनुत्पत्तिरेव मतुब्लोपः, न तु 'गुणवचनेभ्यो लु'गिति मतुब्लोपः, अनुदात्तशब्दस्याचि संज्ञात्वेन विनियोगाद्गुणवचनत्वाभावात् । पुष्पका इति । त्रयो बिन्दव उच्यन्ते । तद्योगाद्बिडालाः 'पुष्पका' इत्याहुः । अथवेति । भेदसंबन्धाश्रयेण प्रतिपाद्यते । अर्श आदेराकृतिगणत्वादकारः ॥ किमर्थमिति । पर्याययौगपद्ययोर्वक्ष्यमाणेन ज्ञापकेन निरासान्नार्थः सूत्रेणेति मत्वा प्रश्नः ॥ चत्वार इति । 'चतेरुर'न्निति चतुःशब्द आद्युदात्तः । आमुदात्तस्तत्र विरोधाभावादुदात्तद्वयप्रसङ्गः । अनड्वाह इति । अनो वहतीति

उ०—इत्यर्थः । उदात्तग्रहणमुपलक्षणं स्वरितस्यापि । पदानुवादेनाचामिति । एवं च पदस्य साक्षान्न संस्कार्यत्वमपीति भावः । परे त्वेकत्वविवक्षाकथनस्य नोपयोगः । किं च विवक्षायां पदान्तरे स्वरो न स्यात् । तस्माद्यावति पदत्वं समाप्तं तावत्यस्य प्रवृत्तिरिति न दोष इत्याहुः । अच उच्यन्त इति । पदेन समानाधिकरण्यं तु अर्शआद्यचा बोध्यम् । ननु पदस्यापि श्रवणात् एकशब्देन तस्यापि ग्रहणं स्यादत आह—यदि हीति । सर्वेषामिति । सर्वेषामपि तत्तद्रूपेणैकपदत्वादिति भावः । बलवानिति । सतिशिष्टत्वादिनेत्यर्थः ।

वक्ष्यमाणरीत्या गुणवचनत्वाभावान्मतुब्लोपासङ्गतेराह—अवयवेति । गुणवचनत्वाभावादिति । संज्ञासंज्ञायां गुणवचनसंज्ञाबाधकत्वस्याकडारसूत्रे भाष्ये उक्तत्वादिति भावः । सौत्रोऽत्र मतुब्लोप इति भाष्याशयमन्ये ॥ 'अनड्वाह' इत्यत्रोपपदस्वराम्स्वरयोः श्रवणप्रसङ्गो दोषः । नब्विषयस्य-नपुंसकविषयस्य । तित्तिरिर्मध्योदात्तः ।

१-'पुष्पका' पा० ।     २-क्वचिन्न ।

विकारस्य—'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' [ ७ । १ । ७५ ] अस्थ्ना दध्ना । प्रकृतेः—गोपायति धूपायति* । प्रत्ययस्य च—कर्तव्यम् तैत्तिरीयः† । एतेषां पदे युगपत्स्वरः प्राप्नोति । इष्यते चैकस्य स्यादिति, तच्चान्तरेण यत्नं न सिध्यतीत्यनुदात्तं पदमेकवर्जम् । एवमर्थमिदमुच्यते ।। नैतदस्ति प्रयोजनम् ।

**यौगपद्यं तवै सिद्धं**

यदयं 'तवै चान्तश्च युगपत्' [ ६ । २ । ५१ ] इति सिद्धे यौगपद्ये यौगपद्यं शास्ति तज्ज्ञापयत्याचार्यो 'न युगपत्स्वरो भवती'ति ।। पर्यायस्तर्हि प्राप्नोति ।

**पर्यायो रिक्तशासनात् ।**

यदयं 'रिक्ते विभाषा' [ ६ । १ । २०८ ] इति सिद्धे पर्याये पर्यायं शास्ति तज्ज्ञापयत्याचार्यो 'न पर्यायो भवती'ति ।

**उदात्ते ज्ञापकं त्वेतत्**

एतदुदात्ते ज्ञापकं स्यात् ।

**स्वरितेन समाविशेत् ।।**

स्वरितेन समावेशः प्राप्नोति ।। स्वरितेऽप्युदात्तोऽस्ति‡ । तस्मान्नार्थोऽनेन योगेन ।

प्र०—अनसि वहे क्विप् [illegible] शब्दोऽसुन्प्रत्ययान्त आद्युदात्त [illegible] रकोपपदात्क्'दिति उत्तरपदप्रकृतिस्वरेण धातुरन्तोदात्तः । अस्थ्नेति 'अ[illegible] नित्याद्युदात्तोऽस्थिशब्दः । दधिशब्दो 'नब्विषयस्यानिसन्तस्ये'त्याद्युदात्त ।

तवैचान्तश्च युगपदिति । अनेन गतेः पूर्वस्य पदस्य प्रकृतिस्वरो विधीयते, तवैप्रत्ययान्तस्य चान्तोदात्तत्वम् । तत्र युगपद्ग्रहणमन्तरेण विरोधाभावाद्यौगपद्ये सिद्धे युगपद्ग्रहणमन्यत्र यौगपद्याभावस्य ज्ञापकम् । पर्यायस्तर्हीति । ज्ञापकेन यौगपद्ये निरस्ते पर्यायप्रसङ्गः । रिक्ते विभाषेति । अनेनाद्युदात्तत्वम् । पक्षे त्वन्तोदात्तत्वं तस्य प्रत्ययस्वरेण । तदेवं पर्याययौगपद्यनिरासे परनित्यत्वादियुक्तः स्वरो भविष्यतीति नार्थः सूत्रेण । स्वरितेनेति । उदात्तस्वरितयोरेकस्मिन् पदे समावेशप्रसङ्गः । स्वरितेऽपीति । उदात्ते पर्याययौगपद्यनिरासे ज्ञापकात्कृते

उ०—वार्तिके 'तवै'ग्रहणं सूत्रोपलक्षणम् । अनेनाद्युदात्तत्वमिति । 'विकल्पेन विधीयत' इति शेषः । उदात्तस्वरितयोरपीति । उदात्तश्रुतिसामान्यविषयज्ञापकाश्रयणादस्वरकस्याच उच्चारणासंभवाच्चानुदात्तत्वसिद्धिरिति तात्पर्यम् । नन्वेवमुदात्तग्रहणेन स्वरितस्यापि ग्रहणे स्वरितानुदात्तस्यापि स्वरितः स्यादत आह—यत्त्विति । अत्रैवार्थे लिङ्गमप्याह—तथा चेति । अनेन स्वरितविषयत्वं ज्ञापकस्यासङ्गतमित्युक्तम् ।

* धातोः ६ । १ । १६२ † आद्युदात्तश्च ३ । १ । ३

‡ तस्यादित उदात्तमर्धह्रस्वम् १ । २ । ३२

आरभ्यमाणेऽप्येतस्मिन्योगे—

**अनुदात्तेवप्रतिषधानुपपत्तिरेकस्मिन्युगपत्संभवात् ॥ १ ॥**

अनुदात्ते विप्रतिषेधो नोपपद्यते । पठिष्यति ह्याचार्यो विप्रतिषेधं 'जे दीर्घाद्वह्वच' इति* । स विप्रतिषेधो नोपपद्यते । किं कारणम् ? एकस्मिन्युगपत्संभवात् । असति खलु संभवे विप्रतिषेधो भवत्यस्ति च संभवो यदुभयं स्यात् । कथं संभवो यदानुदात्तं पदमेकवर्जमित्युच्यते ? तदिह नास्ति । किं कारणम् ?

प्र०—स्वरितेऽप्युदात्तसद्भावादुदात्तस्वरितयोरपि पर्यायियौगपद्यनिरासः सिद्ध इत्यर्थः । उदात्तश्रुतिमात्रविषयस्य ज्ञापकस्याश्रयणादेवं लभ्यते । यत्तूदात्तश्रुत्या स्वरितस्याग्रहणमिह शास्त्रे तद्युक्तम् । मुख्यस्योदात्तस्याचः सञ्ज्ञिनो ग्रहणस्य युक्तत्वात् । तथा चोदात्तस्वरितयोरित्यादौ भेदेन स्वरितो निर्दिष्टः ।

आरभ्यमाणेऽपीति । ज्ञापकादस्पष्टा संदिग्धा वा प्रतिपत्तिर्भवति, साक्षाद्विधाने तु स्पष्टा असंदिग्धा चेति यदि योग आरभ्यते तदारभ्यमाणे दोषप्रसङ्गः । इदमेवानुदात्तस्य विधायकं लक्षणमिति मत्वा दोषोपन्यासः । एकमचं वर्जयित्वा शिष्टानामनेनानुदात्तत्वं क्रियते, तत्र येषामचामुदात्तत्वं स्वरितत्वं वा साक्षान्न विधीयते तेऽस्यावकाश इति येषां शास्त्रेणोदात्तत्वं स्वरितत्वं वा विधीयते तच्चैषां न निवर्तयेत् । यथा 'आमलकीज'इत्यत्र चतुर्णामुदात्तत्वं शास्त्रेण विधीयते—ङी[illegible] प्रत्ययाद्युदात्तत्वम्, 'गतिकारकोपपदात् कृ'दिति कृत्स्वरः । 'दीर्घकाशतुषभ्राष्ट्रवटं जे' इति [illegible]द्युदात्तत्वम्, 'अन्त्यात्पूर्वं बह्वच' इति लकाराकारस्योदात्तत्वमिति विरोधाभावाद्युगपदुदात्तचतुष्टय स्यात् । शिष्टस्य चानुदात्तत्वमेकवर्जमित्यस्माद्धि वचनाद्यस्य यस्योदात्तस्वरितविधानं स स वर्ज्यत इति विप्रतिषेधानुपपत्तिश्चोद्यते । तथा चान्तश्च तत्रै 'युगपदित्यादिषु पूर्वोक्तेन प्रकारेण द्वावपि वर्ज्येते उदात्तादनुदात्तस्य स्वरित' इति स्वरितत्वं न भवति, 'नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवाना'मिति पक्षे प्रतिषेधात् ।

उ०—एतन्मूलकमेव भाष्यकार आह—आरभ्यमाणेऽपीति । युक्त्यन्तरमप्याह ज्ञापकादिति । अस्पष्टत्वं—विलम्बितत्वम् । सामान्यविषयत्वविशेषविषयत्वाभ्यां ज्ञापकं सन्दिग्धम् । नन्वस्याः परिभाषात्वे 'दीर्घकाशे'-त्यादावस्या उपस्थानादामलकीज इत्यादावुभयोः स्वरयोरसंभवाद्विप्रतिषेध उपपद्यत एवेत्यत आह—इदमेवेति । एकमचमिति । एकग्रहणं शास्त्रान्तरविहितस्वरकोपलक्षणम् । न निवर्तयेदिति । एषाम्—अचां, तच्च—उदात्तत्वं स्वरितत्वं च, इदं—शास्त्रं न निवर्तयेदित्यन्वयः । अप्रप्ताविधाने चरितार्थत्वात्प्राप्तनिवृत्तौ व्यापाराभाव इति भावः । कृत्स्वर इति । जकाराकारस्येत्यर्थः । शिष्टस्य—मकाराकारस्य । नन्वेकग्रहणात्कथं चतुर्णामुदात्तानां श्रवणमत आह—एकवर्जमित्यस्मादिति । अस्याशय उक्तः । इदं परिभाषापक्षेऽपि समानमित्याह—तथा चेति । एतदुत्तरमुक्तप्रयोगे स्वरितत्वाभावव्युत्पादनं पाक्षिकं कैयटेन कृतं तत्किमर्थमिति चिन्त्यम् ।

* ६ । २ । ८२ वा० १

नानेनोदात्तत्वं प्रतिषिध्यते । किं तर्हि ? अनुदात्तत्वमनेन क्रियतेऽस्ति च संभवो यदुभयोश्चोदात्तत्वं स्यादन्येषां चानुदात्तत्वम् ।

यदि पुनरयमधिकारो विज्ञायेत । किं कृतं भवति ? अधिकारः प्रतियोगं तस्यानिर्देशार्थ इति योगे योग उपतिष्ठते । जे दीर्घान्तस्यादिरुदात्तो भवति† । उपस्थितमिदं भवत्यनुदात्तं पदमेकवर्जमिति । 'अन्त्यात्पूर्वं बह्वचः' [ ६ । २ । ८३ ] उपस्थितमिदं भवत्यनुदात्तं पदमेकवर्जमिति । तत्र पूर्वेणास्तु वर्ज्यमानता परेण वेति परेण भविष्यति परत्वात् ।

नैवं शक्यम् । षाष्ठिक एकः स्वरः सङ्गृहीतः स्याद्येऽन्ये सप्ताध्याय्यां स्वरास्ते न सङ्गृहीताः स्युः ।'समानोदरे शयित ओ चोदात्तः' [ ४ । ४ । १०८ ] । 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' [ ७ । १ । ७५ ] इति ।

**सिद्धं त्वेकानुदात्तत्वात् ॥ २ ॥**

सिद्धमेतत् । कथम् ? एकाननुदात्तत्वात् । एकाननुदात्तं पदं भवतीति वक्तव्यम् ।

प्र०—एकस्मिन्निति । पद इत्यर्थः । नानेनोदात्तत्वं प्रतिषिध्यत इति । यदि 'नोदात्तं पदमेकवर्ज'मिति सूत्रन्यासं कृत्वा उदात्तत्वं प्रतिषिध्येत, न स्याद्दोषः । एकमचं वर्जयित्वा सर्वेषामुदात्तत्वनिषेधात् । क्वचित्पाठो 'नानेनोदात्तत्वं क्रियते' इति । तत्रायमर्थः—यदि 'उदात्तं पद एक'मिति सूत्रं कृत्वोदात्तमेकमेव पदे भवतीति नियमायोदात्तत्वं क्रियते तदा न स्याद्दोषः । आचार्यदेशीय आह—यदि पुनरिति । अस्य स्वातन्त्र्याभावादुत्तरैर्वाक्यैरेकवाक्यत्वे सति यस्य स्वरो विधीयते तद्वर्जमन्येषामनुदात्तत्वं क्रियत इति द्वयोरपि योगयोरस्योपस्थाने क एकोऽनुदात्तत्वे वर्ज्यत को न वर्ज्यत इत्युपपद्यते विप्रतिषेधः ॥ नैवं शक्यमिति । अधिकार आश्रयितुमशक्योऽव्याप्तिप्रसङ्गात् ।

सिद्धं त्विति । 'एकाननुदात्तं पद'मिति परिभाषा कर्तव्या, यस्याचः स्वरो विधीयते स एवाविद्यमानोदात्तो न भवति, शिष्टस्त्वविद्यमानोदात्त इति उदात्तनिषेधः संपद्यते । यत्र

उ०—यदि नोदात्तं पदमिति । अत्र न्यासे 'एक'पदं एकत्वसङ्ख्यावत्परं, 'तवै चान्तश्चे'त्यादौ तु युगपद्ग्रहणसामर्थ्यात्समावेश इति भावः । अत्र पक्षे विप्रतिषेधोपपत्तिं दर्शयति—अस्य स्वातन्त्र्याभावादिति । क एक इति । किं 'दीर्घकाशे'ति किं वान्त्यात्पूर्वमितीत्यर्थः । भाष्ये—षाष्ठिक एव स्वर इति । षष्ठाध्यायस्य स्वरप्रकरणस्थ इत्यर्थः । येऽन्ये सप्ताध्याय्यामिति । षाष्ठिकातिरिक्ता ये सप्ताध्याय्यां स्वरा इत्यर्थः । अष्टमे तु नास्याः सिद्धान्तेऽप्युपस्थितिर्व्याख्यानादिति भावः । षष्ठेऽपि 'सहस्य स' इत्यादेरसङ्ग्रहः ।

ननु न्यासान्तरेऽपि विधित्वे स एव दोषोऽत आह—परिभाषेति । नन्वेवमप्येकोदात्तं पदमित्येव

† दीर्घकाशतुषभ्राष्ट्रवटं जे ६ । २ । ८२

किमिदमेकानानुदात्तत्वादिति ? नोदात्तोऽनुदात्तः । नानुदात्तोऽननुदात्तः । एकोऽननुदात्तोऽस्मिंस्तदिदमेकाननुदात्तम् । एकाननुदात्तत्वादिति । सिध्यति । सूत्रं तर्हि भिद्यते ।

यथान्यासमेवास्तु । ननु चोक्तमनुदात्ते विप्रतिषेधानुपपत्तिरेकस्मिन्युगपत्संभवादिति । नैष दोषः । परिभाषेयम् । किं कृतं भवति ? कार्यकालं हि संज्ञापरिभाषम् । यत्र कार्यं तत्रोपस्थितमिदं द्रष्टव्यम् । 'जे दीर्घान्तस्यादिरुदात्तो भवती'त्युपस्थितमिदं भवत्यनुदात्तं पदमेकवर्जमिति । 'अन्त्यात्पूर्वं बह्वच' इत्युपस्थितमिदं भवत्यनुदात्तं पदमेकवर्जमिति । तत्र पूर्वेणास्तु वर्ज्यमानता परेण वेति परेण भविष्यति परत्वात् ।

अथवा नेदं पारिभाषिकानुदात्तस्य‡ ग्रहणम् । किं तर्हि ? अन्वर्थग्रहणम् । अविद्यमानोदात्तमनुदात्तमिति ।

**एकवर्जमिति चाप्रसिद्धिः सन्देहात् ॥ ३ ॥**

एकवर्जमिति चाप्रसिद्धिः । कुतः ? संदेहात् । न ज्ञायते क एको वर्जयितव्य इति ।

प्र०—चैकस्य स्वरो विधीयते तत्रेदमुपतिष्ठते इति उभयोरस्योपस्थाने विप्रतिषेधोपपत्तिः । परिभाषेयमिति । न्यासान्तरे यदि परिभाषात्वमाश्रीयते तदा यथान्यासेऽपि न दोषः, फले विशेषाभावात् । स्वरविधिलिङ्गा चेयं परिभाषा । एकशब्दः सङ्ख्येयवाची, अनुदात्तश्रुत्युपादानात्तद्विरोधी स्वरित उदात्तश्च संख्येयो गृह्यते । ततश्चोदात्तस्वरितविधावस्या उपस्थानाद्द्वयोर्लक्षणयोरस्या उपस्थाने विप्रतिषेधोपपत्तिः ॥ अथवेति । लक्षणमिदमुदात्तत्वप्रतिषेधार्थम् । एकवर्जमित्यनेन तु प्रतिषेधपर्युदासः क्रियत इति लक्षणद्वयस्यैकस्मिन् पदे संनिपाते को वर्ज्यतामित्युपपद्यते विप्रतिषेधः । स्वरितेऽप्युदात्तोऽस्तीति तस्यापि प्रतिषेधोऽनेन विधीयते ।

एकवर्जमिति चाप्रसिद्धिरिति । परनित्यान्तरङ्गत्वेन सर्वत्र व्यवस्था नाभिमतेति

उ०—परिभाषा कर्तव्या । एक एवोदात्तो यत्र तादृशमर्थाच्छिष्टमुदात्तरहितमित्यर्थलाभादिति चेत्सत्यम् । तत्रैव तात्पर्यात् नञ्द्वयस्य भावदार्थबोधकत्वात् । यत्र चैकस्येति—तत्तदुदात्तादिशास्त्रस्योद्देश्यपरम् । ननु विधित्वे उद्भावितदोषस्य परिभाषात्वेन कथं परिहारोऽत आह— न्यासान्तर इति । तद्विरोधीति । अनुदात्तस्य विधेयत्वेन तद्वर्जनासम्भव इति भावः । उदात्तत्वप्रतिषेधार्थमिति । सर्वं पदमुदात्तरहितं भवतीत्यर्थादिति भाव । प्रतिषेधपर्युदास इति । कस्यैकस्य पर्युदास इति चेत्, यस्य लक्षणान्तरेण स्वरविधिरिति गृहाण । तत्रोदात्तत्वप्रतिषेधेऽनुदात्तत्वमेव भवति, अनुदात्तपदे उपस्थितत्वात् । तेन नैकश्रुतिर्नाप्यस्वरकता । स्वरितेऽप्युदात्तोऽस्तीति । इदमुदात्तस्वरितयोरिति ज्ञापकात्पूर्वोक्तादयुक्तमिति परिभाषापक्ष एव युक्तः ।

ननु परत्वादिभिर्व्यवस्थायाः सुगमत्वात्सन्देहादिति हेतुरसिद्धोऽत आह—परेत्यादि । सर्वत्रेति ।

‡ नीचैरनुदात्तः १ । २ । ३० ।

**सिद्धं तु यस्मिन्ननुदात्त उदात्तवचनानर्थक्यं तद्वर्जम् ॥ ४ ॥**

सिद्धमेतत् । कथम् ? यस्मिन्ननुदात्त उदात्तवचनमनर्थकं स्यात्स एको वर्जयितव्यः ।

**प्रकृतिप्रत्यययोः स्वरस्य सावकाशत्वादप्रसिद्धिः ॥ ५ ॥**

प्रकृतिप्रत्यययोः स्वरस्य सावकाशत्वादप्रसिद्धिः स्यात् । प्रकृतिस्वरस्यावकाशो यत्रानुदात्तः प्रत्ययः—पचति पठति* । प्रत्ययस्वरस्यावकाशो यत्रानुदात्ता प्रकृतिः—समत्वम् सिमत्वम्† । इहोभयं प्राप्नोति—कर्तव्यम् तैत्तिरीयः ।

विप्रतिषेधात्प्रत्ययस्वरः । विप्रतिषेधात्प्रत्ययस्वरो भविष्यति । नैवम् । 'विप्रतिषेधे पर'मित्युच्यते‡ न परः प्रत्ययस्वरः । नैष दोषः । इष्टवाची परशब्दः । विप्रतिषेधे परं यदिष्टं तद्भवतीति ।

**विप्रतिषेधात्प्रत्ययस्वर इति चेत्काम्याद्यादिषु चित्करणम् ॥ ६ ॥**

विप्रतिषेधात्प्रत्ययस्वर इति चेत्काम्यायादयश्चितः कर्तव्याः§ । पुत्रकाम्यति गोपायति ऋतीयते ॥ नैष दोषः । प्रकृतिस्वरोऽत्र बाधको भविष्यति* ।

**प्रकृतिस्वरे प्रत्ययस्वराभावः ॥ ७ ॥**

---

प्र०—भावः ॥ सिद्धं त्विति । अनवकाशः स्वरो वर्ज्येत इत्यर्थः ॥ अनवकाशत्वेन सर्वत्र व्यवस्था नोपपद्यत इति मत्वाह—प्रकृतिप्रत्यययोरिति ॥ विप्रतिषेधादिति । पूर्वविप्रतिषेधादित्यर्थः । काम्यायादय इति । काम्यचश्चित्करणं प्रत्याख्यातं तत्कर्तव्यमेव । आयेयङोस्त्वपूर्वं चित्वं कर्तव्यमित्युभयोपादानम् । अन्यथा पूर्वविप्रतिषेधाद्ध धातुस्वरं बाधित्वा प्रत्ययाद्युदात्तत्वं स्यात् । प्रकृतिस्वर

---

—उ०'गोपायति' 'ऋतीयते' 'औपगवत्व'मित्यादौ । समत्वमित्यत्र 'त्वत्वसमसिमेत्यनुच्चानी'ति प्रकृतिरनुदात्ता । तित्तिरिः 'शकुनीनां च लघुपूर्वं'मिति मध्योदात्तः ॥ ननु काम्यचश्चित्त्वस्य कृतत्वात्कर्तव्यतोक्तिरसङ्गतेत्यत आह—काम्यच इति । प्रत्ययाद्युदात्तत्वमिति । काम्यायेयङामित्यर्थः । परत्वस्य पूर्वविप्रतिषेधेन बाधात् कथं प्रकृतिस्वरस्य बाधकत्वमत आह—धातुस्वर इति । प्रत्ययत्वप्रयुक्तस्वरस्य प्रत्ययसन्नियोगशिष्टत्वाद्धातुत्वप्रयुक्तस्वरस्य सति शिष्टप्रकृतिस्वरत्वमिति भावः । प्रकृतिस्वरोऽत्रेत्यस्य परत्वादित्याशयं बुद्ध्वा शङ्कते भाष्ये—प्रकृतिस्वरे प्रत्ययस्वराभाव इति । परत्वात्प्रकृतिस्वर एव स्यादित्यर्थः । फिट्स्वरोऽपि षाष्ठ एवेति

---

* धातोः ६ । १ । १६२ । † आद्युदात्तश्च ३ । १ । ३ ।
‡ विप्रतिषेधे परं कार्यम् १ । ४ । २ ।
§ काम्यच्च; गुपूधूपविच्छिपणिपनिभ्य आयः ३ । १ । ९; २८; चितः ६ । १ । १६३ ।

प्रकृतिस्वरे प्रत्ययस्वरस्याभावः । कर्तव्यम् तैत्तिरीयः ।

**सिद्धं तु प्रकृतिस्वरबलीयस्त्वात्प्रत्ययस्वरभावः ॥ ८ ॥**

सिद्धमेतत् । कथम् ? प्रकृतिस्वराद्बलीयस्त्वात् प्रत्ययस्वरस्य भावः सिद्धः । कथम् ? प्रकृतिस्वरात्प्रत्ययस्वरो बलीयान् भवति ।

**सतिशिष्टस्वरबलीयस्त्वं च ॥ ९ ॥**

सतिशिष्टस्वरो बलीयान्भवतीति वक्तव्यम् ।

**तच्चानेकप्रत्ययसमासार्थम् ॥ १० ॥**

तच्चावश्यं सतिशिष्टस्वरबलीयस्त्वं वक्तव्यम् । किं प्रयोजनम् ? अनेकप्रत्ययार्थमनेकसमासार्थं च । अनेकप्रत्ययार्थं तावत्—औपगवः, प्रकृतिस्वरमण्स्वरो बाधते । औपगत्वम्, त्वस्वरोऽण्स्वरं बाधते । औपगवत्वकम्, त्वस्वरं कस्वरो बाधते । अनेकसमासार्थम्—राजपुरुषः राजपुरुषपुत्रः राजपुरुषपुत्रपुरुषः* ।

यदि सतिशिष्टस्वरबलीयस्त्वमुच्यते स्यादिस्वरः सार्वधातुकस्वरं बाधेत । सुनुतः चिनुतः ।

प्र०—इति । धातुस्वरः सतिशिष्टत्वाद्भविष्यतीति भावः ।

सिद्धमिति । प्रकृतिस्वराद्बलीस्त्वमिति सुप्सुपेति समासः । सतिशिष्टबलीयस्त्वाद्धि 'कर्तव्य'मित्यादौ प्रकृतिस्वरं बाधित्वा प्रत्ययस्वरो भवति । 'गोपायती'त्यादौ धातुस्वर एव सतिशिष्ट इति प्रत्ययस्वराभावः ॥ कः पुनर्विशेषः काम्यादयश्चितः क्रियेरन् सतिशिष्टबलीयस्त्वं वोच्येतेत्याशङ्क्याह—तच्चेति । औपगवत्वमिति । एकयोगलक्षणोऽत्र स्वर इति विप्रतिषेधेन व्यवस्थाया असिद्धत्वात् । स्यादिस्वर इति । विकरणस्वर इत्यर्थः । सार्वधातुके परतः स्यादीनां विधानात्तत्स्वरः सतिशिष्टः ।

उ०—तैत्तिरीयेऽपि दोषः । यद्वा फिट्सूत्राणि पाणिन्यपेक्षया आधुनिककर्तृकाणीति परत्वं बोध्यम् ।

समाधत्ते–सिद्धं त्विति । ननु प्रकृतिस्वरस्य बलीयस्त्वं कथं प्रत्ययस्वरभावे हेतुरत आह–प्रकृतिस्वरादिति । नात्र षष्ठीसमास इति भावः ॥ एवमपि गोपायतीत्यादौ दोषोऽत आह–भाष्ये–सतिशिष्टेति । एवञ्च व्यापकत्वादिदमेवादर्तव्यमिति भावः । तद्ध्वनयन्नाह—सतिशिष्टबलीयस्त्वादिति ॥ प्रयोजनस्योक्त्वाऽप्रयोजनान्तरकथनमयुक्तमिति शङ्कामपनिनीषन्नाह–कः पुनरिति ।

* समासस्य ६ । १ । २२३ ।

**स्यादिस्वराप्रसङ्गश्च तासेः परस्यानुदात्तवचनात् ॥ ११ ॥**

स्यादिस्वरस्य चाप्रसङ्गः । कुतः ? तासेः परस्यानुदात्तवचनात् । यदयं तासेः परस्य लसार्वधातुकस्यानुदात्तत्वं शास्ति† तज्ज्ञापयत्याचार्यः 'सतिशिष्टोऽपि विकरणस्वरो लसार्वधातुकस्वरं न बाधत इति ।

**शास्त्रपराविप्रतिषेधानियमाद्वा शब्दपरविप्रतिषेधात्सिद्धम् ॥ १२ ॥**

अथवा शास्त्रपरविप्रतिषेधे न सर्वमिष्टं संगृहीतं भवतीति कृत्वा शब्दपरविप्रतिषेधो विज्ञास्यते ॥ यदि शब्दपरविप्रतिषेधो भवति काम्यादयश्चितः कर्तव्याः । पुत्रकाम्यति गोपयति ऋतीयते । शब्दपरविप्रतिषेधो नाम [सं] भवति यत्रोभयोर्युगपत्प्रसङ्गो न च काम्यादिषु युगपत्प्रसङ्गः ।

**विभक्तिस्वरान्नञ्स्वरो बलीयान् ॥ १३ ॥**

विभक्तिस्वरान्नञ्स्वरो बलीयानिति वक्तव्यम् । विभक्तिस्वरस्यावकाशः—तिस्र-

---

प्र०—तासेः परस्येति । परत्वाल्लादेशेषु कृतेषु तासिरिति प्रक्रियाश्रयेण ज्ञापकमुच्यते । लावस्थायां तु तासौ कृते सार्वधातुकोत्पत्तौ न ज्ञापकं भवति, लसार्वधातुकस्वरस्य सतिशिष्टतया प्रसङ्गात्तद्बाधनार्थत्वादनुदात्तविधानस्य ॥ शास्त्रपरेति । 'विप्रतिषेधे परं कार्य'मित्यत्र नायं नियमो लक्षणयोर्विप्रतिषेधे परं भवतीति । किं तर्ह्येकलक्षणविहितयोरपि कार्ययोर्विप्रतिषेधे परशब्दविषयत्वात्परं कार्यं भवतीत्येषोऽप्यर्थ आश्रीयते । यदीति । पुत्रकाम्यतीत्यत्र काम्यप्रत्ययस्याद्युदात्तत्वं प्राप्नोति । न ह्यत्र शब्दपरविप्रतिषेधोपपत्तिः, एकत्वात्प्रत्ययस्येति भावः । यत्रोभयोरिति । गोपायतीत्यादौ तु प्रत्ययाद्युदात्तत्वस्य धातुस्वरस्य च युगपत्प्रसङ्गाभावः, कृते प्रत्ययस्वरे आयाद्यन्तस्य धातुत्वे सति धातुस्वरस्य प्रसङ्गात् । तस्मादत्र सतिशिष्टस्यैव बलीयस्त्वमाश्रयणीयम् ।

विभक्तिस्वरादिति । सतिशिष्टत्वाद्विभक्तिस्वरे प्राप्ते वचनम् । तिस्र इति । 'तिसृभ्यो

---

उ०—लावस्थायां त्विति । अत्र पक्षेऽयमर्थो वाचनिक एवेति बोध्यम् ॥ वार्तिकेऽनियमो नाम सर्वेष्टासङ्ग्रह इति व्याचष्टे—भाष्येण सर्वमिति । कैय्यटस्तु सूत्रे शास्त्रयोर्विप्रतिषेध एव ग्राह्य इति नियमाभावादित्यर्थमाह । ननु शब्दपरविप्रतिषेधः कथं शास्त्राल्लभ्यत इत्यत आह—परशब्दविषयत्वादिति । यथा कार्यस्य स्वतः परत्वासंभवात्कारणभूतलक्षणद्वारा परत्वाश्रयणं तथा विषयभूतशब्दद्वारेणाप्युपचर्यत इत्यर्थः । यद्यप्यचः परस्मिन्नित्यादौ शब्दपरविप्रतिषेधो भाष्ये दूषितः, अन्तरङ्गत्वेन पूर्वस्यैवापत्तेरिति, तथापि तदनाश्रयणेन दोषान्तरेणैवास्य निराकरणमाह भाष्ये—यदि शब्दपरेति । न ह्यत्रेति । धातुप्रत्ययस्वरयोरित्यर्थः । शब्दपरविप्रतिषेधाभावे युक्त्यन्तरमप्याह भाष्ये—यत्रोभयोरिति । एवं चैकत्वाद्युगपत्प्राप्त्यभावाच्च तेन न सिद्धिरित्यर्थः । कृते प्रत्ययस्वरे इति । विशिष्टप्रत्ययस्यैव विधानादिति भावः ।

---

† तास्यनुदात्तेन्ङिद ··········मनुदात्तमह्न्विङोः ६ । १ । १८६ ।          १—क्वचिन्न

स्तिष्ठन्ति‡ । नञ्स्वरस्यावकाशः—अब्राह्मणः अवृषलः § । इहोभयं प्राप्नोति—अतिस्रः । नञ्स्वरो भवति ।

## विभक्तिनिमित्तस्वराच्च ॥ १४ ॥

विभक्तिनिमित्तस्वराच्च नञ्स्वरो बलीयानिति वक्तव्यम् । विभक्तिनिमित्तस्वरस्यावकाशः—चत्वारः अनड्वाहः¶ । नञ्स्वरस्य स एव । इहोभयं प्राप्नोति—अचत्वारः अनडुवाहः ।

## यच्चोपपदं कृति नञ् ॥ १५ ॥

यच्चोपपदं कृति नञ् तस्य* स्वरो बलीयानिति वक्तव्यम् । अकरणिः ते वृषल ।

## सहनिर्दिष्टस्य च ॥ १६ ॥

सहनिर्दिष्टस्य च नञः स्वरो बलीयानिति वक्तव्यम् । अव्यथी† ॥ १५८ ॥

प्र०—जस' इति विभक्तेरुदात्तत्वम् । अतिस्र इति । 'तत्पुरुषे तुल्यार्थे'ति नञः प्रकृतिस्वरो भवति ।

विभक्तिनिमित्तस्वरादिति । विभक्तिर्निमित्तं यस्य तस्य यः स्वरस्तस्मादित्यर्थः ॥ अकरणिरिति । 'आक्रोशे नञ्यनि'रित्यनिः । 'गतिकारकोपपदात् कृ'दित्युत्तरपदप्रकृतिस्वरो नञ्स्वरेण बाध्यते ॥ अव्यथीति । 'जिदृक्षी'तीनिप्रत्ययः । अत्राव्यथेति धातुना सह निर्दिष्टो नञ् न पृथगिति प्रत्ययस्वरं बाधित्वा नञ्स्वरो भवति । नञः सप्तमीनिर्देशाभावादुपपदत्वाभावात् पृथग्वचनमारब्धम् । तत्राव्यथेति निपातनान्नञो धातुना समासे लोने च कृते प्रत्यय इति सतिशिष्टः प्रत्ययस्वरः प्राप्नोतीति वचनम् ॥ १५८ ॥

उ०—भाष्ये—इहोभयं प्राप्नोतीत्यापातप्राप्तिमात्रेण, सतिशिष्टत्वाद्विभक्तिस्वरस्यैव प्राप्तेः । 'अतिस्र' इत्यत्र समस्ताद्विभक्तावपि तिसृशब्दात्परत्वमस्त्येवेति 'तिसृभ्यो जस' इत्यस्य प्राप्तिः । एवं च सतिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणस्वरान्नञ्स्वराच्चेति फलितम् ।

विभक्तिर्निमित्तं यस्येति । आम इत्यर्थः ॥ गतिकारकेति । परत्वात्कृदुत्तरपदप्रकृतिस्वरे प्राप्ते वचनम् । ननु धातुना समासः कथमत आह—तत्राव्यथेति ॥ १५८ ॥

‡ तिसृभ्यो जसः ६ । १ । १६६

§ तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः ६ । २ । २

¶ चतुरनडुहोरामुदात्तः ७ । १ । ९८

* आक्रोशे नञ्यनिः ३ । ३ । ११२; गतिकारकोपपदात् कृत्; तत्पुरुषे तुल्यार्थ........ कृत्याः ६ । २ । १३९; २ ।

† जिदृक्षिविश्रीण्...प्रसूभ्यश्च ३ । २ । १५७; आद्युदात्तश्च ३ । १ । ३; तत्पुरुषे तुल्यार्थ... कृत्याः ६ । २ । २ ।

## कर्षात्वतो घञोऽन्त उदात्तः ॥ ६ । १ । १५९ ॥

किमर्थं कृषेर्विकृतस्य ग्रहणं क्रियते न 'कृषात्वत' इत्येवोच्येत ? यस्य कृषेर्विकरण एतद्रूपं तस्य यथा स्यात् । इह मा भूत्—हलस्य कर्ष इति ।

अथ किमर्थं मतुपा निर्देशः क्रियते न 'कर्षात' इत्येवोच्येत ? 'कर्षात' इतीयत्युच्यमाने यत्रैवाकारादनन्तरो घञस्ति तत्रैव स्यात्—दायः धायः । इह न स्यात्—पाकः पाठः ॥ न क्वचिदाकारादनन्तरो घञस्ति । इहापि दायः धाय इति युका‡ व्यवधानम् ॥ एवमपि विहितविशेषणमाकारग्रहणं विज्ञायेत—आकाराद्यो विहित इति । मतुब्ग्रहणे पुनः क्रियमाणे न दोषो भवति ॥ १५९ ॥

## अनुदात्तस्य च यत्रोदात्तलोपः ॥ ६ । १ । १६१ ॥

अनुदात्तस्येति किमर्थम् ? प्रासङ्गं वहति प्रासङ्ग्यः § ।

प्र०—कर्षात्व । यस्य कृषेरिति । विकरणान्तस्यानुकरणं कर्षेति निर्दिष्टमित्यर्थः । हलस्य कर्ष इति । अत्राद्युदात्तत्वमेव भवति । अथ किमर्थमिति । आकारात्परो न क्वचिद्घञस्तीति सामर्थ्यात्तद्वतो ग्रहणं सिध्यतीति प्रश्नः । युका व्यवधानमिति । परत्वान्नित्यत्वाच्च युक् । तेन व्यवधानादानन्तर्याभावः । एवमपीति । घञा धातुराक्षिप्त 'आत'इत्यनेन विशेष्यत इति तदन्तविधौ विज्ञायमान आनन्तर्यासंभवाद्विधानं विशेष्यत इति मतुब्निर्देशः सर्वसंग्रहार्थः क्रियते ॥ १५९ ॥

अनुदात्तस्य च । अनुदात्तस्येति किमर्थमिति । यत्रोदात्तलोप इत्येवानुदात्ते लोपो लभ्यते, न ह्यन्यत्रोदात्तो लुप्यत इति प्रश्नः । प्रासङ्ग्य इति । प्रासज्यत इति प्रासङ्गः । कर्मणि

उ०—कर्षात्व । विकरणान्तस्येति । घञन्तानुकरणं तु न, 'घञ' इत्युक्तेरिति भावः । अत्र-तौदादिकप्रकृतिकघञन्ते । ननु मतोरभावे आकारान्ताद्यत्र घञ् तत्रैव स्यात्, 'पाक' इत्यादौ न स्यादतो मतुरावश्यकोऽत आह—आकारात्पर इति । भाष्ये—आकारादनन्तर इति । घञुत्पत्तिकाले आकारादनन्तरो 'दाय' इत्यादावस्तीत्याशयः । स्वरप्रवृत्तिकालिकमानन्तर्यमेव स्वरप्रवृत्तिनिमित्तमित्याशयेनाह—इहापि युकेति । युकि कृते अङ्गभक्तो युगित्याकारघञोर्व्यवधायक इति भावः । न ह्याकारमात्राद्घञो विधानमस्तीत्यत आह—घञेति । सति 'तस्मादित्युत्तरस्ये'त्यस्मिन् कथं विहितविशेषणं लभ्यते तत्राह—आनन्तर्यासंभवादिति ॥१५९॥

अनुदात्तस्य च । न ह्यन्यत्रेति । आक्षिप्ततच्छब्देन तस्यैवात्र स्वरे कार्यित्वेन प्रतिनिर्देशादिति

‡ आतो युक् चिण्कृतोः ७ । ३ । ३३ ।

§ तद्वहति रथयुगप्रासङ्गम् ४ । ४ । ७६; तित्स्वरितम् ६ । १ । १८५

**उदात्तलोपे स्वरितोदात्तयोरभावादनुदात्तग्रहणानर्थक्यम् ॥ १ ॥**

उदात्तलोपे स्वरितोदात्तयोरभावादनुदात्तग्रहणमनर्थकम् । न हि कश्चिदुदात्त उदात्ते स्वरिते वा लुप्यते सर्वोऽनुदात्त एव ॥ ननु चायमुदात्तः स्वरिते लुप्यते— प्रासङ्गं वहति प्रासङ्ग्य इति । एषोऽपि निघाते ¶ कृतेऽनुदात्त एव लुप्यते । इदमिह संप्रधार्यम्—निघातः क्रियतां लोप* इति किमत्र कर्तव्यम् ? परत्वाल्लोपः । एवं तर्ह्ययमद्य निघातस्वरः सर्वस्वराणामपवादः । न चापवादविषय उत्सर्गोऽभिनिविशते । पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः । प्रकल्प्य वापवादविषयं तत उत्सर्गोऽभिनिविशते । तन्न तावदत्र कदाचित् थाथादिस्वरो† भवत्यपवादं निघातं प्रतीक्षते । तत्र निघातः क्रियतां लोप इति यद्यपि परत्वाल्लोपः सोऽसावविद्यमानोदात्तोऽनुदात्तो लुप्यते[१] ।

किं पुनरनुदात्तस्यान्त उदात्तो भवत्याहोस्विदादिः । कश्चात्र विशेषः ?

प्र०—घञ् । थाथादिस्वरेणान्तोदात्तत्वम् । 'तद्वहती'ति यत्प्रत्ययः । 'तित्स्वरित'मिति स्वरितः ।

सोऽसाविति । अलब्धोदात्तगुण एवाकारो लुप्यत इत्यर्थः । तदेवमनुदात्तग्रहणं प्रत्याख्यातम् ।

किं पुनरिति । यद्यन्तग्रहणमनुवर्तते ततोऽन्तस्य भवितव्यम् । अथ नानुवर्तते तदा

उ०—भावः । स्वरित इति । एवञ्च स्वरितेऽप्युदात्तलोपसद्भावात्तद्व्यावृत्तये तच्चरितार्थमिति भावः ॥ भाष्ये—निघाते कृत इति । 'तित्स्वरित'मित्यत्रैकवाक्यतापन्ने इत्यर्थः । निघातः क्रियतामिति । स्वरितविध्येकवाक्यतापन्न इत्यर्थः । अयं-पूर्वोक्तः । सर्वस्वराणां-ततः प्राग्भाविनाम् । अपवादः—सतिशिष्टत्वाद्बाधकः । परत्वादिति । स्वरितात्परत्वाल्लोपे प्रत्ययस्याविद्यमानोदात्तत्वादेवानुदात्ते लोपसत्त्वादनुदात्तग्रहणेऽपि दोषात् । मदुक्तरीत्योदात्तलोप एव नास्तीति त्वयापि वाच्यम्, एवं चानुदात्तग्रहणं व्यर्थमेवेति भावः । 'अविद्यमानोदात्तः अनुदात्ते लुप्यत' इति पाठः । एतेनानुदात्तस्येति पदसत्त्वेऽपि तस्याविद्यमानोदात्तस्येत्येवार्थ इति सूचितम् । अविद्यमानोदात्त इत्यत्रोदात्तशब्दो गुणमात्रपर इत्याह—अलब्धेति । एवञ्चोदात्तलोपाभावान्नास्यातिव्याप्तिरित्यर्थः ।

अविद्यमानोदात्तकं यं निमित्तीकृत्य उदात्तलोपस्तस्य उदात्त इत्यर्थः, उत निमित्तत्वानादरेण यत्र अविद्यमानोदात्ते वर्णे परत उदात्तलोपस्तस्य वर्णस्योदात्त इत्यर्थ इत्याशयेन पृच्छति भाष्ये-किं पुनरिति । अनुवर्तत इति । आद्यपक्षे तदनुवृत्तिः । अथ नानुवर्तते इति । द्वितीयपक्षे तदननुवृत्तिः, फलाभावादसंभ-

¶ अनुदात्तं पदमेकवर्जम् ६ । १ । १५८ ।  * यस्येति च ६ । ४ । १४८ ।
† थाथघञ्क्ताजबित्रकाणाम् ६ । २ । १४४ ।  १—'अनुदात्ते लुप्यते' पा० ।

**अन्त इति चेत् श्नम्क्सयुष्मदस्मदिदंकिंलोपेषु स्वरः ॥ २ ॥**

अन्त इति चेत् श्नम्क्सयुष्मदस्मदिदंकिम्लोपेषु स्वरो न सिध्यति । श्नम्–व्रिन्दाते खिन्दाते* । श्नम् । क्स–मा हि धुक्षाताम् । मा हि धुक्षाथाम्† । क्स । युष्मदस्मद्–युष्मभ्यम् अस्मभ्यम् ‡ । इदंकिंलोपः–इयान् कियान् § ।

अस्तु तर्ह्यादिः ।

**आदिरिति चेदिन्धीत द्व्यमित्यन्तः ॥ ३ ॥**

आदिरिति चेदिन्धीत द्व्यमित्यन्तोदात्तत्वं न सिध्यति । इन्धीत* । द्व्यम् त्रयम्¶ ।

प्र०—क्रमानुलङ्घनादादेर्भाव्यमिति पक्षद्वयसम्भवः ॥ विन्दात इति । 'विद विचारणे' 'खिद दैन्ये' इत्यनयो रूपे । 'तास्यनुदात्ते'दिति लसार्वधातुकस्यानुदात्तत्वम् । श्नमः प्रत्ययत्वादुदात्तत्वम् । 'श्नसोरल्लोपः' । तत्राकारस्योदात्तत्वमिष्यते । एकारस्य तु प्राप्नोति । नन्वागमा अनुदात्ता भवन्तीति श्नमोऽनुदात्तत्वं प्राप्नोति । एवं तर्हि 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यत' इति धातुस्वरः परत्वादागमानुदात्तत्वं बाधते । मा हि धुक्षातामिति । दुहेर्माङि लुङ् । आत्मनेपदम् । च्लेः क्सः । 'अदुपदेशा'दिति लसार्वधातुकानुदात्तत्वम् । क्सः प्रत्ययस्वरेणान्तोदात्तः । 'क्सस्याची'त्यकारलोपः । माङ्योगोऽडागमनिवृत्त्यर्थः । अटि हि सति पदमाद्युदात्तं भवति । 'हि'-शब्दप्रयोगो 'हि चे'ति निघातप्रतिषेधार्थः । युष्मभ्यमिति । 'भ्यसोऽभ्य'मित्यभ्यमादेशः । 'शेषे लोपष्टिलोप' इति प्रक्रियाश्रयेण चोद्योद्भावनम् । यदा तु भ्यमादेशः, शेषे लोपश्चान्त्यलोपस्तदा दोषाभावः । इयानिति । 'किमिदंभ्यां वो घ' इति वतुप् । स च पित्त्वादनुदात्तः । वकारस्य घः । घस्येयादेशः । 'इदं किमोरीश्की' इति ईश्कीशब्दावादेशौ । यस्येति ईकारलोपः ।

इन्धीतेति । इन्धेर्लिङ् । 'तास्यनुदात्ते'दित्यनुदात्तत्वं, सीयुट् । तस्यागमत्वादनुदात्तत्वम् । श्नम् । 'श्नान्नलोप' इति नलोपः । 'श्नसोरल्लोप' इत्यकारलोपे कृते ईकारस्योदात्तत्वप्रसङ्गः । द्व्यमिति । द्वाववयवावस्य, 'सङ्ख्याया अवयवे तयप्' । 'द्वित्रिभ्यां तयस्यायज्वे'त्ययजादेशः, अनुदात्तस्थानिकत्वादनुदात्तः । 'यस्येति चे'तीकारलोपे कृते आदेरुदात्तत्वप्रसङ्गोऽन्तस्य चेष्यते, तदर्थं चित्त्वमयचः कर्तव्यम् । इह त्वन्तग्रहणानुवृत्तौ न कर्तव्यमिति मत्वोपन्यासः ।

उ०—वाच । अत एवायचश्चित्त्वं चरितार्थम् । द्वितीयपक्षे त्वर्थादादेरेव । क्रमानुल्लङ्घनादिति । एषा युक्तिस्तु चिन्त्या, 'आद्युदात्तश्चे'त्यादावादिग्रहणस्य वैयर्थ्यापत्तेः । अनुदात्तत्वं प्राप्नोतीति । ततश्चोदात्तलोपाभावादस्य स्वरस्य नायं विषय इति भावः । एवं तर्हीति । इदं चिन्त्यम्, अन्तरङ्गत्वात्पूर्वं धातुस्वरे श्नमि कृते पुनः कथं तत्प्रवृत्तिः । अत्रेदं तत्त्वम्, 'आगमा अनुदात्ता' इति नापूर्वं, किं तर्हि, शेषनिघातमूलकमिति तृतीये निरूपितम् । तस्य च यत्र विशिष्य स्वराप्राप्तिस्तद्विषयत्वान्न प्रकृते दोष इति बोध्यम् ।

* श्नसोरल्लोपः ६ । ४ । १११ । † क्सस्याचि ७ । ३ । ७२

‡ भ्यसोऽभ्यम् ७ । १ । ३०; शेषे लोपः ७ । २ । ९०;

§ इदंकिमोरीश्की ६ । ३ । ९०; यस्येति च ६ । ४ । १४८ । ¶ यस्येति च ६ । ४ । १४८

## आदौ सिद्धम् ॥ ४ ॥

अस्तु तर्ह्यादिरुदात्तो भवतीति ॥ ननु चोक्तमादिरिति चेदिन्धीत द्वयमित्यन्त इति ।

## विदीन्धिखिदिभ्यश्च लसार्वधातुकानुदात्तप्रतिषेधाल्लिङि सिद्धम् ॥५॥

विदीन्धिखिदिभ्यश्च लसार्वधातुकानुदात्तत्वं‡ लिङि नेति वक्तव्यम् ।

लिङ्ग्रहणेन नार्थः । अविशेषेण 'विदीन्धिखिदिभ्यश्च लसार्वधातुकानुदात्तत्वं ने'त्येव । इदमपि सिद्धं भवति—विन्दाते खिन्दाते ॥ अयचि कथम् ?

## अयचि चित्करणात् ॥ ६ ॥

अयचि चित्करणसामर्थ्यादन्तोदात्तत्वं भविष्यति§ ॥ १६१ ॥

## धातोः ॥ ६ । १ । १६२ ॥

किं धातोरन्त उदात्तो भवत्याहोस्विदादिरिति । कश्चात्र विशेषः ?

प्र०—विदीन्धिखिदिभ्यश्चेति । लसार्वधातुकानुदात्तत्वे प्रतिषिद्धे प्रत्ययस्वरेण 'त'शब्द उदात्तः । सीयुट् आगमत्वादनुदात्तः । अथवा न विकरणस्वरो लसार्वधातुकस्वरं बाधते इति वर्ज्यमानस्वरेण श्नमनुदात्त इति न कश्चिद्दोषः । इदमपीति । अन्तग्रहणानुवृत्तावपि श्नमो लोपे दोषो नास्तीति भावः ॥ अयचीति । चित्करणमेव ज्ञापक'मन्त' इतीह न संबध्यते । तत्सम्बन्धे चित्त्वेन नार्थः स्यात् ॥ १६१ ॥

धातोः । किं धातोरिति । यद्यन्तग्रहणमभिसंबध्यते ततोऽन्तस्योदात्तत्वेन भाव्यम् ।

उ०—लसार्वधातुकेति । 'यत्राविद्यमानोदात्तके प्रत्यये परत उदात्तलोपः क्रमोल्लङ्घने मानाभावात्त-दादेरुदात्त' इत्यर्थे 'ईत'शब्दस्याविद्यमानोदात्तकत्वाभावान्न दोष इति भावः । नन्वेवमपि श्नमः स्वरेण तशब्दस्यापि निघाताद्दोष एव । किं च यदा 'आहोस्विदादे'रिति भाष्यस्य निमित्तत्वानादरेण यत्रानुदात्ते वर्णे परत उदात्तलोपस्तस्य वर्णस्य उदात्त इत्यर्थः सूत्रस्येत्याशयः, तद्दोषतादवस्थ्यादाह—अथवेति । ननु 'विन्दाते' इत्यादौ लसार्वधातुकानुदात्तत्वप्रतिषेधेन विनाप्यनेन स्वरेण मध्योदात्तत्वसिद्धेः किमुच्यते 'इदमपी'त्यत आह—अन्तग्रहणेति । श्नमो लोप इति । श्नमो वर्ज्यमानस्वरेणानुदात्तत्वादुदात्त-लोपाभावादिति भावः । अनेन क्सादिलोपविषयं दोषान्तरमस्त्येवेति सूचितम् ॥ १६१ ॥

धातोः । आदेरितीति । इदं चिन्त्यमित्युक्तम् । तस्माद्भाष्यस्यायं भावः—पूर्वसूत्रेऽन्तग्रहणासंबन्धे

‡ तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः । ६ । १ । १८६

§ द्वित्रिभ्यां तयस्यायज्वा ५ । २ । ४३ । चितः ६ । १ । १६३ ।

## धातोरन्त इति चेदनुदात्तेचबग्रहणम् ॥ १ ॥

धातोरन्त इति चेदनुदात्तेचबग्रहणं कर्तव्यम् । अभ्यस्तानामादिरनुदात्ते च [ ६ । १ । १८९; १९० ] इति वक्तव्यम् । बग्रहणं च कर्तव्यम् । बान्तश्च पिबिराद्युदात्तो भवतीति वक्तव्यम् । पिबति* ।

## संश्च नित् ॥ २ ॥

संश्च नित्कर्तव्यः । किं प्रयोजनम् ? चिकीर्षति जिहीर्षति । 'निती'त्याद्युदात्तत्वं यथा स्यात्† ॥ अस्तु तर्ह्यादिः ।

## आदावूर्णुप्रत्ययधातुष्वन्तोदात्तत्वम् ॥ ३ ॥

आदावूर्णुप्रत्ययधातुष्वन्तोदात्तत्वं न सिध्यति । ऊर्णोति । ऊर्णु । प्रत्ययधातु-गोपायति धूपायति ऋतीयते ।

## अन्तोदात्तवचनात्सिद्धम् ॥ ४ ॥

अस्तु तर्ह्यन्तोदात्तो भवतीति ॥ ननु चोक्तं धातोरन्त इति चेदनुदात्तेचबग्रहणं कर्तव्यमिति । यत्तावदुच्यतेऽनुदात्तेचग्रहणं कर्तव्यमिति क्रियते न्यास एवाभ्यस्तानामादिरनुदात्ते चेति । बग्रहणं कर्तव्यमिति ।

प्र०—अथ न संबध्यते तदा क्रमानुल्लङ्घनादादेरिति प्रश्नः ॥ अनुदात्त इति । 'ददा ति' इति स्थिते 'धातो'रित्यन्तोदात्तत्वे प्राप्ते आद्युदात्तार्थमनुदात्ते चेति वक्तव्यम् । पिबतीति । लघूपधगुणनिवृत्त्यर्थोऽदन्तः पिबिरादेशः । ततश्चान्तोदात्तत्वबाधनार्थमाद्युदात्तत्वं वक्तव्यम् ।

संश्चेति । धातुस्वरबाधनाय ॥ क्रियते न्यास एवेति । 'अनुदात्ते चे'त्येतदेव ज्ञापकमिहान्तग्रहणाधिकारस्य ।

उ०—आद्युदात्तत्वस्य निर्णीतत्वेन तत्साहचर्यादिति । यद्वा आदिस्वरप्रकरणे इदं सूत्रं पठनीयमिति भावः । कृत्वा चिन्तया विचार इति बोध्यम् । धातोरित्यन्तोदात्तत्वे प्राप्त इति । अन्तरङ्गत्वात्पूर्वं स्वरे ततो द्वित्वे शेषनिघातत्वात्समावेशाभावेऽपि पक्षेऽन्तोदात्तत्वे प्राप्ते इत्यर्थः । स्पष्टं चेदं 'परस्मैपदाना'मिति सूत्रे भाष्ये । 'अभ्यस्तानामादि'रिति तु जक्षितीत्यादौ झिस्वरेण प्रकृतेरनुदात्तत्वादाद्युदात्तश्रवणार्थमिति 'अनुदात्ते चे'त्यस्य ग्रहणमिति दिक् । वक्तव्यमिति । पक्षान्तरे न वक्तव्यमिति लाघवमित्याशयः । ननु पिबेरेकाच्त्वात्किमनेनेत्यत आह—लघूपधेति ।

ज्ञापकमिहेति । एतेन विच्छिन्नानुवृत्तिः कथमित्यपास्तम् । वस्तुत आद्युदात्तविधानेऽपि उत्तरीत्योत्तरखण्डस्याद्युदात्तत्वं स्यादिति उभयोरपि तदावश्यकमिति भाष्याशयः ।

* पाघ्राध्मास्था ......धौशीयसीदाः ७ । ३ । ७८ † ञ्नित्यादिर्नित्यम् ६ । १ । १९७

## पिबौ निपातनात् ॥ ५ ॥

पिबावाद्युदात्तनिपातनं क्रियते‡ स निपातनस्वरः प्रकृतिस्वरस्य बाधको भविष्यति ॥ संश्च नित्कर्तव्य इत्यवश्यं सनो विशेषणार्थो नकारः कर्तव्यः । क्व विशेषणार्थेनार्थः ? 'सन्यङोः' [ ६।१।९ ] इति । 'सयङो'रितीत्यत्युच्यमाने हंसः वत्सः अत्रापि प्राप्नोति । 'अर्थवद्ग्रहणे नानर्थकस्ये'त्येवं न भविष्यति । इहापि तर्हि न प्राप्नोति—जुगुप्सते मीमांसत इति §। अर्थवानेषः । न वै कश्चिदर्थ आदिश्यते । यद्यपि कश्चिदर्थो नादिश्यतेऽनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीत्यन्ततः स्वार्थे भविष्यति । कश्चास्य स्वार्थः ? प्रकृत्यर्थः । इहापि तर्हि प्राप्नोति—हंसः वत्स इति । उणादयोऽव्युत्पन्नानि प्रातिपदिकानि । स एषोऽनन्यार्थो नकारः कर्तव्यः ? न कर्तव्यः । क्रियते न्यास एव ।

अथवा धातोरिति¶ वर्तते । धातोः सशब्दान्तस्य द्वे भवत इति ॥ १६२ ॥

## चितः ॥ ६ । १ । १६३ ॥

प्र०—अर्थवद्ग्रहणमिति । अव्युत्पन्नत्वादुणादीनामानर्थक्यं मन्यते । जगुप्सत इति । सनोऽर्थानिर्देशात्समुदायस्यार्थवत्त्वं मन्यते । अन्तत इति । यस्यार्थान्तरं न निर्दिश्यते स प्रत्यासन्ने स्वार्थे भवति । इहापीति । व्युत्पत्तिपक्षाश्रयेण चोद्यम् । पक्षान्तराश्रयेण परिहारः । उणादय इति । एतदनन्तरम्—'अथवा धातोरिति वर्तते' इति ग्रन्थेन भाव्यम् । लेखकप्रमादात्तु स्थानान्तरे न्यस्तः । पाठक्रमाद्यार्थक्रमस्य बलीयस्त्वादत्र प्रदेशे संबध्यते । 'लिटि धातोरनभ्यासस्ये'त्यतो धातुग्रहणानुवर्तनात्सान्तस्य धातोर्द्विर्वचनविधानात् 'हंसः' 'वत्सः' इत्यादौ द्विर्वचनाभावः सिद्ध इति स्वरार्थं एव सनो नकारः कर्तव्यः । स च कृत एव ॥ १६२ ॥

चितः । 'अन्त' इति वर्तते । घुरजादेः प्रत्ययस्य कुण्डिनंजादेरप्रत्ययस्य चेह ग्रहणम् ।

उ०—हनिवधोः 'स'प्रत्ययविधानात्कथमानर्थक्यमत आह—अव्युत्पन्नत्वादिति । गुपादिसनः प्रत्ययत्वेनार्थवत्त्वाच्छङ्कानुपपत्तिरत आह—सन इति । 'अनन्यार्थे' इति भाष्यं व्याचष्टे—स्वार्थ एवेति ॥ १६२ ॥

चितः । पूर्वसूत्रेऽनुवृत्तस्येहापि संबन्ध इत्याह—अन्त इतीति । 'प्रत्ययाप्रत्यययो'रिति परिभाषा तु

‡ ७ । ३ । ७८ वा० १ भाष्ये पृ० २२५

§ गुप्तिज्किद्भ्यः सन्; मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य ३ । १ । ५; ६

¶ लिटि धातोरनभ्यासस्य ६ । १ । ८

१—'तद्धितस्य कित' इत्येकं सूत्रं भाष्ये योगविभागदर्शनात् । तद्यथा—'एवं तर्हि स्वरे योगविभागः करिष्यते । इदमस्ति । चितः [ ६ । १ । १६३ ] । चितोऽन्तोदात्तो भवति । ततस्तद्धितस्य । तद्धितस्य च चितोऽन्त उदात्तो भवतीति ।·········ततः कितः । कितस्तद्धितस्यान्त उदात्तो भवति ।' ( भाष्य० १ । ४ । ६८ पृ० ५६४ )

## चितः सप्रकृतेर्बह्वकजर्थम् ॥ १ ॥

चितः सप्रकृतेरिति वक्तव्यम् । किं प्रयोजनम् ? बह्वकजर्थम्[1]। बहुजर्थमकजर्थं च । बहुजर्थं तावत्—बहुभुक्तम् बहुकृतम्* । अकजर्थम्—सर्वकैः विश्वकैः । उच्चकैः नीचकैः† । सर्वके विश्वके ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । मतुब्लोपोऽत्र द्रष्टव्यः । तद्यथा—पुष्पका[3] एषां [ते[2]] पुष्पकाः । कालका एषां [ते[2]] कालकाः । अथवाकारो मत्वर्थीयः । तद्यथा—तुन्दः घाट इति । पूर्वसूत्रनिर्देशश्च । चित्वान् चित इति ॥ १६३ ॥

## तिसृभ्यो जसः ॥ ६ । १ । १६६ ॥

जस इति किमर्थम् ? तिसृकाः‡ ।

### तिसृभ्यो जस्ग्रहणानर्थक्यमन्यत्राभावात् ॥ १ ॥

तिसृभ्यो जस्ग्रहणमनर्थकम् । किं कारणम् ? 'अन्यत्राभावात्' । न ह्यन्यत्ति-

प्र०—बह्वकजर्थमिति । बहुजकचोरन्तोदात्तत्वे प्राप्ते 'चितः सप्रकृते'रिति वचनम् । मतुब्लोप इति । चिदवयवात्समुदायश्चिदुच्यते । अकचश्चित्त्वमस्यैवार्थस्य लिङ्गम् । लक्ष्यानुरोधाच्च गौणोऽप्यर्थः क्वचिदाश्रीयते । अन्यथैकाच्त्वादकचश्चित्त्वं न कुर्यात् । अथवेति । मुख्य एव शब्दार्थ एवमाश्रितो भवति । नन्वेवं चितस्येति भाव्यमित्याह—पूर्वसूत्रनिर्देश इति । पूर्वव्याकरणे प्रथमया कार्यी निर्दिश्यते । तेन चित्त्वात्समुदायोऽन्तोदात्तत्वं प्रतिपद्यत इत्यर्थः । कुण्डिनजादयोऽपि व्यपदेशिवद्भावाच्चित्वन्त उच्यन्ते ॥ १६३ ॥

तिसृ । अर्थगतं बहुत्वं शब्दे आरोप्य बहुवचननिर्देशः । अन्तोदात्तस्य त्रिशब्दस्य स्थाने तिसृशब्द आदेशः स्थानिवद्भावादन्तोदात्तः । ततः परस्य जसोऽनुदात्तत्वापवाद उदात्तत्वं विधीयते ।

उ०—नेह प्रवर्तते, लक्ष्यानुसारादित्याह—घुरजादेरिति । चिच्छब्दस्यागुणवचनत्वात् मतुब्लोपाप्राप्तेराह—चिदवयवत्वादिति । एवं च गम्यमानार्थत्वादप्रयोग एव लोप इति भावः । सौत्रो मतुलोप इत्याशयमन्ये । अस्यैवार्थस्य—गौणग्रहणरूपस्य । चित्वानिति । मतुबन्तम् ॥ १६३ ॥

तिसृभ्यो ननु तिसृशब्दस्यैकत्वाद्बहुवचनमयुक्तमत आह—अर्थगतमिति । स्थानिवद्भावादिति । आन्तरतम्यादित्यर्थः । ननु 'तिसृ'शब्दस्यान्तोदात्तत्वादुदात्तस्य स्थाने यणः सत्त्वादुदात्तयण इत्युदात्तत्वं

१–'बह्वर्थं' पा० * विभाषा सुपो बहुच् पुरस्तात्तु ५ । ३ । ६८
† अव्ययसर्वनाम्नामकच् प्राक् टेः ५ । ३ । ७१ २–क्वचिन्न ।
३–'पुष्पका' पा० । ‡ तिसृभावे संज्ञायां कन्युपसंख्यानम् ७ । २ । ९९ वा० १ पृ० १६७

सृशब्दादन्तोदात्तत्वं प्रयोजयत्यन्यदतो जसः । किं कारणम् ? बहुवचनविषय एव तिसृशब्दस्तेनैकवचनद्विवचने न स्तः । शसि भवितव्यमुदात्तयणो हल्पूर्वात् [ ६ । १ । १७४ ] इति । अन्याः सर्वा हलादयो विभक्तयस्तत्र षट्त्रिचतुर्भ्यो हलादिर्झ-ल्युपोत्तमम् [ ६ । १ १७६; १८० ] इत्यनेन स्वरेण भवितव्यम् । तत्रान्तरेण जसो ग्रहणं जस एव भविष्यति ।

ननु चेदानीमेवोदाहृतं तिसृकेति । नित्स्वरोऽत्र बाधको भविष्यति§ । नाप्राप्तेऽन्यस्वरे तिसृस्वर आरभ्यते स यथैवानुदात्तौ सुप्पितौ [ ३ । १ । ४ ] इत्येतं स्वरं बाधत एवं नित्स्वरमपि बाधेत । नैष दोषः । येन नाप्राप्ते तस्य बाधनं भवति न चाप्राप्तेऽ-नुदात्तौ सुप्पितावित्येतस्मिंस्तिसृस्वर आरभ्यते । नित्स्वरे पुनः प्राप्ते चाप्राप्ते च । अथवा मध्येपवादाः पूर्वान्विधीन्बाधन्त इत्येवं तिसृस्वरोऽनुदात्तौ सुप्पिताविति स्वरं बाधिष्यते, नित्स्वरं न बाधिष्यते ।

उपसमस्तार्थमेके जसो ग्रहणमिच्छन्ति । अतितिस्रौ¶ अतितिस्रः* ॥ १६६ ॥

प्र०—'उदात्तयणो हल्पूर्वा'दित्यत्रासर्वनामस्थानग्रहणानुवर्तनाज्जस उदात्तत्वं न प्राप्नोतीति वचनम् । तिसृकेति । स्वार्थे कन्प्रत्ययः । 'तिसृभावे संज्ञायां कन्युपसङ्ख्यान'मिति तिस्रादेशः । न चाप्राप्त इति । 'तिसृके'त्यत्रापि टापा सहैकादेशस्यादिवद्भावात्नित्स्वरः प्राप्नोतीति भावः । अथवेति । पूर्वविज्ञातबाध्यविषये प्रवृत्त्या चरितार्थं विधिं विप्रतिषेधात्परो विधिर्बाधते । उपसमस्तार्थमिति । समासेऽपि तिसृशब्दात्परः सुब्भवतीत्यतितिस्रावित्यत्रा'तेरकृत्पद' इत्यत्रा'तेर्धातुलोप' इति वक्तव्यमिति वचनात्प्राप्तमन्तोदात्तत्वं बाधित्वा विभक्तेरुदात्तत्वं स्यात् । अत्र चोदात्तस्वरितयोर्यण इति स्वरितो भवति । 'अतितिस्र' इत्यत्र त्विष्यत एव जस उदात्तत्व-मित्युदाहरणत्वेन भाष्यकृतोपन्यस्तम् ॥ १६६ ॥

उ०—सिद्धमत आह–उदात्तयण इति । स्वार्थे कनिति । स्वार्थिकानां प्राकृतलिङ्गसङ्ख्यातिवर्तनादेकवचना-न्तत्वम् । बहुवचनान्तमेवेदं भाष्य इत्यन्ये । तिसृभ्यो जस्ग्रहणानर्थक्यमिति । 'तिसृभ्य' इति विहितविशे-षणमिति तदाशयः । ननु 'तिसृके'त्यत्रैतत्स्वराप्राप्तेः कथं तेन येन नाप्राप्तिरत आह—तिसृकेत्यत्रापीति । एवं वार्तिककृता प्रत्याख्यातमपि जस्ग्रहणं भाष्यकृदाचार्यान्तरमवष्टभ्य स्थापयति—उपसमस्तार्थमिति । विहितविशेषणे न मानमिति तदाशयः । अतेर्धातुलोप इति । 'अतेः परमकृदन्तं पदशब्दश्चान्तोदात्त' इत्यर्थकेन सूत्रेणैवाप्राप्तेर्वार्तिकोपन्यासे बीजं चिन्त्यम् । बाधित्वेति । सतिशिष्टत्वादिति भावः । 'अतितिस्र' इत्यस्य प्रत्युदाहरणत्वभ्रमं वारयति—अतितिस्र इत्यत्रेति ॥ १६६ ॥

§ ञ्नित्यादिर्नित्यम् ६ । १ । १९७
¶ उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ८ । २ । ४
* तिसृभ्यो जसः ६ । १ । १६६

## चतुरः शसि ॥ ६ । १ । १६७ ॥

शसि स्त्रियां प्रतिषेधो वक्तव्यः । चतस्रः पश्यः ।

**चतुरः शसि स्त्रियामप्रतिषेध आद्युदात्तनिपातनात् ॥ १ ॥**

चतुरः शसि स्त्रियामप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः । शसि स्वरः कस्मान्न भवति ? आद्युदात्तनिपातनात् । आद्युदात्तनिपातनं करिष्यते† स निपातनस्वरः शसि स्वरस्य बाधको भविष्यति ।

एवमप्युपदेशिवद्भावो वक्तव्यः । यथैव हि निपातनस्वरः शसिस्वरं बाधत एवं विभक्तिस्वरमपि‡ बाधेत—चतसृणामिति ।

**विभक्तिस्वरभावश्च हलादिग्रहणात् ॥ २ ॥**

विभक्तिस्वरस्य च भावः सिद्धः । कुतः ? हलादिग्रहणात् । यदयं षट्त्रिचतुर्भ्यो हलादिः [ ६ । १ । १७९ ] इति हलादिग्रहणं करोति तज्ज्ञापयत्याचार्यो 'न निपातनस्वरो विभक्तिस्वरं बाधत' इति । कथं कृत्वा ज्ञापकम् ?

**आद्युदात्तनिपातने हि हलादिग्रहणानर्थक्यम् ॥ ३ ॥**

आद्युदात्तनिपातने हि सति हलादिग्रहणमनर्थकं स्यात् । न ह्यन्यद्धलादिग्रहणं प्रयोजयत्यन्यदतश्चतसृशब्दात् ।

---

प्र०—चतुरः । स्त्रियामिति । स्थानिवद्भावेन प्राप्नोति । आद्युदात्तनिपातनमिति । स्थानिवद्भावादाद्युदात्तत्वे सिद्धे पुनराद्युदात्तनिपातनमस्य स्वरस्य बाधकमित्यर्थः । एवमपीति । उपदेशिवद्भावात्सतिशिष्टेन विभक्तिस्वरेण निपातनस्वरो बाध्यते ।

बहुवचनविषयत्वादिति । विहितविशेषणाश्रयणादुत्तरपदार्थस्योपसर्जनत्वाद्वा समासेन भाव्यमिति भावः । तत्र चतसृशब्दादिति । यदि च निपातनस्वरेण विभक्तिस्वरो बाध्येत

---

उ०—चतुरः शसि । 'शसि परतश्चतुःशब्दस्यान्त उदात्त' इत्यर्थः । स्थानिवद्भावादाद्युदात्तत्वे सिद्धे इति । चतुरः—चतेरुरन्प्रत्यान्तत्वेन 'अः सङ्ख्याया' इति वाद्युदात्तत्वादिति भावः । सतिशिष्टेन—'षट्त्री'-त्यनेन ।

ननु 'अत्यादय' इति समासेऽतिषष' इत्यादावेकवचनाद्यपि संभवतीति 'बहुवचनविषयत्वा'दित्ययुक्तमत आह—विहितेति । अत्र च व्याख्यानमेव शरणम् । उपसर्जनत्वाद्वेति । भाष्यप्रामाण्यादप्रधानी-

---

† चतसर्याद्युदात्तनिपातनं च ७ । २ । ९९ वा० २ पृ० १६८

‡ षट्त्रिचतुर्भ्यो हलादिः ६ । १ । १७९

षट्संज्ञास्तावन्न प्रयोजयन्ति । किं कारणम् ? बहुवचनविषयत्वात् तेन द्विवचनैकवचने न स्तः । जस्शसौ चात्र लुप्येते । अन्याः सर्वा हलादयो विभक्तयः ।

त्रिशब्दश्चापि न प्रयोजयति । किं कारणम् ? बहुवचनविषयत्वात् । तेन द्विवचनैकवचने न स्तः । 'असर्वनामस्थान'मिति‡ वचनाज्जसि न भविष्यति । शसि भवितव्यमेकादेश उदात्तेनोदात्तः [ ८ । २ । ५ ] इति । अन्याः सर्वा हलादयो विभक्तयः ।

तिसृशब्दश्चापि न प्रयोजयति । किं कारणम् ? बहुवचनविषयत्वात् । तेन द्विवचनैकवचने न स्तः । असर्वनामस्थानमिति‡ वचनाज्जसि न भवितव्यम् । शसि भवितव्यमुदात्तयणो हल्पूर्वात् [ ६ । १ । १७४ ] इति । अन्याः सर्वा हलादयो विभक्तयः ।

चतुःशब्दश्चापि न प्रयोजयति । किं कारणम् ? बहुवचनविषयत्वात् । तेन द्विवचनैकवचने न स्तः । 'असर्वनामस्थान'मिति‡ वचनाज्जसि न भवितव्यम् । शसि भवितव्यं 'चतुरः शसी'ति । अन्याः सर्वा हलादयो विभक्तयः ।

तत्र चतसृशब्दादेकस्माच्छस् असर्वनामस्थानमजादिर्विभक्तिरस्ति । यदि चात्र निपातनस्वरः स्याद्धलादिग्रहणमनर्थकं स्यात् ।

नैव वा पुनरत्र शसिस्वरः प्राप्नोति । किं कारणम् ? यणादेशे कृते* शसः

---

प्र०—तदा हलादिग्रहणमनर्थकं स्यात्, 'चतस्रः पश्ये'त्यत्र निपातनस्वरेणैव बाधितत्वाद्विभक्तिस्वरस्याप्रसङ्गात्, किं तन्निवृत्त्यर्थेन हलादिग्रहणेन। तत् क्रियमाणं विभक्तिस्वरस्य बलीयस्त्वं ज्ञापयतीति 'चतसृणा'मित्यत्र विभक्तिस्वरसिद्धिः । नैव वेति । 'चतस्रः पश्ये'त्यत्र । ततश्चाद्युदात्तनिपातनमपि न कर्तव्यम् । यणादेशे कृत इति। 'अचि र ऋत' इत्यनेन स्वरात् पूर्वं परत्वादिति भावः ।

---

उ०—भूतप्रसिद्धार्थबोधकषषादीनामेव ग्रहणादिति भावः। एतेनाचारक्विबन्तप्रकृतिककर्तृक्विबन्तादनेकवचनादिसंभव इति परास्तम् । अभिव्यक्तेति न्यायाच्च । एवं वार्तिककृता वर्णितमपि ज्ञापकमुपसमस्तार्थमेके इति 'तिसृभ्य' इति सूत्रस्थस्वीकरीत्या तत्रास्यापि चारितार्थ्येनासङ्गतमिति मत्वा 'चतस्रः पश्ये'त्यत्रास्याप्राप्तिं प्रकारान्तरेणोपपादयति—नैव वा पुनरिति । ननु 'इको यणची'त्यस्य पूर्वसवर्णदीर्घेण बाधाद्यणादेशे कृत इत्यसङ्गतमत आह—अचि र इति । ननु रेफादेशात्पूर्वमेव स्वरः किं नेष्यत आह—परत्वादिति । भाष्ये—

---

‡ अञ्चेश्छन्दस्यसर्वनामस्थानम् ६ । १ । १७०    * अचि र ऋतः ७ । २ । १००

पूर्वं उदात्तभावी नास्तीति कृत्वा । अवशिष्टस्य तर्हि प्राप्नोति । ऋकारेण व्यवहितत्वान्न भविष्यति । यणादेशे कृते नास्ति व्यवधानम् । स्थानिवद्भावाद्व्यवधानमेव। प्रतिषिध्यतेऽत्र स्थानिवद्भावः 'स्वरविधिं प्रति न स्थानिवद्भवती'ति† । नैषोऽस्ति प्रतिषेधः । उक्तमेतत् 'प्रतिषेधे स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिव'-दिति‡ ॥ १६७ ॥

## सावेकाचस्तृतीयादिर्विभक्तिः ॥ ६ । १ । १६८ ॥

'सा'विति किमिदं प्रथमैकवचनस्य ग्रहणमाहोस्वित्सप्तमीबहुवचनस्य । कुतः सन्देहः ? समानो निर्देशः । सप्तमीबहुवचनस्य ग्रहणम् । कथं ज्ञायते ? यदयं 'न गोश्वन्साववर्ण' [ ६ । १ । १८२ ] इति गोशुनोः प्रतिषेधं शास्ति । कथं कृत्वा ज्ञापकम् ? यदि प्रथमैकवचनस्य ग्रहणं स्याद्गोशुनोः प्रतिषेधवचनमनर्थकं स्यात् ।

प्र०—अवशिष्टस्येति । तकराकारस्येत्यर्थः । ऋकारेणेति । पूर्वविधौ रेफस्य स्थानिवद्भावात् ॥ १६७ ॥

सावेकाचः । साविति किमिति । यदि शास्त्रीयं सुरूपं गृह्यते तदा प्राथम्यात् । प्रथमैकवचनस्य ग्रहणेन भाव्यम् । अथ प्रायोगिकम्, ततः सप्तमीबहुवचनस्य । तद्धि प्रयोगे सुरूपं श्रूयते । प्रथममैकवचने तु विकृतरूपप्रयोगे न सुरूपमिति संशयानः पृच्छति—यदयमिति । 'गोषु' 'श्वस्वि'ति सप्तमीबहुवचन एकाच्त्वाद्गोभ्यां श्वभ्यामित्यादौ विभक्तेः प्राप्तमुदात्तत्वं प्रतिषिध्यते । प्रथमैकवचनग्रहणे तु प्राप्त्यभावात्प्रतिषेधोऽनर्थकः । प्रथमैकवचने हि यदेकाच्छब्दरूपं 'गौ'रित्यौकारान्तं 'श्वे'त्याकारान्तं, न च तस्मात्तृतीयादिविभक्तिः परा संभवतीति प्राप्त्यभावात्किं प्रतिषेधेनेति भावः । प्रकृतिग्रहणे हि विकृतेर्ग्रहणं भवति स्थानिवद्भावान्न तु विकृतिग्रहणे प्रकृतेः ।

उ०—शसः पूर्वं इति । 'सौवर्यः सप्तम्यस्तदन्तसप्तम्य'इत्यस्य तु नात्र प्रवृत्तिः, लक्ष्यानुसारेण ज्ञापकसिद्धत्वेन चासार्वत्रिकत्वादिति दिक् । तकाराकारस्येति । हल्स्वरप्राप्तौ व्यञ्जनस्याविद्यमानत्वादिति भावः ॥१६७॥

सावेकाचः । नन्वनङ् साविस्यादिवत्प्रथमैकवचनस्य ग्रहणे सति कुतः सन्देहोऽत आह—यदीति । यदेकाच्छब्दरूपमिति । भाष्यप्रामाण्यादेकग्रहणाच्च रूपाश्रयणमिति भावः । तत्फलं तु काभ्यां कुलाभ्यामित्यदावेतत्स्वराभावः । अत्र ज्ञापकेन सप्तमीबहुवचनग्रहणं साधयतान्यत्र प्रथमैकवचनग्रहणमेवेति सूचितम् । भाष्ये—'दोषा' इति, एकस्मिन्नपि बहुत्वारोपेण बहुवचनं, तदाह—को

† न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु १ । १ । ५८

‡ १ । १ । ५८ वा० १ पृ० ४५३

ननु चार्थसिद्धिरेवैषा । अनुगृहीताः स्मो यैरस्माभिः प्रथमैकवचनमास्थाय गोशुनोः प्रतिषेधो न वक्तव्यो भवति । भवेत्प्रतिषेधो न वक्तव्यो दोषास्तु भवन्ति । तत्र को दोषः ? स्विना खिना । अन्तोदात्तत्वं न प्राप्नोति । स्विन्खिनौ न स्तः । उक्तमेतदेकाचरात्कृतो जातेः सप्तम्यां च न तौ स्मृतौ§ स्ववान् खवानित्येव भवितव्यम् । इह तर्हि याद्भ्याम् याद्भिरिति न सिध्यति । तस्मात्सप्तमीबहुवचनस्य ग्रहणम् ।

**सावेकाच उदात्तत्वे त्वन्मदोः प्रतिषेधः ॥ १ ॥**

सावेकाच उदात्तत्वे त्वन्मदोः प्रतिषेधो वक्तव्यः । त्वया मया ।

**सिद्धं तु यस्मात्तृतीयादिस्तस्याभावात्सौ ॥ २ ॥**

सिद्धमेतत् । कथम् ? यस्मादत्र तृतीयादिर्विभक्तिर्न तत्सावस्ति ॥ यद्यप्येतत्सौ नास्ति प्रकृतिस्त्वस्य सावस्ति ।

प्र०—अनुगृहीता इति । प्रतिषेधमन्तरेणेष्टस्यार्थस्य सिद्धत्वात् । खिनेति । प्रथमैकवचने 'स्वी'ति विकृतप्रयोगात्तृतीयादौ प्रकृतिरूपस्य श्रवणाद्विकृत्या प्रकृतेरग्रहणादित्यर्थः । सप्तमीबहुवचने तु स्विष्विति प्रकृतिरूपस्य प्रयोगात् स्वरविधौ नलोपस्यासिद्धत्वात्तस्यैव तृतीयादौ प्रयोगात्सिध्यत्यन्तोदात्तत्वम् ।

याद्भ्यामिति । सप्तमीबहुवचने 'यात्स्वि'ति यदेकाच् तत एव तृतीयादिरिति सिध्यत्यन्तोदात्तत्वं, प्रथमैकवचने तु 'या'निति यद्रूपं न तस्मात्तृतीयादिरित्याद्युदात्तत्वं न प्राप्नोतीत्यर्थः । न च तन्मध्यपतितत्वान्नुटो भेदकत्वाभावः, विशिष्टरूपशब्दविषयत्वात्तन्मध्यपतितपरिभाषायाः, तथा च नेदमदसोरकोरिति तथाभूतमेवास्य ज्ञापकम् । अन्ये त्वन्वादेशेऽशमुदाहरन्ति । एभ्य एभिरिति सप्तमीबहुवचने एष्वित्यत्रादेशे कृते भवत्येकाच् । प्रथमैकवचने त्वयमित्येकाज्न भवतीति स्वराप्रसङ्गः । 'ऊडिद'मित्यत्रान्तोदात्ताधिकारादशादेशस्यानुदात्तत्वादनेन स्वरेण प्रयोजनम् ।

त्वन्मदोरिति । सौ यद्दृष्टं तस्मादेकाचः परा तृतीयादिरुदात्ता भवतीति सूत्रार्थाश्रयेण

उ०—दोष इति । ननु सप्तमीबहुवचनेऽपि नलोपे सति विकृतरूपस्यैव प्रयोगोऽत आह—स्वरविधाविति । 'नलोपः सुप्स्वरे'त्यनेन । 'न तस्मात्तृतीयादिरित्युदात्तत्वं न प्राप्नोति'इति पाठः । न च तन्मध्येति । तन्मध्यपतितन्यायेन याद्ग्रहणेन ग्रहणेऽपि श्रौतरूपभेदः कुतो नेति चिन्त्यम् । विशिष्टेति । यथा 'सर्वादीनी'त्यादौ । नन्वेभ्य इत्यादावूडिदमित्यनेन विभक्त्युदात्तत्वं सिद्धमिति किमनेन स्वरेण प्रयोजनमत आह—ऊडिदमिति । 'एभिरग्ने' इत्यादौ सर्वानुदात्तपदश्रवणं तु छान्दसमिति तद्भावः ।

ननु सप्तमीबहुवचने युष्मदस्मदोरेकाच्त्वाभावेन स्वराप्राप्त्या प्रतिषेधोऽनर्थकोऽत आह—सौ यद्दृष्टमिति । वार्तिकाशयवर्णनमात्रमेतत्, 'सौ' इत्यस्य वैयर्थ्यापत्तेः ॥ सौ यदिति । एकाच्त्वोपलक्षणाय

§ ५ । २ । ११५ पृ० १६६ ।

प्रकृतेश्चानेकाच्त्वात् ॥ ३ ॥

यद्यपि तस्य प्रकृतिरस्ति सावनेकाच्तु सा भवति ॥ १६८ ॥

## अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे ॥ ६ । १ । १६९ ॥

उत्तरपदग्रहणं किमर्थम् ? यथैकाज्ग्रहणमुत्तरपदविशेषणं विज्ञायेत*—एकाच उत्तरपदादिति । अथाक्रियमाण उत्तरपदग्रहणे कस्यैकाज्ग्रहणं विशेषणं स्यात् ? समासविशेषणम् । अस्ति चेदानीं कश्चिदेकाच्समासो 'यदर्थो विधिः स्यात् ? अस्तीत्याह । शुन ऊर्क् श्वोर्क् । श्वोर्जा श्वोर्ज इति ॥ १६९ ॥

## ऊडिदंपदाद्यप्पुम्रैद्युभ्यः ॥ ६ । १ । १७१ ॥

पदादिषु† निशन्तानि प्रयोजयन्ति । अन्यानि पदादीन्युदात्तनिवृत्तिस्वरेण‡

प्र०—प्रतिषेध उच्यते । तृतीयादावेकाच्त्वमाश्रीयते न तु सावित्यर्थः ॥ प्रकृतेश्चेति । सौ यदेकाच् तस्मात्परा तृतीयादिरुदात्तेति सूत्रार्थ आश्रीयत इत्यर्थः ॥ १६८ ॥

अन्तोदात्तादुत्तर । उत्तरपदग्रहणमिति । अनित्यसमास इत्याधारसप्तमी विज्ञास्यते । 'अनित्यसमासः स्यान्तोदात्तादेकाचः परा तृतीयादिर्विभक्तिरन्यतरस्यामुदात्ता भवती'ति सूत्रार्थ आश्रयिष्यत इति नार्थ उत्तरपदग्रहणेनेति भावः । समासविशेषणमिति । 'अनित्यसमास' इति सत्सप्तमी विज्ञायेत । ततश्च समासस्य श्रुतत्वात्तस्यैवैकाज्ग्रहणमन्तोदात्तत्वं च विशेषणं विज्ञायेत न त्वश्रुतस्योत्तरपदस्येत्यर्थः ॥ १६९ ॥

ऊडिदं । पदादिष्विति । 'पद्दन्नोमा'सिति सूत्रनिर्दिष्टाः पदादयो गृह्यन्ते, एकाज्ग्रहणं

उ०—सावित्युपात्तमित्यर्थः । एकवचनान्तप्रकृतिकण्यन्तप्रकृतिकक्विन्तानामनभिधानं बोध्यम् । अन्यथा त्वासु इति सौ यदेकाच् ततः परा त्वाम्यामित्यादौ तृतीयादिविभक्तिरस्त्येवेति प्रत्याख्यानासङ्गतिः स्पष्टैव । 'अभिव्यक्तपदार्था ये' इति न्यायेन वा तयोर्वार्तिकेऽग्रहणमिति दिक् ॥ १६८ ॥

अन्तोदात्तादुत्तर । अन्तोदात्तैकाच्त्वयोरुत्तरपदविशेषणत्वाय तदावश्यकमिति कथं तदाक्षेपोऽत आह—अनित्येति । अनित्यसमासस्थं यदन्तोदात्तमेकाच् ततः परमित्युक्ते तादृशमुत्तरपदमेवेति भावः । सत्सप्तमीति । 'अनित्यसमासे सति अन्तोदात्त एकाच यः समास' इत्यर्थः । पञ्चम्यर्थे सप्तमी स्यादित्यन्ये ॥ १६९ ॥

ऊडिदं । पद्दन्न इति । निशपर्यन्ततायास्तेष्वेव प्रसिद्धत्वादिति भावः [२] ग्रीवायां बद्धो अपि कक्ष

* सावेकाचस्तृतीयादिर्विभक्तिः ६ । १ । १६८ । १—'यदर्थमेकाज्ग्रहणं स्यात्' पा० ।

† पद्दन्नोमास्हृन्निश ..........प्रभृतिषु ६ । १ । ६३ ।

२—ऋ० सं० ४ । ४० । ४०; य० वा० ९ । १४; तै० सं० १ । ७ । ८ । ३; निरु० २.८

‡ अनुदात्तस्य च यत्रोदात्तलोपः ६ । १ । १६१ ।

सिद्धानि ।

ऊठ्युपधाग्रहणमन्त्यप्रतिषेधार्थम् ॥ १ ॥

ऊठ्युपधाग्रहणं कर्तव्यम् । किं प्रयोजनम् ? अन्त्यप्रतिषेधार्थम् । अन्त्यस्य मा भूत् । अक्षद्युवा अक्षद्युवे ॥ १७१ ॥

## अष्टनो दीर्घात् ॥ ६ । १ । १७२ ॥

दीर्घग्रहणं किमर्थम्[1] ? अष्टसु प्रक्रमेषु ब्राह्मण आदधीत । दीर्घादिति शक्यमकर्तुम् । कस्मान्न भवति अष्टसु प्रक्रमेषु ब्राह्मण आदधीतेति ? षट्स्वरोऽत्र बाधको भविष्यति§ । नाप्राप्ते षट्स्वरेऽष्टनः स्वर आरभ्यते स यथैव दीर्घाद्बाधत एवं ह्रस्वादपि बाधेत । न दीर्घात्षट्स्वरः प्राप्नोति । किं कारणम् ? आत्वे कृते¶ षट्संज्ञाभावात् ॥ अत उत्तरं पठति—

प्र०—चेहानुवर्तत इति निशः परेऽनेकाच्त्वान्न गृह्यन्ते । यदा त्वल्लोपे कृते एकाचो भवन्ति तदोदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वं सिद्धम् । येऽप्याद्युदात्तानां स्थाने विधीयन्ते आदेशास्तेऽन्तोदात्ता निपात्यन्त इति भाष्यकारवचनाद्विज्ञायते ।

ऊठ्युपधाग्रहणमिति । उपधारूप ऊठ् गृह्यते न त्वन्य इत्यर्थः ॥ १७१ ॥

अष्टनो दी । दीर्घग्रहणमिति । 'अष्टन आ विभक्ता'विति नित्यत्वादात्वविधेर्व्यभिचाराभावाद्विकल्पे चात्वस्य ह्रस्वान्तात्परत्वात् षट्स्वरेण भाव्यमिति प्रश्नः । अष्टास्विति ।

उ०—आसनी'त्यादावल्लोपाभावे मध्योदात्तत्वं श्रूयते । तदश्रवणार्थमेवाग्रिमाणामपि ग्रहणं स्यादत आह—एकाज्ग्रहणं चेति । भाष्योक्तहेतुरतूदाहरणविशेषविषय इत्याह—यदा त्विति । तदोदात्तनिवृत्तिस्वरेणेति । सावर्णान्तं यद्रूपं ततः परत्वाभावान्न गोश्वन्निति तन्निषेधो नेति भावः । नन्वसृक्यकृदादीनामाद्युदात्तानां स्थाने येऽनेकाच आदेशास्ते आन्तरतम्यादाद्युदात्ता इति कथं तद्विषये उदात्तनिवृत्तिस्वरेणेष्टसिद्धिरत आह—येऽपीति । प्रकृत्यन्तरत्वपक्षे तु फिट्स्वरेणान्तोदात्तत्वं बोध्यम् । उपधारूप इति । अन्यथा पञ्चमीनिर्देशादन्त्य एव गृह्येतेति भावः । 'विश्वौह' इत्युदाहरणम् ॥ १७१ ॥

अष्टनो दी । विकल्पेऽपि चेति । अस्मादेव दीर्घग्रहणाद्विकल्पोऽनुमास्यत इति भावः । ह्रस्वान्तात् षट्स्वरेण भाव्यमित्यन्वयः । तत्र हेतुः—परत्वादिति । षट्स्वरः—'झल्युपोत्तम'मिति । अयं च दीर्घान्तात्प्रवृत्त्या चरितार्थः । तत्र हि न षट्त्वं' ह्रस्वान्ते तु नलोपस्यासिद्धत्वात्षट्त्वमिति भावः ॥

१—'दीर्घादिति किमर्थम्' पा० ।　　§ झल्युपोत्तमम् ६ । १ । १८० ।
¶ अष्टन आ विभक्तौ ७ । २ । ८४ ।

**अष्टनो दीर्घग्रहणं षट्संज्ञाज्ञापकमाकारान्तस्य नुडर्थम् ॥ १ ॥**

अष्टनो दीर्घग्रहणं क्रियते ज्ञापकार्थम् । किं ज्ञाप्यम् ? एतज्ज्ञापयत्याचार्यो 'भवत्यात्वे कृते षट्संज्ञे'ति । किमेतस्य ज्ञापने प्रयोजनम् ? आकारान्तस्य नुडर्थम् । आकारान्तस्य नुट्सिद्धो भवति—अष्टानामिति† ।

ननु च नित्यमात्वम् । एतदेव ज्ञापयति विभाषात्वमिति यदयं दीर्घग्रहणं करोति । इतरथा ह्यष्टन इत्येव ब्रूयात् ॥ १७२ ॥

## शतुरनुमो नद्यजादी ॥ ६ । १ । १७३ ॥

**नद्यजाद्युदात्तत्वे बृहन्महतोरुपसङ्ख्यानम् ॥ १ ॥**

नद्यजाद्युदात्तत्वे बृहन्महतोरुपसङ्ख्यानं कर्तव्यम् । बृहती महती । बृहता महता ॥ १७३ ॥

प्र०—अस्मादेव दीर्घग्रहणादात्वं विकल्पितमिति भावः ॥ अष्टनो दीर्घग्रहणमिति । न्यायसिद्धस्यैवार्थस्य दीर्घग्रहणं लिङ्गम्, आत्वस्य बहिरङ्गायां षट्संज्ञायां कर्तव्यायामसिद्धत्वान्नान्तत्वादेव षट्संज्ञायाः सिद्धत्वात् । एतदेवेति । दीर्घग्रहणेनान्यथानुपपत्त्यायमर्थो ज्ञाप्यते ॥ १७२ ॥

शतु । बृहन्महतोरिति । शतृवद्भावादेव सिद्धत्वान्नियमार्थमेतत्, पृषदादिभ्यो मा भूदित्येवमर्थम् । ये तु गौरादिषु बृहन्महदिति पठन्ति तेषामनर्थकोऽसौ पाठः, अनुपसर्जनाधिकाराच्चातिबृहत्यतिमहतीति गौरादिङीष्नास्तीति ङीबेवोगिल्लक्षणः कर्तव्यस्तस्यानेनोदात्तत्वम् । नन्वत्र तदन्तविध्यभावान्न प्राप्नोति । नैतदस्ति । तदन्ते बृहन्महद्भ्यां परे नद्यजादी भवतः ॥ १७३ ॥

उ०—न्यायसिद्धस्यैवेति । यद्यपि कार्यकालपक्षे षड्भ्यीत्येकवाक्यतापन्ना संज्ञा आत्वेन समैव, तथापि यथोद्देशपक्षेऽन्तरङ्गत्वमिति भावः । न च नान्तत्वावस्थायां जातेऽपि षट्त्वे आकारे कृते नुट् न स्यादिति वाच्यम्, एकदेशविकृतन्यायेन नान्तसङ्ख्यावाचकत्वसमानाधिकरणधर्मविशेषरूपषट्त्वस्याकारान्तेऽपि सुलभत्वादिति तात्पर्यम् । अस्मादेव ज्ञापकादेतद्विषये यथोद्देशस्यैवाश्रयणमिति बोध्यम् । दीर्घग्रहणेनेति । अन्यथानुपपत्तिर्ह्यनेकस्याप्यर्थस्य ज्ञापिकेत्यर्थः ॥ १७२ ॥

शतुर । शतृवद्भावादिति । 'वर्तमाने पृषन्महद्बृहज्जगच्छतृवच्चे'त्यनेन । अनर्थकोऽसौ पाठ इति । 'नद्यर्थं' इति शेषः । तन्मतेऽपि कर्तव्यतां दर्शयति—अनुपसर्जनेति । तदन्तविध्यभावादिति । विशेष्यासन्निधानादित्यर्थः । अनेनैव सिद्धे गौरादिषु पाठः किमर्थ इति तु चिन्त्यम् ॥ १७३ ॥

† षट्चतुर्भ्यश्च ७ । १ । ५५ ।

## उदात्तयणो हल्पूर्वात् ॥ ६ । १ । १७४ ॥

हल्पूर्वादिति किमर्थम् ? अग्नये वायवे ।

**उदात्तयणि हल्ग्रहणं नकारान्तार्थम् ॥ १ ॥**

उदात्तयणि हल्ग्रहणं कर्तव्यम् । किं प्रयोजनम् ? नकारान्तार्थम् । नकारान्तादपि यथा स्यात् । वाक्पत्नी चित्पत्नी* ।

**हल्पूर्वग्रहणानर्थक्यं च समुदायादेशत्वात् ॥ २ ॥**

हल्पूर्वग्रहणं चानर्थकम् । किं कारणम् ? समुदायादेशत्वात् समुदायोऽत्रादेशः ।

**स्वरितत्वे चावचनात् ॥ ३ ॥**

स्वरितत्वे† च हल्पूर्वग्रहणस्यावचनान्मन्यामहे हल्पूर्वग्रहणमनर्थकमिति । यत्तावदुच्यत 'उदात्तयणि हल्ग्रहणं नकारान्तार्थ'मिति क्रियते न्यास एव । द्विनकारको निर्देशः । 'उदात्तयणो हल्पूर्वान्नोङ्धात्वो'रिति‡ ।

प्र०—उदात्तयणो । उदात्तयणीति । 'उदात्तयण' इत्यपनीयोदात्तहल इति वक्तव्यमित्यर्थः । वाक्पत्नीति तत्पुरुषः । 'न भूवाक्चिद्दिधि'ष्विति पूर्वपदप्रकृतिस्वरनिषेधात्समासान्तोदात्तत्वम् । 'विभाषा सपूर्वस्ये'ति नकारादेशः ॥ हल्पूर्वग्रहणानर्थक्यमिति । यथा 'उरण्रपर'इत्यनेनाणणसमुदायस्य सौधातकिरित्यादौ रपरत्वं न भवत्येवमग्नय इत्यादौ यणयणसमुदाय उदात्तस्य स्थाने विधीयते न यणेव केवल इति स्वरो न प्रवर्तिष्यत इत्यर्थः ।

स्वरितत्वे चेति । 'उदात्तस्वरितयोर्यणः स्वरितोनुदात्तस्ये'त्यत्र समुदायादेशस्याश्रयणान्नेवाग्नय इत्यादौ स्वरितत्वनिवृत्त्यर्थं हल्पूर्वग्रहणं न कृतमित्यर्थः । द्विनकारक इति । तत्रैको

उ०—उदात्तयणो । भाष्ये अग्नये इति । उदात्तस्थानिको यणशब्देन विहितोऽन्यथा वा, सर्वस्य ग्रहणं स्यात् । हल्पूर्वग्रहणे तु यणशब्दविहितस्यैव ग्रहणमित्यभिमानः । ननु हल्ग्रहणस्य कृतत्वात्कुतस्तस्य कर्तव्योक्तिरत आह—उदात्तयण इतीति । तत्पुरुष इति । वाचः पतिरिति विग्रहः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वादुदात्तस्थानिकहलोऽप्रसिद्धिरिति भावः । ननु । तत्पुरुषेऽपि 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरः स्यादत आह—न भूवागिति ॥ उक्तप्रयोजनाभावं दर्शयति—यथोरणिति ।

स्वरितत्वनिवृत्त्यर्थमिति । नन्वग्नये इत्यत्रोदात्तादनुदात्तस्य स्वरित इत्यनेन विभक्तेः स्वरितत्वमिष्टमेवेति चेन्न, 'अग्नये जुष्ट'मित्यादौ विशेषात् । तत्र हि 'जुष्ट'शब्दो 'जुष्टार्पिते च च्छन्दसी'त्याद्युदात्तः । तत्र हि 'नोदात्तस्वरितोदय'मित्यनेन उदात्तादनुदात्तस्येत्यस्य निषेधात् । अनन्तरत्वाद्धि तस्यैव स निषेधो नोदात्तस्वरितयोरित्यस्येति दिक् । ननु नकारनिर्देशे तस्य पञ्चम्यन्तत्वं समस्तोदात्तशब्दस्य

* न भूवाक्चिद्दिधिषु ६ । २ । १९; समासस्य ६ । १ । २२३; विभाषा सपूर्वस्य ४ । १ । ३४ ।
† उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ८ । २ । ४ । ‡ नोङ्धात्वोः ६ । १ । १७५ ।

यदप्युच्यते 'हल्पूर्वग्रहणानर्थक्यं च समुदायादेशत्वा'दित्ययमस्ति केवल आदेशः—बहुतितवा [ बहुतितेत्र इति ] ॥ १७४ ॥

## ह्रस्वनुड्भ्यां मतुप् ॥ ६ । १ । १७६ ॥

### मतुबुदात्तत्वे रेग्रहणम् ॥ १ ॥

मतुबुदात्तत्वे रेग्रहणं कर्तव्यम् । आ रेवानेतु नो विशः ।

### त्रिप्रतिषेधश्च ॥ २ ॥

त्रेश्च[२] प्रतिषेधो वक्तव्यः । त्रिवतीर्याज्यानुवाक्या भवन्ति ॥ १७६ ॥

## नामन्यतरस्याम् ॥ ६ । १ । १७७ ॥

इह कस्मान्न भवति—किशोरीणाम् कुमारीणाम् ? ह्रस्वादिति* वर्तते । इहापि तर्हि न प्राप्नोति—अग्नीनाम् वायूनाम् । किं कारणम् ? दीर्घत्वे† कृते ह्रस्वाभावात् ।

प्र०—नकारो लुप्तपञ्चमीको निर्दिष्टस्तस्योदात्तग्रहणेन विशेषणादुदात्तनकारात्परस्या नद्या उदात्तत्वं भवति । भाष्यकारेण भक्त्यतिशयः सूत्रकारं प्रति दर्शितो न त्वियं स्पष्टा गतिः । बहुतितवेति । बहूनि तितऊन्यस्या इति बहुव्रीहिः । 'बहोर्नञ्वदुत्तरपदभूम्नी'त्यतिदेशादन्तोदात्तत्वमत्र विभक्तेः, उदात्तत्वनिवृत्तये हल्पूर्वग्रहणं कृत'मुदात्तस्वरितयोर्यण' इत्यनेन तु स्वरितत्वं भवति । १७४ ॥

ह्रस्वनुड् । आ रेवानिति । रयिरस्यास्तीति मतुप् । 'रयेर्मतौ बहुल'मिति संप्रसारणं, पूर्वेकादेश आद्गुणस्ततो ह्रस्वाभावान्मतुप्स्वरो न प्राप्नोतीति वचनम् । त्रिवतीरिति । 'छन्दसीर' इति वत्त्वम् । 'वा छन्दसी'ति पूर्वसवर्णदीर्घः ॥ १७६ ॥

नामन्य । मतौ ह्रस्वान्तादिति । मतुपि ह्रस्वान्तं यद्दृष्टं तस्मात्परो नामन्यतरस्यामुदात्तो

उ०—तेनान्वय इत्यतिक्लिष्टमेतदत आह—भाष्यकारेणेति । 'उदात्तेति' लुप्तषष्ठ्यन्तमिति भाष्याशयमन्ये । ननु बहुव्रीहौ पूर्वपदप्रकृतिस्वरप्राप्तेरुदात्तस्थानिकत्वाभावोऽत आह—बहोर्नञ्वदिति । 'उदात्तस्वरितत्वं भवतो'ति पाठे उदात्तस्थानिकयण्निमित्तकं स्वरितत्वं भवतीत्यर्थः । भाष्ये—बहुतितवा इति । तृतीयान्तम् । 'बहुतितवे' इति प्रसङ्गोच्चारितं, तत्र हि 'घेर्ङिती'ति गुणेन भाव्यम् ॥ १७४ ॥

नामन्य । 'मतौ ह्रस्वान्ता'दिति न्यासेऽग्नीनामित्यसिद्धिस्तदवस्थैव, मतौ ह्रस्वान्तमग्नि इति, नामस्तस्मात् परत्वाभावात्, अतस्तस्य सिद्धिप्रकारं दर्शयितुमर्थमाह—मतुपीति । भाष्ये—सांप्रतिकसत्तां

१—क्वाचित्कः पाठः ।
* ह्रस्वनुड्भ्यां मतुप् ६ । १ । १७६ ।
२—'त्रिप्रतिषेधश्च' इति कीलहार्नपाठः ।
† नामि ६ । ४ । ३ ।

इदमिह संप्रधार्यम्—दीर्घत्वं क्रियतां स्वर इति किमत्र कर्तव्यम् ? परत्वाद्दीर्घत्वम् ॥ एवं तर्हि—

**नाम्स्वरे मतौ ह्रस्वग्रहणम् ॥ १ ॥**

नाम्स्वरे मतौ ह्रस्वग्रहणं कर्तव्यम् । मतौ ह्रस्वान्तादिति ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । आहायं 'ह्रस्वान्ता'दिति न च नामि ह्रस्वान्तोऽस्ति तत्र भूतपूर्वगतिर्विज्ञास्यते—'ह्रस्वान्तं यद्भूतपूर्व'मिति ।

सांप्रतिकाभावे भूतपूर्वगतिर्विज्ञायतेऽयं चास्ति सांप्रतिकः—तिसृणाम् चतसृणामिति‡ । नैतदस्ति । 'षट्त्रिचतुर्भ्यो हलादिः' [ ६ । १ । १७९ ] इत्यनेनात्र स्वरेण भवितव्यम् । तस्मिन्नित्ये प्राप्त इयं विभाषारभ्यते । एवं तर्हि योगविभागः करिष्यते§ । षट्त्रिचतुर्भ्यो नामुदात्तो भवति । ततो 'हलादिः' । हलादिश्च विभक्तिरुदात्ता भवति 'षट्त्रिचतुर्भ्य' इति ।

इदं तर्हि— त्वं नृणां¶ नृपते जायसे शुचिः'* । ननु चात्रापि 'नृ चान्यतरस्याम्' [ ६ । १ । १८४ ] इत्येष स्वरो बाधको भविष्यति । न सिध्यति । किं कारणम् ? झल्ग्रहणं तत्रानुवर्तते । किं पुनः कारणं झल्ग्रहणं तत्रानुवर्तते ? इह मा भूत्—त्रा त्रे । 'उदात्तयणो हल्पूर्वात्' [ ६ । १ । १७४ ] इत्येष स्वरोऽत्र बाधको भविष्यति ।

इदं तर्हि—नरि ॥ नैकमुदाहरणं ह्रस्वग्रहणं प्रयोजयति । यद्येतावत्प्रयोजनं

---

प्र०—भवतीत्यर्थः । भूतपूर्वगतिरिति । 'अकृते दीर्घे ह्रस्वान्तात्परो 'नाम्' अभूदिति दीर्घे कृते स्वरः प्रवर्तते । षट्त्रिचतुर्भ्यो नामिति । विकल्पे प्राप्ते नित्यार्थो योगविभाग इति सांप्रतिकाभावाद्भूतपूर्वगतिराश्रीयते । नैकमुदाहरणमिति । 'ह्रस्वनुड्भ्यां मतु'बित्यत्र ह्रस्वग्रहणस्य

---

उ०—समर्थयते—तस्मिन्नित्ये प्राप्ते इति । विकल्पे प्राप्ते इति । 'नामन्यतरस्या'मिति विकल्पे प्राप्ते इत्यर्थः । सांप्रतिकाभावादिति । योगविभागेन चतसृणामित्यत्र स्य विकल्पस्य बाधादप्रवृत्तेरिति भावः । भाष्ये— उदात्तयणो हल्पूर्वादित्येष स्वरो बाधक इति । यद्यपि कर्त्रा कर्त्रीत्यादौ चरितार्थस्यास्य नृभिरित्यादौ चरितार्थेन 'नृ चान्यतरस्या'मित्यनेन परत्वाद्बाधः प्राप्नोति, तथापि पूर्वविप्रतिषेधेनात्र तदेवेति भाष्ये पूर्वपक्षैकदेश्यभिमान इत्याहुः । नैकमुदाहरणमिति । नृणामित्येतत् । नन्वत्र ह्रस्वग्रहणाभावात्कस्य वचनस्य

---

‡ न तिसृचतसृ ६ । ४ । ४　　§ षट्त्रिचतुर्भ्यो हलादिः ६ । १ । १७९

¶ नृ च ६ । ४ । ६　　* ऋ० सं० २ । १ । १; य० वा० ११ । २७; तै० सं० ४ । १ । २ । ५; तै० आ० १० । ७६ । १; निरु० ६ । १; १३ । १ ।

स्यान्नामित्येव ब्रूयात्† । तत्र वचनाद्भूतपूर्वगतिर्विज्ञास्यते—'ह्रस्वान्तं यद्भूतपूर्व'मिति ।

अथवा नैवं विज्ञायते 'नाम्स्वरे मतो ह्रस्वग्रहणं कर्तव्य'मिति । कथं तर्हि ? 'नाम्स्वरे मतौ ह्रस्वादिति वर्तत' इति ॥ १७७ ॥

## न गोश्वन्त्सावर्णराडङ्क्रुङ्कृद्भ्यः ॥ ६ । १ । १८२ ॥

साविति किमिदं प्रथमैकवचनस्य ग्रहणमाहोस्वित्सप्तमीबहुवचनस्य ? कुतः सन्देहः ? समानो निर्देशः । पुरस्तादेष निर्णयः‡ 'सप्तमीबहुवचनस्य ग्रहण'मिति । इहापि तदेव भवितुमर्हति ।

यदि सप्तमीबहुवचनस्य ग्रहणं ताभ्यां ब्राह्मणाभ्याम् याभ्यां ब्राह्मणाभ्याम् अत्र न प्राप्नोति । विधिरप्यत्र न सिध्यति§ । किं कारणम् न ह्येतद्भवति यत्सौ रूपम् । इदं तर्हि तेभ्यो ब्राह्मणेभ्यः ? येभ्यो ब्राह्मणेभ्यः विधिश्च सिद्धो भवति, प्रतिषेधस्तु न प्राप्नोति ।

प्र०—स्वरितत्वमिहार्थं प्रतिज्ञातं, तच्च सर्वह्रस्वसङ्ग्रहार्थमिति विषयसङ्कोचो न युक्तः, अन्यथा लाघवाय 'नृ चान्यतरस्या'मित्यस्यानन्तरं 'ना'मिति ब्रूयादित्यर्थः। मतौ ह्रस्वादिति वर्तत इति । मतुब्ग्रहणमिहानुवृत्तं सामर्थ्यात्सप्तम्यन्तं संपद्यते । ततो 'मतौ यद्ह्रस्वान्तं दृष्टं तस्मात्परो नामुदात्तो भवती'त्यर्थः संपद्यते ॥ १७७ ॥

न गोश्वन् । इहापीति । एकप्रकरणोपादानादिति भावः । ताभ्यामिति । सप्तमीबहुवचने तेष्वित्यवर्णान्तत्वाभावात्प्रतिषेधो न प्राप्नोति । विधिरप्यत्रेति । तेष्विति सप्तमीबहुवचने

उ०—सामर्थ्यमत आह—ह्रस्वनुडिति । तत्र युक्तिमाह—अन्यथेति । 'ना'मिति सूत्रे च नृग्रहणमनुवर्ततेऽन्यतरस्यामिति च, ह्रस्वग्रहणानुवृत्तिरप्यत्र द्रष्टव्या । अन्यथा दीर्घशब्देऽपि स्यात् । न चेष्टापत्तिः, सामर्थ्ययोगादिति भावः । भाष्ये—नैवं विज्ञायत इति । 'मतौ ह्रस्वग्रहण'मिति वार्तिकस्य 'कर्तव्य'मिति न शेषः, किन्तु 'वर्तते' इति शेष इत्यर्थः ॥ १७७ ॥

न गोश्वन् । एकप्रकरणोपादानादिति । एकप्रकरणे उभयोरुपादानादित्यर्थः । न तस्मादत्रेति ! एवं च विधेः प्राप्त्यभावान्निषेधाप्रवृत्तावपि न दोष इत्यर्थः । तेनेत्यत्र सप्तमीबहुवचने यत् ते इति रूपं ततः परा नेति

† नृ चान्यतरस्याम् ६ । १ । १८४ । ‡ ६ । १ । १६८ सूत्रभाष्ये पृ० ५०५ पं० ५ ।
§ सावेकाचस्तृतीयादिर्विभक्तिः ६ । १ । १६८

अस्ति पुनः किंचित् सप्तमीबहुवचनस्य ग्रहणे सतीष्टं सङ्गृहीतं भवत्याहोस्विद्दोषान्तमेव । 'अस्ती'त्याह । इह याभ्यो ब्राह्मणीभ्यः ताभ्यो ब्राह्मणीभ्य इति विधिश्च सिद्धो भवति प्रतिषेधश्च ।

अस्तु तर्हि प्रथमैकवचनस्य ग्रहणम् । यदि प्रथमैकवचनस्य ग्रहणं 'तेने'ति स्वरः पुंसि न सिध्यति । न चावश्यं पुंस्येव, स्त्रियां पुंसि नपुंसके च । तेन ब्राह्मणेन, तया ब्राह्मण्या, तेन कुण्डेनेति । सप्तमीबहुवचनस्यापि ग्रहण एष दोषः । तस्मादुभाभ्यामेवं प्रतिषेधे यत्तदोश्च ग्रहणं कर्तव्यम् । 'न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यो यत्तदोश्चे'ति ॥ १८२ ॥

प्र०—यदेकारान्तं रूपं न तस्मादत्र परा तृतीयादिः । ताभ्य इति । 'तास्वि'ति सप्तमीबहुवचनेऽवर्णान्तत्वात् । तेनेति । 'स' इति प्रथमैकवचने यदवर्णान्तं न तस्मात्परं तृतीयैकवचनं, किं तर्हि ? रूपान्तरयुक्तात् । तयेति । 'से'ति प्रथमैकवचने यदवर्णान्तं, तस्मात्परा तृतीया । नपुंसके च 'त'दिति सावववर्णान्तमेव न भवतीति 'तेन ब्राह्मणकुलेने'ति प्रतिषेधाप्रसङ्गः । सप्तमीबहुवचनस्यापीति । 'तेष्वि'ति पुंनपुंसकयोस्तावदवर्णान्तं न भवति । 'तास्वि'ति स्त्रियां यद्यप्यवर्णान्तं, तथापि 'तये'त्यत्र रूपान्तरयुक्तात्परा तृतीयेति प्रतिषेधो न प्राप्नोति ।

तस्मादिति । प्रथमैकवचनस्य त्विह ग्रहणमिति निर्णयः । तेन वृक्षवानित्यादावपि मतुप उदात्तत्वप्रतिषेधो भवति । सप्तमीबहुवचने त्ववर्णान्ता वृक्षादयो न भवन्तीति मतुप उदात्तत्वनिषेधो न स्यात् ।

तेनेति यदुपन्यस्तं प्राप्तस्तत्र कथं स्वरः ।
एकारान्तं यदेकाच्सौ तस्मादत्र परो न टा ॥
न चादुगुणे कृते प्राप्तिर्निषेधादुभयाश्रये ।
विधावन्तादिवत्त्वस्य चिन्त्यं तस्मादिदं बुधैः ॥ १८२ ॥

उ०—तृतीयादिर्विभक्तिरेकदेशविकृतन्यायेनेति विधेः प्राप्तिर्बोध्या । इति निर्णय इति । 'चा'विति सूत्रस्थभाष्यप्रामाण्यान्मतुप्पदानुवृत्त्या विभक्तिमतुब्विषये प्राप्तस्वरमात्रस्यायं निषेध इत्यपि निर्णयो बोध्यः । यत्तदोरित्येव भाष्योक्तेः 'केभ्य' इत्यादौ निषेधो न भवत्येव । साववर्णान्तं यद्रूपं तस्मात्परत्वं विभक्त्याद्युत्पत्तिकालावच्छिन्नं ग्राह्यं, तेन 'न चा'विति सूत्रस्थभाष्यविरोधः । तत्र हि 'वेतस्वा'नित्यत्रास्य प्राप्तिः शङ्किता । नापि 'कुमारी'त्यादावुदात्तनिवृत्तिस्वरनिषेधशङ्कापरभाष्यविरोधः । 'यत्तदोश्चे'त्यस्य च सार्थक्यमिति बोध्यम् । चिन्त्यमिति[1] । एवञ्च 'सावेकाच' इत्यस्य प्राप्त्यभावादेवेष्टस्वरसिद्धिरिति भावः । वस्तुतो भाष्यमते 'टाङसी'ति सूत्रे नादेशस्यैव सत्त्वेनैकदेशविकृतन्यायेनान्तवत्त्वानुपयोगाच्च चिन्त्यमेव चिन्त्यम् ॥ १८२ ॥

१–'मपि' पा० ।

## तित्स्वरितम् ॥ ६ । १ । १८५ ॥

### तिति प्रत्ययग्रहणम् ॥ १ ॥

तिति प्रत्ययग्रहणं कर्तव्यम् । इह मा भूत्—'ॠत इद्धातोः' [७ । १ । १००] किरति गिरति ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । नैष तकारः । कस्तर्हि ? दकारः । यदि दकार आन्तर्यतो दीर्घस्य दीर्घः प्राप्नोति । 'भाव्यमानेन सवर्णानां ग्रहणं ने'त्येवं न भविष्यति ।

यदि 'भाव्यमानेन सवर्णानां ग्रहणं ने'त्युच्यतेऽदसोऽसेर्दादुदो मः [ ८ । २ । ८० ] अमूभ्यामित्यत्र न प्राप्नोति । एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति 'भवत्युकारेण भाव्यमानेन सवर्णानां ग्रहण'मिति यदयं दिव उत् [ ६ । १ । १३१ ] इत्युकारं तपरं करोति ।

प्र०—तित्स्वरितम् । किरतीति । तिता प्रत्यायितः संज्ञाधर्मेण संज्ञी कथ्यते इत्यस्ति तिद्व्यपदेश आदेशस्य, यथा 'चो य'दिति प्रत्ययस्य । इत्संज्ञा हि प्रत्यायक एव व्यवस्थितस्य प्रवर्तते । लोपविधानद्वारेण च तस्यासत्त्वं प्रत्याय्ये प्रतिपाद्यते । तथा चायमर्थोऽजन्ताद्धातोर्यः प्रत्ययो भवति, स च तित्कार्यं लभत इति । अनेकप्रयोजनदर्शनाच्चानुबन्धानां तकारस्तत्कालग्रहणार्थश्च स्यात्, स्वरितार्थश्च । 'प्रत्ययाप्रत्यययोः प्रत्यये संप्रत्यय' इति परिभाषा तु भाष्यवार्तिककाराभ्यां न क्वचिदाश्रिता ।

उ०—तित्स्वरितम् । ननु 'ॠत इ'दित्यादौ प्रत्यायकस्य तित्त्वेऽपि तपरसूत्रबलात्प्रत्याय्यस्य विधेयस्येकारस्य तित्त्वाभावात्कथमत्र प्राप्तिरत आह—तितेति । 'ॠत इद्धातो'रिति सूत्रस्थेन इच्छब्देनेत्यर्थः । 'तेन प्रत्यायितः संज्ञी, 'द्विरेफो भ्रमर' इतिवच्छब्दार्थयोरभेदोपचारात्संज्ञाधर्मेण कथ्यते' इत्यन्वयः । 'इता प्रत्यायित' इति पाठान्तरम् । ननु यदादिप्रत्ययस्य मुख्यमेव तित्त्वं, नेत्याह—इत्संज्ञा हीति । प्रत्यायक एव—सूत्रोपात्त एव । उपदेशोत्तरकाले तद्विधानादिति भावः । तस्यासत्त्वं प्रत्याय्ये इति । पदार्थोपस्थितेरनुबन्धविनिर्मुक्ताया एव जायमानत्वादिति भावः । ननु तस्य तपरसूत्रप्रवृत्त्या चरितार्थस्य कथं संज्ञ्युपकारकत्वं स्यादत आह—अनेकेति । अनुबन्धानामिति । पूर्वान्वयि । वस्तुतो विधीयमानत्वेन तपरसूत्रप्रवृत्तौ फलाभाव इति चिन्त्यम् । न क्वचिदाश्रितेति । 'अङ्गस्ये'ति सूत्रे आश्रितत्वाच्चिन्त्यमिदम् । यद्वा न क्वापि लक्ष्यसिद्ध्यर्थमाश्रितेत्यर्थः । अङ्गस्येति सूत्रे तु तत्प्रत्याख्यानायैकदेशिनोपन्यस्ता न तु सिद्धान्तिनेत्याशयः । अग्नावित्यादौ स्थानिवद्भावेन प्रत्ययत्वेऽपि नेदं, विधानकालिकप्रत्ययत्ववत एव ग्रहणादित्याहुः । भाष्ये—यदयं दिव उदिति । एतद्भाष्यविरोधात्, 'एतत्तपरकरणसामर्थ्यादेव द्युभ्यामित्यादौ भाविदीर्घव्यावृत्ति'रिति संप्रसारणसंज्ञासूत्रस्थकैयटादयश्चिन्त्या एव । ज्ञापिते चारितार्थ्यं तु द्युभ्यामित्यादावूठो ह्रस्वप्रवृत्त्या बोध्यम् ।

एवमर्थमेव तर्हि प्रत्ययग्रहणं कर्तव्यमत्र मा भूदिति । नैष तकारः । कस्तर्हि ? दकारः । यदि दकारो न ज्ञापकं भवति । एवं तर्हि तपरस्तत्कालस्य [ १ । १ । ७० ] इति दकारोऽपि चर्त्वभूतो‡ निर्दिश्यते । यद्येवं चर्त्वस्यासिद्धत्वाद्धशि च [ ६ । १ । ११४ ] इत्युत्वं प्राप्नोति । सौत्रो निर्देशः । अथवासंहितया निर्देशः करिष्यते । 'अणुदित्सवर्णस्य चाप्रत्ययः' 'तपरस्तत्कालस्ये'ति ॥ १८५ ॥

## तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः ॥ ६ । १ । १८६ ॥

अदुपदेशादिति कथमिदं विज्ञायते—अकारो य उपदेश इति, आहोस्विदकारान्तं यदुपदेश इति । किं चातः ? यदि विज्ञायतेऽकारो य उपदेश इति हतः हथ इत्य-

प्र०—एवमर्थमेवेति । उकारार्थमित्यर्थः । कस्तर्हि दकार इति । इत्संज्ञायां च कर्तव्यायां 'वावसान' इति चर्त्वस्य 'पूर्वत्रासिद्ध'मित्यसिद्धत्वात्तित्त्वाभावात्स्वरितत्वाभावः । दकारोऽपीति । नन्वेवं सति 'तपरस्तत्कालस्ये'त्यत्र पञ्चमीसमासस्याश्रयणाद्ध 'ऋदोर'बित्यत्रोकारस्य दपरत्वाद्भिन्नकालग्रहणाप्रसङ्गः । एवं तर्हि थकारस्य स्थाने जश्त्वं कृत्वा निर्देशः 'ऋदोर'बिति करिष्यते । जश्त्वस्य 'पूर्वत्रासिद्ध'मित्यसिद्धत्वाद्दपरत्वाभावः । अन्यत्रापि भाष्ये यदुक्तं 'नैष तकारः, कस्तर्हि ? दकार' इति तस्यापि थस्य जश्त्वेन यो दकारः स विज्ञेयः ॥ १८५ ॥

तास्यनुदात्ते । कथमिति । यदोपदेशोकारेण विशेष्यते तदा तदन्तविधिसद्भावादकारान्त उपदेश इत्यर्थः संपद्यते । यदा तूपदेशेनाकारो विशेष्यते, निपातनाच्च विशेषणस्य परनिपातस्तदाकार उपदेश इत्यर्थ इति पक्षद्वयसंभवात्प्रश्नः । हत इति । हन्तेरकार उपदेशो भवति, ततः

उ०—यदि तु'च्छ्वो'रिति सूत्रे 'क्ङिती'त्यनुवृत्तिपक्षे तत्रोठेव दुर्लभस्तदा 'ऋत उ'दिति तपरत्वं ज्ञापकं बोध्यम् । तच्च ऋकाराकारयोः स्थाने आन्तरतम्यात्प्राप्तदीर्घव्यावृत्त्यर्थम् । क्वचिद्भाष्येऽपि तथैव पाठः । 'अदसोऽसे'रित्यत्र समाहारद्वन्द्वनिर्देश इति तु 'दिव उ'दिति सूत्रे दूषितमस्माभिः । एवं तर्हि थकारस्येति । वस्तुतोऽनित्यत्वात्पञ्चमीसमासस्य न दोषः ॥ १८५ ॥

तास्यनुदात्ते । यदोपदेश इति । कर्मघञन्त उपदेशशब्द इति भावः । भाष्यं तु फलितार्थपरं बोध्यम् । हन्तेरिति । अकारस्य विशेष्यत्वे यः केवलोऽकार उपदिश्यते यश्च धात्वादिस्थस्तस्य सर्वस्य

‡ खरि च ८ । ४ । ५५ ।

त्रापि प्राप्नोति । अथ विज्ञायतेऽकारान्तं यदुपदेश इति न दोषो भवति । ननु चाका-रान्तं यदुपदेश इत्यपि विज्ञायमानेऽत्रापि प्राप्नोति । एतदपि हि व्यपदेशिवद्भावेना-कारान्तं भवत्युपदेशे । अर्थवता व्यपदेशिवद्भावः ।

यदि तर्ह्यकारान्तं यदुपदेश इति विज्ञायते मा हि धुक्षाताम् मा हि धुक्षाथाम् अत्रापि प्राप्नोति । अस्तु । अनुदात्तत्वे कृते लोप उदात्तनिवृत्तिस्वरेण सिद्धम्* । न सिध्यति । इदमिह संप्रधार्यम्—अनुदात्तत्वं क्रियतां लोप इति किमत्र कर्तव्यम् ? परत्वाल्लोपः । एवं तर्हीदमद्य लसार्वधातुकानुदात्तत्वं प्रत्ययस्वरस्यापवादः । न चापवादविषय उत्सर्गोऽभिनिविशते । 'पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः' । 'प्रकल्प्य वापवादविषयं तत उत्सर्गोऽभिनिविशते' । तन्न तावदत्र कदाचित्प्रत्यय-

---

प्र०—परं 'लसार्वधातुक'मिति स्वरप्रसङ्गः । हन्तिस्त्वकारान्त उपदेशे न भवतीत्यकारान्त उपदेश इति विज्ञायमाने न दोषः । एतदपीति । अथ हकार एवादन्ततया कस्मान्नाश्रीयते । नैतदस्ति । समुदायपरत्वादुपदेशस्य नास्ति हकारस्याकारोपदेशत्वम् । तथा हि हन्तिर्नकारान्तो व्यवसित उपदेशे, हकारस्तु कल्पितोऽकारान्तत्वेनेति नासाविह गृह्यते । अर्थवतेति । यः शब्दोऽर्थवान् सोऽर्थस्य त्यागोपादानाभ्यां भेदं प्रतिपद्यते । यथेयायेत्यत्रेण्धातुः, ततश्चैकाजिति व्यपदिश्यते । अनर्थकस्य तु भेदनिबन्धनाभावाद्व्यपदेशिवद्भावाभावः ।

मा हि धुक्षातामिति । लोपे कृतेऽकारादुपदेशात्परं लसार्वधातुकं न भवतीति नास्त्यनु-दात्तत्वप्रसङ्गः । 'उपदेशे यदकारान्त'मित्यत्र तु पक्षे क्सस्योपदेशेऽकारान्तत्वात् कृतेऽपि लोप एकदेशविकृतस्यानन्यत्वात्तत उत्तरं लसार्वधातुकमिति स्वरप्रसङ्गः । तन्न तावदत्रेति । लसार्व-

---

उ०—ग्रहणं स्यादिति भावः । समुदायपरत्वादिति । तस्य कार्यार्थत्वात्तदुपदेश एव तात्पर्यम् । तन्निष्पादकतया त्ववयवानामपि प्रत्येकमुपदिश्यमानत्वं, न तु 'ह' इति समुदायस्य तत्त्वमिति भावः । व्यवसितः—पृथक्कृतः । अर्थवतेति—भाष्ये । यो वर्णोऽर्थत्रोधनेऽसहायः स्वत एवार्थवान् तत्र व्यपदेशिवद्भावः, नात्र तथेत्यर्थः । एवञ्चार्थवत्त्वेनासहायत्वमुपलक्ष्यते । अर्थवता शब्देन व्यपदेशिसदृशो भावः—कार्य लभ्यत इत्यक्षरार्थ इति परे । भेदनिबन्धनाभावादिति । भेदनिमित्ताभावादित्यर्थः ।

लोपे कृते इति । 'क्सस्याची'त्यनेन । ननु लोपे कृते योऽकारान्तः स नायं, तद्बुद्धेरभावादित्यत आह—एकदेशविकृतस्यानन्यत्वादिति । संप्रत्यकारान्तत्वाभावेऽपि औपदेशिकं तदादाय कार्यसंभवादेक-देशविकृतन्यायस्य स्थानिवत्त्वस्य वा क उपयोगः, अल्विधित्वादिना तयोरप्राप्तिश्चेति चिन्त्यम् । लसार्व-धातुकस्य प्रत्ययाद्युदात्तत्वमिति । क्सस्य तु प्रवर्तत एवेति भावः । तत्प्रयुक्तशेषनिघातस्तु न लसार्वधातुकस्य विकरणस्वरस्यात्रत्यतासिग्रहणेन लसार्वधातुकनिघाताप्रयोजकत्वज्ञापनात् । ननु परत्वाल्लोपेऽपि

---

* क्सस्याचि ७ । ३ । ७२; अनुदात्तस्य च यत्रोदात्तलोपः ६ । १ । १६१ ।

स्वरो भवत्यपवादविषयं लसार्वधातुकानुदात्तत्वं प्रतीक्षते । तत्रानुदात्तत्वं क्रियतां लोप इति किमत्र कर्तव्यम् ? परत्वाल्लोपः । यद्यपि परत्वाल्लोपः सोऽसावविद्यमानोदात्तेऽनुदात्त उदात्तो लुप्यते ।

**तास्यादिभ्योऽनुदात्तत्वे सप्तमीनिर्देशोऽभ्यस्तसिजर्थः ॥ १ ॥**

तास्यादिभ्योऽनुदात्तत्वे सप्तमीनिर्देशः कर्तव्यः । लसार्वधातुक इति वक्तव्यम् । किं प्रयोजनम् ? अभ्यस्तसिजर्थः । अभ्यस्तानामादिरुदात्तो भवति† लसार्वधातुके । सिजन्तस्यादिरुदात्तो भवति‡ लसार्वधातुके । लसार्वधातुकमित्युच्यमाने तस्यैवाद्युदात्तत्वं स्यात् ।

यदि सप्तमीनिर्देशः क्रियते तास्यादीनामेवानुदात्तत्वं प्राप्नोति । नैष दोषः । तास्यादिभ्य इत्येषा पञ्चमी लसार्वधातुक इति सप्तम्याः षष्ठीं प्रकल्पयिष्यति 'तस्मादित्युत्तरस्य' [ १ । १ । ६७ ] इति ।

प्र०—धातुकस्य प्रत्ययाद्युदात्तत्वं न प्रवर्तत इत्यर्थः । सोऽसाविति । परत्वाल्लोपे कृते उदात्तनिवृत्तिस्वरः क्रियतां लसार्वधातुकानुदात्तत्वं वेति विचारे यद्यपि परत्वाल्लसार्वधातुकानुदात्तत्वं भवति तथापि पुनःप्रसङ्गविज्ञानादुदात्तनिवृत्तिस्वरो भवत्येव ।

तस्यैवाद्युदात्तत्वं स्यादिति । असति सप्तमीनिर्देशे 'अभ्यस्तानामादिरुदात्तो लसार्वधातुकं चोदात्त'मिति सूत्रार्थः स्यात् । वचनसामर्थ्याच्च यौगपद्यं स्यात्, यथान्तश्च तवै युगपदित्यत्र । पर्यायो वा प्रसज्येत । न चैतच्छक्यते वक्तुं लसार्वधातुकमित्यप्युच्यमानेऽर्थाद्विभक्तिविपरिणामो भविष्यतीति, यथाश्रुतसंबन्धसंभवे विभक्तिविपरिणामस्यायोगात् । तास्यादिभ्य इत्येषेति । अकृतार्था हि पञ्चमी, सप्तमीनिर्देशस्तूत्तरत्र कृतार्थः ।

उ०—उदात्तनिवृत्तिस्वरात्परत्वादिदमनुदात्तत्वमेव स्यादत आह—यद्यपीति । नन्वभ्यस्तानामिति निर्देशात्तेषामेवादिरुदात्तः स्यादिति कथं लसार्वधातुकस्य स्यादत आह—असतीति । भाष्ये एवकारोऽप्यर्थ इति भावः । ननु तत्र युगपद्ग्रहणात्समावेशेऽपि प्रकृते कथं समावेशः, 'अनुदात्तं पद'मिति परिभाषणादत आह—पर्यायो वेति । अर्थाद्विभक्तीति । उत्तरत्रेत्यर्थः । चकाराभावादन्यस्य कार्यित्वेन निर्देशाच्चेति भावः । यथाश्रुतेति । उक्तरीत्येत्यर्थः । परे तु अभ्यस्तानां सम्बन्धि लसार्वधातुकमाद्युदात्तमित्यर्थः स्यात् । आदिरिति । नामैकदेशग्रहणम् । अत एव भाष्ये तस्यैवेत्युक्तम् । सप्तम्या'मादिः सिच' इति सूत्रे फलाभावादसंबन्धो सिचो लसार्वधातुकपरस्यैव सत्त्वात्, प्रथमायां तु तस्याद्युदात्तत्वाय संबन्धः स्यादिति दोष इति मत्वा 'सिजर्थ'मिति, न तु तत्र सप्तम्यन्तसंबन्धावश्यकत्वाभिप्रायमित्याहुः । ननु विपरीतं किं न स्यादत आह—अकृतार्था हीति ।

† अभ्यस्तानामादिः ६ । १ । १८९ । ‡ आदिः सिचोऽन्यतरस्याम् ६ । १ । १८७ ।

चित्स्वरात्तास्यादिभ्योऽनुदात्तत्वं विप्रतिषेधेन ॥ २ ॥

चित्स्वरात्तास्यादिभ्योऽनुदात्तत्वं भवति विप्रतिषेधेन । चित्स्वरस्यावकाशः—चलनः चोपनः* । तास्यादिभ्योऽनुदात्तत्वस्यावकाशः—आस्ते शेते । इहोभयं प्राप्नोति—आसीनः शयानः† । तास्यादिभ्योऽनुदात्तत्वं भवति विप्रतिषेधेन ।

नैष युक्तो विप्रतिषेधः । किं कारणम् ? द्विकार्ययोगो हि विप्रतिषेधो न चात्रैको द्विकार्ययुक्तः । आदेरनुदात्तत्वमन्तस्योदात्तत्वम्‡ । नावश्यं द्विकार्ययोग एव विप्रतिषेधः । किं तर्हि ? असंभवोऽपि । ननु चात्राप्यस्ति संभवः [ यदुभयं स्यात् ]। आदेरनुदात्तत्वमन्तस्य चोदात्तत्वमिति । अस्ति च संभवो यदुभयं स्यात् । नैषोऽस्ति संभवः [ आदेरनुदात्तत्वमन्तस्य चोदात्तत्वमिति ] । कथम् ? वक्ष्यत्येतत् 'स्वरविधौ सङ्घातः कार्यी भवती'ति§ ।

मुकश्चोपसङ्ख्यानम् ॥ ३ ॥

मुकश्चोपसङ्ख्यानं कर्तव्यम् । पचमानः यजमानः । मुका¶ व्यवहितत्वाददुपदेशाल्लसार्वधातुकमनुदात्तं भवतीत्यनुदात्तत्वं न प्राप्नोति । ननु चायं मुगदुपदेशभक्तोऽदुपदेशग्रहणेन ग्राहिष्यते । न सिध्यति । अङ्गस्य मुगुच्यते विकरणान्तं चाङ्गं सोऽसौ सङ्घातभक्तोऽशक्यो मुगदुपदेशग्रहणेन ग्रहीतुम् ।

अथायमङ्गभक्तः स्याद् गृह्येतायमदुपदेशग्रहणेन ? बाढं गृह्येत । अङ्गभक्तस्तर्हि भविष्यति । तत्कथम् ? वक्ष्यत्येतस्य परिहारम्+ ।

प्र०—सङ्घातः कार्यीति । ततश्चानस्य सर्वस्यानुदात्तत्वेन भाव्यं, न त्वा'देः परस्ये'ति वचनाददेः । तत्रोदात्तानुदात्तयोरेकविषयत्वादस्ति विरोध इति परत्वाच्चित्स्वरं बाधित्वानुदात्तत्वं भवतीत्यर्थः । वक्ष्यतीति । सप्तमेऽध्यायेऽङ्गस्य योऽकारस्तस्य मुगिति सूत्रार्थव्यवस्थापनात्तत्र स्वावयवेन व्यवधानाभावादुपदेशग्रहणान्मुकि सत्यध्यर्धमात्रत्वेऽपि प्रवर्तते निघातः । 'आतो

उ०—भाष्ये—आदेरनुदात्तत्वमिति । 'आदेः परस्ये'ति वचनादिति भावः । स्वरविधौ सङ्घातः कार्यीति । 'भीह्री'ति सूत्रे वक्ष्यति ॥ भाष्ये—अदुपदेशेति । अकारोपदेशे एव मुख्यतात्पर्यादुपदिश्यमानमकरान्तं शप्यस्ति । अकारावयवत्वस्य शास्त्रेण बोधनात् । अकारग्रहणेन तद्विशिष्टग्रहणं 'यदागमा' इति न्यायेन बोध्यत इति भावः । यत्तु 'दाधाघ्वि'ति सूत्रेऽर्थवतो ह्यागम इत्युक्तं, तत्प्रकृताभिप्रायम् । 'द्योत्यार्थेन विकरणानामप्यर्थवत्त्वान्न क्षति'रित्यन्ये । ननु तपरत्वादध्यर्द्धमात्रस्य कथं ग्रहणमत आह—उपदेशग्रहणादिति । न चैवं 'पचमान' इत्यत्राकः सवर्णे इति दीर्घापत्तिः, मुग्विधानसामर्थ्येन तस्या अनित्यात्वकल्पनान्न दोषः । तपरकरणादिति । उपदेशग्रहणस्य तत्राभावादिति भावः । व्यवस्थापनादिति । स्वरानुद्देश्यके विधावित्यर्थः ।

* चलनशब्दार्थादकर्मकाद्युच् ३ । २ । १४८; चितः ६ । १ । १६३ ।
† लटः शतृशानचावप्रथमासमानाधिकरणे ३ । २ । १२४ । ‡ आदेः परस्य १ । १ । ५४ ।
१—क्वाचित्कः पाठः । § ६ । १ । १६२ भाष्ये । ¶ आने मुक् ७ । २ । ८२ ।
+ ७ । २ । ८२ भाष्ये पृ० १५६

इतश्चोपसङ्ख्यानम् ॥ ४ ॥

इतश्चोपसङ्ख्यानं कर्तव्यम् । इद्भिश्च व्यवहितत्वादनुदात्तत्वं न प्राप्नोति । पचतः पठतः† ।

इतश्चानेकान्तत्वात् ॥ ५ ॥

अनेकान्ता अनुबन्धाः ॥ यद्यनेकान्ता अनुबन्धा अदिप्रभृतिजुहोत्यादिभ्यः प्रतिषेधो वक्तव्यः । अत्तः जुहुत इति‡ । अदुपदेशादित्यनुदात्तत्वं प्राप्नोति ।

तत्रादिप्रभृति जुहोत्यादिभ्योऽप्रतिषेधः स्थान्यादेशाभावात् ॥ ६ ॥

तत्रादिप्रभृतिभ्यो जुहोत्यादिभ्योऽप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः । अनुदात्तत्वं कस्मान्न भवति ? स्थान्यादेशाभावात् । नैवात्र स्थानिनं नैवादेशं पश्यामः ।

प्र०—ङित' इतीयादेशस्त्वाकारस्यात इति तपरकरणान्न भवति । 'स्वरविधौ व्यञ्जनमविद्यमानव'दिति परिहारो नोक्तः, 'हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानव'दित्येवं व्यवस्थापनात् ।

इतश्चेति । 'तुदत' इत्यादौ सावकाशं वचनं 'पचत' इत्यादौ न प्रवर्तेत, शप उपदेशे हलन्तत्वादकारान्तत्वाभावादिति वचनमित्संज्ञकादनुदात्तार्थम् ॥ अनेकान्ता इति । यद्यपि 'तस्य लोप' इत्यत्रैकान्तपक्षः स्थापितस्तथापि पक्षान्तराश्रयेणात्र परिहार उक्तः । एकान्तपक्षेऽप्युदीचां माङ इति कृतात्वस्य निर्देशाज्ज्ञापकात्कार्येष्वनुबन्धानामप्रतिबन्धकत्वमनुमीयते । अत्त इति । यथा पचाव' इति कृतेऽपि दीर्घत्व उपदेशग्रहणान्निघातो भवत्येवं शब्लोपेऽपि प्राप्नोतीति भावः।

नैवात्रेति । आदेशस्यात्राभावरूपत्वाददुपदेशात्परं लसार्वधातुकं न भवति । न च स्थानिवद्भावोऽस्ति, अल्विधित्वात् । नापि प्रत्ययलक्षणम्, वर्णाश्रयत्वात् । 'पचाव' इत्यत्र तु

उ०—'इत' इति व्याचष्टे इत्संज्ञकादिति । तद्वत इत्यर्थः । नचाकारान्तादुपदिश्यमानादित्यर्थे न दोषः । 'अनेकान्तत्वा'दित्यनेन तस्यैवार्थस्योक्तत्वात् । तावत उपदिश्यमानत्वेन तस्य तेऽनवयवा इति तदर्थः ॥ एकान्तपक्षेऽपीति । माङो व्यतीहारे वृत्त्यभावात्, कृतात्वस्य मेङ एव ग्रहणमिति वाच्यम् । आत्वं च ङकारे सत्यनेजन्तत्वान्न प्राप्नोतीति ज्ञापकमित्यर्थः । ननु 'अत्तः' इत्यादावदुपदेशाभावात्कथं स्वरप्राप्तिरत आह—यथेति ।

नन्वादेशस्य लुगादेः सत्त्वान्नैव वादेशमित्ययुक्तमत आह—आदेस्यात्रेति । अभावस्यापि बुद्धिकृतपरत्वसंभवाच्चिन्त्यमिदम् । वर्णाश्रयत्वादिति । प्रत्ययासाधारणरूपेणानाश्रयणादस्य प्रत्ययलक्षणत्वाभाव इति तत्त्वम् । एतेन वर्णप्राधान्ये एव तत्प्रवृत्तिरकारान्तादुपदेशादित्यर्थे च न तत्प्राधान्यमिति परास्तम् ।

† कर्तरि शप् ३ । १ । ६८

‡ अदिप्रभृतिभ्यः शपः; जुहोत्यादिभ्यः श्लुः २ । ४ । ७२; ७५

## अनुदात्तङिद्ग्रहणाद्वा ॥ ७ ॥

अथवा यदयमनुदात्तङिद्ग्रहणं करोति तज्ज्ञापयत्याचार्यो 'न लुग्विकरणेभ्योऽनुदात्तत्वं भवती'ति ॥ नैतदस्ति ज्ञापकम् । श्नमर्थमेतत्स्यात्—विन्दाते खिन्दाते । यत्तर्हि ङिद्ग्रहणं करोति, न हि श्नम्विकरणो ङिदस्ति ।

ङितोऽनुदात्तत्वे विकरणेभ्यः प्रतिषेधो वक्तव्यः । चिनुतः सुनुतः । लुनीतः पुनीतः । 'ङित' इत्यनुदात्तत्वं प्राप्नोति* ।

## ङितोऽनुदात्तत्वे विकरणेभ्योऽप्रतिषेधः सर्वस्योपदेशविशेषणत्वात् ॥ ८ ॥

ङितोऽनुदात्तत्वे विकरणेभ्योऽप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः । अनुदात्तत्वं कस्मान्न भवति ? सर्वस्योपदेशविशेषणत्वात् । सर्वमुपदेशग्रहणेन विशेषयिष्यामः । उपदेशेऽनुदात्तेतः । उपदेशे ङितः । उपदेशेऽकारान्तादिति ॥ १८६ ॥

## आदिः सिचोऽन्यतरस्याम् ॥ ६ । १ । १८७ ॥

## सिच आद्युदात्तत्वेऽनिटः पित उपसङ्ख्यानम् ॥ १ ॥

सिच आद्युदात्तत्वेऽनिटः पित उपसङ्ख्यानं कर्तव्यम् । मा हि कार्षम् । मा हि

प्र०—दीर्घीभूतोऽकारो विद्यत एवेति प्रवर्तत एव निघातः ॥ अनुदात्तङिद्ग्रहणाद्वेति । आस्ते शेत इत्येवमाद्यर्थात् । विन्दात इति । विदीन्धिखिदिभ्यः प्रतिषेधमनाश्रित्येदमुक्तम् । विकरणेभ्य इति । 'सिद्धं तु पूर्वस्य कार्यातिदेशा'दित्यनपेक्ष्य चोद्यप्रतिसमाधाने उक्ते ॥ १८६ ॥

आदिः । अनिटः पित इति । अनिटः सिचः परः पित्पक्ष उदात्तो भवति, पक्षे त्वनुदात्तः । तेन 'मा हि कार्ष'मिति तिङन्तं पक्षे आद्युदात्तं, पक्षे त्वन्तोदात्तं भवति । अन्यथा

उ०—पचाव इत्यत्रेति । दीर्घस्यापि स्थानिवत्त्वासंभवाच्चिन्त्यमिदम् ॥ इत एवास्वरसाद्भाष्ये पक्षान्तरमाह—अनुदात्तेति । अनाश्रित्येति । एवञ्चेदं भाष्यमेकदेश्युक्तिः । एवञ्च तदपि ज्ञापकमेव, एतत्त्रितयातिरिक्तस्यानुदात्तेतस्तद्'गणेऽभावादिति भावः । सिद्धं त्विति । गाङ्कुटादिसूत्रे इदमुक्तम् । 'आतो ङित' इत्यादौ स्वकार्यस्याप्यतिदेशात्तदनपेक्षेति भावः ॥ १८६ ॥

आदिः सिचो । 'अनिटः' 'पित' इत्यनयोः सामानाधिकरण्यभ्रमं निराकुर्वन् व्याचष्टे—अनिटः सिच इति । उदाहरणे माङ्प्रयोगोऽट्स्वरनिवृत्त्यर्थः । हिप्रयोगो 'हि चे'ति निघातप्रतिषेधार्थः । पक्षे

१–लुक्श्लुविकरणेभ्यो' पा० ।
२–रुधादिगण इत्यर्थः ।

* सार्वधातुकमपित् १ । २ । ४

कार्षम् । अनिट इति किमर्थम् ? मा हि लाविषम् ॥ १८७ ॥

## स्वपादिर्हिंसामच्यनिटि ॥ ६ । १ । १८८ ॥

### स्वपादीनां वावचनादभ्यस्तस्वरो विप्रतिषेधेन ॥ १ ॥

स्वपादीनां वावचनादभ्यस्तस्वरो† भवति विप्रतिषेधेन । स्वपादीनां वावचनस्यावकाशः—स्वपन्ति श्वसन्ति । अभ्यस्तस्वरस्यावकाशः—ददति दधति । इहोभयं प्राप्नोति—जाग्रति‡ । अभ्यस्तस्वरो भवति विप्रतिषेधेन ॥ १८८ ॥

## अनुदात्ते च ॥ ६ । १ । १९० ॥

### अनुदात्ते चेति बहुव्रीहिनिर्देशो लोपयणादेशार्थः ॥ १ ॥

अनुदात्ते चेति बहुव्रीहिनिर्देशः कर्तव्यः । अविद्यमानोदात्तेऽनुदात्त इति वक्तव्यम् । किं प्रयोजनम् ? लोपयणादेशार्थम् । लोपयणादेशयोः कृतयोराद्युदात्तत्वं यथा स्यात् । मा हि दधात् । दध्यात्यत्र ॥ १९० ॥

प्र०—धातुस्वरेण नित्यमाद्युदात्तं स्यात् । मा हि लाविषमिति । पक्ष आद्युदात्तं तिङन्तं, पक्षे मध्योदात्तं सिचः स्वरेण, न त्वन्तोदात्तम् ॥ १८७ ॥

स्वपादि । आगणान्ताः स्वपादयः । स्वपन्तीति । पक्षे आद्युदात्तं पदं पक्षे प्रत्ययस्वरेण मध्योदात्तम् ॥ १८८ ॥

अनुदात्ते । मा हि स्म दधादिति । शास्त्रीयेऽनुदात्ते गृह्यमाणे नित्यत्वादन्तरङ्गत्वाद्वेकारलोपे कृतेऽचोऽनुदात्तस्य परस्याभावादाद्युदात्तं न स्यात् । बहुव्रीहिविज्ञाने तु भवति । दधात्यत्रेति । अत्र यणादेशस्य बहिरङ्गत्वादसिद्धत्वादपि स्वरः सिध्यति ॥ १९० ॥

उ०—आद्युदात्तमिति । धातुस्वरेणेत्यर्थः । पक्षे त्विति । प्रकृतवार्तिकेनेति भावः । सिचः स्वरेणेति । चित्त्वसामर्थ्यादिट आगमानुदात्तत्वं बाधित्वोदात्तत्वादित्यर्थः । न त्वन्तोदात्तमिति । प्रकृतवार्तिकाप्रवृत्तेरिति भावः ॥ १८७ ॥

स्वपादिर्हिं । इदं विकल्पेन धातोराद्युदात्तविधायकम् । 'अभ्यस्तानामादि'रिति तु पुनरादिग्रहणान्नित्यमाद्युदात्तविधायकमजादावनिटि लसार्वधातुके परे ॥ १८८ ॥

अनुदात्ते च । ननु 'इतश्चे'ति लोपात्परत्वात्स्वरे बहुव्रीह्यङ्गीकारो निष्फलोऽत आह—शास्त्रीय इत्यादि । बहिरङ्गत्वादिति । द्विपदाश्रयत्वादिति भावः । स्थानिवद्भावोऽप्यत्र प्राप्नोति, स्वरे निषेधस्तु लोपरूपाजादेशविषय एवेत्यपि बोध्यम् । तस्मात्तदुभ[1]यमनाश्रित्येदं वार्तिकमिति बोध्यम् ॥ १९० ॥

† अभ्यस्तानामादिः ६ । १ । १८९ । ‡ जक्षित्यादयः षट् ६ । १ । ६

* अव्ययसर्वनाम्नामकच् प्राक् टेः ५ । ३ । ७१; चितः ६ । १ । १६३

१–बहिरङ्गत्वं स्थानिवद्भावं चेत्यर्थः ।

## सर्वस्य सुपि ॥ ६ । १ । १९१ ॥

### सर्वस्वरोऽनकच्कस्य ॥ १ ॥

सर्वस्वरोऽनकच्कस्येति वक्तव्यम् । इह मा भूत्– सर्वके ॥ १९१ ॥

## भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति ॥६।१।१९२॥

भ्यादिग्रहणं किमर्थम् ? इह मा भूत्–ददाति दधाति ॥ नैतदस्ति प्रयोजनम् । अभ्यस्तस्वरोऽत्र† बाधको भविष्यति ॥ अन्तत उभयं स्यात् । अनवकाशाः खल्वपि विधयो बाधका भवन्ति सावकाशश्चाभ्यस्तस्वरः । कोऽवकाशः ? मिमीते‡ ।

प्र०—सर्वस्य । सर्वशब्द उणादिष्वन्तोदात्तो निपातितः, सर्वस्य विकारः सार्व इत्यत्रानुदात्तादिलक्षणोऽञ् यथा स्यादिति । तस्य सुप्याद्युदात्तत्वं विधीयते ॥ सर्वस्वरोऽनकच्कस्येति । तन्मध्यपतितस्तद्ग्रहणेन गृह्यत इति साकच्कस्याप्युदात्तत्वे प्राप्ते वचनम् ॥ १९१ ॥

भीह्रीभृहु । 'अनुदात्ते चे'त्याद्युदात्तत्वे प्राप्ते वचनम् । भ्यादिग्रहणमिति । 'अनुदात्ते चे'त्यनेनाद्युदात्तत्वं विधीयते, अनेन च प्रत्ययात् पूर्वस्योदात्तत्वमिति विरोधाल्लक्ष्यदर्शनवशाद्भ्यादीनामेव प्रत्ययात्पूर्वस्योदात्तत्वं भविष्यतीति प्रश्नः । ददातीति । वचनमन्तरेण विषयविभागो न लभ्यत इति भावः । पूर्वोक्तेनाभिप्रायेण चोदक आह—अभ्यस्तस्वर इति । सिद्धान्तवाद्याह । अन्तत इति । विरोधात्समावेशाभावे पर्यायेणोभयं स्यादित्यर्थः । अथवा सर्वेषामभ्यस्तानां पितो लसार्वधातुकात् पूर्वस्योदात्तत्वं स्यादिति प्रतिपादयितुमाह—अनवकाशा इति । मिमीत इति । ङित्त्वाल्लसार्वधातुकानुदात्तत्वे कृते 'अनुदात्ते चे'त्याद्युदात्तत्वम् ।

उ०—सर्वस्य सुपि । 'स्वाङ्गशिटामुदात्ताना'मित्याद्युदात्तत्वस्य सिद्धत्वादाह–सर्वशब्द इति । 'सर्वनिघृष्वरिष्वे'त्यनेन तत्फलं दर्शयति-सर्वस्येति । अनुदात्तादिप्रकृतिकतुबन्तादञिति तदर्थः । सुपीति तु अत्यन्तस्वार्थिकतरबाद्यन्तसर्वतर इत्यादिव्यावृत्त्यर्थम्, तेषां सुबुत्पत्तेः प्रागेव विधानादिति वृत्तौ पुंयोगादिति सूत्रे भाष्ये च स्पष्टम् ॥ १९१ ॥

भीह्रीभृहु । सूत्रे 'जागरा'मिति सौत्रो निर्देशः । जागर्तीत्यादिप्रयोगस्थस्य कृतगुणस्यानुकरणं वा । अनुदात्ते चेतीति । अत्राप्यभ्यस्तग्रहणमनुवर्तत इति भावः । विरोधादिति । विरोधाद्युगपत्प्राप्त्यभावेनावश्याश्रयणीये विषयविभागे लक्ष्यानुसारेण व्यवस्थेति भावः । वचनमन्तरेणेति । 'मन्दमतिभि'रिति शेषः । पर्यायेणेति । एकविषये द्वयोः प्रवृत्त्युपपत्तौ विषयभेदाश्रयणायोगादित्यर्थः । अथवा सर्वेषामिति । पितोऽभावादस्याप्राप्तेर्मिमीते इत्यादावनुदात्ते चेति विधिः सावकाश इति तं परत्वाद्बाधित्वा इदमेव स्यादिति दोष इति भावः । पूर्वस्योदात्तत्वं स्या'दित्यस्य पूर्वस्यैवोदात्तत्वं स्यादित्यर्थः ।

१–इदं क्वचिन्न । † अनुदात्ते च ६ । १ । १९०

‡ तास्यनुदात्ते·········महन्विङोः; अनुदात्ते च ६ । १ । १८६; १९०

अथ प्रत्ययग्रहणं किमर्थम् ? प्रत्ययात्पूर्वस्योदात्तत्वं यथा स्यादाटः §० पूर्वस्य मा भूदिति । बिभयानि ।। न चैवास्ति विशेषः प्रत्ययाद्वा पूर्वस्योदात्तत्वे सत्याटो वा । अपि च पिद्भक्तः पिद्ग्रहणेन ग्राहिष्यते ।। इदं तर्हि प्रयोजनं प्रत्ययात्पूर्वस्योदात्तत्वं यथा स्यादाट एव मा भूदिति ।। एतदपि नास्ति प्रयोजनम् । पिद्भक्तः पिद्ग्रहणेन ग्राहिष्यते ।। एवं तर्हि सिद्धे सति यत्प्रत्ययग्रहणं करोति तज्ज्ञापयत्याचार्यः 'स्वरविधौ सङ्घातः कार्यी भवती'ति । किमेतस्य ज्ञापने प्रयोजनम् ? 'चित्स्वराच्चास्यादिभ्योऽनुदात्तत्वं विप्रतिषेधेने'त्युक्तं¶ तदुपपन्नं भवति ।

प्र०—अथ प्रत्ययग्रहणमिति । भ्यादिभ्यः परः प्रत्यय एव पित्संभवतीति प्रश्नः । आटः पूर्वस्येति । 'आडुत्तमस्य पिच्चे'ति पित्त्वमाट एव विधीयत इति पक्षाश्रयेणेदमुक्तम् । आट् चागमो न प्रत्ययः । प्रत्ययाद्वेति । अत्र हि यः प्रत्ययात् पूर्वः स एवाट इति विशेषाभावः । अपि चेति । पित्त्वं लोडुत्तमस्यैव विधीयते न त्वाट इत्याट्सहितो लोडुत्तमः पिद्भवति, ततश्च पूर्वस्योदात्तत्वं भवत्येवेत्यर्थः । आट एवेति । लोडादेशात्पितः पूर्व आड्भवति, प्रत्ययात्तु पूर्वो न भवति, आट्सहितस्य प्रत्ययत्वात् । पिद्भक्त इति । ततश्च स्वावयवेन पौर्वापर्याभावः । एवं तर्हीति । प्रत्ययग्रहणमन्तरेण साट्कात्पितः पूर्वस्योदात्तत्वे सिद्धे प्रत्ययग्रहणं प्रत्ययात् पूर्वस्याच उदात्तत्वं यथा स्यात्सङ्घातस्य मा भूदित्येवमर्थम् । सङ्घातस्य च कार्यित्वे पर्यायेणोदात्तत्वप्रसङ्गः । यदि च स्वरविधौ सङ्घातः कार्यी भवति ततस्तन्निवृत्त्यर्थमिह प्रत्ययग्रहणमर्थवद्भवतीत्यर्थः । चित्स्वरादिति । यतो लसार्वधातुकस्य सर्वस्यानुदात्तत्वं न त्वादेस्ततो विप्रतिषेध उपपद्यते । एकस्मिन्विषये प्रसङ्गादुदात्तानुदात्तयोरित्यर्थः ।

उ०—भ्यादिभ्य इति । भ्यादिसंबन्धिपिति परतस्ततः पितः पूर्वमुदात्तमित्यर्थ इति भावः । अ.ड्विशिष्टस्य पित्त्वेऽनुक्तिसंभवग्रस्तोऽयं पक्ष इत्यत आह—पित्त्वमाट एवेति । स एवाट इति । आटः प्रत्ययावयवत्वादिति भावः । ननु 'बिभयाव' इत्यादौ उदात्तत्वाभावाय प्रत्ययग्रहणं स्यादतोभाष्ये—अपि चेति । नन्वाटः स्वत एव पित्त्वात्पिद्भक्तत्वेन पिद्वचनमयुक्तमित्यतस्तद्भावमाह—पित्त्वमिति । एतद्विधेयस्यैवाट एतद्विधेयपित्त्वं प्रति अनुवाद्यत्वायोगादिति भावः । ततश्चेति । एवञ्च पितः पूर्वस्य स्वरविधानेप्याटः पूर्वस्य भविष्यतीत्यर्थः । ज्ञापकमुपपादयति—प्रत्ययग्रहणमन्तरेणेति । नन्वनुदात्तं पदमिति परिभाषणात्कथं सङ्घातस्य कार्यित्वमत आह—सङ्घातस्य चेति । एतज्ज्ञापकोपयोगश्चानुदात्तविधावेव । अन्यत्र सर्वत्र क्वचिदादिग्रहणस्य, क्वचिदन्तग्रहणस्य सत्त्वादनुदात्तं पदमिति परिभाषणाच्च नोपयोग इति बोध्यम् ।

§ आडुत्तमस्य पिच्च ३ । ४ । ९२ ¶ ६ । १ । १८६ वा० २

अथ पूर्वग्रहणं किमर्थं न 'तस्मिन्निति निर्दिष्टे पूर्वस्य' [ १ । १ । ६६ ] इति पूर्वस्यैव भविष्यति । एवं तर्हि सिद्धे सति यत्पूर्वग्रहणं करोति तज्ज्ञापयत्याचार्यः 'स्वरविधौ सप्तम्यस्तदन्तसप्तम्यो भवन्ती'ति । किमेतस्य ज्ञापने प्रयोजनम्? 'उपोत्तमं रिति' [ ६ । १ । २१७ ] रिदन्तस्य । 'चङ्यन्यतरस्याम्' [ २१८ ] चङन्तस्य । यद्येतज्ज्ञाप्यते 'चतुरः शसि' [ १६७ ] इति शसन्तस्यापि प्राप्नोति । शस्ग्रहणसामर्थ्यान्न भविष्यति । इतरथा हि तत्रैवायं ब्रूयादूडिदंपदाद्यप्पुम्रैद्युभ्यश्चतुर्भ्यश्चेति* ।

अथ पिद्ग्रहणं किमर्थम्? इह मा भूत्—जाग्रति ॥ नैतदस्ति प्रयोजनम् । भवत्येवात्र पूर्वेण† ॥ इदं तर्हि प्रयोजनम् । दरिद्रति ॥ आकारेण व्यवहितत्वान्न भविष्यति । लोपे‡ कृते नास्ति व्यवधानम् । स्थानिवद्भावाद्व्यवधानमेव । प्रतिषिध्यतेऽत्र

---

प्र०—पूर्वग्रहणमिति । 'प्रत्यये पिती'ति वक्तव्यमिति प्रश्नः । स्वरविधौ सप्तम्य इति । सङ्घातस्य प्रत्ययान्तस्य कार्यनिवृत्त्यर्थं पूर्वग्रहणं स्वरविधौ तदन्तस्य कार्यित्वं ज्ञापयतीत्यर्थः । तदन्तपक्षे चायमर्थः स्यात् 'भ्यादिविहितपिदन्तस्योदात्तत्वं भवती'ति । उपोत्तमं रितीति । अत्र हि रिति प्रत्यये परत उपोत्तमोदात्तप्रसङ्गो रित्प्रत्ययान्तस्य चोपोत्तमोदात्तत्वमिष्यते । चतुर्भ्यश्चेति । असर्वनामस्थानग्रहणानुवृत्त्या 'षट्त्रिचतुर्भ्यो हलादि'रिति हलादेश्चोदात्तत्वविधानाच्छस एव भविष्यतीति भावः । भवत्येवात्र पूर्वेणेति । 'अभ्यस्तानामादि'रित्यनेन । ननु च स्वरभेदो भवति । अनेन पूर्वस्य ऋकारस्योदात्तत्वं भवति । ततश्चोदात्तस्वरितयोर्यण इति स्वरितप्रसङ्गः । 'अभ्यस्तानामादि'रित्यनेन तूदात्तत्वे पदमाद्युदात्तं भवति । एवं तर्हि नित्यत्वात् पूर्वं यणादेशे कृते नास्ति स्वरभेदः । ननु स्वरभिन्नस्य प्राप्नुवन् यणादेशोऽप्यनित्यः । एवं तर्हि स्पष्टोदाहरणान्तरसद्भावान्न सुष्ठु भाष्यकारेणैतन्निरूपितम् । दरिद्रतीति । अत्रेकारस्योदात्तत्वं मा भूदाद्युदात्तत्वमेव यथा स्यादित्येवमर्थं पिद्ग्रहणमित्यर्थः । लोपे कृत इति । 'श्नाभ्यस्तयोरात'

---

उ०—प्रत्यये इति । 'तस्मि'न्निति परिभाषया पूर्वस्य सिद्धमित्यर्थः । भ्यादिविहितेति । एवञ्च सर्वेषामचां पर्यायेणोदात्तत्वं स्यात्, एकस्य प्रत्ययात्पूर्वस्यैवेष्यत इति, तदर्थं पूर्वग्रहणमुक्तार्थज्ञापकमिति भावः । अत्र हीति । 'ब्राह्मणजातीय' इत्यादावेव स्यादिति भावः । अत्र न्यासे शसन्यविभक्तेरुदात्तत्वाभावं दर्शयति—असर्वनामस्थानेति । चतुःशब्दस्य द्विवचनैकवचनयोरभावादिति भावः । 'षट्त्री'त्यस्य तदन्तेऽप्रवृत्तिरिति वार्तिकमते 'चतुरः शसी'त्यस्यापि विहितविशेषणाश्रयणेन तदन्तेऽप्रवृत्तिः । भाष्यमते तूभयोरपि तदन्ते प्रवृत्तिरिति न दोषः । ननु च स्वरभेद इति । स्वरभिन्नस्य प्राप्तेर्यणोऽप्यनित्यत्वेनोभयोरनित्ययोः परत्वात्स्वर इति भावः । नित्यत्वादिति । स्वरस्तु यणि कृते तस्य न प्राप्नोतीत्यनित्य इति भावः । 'स्वरभिन्नस्ये'ति नाश्रीयत इति तात्पर्यम् । स्पष्टोदाहरणेति 'दरिद्रती'त्येतत् । आद्युदात्तत्वमेवेति । 'अभ्यस्तानामादि'-

---

* ऊडिदंपदाद्यप्पुम्रैद्युभ्यः ६ । १ । १७१ † अभ्यस्तानामादिः ६ । १ । १८९

‡ श्नाभ्यस्तयोरातः ६ । ४ । ११२

स्थानिवद्भावः 'स्वरविधिं प्रति न स्थानिवद्भवती'ति§ ॥ १६२ ॥

## अचः कर्तृयकि ॥ ६ । १ । १६५ ॥

### यकि रपर उपसङ्ख्यानम् ॥ १ ॥

यकि रपर उपसङ्ख्यानं कर्तव्यम् । स्तीर्यते¶ स्वयमेव ।

### उपदेशवचनात्सिद्धम् ॥ २ ॥

उपदेश इति वक्तव्यम् ।

### उपदेशवचने जनादीनाम् ॥ ३ ॥

उपदेशवचने जनादीनां स्वरो न सिध्यति । जायते* स्वयमेव । जायते स्वयमेव ।

### योगविभागात्सिद्धम् ॥ ४ ॥

योगविभागः करिष्यते । अजन्तानां कर्तृयकि वादिरुदात्तो भवति । चीयते स्वयमेव । चीयते स्वयमेव । जायते स्वयमेव । जायते स्वयमेव । तत उपदेशे । उपदेशे चाजन्तानां कर्तृयकि वादिरुदात्तो भवति । स्तीर्यते स्वयमेव । स्तीर्यते स्वयमेव ।

---

प्र०—इति परत्वाल्लोपः ॥ १९२ ॥

अचः कर्तृ । जायते स्वयमेवेति । अन्तर्भावितण्यर्थत्वाज्जनिः कर्मकर्तृयग्विषयः । 'एकं द्वादशधा जज्ञ' इत्यादौ चान्तर्भावितण्यर्थस्य सकर्मकस्य दृश्यते प्रयोगः । न कर्तव्यमिति । योगविभागमन्तरेणोपदेशग्रहणानुवृत्त्यैव सिद्धत्वात् । तत्र 'ये विभाषे'ति यकारादिप्रत्ययविषय-

---

उ०—रित्यनेन ॥ १६२ ॥

अचः कर्तृ । जनेरकर्मकत्वात्कर्मकर्तृत्वमनुपपन्नमत आह—अन्तर्भावितेति । ततः सौकर्याय ण्यर्थत्यागे कर्मकर्तृत्वं बोध्यम् ॥ भाष्ये—न ह्यन्तरेणेति । अनुवर्तमानेन योगविभागासंभवादिति भावः । 'न कर्तव्य'मिति समाधानाशयमाह—योगविभागमिति । 'ये विभाषे'त्यत्रापि उपदेशग्रहणानुवृत्तेरिति भावः । यद्यप्यनुवर्तमानेन वाक्यभेदः संभवति, तथापि प्रकारान्तरेणैव समाधानसंभवात्तन्नोक्तम् । उक्ताशयमजानानः

---

§ न पदान्तद्विर्वचन······चर्विधिषु १ । १ । ५८

¶ ॠत इद्धातोः ७ । १ । १००; उरण् रपरः १ । १ । ५१; हलि च ८ । २ । ७७

* ये विभाषा ६ । ४ । ४३

तत्तर्ह्युपदेशग्रहणं कर्तव्यं न ह्यन्तरेणोपदेशग्रहणं योगाङ्गं जायते । न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् ? 'तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः' [ ६ । १ । १८६ ] इति । ननु चोक्तमुपदेशवचने जनादीनां स्वरो न सिध्यतीति । नैष दोषः । नैवं विज्ञायत 'उपदेशवचने जनादीनां स्वरो न सिध्यती'ति । कथं तर्हि ? 'जनादीनामप्यात्त्व उपदेशवचनं कर्तव्य'मिति । तत्तर्हि तत्रोपदेशग्रहणं कर्तव्यम् ? न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् ? 'अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति' [ ६ । ४ । ३७ ] इति ॥ १९५ ॥

## थलि च सेटीडन्तो वा । ६ । १ । १९६ ॥

सेड्ग्रहणं किमर्थं न 'थलीडन्तो वे'त्युच्येत ? 'इडन्तो वे'त्युच्यमान इहापि प्रसज्येत—पपक्थ । नैतदस्ति प्रयोजनम् । अच इति* वर्तते । इदं तर्हि प्रयोजनम्—ययाथेति ॥ १९६ ॥

प्र०—भाव उपदेशे जनादीनामात्वविधानादिह च तास्यादिसूत्रादुपदेशग्रहणानुवर्तनादुपदेशेऽजन्तस्य कर्तृयक्याद्युदात्तस्य विधानात् सर्वत्रेष्टविषये स्वरः सिद्धः ॥ १९५ ॥

थलि । सेड्ग्रहणमिति । इड्ग्रहणादेव थल्सेड्ग्रहीष्यत इति प्रश्नः । पपक्थेति । 'थली'त्यनेन थलन्तस्य ग्रहणादत्राप्यन्तोदात्तत्वं, पक्षे चाद्युदात्तत्वं स्यात्; लित्स्वरेण मध्योदात्तत्वं चेष्यते । इड्ग्रहणं तु यदेडागमः क्रियते पेचिथेति, तदोदात्तत्वार्थं स्यात्, यथा च लुलविथेत्यादौ चतुर्णां पर्यायेणोदात्तत्वविधाने पपिथेत्यादौ चतुर्थाभावेऽपि पर्यायेणोदात्तत्रयं भवत्येवमिडभावेऽपि पपक्थेत्यत्र स्यात् ॥ १९६ ॥

उ०—शङ्कते- ननु चेत्यादि । समाधत्ते-नैवं विज्ञायत इत्यादि । उपदेशग्रहणानुवृत्तौ जनादीनां स्वरो न सिध्यतीति दोषपरं न 'उपदेशे जनादीना'मिति वार्तिकं व्याख्यायते, किन्तु जनादीनामात्वेऽप्युपदेश इति कर्तव्यमिति व्याख्यायत इत्यर्थः । आत्वविधावुपदेशग्रहणानुवृत्तौ 'ये' इति विषयसप्तमी आश्रयितव्या, परसप्तम्यामनन्वयापत्तेरित्याशयेनाह-तत्र ये इति । न चाङ्गाधिकारे कथं विषयसप्तमी, अङ्गत्वस्य विधानप्रतिबद्धत्वात् । उपदेशग्रहणसामर्थ्येनाङ्गसंज्ञानिमित्तयादिविषय इत्यर्थाङ्गीकारान्न दोषः । उपदेशेऽजन्तस्येति । यगुपदेश इत्यर्थः ॥ १९५ ॥

थलि च सेटी । नन्वादेरन्तस्येटश्च विकल्पेन स्वरविधानादिडभावे कथं प्रवृत्तिः स्यादत आह—इड्ग्रहणं त्विति । तदुपपादयति—यथेति । पर्यायेणेति । 'अनुदात्तं पद'मिति परिभाषणादिति भावः । एतेन सन्नियोगशिष्टत्वाभावो दर्शितः । चतुर्थाभावेऽपि—अन्यतरस्याङ्ग्रहणान्नोघितलित्स्वराभावेऽपि । भाष्ये—अच इति वर्तते इति । अजन्तात्थलि सतीडादिः पर्यायेणोदात्त इत्यर्थः ॥ १९६ ॥

* अचः कर्तृयकि ६ । १ । १९५

## संज्ञायामुपमानम् ॥ ६ । १ । २०४ ॥

किमर्थमिदमुच्यते न 'ञ्नित्यादिर्नित्यम्' [ ६ । १ । १९७ ] इत्येव सिद्धम् ? ञ्नितीत्युच्यते न चात्र ञ्नितं पश्यामः† । प्रत्ययलक्षणेन । 'न लुमता तस्मिन्नि'ति प्रत्ययलक्षणप्रतिषेधः । अङ्गाधिकारोक्तस्य स प्रतिषेधो 'न लुमताङ्गस्य' [ १ । १ । ६३ ] इति ॥ अत उत्तरं पठति—

**उपमानस्याद्युदात्तवचनं ज्ञापकमनुबन्धलक्षणे स्वरे प्रत्ययलक्षणप्रतिषेधस्य ॥ १ ॥**

उपमानस्याद्युदात्तवचनं ज्ञापकार्थं क्रियते । किं ज्ञाप्यम् ? एतज्ज्ञापयत्याचार्योऽनुबन्धलक्षणे स्वरे प्रत्ययलक्षणं न भवतीति । किमेतस्य ज्ञापने प्रयोजनम् ? गर्गाः वत्साः । विदाः उर्वाः‡ । उष्ट्रग्रीवा वामरज्जुः§ । ञ्नितीत्याद्युदात्तत्वं न भवति । भवति । इह च अत्रय इति¶ तद्धितस्य कितः [ ६ । १ । १६४-१६५ ] इत्यन्तोदात्तत्वं न भवति ।

प्र०—संज्ञायामु । प्रत्ययलक्षणेनेति । चञ्चेव चञ्चा, वध्रिकेव वध्रिकेत्यादौ 'संज्ञाया'मिति विहितस्य कनो 'लुम्मनुष्य' इति लुब्विधानात् । अङ्गाधिकार इति । 'सौवर्यः सप्तम्यस्तदन्तसप्तम्य' इति वचनान्न लुमता तस्मिन्निति न्यासेऽपि नास्ति प्रत्ययलक्षणप्रतिषेध इत्यर्थः ।

अनुबन्धलक्षण इति । अनुबन्धमात्राश्रयस्वरविषयं ज्ञापकमित्यर्थः । उष्ट्रग्रीवेति ।

उ०—संज्ञायामु । चञ्चा सदृशे व्यक्तिविशेषे रूढेः संज्ञात्वम् । ननु तस्मिन्निति न्यासे उक्तस्य प्रतिषेधस्याङ्गाधिकारोक्तस्येत्यनेन कथं निवृत्तिरतरतन्न्यासेऽपि तदप्रवृत्तिमाह—सौवर्य इति ।

अनुबन्धमात्रेति । तत्तु ञ्निस्वरविषयमेवेत्यर्थः । तत्फलं भाष्ये दर्शितम्—इह चात्रय इत्यादिनेति । कित्तद्धितान्तस्यान्त उदात्त इत्यर्थं मत्वेदम् । एतेन प्रत्ययनिमित्तकार्यस्य प्रत्ययलक्षणेनातिदेशेऽपि

† संज्ञायां च; लुम्मनुष्ये ५ । ३ । ९७; ९८
‡ गर्गादिभ्यो यञ्; अनृष्यानन्तर्ये बिदादिभ्योऽञ् ४ । १ । १०५; १०४; यञञोश्च २।४।६४
§ इवे प्रतिकृतौ; देवपथादिभ्यश्च ५ । ३ । ९६; १००
¶ इतश्चानिञः ४ । १ १२२; अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च २ । ४ । ६५

यद्यनुबन्धलक्षण इत्युच्यते पथिप्रियः मथिप्रिय इति* 'पथिमथोः सर्वनामस्थाने' [ १९९ ] इत्याद्युदात्तत्वं प्राप्नोति। एवं तर्ह्याचार्यो ज्ञापयति 'स्वरे प्रत्ययलक्षणं न भवती'ति।

एवमपि सर्पिरागच्छ सप्तागच्छतेत्यामन्त्रितस्य च [ १९८ ] इत्याद्युदात्तत्वं न प्राप्नोति†। इह च मा हि दाताम् मा हि धाताम्‡ 'आदिः सिचोऽन्यतरस्याम्' [ १८७ ] इत्येष स्वरो न प्राप्नोति। एवं तर्हि ज्ञापयत्याचार्यः 'सप्तमीनिर्दिष्टे स्वरे प्रत्ययलक्षणं न भवती'ति।

एवमपि सर्वस्तोमः सर्वपृष्ठः* 'सर्वस्य सुपि' [ १९१ ] इत्याद्युदात्तत्वं न प्राप्नोति।

अस्तु तर्ह्यनुबन्धलक्षण इत्येव। कथं पथिप्रियः मथिप्रियः ? वक्तव्यमेवैतत् पथिमथोः सर्वनामस्थाने लुकि लुमता लुप्ते प्रत्ययलक्षणं न भवतीति§ ॥ २०४ ॥

प्र०—'इवे प्रतिकृता'विति विहितस्य कनो 'जीविकार्थे चापण्ये' इति लुप्। पथिप्रिय इति। 'बहुव्रीहौ प्रकृत्या पूर्वपद'मिति। पूर्वपदप्रकृतिस्वर आद्युदात्तत्वं प्राप्नोति, अन्तोदात्तत्वं चेष्यते। सर्वस्तोम इति। 'बहुव्रीहौ प्रकृत्ये'त्याद्युदात्तत्वं सर्वशब्दस्येष्यते। अनुबन्धलक्षण इत्येवेति। एवं च कित्स्वरोपि प्रत्ययलक्षणेन न भवति। सिच्सर्वामन्त्रितस्वरास्तु भवन्ति। 'अत्रय' इत्यत्र 'इतश्चानिञ' इति ढकोऽत्रिभृगुकुत्सेति लुक्। सर्पिरागच्छे'त्यत्र 'स्वमोर्नपुंसका'दिति सोर्लुक्। 'मा हि दाता'मित्यत्र 'गातिस्थाध्वि'ति सिचो लुक् ॥ २०४ ॥

उ०—प्रत्ययस्थानिकस्य नातिदेशः। 'नखनिर्भिन्न' इत्यादावैसापत्तेरिति परास्तम्। ननु पथिप्रिये 'समासस्ये'त्यन्तोदात्तत्वात्कथमाद्युदात्तत्वप्राप्तिरत आह—बहुव्रीहाविति। 'पथिमथो'रितिसूत्रेऽपि तदन्तसप्तमीति भावः। 'वा प्रियस्ये'त्युक्तेः पथिशब्दस्य पूर्वनिपातः। अन्तोदात्तत्वं चेति। आद्युदात्तत्वाप्राप्तौ पथिशब्दस्य फिट्स्वरेणान्तोदात्तत्वात्पूर्वपदप्रकृतिस्वरेणेत्यर्थः। एवञ्चेति। 'अत्रय' इत्यादावाद्युदात्तत्वं सिद्धमिति भावः। एवञ्चैतद्भाष्यविरोधात् 'सौवर्यः सप्तम्य' इत्यस्य यत्र परसप्तमीतदन्तसप्तम्योः फलभेदस्तत्रैव प्रवृत्तिर्ज्ञापकस्य विशेषापेक्षत्वादिति नव्योक्तं परास्तम्। सर्वस्तोमे 'सर्वस्य सुपी'त्यस्याप्रवृत्त्यापत्तेः ॥ २०४ ॥

* सुपो धातुप्रातिपदिकयोः २। ४। ७१; बहुव्रीहौ प्रकृत्या पूर्वपदम् ६। २। १

† स्वमोर्नपुंसकात्; षड्भ्यो लुक् ७। १। २३; २२

‡ गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु २। ४। ७७

§ पथिमथोः सर्वनामस्थाने लुकि १। १। ६३ वा० ४ पृ० ४९२

## निष्ठा च द्व्यजनात् ॥ ६ । १ । २०५ ॥

### निष्ठायां यञि दीर्घत्वे प्रतिषेधः ॥ १ ॥

निष्ठायां यञि दीर्घत्वे प्रतिषेधो वक्तव्यः । दत्ताभ्याम् गुप्ताभ्याम्¶ ।

### न वा बहिरङ्गलक्षणत्वात् ॥ २ ॥

न वा वक्तव्यम् । किं कारणम् ? बहिरङ्गलक्षणत्वात् । बहिरङ्गोऽत्र दीर्घः । अन्तरङ्गः स्वरः । असिद्धं बहिरङ्गमन्तरङ्गे ।

अन्तरेण प्रतिषेधमन्तरेण चैतां परिभाषां सिद्धम् । कथम् ? नैवं विज्ञायते न चेदाकारान्ता निष्ठेति । कथं तर्हि ? न चेदाकारात्परा निष्ठेति । यद्येवं निर्देशश्चैव नोपपद्यते, न ह्येषा आकारात्परा पञ्चमी युक्ता । इह च प्राप्नोति—आप्तः राद्ध इति ।

एवं तर्हि 'न चेदवर्णात्परा निष्ठे'ति । भवेन्निर्देश उपपन्नः, इह तु प्राप्नोति आप्तः राद्ध इति, इह च न प्राप्नोति यतः रतं इति ।

एवं तर्हि विहितविशेषणमकारान्तग्रहणम्—'न चेदकारान्ताद्विहिता निष्ठे'ति । एवमपि दत्तः अत्र न प्राप्नोति, इह च प्राप्नोति आप्तः राद्ध इति ।

एवं तर्हि कार्यिविशेषणमाकारग्रहणम्—न चेदाकारः कार्यी भवति । एवमपि अद्याष्टः कुदाष्टः अत्र न प्राप्नोति । तस्मात्सुष्ठूच्यते 'निष्ठायां यञि

प्र०—निष्ठा च । निष्ठायां यञीति । 'अनाकारान्ता या निष्ठे'त्याश्रित्य वार्तिकारम्भः ॥ निर्देश इति । 'अनात' इति भाव्यमित्यर्थः । इह च प्राप्नोतीति । विधिः, प्रतिषेधाभावात् । न चेदाकार इति । तेनाप्तो राद्ध इत्यादावाकारस्योदात्तत्वाभावः । अद्याष्ट इति । एकादेशे कृते आकारः कार्यीत्याद्युदात्तत्वं न प्राप्नोति । तस्मात्कार्यिविशेषणपक्षेऽप्यवश्याश्रयितव्या बहिरङ्गपरिभाषेत्याह—तस्मादिति । 'बहिरङ्गलक्षणत्वा'दित्येतत् सुष्ठूच्यते, अवश्याश्रयिव्य-

उ०—निष्ठा च । नन्वनाकारात्परा निष्ठेत्यर्थात् प्रतिषेधाप्राप्तेरनादिति प्रतिषेधप्रतिषेधो व्यर्थ इत्यत आह—अनाकारान्तेति । भाष्ये 'यद्येवं निर्देशश्चैवे'ति पाठः । 'निर्देश एव च नोपपद्यते' इत्यन्वयः । प्रतिषेधाभावादिति । निष्ठाया आकारात्परत्वाभावादिति भावः । अद्याक्त इति । अञ्चेरद्यशब्देन सवर्णदीर्घः । 'अद्याष्ट' इति पाठे 'अशू व्याप्तौ'वित्यस्य रूपम् । भाष्ये परिहारवार्तिकस्यैव समीचीनत्वमुच्यते, न तु चोदवार्तिकस्यापीत्याह—तस्मात्कार्यीति । एवञ्च कार्यिविशेषणमनादिति स्थितम् । 'अनाकारान्ता या निष्ठे'त्यर्थे

¶ सुपि च ७ । ३ । १०२ १—'कारग्रहणम्' पा० ।

दीर्घत्वे प्रतिषेधो न वा बहिरङ्गलक्षणत्वा'दिति ॥ २०५ ॥

## आशितः कर्ता ॥ ६ । १ । २०७ ॥

किं निपात्यते ?

**आशिते कर्तरि निपातनमुपधादीर्घत्वमाद्युदात्तत्वं च ॥ १ ॥**

'आशित' इति क्तः कर्तरि निपात्यते । आशितवानाशितः । उपधादीर्घत्वमाद्युदात्तत्वं च निपात्यते ।

आद्युदात्तत्वमनिपात्यम् । अधिकारात् सिद्धम्* । उपधादीर्घत्वमनिपात्यम् । आङ्पूर्वस्य प्रयोगः । यद्येवमवग्रहः प्राप्नोति । न लक्षणेन पदकारा अनुवर्त्याः । पदकारैर्नाम लक्षणमनुवर्त्यम् । यथालक्षणं पदं कर्तव्यम् ॥ २०७ ॥

प्र०—त्वादस्याः परिभाषायाः । ततश्चाद्याष्ट इत्यत्रैकादेशस्य बहिरङ्गत्वादसिद्धत्वादनादिति प्रतिषेधाभावः ॥ २०५ ॥

आशितः । सकर्मकत्वादशेः कर्तर्यप्राप्तः क्तो निपात्यते । न चाविवक्षितकर्मत्वादकर्मकव्यपदेशात्कर्तरि क्तो लभ्यते । पचिददात्यादीनामपि कर्मविशेषाविवक्षायां कर्तरि क्तप्रसङ्गात् । तस्माद्यस्य न कदाचिदेकस्मिन्नेवार्थे द्रव्यकर्मणा संबन्धः सोऽकर्मको नान्यः ॥ आङ्पूर्वस्येति । थाथादिस्वरापवाद आद्युदात्तत्वं विधीयते । न लक्षणेनेति । संहितैवापौरुषेयी, पदानि तु पौरुषेयाणीति भावः ॥ २०७ ॥

उ०—आप्तः राद्ध इत्यादौ दोषादिति बोध्यम् ॥ २०५ ॥

आशितः । वृत्त्युक्तं प्रकारमाशङ्क्य दूषयति—न चेति । द्रव्यकर्मणेति । देशकालाद्यतिरिक्तकर्मणेत्यर्थः । नान्य इति । अविवक्षितकर्मादिरित्यर्थः । अत्र चेदमेव भाष्यं मानमित्याशयः । वस्तुतस्तु 'आशितः कर्ते'त्युक्तो निर्देश इत्याद्यनुक्तेरविवक्षितकर्मणा तत्राग्रहणमित्यर्थे मानाभावः । अन्यथा तथैव शङ्क्येत । तस्मात्केवललक्ष्यैकचक्षुष्कतयैवात्र निपातनाश्रयणमिति भाष्याशयः । एवञ्चाशित ओदनं देवदत्त इत्यपि भाष्यरीत्या साध्विति बोध्यम् । थाथादीति । आङोऽशितेन समासे समासान्तोदात्तत्वं बाधित्वा 'तत्पुरुषे तुल्यार्थे'ति पूर्वपदप्रकृतिस्वरः प्राप्तस्तं बाधित्वा 'गतिकारकोपपदा'दित्युत्तरपदप्रकृतिस्वरः प्राप्तस्तं बाधित्वा थाथादिस्वरः प्राप्त इति भावः । यद्यप्युत्तरपदप्रकृतिस्वरेणाप्यन्तोदात्तत्वमेव प्राप्तं तथापि न्याय्यत्वादिदमेवोक्तम् ॥ २०७ ॥

* ञ्नित्यादिर्नित्यम् ६ । १ । १९७

## रिक्ते विभाषा ॥ ६ । १ । २०८ ॥

## विभाषा वेण्विन्धानयोः ॥ ६ । १ । २१५ ॥

किमियं प्राप्ते विभाषाहोस्विदप्राप्ते ? कथं च प्राप्ते कथं वाप्राप्ते ? यदि संज्ञायामुपमानं निष्ठा च द्व्यजनात् [ ६ । १ । २०४; २०५ ] इति नित्ये प्राप्त आरम्भस्ततः प्राप्तेऽन्यत्र वाप्राप्ते ।

### वेणुरिक्तयोरप्राप्ते ॥ १ ॥

वेणुरिक्तयोरप्राप्ते विभाषा, प्राप्ते नित्यो विधिः । वेणुरिव वेणुः । रिक्तो नाम कश्चित् ॥ २०८ ॥ २१५ ॥

## उपोत्तमं रिति ॥ ६ । १ । २१७ ॥

उपोत्तमग्रहणं किमर्थं न 'रिति पूर्व'मित्येवोच्येत ? तत्रायमप्यर्थो 'मतोः पूर्वमात्संज्ञायां स्त्रियाम्' [ २१९ ] इत्यत्र पूर्वग्रहणं न कर्तव्यं भवति ।

एवं तर्ह्युपोत्तमग्रहणमुत्तरार्थम् । 'चङ्यन्यतरस्याम्' [ २१८ ] उपोत्तम'मित्येव । इह मा भूत्—मा हि स्म दधत्* ॥ २१७ ॥

प्र०—रिक्ते । वेणुरिक्तयोरिति । संज्ञायां पूर्वविप्रतिषेधान्नित्यो विधिः प्रवर्तत इति भावः ॥ २०८ ॥ २१५ ॥

उपोत्तमम् । न रितीति । 'र'इदस्येत्यन्तो वर्णो रिच्छब्देनोच्यते । तस्मिन्पूर्वमुदात्तमिति विज्ञायमाने नार्थ उपोत्तमग्रहणेनेत्यर्थः । मा हि स्म दधदिति । घेटो 'विभाषा घेट्श्व्योरिति च्लेश्चङादेशः । तत्र त्रिप्रभृतीनामभावादुपोत्तमं चङन्तस्य नास्तीति चङ एवोदात्तत्वं भवति । पूर्वग्रहणे तु क्रियमाणे चङः पूर्वस्य धातोः स्यात् ॥ २१७ ॥

उ०—रिक्ते । भाष्ये वेणुरिक्तयोरिति दर्शनादिन्धानशब्दे संज्ञाविषये परत्वाद्विकल्प एवेत्येके । इन्धानस्य संज्ञाविषये प्रयोगाभाव एवेति कश्चित् ॥ २०८ ॥ २१५ ॥

उपोत्तमं रिति । नन्वसत्युपोत्तमग्रहणे, पूर्वग्रहणे च सति रितः प्रत्ययात्पूर्वस्योदात्तत्वं स्यात् । 'करणीय'मित्यादौ रिदन्तोपोत्तमस्येष्यतेऽत आह—'र'इदिति । अन्त्यो वर्ण इति । समीपेऽवयवत्वारोपेण समासोऽनुबन्धानेकान्तत्वे, समुदायस्याप्येवमेव रित्त्वोपपादनात्तत्र व्याख्यानादन्त्यवर्णस्यैव ग्रहणमिति भावः । अन्त्यस्थानीयरादौ यकारः । पूर्वग्रहणाच्च 'सौवर्यः सप्तम्य' इत्यस्याप्रवृत्तिः । चङ इति । 'चङ्यन्यतरस्या'-मित्यस्याप्रवृत्तौ प्रत्ययस्वरेणेति भावः । वस्तुत 'एकान्ता अनुबन्धा' इति पदेऽन्तवर्णस्य रिच्छब्देन ग्रहणे मानाभावादिहार्थमपि तदिति इदं भाष्यमेकदेशयुक्तिः ॥ २१७ ॥

* विभाषा घेट्श्व्योः; आद्युदात्तश्च ३ । १ । ४९; ३

## अन्तोऽवत्याः ॥ ६ । १ । २२० ॥

## ईवत्याः ॥ ६ । १ । २२१ ॥

किमर्थमिदमुच्यते न 'वत्या' इत्येवोच्येत ? 'वत्या' इतीयत्युच्यमाने 'राजवती' अत्रापि प्रसज्येत । अथवत्या इत्युच्यमाने कस्मादेवात्र न भवति ? असिद्धो नलोपस्तस्यासिद्धत्वान्नैषोऽवतीशब्दः । कस्तर्हि ? अन्वतीशब्दः† ।

यथैव तर्हि नलोपस्यासिद्धत्वान्नावतीशब्द एवं वत्वस्याप्यसिद्धत्वान्नावतीशब्दः‡ । आश्रयात्सिद्धत्वं स्यात् ॥ २२० ॥ २२१ ॥

## चौ ॥ ६ । १ । २२२ ॥

### चोरतद्धिते ॥ १ ॥

चुस्वरोऽतद्धित इति वक्तव्यम् । इह मा भूत्—दाधीचः माधूच इति । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । प्रत्ययस्वरोऽत्र बाधको भविष्यति§ ।

स्थानान्तरप्राप्तश्चुस्वरः । प्रत्ययस्वरस्यापवादोऽनुदात्तौ सुप्पितौ [ ३ । १ । ४ ] इति । अनुदात्तौ सुप्पितावित्यस्योदात्तनिवृत्तिस्वरः¶ । उदात्तनिवृत्तिस्वरस्य चुस्वरः ।

प्र०—चौ । चोरतद्धित इति । चौ यः स्वरो विधीयते स चोः संबन्धीभवतीति षष्ठीनिर्देशः कृतः । प्रत्ययस्वरोऽत्रेति । यत्रानुदात्तः प्रत्ययः स चुस्वरस्यावकाशः—दधीचः दधीचेति भावः । स्थानान्तरप्राप्त इति । अपवादस्थानं प्राप्तो बलवानित्यर्थः । तदेवापवादत्वं दर्शयति—प्रत्ययस्वरस्येति । प्रत्ययस्वरस्यैवोदात्तनिवृत्तिस्वरेण प्रत्यापत्तिः क्रियत इति प्रत्ययस्वरापवा-

उ०—चौ । ननु चौ परतः पूर्वस्यान्तोदात्तत्वं विधीयते, तेन चोरिति निर्देशोऽयुक्तोऽत आह—चौ य इति । ननु सर्वत्र प्रत्ययस्वरप्राप्तावयमनवकाशोऽत आह—यत्रानुदात्त इति । शब्दपरविप्रतिषेधाद्बाधकत्वमित्यर्थः । यद्यपि वेदे 'ऽन्वेश्छन्दसी'त्यन्तोदात्तत्वं तथापि भाषायामवकाश इति भावः । किमिदं स्थानान्तरप्राप्तत्वं नाम, तत्र आह—अपवादस्थानमिति । प्रत्ययोत्तरमल्लोपोत्तरं प्राप्तेरिति भावः । ननु 'प्रत्ययस्वरापवाद' इत्युपदिष्योदात्तनिवृत्तिस्वरबाधकत्वोपपादनमयुक्तमत आह – प्रत्ययस्वरस्यैवेति । अत्रोदात्तनिवृत्तिस्वरप्राप्तये आह—कृस्वरेणेति । प्रत्ययस्वरमपीति भाष्ये । बाध्यसामान्यचिन्तयेति भावः । अस्य-

† नलोपः प्रातिपदिकान्तस्य; नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ८ । २ । ७; २

‡ मादुपधायाश्च मतोर्वोऽयवादिभ्यः ८ । २ । ६

§ आद्युदात्तश्च ३ । १ । ३ ¶ अनुदात्तस्य च यत्रोदात्तलोपः ६ । १ । १६१

स यथैवोदात्तनिवृत्तिस्वरं बाधत एवं प्रत्ययस्वरमपि बाधेत ।

नात्रोदात्तनिवृत्तिस्वरः प्राप्नोति । किं कारणम् ? न गोश्वन्साववर्ण [ ६ । १ । १८२ ] इति प्रतिषेधात् । नैष उदात्तनिवृत्तिस्वरस्य प्रतिषेधः । कस्य तर्हि ? तृतीयादिस्वरस्य* ।

यत्र तर्हि तृतीयादिस्वरो नास्ति—दधीचः पश्येति ?

एवं तर्हि न तृतीयादिलक्षणस्य प्रतिषेधं शिष्मः । किं तर्हि ? येन केनचिल्लक्षणेन प्राप्तस्य विभक्तिस्वरस्य प्रतिषेधम् । यदि विभक्तिस्वरस्य प्रतिषेधो वृक्षवान् प्लक्षवान् अत्र न प्राप्नोति । मतुब्ग्रहणमपि प्रकृतमनुवर्तते । क्व प्रकृतम् ? ह्रस्वनुड्भ्यां मतुप् [ १७६ ] इति । यदि तदनुवर्तते वेतस्वानित्यत्र† प्राप्नोति । मतुब्ग्र-

प्र०—दश्चुस्वर इत्यर्थः । कृत्स्वरेण चाञ्चतेरकार उदात्तः ।

न गोश्वन्निति । अञ्चतिर्धातुरेव तत्रोपात्तो न तु 'नाञ्चेः पूजाया'मिति प्रतिषिद्धनलोपः किन्नन्तः । तृतीयादिस्वरस्येति । 'न गोश्व'न्नित्यत्र 'सावेकाच' इत्यतस्तृतीयादिग्रहणमनुवर्तते । यत्र तर्हीति । तत्रोदात्तनिवृत्तिस्वरस्य बाधक एव चुस्वर इत्यर्थः । एवं तर्हीति । 'न गोश्वन्नित्यत्र विभक्तिग्रहणमेवानुवर्तते, न तृतीयादिग्रहणमित्यर्थः । ततश्चुस्वरः प्रत्ययस्वरस्य न बाधक इति उपसङ्ख्यानं नारब्धव्यं, प्रत्ययस्वरेण सिद्धत्वात् । वृक्षवानिति । मतुपो विभक्तित्वाभावात्प्रतिषेधाभावे 'ह्रस्वनुड्भ्यांमतु'बिति मतुप उदात्तत्वं प्राप्नोति । वेतस्वानिति । कुमुदनडवेतसेभ्यो ड्मतुप्प्रत्ययः । तत्र लक्षणविशेषानपेक्षे उदात्तत्वमात्रप्रतिषेधे विज्ञायमाने उदात्तनिवृत्तिस्व-

उ०—त्युत्तरपदाद्धि सुब्ङीतद्धिता एव प्रत्यया नान्ये इति बोध्यम् । भाष्ये—नात्रेति । चुस्वरविषये इत्यर्थः ।

ननु 'न गोश्व'न्नित्यत्राकृतनलोपाञ्चेर्ग्रहणात्कथं दधीचेत्यादौ तेन निषेधोऽत आह—अञ्चतिर्धातुरेवेति । 'प्रतीचो बाहू'नित्यादि तु छान्दसं बोध्यम् । 'अञ्चेश्छन्दसी'त्यनेन वा सिद्धम् । 'अञ्चेश्छन्दसी'ति हि अस्यापवाद इति भाष्याशयः । एवञ्चास्य कमपि प्रति नापवादत्वमिति प्रत्ययस्वरापवादत्वाभावेन स एवास्य बाधको भविष्यतीति वचनं व्यर्थमिति तात्पर्यम् । आरम्भवाद्याह—नैष इति । यत्र तर्हीति । यत्र चेत्यर्थः । एवमस्य व्याख्यानं विप्रतिषेधसूत्रे कैयटे स्पष्टम् । अत्र येन केनापि प्राप्तस्य तृतीयादिस्वरस्य निषेध इत्येवमर्थेऽपि निषेधाप्राप्तिरित्यर्थः । तदेवाह—तत्रोदात्तेति । एवञ्च तत्र परत्वाद्यथा चुस्वर उदात्तनिवृत्तिस्वरं बाधते तथा प्रत्ययस्वरमपि बाधेतेति वचनमावश्यकमिति भावः । प्रत्याख्यानवाद्याह—एवं तर्हीति । तदेवाह—ततश्चुस्वर इति । मतुप उदात्तत्वमिति । अनुदात्तत्वं चेष्यते इत्यर्थः । उदात्तनिवृत्तिस्वरस्येति । अन्तोदात्तत्वे—सशब्दाकारस्यानुदात्ते ड्मतुपि लोपे इष्टोदात्तनिवृत्तिस्वरस्य प्रतिषेध स्यादि-

* सावेकाचस्तृतीयादिर्विभक्तिः ६ । १ । १६८

† कुमुदनडवेतसेभ्यो ड्मतुप् ४ । २ । ८७; टेः ६ । ४ । १४३; अनुदात्तस्य च यत्रोदात्तलोपः ६ । १ । १६१

इणमनुवर्तते ड्मतुप् चैषः। यदि तर्हि मतुब्ग्रहणे ड्मतुपो ग्रहणं न भवति वेतस्वा-नित्यत्र वत्वं‡ न प्राप्नोति। सामान्यग्रहणं वत्वे, इह पुनर्विशिष्टस्य ग्रहणम्।

यत्र तर्हि विभक्तिर्नास्ति 'दधीची'ति?

यदि पुनरयमुदात्तनिवृत्तिस्वरस्यापि प्रतिषेधो विज्ञायेत§। नैवं शक्यम्। इहापि प्रसज्येत—कुमारीति॥ सतिशिष्टः खल्वपि चुस्वरः। कथम्? चावित्युच्यते। यत्रास्यैतद्रूपम्। [क्व चास्यैतद्रूपम्?] अंजादावसर्वनास्थानेऽभिनिर्वृत्तेऽकारलोपे नकारलोपे च¶॥ तस्मात्सुष्ठूच्यते 'चोरतद्धित' इति॥ २२२॥

## समासस्य॥ ६। १। २२३॥

### समासान्तोदात्तत्वे व्यञ्जनान्तेषूपसङ्ख्यानम्॥ १॥

समासान्तोदात्तत्वे व्यञ्जनान्तेषूपसङ्ख्यानं कर्तव्यम्। राजदृषत् ब्राह्मणसमित्।

प्र०—रस्यात्र निषेधः प्राप्नोतीत्यर्थः। ड्मतुप्चैष इति। 'तदनुबन्धकग्रहणे नातदनुबन्धकस्ये'ति मतुब्ग्रहणेन ड्मतुपो ग्रहणं न भवति। वत्वविधौ तु 'मतो'रित्यपकारानुबन्धकनिर्देशात् परिभाषानुपस्थानाद्द्वयोरपि ग्रहणम्। यत्र तर्हीति। ततश्च स्थानान्तरप्राप्तत्वमस्त्येव चुस्वरस्येत्यर्थः। कुमारीति। कुमारशब्दः सावर्णान्ति इति ईकारस्योदात्तनिवृत्तिस्वरप्रतिषेधप्रसङ्गः। तस्माद्द-धीचीत्यत्र स्थानान्तरप्राप्त एव चुस्वर इति 'चोरतद्धित' इति वक्तव्यमेव। सतिशिष्ट इति। 'दधि अच् अस् [अ]' इति स्थिते 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते, लुग्निमित्तं चेति पूर्वं तद्धितः, पश्चादच इत्यल्लोपः॥ २२२॥

समासस्य। व्यञ्जनान्तेष्विति। 'उच्चैरुदात्त' इत्यत्राच इत्यनुवर्तनादजन्तस्य समास-

उ०—त्यर्थः। तदनुबन्धकेति। द्व्यनुबन्धकग्रहणे त्र्यनुबन्धकाग्रहणादिति भावः। ततश्चेति। क्वचित्प्रत्ययस्वर-प्रतिप्रसवरूपोदात्तनिवृत्तिस्वरप्राप्तेरस्य परत्वात्तद्बाधकत्वात्तेनैव न्यायेन प्रत्ययस्वरस्यापि बाधापत्त्या 'दाधीच' इत्यादौ प्रतिषेधो वक्तव्य इत्यर्थः। प्रकारान्तरेणापि तस्यावश्यवक्तव्यतामाह—सतिशिष्ट इति भाष्ये। ननु 'दधि अच् अ'सिति स्थिते पूर्वमेव भत्वादकारलोपे तद्धितात्पूर्वमेव चुस्वरप्राप्त्या प्रत्ययस्वरात्सति-शिष्टत्वमसिद्धमत आह—अन्तरङ्गानपीति॥ २२२॥

समासस्य। ननु व्यञ्जनानामस्वरकत्वेन तद्वर्जमन्त्यस्याचः स्वरस्य सिद्धत्वात्किमुपसङ्ख्यानेनेत्यत आह—उच्चैरिति। एवं चोच्चैरुपलभ्यमानोऽजुदात्तः, स चाचः स्थाने इति तदर्थस्तदाह—अजन्तस्ये-

‡ मादुपधायाश्च मतोर्वोऽयवादिभ्यः ८। २। ९

§ न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः; अनुदात्तस्य च यत्रोदात्तलोपः ६। १। १८२; १६१

१—कीलहार्नभाष्य इदं नास्ति। २—'यजादौ' पा०।

¶ अचः; अनिदितां हल उपधायाः क्ङिति ६। ४। १३८; २४

## हल्स्वरप्राप्तौ वा व्यञ्जनमविद्यमानवत् ॥ २ ॥

अथवा 'हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवद्भवती'त्येषा परिभाषा कर्तव्या । किमर्थमिदमुभयमुच्यते न 'हल्स्वरप्राप्तावविद्यमानव'दित्येवोच्येत 'स्वरप्राप्तौ व्यञ्जनमविद्यमानवद्भवती'ति वा । 'द्विर्बद्धं सुबद्धं भवती'ति[1] ।

यदि 'हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवद्भवती'त्युच्यते दधि 'उदात्तादनुदात्तस्य स्वरितः' [ ८ । ४ । ६६ ] इति स्वरितत्वं न प्राप्नोति । 'उदात्ताच्च स्वरितविधौ व्यञ्जनमविद्यमानवद्भवती'त्येषा परिभाषा कर्तव्या ।

कान्येतस्याः परिभाषायाः प्रयोजनानि ?

## प्रयोजनं लिदाद्युदात्तान्तोदात्तविधयः ॥ ३ ॥

लिति* प्रत्ययात्पूर्वमुदात्तं भवतीतीहैव स्यात् भौरिकिविधम् भौलिकिविधम्† । चिकीर्षकः जिहीर्षक इत्यत्र‡ न स्यात् ॥ 'ञ्नित्यादिर्नित्यम्'[2] [ ६ । १ । १९७ ] इतीहैव स्यात् अहिचुम्बकायनिः आग्निवेश्यः§ । गार्ग्यः कृतिरित्यत्र¶ । न स्यात् ॥

प्र०—स्यान्तोदात्तत्वविधानाद्धलन्तस्य न प्राप्नोतीति वचनम् । हल्स्वरप्राप्ताविति । हल एव प्रकृतत्वादविद्यमानत्वं प्रतिज्ञास्यते । स्वरप्राप्ताविति । प्रकृतत्वाद्व्यञ्जनस्यैव प्राप्तिः प्रत्येष्यते । द्विर्बद्धमिति । उभयोपादाने स्पष्टावगतिर्भवतीत्यर्थः । स्वरितत्वं न प्राप्नोतीति । हल्स्वरप्राप्त्यभावाद्धकारस्य व्यवधायकत्वात् ।

भौरिकिविधमिति । भौरिकीणां विषयो देशः । 'भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तला'विति विधल्प्रत्ययः । चिकीर्षक इति । रेफषकाराभ्यामीकारस्य व्यवधानात् । अहिचुम्बकायनिरिति । 'प्राचामवृद्धात् फिन्बहुल'मिति फिन् । आग्निवेश्य इति । गर्गादित्वाद्यञ् ।

उ०—स्यादि । उपसङ्ख्यानारम्भे तु व्यञ्जनान्तेऽन्तोऽनुदात्त इत्यर्थः । भाष्ये-हल्स्वरप्राप्तौ वेति । उपसङ्ख्यानं वा कर्तव्यमेषा परिभाषा वा कर्तव्येत्यर्थः । किमर्थमिदमुभयमिति । परिभाषायां हल्ग्रहणं, व्यञ्जनग्रहणं चेत्यर्थः । हल एवेति । श्रुतसंबन्धेनोपपत्तावश्रुतकल्पनाया अयोगादिति भावः ।

भाष्ये—कान्येतस्या इति । 'हल्स्वरप्राप्ता'वित्येतस्या इत्यर्थः । ईकारस्य व्यवधानादिति । 'अत्र

---

१—'बहुधा परीक्ष्यमाणं तत्त्वं सुनिश्चिततरं भवतीति' इति न्यायभाष्ये (३।२।५७) वात्स्यायनः ।

* लिति ६ । १ । १९३ † भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ ४ । २ । ५४

‡ ण्वुल्तृचौ ३ । १ । १३३ २—'ञ्नित्यादिरुदात्तो भवतीति पा० ।

§ प्राचामवृद्धात् फिन् बहुलम्; गर्गादिभ्यो यञ् ४ । १ । १६०; १०५

¶ गर्गादिभ्यो यञ् ४ । १ । १०५; स्त्रियां क्तिन् ३ । ३ । ९४

'धातोरन्त उदात्तो* भवती'तीहैव स्यात् ऊर्णोति । पचतीत्यत्र न स्यात् ।

इदं तावदयुक्तं यदुच्यते 'हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवद्भवती'ति । कथं हि हलो नाम स्वरप्राप्तिः स्यात् । तच्चापि ब्रुवतोदात्ताच्च स्वरितविधाविति वक्तव्यम् । तथानुदात्तादेरन्तोदात्ताच्च यदुच्यते तद्व्यञ्जनादेर्व्यञ्जनान्ताच्च न प्राप्नोति ।

यदि पुनः स्वरविधौ व्यञ्जनमविद्यमानवद्भवतीत्युच्येत । अथ 'स्वरविधौ व्यञ्जनमविद्यमानवद्भवती'त्युच्यमानेऽनुदात्तादेरन्तोदात्ताच्च यदुच्यते तत्किं सिद्धं भवति व्यञ्जनादेर्व्यञ्जनान्ताच्च ? बाढं सिद्धम् । कथम् ? 'स्वरविधि'रिति सर्वविभक्त्यन्तः समासः । स्वरेण विधिः स्वरविधिः, स्वरस्य विधिः स्वरविधिः, 'स्वरतो विधिः स्वरविधिरिति[1] । नैवं शक्यम् । इह हि दोषः स्यात्—उदश्वित्वान् घोषः विद्युत्वान्वलाहक इति ह्रस्वनुड्भ्यां मतुप् [ ६ । १ । १७६ ] इत्येष स्वरः प्रसज्येत ।

अस्तु तर्हि 'हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवद्भवती'ति । ननु चोक्तं 'कथं हि हलो नाम स्वरप्राप्तिः स्या'दिति । उच्चैरुदात्तः [ १ । २ । २९ ] इत्यत्र षष्ठीनिर्दिष्टमज्ग्रहणं† निवृत्तं तस्मिन्निवृत्ते हलोऽपि स्वरप्राप्तिर्भवति ।

यदप्युच्यत 'उदात्ताच्च स्वरितविधाविति वक्तव्य'मिति न वक्तव्यम् । नेदं पारिभाषिकस्यानुदात्तस्य ग्रहणम् । किं तर्हि ? अन्वर्थग्रहणम् । अविद्यमानोदात्तमनुदात्तं तस्य स्वरित इति[2] ।

---

प्र०—गार्ग्य इति । हलादित्वादच आदित्वाभावात् । कथं हीति । अज्धर्मत्वादुदात्तादीनाम् । सर्वविभक्त्यन्त इति । सर्वविभक्त्यन्तावयवत्वात्सर्वविभक्त्यन्तः । सर्वग्रहणमनेकोपलक्षणार्थम्, सप्तानां विभक्तीनामिहानुपयोगात् । अविद्यमानोदात्तमिति । अज्झल्समुदायोऽनुदात्त उदात्तपर

---

उ०—न स्या'दिति भाष्यस्य—इष्टेकारस्य न स्यात्, व्यञ्जनस्य षस्यैव स्यादित्यर्थ इति भावः । ननु समासादेकविभक्तेरेव श्रवणेन सर्वविभक्त्यन्तता तस्य न युक्तेत्यत आह—सर्वेति । भाष्ये—अज्ग्रहणं निवृत्तमिति । 'अचश्चे'ति सूत्रे षष्ठीनिर्दिष्टमित्यर्थः । तदनुवृत्तौ हि अनुदात्तादिसंज्ञकः, स चाचः स्थाने इत्यर्थः स्यादिति न स्याद्धलः स्वरप्राप्तिः । तन्निवृत्तौ तु उदात्तादिशब्दानामच्सु सङ्केतादादिरुदात्तादिगुणकः स्यादित्यर्थे तदन्तरतमः कश्चिदच्स्यादित्यस्ति हलः स्वरप्राप्तिरिति भावः । प्रतिषेधं शास्तीति । तेन हि स्वरोद्देश्यके

---

* धातोः ६ । १ । १६२

१–'स्वरतो विधिः स्वरविधिः' इति पाठः कीलहार्नभाष्ये नास्ति । † अचश्च १।२।२८

२–'मनुदात्तं भवति । उदात्तादनुदात्तस्य स्वरित' पा०

यदप्युच्यतेऽनुदात्तादेरन्तोदात्ताच्च यदुच्यते तद्व्यञ्जनादेर्व्यञ्जनान्ताच्च न प्राप्नोतीत्याचार्यप्रवृत्तिर्ज्ञापयति [तंत्र] सिद्धं तद्भवति व्यञ्जनादेर्व्यञ्जनान्ताच्चेति यदयं 'नोत्तरपदेऽनुदात्तादा'वित्युक्त्वा 'पृथिवीरुद्रपूषमन्थिष्वि'ति प्रतिषेधं शास्ति‡ ।

सा तर्ह्येषा परिभाषा कर्तव्या ? न कर्तव्या । आचार्यप्रवृत्तिर्ज्ञापयति भवत्येषा परिभाषेति यदयं 'यतोऽनावः' [ ६ । १ । २१३ ] इति नावः प्रतिषेधं शास्ति ॥ २२३ ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठस्याध्यायस्य प्रथमे पादे षष्ठमाह्निकम् ॥ पादश्च समाप्तः ।

प्र०—इति दधिशब्दे स्वरितः सिद्धः ॥ २२३ ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटविरचिते भाष्यप्रदीपे षष्ठस्याध्यायस्य प्रथमे पादे षष्ठमाह्निकम् ॥ पादश्च प्रथमः समाप्तः ।

उ०—विधौ व्यञ्जनस्याविद्यमानत्वं ज्ञाप्यते इत्यर्थः । एतन्मूलकमेव पठ्यते 'स्वरविधौ व्यञ्जन'मिति । स्वरोद्देश्यके विधावित्यर्थः । भाष्ये—यदयं यतोऽनाव इति । अयं भावः—अत्रादिर्नकारो न स्वरयोग्यो, यश्चाकारस्तद्योग्यो नासावादिः । नन्वादिरेव नकार उदात्तगुणविशिष्टाज्वानस्तु इति चेन्न । तथा सति निमित्तद्वयच्कत्वविनाशादुपजीव्यविरोधेनाद्युदात्ताप्राप्तेः । एवं च प्रतिषेधोऽनर्थकः सन् ज्ञापक इति ॥ २२३ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्योते षष्ठस्याध्यायस्य प्रथमे पादे षष्ठमाह्निकम् ॥ पादश्च समाप्तः ।

---

१—'क्वचिन्न ।  ‡ नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु ६ । २ । १४२

## बहुव्रीहौ प्रकृत्या पूर्वपदम् ॥ ६ । २ । १ ॥

किमर्थमिदमुच्यते ?

बहुव्रीहिस्वरं शास्ति समासान्तविधेः सुकृत् ।

सुकृदाचार्यः समासान्तोदात्तत्वे* प्राप्ते बहुव्रीहिस्वरमपवादं शास्ति ।

नैतदस्ति प्रयोजनम् ।

नञ्सुभ्यां नियमार्थं तु

नञ्सुभ्याम् [ ६ । २ । १७२ ] इत्येतन्नियमार्थं भविष्यति—'नञ्सुभ्यामेव बहुव्रीहेरन्त उदात्तो भवति 'नान्यस्ये'ति ।

एवमपि कुत एतत्पूर्वपदप्रकृतिस्वरत्वं भविष्यति न पुनः परस्येति ?

परस्य शितिशासनात् ॥ १ ॥

शितेर्नित्याबह्वच् [१३८] इत्येतन्नियमार्थं भविष्यति—'शितेरेव नान्यत' इति।

यत्तावदुच्यते 'नञ्सुभ्यां नियमार्थ'मिति ।

क्षेपे विधिर्नञोऽसिद्धः

'उदराश्वेषुषु क्षेपे' [ १०७–१०८ ] इत्येतस्मिन्प्राप्ते तत एतदुच्यते ।

प्र०—बहुव्रीहौ प्रकृत्या । किमर्थमिति । अन्तरेणैतत् सूत्रमिष्टस्यार्थस्य सिद्धिं मत्वा प्रश्नः । समासान्तविधेरिति । समासान्तस्योदात्तविधानात्तद्बाधनार्थमिदमित्यर्थः । सुकृदिति । शोभनं लक्षणं कृतवानिति । 'सुकर्मपापे'ति क्विप् ॥ नञ्सुभ्यामिति । 'सिद्धे विधिरारभ्यमाणो नियमाय भवती'ति न्यायात् । एवमपीति । नानापदस्वरप्राप्तौ समासान्तोदात्तत्वविधानान्नियमेन तद्व्यावृत्तौ द्वयोरपि पूर्वपदोत्तरपदयोः प्रकृतिस्वरप्रसङ्गः । परस्येति । उत्तरपदस्य नियमादसति प्रकृतिस्वरे पारिशेष्यात् पूर्वपदस्यैव प्रकृतिस्वरो भविष्यतीत्यर्थः ।

क्षेपे विधिरिति । 'अनुदरः' 'सूदर' इत्यादौ पूर्वपदान्तोदात्तत्वं क्षेप इति प्राप्तं, तद्बाधनार्थं 'नञ्सुभ्या'मिति स्यान्न तु नियमार्थम् । विधिनियमसंभवे विधेर्बलवत्त्वात् । नञ्प्र-

उ०—बहुव्रीहौ प्रकृत्या । ननु समासान्तानामजादीनां विधानस्यैतत्सूत्रारम्भे हेतुत्वं नोपपद्यतेऽत आह—समासान्तस्येति । शोभनमिति । अनेनास्य प्रत्याख्यानमशक्यमिति दर्शयति । द्वयोरपीति । पर्यायेणेत्यर्थः ॥ परशब्दार्थमाह—उत्तरपदस्येति ।

पूर्वपदान्तोदात्तत्वमिति । समासान्तोदात्तत्वापवादभूतमित्यर्थः । न च क्षेपे नियमार्थत्वं किं न स्यादत आह—विधिनियमेति । क्षेपे नञो विधिः सम्भवतीति नियमोऽसिद्ध इति वार्तिकार्थः । ननु सुग्रहणं नियामर्थं भविष्यतीत्यत आह—सोरपीति । विपरीतलक्षणयेति भावः । शिति ललाटादिष्विति ।

* समासस्य ६ । १ । २२३ । १—'नान्यत इति' पा० ।

यदप्युच्यते 'परस्य शितिशासना'दिति ।

परस्य नियमो भवेत् ।

परस्यैष नियमः स्यात् । शितेर्नित्याबह्वजेव नान्यदिति ।

यदि पूर्वपदप्रकृतिस्वरत्वं समासान्तोदात्तत्वं बाधते चप्रियः वाप्रियः अत्रापि बाधेत ।

अन्तश्च वाप्रिये सिद्धः[1]

अन्तोदात्तत्वं चवाप्रिये सिद्धम् । कुतः ?

संभवात्

असति खल्वपि संभवे बाधनं भवत्यस्ति च संभवो यदुभयं स्यात् ।

सत्यपि संभवे बाधनं भवति । तद्यथा—'दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्याये'ति सत्यपि संभवे दधिदानस्य तक्रदानं निवर्तकं भवति । एवमिहापि सत्यपि संभवे पूर्वपदप्रकृतिस्वरत्वं समासान्तोदात्तत्वं बाधिष्यते ॥ एवं तर्हि—

प्रकृताद्विधेः ॥ २ ॥

बहुव्रीहौ प्रकृत्या पूर्वपदं प्रकृतिस्वरं भवतीति । किं च प्रकृतम् ? उदात्त इति

प्र०—हणमुपलक्षणम्, सोरपि क्षेपविषयत्वसंभवात् । शितेर्नित्याबह्वजेवेति । शिति ललाटादिषूत्तरपदप्रकृतिस्वरो नियमेन निवर्त्यते न तु चित्रगुप्रभृतिष्वित्यर्थः । तदेवं सूत्रं कर्तव्यत्वेन स्थापितम् । चप्रिय इति । चादयोऽनुदात्ता इति चवाशब्दावनुदात्तौ, तयोः प्रकृतिस्वरे सति समासान्तोदात्तत्वं न प्राप्नोति । अस्ति च संभव इति । उदात्तानुदात्तयोर्भिन्नविषययोर्विरोधाभावात् । सत्यपीति । सामान्यविशेषविषयत्वनिबन्धनत्वाद्बाध्यबाधकभावस्य । ननु चासत्यपि समासान्तोदात्तत्वे प्रियशब्दः प्रत्ययस्वरेणान्तोदात्त एव भविष्यति न च प्रत्ययस्वरस्य बाधकः पूर्वपदप्रकृतिस्वरः । एवं तर्ह्युदाहरणदिक् भाष्यकारेण प्रदर्शिता । इदं तूदाहरणं 'समपाद' इति । समशब्दः सर्वानुदात्तः, पादशब्दो वृषादित्वादाद्युदात्तः । तत्र पूर्वपदप्रकृतिस्वरेण समासान्तोदात्तत्वे बाधिते पादशब्द आद्युदात्तः श्रूयेत । प्रकृताद्विधेरिति । उदात्तस्य यत्प्रकृतं विधानं तस्मात्प्रकृतिभा-

उ०—आगन्तूनामन्ते निवेशेन तदुत्तरमेवैवकारौचित्यादिति भावः । समासान्तोदात्तत्वं न प्राप्नोतीति । पूर्वपदप्रकृतिस्वरेण बाधितत्वादिति भावः । असंभवाभावे किंनिबन्धनो बाध्यबाधकभावोऽत आह—सामान्यविशेषेति । प्रत्ययस्वरेणेति 'इगुपधज्ञाप्रीकिरः कः' इति कप्रत्ययान्तत्वादिति भावः । न च प्रत्ययस्वरस्येति । तत्र नाप्राप्ते पूर्वपदप्रकृतिस्वरानारम्भादिति भावः । सर्वानुदात्त इति । 'स्वस्वसमसिमेत्यनुच्चानी'ति फिट्सूत्रादिति भावः । भाष्यप्रामाण्याद्वृषादित्वेन प्रियशब्दोऽप्याद्युदात्त एवेति भाष्याशयमन्ये । 'प्रकृताद्विधे'रित्यत्र

१—'सिद्धम्' पा० ।

च वर्तते*॥ एवमपि कार्यप्रियः हार्यप्रियः अत्र न प्राप्नोति। स्वरितेऽप्युदात्तोऽस्ति†। अथवा स्वरितग्रहणमपि प्रकृतमनुवर्तते। क्व प्रकृतम्? तित्स्वरितम् [ ६। १। १८५ ] इति‡।

### बहुव्रीहावृते सिद्धम्

अन्तरेणापि बहुव्रीहिग्रहणं सिद्धम्। तत्पुरुषे कस्मान्न भवति? 'तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः' [ ६। २। २ ] इत्येतन्नियमार्थं भविष्यति। द्विगौ तर्हि कस्मान्न भवति? 'इगन्ते द्विगा'वित्येतन्नियमार्थं भविष्यति§। द्वन्द्वे तर्हि प्राप्नोति। 'राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु' [ ३४ ] इत्येतन्नियमार्थं भविष्यति। अव्ययीभावे तर्हि प्राप्नोति। 'परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु' [ ३३ ] इत्येतन्नियमार्थं भविष्यति।

प्र०—वद्वारेणानुज्ञायमानाच्च प्रियादौ प्रकृतिस्वरो न भवतीत्यर्थः। स्वरितेऽपीति। नन्वच उदात्तसंज्ञा विहिता, वर्णैकदेशश्च वर्णग्रहणेन न गृह्यते। एवं तर्ह्युदात्तावयवत्वात् स्वरितोऽप्युदात्तग्रहणेन गृह्यते। गौणमुख्यन्यायश्च लक्ष्यदर्शनवशान्नाश्रीयते। अत एवास्मिन् पक्षेऽसमाश्वस्य पक्षान्तरमाह—अथवेति।

बहुव्रीहाविति। विनापि बहुव्रीहिग्रहणेन बहुव्रीहौ पूर्वपदप्रकृतिस्वरः सिद्ध इत्यर्थः। द्विगौ तर्हीति। यद्यपि द्विगुस्तत्पुरुषस्तथापि तत्र नियमान्तरप्रतिपादनाय प्रश्नः। इष्टतश्चेति।

उ०—कथमन्वयोऽत आह–उदात्तत्वस्येति। 'विधि'रिति भावे किः। बहुव्रीहौ समासे पूर्वपदस्थो य उदात्तः शास्त्रान्तरेण विहितः स प्रकृत्या स्वभावेनावतिष्ठते, विकारमनुदात्तं न प्रतिपद्यते इति सूत्रार्थ इति भावः। अनुदात्तस्त्वनुदात्तं पदमिति परिभाषया तत्तद्विध्येकवाक्यतापन्नया भवतीति उदात्तविधिबाधपूर्वकमेव तद्बाधात्समासान्तोदात्तत्वापवादत्वमस्य बोध्यम्। एवं तर्ह्युदात्तेति। उदात्तत्वानुदात्तत्वसमाहाररूपे स्वरित उदात्तस्यावयवत्वेन विद्यमानत्वादुदात्तशब्देन स्वरित उच्यते। धर्मधर्मिणोरभेदोपचारादजपि तेन गृह्यत इति भावः।

ऋतेयोगे सप्तम्या अभावेन 'बहुव्रीहावृते' इति निर्देशोऽयुक्तोऽत आह–विनापीति। बहुव्रीहाविति शब्दपरमिति भावः। द्विगुस्तत्पुरुष इति। अत एव तत्समावेशार्थो 'द्विगुश्चे'ति चकारः। एवं च तत्पुरु-

* कर्षात्वतो घञोऽन्त उदात्तः ६। १। १५६।
† तस्यादित उदात्तमर्धह्रस्वम् १। २। ३२। ‡ ऋहलोर्ण्यत् ३। १। १२४।
§ इगन्तकालकपालभगालशरावेषु द्विगौ ६। २। २९।

एवमपि कुत एतदेवं नियमो भविष्यत्येतेषामेव तत्पुरुषादिष्विति न पुनरेवं नियमः स्यादेतेषां तत्पुरुषादिष्वेवेति ।

इष्टतश्चावधारणम् ।

इष्टतश्चावधारणं भविष्यति ॥ एतेषां तर्हि बहुव्रीहेश्च पर्यायः प्राप्नोति ।

द्विपाद्दिष्टिर्वितस्तेश्च पर्यायो न प्रकल्पते ॥ ३ ॥

यदयं 'द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ' [ १९७ ] 'दिष्टिवितस्त्योश्च' [३१] इति सिद्धे पर्याये पर्यायं शास्ति तज्ज्ञापयत्याचार्यो 'न पर्यायो भवती'ति ।

उदात्ते ज्ञापकं त्वेतत्

उदात्त एतज्ज्ञापकं स्यात् ।

स्वरितेन समाविशेत् ॥

स्वरितेन समावेशः प्राप्नोति ॥ स्वरितेऽप्युदात्तोऽस्ति† ।

प्र०—प्रयुक्तानामन्वाख्यानान्नानिष्टार्था शास्त्रप्रवृत्तिः। एतेषामिति। तत्पुरुषादीनामित्यर्थः। असति बहुव्रीहिग्रहणे समासान्तोदात्तत्वस्य पूर्वपदप्रकृतिस्वरस्य चैकविषयत्वाद्विरोधाच्च पर्यायः प्राप्नोति चित्रगुस्तुल्यश्वेतः पञ्चारत्निरित्यादौ । यस्मात्तत्पुरुषादिषु तुल्यार्थादीन्येव पूर्वपदप्रकृतिस्वराणि भवन्ति नान्यानीत्येवंरूपो नियमः कृतो न तु प्रकृतिस्वराण्येवेति नियमः। ततश्च पर्यायप्रसङ्गः। द्विपादिति । द्वौ पादावस्य द्विपादित्यादौ समासान्तोदात्तत्वपूर्वपदप्रकृतिस्वरौ पर्यायेण सिद्धाविति 'द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहा'वित्यन्तोदात्तविकल्पो न विधेयः। विहितस्तु ज्ञापयति—'बहुव्रीहिरन्तोदात्तो न भवती'ति । तथा 'दिष्टिवितस्त्योश्चे'ति ज्ञापकं 'येषामिह पूर्वपदप्रकृतिस्वरो नियम्यते तेषां समासान्तोदात्तत्वं पक्षे न भवती'ति बहुव्रीहिग्रहणं प्रत्याख्यातम् ।

उदात्ते ज्ञापकमिति । इहोदात्तग्रहणानुवृत्त्या द्वयोरुदात्तयोः पर्यायो मा भूत् । ज्ञापकात् 'कार्यप्रिय' इत्यादौ तूदात्तस्वरितयोः समावेशः प्राप्नोत्येवेत्यर्थः । स्वरितेऽपीति । एतत्पूर्वमेव

उ०—षनियमेनैव सिद्धमिति भावः। तत्पुरुषादीनामित्यर्थं इति। तुल्यार्थादितत्पुरुषादीनामित्यर्थः। एवं च तत्पुरुषादिसंबन्धिनो बहुव्रीहिसंबन्धिनश्च पूर्वपदप्रकृतिस्वरस्य समासान्तोदात्तत्वेन पर्यायापत्तिरिति भाष्यार्थ इति भावः। विरोधाच्चेति। 'अनुदात्तं पद'मिति परिभाषणादिति भावः। ननु तत्पुरुषादिषु नियमे जाग्रति कथं पर्यायोऽत आह—यस्मादिति। भूतपूर्वादिष्वपि 'विस्पष्टादीनि गुणवचने'ष्विति नियमार्थं भविष्यतीति भावः। दिष्टिवितस्त्योश्चेति। एतयोरुत्तरपदयोर्वा पूर्वपदं प्रकृतिस्वरं द्विगाविति तदर्थः। तच्च सामान्यापेक्षं ज्ञापकमित्याह—येषामिहेति। 'कार्य'शब्दो यतस्तित्त्वात्स्वरितः।

समावेशः—पर्यायः। 'स्वरितेन समाविशे'दित्येव वार्तिकोक्तिः। एवं च 'बहुव्रीहा'विति कर्तव्यमेव। 'स्वरितेऽप्युदात्तोऽस्ती'त्येकदेश्युक्तिः। उदात्तस्वरितयोरित्यत्र स्वरितग्रहणेन उदात्तग्रहणेन गौणा-

† तस्यादित उदात्तमर्धह्रस्वम् १ । २ । ३२ ।

बहुव्रीहिस्वरं शास्ति समासान्तविधेः सुकृत् ।
नञ्सुभ्यां नियमार्थं तु परस्य शितिशासनात् ॥ १ ॥

लोपे विधिर्नञोऽसिद्धः परस्य नियमो भवेत् ।
अन्तश्च वाप्रिये सिद्धः संभवात्प्रकृताद्विधेः ॥ २ ॥

बहुव्रीहावृते सिद्धमिष्टतश्चावधारणम् ।
द्विपाद्दिष्टेर्वितस्तेश्च पर्यायो न प्रकल्पते ॥ ३ ॥

उदात्ते ज्ञापकं त्वेतत्स्वरितेन समाविशेत् ॥

## तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्यय-द्वितीयाकृत्याः ॥ ६ । २ । २ ॥

**तत्पुरुषे विभक्तिप्रकृतिस्वरत्वे कर्मधारये प्रतिषेधः ॥ १ ॥**

तत्पुरुषे विभक्तिप्रकृतिस्वरत्वे कर्मधारये प्रतिषेधो वक्तव्यः । परमं कारकं परमकारकम् । परमेण कारकेण परमकारकेण । परमे कारके परमकारके ।

**सिद्धं तु लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणात् ॥ २ ॥**

सिद्धमेतत् । कथम् ? 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवे'ति प्रतिपदं यो द्वितीयातृतीयासप्तमीसमासस्तस्य* ग्रहणं लक्षणोक्तश्चायम्† ।

प्र०—व्याख्यातम् ॥ १ ॥

तत्पुरुषे । कर्मधारये प्रतिषेध इति । विशेषणसमासो न प्रथमान्तानामेव भवत्यपि तु द्वितीयाद्यन्तानामपीति भावः ॥ लक्षणोक्त इति । विभक्तिविशेषमनुपादाय सामान्यलक्षणेनायं

उ०—ग्रहणस्य बोधनादिति बोध्यम् ॥ १ ॥

तत्पुरुषे तुल्यार्थे । भाष्ये—विभक्तिप्रकृतिस्वरत्वे इति । विभक्तिनिमित्तप्रकृतिस्वरत्वे इत्यर्थः । द्वितीयाद्यन्तानामपीति । 'परिनिष्ठितविभक्त्या समास' इति पक्षस्यापि सत्त्वादिति भावः । लाक्षणिकत्व-मुपपादयति—विभक्तिविशेषमिति । वार्तिकस्य विभक्तिस्वरविषयकतया प्रवृत्तेर्भाष्ये द्वितीयाद्यंशस्यैवोल्लेखो न त्वेतावतान्यांशे एतत्सूत्रविषये प्रतिपदोक्तपरिभाषाया अप्रवृत्तिरिति भ्रमः कार्यः । अतएव 'मयूरव्यंसकादयश्चे'ति सूत्रे उपमानांशे प्रतिपदोक्तपरिभाषा कैयटेनोक्ता इति कश्चित् । परे तु भाष्यवार्तिकस्वार-

* द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः; तृतीया तत्कृतार्थेन गुणवचनेन; सप्तमी शौण्डैः २ । १ । २४; ३०; ४० ।

† विशेषणं विशेष्येण बहुलम् २ । १ । ५७ ।

अव्यये परिगणनं कर्तव्यम् ।

## अव्यये नञ्कुनिपातानाम् ॥ ३ ॥

अव्यये नञ्कुनिपातानामिति वक्तव्यम् । नञ्—अब्राह्मणः अवृषलः । नञ् ॥ कु—कुब्राह्मणः कुवृषलः । कु ॥ निपात—निष्कौशाम्बिः निर्वाराणसिः । क्व मा भूत् ? स्नात्वाकालकः पीत्वास्थिरकः‡ ।

## क्त्वायां वा प्रतिषेधः ॥ ४ ॥

क्त्वायां वा प्रतिषेधो वक्तव्यः । स्नात्वाकालकः पीत्वास्थिरकः ॥ उभयं न वक्तव्यम् ।

## निपातनात्सिद्धम् ॥ ५ ॥

निपातनादेतत्सिद्धम् । किं निपातनम् ? अवश्यमत्र समासार्थं ल्यबभावार्थं च निपातनं कर्तव्यं+ तेनैव यत्नेन स्वरो भविष्यति ॥ २ ॥

---

प्र०—समासो विहित इत्यर्थः ॥ नञ्कुनिपातानामिति । निपातत्वादेव सिद्धे नञ्ग्रहणं विस्पष्टार्थम्, अकरणिरित्यादौ कृत्स्वरादिबाधनार्थं वा । तेन 'यच्चोपपदं कृति नञ्तस्य च स्वरो बलीयान् भवति' 'सहनिर्दिष्टस्य च नञ्स्वरो बलीयान् भवती'ति न वक्तव्यं भवति ।

क्त्वायां वेति । परिगणनं वा कर्तव्यम् । क्त्वायां प्रतिषेधो वा वक्तव्य इत्यर्थः । ननु भिन्नफलत्वाद्विकल्पोऽनुपपन्नः, परिगणने सति 'सामिकृतम्' 'स्वयं धौत'मित्यादिषु प्रकृतिस्वराभावः । क्त्वायां प्रतिषेधे तु प्रकृतिस्वरप्रसङ्ग इति चिन्त्यमेतत् ॥ अवश्यमत्रेति । अनेकप्रयोजनसंपत्तिर्निपातनाद्भवतीत्यर्थः । तेनैवेति । अन्तोदात्तानां पाठेनेत्यर्थः ॥ २ ॥

---

उ०—स्यादन्यांशे तदप्रवृत्तिमेवेच्छन्ति ॥ फलान्तरमप्याह—अकरणिरित्यादाविति । पुनर्विधानस्य बाधकबाधनार्थत्वात् परमपि कृत्स्वरं बाधित्वा अयमेव स्वर इत्यर्थः । सहनिर्दिष्टस्य चेति । 'अव्ययी'त्यादौ सतिशिष्टमपि प्रत्ययस्वरं बाधित्वायमेवेत्यर्थः ।

चिन्त्यमेतदिति । वस्तुतस्तु क्त्वान्तेतरपूर्वपदके तत्पुरुषे, नञ्कुनिपातातिरिक्तपूर्वपदके च दासीभारादिष्वात्पूर्वपदप्रकृतिस्वर एवेष्ट इति भाष्याशयमन्ये ।

भाष्ये—निपातनादिति । मयूरव्यंसकादिपाठादित्यर्थः । भाष्ये—ल्यबभावार्थं चेति । 'नञ्पूर्वे न ल्य'बित्यर्थे इदम् ॥ २ ॥

---

‡ क्त्वातोसुन्कसुनः १ । १ । ४० ।

+ स्नात्वाकालकः । पीत्वास्थिरकः २ । १ । ७२ गणे ।

## सदृशप्रतिरूपयोः सादृश्ये ॥ ६ । २ । ११ ॥

### सदृशग्रहणमनर्थकं तृतीयासमासवचनात् ॥ १ ॥

सदृशग्रहणमनर्थकम् । किं कारणम् ? तृतीयासमासवचनात् । सदृशशब्देन तृतीयासमास उच्यते, तत्र तृतीयापूर्वपदं प्रकृतिस्वरं भवतीत्येव सिद्धम्* ।

षष्ठ्यर्थं तर्हीदं वक्तव्यम्—पितुः सदृशः पितृसदृश इति ।

### षष्ठ्यर्थमिति चेत्तृतीयासमासवचनानर्थक्यम् ॥ २ ॥

षष्ठ्यर्थमिति चेत्तृतीयासमासवचनमनर्थकं स्यात् । किं कारणम् ? इहास्माभिस्त्रैशब्द्यं साध्यम् । पित्रा सदृशः, पितुः सदृशः, पितृसदृश इति । तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रहोऽपरेण समासो भविष्यत्यविरविकन्यायेन । तद्यथा—अवेर्मांसमिति विगृह्याविकशब्दादुत्पत्तिर्भवति आविकमिति । एवं पितुः सदृश इति विगृह्य पितृसदृश इति भविष्यति, पित्रा सदृश इति विगृह्य वाक्यमेव ।

अवश्यं तृतीयासमासो वक्तव्यो यत्र षष्ठ्यर्थो नास्ति तदर्थम्—भोजनसदृशः अध्ययनसदृश इति† ॥ यदि तर्हि तस्य निबन्धनमस्ति तदेव वक्तव्यमिदं न वक्तव्यम् । इदमप्यवश्यं वक्तव्यं यत्र षष्ठी श्रूयते तदर्थम्—दास्याःसदृशः वृषल्याःसदृश इति‡ ॥ ११ ॥

प्र०—सदृश । अविरविकन्यायेनेति । 'अविरविक' इति समुदायैकदेशानुकरणमिति सुप्त्वाभावाल्लोपाभावः । अनेनैतद्दर्शयति—अवेर्मांसमिति प्राप्तोऽपि तद्धितोऽनभिधानान्न भवति, किं पुनः पित्रा सदृश इत्यत्राविहितस्तृतीयासमासो भविष्यति । भोजनसदृश इति । हेताविति भोजनादिभ्यस्तृतीया । अत्र षष्ठ्यभावात् षष्ठीसमासाभावः । दास्याः सदृश इति । 'षष्ठ्या आक्रोश' इत्यलुक् । 'उदात्तयणो हल्पूर्वा'दिति विभक्तेरुदात्तत्वम् ॥ ११ ॥

उ०—सदृश । 'अविरविक' इत्यत्र समासावयवसुपः कथमलुगत आह—सुप्त्वाभावादिति । सङ्ख्याकर्मादिवाच्चित्वाभावेनेति भावः । अविहित इति । 'पूर्वसदृशे'त्यत्र सदृशग्रहणाभावे इति भावः । अत्र षष्ठ्यभावादिति । तृतीयासमानार्थषष्ठ्यभावादिति भावः । एवं च भोजनहेतुकसादृश्यवानित्यर्थे भोजनसदृश इत्यस्य साधुत्वार्थं समासविधौ सदृशग्रहणमावश्यकमिति तात्पर्यम् । 'अवश्यं तृतीयासमासो वक्तव्य' इत्यादि 'वृषल्याः सदृशः' इत्यन्तं भाष्यमेकदेश्युक्तिरिति 'पूर्वसदृशे'ति सूत्रे कैयटेन सूचितम् । उदात्तयण इति । दासीवृषल्यावन्तोदात्तौ ॥ ११ ॥

* पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः २ । १ । ३१; तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः ६ । २ । २ ।

† हेतौ २ । ३ । २३ । ‡ षष्ठ्या आक्रोशे ६ । ३ । २१ ।

## इगन्तकालकपालभगालशरावेषु द्विगौ ॥ ६ । २ । २९ ॥

### इगन्तप्रकृतिस्वरत्वे यण्गुणयोरुपसङ्ख्यानम् ॥ १ ॥

इगन्तप्रकृतिस्वरत्वे यण्गुणयोरुपसङ्ख्यानं कर्तव्यम् । पञ्चारत्न्यः दशारत्न्यः । पञ्चारत्नयः दशारत्नयः । यण्गुणयोः§ कृतयोरिगन्ते द्विगावित्येष स्वरो न प्राप्नोति ।

### न वा बहिरङ्गलक्षणत्वात् ॥ २ ॥

न वा वक्तव्यम् । किं कारणम् ? बहिरङ्गलक्षणत्वात् । बहिरङ्गौ यण्गुणौ । अन्तरङ्गः स्वरः । असिद्धं बहिरङ्गमन्तरङ्गे ॥ २९ ॥

## परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु ॥ ६ । २ । ३३ ॥

### परिप्रत्युपापेभ्यो वनं समासे विप्रतिषेधेन ॥ १ ॥

परिप्रत्युपापेभ्यो 'वनं समासे' [ ६ । २ । १७८ ] इत्येतद्भवति विप्रतिषेधेन । परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेष्वित्यस्यावकाशः—परित्रिगर्तम् परिसौवीरम् । 'वनं समास' इत्यस्यावकाशः—प्रवणे यष्टव्यम् । इहोभयं प्राप्नोति—परिवनम् अपव-

उ०—इगन्तकाल । यण्गुणयोरिति । पदस्य स्वरविधानात् सुप्युत्पन्ने नित्यत्वाद्यण्गुणयोः कृतयोरिगन्तत्वाभावात् प्रकृतिस्वरो न प्राप्नोतीति वचनम् । पञ्चारत्न्य इति । पञ्चारत्नयः प्रमाणमेषामिति तद्धितार्थे द्विगुः, 'प्रमाणे लो द्विगोर्नित्य'मिति मात्रचो लुक्, जस्, 'जसि चे'ति गुणो 'जसादिषु छन्दोवावचन'मिति वचनान्न भवति, तयोर्यणादेशः ॥ न वेति । पदग्रहणस्य परिमाणार्थत्वात्प्राक् सुबुत्पत्तेः स्वरो भवन्नन्तरङ्गः संपद्यते । यण्गुणौ तु सुबपेक्षत्वाद्बहिरङ्गत्वात्स्वरे कर्तव्ये असिद्धावित्यर्थः ॥ २९ ॥

परिप्रत्युपापा । परिप्रत्युपापेभ्य इति । सर्वनिर्देशेऽप्यपपरी एव गृह्येते, तयोरेव वर्जनविषयत्वसंभवाद्वनशब्दस्य च वर्ज्यमानार्थत्वसंभवात् । प्रवण इति—तत्पुरुषः । 'वनं समासे'

उ०—इगन्तकाल । नन्वन्तरङ्गत्वात्पूर्वमेव स्वरो भविष्यतीत्यत आह- पदस्येति । 'अनुदात्तं पद'-मित्यनेनैकवाक्यत्वादिति भावः । ननु गुणेन बाधात्कथं यणत आह—जसि चेतीति ॥ २९ ॥

परिप्रत्युपापा । सर्वनिर्देशेऽपीति । वनस्य नाहोरात्रावयवत्वं, प्रत्युपयोश्च न वर्जनविषयत्वमित्यर्थः । तत्पुरुष इति । प्रकृष्टं वनमिति विशेषणसमासः । ननु 'वनं समासे' इत्यस्य पूर्वपदप्रकृतिस्वरापवादत्वा-

§ जसादिषु छन्दसि वावचनं प्राङ् णौ चङ्युपधायाः ७ । ३ । १०९ वा० ; जसि च ७ । ३ । १०९ ।

‡ ६९

नम्* । 'वनं समास' इत्येतद्भवति विप्रतिषेधेन ।

**न वा वनस्यान्तोदात्तवचनं तदपवादनिवृत्त्यर्थम् ॥ २ ॥**

न वार्थो विप्रतिषेधेन । किं कारणम् ? वनस्यान्तोदात्तवचनं तदपवादनिवृत्त्यर्थम् । सिद्धमत्रान्तोदात्तत्वमुत्सर्गेणैव† । तस्य पुनर्वचन एतत् प्रयोजनं 'येऽन्ये तदपवादाः प्राप्नुवन्ति तद्बाधनार्थम्' । स यथैव तदपवादमव्ययस्वरं‡ बाधत एवमिदमपि बाधिष्यते ॥ ३३ ॥

## आचार्योपसर्जनश्चान्तेवासी ॥ ६ । २ । ३६ ॥

**आचार्योपसर्जनेऽनेकस्यापि पूर्वपदत्वात्सन्देहः ॥ १ ॥**

आचार्योपसर्जनेऽनेकस्यापि [पदस्य] पूर्वपदत्वात्सन्देहो भवति । आपिशल-पाणिनीयव्याडीयगौतमीयाः । एकं पदं वर्जयित्वा सर्वाणि पूर्वपदानि, तत्र न ज्ञायते कस्य पूर्वपदस्य प्रकृतिस्वरत्वेन भवितव्यमिति ।

प्र०—इत्येतत् सूत्रं क्रमापेक्षया प्राथम्याद्बहुव्रीहितत्पुरुषपूर्वपदप्रकृतिस्वरस्यापवादं मत्वा विप्रतिषेधोपन्यासः । अनेन तु सूत्रेण पारिशेष्यादव्ययीभावे स्वरविधिः । परिवनमिति । वनं वर्जयित्वेत्यर्थः । 'अपपरिबहिरञ्चवः पञ्चम्ये'त्यव्ययीभावः । स यथैवेति । बाध्यसमुदायापेक्षायां विशेषाभावात्सर्वस्य प्रकृतिस्वरस्यासौ बाधकः ॥ ३३ ॥

आचार्योप । अनेकस्यापीति । द्वयोर्द्वन्द्वेऽस्य चरितार्थत्वाद्बहूनां द्वन्द्वे सन्देहादप्रतिपत्तिः, पर्यायो वा प्राप्नोति ॥ लोकविज्ञानादिति । आद्यस्याव्यभिचारि पूर्वपदत्वं, मध्यमस्य तु परा-

उ०—द्विप्रतिषेधोऽयुक्तोऽत आह—क्रमापेक्षया प्राथम्यादिति । अष्टाध्यायीपाठक्रमापेक्षयेत्यर्थः । 'मत्वे'-त्यनेनैवंविधन्यायस्य शास्त्रेऽनाश्रयणं सूचयति । अस्य सूत्रस्याव्ययीभावविषये एवात्रकाशदाने बीजमाह—अनेन त्विति । बहुव्रीहितत्पुरुषयोः सिद्धत्वादित्यर्थः । पञ्चम्येतीति । 'पञ्चम्यपाङ्परिभि'रिति पञ्चमी । सिद्धान्त्याशयमाह—बाध्येति । भाष्ये—अव्ययस्वरम्—अव्ययत्वप्रयुक्तं पूर्वपदप्रकृतिस्वरम् ॥ ३३ ॥

आचार्योप । ननु सन्देहो न दोषाय 'न हि सन्देहादलक्षण'मिति न्यायादत आह—द्वयोरिति । सन्दिग्धविषयकलक्षणानुपप्लवेऽप्रतिपत्तिः । तदुपप्लवे तु पर्यायः । तस्याग्रहणादिति । गौणमुख्यन्यायादिति भावः । एवञ्च न्यायबलात्पूर्वशब्दस्य समासाद्यावयवे रूढिरिति तात्पर्यम् । 'सर्वपूर्व' इत्यत्र 'न निर्धारणे' इति

* अपपरिबहिरञ्चवः पञ्चम्या २ । १ । १२ । † समासस्य ६ । १ । २२३ ।
‡ तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः ६ । २ । २ । १—क्वचिन्न ।

लोकविज्ञानात्सिद्धम् ॥ २ ॥

तद्यथा—लोकेऽमीषां ब्राह्मणानां पूर्वमानयेति यः सर्वपूर्वः स आनीयते । एवमिहापि यत्सर्वपूर्वपदं तस्य प्रकृतिस्वरत्वं भविष्यति ॥ ३६ ॥

## महान् व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरव-प्रवृद्धेषु ॥ ६ । २ । ३८ ॥

किमर्थं महतः प्रवृद्धशब्द उत्तरपदे पूर्वपदप्रकृतिस्वरत्वमुच्यते न 'कर्मधारयेऽनिष्ठा' [ ६ । २ । ४६ ] इत्येव सिद्धम् ? न सिध्यति । किं कारणम् ? श्रेण्यादिसमास इत्येवं तत्§ । [ किं पुनः कारणं श्रेण्यादिसमास इत्येवं तत् ? ] इह मा भूत्—महानिरष्टो दक्षिणा दीयते ॥ ३८ ॥

## कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपा पारेवडवा तैतिलकद्रूः पण्यकम्बलो दासीभाराणां च ॥ ६ । २ । ४२ ॥

कुरुवृज्योर्गार्हपते ॥ १ ॥

कुरुवृज्योर्गार्हपत इति वक्तव्यम् । कुरुगार्हपतम् वृजिगार्हपतम् ।

कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपा पारेवडवा तैतिलकद्रूः पण्यकम्बलो

---

प्र०—पेक्षया पूर्वपदत्वम् । पूर्वापेक्षया तु न पूर्वपदत्वमिति तस्याग्रहणम् । सर्वपूर्व इति । सर्वेषां पूर्व इत्यवयवावयविसंबन्धे षष्ठीं विधाय समासो विधेयः ॥ ३६ ॥

महान् व्रीहि । श्रेण्यादिसमास इति । लक्षणप्रतिपदोक्तपरिभाषया क्तान्तेन प्रतिपदोक्तो यः कर्मधारयस्तस्य ग्रहणमित्यर्थः ॥ ३८ ॥

कुरुगार्ह । दासीभारादीनामिति वक्तव्यमिति । 'दासीभाराणा'मिति बहुवचनं

---

उ०—निषेधात्षष्ठीसमासानुपपत्तेराह—सर्वेषां पूर्व इति । सर्वेषां समुदायभावमापन्नानां यः पूर्वोऽवयव इत्यर्थः ॥ ३६ ॥

महान्व्रीहि । भाष्ये—किमर्थमिति । प्रतिपदोक्तत्वात् 'सन्महे'दिति समास एवास्य प्रवृत्तिर्न तु षष्ठीसमासे इति भावः । कर्मधारये इति । कर्मधारयसमासे क्तान्ते उत्तरपदेऽनिष्ठान्तं पूर्वपदं प्रकृत्येत्यर्थः । श्रेण्यादिसमास एव तत्प्रवृत्तौ बीजमाह—लक्षणप्रतिपदोक्तेति । अत्र तु 'सन्महे'दिति समास इति भावः ॥ ३८ ॥

कुरुगार्ह । ननु बहुवचननिर्देशेनार्धर्चा इतिवदाद्यर्थावगतौ किं वचनेनेत्यत आह—द्वन्द्वसमासेति ।

---

§ श्रेण्यादयः कृतादिभिः २ । १ । ५९ । १—क्वचिन्न ।

दासीभारादीनामिति वक्तव्यम् । इहापि यथा स्यात्—देवहूतिः देवनीतिः वसुनीतिः ओषधिः चन्द्रमाः ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । योगविभागः करिष्यते । 'कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपा पारेवडवा तैतिलकद्रूः पण्यकम्बल' इति । ततो 'दासीभाराणां चे'ति । तत्र बहुवचननिर्देशाद्दासीभारादीनामिति विज्ञास्यते ।

**पण्यंकम्बलः संज्ञायाम् ॥ २ ॥**

पण्यंकम्बलः संज्ञायामिति वक्तव्यम् । यो हि पणितव्यः कम्बलः पण्यकम्बलः* एवासौ भवति ।

अपर आह—पण्यंकम्बल एव यथा स्यात्† । क्व मा भूत् ? पण्यगवः

प्र०—द्वन्द्वसमासार्थाश्रयं मत्वा वचनं, विभक्त्यलोपस्तु सौत्रत्वान्निर्देशस्य स्यात् । योगविभाग इति । नायं द्वन्द्वः, किं तर्हि ? असमस्तान्येव पदानि निर्दिष्टानि । तथा च तैतिलकद्रूः पण्यकम्बल इति विभक्तिरुच्चारिता । तत्र दासीभारशब्दसहचरितेषु तद्रूपारोपेण बहुवचननिर्देशः । एवं च गणपाठः संगृहीतो भवति ।

पण्यंकम्बलः संज्ञायामिति । कृत्यप्रत्ययान्तत्वात्पूर्वपदप्रकृतिस्वरे सिद्धे नियमार्थं वचनम् । 'संज्ञायामेव पण्यकम्बलः प्रकृतिस्वरपूर्वपदो भवति नान्यत्रे'ति । तत्र नियतप्रमाणो नियतमूल्यो व्यावहारिको यः कम्बलस्तस्य पण्यकम्बल इति संज्ञेत्याहुः ।

अपर आहेति । 'कम्बल एवोत्तरपदे पण्यशब्दः प्रकृतिस्वरो यथा स्यादन्यत्र मा' भूदिति नियमः । पण्यगव इति । पण्यो गौरिति विशेषणसमासः । 'गोरतद्धितलुकी'ति टच् समासान्तः । अत्र तु चित्त्वादेवान्तोदात्तत्वं सिद्धमिति द्वितीयमुदाहरणमुक्तम्—पण्यहस्तीति । 'कृत्यतुल्याख्या अजात्ये'त्येतत्तु गुणक्रियावाचिनोर्विशेषणविशेष्यभावस्यानियमात्

उ०—ननु द्वन्द्वे 'तैतिलकद्रूः' 'पण्यकम्बल' इति विभक्तिश्रवणं न स्यादत आह—विभक्त्यलोप इति । ननु द्वन्द्वे सति कथं विभागोऽत आह—नायं द्वन्द्व इति । आद्यौ लुप्तविभक्तिकौ निर्दिष्टौ, इतरे प्रथमैकवचनान्ताः, प्रथमा च षष्ठ्याः स्थाने इति भावः । कथं बहुवचनादाद्यर्थावगतिस्तत्राह—तत्रेति एवञ्चेति । अन्यथा सोऽनर्थकः स्यादिति भावः । अत्र भाष्ये योगविभागेन सर्वेषां भिन्नपदत्वं सूचितम् ।

कृत्यप्रत्ययान्तत्वादिति । न च 'लक्षणप्रतिपदोक्त'परिभाषया 'कृत्यतुल्याख्या' इति समासे एव पूर्वपदप्रकृतिस्वरः । न चात्र तेन समासः, कम्बलस्य जातित्वादिति वाच्यम्, भाष्यादिप्रामाण्येनैतदंशे तत्परिभाषाया अप्रवृत्तेः । किं च स्वरविधायके 'कृत्यतुल्याख्या' इत्येव वक्तव्ये कृत्यतुल्यार्थयोर्वियोगपाठे नार्थपदघटितपाठेन च तदंशे परिभाषाया अप्रवृत्तिरित्याशयात् । अत्र त्विति । नियमसाध्यान्तोदात्तत्वस्य चित्स्वरेणैव सिद्धिरित्यर्थः । 'पण्यगवय' इति पाठ इत्यन्ये । नन्वजात्येति निषेधात्कथमत्र विशेषणसमासोऽत

* समासस्य ६ । १ । २२३ ।

† तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः ६ । २। २ ।

पण्यहस्ती* ॥ ४२ ॥

## अहीने द्वितीया ॥ ६ । २ । ४७ ॥

अहीने इति किमर्थम् ? कान्तारातीतः योजनातीतः‡ ।

### अहीने द्वितीयानुपसर्गे ॥ १ ॥

अहीने द्वितीयानुपसर्ग इति वक्तव्यम् । इह मा भूत्– [ सुखं प्राप्तः ] सुखप्राप्तः [ दुःखं प्राप्तः ] दुखःप्राप्तः‡ ।

तत्तर्हि वक्तव्यम् । यद्यप्येतदुच्यतेऽथवैतर्ह्यहीनग्रहणं न करिष्यते । इहापि कान्तारातीतः योजनातीत इत्यनुपसर्ग इत्येव सिद्धम् ॥ ४७ ॥

प्र०—पूर्वनिपातानियमप्रसङ्गे कृत्यान्तस्य पूर्वनिपातार्थं वचनं, न तु जातिप्रतिषेधार्थम् । 'अजात्ये'ति तु वचनं न्यायसिद्धार्थानुवाद एवेति भाष्यकारमतानुसारिण आहुः । 'तत्पुरुषे तुल्यार्थे'त्यत्र प्रतिपदोक्त.परिभाषा कृत्येषु यदा नाश्रीयते तदा नियमार्थत्वमुच्यते । तदाश्रयणे तु विध्यर्थत्वान्नियमानुपपत्तिः, नापि 'पण्यगव' इत्यादौ प्रकृतिस्वरप्रसङ्गः ॥ ४२ ॥

अहीने । थाथादिस्वरापवादो योगः । अहीन इति किमर्थमिति । प्रत्याख्यानाय प्रश्नः । कान्तारातीत इति । कान्तारं त्यक्तवानित्यर्थे 'द्वितीयाश्रिते'ति समासः । हीनवाच्यत्र द्वितीयान्तमिति थाथादिस्वरो भवति । सुखप्राप्त इति । अत्रापि थाथादिस्वरः । अनुपसर्गग्रहणे चेह क्रियमाणे प्रवृद्धादिषु खट्वारूढशब्दो न पठितव्यः, आरूढशब्दस्य सोपसर्गत्वादेतत्स्वराभावे थाथादिस्वरेणान्तोदात्तत्वस्य सिद्धत्वात् ॥ ४७ ॥

उ०—आह—कृत्येत्यादि । यत्र सामान्यलक्षणेन समासे पूर्वनिपातानियमप्राप्तिस्तत्र तन्नियमार्थमिदं, स च गुणक्रियावाचिभ्यां समास एवेति अन्यत्रास्याप्रसक्तिरिति कृत्यांशे न्यायसिद्धार्थकथनमजात्येतीत्यर्थः । यदि तु क्वचिद्भोज्य ओदन इत्यादौ समासो नेष्यते तर्हि स एव बाहुलकात्साध्य इति तेषामाशयः । यदा नाश्रीयते इति । अनाश्रयणमेवोचितमिति प्रागुक्तम् ॥ ४२ ॥

अहीने । 'तत्पुरुषे तुल्यार्थे'त्यनेन सिद्धे सूत्रं व्यर्थमत आह—थाथादीति । हीनवाचीति । विभागवद्वाचीत्यर्थः ॥ ४७ ॥

* समासस्य ६ । १ । २२३

‡ थाथघञ्क्ताजबित्रकाणाम् ६ । २ । १४४ ।　　१—क्वाचित्कः पाठः ।

## गतिरनन्तरः ॥ ६ । २ । ४६ ॥

अनन्तर इति किमर्थम् ? इह मा भूत् अभ्युद्धृतम् उपसमाहृतम् ।

**गतेरनन्तरग्रहणमनर्थकं गतिर्गतावनुदात्तवचनात् ॥ १ ॥**

गतेरनन्तरग्रहणमनर्थकम् । किं कारणम् ? गतिर्गतावनुदात्तवचनात् । गतौ परतो गतेरनुदात्तत्वमुच्यते* तद्बाधकं भविष्यति ।

**तत्र यस्याप्रकृतिस्वरत्वं तस्मादन्तोदात्तप्रसङ्गः ॥ २ ॥**

तत्र यस्य गतेरप्रकृतिस्वरत्वं तस्मादन्तोदात्तत्वं प्राप्नोति । 'अन्तस्थाथघञ्क्ता-

प्र०—गतिरनन्तरः । अनन्तर इति किमर्थमिति । किं व्यवहितगतिनिवृत्त्यर्थम्, अथानन्तरस्यैवापूर्वपदस्यापि गतेस्थाथादिस्वरबाधनार्थं प्रकृतिस्वरविधानार्थम्, अथ कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति परिभाषाज्ञापनार्थमित्यनेकार्थसंभवात् प्रश्नः । अभ्युद्धृतमिति । कृद्ग्रहणपरिभाषया क्तान्त उद्धृतशब्दे परतोऽभिशब्दस्य प्रकृतिस्वरो मा भूदित्येवमर्थमनन्तरग्रहणम् । ननु च क्रियमाणेऽप्यनन्तरग्रहणे प्राप्नोत्येव, उद्धृतशब्दस्य क्तान्तस्यानन्तर एव हि गतिर्भवतीति । अनन्तरग्रहणसामर्थ्याद्धातोरनन्तरो गतिराश्रीयत इत्यदोषः ।

तद्बाधकमिति । परत्वादिति भावः । तस्माद्व्यवहितगतिनिवृत्त्यर्थमनन्तरग्रहणं न कर्तव्यम् । तत्र यस्येति । 'गतिर्गता'विति निघाते कृते अभेः प्रकृतिस्वरो नास्ति । तस्मात्तु परस्योद्धृतशब्दस्य सतिशिष्टत्वात्थाथादिस्वरेणान्तोदात्तत्वं प्राप्नोति । तत्कथम् ? उच्यते । उद्धृतशब्दे तावत्समासस्वराव्ययस्वरकृत्स्वरथाथादिस्वरेषु प्राप्तेषु गतिस्वरस्ततोऽभेः समासे कृते कक्ष्यान्तरप्राप्तस्थाथादिस्वरः प्राप्नोति, कृद्ग्रहणपरिभाषयोद्धृतशब्दस्य क्तान्तत्वात् । तथा हि समासे कृते समासान्तोदात्तत्वं प्राप्नोति । ततस्तदपवादः कृत्स्वरेणोद उदात्तत्वं प्राप्नोति ।

उ०—गतिरनन्तरः । अपूर्वपदस्यापीति । 'अभ्युद्धृत'मित्यादौउ द्धृतशब्देनाभेः समासे तं प्रत्युदादेः पूर्वपदत्वाभावाद्विध्यर्थमिति भावः । तदाह—प्रकृतिस्वरविधानार्थमिति । सिद्धान्तपक्षमाह—अथ कृदिति । आनन्तर्यं च अनन्तरग्रहणसामर्थ्याद्गत्याक्षिप्तधातुनिरूपितं बोध्यम् । तदाह—धातोरनन्तर इति ।

परत्वादितीति । अस्यावकाशः—प्रकृत इति । 'गतिर्गता'वित्यस्यासमासेऽभ्युद्धरतीत्यवकाशः । समासेऽभ्युद्धृतमित्यत्र परत्वान्निघात इति भावः । तस्माद्व्यवहितेति । धातोर्व्यवहितेत्यर्थः ॥ तत्कथमिति । सतिशिष्टत्वं कथमिति प्रश्नः । कृद्ग्रहणपरिभाषयेति । यद्यप्यग्रे इयं ज्ञापनीयेति नाद्याप्येषा सिद्धा, तथापि व्याकरणान्तरप्रसिद्ध्या 'पुंयोगा'दिति सूत्रभाष्योक्तलक्ष्यानुरोधेन च इयमपि लक्ष्यसंस्कारिकेति

* गतिर्गतौ ८ । १ । ७० ।

जबित्रकाणाम्' [ ६ । २ । १४३; १४४ ] इति ।

प्रकृतिस्वरवचनाद्ध्यनन्तोदात्तत्वम् ॥ ३ ॥

प्रकृतिस्वरवचनसामर्थ्याद्ध्यन्तोदात्तत्वं न भविष्यति । यदि हि स्यात् प्रकृतिस्वरवचनमिदानीं किमर्थं स्यात् ?

प्रकृतिस्वरवचनं किमर्थमिति चेदेकगत्यर्थम् ॥ ४ ॥

प्रकृतिस्वरवचनं किमर्थमिति चेदेकगत्यर्थम् । यत्रैको गतिस्तदर्थमेतत्स्यात्—प्रकृतम् प्रहृतम् ॥ एवमर्थमेव तर्ह्यनन्तरग्रहणं कर्तव्यमत्र यथा स्यात् ।

क्रियमाणेऽपि वा अनन्तरग्रहणेऽत्र न सिध्यति । किं कारणम् ? 'गतिरनन्तरः पूर्वपदं प्रकृतिस्वरं भवती'त्युच्यते यश्चात्र गतिरनन्तरो नासौ पूर्वपदं यश्च पूर्वपदं नासावनन्तरः ॥ अपूर्वपदार्थं तर्हीदं वक्तव्यम् । अपूर्वपदस्यापि गतेः प्रकृ-

प्र०—ततस्तदपवादथाथादिस्वरप्रसङ्गः ।

प्रकृतिस्वरवचनादिति । नाप्राप्ते थाथादिस्वरे गतिस्वर आरभ्यमाणस्तद्बाधकः । य एको गतिरिति । एकस्मिन्नेव गतावस्य बाधकत्वम् । अभ्युद्धृतादौ तु कक्ष्यान्तरप्राप्तत्वात्थाथादिस्वर एव सतिशिष्टत्वाद्बलवत्त्वात् प्राप्नोति । एवमर्थमेवेति । कक्ष्यान्तरप्राप्तस्यापि थाथादिस्वरस्य बाधनार्थमनन्तरग्रहणमित्यर्थः । यत्र ह्येक एव गतिस्तत्रानन्तरग्रहणस्य न प्रयोजनमित्यनेकगतिसंनिधावप्राप्तस्य गतिस्वरस्यानन्तरग्रहणेन पुनः श्रुत्या प्राप्तिः क्रियते । क्रियमाणेऽपीति । 'कुगतिप्रादय' इत्यत्र 'सुपे'ति निवृत्तं, 'सु'बित्यनुवर्तत एव, निष्कृतादिषु पदकार्यप्रसिद्ध्यर्थम् । तत्र युगपत्समुदायस्य सुबन्तत्वाभावात्समासस्याप्रसङ्गात् क्रमेणासौ विधेयस्ततोऽभिशब्दस्योद्धृतशब्देन समासे सत्यभिशब्द एव पूर्वपदं नोच्छब्द इति पूर्वपदस्य गतेः प्रकृतिस्वरो विधीयमानः सत्यप्यनन्तरग्रहणेऽपूर्वपदत्वादुदो न प्राप्नोतीत्यर्थः । अपूर्वपदार्थं तर्हीति । श्रुत्या

उ०—भावः । अग्रे तु सूत्रकृतापि बोधिताश्रयणेत्येतावद्बोध्यत इति बोध्यम् । कक्ष्यान्तरप्राप्तत्वमुपपादयति—तथा हीति ।

उक्तमर्थमजानतः 'प्रकृतिस्वरवचना'दिति वचनमित्याह—नाप्राप्ते इति ।[1] थाथादिस्वरस्य बाधनार्थमिति । पुनर्विधानद्वारेति भावः । पुनःश्रुत्येति । वाक्यभेदेन पुनर्विधानादभ्युद्धृतमित्यत्र कक्ष्यान्तरप्राप्तः सतिशिष्टोऽपि थाथादिस्वरो बाध्यत इत्यर्थः । नन्वभ्युदोर्युगपदेव क्तान्तेन समासेऽविशेषाद् द्वयोरपि पूर्वपदत्वमस्त्येवेति शङ्कायां वास्तवमेव समाधानमाह—कुगतीति । सुबन्तसमुदायस्येति । गतिसमुदायस्य गतिग्रहणेनाग्रहणादित्यपि बोध्यम् । एवं च 'सुबित्यनुवर्तते' इत्यादेरुपयोगश्चिन्त्यः । तदन-

१—'य एको' पा० ।

तिस्वरत्वं यथा स्यात् ।

**अपूर्वपदार्थमिति चेत् कारकेऽतिप्रसङ्गः ॥ ५ ॥**

अपूर्वपदार्थमिति चेत्कारकेऽतिप्रसङ्गो भवति । आगतः दूरादागतः† । स यथैव गतिपूर्वपदस्य भवत्येवं कारकपूर्वपदस्यापि प्राप्नोति ।

**सिद्धं तु गतेरन्तोदात्तप्रसङ्गात् ॥ ६ ॥**

सिद्धमेतत् । कथम् ? यत्तदन्तस्थाथघञ्क्ताजबित्रकाणामित्येतद्गतेर्न प्रसङ्क्तव्यम् । किं कृतं भवति ? कृत्स्वरापवादोऽयं‡ भवति । तत्र 'गतिरनन्तर' इत्यस्यावकाशः—प्रकृतम् प्रहृतम् । 'अन्तस्थाथघञ्क्ताजबित्रकाणा'मित्यस्यावकाशः—दूराद्गतः दूराद्यातः । इहोभयं प्राप्नोति—आगतः दूरादागतः । 'अन्तस्थाथघञ्क्ता-

प्र०—प्रकरणं दुर्बलं बाध्यते । तत्र योगविभागः क्रियते । गतिः पूर्वपदं प्रकृतिस्वरो भवति । ततोऽनन्तरो गतिरपूर्वपदमपि प्रकृत्येति ।

इदानीमतिप्रसङ्गमाह—अपूर्वपदार्थमिति चेदिति । दूरादागत इति । अत्र कर्मणि क्तो विधेयः । 'तृतीया कर्मणी'त्यत इह कर्मग्रहणानुवर्तनात्कर्मवाचिनः क्तस्य ग्रहणम् । अत्र थाथादिस्वर इष्यते । गतिस्वरश्चानन्तरग्रहणात्प्राप्नोति ।

सिद्धं त्विति । थाथादिसूत्रे कारकोपपदग्रहणमेवानुवर्तते न गतिग्रहणम्, अस्वरितत्वात् । ततश्च गतिस्वरः कृत्स्वरस्यापवादो न थाथादिस्वरस्य, तत्र दूरादागते कृत्स्वरापवादयोर्गतिस्वरथाथादिस्वरयोः प्रसङ्गे परत्वात् थाथादिस्वर एव प्रवर्तते । अनन्तरग्रहणं त्वपूर्वपदार्थमभ्युद्धृता-

उ०—नुवृत्तेरेव तत्रत्यभाष्याल्लाभाच्च । ननु पूर्वपदाधिकारे सति कथमपूर्वपदार्थत्वमत आह—श्रुत्येति । ननु कथमपूर्वपदार्थत्वं, प्रकृतमित्यादौ चारितार्थ्यादत आह—तत्र योगेति ।

कर्तरि क्ते एतदप्राप्तिं दर्शयति—तृतीयेति । उदाहरणे 'स्तोकान्तिके'ति समासः । पञ्चम्याः स्तोकादिभ्य' इत्यलुक् । गतिस्वरः—आङ्स्वरः ।

न थाथादिस्वरस्येति । एवं च थाथादिस्वरेण न गतिस्वरः स्पर्धते इति भावः । तदाह—तत्रेति । नन्वनन्तरग्रहणसामर्थ्यादभ्युद्धृते कृत्स्वरबाधवदत्र थाथादिस्वरस्यापि बाधः स्यादत आह—अनन्तरग्रहणं त्विति । अयं भावः—अनन्तरशब्दोऽननन्तरमपेक्ष्य प्रवर्तते, तत्रानन्तरो गतिरित्युक्तेऽननन्तरोऽपि गतिरेव प्रतीयते सन्निधानात्, ततश्चापूर्वपदार्थमप्यनन्तरग्रहणं गतिद्वयसमवधाने एवापूर्वपदभूतस्यानन्तरस्य प्रकृतिस्वरत्वं प्रापयतीति । तदाह—अभ्युद्धृतादावेवेति । न तु दूरादागतादावित्यर्थः ।

† स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन २ । १ । ३९; पञ्चम्याः स्तोकादिभ्यः ६ । ३ । २; ( थाथघञ्क्ताजबित्रकाणाम् ६ । २ । १४४ )

‡ गतिकारकोपपदात् कृत्; गतिरनन्तरः; थाथघञ्क्ताजबित्रकाणाम् ६ । २ । १३९, ४९ । १४४ ।

जवित्रकाणा'मित्येतद्भवति विप्रतिषेधेन ॥ अवश्यं गतेस्तत् प्रसङ्क्तव्यं भेदः प्रभेद इत्येवमर्थम् ।

एवं तर्हि योगविभागः करिष्यते* । 'अन्तस्थाथघञ्जवित्रकाणाम्' । ततः 'क्तः', क्तान्तमुत्तरपदमन्तोदात्तं भवति । अत्र कारकोपपदग्रहणमनुवर्तते गतिग्रहणं† निवृत्तम् ।

अथवोत्तरिष्टाद्योगविभागः करिष्यते× । इदमस्ति 'सूपमानात् क्तः' 'संज्ञायामनाचितादीनां' 'प्रवृद्धादीनां च' [ ६ । २ । १४५-१४७ ] इति । ततो वक्ष्यामि 'कारकात्' कारकाच्च क्तान्तमुत्तरपदमन्तोदात्तं भवति । ततो 'दत्तश्रुतयोरेवाशिषि' कारकादिति ।

एवं च कृत्वा नार्थोऽनन्तरग्रहणेन ॥ कथमभ्युद्धृतम् ? उद् हरतिक्रियां

प्र०—द्वावेव स्वरं संपादयति । प्रकृतमिति । अवकाशप्रदर्शनमात्रमेवानेन कृतमनन्तर इत्यस्य त्वभ्युद्धृतादिरवकाशः प्रदर्शयितव्यः । अवश्यं गतेरिति । थाथादिसूत्रेऽवश्यानुवर्त्यं गतिग्रहणमन्यथा प्रभेद इत्यत्र कृत्स्वरेण घञो ञित्त्वाद्धातोरुदात्तत्वं स्यादन्तोदात्तत्वं चेष्यते । एवं तर्हीति । थाथादिसूत्रात् क्तग्रहणमपनीय पृथक्कर्तव्यम् । गतिग्रहणं निवृत्तमिति । ननु 'विशुष्क' इत्यादौ कृत्स्वरेणोत्तरपदाद्युदात्तत्वं प्राप्नोति । 'शुष्कधृष्टा'वित्याद्युदात्तत्वविधानादन्तोदात्तत्वं चेष्यते इत्याशङ्क्य योगविभागान्तरमाह—कारकादिति । तत्र 'दूरागत' इत्यादौ थाथादिस्वरेणैवान्तोदात्तत्वस्य सिद्धत्वात्कारकादित्ययं योगो 'गतिरनन्तर' इत्यस्य बाधको विज्ञायते ।

एवं चेति । 'कारका'दिति योगविभागे सति अनन्तरग्रहणं न कर्तव्यम् । कथमिति चेत् । उच्यते । 'आगत' इत्यस्य गतिस्वरेणाद्युदात्तत्वे प्रवृत्ते दूरशब्दस्य स्तोकान्तिकेति समासस्ततः कक्ष्यान्तरप्राप्त्या समासस्वरः प्राप्नोति । ततः कृत्स्वरस्ततः क्तस्वरः, इत्येव क्तस्वरे सिद्धे

उ०—अवकाशप्रदर्शनमात्रमिति । गतिस्वरस्यैवमादिरवकाश इत्येव विवक्षितोऽर्थो विशेषस्तु विमर्शदशायां प्रतिपत्तुं शक्यत इत्याह—अभ्युद्धृतादिरिति । अन्तोदात्तत्वं चेष्यत इति । 'थाथादिस्वरेणे'ति शेषः ।

ननु पृथक् क्तग्रहणाभावात्कथं योगविभागः स्यादत आह-थाथादिसूत्रादिति । ननु विशुष्क इति । अत्राकर्मकत्वेन कर्तृक्तान्तत्वाद्गतिस्वरो नास्ति । 'कारका'दिति योगविभागे यथेष्टसिद्धिस्तथा दर्शयति—तत्रेति । बाधक इति । 'दूरादागत' इत्यादौ । एवं शब्दार्थमाह—कारकादितीति । इदमुपलक्षणम्, गतिग्रहणनिवृत्तिपक्षेऽपि ह्युक्तं प्रत्युदः पूर्वपदत्वाद्वत्या गतिस्वरे कृदुत्तरपदप्रकृतिस्वरेण सिद्धेऽनन्तरग्रहण-

* थाथघञ्क्ताजवित्रकाणाम् ६ । २ । १४४ । † गतिकारकोपपदात् कृत् ६ । २ । १३९ ।

× कारकाद्दत्तश्रुतयोरेवाशिषि ६ । २ । १४८ ।

विशिनष्टि । उदा विशिष्टामभिविंशिनष्टि । तत्र 'गतिरनन्तर' इति च प्राप्नोति 'गतिर्गतौ' [ ८ । १ । ७० ] इति च । 'गतिरनन्तर' इत्यस्यावकाशः—प्रकृतम् प्रहृतम् । गतिर्गतावित्यस्यावकाशः—अभ्युद्धरति उपसमादधाति । इहोभयं प्राप्नोति—अभ्युद्धृतम् उपसमाहृतम् । 'गतिर्गता'वित्येतद्भवति विप्रतिषेधेन ।

एवं तर्हि सिद्धे सति यदनन्तरग्रहणं करोति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा 'कृद्ग्रहणे गतिकारकपूर्वस्यापी'ति । किमेतस्य ज्ञापने प्रयोजनम् ? अवतप्तेनकुलस्थितं त एतत् । उदकेविशीर्णं त एतत् । सगतिकेन सनकुलेन [ च ]

प्र०—कारकादिति सूत्रं नियमार्थम् । तत्र च गतिग्रहणमनुवर्तते । तेनायमर्थः 'कारकादेव परं गतिपूर्वपदं क्तान्तमन्तोदात्त'मिति । तेनाभ्युद्धृत इत्यादौ परत्वाद्गतिनिघाते उदात्तस्वरितानुवृत्त्या सर्वानुदात्तस्य प्रकृतिभावाभावे, थाथादिस्वरे च नियमेन निवर्तिते, कृत्स्वरेण उद एवोदात्तत्वं भविष्यतीत्यर्थः । कथमिति । अपूर्वपदत्वादुच्छब्दस्य गतिस्वरो न प्राप्नोतीति तदर्थमनन्तरग्रहणं स्यादिति मत्वा प्रश्नः । उद्धरतिक्रियामिति । अयमर्थः—उच्छब्देन पूर्वं हरतेः संबन्धादेक उद्धृतशब्दयोः समासस्तत्रोच्छब्दस्य पूर्वपदत्वाद्भवति गतिस्वरः । पश्चादभिशब्दस्य समासेऽभेर्गतिस्वरं बाधित्वा निघातेन भाव्यम् । तत्र कृदुत्तरपदप्रकृतिस्वरेण उद एव गतिस्वरो भविष्यति नार्थोऽनन्तरग्रहणेन । अथचोद्धरतिक्रियामित्यादिनाभेर्गतित्वं प्रतिपाद्यते ।

एवं तर्हीति । परविप्रतिषेधमनपेक्ष्य व्यवहितगतिनिवृत्त्यर्थमनन्तरग्रहणं क्रियते । यदि च कृद्ग्रहणपरिभाषा न स्यात्, ततः क्तान्त उत्तरपदे गतेः स्वरो विधीयमानो व्यवहितस्य न प्राप्नोतीति किं तन्निवृत्त्यर्थेनानन्तरग्रहणेन ? तत्कृतमेतां परिभाषां ज्ञापयति । परिभाषाज्ञापनार्थमेव च परविप्रतिषेधो नापेक्ष्यते । ननु च कृद्ग्रहणे गतिपूर्वस्यापि ग्रहणं ज्ञाप्यतां, कारकपूर्वस्य

उ०—मनर्थकमेवेत्यपि बोध्यम् । क्तस्वरः—थाथाघञित्यन्तोदात्तत्वम् । गतिपूर्वपदमिति । 'गतिकारकोपपदा'दित्यत एकदेशे स्वरितत्वप्रतिज्ञया पञ्चम्यन्तगतिग्रहणानुवृत्त्यायमर्थो लभ्यते । ननु परत्वान्निघातेऽपि पुनःप्रसङ्गविज्ञानाद्गतिरनन्तर इति प्रकृतिस्वरः स्यादत आह—उदात्तस्वरितेति । ननूक्तन्यायेनाभ्युद्धृतस्य सिद्धेः प्रश्नानुपपत्तिरत आह—अपूर्वपदत्वादिति । युगपद्द्वाभ्यां समास इत्यभिमानः । क्रमेण समासप्रवृत्त्या स्वरासिद्धिरित्याह—अयमर्थ इति । अभेर्गतित्वमिति । उद्धरणक्रियाविशेषणत्वात् । तेन गतिनिघातप्रवृत्त्युपपत्तिर्दर्शिता । अत्राद्यव्याख्यानमेव युक्तम् ।

परविप्रतिषेधमनपेक्ष्येति । क्वचित्तु 'पूर्वप्रतिषेधमपेक्ष्ये'ति पाठः । एवं चाभ्युद्धृतमित्यादौ 'गतिर्गता'वित्यतः पूर्वविप्रतिषेधेन 'गतिरनन्तर' इति प्रवृत्तेर्व्यवहितनिवृत्त्यर्थमनन्तरग्रहणमित्यर्थः । वस्तुतो यदाभिशब्दः पादादौ तदा 'गतिर्गता'वित्यस्य प्रवृत्तिरेव नेति तत्र व्यवहितनिवृत्त्यर्थमनन्तरग्रहणमिति भाष्याशयः । व्यवहितस्य नेति । उद्धृतशब्दस्य क्तान्तत्वाभावादिति भावः । सैवास्यनुज्ञायत

समासः§ सिद्धो भवति ॥ ४६ ॥

## तादौ च निति कृत्यतौ ॥ ६ । २ । ५० ॥

कृद्ग्रहणं किमर्थम् ? यथा तकारादिग्रहणं कृद्विशेषणं विज्ञायेत—तकारादौ निति कृतीति । अथाक्रियमाणे कृद्ग्रहणे कस्य तकारादिग्रहणं विशेषणं स्यात् ? उत्तरपदविशेषणम् । तत्र को दोषः ? इहैव स्यात्—प्रतरिता प्रतरितुम् । इह न स्यात्—प्रकर्ता प्रकर्तुम् ।

**तादौ निति कृद्ग्रहणानर्थक्यम् ॥ १ ॥**

तादौ निति कृद्ग्रहणमनर्थकम् । क्रियमाणेऽपि कृद्ग्रहणेऽनिष्टं शक्यं विज्ञातुम्—'तकारादावुत्तरपदे निति कृती'ति । अक्रियमाणे चेष्टम्—'निद्यस्तकारादिस्तदन्त उत्तरपद' इति । यावता क्रियमाणेऽप्यनिष्टं विज्ञायतेऽक्रियमाणे चेष्टम्, अक्रियमाण एवेष्टं विज्ञास्यामः ।

**कृदुपदेशे वा ताद्यर्थमिडर्थम् ॥ २ ॥**

कृदुपदेशे तर्हि ताद्यर्थमिडर्थं कृद्ग्रहणं कर्तव्यम् । 'कृदुपदेशे यस्तकारादि'रित्येवं

---

प्र०—कथं ज्ञाप्यते ? उच्यते । पूर्वाचार्यैस्तावदेषा परिभाषा पठिता, इह त्वनन्तरग्रहणेन सैवाभ्यनुज्ञायते ॥ ४९ ॥

तादौ च । गतेः स्वरविधानात्क्रियायोगे गतिसंज्ञाविधानात्तकारादिः कृदेव संभवति नान्य इति मत्वाह—कृद्ग्रहणं किमर्थमिति । यथेति । 'निती'त्यनेन प्रत्ययग्रहणपरिभाषया तदन्तस्योपस्थानात्तस्यैव तकारादित्वं विशेषणं स्यात् । कृद्ग्रहणे तु श्रुतस्य तादित्वं विशेषणं विज्ञायते ।

तादौ नितीति । यथा 'उतश्च प्रत्ययादसंयोगपूर्वा'दित्यत्र विशेषणविशेष्यभावे कामचारादसंयोगपूर्वग्रहणेनोकारो विशेष्यते, न तु प्रत्ययस्तथेहापि तादिग्रहणेन निद्विशेष्यते, न तु तदन्तम् ।

कृदुपदेशे वेति । वाशब्दस्तर्ह्यर्थे । कृतामुपदेशः शास्त्रं तत्र यस्तादिरिति प्रत्ययार्थं

---

उ०—द्वति । एकदेशानुमतिद्वारा कृत्स्ना परिभाषा ज्ञाप्यत इत्यर्थः ॥ ४६ ॥

तादौ च । ननु प्रभृत्तिकेत्यादावकृन्निवृत्त्यर्थं कृद्ग्रहणं स्यादत आह-गतेरिति । तिङां तु नित्वस्यैवाभावादिति भावः । प्रत्ययग्रहणपरिभाषयेति । अतादाविति पर्युदासेन नितः प्रत्ययस्यैव ग्रहणादिति भावः । अनिष्टमिति । नित्कृदन्ते तकारादावुत्तरपदे इत्यर्थरूपम् ॥ नन्वसति कृद्ग्रहणे प्राधान्यात्तदन्तविशेषणतैव युक्ता न तु प्रत्ययविशेषणतेत्यत आह-यथोतश्चेति । 'गुणः कृतात्मसंस्कार' इति न्यायादिति भावः । पूर्वप्रयोजनस्य दूषितत्वेन वाशब्दोऽसङ्गतोऽत आह-तर्ह्यर्थमिति । उपदेशः शास्त्रमिति । करणव्यु-

---

§ द्वेपे २ । १ । ४७ ।

यथा विज्ञायेत । किं प्रयोजनम् ? इडर्थम् । इडादावपि सिद्धं भवति । प्रलंविता प्रलंवितुम् ॥ ५० ॥

## अनिगन्तोऽञ्चतौ वप्रत्यये ॥ ६ । २ । ५२ ॥

### अनिगन्तप्रकृतिस्वरत्वे यणादेशे प्रकृतिस्वरभावप्रसङ्गः ॥ १ ॥

अनिगन्तप्रकृतिस्वरत्वे यणादेशे प्रकृतिस्वरभावः प्राप्नोति । प्रत्यङ् प्रत्यञ्चौ प्रत्यञ्चः । अनिगन्तवचनमिदानीं किमर्थं स्यात् ?

### अनिगन्तवचनं किमर्थमिति चेद्यणादिष्टार्थम् ॥ २ ॥

अयणादिष्टार्थमेतत्स्यात् । यदा यणादेशो न । कदा च यणादेशो न ? यदा शाकलम्* ।

### उक्तं वा ॥ ३ ॥

किमुक्तम् ? समासे शाकलं न भवतीति† ।

यत्र तर्ह्यञ्चतेरकारो लुप्यते । प्रतीचः प्रतीचा । चुस्वरस्तत्र बाधको भविष्यति‡ । अयमेवेष्यते । वक्ष्यति ह्येतच्चोरनिगन्तोऽञ्चतौ वप्रत्यय इति§ ।

प्र०—कृद्ग्रहणमित्यर्थः ॥ ५० ॥

अनिगन्तो । अनिगन्तेति । 'प्रतीचे'त्यादावर्थवदनिगन्तग्रहणमिति प्रत्यङ्ङित्यत्र यणादेशे कृतेऽनिगन्तत्वात्प्रकृतिस्वरप्रसङ्गः ॥ अनिगन्तवचनमिति । 'प्रतीच' इत्यादिषु चुस्वरेण भाव्यमिति अनवकाशमनिगन्तग्रहणं मन्यते ।

उ०—त्पस्येति भावः । एवं च कृच्छ्रशब्देन कृच्छ्रात्रं लक्ष्यते इति तात्पर्यम् ॥ ५० ॥

अनिगन्तो । ननु अनिगन्तग्रहणसामर्थ्याद्यणादेशेऽपि प्रतिषेधः सिद्धोऽत आह—प्रतीच इत्यादाविति । यणादेशे इति । अन्तरङ्गत्वादिति भावः । चुस्वरेणेति । लुप्ताकारनकारेऽञ्चतौ परे विधानेन सतिशिष्टत्वाच्चाविति पूर्वपदान्तोदात्तत्वेनेत्यर्थः । भाष्ये—उक्तं वेति । 'अनिगन्ते'त्येतदपेक्षया विकल्पः ।

१—'प्रलपिता प्रलपितुम्' पा० । * इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ६ । १ । १२७ । † सिन्नित्यसमासयोः शाकलप्रतिषेधः ६ । १ । १२६ वा० १ । ‡ चौ ६ । १ । २२२ । § ६ । २ । ५२ वा० ४ ।

यत्तर्हि न्यध्योः प्रकृतिस्वरं शास्ति¶ । एष हि यणादिष्टार्थ आरम्भः । एतदप्ययणादिष्टार्थमेव स्यात् । यदा यणादेशो न । कदा च यणादेशो न ? यदा शाकलम् । उक्तं वा । किमुक्तम् ? समासे शाकलं न भवतीति । यत्र तर्ह्यञ्चतेरकारो लुप्यते । अधीचः अधीचा । चुस्वरस्तत्र बाधको भविष्यति । अयमेवेष्यते । वक्ष्यति ह्येतच्चोरनिगन्तोऽञ्चतौ वप्रत्यय इति§ ।

यत्तर्हि नेरेव प्रकृतिस्वरं शास्ति । एष हि यणादिष्टार्थ आरम्भः । एतदप्ययणादिष्टार्थमेव स्यात् । कथम् ? अकृते यणादेशे पूर्वपदप्रकृतिस्वरत्वे कृत 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' [ ८ । २ । ४ ] इत्येषस्वरः सिद्धो भवति । न्यङ् ॥ तस्मात्सुष्ठूच्यतेऽनिगन्तप्रकृतिस्वरत्वे यणादेशे प्रकृतिस्वरभावप्रसङ्ग इति ।

प्र०—यत्तर्हि न्यध्योरिति । 'न्यध्योरेव कृते यणादेशे प्रकृतिस्वरो नान्यस्ये'ति नियम आश्रीयते । यत्र तर्हीति । अधीचेत्यादावित्यर्थः ॥ यत्तर्हि नेरेवेति । निशब्दस्यैकाच्त्वात् 'नीचा' इत्यादौ चुस्वरस्य प्रकृतिस्वरस्य च विशेषो नास्ति । एष हि यणादिष्टार्थ इति । ननु नेर्यणादेशे कृतेऽनचकत्वात्कस्य स्वरः ? एवं मन्यते । यत्र यण्¹भविष्यते तस्मिन्विषयेऽन्तरङ्गमपि यणं बाधित्वा पूर्वं नेः स्वरो भवति । एवं प्रत्यङ्गादिष्वनिगन्त इति प्रतिषेधो भविष्यति, पश्चाद्यणादेशः । एतदपीति । वचनसामर्थ्यादकृत एवान्तरङ्गे यणादेशे निशब्दस्वरो भवति । यणि कृते स्वरभाजोऽभावात् । प्रत्यङ्गादिषु तु यणादेश एवान्तरङ्गत्वात् प्राप्नोति । तस्मादिति । न च यणादेशस्य स्थानिवद्भावोऽस्ति, पूर्वपदप्रकृतिस्वरविधानादपूर्वविधित्वात् ।

उ०—अयमेवेष्यत इत्यस्यायमेव चुस्वरस्य बाधक इष्यते न त्वस्य चुस्वर इत्यर्थः । तत्र बीजमाह—वक्ष्यति ह्येतच्चोरनिगन्तेति । एवं च परत्वात्प्राप्तस्यास्य निवृत्तयेऽनिगन्तग्रहणं चरितार्थमिति यणादेशेऽपि स्वरः प्राप्नोत्येवेति भावः । अथ ज्ञापकात्समाधातुमाह—यत्तर्हि न्यध्योरिति । तद्व्याचष्टे—न्यध्योरेवेति । यणि सति अनिगन्तत्वेन पूर्वेणैव सिद्धावयमारम्भो नियमार्थ इति भावः । अधिशब्दान्नेः को विशेषोऽत आह—निशब्दस्येति । भविष्यत इति । प्राप्स्यते इत्यर्थः । 'भविष्यती'ति क्वचित्पाठः । ननु नेरनिगन्त इति प्रकृतिस्वरेणासिद्धावस्य यणादिष्टार्थत्वे प्रकृते किमायामत आह—एवं प्रत्यङ्गादिष्विति । अत्रापि तद्वद्यणं बाधित्वा प्राप्तः स्वरोऽनिगन्त इति प्रतिषिध्यते । ततः कृदुत्तरपदप्रकृतिस्वरे पूर्वस्य निघाते उदात्तस्वरितयोगित्वाभावान्नैतत्स्वरप्रवृत्तिरितीष्टसिद्धिरित्यर्थः । निग्रहणेनान्तरङ्गादपि पूर्वं स्वरप्रवृत्तिरिति सामान्येन ज्ञाप्यत इति तात्पर्यम् । नन्वयणादिष्टार्थत्वेऽपि तेनैव न्यायेन प्रत्यङ्गादिषु स्वरसिद्धेरुक्तत्वात्को दोष इत्यतो वैषम्यमाह—वचनसामर्थ्यादिति । अपूर्वविधित्वादिति । तत्सहितस्य पूर्वपदत्वेनानादिष्टादचः पूर्वविधित्वाभावादिति भावः । भाष्ये—तस्मात्सुष्ठ्विति पूर्वपक्षः समीचीन एव । समाधिस्तु सुकरत्वान्नोक्तो वार्तिककृतेति भावः । स च 'नेन्द्रस्ये'ति निषेधेन स्वरसन्धेः पूर्वं पूर्वोत्तरपदनिमित्तकार्यज्ञापनरूप इति बोध्यम् ।

¶ न्यधी च ६ । २ । ५३ ।   १—'भविष्यति' पा०

## चौरनिगन्तोऽञ्चतौ वप्रत्यये ॥ ४ ॥

चुस्वरादनिगन्तोऽञ्चतौ वप्रत्यय इत्येष स्वरो भवति विप्रतिषेधेन । चुस्वरस्यावकाशः‡—दधीचः पश्य । दधीचा दधीचे । अनिगन्तोऽञ्चतौ वप्रत्यय इत्यस्यावकाशः—पराङ् पराञ्चौ पराञ्चः । इहोभयं प्राप्नोति—अवाचा अवाचे अनिगन्तोऽञ्चतौ वप्रत्यय इत्येतद्भवति विप्रतिषेधेन ।

## न वा चुस्वरस्य पूर्वपदप्रकृतिस्वरभाविनि प्रतिषेधादितरथा हि सर्वापवादः ॥ ५ ॥

न वैतद्विप्रतिषेधेनापि सिध्यति । कथं तर्हि सिध्यति ? चुस्वरस्य पूर्वपदप्रकृतिस्वरभाविनि प्रतिषेधात् । चुस्वरः पूर्वपदप्रकृतिस्वरभाविनः प्रतिषेध्यः । इतरथा हि सर्वापवादश्चुस्वरः । अक्रियमाणे हि प्रतिषेधे सर्वापवादोऽयं चुस्वरः । कथम् ? प्रत्ययस्वरस्यापवादोऽनुदात्तौ सुप्पितौ [ ३ । १ । ४ ] इति । अनुदात्तौ सुप्पितावित्यस्योदात्तनिवृत्तिस्वरः* । उदात्तनिवृत्तिस्वरस्य चुस्वरः । स यथैवोदात्तनिवृत्तिस्वरं बाधत एवमनिगन्तस्वरमपि बाधेत ।

यदि तावत्सङ्ख्यातः साम्यमयमपि चतुर्थः । समासान्तोदात्तत्वस्यापवादोऽव्ययस्वरः । अव्ययस्वरस्य कृत्स्वरः । कृत्स्वरस्यायम्† । उभयोश्चतुर्थयोर्युक्तो विप्रतिषेधः ।

सतिशिष्टस्तर्हि चुस्वरः । कथम् ? चावित्युच्यते । यत्रास्यैतद्रूपम् [ भवति । क्व चास्यैतद्रूपं भवति ? ] अजादावसर्वनामस्थानेऽभिनिर्वृत्तेऽकारलोपे नकारलोपे च

प्र०—यदि तावदिति । सर्वापवादत्वं चुस्वरस्य निवर्तयति । लक्षणगणनायां द्वयोरपि चतुर्थत्वमित्यर्थः । अव्ययस्वर इति । 'तत्पुरुषे तुल्यार्थे'ति प्रकृतिस्वरः । इह च गतिग्रहणमनुवर्तते । सतिशिष्ट इति । ततः सर्वापवाद एव चुस्वरः ।

उ०—नन्वनव्ययविषयेऽयं चरितार्थोऽत आह-इह च गतिग्रहणमिति । तेन पूर्वपदप्रकृतिस्वरापवादकृत्स्वरापवादत्वमस्य युज्यत इत्याशयः । ततः सर्वापवाद एवेति । सतिशिष्टतया सर्वबाधकत्वं वार्तिके विवक्षितं न तूत्सर्गापवादभावेनेति भावः । भाष्ये—पूर्वपदप्रकृतिस्वरभाविनीत्यस्यायमर्थः—पूर्वपदप्रकृतिस्वरस्य भावः सत्ता यत्रास्तीति ।

‡ चौ ६ । १ । २२२ । * अनुदात्तस्य च यत्रोदात्तलोपः ६ । १ । १६१ ।

† समासस्य ६ । १ । २२३; तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः; गतिकारकोपपदात् कृत्; अनिगन्तोऽञ्चतौ वप्रत्यये ६ । २ । २; १३९; ५२ । १—क्वचिन्न ।

[ कृते ]‡ । तस्मात्सुष्ठूच्यते 'न वा चुस्वरस्य पूर्वपदप्रकृतिस्वरभाविनि प्रतिषेधादितरथा हि सर्वापवाद' इति ।

## विभक्तीषत्स्वरात्कृत्स्वरः ॥ ६ ॥

विभक्तिस्वरादीषत्स्वराच्च कृत्स्वरो भवति विप्रतिषेधेन§ । विभक्तिस्वरस्यावकाशः—अक्षशौण्डः स्त्रीशौण्डः । कृत्स्वरस्यावकाशः—इध्मप्रव्रश्चनः [ पलाशशातनः ] । इहोभयं प्राप्नोति—पूर्वाह्णेस्फोटकाः अपराह्णेस्फोटकाः । कृत्स्वरो भवति विप्रतिषेधेन ।

ईषत्स्वरस्यावकाशः—ईषत्कडारः ईषत्पिङ्गलः । कृत्स्वरस्य स एव । इहोभयं प्राप्नोति—ईषद्भेदः । कृत्स्वरो भवति विप्रतिषेधेन ।

## चित्स्वराद्धारिस्वरः ॥ ७ ॥

चित्स्वराद्धारिस्वरो भवति विप्रतिषेधेन* । चित्स्वरस्यावकाशः—चलनः चोपनः । हारिस्वरस्यावकाशः—याज्ञिकाश्वः वैयाकरणहस्ती । इहोभयं प्राप्नोति—पितृगवः मातृगवः† । हारिस्वरो भवति विप्रतिषेधेन ।

## कृत्स्वराच्च ॥ ८ ॥

कृत्स्वराच्च हारिस्वरो भवति विप्रतिषेधेन¶ । कृत्स्वरस्यावकाशः—इध्मप्रव्रश्चनः [ पलाशशातनः ] । हारिस्वरस्य स एव । इहोभयं प्राप्नोति—अर्थहृतः वार्डवहार्यः । हारिस्वरो भवति विप्रतिषेधेन ।

---

प्र०—कृत्स्वरादिति । पूर्वविप्रतिषेधोऽत्र विवक्षितः । अक्षहृत इति । अनुदाहरणमेतदित्याहुः । अत्र हि 'तृतीया कर्मणी'त्यनेन कृत्स्वरापवादः पूर्वपदप्रकृतिस्वरत्वं प्राप्नोति । तत्परत्वादेव हारिस्वरो बाधते ।

---

उ०—भाष्ये–ईषत्स्वरादिति । 'ईषदन्यतरस्या'मिति विहितादित्यर्थः । पूर्वपदप्रकृतिस्वरविधायकमेतत् ।

'अक्षहृत' इत्यत्र तृतीयासमास इत्याशयेनाह—अनुदाहरणमेतदित्याहुरिति । अत्रारुचिबीजं तु सप्तमीसमासे दोषाभावः, अक्षविषयद्यूतेंऽशः सर्वथा देय इत्याचार इत्यत्रापि हारित्वसत्त्वादित्यन्ये ।

---

‡ अचः; अनिदितां हल उपधायाः क्ङिति ६ । ४ । १३८; २४ ।

§ तत्पुरुषे तुल्यार्थतृतीया०; ईषदन्यतरस्याम्; गतिकारकोपपदात् कृत् ६ । २ । २; ५४; १३९ ।

१—इदं क्वचिन्न ।  २—'स्फोटकः' पा० ।

* चितः ६ । १ । १६३; सप्तमीहारिणौ धर्म्येऽहरणे ६ । २ । ६५ ।

† गोरतद्धितलुकि ५ । ४ । ९२ ।

¶ गतिकारकोपपदात् कृत्; सप्तमीहारिणौ धर्म्येऽहरणे ६ । २ । १३९; ६५ ।

**न वा हरणप्रतिषेधो ज्ञापकः कृत्स्वराबाधकत्वस्य ॥ ६ ॥**

न वार्थो विप्रतिषेधेन । किं कारणम् ? हरणप्रतिषेधो ज्ञापकः कृत्स्वराबाधकत्वस्य । यदयमहरण इति प्रतिषेधं शास्ति§ तज्ज्ञापयत्याचार्यो 'न कृत्स्वरो हारिस्वरं बाधत इति ।

नैतदस्ति ज्ञापकम् । 'अनो भावकर्मवचनः' [ ६ । २ । १५० ]इत्येतस्मिन्प्राप्ते तत एतदुच्यते ।

यद्येवं साधीयो ज्ञापकम्—'कृत्स्वरस्यापवादोऽनो भावकर्मवचन' इति । बाधकं किलायं बाधते किं पुनस्तं [ न बाधिष्यते ] ।

**युक्तस्वरश्च ॥ १० ॥**

युक्तस्वरश्च कृत्स्वराद्भवति विप्रतिषेधेन‡ । युक्तस्वरस्यावकाशः—गोवल्लवः

प्र०—न कृत्स्वर इति । परोऽपीत्यर्थः । अनो भावकर्मवचन इति । अनेनान्तोदात्तत्वं विधीयते । कर्मवाची हरणशब्दः । वाडवहरणमित्युदाहरणम् ॥ किं पुनस्तमिति । कृत्स्वरमित्यर्थः । तस्मादहरण इति प्रतिषेधो येन केनचिल्लक्षणेन प्राप्तस्य स्वरस्य हारिस्वरो बाधक इति ज्ञापयतीत्यर्थः ।

युक्तस्वरश्चेति । पूर्वपदाद्युदात्तत्वम् । अत्रापि पूर्वविप्रतिषेधो विवक्षितः । गोसंख्य इति ।

उ०—बाधकत्वे बीजमाह—परोऽपीति । हारिस्वरः—आद्युदात्तत्वम् । कर्मवाचीहरणशब्द इति । 'करणवाची'ति तु क्वचित्कोऽपपाठः । भावकर्मवाच्यने एव तत्प्रवृत्तेः । अत एव कृत्स्वरस्य इध्मप्रव्रश्चन इत्यत्रकाशो भाष्योक्तः सङ्गच्छते । 'कर्मणि च येन संस्पर्शा'दिति बहुलग्रहणाद्वा कर्मणि ल्युट् । करणे स्वर्यासङ्गतिः । अश्वानां बीजनिषेकादुत्तरकालं यत् शरीरपुष्ट्यर्थं दीयते तद्धि हरणमुच्यते, हार्यं इति च । वाडवो—बीजाश्वः । 'कृत्स्वरे हारिस्वरबाधकत्वं यत्परत्वात्प्राप्तं तदभावोऽहरण इति प्रतिषेधेन ज्ञाप्यते' इत्युक्तेऽपर आह—नैतदस्ति ज्ञापकमिति । ज्ञापकत्वाभावमुपपादयति-अनो भावेति । यतः कृत्स्वरे प्राप्ते हरणोत्तरपदेऽपवादतयानो भावेति प्राप्नोति । तत एतदिति । तत्प्राप्त्यनन्तरम् । एतत्—'सप्तमीहारिणौ धर्म्येऽहरणे' इत्युच्यते इत्यर्थः । एवं च तस्याबाधकत्वज्ञापनसंभवेऽपि कृत्स्वरस्याबाधकत्वज्ञापनासंभव इति भावः ।

समाधत्ते—यद्येवं साधीय इति । परस्यानोभावेत्यस्यैतदबाधकत्वे ज्ञापितेऽर्थादस्य तद्बाधकत्वं फलितमित्याशयेनाह—बाधकं बाधते किं पुनस्तमिति । अयं भावः—पूर्वविप्रतिषेधेन हि अस्य तद्बाधकत्वं वाच्यम् । तत्र सामान्यत एव कृद्विषये प्राप्तस्य सर्वस्य परस्वरस्य पूर्वविप्रतिषेधेनायं स्वरो बाधक इति कल्प्यत इति । तदाह—तस्मादिति ।

पूर्वपदाद्युदात्तत्वमिति । 'युक्ते चे'त्यनेन । युक्तवाचिनि समासे पूर्वपदमाद्युदात्तमिति तदर्थः । वल्लवादयः शब्दा गवादीनां पालके वर्तन्ते । युक्तशब्देन तत्पर उच्यते । गाः संचष्ट इति गोसङ्ख्यः ।

§ सप्तमीहारिणौ धर्म्येऽहरणे ६ । २ । ६५ । १—इदं क्वचिन्न ।

‡ युक्ते च; गतिकारकोपपदात् कृत्, ६ । २ । ६६; १३९ ।

अश्वशल्लवः । कृत्स्वरस्य स एव । इहोभयं प्राप्नोति—गोसङ्क्रयः पशुसङ्क्रयः । अश्व-सङ्क्रयः । युक्तस्वरो भवति विप्रतिषेधेन ॥ ५२ ॥

## उपमानं शब्दार्थप्रकृतावेव ॥ ६ । २ । ८० ॥

उपमानमिति किमर्थम् ? शब्दार्थप्रकृतावेवेतीयत्युच्यमाने पूर्वेणातिप्रसक्तमिति* कृत्वा नियमोऽयं विज्ञायेत । तत्र को दोषः ? इह न स्यात्—पुष्पहारी फलहारी । उपमानग्रहणे पुनः क्रियमाणे न दोषो भवति ।

अथ शब्दार्थग्रहणं किमर्थम् ? 'उपमानं प्रकृतावेवे'तीयत्युच्यमान इहापि प्रसज्येत—वृकवञ्ची वृकप्रेक्षी । शब्दार्थग्रहणे पुनः क्रियमाणे न दोषो भवति ।

अथ प्रकृतिग्रहणं किमर्थम् ? शब्दार्थप्रकृतिरेव यो नित्यं तत्र यथा स्यात् । इह मा भूत्—कोकिलाभिव्याहारी [ गर्दभोचारी ] ।

प्र०—नन्वत्र थाथादिस्वरः प्राप्नोति न कृत्स्वरः । एवं तर्हि मूलप्राप्तिमाश्रित्योक्तमित्यदोषः ॥५२॥

उपमानं । उपमानमिति किमर्थमिति । योगविभागकरणसामर्थ्याच्छिष्टप्रयोगाच्चोप-मानमेव नियम्यत इति प्रश्नः । इतरः सत्यपि योगविभाग इष्टा व्यवस्था न लभ्यते, लक्ष्यानुसरणे च प्रतिपत्तिगौरवप्रसङ्ग इत्याह—शब्दार्थप्रकृतावेवेति ।

अथ शब्दार्थग्रहणमिति । प्रकृतिग्रहणादेव विशिष्टार्था प्रकृतिर्ग्रहीष्यत इति प्रश्नः । इतरस्तु दुर्ज्ञानो विशेष इति मत्वाह—उपमानमिति । वृकवञ्चीति । वृक इव वञ्चतीति

उ०—'समि ख्य' इति कः । गोगणनतत्पर एवमुच्यते । मूलप्राप्तिमिति । विचारेण तु थाथादिस्वरादिति प्रत्येतव्यमित्यर्थः ॥ ५२ ॥

उपमानं । उपमानवाचि पूर्वपदं शब्दार्थकधातुप्रकृतिकणिन्यन्ते एवोत्तरपदे आद्युदात्तमिति तदर्थः । ननूपमानविषयनियमलाभाय तदावश्यकमत आह—योगविभागेति । 'णिनीत्यनेने'ति शेषः । यदि तस्यैव नियमः स्यात् 'णिनिशब्दार्थप्रकृता'वित्येकयोगमेव कुर्यादित्यर्थः । विशेषो दुर्ज्ञेयोऽत आह—शिष्टेति । मन्दबुद्ध्यनुग्रहार्थमुपमानग्रहणमित्युत्तराशयः । प्रकृतिग्रहणादेवेति । प्रकृतिं विना णिनोऽसंभवेनानर्थकं तदिति तत्सामर्थ्याद्विशिष्टार्थप्रकृतिग्रहणमिति भावः । कृत्स्वर एवेति । कृत्स्वरे प्राप्त एव णिनीत्यारम्भादिति भावः । उपसर्गमन्तरेणेति । शब्दार्थ इत्येव शब्दार्थके णिन्यन्ते उत्तरपदे इत्यर्थे कृद्ग्रहणपरिभाषया

१—'उपमानग्रहणं' पा० ।    * णिनि ६ । २ । ७९ ।
२—क्वचिन्न ।

अथैवकारः किमर्थः ? नियमार्थः । नैतदस्ति प्रयोजनम् । सिद्धे विधिरारभ्यमाणोऽन्तरेणैवकारं नियमार्थो भविष्यति । इष्टतोऽवधारणार्थस्तर्हि । यथैवं विज्ञायेत—'उपमानं शब्दार्थप्रकृतावेवे'ति । मैवं विज्ञायि—'उपमानमेव शब्दार्थप्रकृता'विति । शब्दार्थप्रकृतौ ह्युपमानं चानुपमानं चाद्युदात्तमिष्यते । साध्वध्यायी विलम्बिताध्यायी ॥ ८० ॥

## दीर्घकाशतुषभ्राष्ट्रवटं जे ॥ ६ । २ । ८२ ॥

### जे दीर्घाद्बह्वचः ॥ १ ॥

जे दीर्घान्तस्यादिरुदात्तो भवतीत्येतस्मादन्त्यात्पूर्वं बह्वचः [ ८३ ] इत्येतद्भवति विप्रतिषेधेन । जे दीर्घान्तस्यादिरुदात्तो भवतीत्यस्यावकाशः—कुटीजः शमीजः । 'अन्त्यात्पूर्वं बह्वच' इत्यस्यावकाशः—उपसरजः मन्दुरजः । इहोभयं प्राप्नोति—आमलकीजः वलभीजः । 'अन्त्यात्पूर्वं बह्वच' इत्येतद्भवति विप्रतिषेधेन ॥ ८२ ॥

## न भूताधिकसञ्जीवमद्राश्मकज्जलम् ॥ ६ । २ । ९१ ॥

### आद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसङ्ख्यानम् ॥ १ ॥

आद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसङ्ख्यानं कर्तव्यम् । दिवोदासाय[1] गायत वध्र्यश्वाय दाशुषे ॥ ९१ ॥

## अन्तः ॥ ६ । २ । ९२ ॥ सर्वं गुणकार्त्स्न्ये ॥ ६ । २ । ९३ ॥

सर्वग्रहणं किमर्थम् ? 'गुणकार्त्स्न्ये' इतीयत्युच्यमान इहापि प्रसज्येत—परम-

प्र०—'कर्तर्युपमाने' इति णिनिः । कृत्स्वर एवात्र भवति । शब्दार्थप्रकृतिरेव यो नित्यमिति । उपसर्गसंबन्धमन्तरेणैव यो धातुः शब्दे वर्तते स इह गृह्यते । यस्य तूपसर्गेण शब्दार्थत्वं द्योत्यते तस्य ग्रहणं न भवतीत्यर्थः ॥ ८० ॥

न भूताधिक । दिवोदासायेति । 'दिवसश्च दासे' इत्यलुक् ॥ ९१ ॥

सर्वं गुण । यत्र गुणान्तरस्याभावस्तत्र गुणकार्त्स्न्यं भवति,यथा सर्वशुक्ल इति ।

उ०—गर्दभोच्चारीत्यादावपि स्यात् । प्रकृतिग्रहणे तु तत्सामर्थ्याद्विशेषलाभेन नात्र दोष इति भावः ॥ ८० ॥

सर्वं गुण । गुणकार्त्स्न्यं व्युत्पादयति—यत्रेति । सर्वशुक्ले 'पूर्वकालैके'त्यादिना समासः । कथं पुनः प्रकर्षवाचिनः परमशब्दस्य गुणकार्त्स्न्ये वृत्तिरत आह—आश्रयव्याप्त्येति । यद्यप्यौज्ज्वल्यादिनापि

१—'दिवोदासाय दाशुषे' ऋ० ४ । ३० । २० ।

शुक्लः परमकृष्ण इति । सर्वग्रहणे पुनः क्रियमाणे न दोषो भवति ।

अथ गुणग्रहणं किमर्थम् ? 'सर्वं कात्स्न्र्ये' इतीयत्युच्यमान इहापि प्रसज्येत— सर्वसौवर्णः सर्वराजत इति । गुणग्रहणे पुनः क्रियमाणे न दोषो भवति ।

अथ कात्स्न्र्यग्रहणं किमर्थम् ? 'सर्वं गुण' इतीयत्युच्यमान इहापि प्रसज्येत— सर्वेषां श्वेतः सर्वश्वेत इति । कथं चात्र समासः ? 'षष्ठी सुबन्तेन समस्यत' इति* । 'गुणेन ने'ति† प्रतिषेधः प्राप्नोति । एवं तर्हि—

**गुणात्तरेण समासस्तरलोपश्च ।**

गुणात्तरेण समासस्तरलोपश्च वक्तव्यः । सर्वेषां श्वेततरः सर्वश्वेतः ॥ ९३ ॥

## उत्तरपदवृद्धौ सर्वं च ॥ ६ । २ । १०५ ॥

अयुक्तोऽयं निर्देशो न ह्युत्तरपदं नाम वृद्धिरस्ति । कथं तर्हि निर्देशः कर्तव्यः ? 'वृद्धिमत्युत्तरपद' इति ॥ स तर्हि तथा निर्देशः कर्तव्यः ? न कर्तव्यः । नैवं विज्ञायत उत्तरपदं वृद्धिरुत्तरपदवृद्धिः, उत्तरपदवृद्धाविति । कथं तर्हि ? उत्तरपदस्य

प्र०—शुक्लेन गुणेन सर्वावयवानां व्यापनात् । परमशुक्ल इति । आश्रयव्याप्त्या शुक्लस्य पारम्यमिति गुणकात्स्न्र्यमस्ति । सर्वसौवर्ण इति । विकारविषयमत्र कात्स्न्र्यं न गुणविषयम् । अथ कात्स्न्र्यग्रहणमिति । सर्वशब्दः कात्स्न्र्ये एव वर्तते इति प्रश्नः । सर्वेषां श्वेत इति । सर्वशब्दोऽत्र गुणिकात्स्न्र्ये वर्तते न तु गुणकात्स्न्र्ये, सर्वेषां श्वेतो गुण इत्यर्थः ।

गुणात्तरेणेति । गुणात्परो यस्तरप् तदन्तेनेत्यर्थः । सर्वेषामिति गुणसंबन्धे षष्ठी । पटस्य शौक्ल्यमिति यथा । श्वेततर इति । गुणवाचिन एवाश्रितगुणान्तरप्रकर्षनिमित्तः प्रत्ययः । सर्वेषां पटानां द्रव्यान्तराधारश्वेतगुणापेक्षया सातिशयः श्वेतो गुण इत्यर्थः ॥ ९३ ॥

उत्तर पदवृद्धौ । वृद्धावित्येव वृद्धिमदुत्तरपदे इति परिग्रहे सिद्धे उत्तरपदग्रहणं तदधिकार-

उ०—पारम्यं संभवति, तथापि प्रकृते एवं विवक्षितमित्यर्थः । विकारविषयमिति । स्वर्णविकारेण सर्वावयवानां व्यापनादिति भावः । भाष्ये सर्वगुण इतीति । सर्वशब्दः पूर्वपदं गुणवाचके उत्तरपदे परेऽन्तोदात्तमित्यर्थः । कात्स्न्र्यग्रहणे तु गुणकात्स्न्र्ये वर्तमानः सर्वशब्दोऽर्थाद्गुणे उत्तरपदेऽन्तोदात्त इत्यर्थान्न दोषस्तदाह— सर्वशब्दोऽत्रेति ।

गुणात्परो य इति । अत्र सूत्रात्सर्वपदमनुवर्तते । तेन सर्वशब्दस्यैवायं समासः । एतद्ध्वनयितुमेव स्वरप्रकरणेऽत्र पठितम् । अनेन च षष्ठीसमास एव, गुणेन नेति प्रतिषेधे आरम्भस्य भाष्ये उक्तत्वादित्याहुः । भाष्ये 'न निर्धारणे' इति निषेधप्राप्त्यनुल्लेखे बीजं दर्शयितुमाह—गुणसंबन्धे षष्ठीति । नन्वेवं तरबुत्पत्तिः कथमत आह—आश्रितगुणान्तरेति । अन्याधाराश्रितं यद्गुणान्तरं तत्प्रकर्षनिमित्त इत्यर्थः । द्रव्यान्तरं— घटादि । द्रव्यान्तराधारेति बहुव्रीहिः ॥ ९३ ॥

उत्तरपदवृद्धौ । भाष्ये—नैवमिति । न कर्मधारयः किन्तु बहुव्रीहिरित्यर्थः । 'उत्तरपदस्ये'त्येवमधिकारस्था वृद्धिर्यस्मिंस्तस्मिन्नुत्तरपदे सर्वशब्दस्यान्त उदात्त इति सूत्रार्थ इति भावः । ईदृशार्थलाभे बीजमाह—

* षष्ठी २ । २ । ८ ।　† पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन २ । २ । ११ ।

वृद्धिरस्मिन्सोऽयमुत्तरपदवृद्धिः, उत्तरपदवृद्धाविति ॥ १०५ ॥

## बहुव्रीहौ विश्वं संज्ञायाम् ॥ ६ । २ । १०६ ॥

### बहुव्रीहौ विश्वस्यान्तोदात्तात्संज्ञायां मित्राजिनयोरन्तः ॥ १ ॥

बहुव्रीहौ विश्वस्यान्तोदात्तात्संज्ञायां मित्राजिनयोरन्त इत्येतद्भवति विप्रतिषेधेन* । 'बहुव्रीहौ विश्वं संज्ञाया'मित्यस्यावकाशः—विश्वदेवः विश्वयशाः । 'संज्ञायां मित्राजिनयोरन्त' इत्यस्यावकाशः—कुलमित्रम् । कुलाजिनम् । इहोभयं प्राप्नोति—विश्वमित्रः विश्वाजिनः । 'संज्ञायां मित्राजिनयोरन्त' इत्येतद्भवति विप्रतिषेधेन ।

### अन्तोदात्तप्रकरणे मरुद्वृधादीनां छन्दस्युपसङ्ख्यानम् ॥ २ ॥

अन्तोदात्तप्रकरणे मरुद्वृधादीनां छन्दस्युपसङ्ख्यानं कर्तव्यम् । मरुद्वृधः सुवया उपतस्थे ॥ १०६ ॥

## उदराश्वेषुषु क्षेपे ॥ ६ । २ । १०७-१०८ ॥

### उदरादिभ्यो नञ्सुभ्याम् ॥ १ ॥

उदराश्वेषुषु क्षेप इत्येतस्मान्नञ्सुभ्याम् [ १७२ ] इत्येतद्भवति विप्रतिषेधेन । 'उदराश्वेषुषु क्षेप' इत्यस्यावकाशः—कुण्डोदरः घटोदरः । 'नञ्सुभ्या'मित्यस्यावकाशः—अयवः अतिलः अमाषः । सुयवः सुतिलः सुमाषः । इहोभयं प्राप्नोति—अनुदरः सूदरः । नञ्सुभ्यामित्येतद्भवति विप्रतिषेधेन ॥ १०७–१०८ ॥

प्र०—विहितवृद्धिपरिग्रहार्थम् ॥ १०५ ॥

उदराश्वेषुषु । सूदर इति । प्रकरणादिवशादत्र क्षेपप्रतिपत्तिः ॥ १०७–१०८ ॥

उ०—वृद्धावित्येवेति । उत्तरपदग्रहणं विनाप्यमें चेत्यादाविवोत्तरपदलाभ इति भावः । स्वरितत्वबलाद्वा । इदं च वृद्धिरादैच्सूत्रे निरूपितम् ॥ १०५ ॥

बहुव्रीहौ विश्वं । भाष्ये—'इहोभयं प्राप्नोति विश्वमित्र' इति पाठः । 'मित्राजिनयो'रिति सूत्रे ऋषिप्रतिषेधस्य वक्ष्यमाणत्वात् 'विश्वामित्र' इति तु क्वाचित्कोऽपपाठः ॥ १०६ ॥

उदराश्वेषुषु क्षेपे । अत्र वृत्तौ 'क्षेप' इति योगविभागः । पूर्वत्र च संज्ञायामित्यनुवर्तते इत्युक्तं, तदेकसूत्रत्वप्रतिपादकैतद्भाष्यविरुद्धम् । अन्यथा सूदरादौ संज्ञाविषयेऽपि परत्वान्नञ्सुभ्यामित्यस्य दुर्वारत्वेन क्षेपपर्यन्तधावनानुपपत्तिः । वृत्तिभाष्योभयप्रामाण्येन संज्ञाविषये पूर्वविप्रतिषेधोऽङ्गीकार्यं इत्यन्ये । ननु सूदरे कथं क्षेपोऽत आह—प्रकरणेति । विपरीतलक्षणयेति भावः ॥ १०७–१०८ ॥

* संज्ञायां मित्राजिनयोः ६ । २ । १६५ ।

## सोर्मनसी अलोमोषसी ॥ ६ । २ । ११७ ॥

### सोर्मनसोः कपि ॥ १ ॥

'सोर्मनसी अलोमोषसी' इत्येतस्मात्कपि पूर्वम् [ १७३ ] इत्येतद्भवति विप्रतिषेधेन । 'सोर्मनसी अलोमोषसी' इत्येतस्यावकाशः—सुशर्माणमधि नावं रुहेयम्[1] । सुशर्मासि सुप्रतिष्ठानः । सुस्रोताः सुपयाः सुवर्चाः[2] । 'कपि पूर्व'मित्यस्यावकाशः[3]—अयवकः [ अतिलकः[4] ] । इहोभयं प्राप्नोति—सुशर्मकः सुस्रोतस्कः । 'कपि पूर्व'मित्येतद्भवति विप्रतिषेधेन ॥ ११७ ॥

## कूलतीरतूलमूलशालाक्षसममव्ययीभावे ॥ ६ । २ । १२१ ॥

### पर्यादिभ्यः कूलादीनामाद्युदात्तत्वम् ॥ १ ॥

पर्यादिभ्यः* कूलादीनामाद्युदात्तत्वं भवति विप्रतिषेधेन । 'परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु' [ ३३ ] इत्यस्यावकाशः—परित्रिगर्तम् परिसौवीरम् । कूलादीनामाद्युदात्तत्वस्यावकाशः—अतिकूलम् अनुकूलम् । इहोभयं प्राप्नोति—परिकूलम् । कूलादीनामाद्युदात्तत्वं भवति विप्रतिषेधेन ॥ १२१ ॥

## चेलखेटकटुककाण्डं गर्हायाम् ॥ ६ । २ । १२६ ॥

## अकर्मधारये राज्यम् ॥ ६ । २ । १३० ॥

### चेलराज्यादिभ्योऽव्ययम् ॥ १ ॥

चेलराज्यादिस्वरादव्ययस्वरो भवति विप्रतिषेधेन† । चेलराज्यादिस्वरस्यावकाशः—भार्याचेलम् पुत्रचेलम् । ब्राह्मणराज्यम् । अव्ययस्वरस्यावकाशः—निकौशाम्बिः निर्वाराणसिः । इहोभयं प्राप्नोति—कुचेलम् कुराज्यम् । अव्ययस्वरो भवति विप्रतिषेधेन ।

स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ? न वक्तव्यः । इष्टवाची परशब्दः‡ । विप्रतिषेधे परं यदिष्टं तद्भवति ॥ १२६ ॥ १३० ॥

---

१—'रुहेम' पा० । २—'सुशिराः' पा० । ३—'कपि पूर्वस्याव' पा० ।
४—इदं क्वचिन्न । * परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु ६ । २ । ३३ ।
† तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः ६ । २ । २ ।
‡ विप्रतिषेधे परं कार्यम् १ । ४ । २ ।

## कुण्डं वनम् ॥ ६ । २ । १३६ ॥

### कुण्डाद्युदात्तत्वे तत्समुदायग्रहणम् ॥ १ ॥

कुण्डाद्युदात्तत्वे तत्समुदायग्रहणं कर्तव्यम् । वनसमुदायवाची चेत्स कुण्डशब्दो भवतीति वक्तव्यम् । इह मा भूत्—मृत्कुण्डम् ॥ १३६ ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठस्याध्यायस्य
द्वितीये पादे प्रथममाह्निकम् ।

## गतिकारकोपपदात्कृत् ॥ ६ । २ । १३९ ॥

गतिकारकोपपदादिति किमर्थम् ? इह मा भूत्—परमं कारकं परमकारकम् ॥

---

प्र०—कुण्डं वनम् । कुण्डशब्दोऽस्ति भाजनविशेषवाची । अस्ति समुदायवाची । इक्षुकुण्डम् । इक्षुसमुदाय इत्यर्थः । तत्र वनशब्देन विशेषणेन भाजनविशेषवाची निवर्त्यते । वनशब्दस्तु समुदायवाच्यप्यस्ति—आम्रवणमिति । जलपर्यायोऽप्यस्ति । ततश्च यथा तटाकादयो विशिष्टाधारजलवाचिन एवं कुण्डशब्दोऽपि । यथा 'नीलकुण्ड'मिति । ततश्च वनग्रहणेऽप्युपादीयमाने नास्त्यतिप्रसङ्गनिवृत्तिरित्याह—कुण्डाद्युदात्तत्व इति । तच्छब्देन पूर्वपदार्थपरामर्शः । वनसमुदायवाचीति । वनमेव समुदायो वनसमुदायः, वनशब्दवाच्यत्वाच्च वनं समुदाय उच्यते । समुदायवाची वनशब्दोऽत्राश्रयणीयो न तूदकवाचीत्यर्थः । अन्ये त्वाहुः—वनानां समुदायो वनसमुदाय इति । तेन शरवणसमुदायः शरकुण्डशब्देनोच्यते । मृत्कुण्डमिति । भाजनविशेषवाची विशिष्टसंस्थानाधारजलवाची वात्र कुण्डशब्दः ॥ १३६ ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे षष्ठस्याध्यायस्य
द्वितीये पादे प्रथममाह्निकम् ।

गतिकारको । परमकारकमिति । विचार्यं किंचिदत्रास्तीत्यस्योपन्यासः । यथा

---

उ०—कुण्डं वनम् । भाजनविशेषेति । जलाधारेत्यर्थः । तत्र कृतेऽपि तस्मिन् भाजनविशेषवाचिनि वृत्तिर्न सिध्यतीत्याह—वनशब्दस्त्विति । ततश्चेति । जलवाचिवनशब्देन भाजनविशेषाधारजलस्याप्यभिधानेन तन्निवृत्त्ययोग इति भावः । नीलकुण्डमिति । नीलाख्यनागस्य विशिष्टाधारस्थं जलमित्यर्थः । तच्छब्देनेति । पूर्वपदार्थसमुदाये यदि कुण्डशब्दस्तदाद्युदात्त इति वार्तिकार्थः । इक्षुकुण्डमित्युदाहरणम् । वनमेवेति । एवकारोऽभेदस्य द्योतकः कर्मधारयसमासत्वद्योतनाय । समुदाये वनाभेदे बीजमाह—वनशब्दवाच्यत्वाच्चेति । एवं च वनशब्दवाच्यसमुदायवाची चेत्कुण्डशब्द इति भाष्याक्षरार्थः । तत्फलितमाह—समुदायवाचीति । अन्ये त्विति । अत्र पक्षे वार्तिके तच्छब्देन वनमेवोच्यते । विशिष्टसंस्थानाधारेति बहुव्रीहिः । मृत्पात्रविशेषस्थजलमित्यर्थः ॥ १३६ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते
षष्ठस्याध्यायस्य द्वितीये पादे प्रथममाह्निकम् ।

गतिकारको । असन्दिग्धे देवदत्तस्य कारकमित्युदाहरणे सति किमितीदमुपन्यस्यतेऽत आह—

गतिकारकोपपदादित्युच्यमानेऽप्यत्र प्राप्नोति । एतदपि हि कारकम् ॥ इदं तर्हि—देवदत्तस्य कारकं देवदत्तकारकम्* ॥ इदं चाप्युदाहरणं परमं कारकं परमकारकमिति। ननु चोक्तं 'गतिकारकोपपदादित्युच्यमानेऽप्यत्र प्राप्नोति, एतदपि हि कारक'मिति । नैतत्कारकं कारकविशेषणमेतत् । यावद् ब्रूयात् प्रकृष्टं कारकं शोभनं कारकमिति, तावदेतत्परमं कारकमिति ।

अथ कृद्ग्रहणं किमर्थम् ? इह मा भूत्—निष्कौशाम्बिः निर्वाराणसिः ॥ अत उत्तरं पठति—

प्र०—संप्रदानादयः शब्दा न कारकरूपतां प्रतिपादयन्ति तथा कारकशब्दोऽपि । तदुक्तम्—

'स्वशब्दैरभिधाने तु स धर्मो नाभिधीयते ।
विभक्त्यादिभिरेवासावुपकारः प्रतीयते ॥' इति ।

एवं च तद्विशेषणमपि परमशब्दः कारकवाची न भवतीति प्रत्युदाहरणम् । एतदपीति । न हि अकारकस्य कारकशब्देनाभिधानम् । ततश्च तद्विशेषणस्यापि कारकत्वमस्त्येव । यथा ''घटं करोति भीष्म'मित्यादौ । देवदत्तस्येति । शेषविवक्षायां षष्ठी । 'तृजकाभ्यां कर्तरि' 'कर्तरि चे'ति कारकषष्ठ्याः समासप्रतिषेधादिह षष्ठीसमासो भवत्येव । नैतत्कारकमिति । कृदन्ता हि क्रियायोग्यताविष्टद्रव्यवाचिनो न तूद्भूतां कारकतां प्रतिपादयन्ति । परमित्येतच्च न करोतिक्रियाविशेषणम्, यतः कर्मकारकमेतत्स्यादपि तु द्रव्यविशेषणम् । तथा च समानाधिकरणसमास उपपद्यते ।

अथ कृद्ग्रहणमिति । यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवतो नान्यं प्रतीति प्रश्नः । निष्कौशाम्बिरिति । क्रमणक्रियापेक्षमस्ति निसो गतित्वमिति भावः ।

उ०—विचार्यमिति । न्यायव्युत्पादनार्थमेतदुदाहृतमित्यर्थः । स्वशब्दैः—कारकसंप्रदानादिशब्दैः । स धर्मः—शक्तिलक्षणः । असावुपकारः—शक्तिलक्षणः । शब्दशक्तिस्वाभाव्यादिति भावः । आदिशब्दोऽत्राश्रयवाची । विभक्तिरूपैराश्रयैर्वाचकैरित्यर्थः । विशेष्यस्यैवं कारकत्वाभावे विशेषणस्य सुतरां तत्त्वाभाव इत्याह—एवं चेति । न हीति । उक्ताभिप्रायमजानतः शङ्केति भावः । शेषविवक्षायामिति । कर्मषष्ठ्या समासानुपपत्तिरिति भावः । पाकक्रियाया अकरणदशायामपि पाचकादिव्यवहारदर्शनादाह—योग्यताविष्टेति । उद्भूतां कारकतामिति । शक्तिविशेषरूपामित्यर्थः । एवं च कारकशब्दवाच्यस्यानुद्भूतशक्तिकस्यैतद्विशेषणं न तु 'कटं भीष्म'मित्यादाविवोद्भूतशक्तिकस्येति नेदं कृत्प्रकृत्यर्थकारकमिति भाष्यार्थ इति भावः । क्रियाविशेषणमिति । भेदेन विशेषणमित्यर्थः । तद्ध्वनयन्नाह—यतः कर्मेति । तथा सति षष्ठ्यापत्तिः । कृधात्वर्थफलेऽभेदेन विशेषणत्वे तु समासापत्तिरिति भावः । तदाह—तथा चेति । क्रमणक्रियेति । शिष्यबुद्धिपरीक्षार्थं जात्युत्तरमिदमित्यर्थः ।

* षष्ठी शेषे २ । ३ । ५०; षष्ठी २ । २ । ८ ।

१—'कटं' इति पाठः स्यात् ।

**गत्यादिभ्यः प्रकृतिस्वरत्वे कृद्ग्रहणानर्थक्यमन्यस्योत्तरपदस्याभावात् ॥ १ ॥**

गत्यादिभ्यः प्रकृतिस्वरत्वे कृद्ग्रहणमनर्थकम् । किं कारणम् ? अन्यस्योत्तरपदस्याभावात् । न ह्यन्यद्गत्यादिभ्य उत्तरपदमस्त्यन्यदतः कृतः । किं कारणम् ? धातोर्हि द्वये प्रत्यया विधीयन्ते तिङः कृतश्च । तत्र कृता सह समासो भवति, तिङा च न भवति । तत्रान्तरेण कृद्ग्रहणं कृत एव भविष्यति ।

ननु चेदानीमेवोदाहृतं निष्कौशाम्बिः निर्वाराणसिरिति । यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवतो न च निसः कौशाम्बीशब्दं प्रति क्रियायोगः ।

**कृत्प्रकृतौ वा गतित्वादधिकार्थं कृद्ग्रहणम् ॥ २ ॥**

कृत्प्रकृतौ तर्हि गतित्वादधिकार्थं कृद्ग्रहणं कर्तव्यम् । कृत्प्रकृतिर्धातुः । धातुं च प्रति क्रियायोगः । तत्र यत्क्रियायुक्तास्तं प्रतीतीहैव स्यात् प्रणीः उन्नीः, इह न स्यात् प्रणायकः उन्नायकः ।

एतदपि नास्ति प्रयोजनम् । 'यत्क्रियायुक्ता' इति नैवं विज्ञायते यस्य क्रिया यत्क्रिया यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवत इति । कथं तर्हि ? या क्रिया

प्र०—अन्यस्योत्तरपदस्याभावादिति । गतिकारकाभ्यां तावत्संबन्धात् क्रियावाचि कृदन्तमेवोत्तरपदमाक्षिप्तम् । उपपदमपि धात्वधिकारे सप्तमीनिर्दिष्टं प्रत्ययनिमित्तमुच्यते इति तेनापि कृदन्तमेवाक्षिप्तम् ।

कृत्प्रकृतौ वेति । 'वा'शब्दस्तर्ह्यर्थे । धातुप्रत्ययसमुदायपरिग्रहार्थं कृद्ग्रहणम्, अन्यथा धातावेवोत्तरपदे स्वरः स्यादित्यर्थः । प्रणीरिति । अव्ययस्वरापवादोऽत्र कृत्स्वरः । यस्य क्रियेति । अन्वयव्यतिरेकाभ्यां यस्य वाच्या क्रियेत्यर्थः । धातोरेव च वाच्येति तमेव प्रति गत्युपसर्गसंज्ञाप्रसङ्गः । या क्रियेति । क्रियालक्षणमर्थं प्रति गत्युपसर्गसंज्ञे भवतः । केवलायाश्च

उ०—संबन्धादिति । क्रियायोगेन गतित्वात्, क्रियापेक्षत्वाच्च कारकत्वस्येति भावः । कृदन्तमेवेति । तिङन्तस्य तूत्तरपदत्वासंभवः । केवलधातोश्च तत्त्वासंभवोऽतः कृदन्तग्रहणमिति भावः । योऽपि पर्यंभूषदित्यादिस्तिङन्तोत्तरपदकः सोऽपि च्छान्दस इति बोध्यम् । प्रत्यासत्त्योत्तरपदनिमित्तगतित्वादेरेव ग्रहणेन निष्कौशाम्ब्यादौ न दोष इत्याह भाष्ये—न च निस इति ।

उक्तप्रयोजनस्य दूषितत्वाद्वाशब्दानुपपत्तेराह—तर्ह्यर्थे इति । अन्यथा धातावेवेति । 'यत्क्रिये'त्यत्र यस्य क्रियेति षष्ठीसमासे यस्य धातोर्वाच्या क्रियेत्यर्थेन यत्तदोर्नित्यसंबन्धाद्धातोरेव ग्रहणे तस्यैव प्रत्यासत्तिन्यायेनोत्तरपदत्वे प्रणीरित्यादावेव स्यान्न तु 'प्रणायक' इत्यादाविति भावः । 'प्रणी'रित्यत्र समासान्तोदात्तत्वेनैव सिद्धेराह—अव्ययस्वरेति । अर्थं प्रतीति । अर्थनिमित्तिका गत्यादिसंज्ञेत्यर्थः ॥ केवलायाश्चेति । शाब्दे व्यवहारे साधनसंसृष्टाया एव क्रियाया अङ्गत्वं, केवलायाः शब्देन क्वचिदप्यप्रत्यायनादिति भावः । केवल-

यत्क्रिया यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवत इति । न च कश्चित्केवलः शब्दोऽस्ति यस्तस्यार्थस्य वाचकः स्यात् । केवलस्तस्यार्थस्य वाचको नास्तीति कृत्वा कृदधिकस्य भविष्यति । ननु चायं तस्यैवार्थस्य वाचकः प्रणीरिति । एषोऽपि हि कर्तृविशिष्टस्य ॥ अयं तर्हि तस्यैवार्थस्य वाचकः—प्रभवनमिति† । तस्मात्कृद्ग्रहणं कर्तव्यम् ।

यदि कृद्ग्रहणं क्रियत आमन्ते स्वरो न प्राप्नोति । प्रपचतितराम् प्रजल्पतितराम् । असति पुनः कृद्ग्रहणे क्रियाप्रधानमाख्यातं तस्यातिशये तरबुत्पद्यते, तरबन्तात्स्वार्थे

प्र०—क्रियाया व्यवहारानङ्गत्वाद्वस्त्वन्तरसंसृष्टक्रियावाचिकृदन्तपरिग्रहः सिद्ध इत्यर्थः । न च कश्चित्केवल इति । केवलक्रियावाचित्वात्केवल इत्युक्तम् । इतरस्तु शब्दकैवल्यमनेनोक्तमिति मत्वा चोदयति–ननु चायमिति । एषोऽपीति । तस्मात्कारकसहिताया एव क्रियायाः सर्वत्र प्रतिपादनात् । प्रणीप्रणायकादीनां न कश्चिद्भेदः । प्रभवनमिति । भावे ल्युड्विधानात् कारकासंसृष्टेव क्रियाभिधीयते ।

प्रपचतितरामिति । प्रशब्दस्यामन्तेन समासः । 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्ते'रित्यस्य त्वयमर्थो यदा गत्यादीनां कृद्भिः सह समासो भवति तदा प्राक्सुबुत्पत्तेरिति, न तु कृद्भिरेव समास इति । तेन तद्धितान्तेनापि सुप्युत्पन्ने समासः प्रवर्तते । नन्वसत्यपि कृद्ग्रहणेऽत्र स्वरो न सिध्यति, संख्याकालसाधनोपग्रहविशिष्टायाः क्रियाया अभिधानान्न केवलाया इत्याह—असति पुनरिति ।

उ०—स्वमर्थद्वारा शब्दस्य विशेषणमित्याह–केवलेति । एवं च 'न कश्चित्केवल' इत्यस्य विवरणं भाष्ये–यस्तस्यार्थस्येति । तन्मात्रार्थस्येत्यर्थ इति भावः । तद्ध्वनयन्नाह भाष्ये–ननु चायं तस्यैवार्थस्य वाचक इति । प्रणीरित्यत्र शब्दान्तरमदृष्ट्वा क्रियामात्रार्थकत्वं मन्यते । एवञ्चेतरस्त्वित्यादि कैयटोक्तं किमर्थमिति चिन्त्यम् । किं च तथा सति केवलक्रियारूपस्येत्यर्थकस्य 'तस्यैवार्थस्ये'त्यस्य भाष्येऽसङ्गतिः । भावे ल्युडिति । न तु करणादावित्यर्थः ।

ननु गतिकारकोपपदानां कृद्भिरेव समासविधानात्कथमामन्तेन समासोऽत आह—गतिकारकेति । अत्रेदं बोध्यम्–तरबन्तादस्यन्तस्वार्थिकत्वेन भिन्नपदसापेक्षसमासात्पूर्वमेवान्तरङ्गत्वादाम् । तत्रामूहिततरबन्तस्य तिङन्तप्रकृतिकस्य आमं विना क्वाप्यर्थबोधकत्वाभावेन तेनैकार्थीभावस्य वक्तुमशक्यत्वमतस्तरबन्तेन न समासः किन्त्वामन्तेनैवेति । 'सुप्युत्पन्ने समासः प्रवर्तत' इति पाठे तदुत्पत्त्यनन्तरमपि समासे बाध्यभाव इति भावः । क्वचित्तु 'सुबुत्पत्ते'रिति पाठः । तत्राप्यनन्तरमिति शेषः । पूर्वमिति शेष इत्यन्ये । गतिसमासविधायके सुपेत्यस्य निवृत्तेरिति तद्भावः । सङ्ख्याकालेति । ततश्चामन्तं प्रति प्रशब्दस्यागतित्वात्स्वरासिद्धिरित्यर्थः । भाष्ये—द्रव्यविशिष्टस्येति । द्रव्यधर्मविशिष्टस्येत्यर्थस्तदाह–धातुरित्यादि ।

† ल्युट् च ३ । ३ । ११५

आम्* । तत्र 'यत्क्रियायुक्ता' इति भवत्येव सङ्घातं प्रति क्रियायोगः । न च कश्चित्केवलः शब्दोऽस्ति यस्तस्यार्थस्य वाचकः स्यात्, केवलस्तस्यार्थस्य वाचको नास्तीति कृत्वाधिकस्य भविष्यति । ननु चायं तस्यैवार्थस्य वाचकः 'प्रभवन'मिति । एषोऽपि [ हि[1] ] द्रव्यविशिष्टस्य [ वाचकः ] । कथम् ? कृदभिहितो भावो द्रव्यवद्भवति क्रियावदपीति ॥ १३९ ॥

प्र०—द्रव्यविशिष्टस्येति । धातुः साध्यरूपतां प्रतिपादयति । प्रत्ययस्तु द्रव्यधर्मलिङ्गसङ्ख्यायुक्तमर्थमिति भावः ॥ द्रव्यवदिति । प्रसिद्धघटादिद्रव्याच्चो वतिनिर्देशः । यथा घटादिद्रव्यं घटादिभिः शब्दैर्लिङ्गसंख्याकर्मादिशक्तियुक्तमभिधीयते तथा पाकादिभिः शब्दैः पाकादिको भावः । क्रियावदपीति । तेन 'भोक्तुं पाक' इत्यादौ क्रियोपपदाश्रयः प्रत्ययः । तदेवमव्याप्तिप्रसङ्गात् प्रत्याख्यातं कृद्ग्रहणम् ॥ १३९ ॥

उ०—ननु पाकादीनां द्रव्यरूपत्वे द्रव्यवदिति वतिर्न युक्तोऽत आह—प्रसिद्धेति । न च 'प्रकृत्ये'त्यादौ केवलासत्त्वभूतक्रियामात्रवाचकमुत्तरपदमस्तीति वाच्यम् । उत्तरकालिकत्वादीनां क्त्वादिद्योत्यानां सत्त्वेन तत्रापि तन्मात्रार्थकत्वाभावात् । यत्र तु प्रपचतितदेश्यादौ स्वरो नेष्यते तत्र बाहुलकेन समासाभावाद्वारणीयः । तत्पुरुषत्वाभावाद्वा । अत एवोदात्तवत्तेति 'कुगती'त्यत्र 'सुप्सुपे'त्यत्र च भाष्ये पठितम् । तत्र तिङित्यस्य तिङघटितेनेत्यर्थः । क्रियाप्रधानेनेत्यर्थो वा । एतेन 'तिङि चोदात्तवती'ति सूत्रे 'यदि 'तिङ्ग्रहणं क्रियते आमन्ते न प्राप्नोति प्रपचतितरां, तस्मान्नार्थस्तिङ्ग्रहणेने'ति भाष्योक्तं विरुध्यते । नित्यसमासत्वेन कृदुत्तरपदप्रकृतिस्वरे शेषनिघातेन प्रशब्दस्य निघातसिद्धेरिति परास्तम् । 'सुप्सुपे'त्यनेन समासे तत्पुरुषत्वाभावेनास्याप्राप्तौ तद्ग्रन्थसामञ्जस्यात् । तेन समासस्य वैकल्पिकत्वेन तदभावे तद्ग्रन्थसत्त्वाच्च । ईदृशे विषये 'कुगती'ति समासस्तु न, तत्राप्यतिङित्यपकर्षात् । अतिङित्यस्य तिङन्ताघटितः समास इत्यर्थादिति दिक् ।

प्रत्याख्यातमिति । परे तु 'कर्तृविशिष्टस्ये'त्यस्य कर्तृविशेषणक्रियावाचक इति पर्यायकतोऽविशेष इत्यर्थः, 'प्रभवन'मित्ययं तु विशेष्यतया तस्यैवार्थस्य वाचक इति कृद्ग्रहणं कर्तव्यमिति सिद्धान्तिनोक्ते, एकदेशिना—प्रपचतितरामित्यादौ स्वराभावे शङ्किते, शङ्कान्तमेव भाष्यम् । समाधिस्तु निघातविधायके तिङ्ग्रहणप्रत्याख्यानादव्ययपूर्वपदप्रकृतिस्वरतः परत्वात्तेन प्रशब्दस्य निघाते सिद्धे नानेन तत्रार्थ इति गूढः । अत एवात्र नार्थः कृद्ग्रहणेनेति भाष्ये नोक्तम् । तस्मात्क्रियाविशेषणकबोधजनकेनापि समासे स्वरप्रवृत्त्यर्थं कृद्ग्रहणम् । किं च प्रधानभूतशुद्धक्रियाबोधकेऽत्रैव स्यान्नतु क्वापि कृदन्ते इति कृद्ग्रहणमावश्यकम् । इदमेव ज्ञापयति 'क्रियावाचकग्रहणे प्रधानीभूतसाध्यमात्रावस्थक्रियाग्रहणम् । तेन तुमुन्—भोक्तुं गतो भोक्तुं पाक इत्यादौ न । यत्तु क्रियार्थोपपदनिमित्तं कार्यं तत्तद्गुणभूतायां सिद्धावस्थक्रियायामपि भवति । यथा कारकविभक्तयः क्त्वसुजादि चेत्याहुः । तेन भोक्तुमिति । इदं चिन्त्यम्—पाक इत्यादौ द्रव्यत्वस्य, कृत्वेत्यादौ क्रियात्वस्येति 'व्यवस्थाया 'एकस्य सकृच्चे'ति सूत्रे स्वयमुक्तत्वात् । किं च एवं व्याख्याने 'प्रभवन'मित्यत्रैव क्रियावाचकत्वादत्र तुमुन्वत्स्वरः स्यादिति सर्वत्र स्वरप्रवृत्त्यर्थं कृद्ग्रहणमावश्यकं स्यादिति दिक् ॥ १३९ ॥

* किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ५ । ४ । ११

१—क्वाचित्कः पाठः ।

## अन्तः । ६ । २ । १४३ ॥

किं समासस्यान्त उदात्तो भवत्याहोस्विदुत्तरपदस्य । कुतः सन्देहः ? उभयं प्रकृतं† तत्रान्यतरच्छक्यं विशेषयितुम् । कश्चात्र विशेषः ?

**अन्तोदात्तत्वं समासस्येति चेत्कप्युपसङ्ख्यानम् ॥ १ ॥**

अन्तोदात्तत्वं समासस्येति चेत्कप्युपसङ्ख्यानं कर्तव्यम् । इदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने‡ कपि चेति वक्तव्यम् । इहापि यथा स्यात्—इदंप्रथमकाः ।

अस्तु तर्ह्युत्तरपदस्य ।

**उत्तरपदान्तोदात्तत्वे नञ्सुभ्यां समासान्तोदात्तत्वम् ॥ २ ॥**

उत्तरपदस्यान्तोदात्तत्वे नञ्सुभ्यां समासान्तोदात्तत्वं वक्तव्यम्§ । अनृचः बह्वृचः¶ ।

प्र०— अन्तः । उभयं प्रकृतमिति । 'समासस्ये'त्यपि प्रकृत'मुत्तरपदादि'रित्यत उत्तरपदग्रहणमपि । तत्रान्यतरदिति । अन्तोदात्तविधानेन विशेषेऽवस्थापयितुमित्यर्थः । अथवा समासेनोत्तरपदमुत्तरपदेन वा समास इत्यर्थः ।

इदंप्रथमका इति । मशब्दाकारस्यान्तोदात्तत्वमिष्यते, कपस्तु समासान्तत्वात्प्राप्नोतीति 'कपि चे'ति वक्तव्यम् । तेन कपि परतः पूर्वस्योदात्तत्वं सिध्यति ।

अनृच इति । अकारः समासस्यावयवो नोत्तरपदस्येति तस्योदात्तत्वं न प्राप्नोति ।

उ०—अन्तः । ननु तयोर्विशेषणत्वाद्विशेषयितुमित्यनुपपन्नमत आह— विशेषेऽवस्थापयितुमिति । अन्तोदात्तस्थानिस्वलक्षणे विशेषेऽन्यतरस्यावस्थापनार्थमित्यर्थः । अथवेति । समाससंबन्धि यदुत्तरपदं तस्यान्त इति वा उत्तरपदान्त्यस्य समासस्येति वेत्यर्थः ॥ कपस्तु समासान्तत्वादिति । समासान्ताः समासस्यैवान्तावयवा न तूत्तरपदावयवा इति भावः । किं च समासान्तानां समासार्थेऽलौकिकप्रक्रियावाक्ये एव प्रवृत्तिः, अन्यथा समासान्तापेक्षया परत्वादिदमेतत्तद्भ्य इति स्वरे, पश्चात् कपि, तत्र स्वरसिद्धेर्वचनारम्भो व्यर्थः स्यादिति बोध्यम् । उत्तरपदस्यान्तोदात्तत्वविधाने तु तस्यान्तो 'म'शब्दाकार इतीष्टस्वरसिद्धिः ।

† समासस्य ६ । १ । २२३; उत्तरपदादिः ६ । २ । १११

‡ बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने ६ । २ । १६२

§ नञ्सुभ्याम्; बहोर्नञ्वदुत्तरपदभूम्नि ६ । २ । १७२; १७५

¶ ऋक्पूरब्धूः पथामानक्षे ५ । ४ । ७४

अपर आह—उत्तरपदान्तोदात्तत्वे नञ्सुभ्यां समासान्तोदात्तत्वं वक्तव्यम्। अज्ञकः अस्वकः। 'कपि पूर्वम्' [ ६। २। १७३ ] इत्यस्यापवादो 'ह्रस्वान्तेऽन्त्यात्पूर्वम्' [ १७४ ] इति। तत्र ह्रस्वान्तेऽन्त्यात्पूर्वं उदात्तभावी नास्तीति कृत्वोत्सर्गेणान्तोदात्तत्वं प्राप्नोति।

न वा कपि पूर्ववचनं ज्ञापकमुत्तरपदानन्तोदात्तत्वस्य ॥ ३ ॥

न वैष दोषः। किं कारणम्? यदयं 'कपि पूर्व'मित्याह तज्ज्ञापयत्याचार्यो 'नोत्तरपदस्यान्त उदात्तो भवतीति॥ एवमपि कुत एतत् 'समासस्यान्त उदात्तो भवती'ति?

प्र०—अपर आहेति। प्रकारान्तरसद्भावात् पूर्वस्माद्भेदः। अज्ञक इति। अत्र कप उदात्तत्वमिष्यते तच्च उत्तरपदस्य कार्यित्वे न सिध्यति। समासे तु कार्यभाजि सिध्यति। कपि पूर्वमित्यस्यापवाद इति। 'अज्ञक'शब्दे नञः परस्य कपि पूर्वस्य एकाच्त्वादन्त्यात् पूर्व उदात्तभावी नास्तीति 'नञ्सुभ्या'मित्यनेन स्वरेण भाव्यम्। स च स्वरः कपो न सिध्यति।

नन्वन्त्यात् पूर्वो यत्रोदात्तभाव्यस्ति 'अयवक' इत्यादौ, तत्र 'कपि पूर्व'मित्येतद्बाध्यतामज्ञकादौ तु कथं बाध्यते? न ह्यपवादोऽप्रवर्तमान एवोत्सर्गं बाधते। नैष दोषः। यथा 'हलादिः शेष' इत्यभ्यासजातेराश्रयणादाटतुरित्यादावप्यनादेर्हलो निवृत्तिर्भवति एवं 'ह्रस्वान्तेऽन्त्यात् पूर्व'मित्यत्रापि ह्रस्वजातेराश्रयणात्तक्रकौण्डिन्यन्यायात्सर्वत्र ह्रस्वान्ते 'कपि पूर्व'मित्यस्याप्रवृत्तिः। अथवा 'ह्रस्वान्तेऽन्त्या'दित्येव वक्तव्यम्। 'कपि पूर्व'मित्यतः पूर्वग्रहणमनुवर्तिष्यते। तत्र पूर्वग्रहणं नियमार्थम् 'ह्रस्वान्तेऽन्त्यादेव पूर्वमुदात्तं भवति न तु कपि पूर्व'मिति।

एवं पक्षद्वये दोषमभिधाय लिङ्गेन समासस्य कार्यित्वं प्रतिपादयितुमाह—न वेति। 'अकुमारीक' इत्यादौ कपि पूर्वस्य उदात्तार्थं 'कपि पूर्व'मित्युच्यते। यदि च नञ्सुभ्यामित्यनेनोत्तर-

उ०—ननूदाहरणान्तरप्रदर्शनमात्रेण कथं पक्षान्तरत्वमत आह—प्रकारान्तरेति। तच्च 'कपि पूर्वमित्यस्यापवाद' इत्यादिना भाष्ये एव स्फुटम्। नञ्सुभ्यामित्यनेनेति। 'कपि पूर्व'मित्येतदन्त्यादित्यनेन बाधितमिति तन्न प्रवर्तते। 'ह्रस्वान्तेऽन्त्या'दित्यपि न, निमित्ताभावादिति उत्सर्गेण 'नञ्सुभ्या'मित्यनेनैव भाव्यमित्यर्थः।

नन्वन्त्यादिति। यद्व्यक्तापवादप्रवृत्तिस्तस्यामेवोत्सर्गबाधो न्याय्यो नान्यत्रेति भावः। परिहरति—नैष इति। 'हलादिः शेष' इत्यत्रास्य समाधेरजादिद्वित्वविषये दोषापत्त्या दूषितत्वादाह—अथवेति। तत्रेति। पूर्वग्रहणाद्वाक्यद्वयम्। तत्राद्येन ह्रस्वान्तेऽन्त्यात्पूर्वस्योदात्तत्वं विधीयते, द्वितीयेन नियमः क्रियत इत्यर्थः।

## प्रकरणाच्च समासान्तोदात्तत्वम् ॥ ४ ॥

प्रकृतं समासग्रहणमनुवर्तते । क्व प्रकृतम् ? 'चौ समासस्य' [ ६ । १ । २२२; २२३ ] इति ।

ननु चोक्तमन्तोदात्तत्वं समासस्येति चेत्कपि उपसङ्ख्यानमिति । नैष दोषः । उत्तरपदग्रहणमपि प्रकृतमनुवर्तते । क्व प्रकृतम् ? 'उत्तरपदादिः' [ ६ । २ । १११ ] इति । तत्रैवमभिसंबन्धः करिष्यते—नञ्सुभ्यां समासस्यान्त उदात्तो भवति । इदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणन उत्तरपदस्येति ॥ १४३ ॥

## कारकाद्दत्तश्रुतयोरेवाशिषि ॥ ६ । २ । १४८ ॥

### कारकाद्दत्तश्रुतयोरनाशिषि प्रतिषेधः ॥ १ ॥

कारकाद्दत्तश्रुतयोरनाशिषि प्रतिषेधो वक्तव्यः । अनाहतो नदति देवदत्तः* ।

### सिद्धं तूभयनियमात् ॥ २ ॥

सिद्धमेतत् । कथम् ? उभयनियमात् । उभयतो नियम आश्रयिष्यते—कारका-

प्र०—पदस्यान्तोदात्तत्वं स्यात्ततस्तेनैव सिद्धत्वात् 'कपि पूर्व'मिति न कर्तव्यं स्यात् । नञ्सुभ्यामिति । नञ्सुभ्यां यदुत्तरपदं तदन्तस्य समासस्येत्यर्थः ॥ १४३ ॥

कारकाद्दत्त । 'संज्ञायामनाचितादीना'मिति विहितमन्तोदात्तत्वमनेन नियम्यते । तेन 'देवपालित' इत्यादौ न भवति । 'तृतीया कर्मणी'त्यनेन तु पूर्वपदप्रकृतिस्वरो भवति । अनाहत इति । 'देवदत्त'शब्दः शङ्खविशेषस्य संज्ञा । तत्राशीरभावादन्तोदात्तत्वाभावः ।

सिद्धं त्विति । तन्त्रेण सूत्रद्वयस्योच्चारणादेकं सूत्रम् । आशिष्येवेति । भिन्नक्रमत्वादे-

उ०—लिङ्गेन समासस्येति । 'नञ्सुभ्यामित्यत्रे'ति शेषः । नञ्सुभ्यां समासस्येत्यत्र पञ्चम्यनन्वयमाशङ्क्याह—नञ्सुभ्यामिति ॥ १४३ ॥

कारकाद्दत्त । ननु संज्ञायां गतिकारकोपपदात्क्तान्तमन्तोदात्तमित्येव सिद्धे किमर्थमिदमत आह—संज्ञायामिति । 'कारकाद्दत्तश्रुतयोरेवोत्तरपदयोर्नान्यस्ये'ति नियमः । 'संज्ञायामनाचिते'ति च 'तृतीया कर्मणी'त्यस्यापवादः । तत्राशीर्विषयनियमादनाशिषि संज्ञायामिति प्राप्नोतीति प्रतिषेधारम्भः । शङ्खविशेषस्येति । न हि तत्र देवा एनं देयासुरित्यर्थप्रतीतिरिति भावः । तेनात्रापि पूर्वपदप्रकृतिस्वरत्वमेव ।

एकवाक्ये नियमद्वयालाभः, यदि तल्लाभाय सूत्रद्वयं स्वीक्रियते तदा एकसूत्रपाठोऽसङ्गतोऽत आह—

* तृतीया कर्मणि ६ । २ । ४८ देवदत्तः=अर्जुनस्य शङ्खः । तद्यथा—
'पाञ्चजन्यं हृषीकेशो देवदत्तं धनंजयः । पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥'
( महाभारते भीष्मपर्वणि २५ । १५; गीतायां १ । १५ )

द्वृत्तश्रुतयोरेवाशिषि' । 'आशिष्येव कारकाद्दत्तश्रुतयो'रिति ॥ १४८ ॥

## संज्ञायां मित्राजिनयोः ॥ ६ । २ । १६५ ॥

### ऋषिप्रतिषेधो मित्रे ॥ १ ॥

ऋषिप्रतिषेधो मित्रे वक्तव्यः । विश्वामित्र† ऋषिः ॥ १६५ ॥

## बहोर्नञ्वदुत्तरपदभूम्नि ॥ ६ । २ । १७५ ॥

किमर्थं बहोर्नञ्वदतिदेशः क्रियते न 'नञ्सुबहुभ्य' इत्येवोच्येत‡ ? नैवं शक्यम् । 'उत्तरपदभूम्नी'ति वक्ष्यति तद्बहोरेव यथा स्यान्नञ्सुभ्यां मा भूदिति । नैतदस्ति प्रयोजनम् । एकयोगेऽपि [हि¹] सति यस्योत्तरपदभूमास्ति तस्य भविष्यति । कस्य चास्ति ? बहोरेव ।

इदं तर्हि प्रयोजनम् । 'न गुणादयोऽवयवाः' [ १७६ ] इति वक्ष्यति तद्बहोरेव यथा स्यान्नञ्सुभ्यां मा भूदिति । एतदपि नास्ति प्रयोजनम् । एकयोगेऽपि [हि¹] सति यस्य गुणादयोऽवयवाः सन्ति तस्य भविष्यति । कस्य च सन्ति ? बहोरेव ।

अत उत्तरं पठति—

प्र०—वकारस्येति भावः ॥ १४८ ॥

संज्ञायां । विश्वामित्र इति । 'मित्रे चर्षा'विति दीर्घः । परत्वादनेनान्तोदात्तत्वं प्राप्तं प्रतिषिध्यते । ततो 'बहुव्रीहौ विश्वं संज्ञाया'मिति पूर्वपदान्तोदात्तत्वं भवति ॥ १६५ ॥

बहोर्नञ्वदु । यस्य गुणादय इति । यस्य विशेष्या इत्यर्थः । ननु चागुणः सुगुण इत्यादौ नञ्सुभ्यामुत्तरे गुणादयः सन्त्येव । एवं तह्युत्तरपदभूमग्रहणेन पूर्वपदस्य विशेषणाद्बहोरेव परेषां गुणादीनां प्रतिषेधो भविष्यति । यस्योत्तरपदभूम्नि वर्तमानस्येति हि भाष्यकाराभि-

उ०—तन्त्रेणेति । एकं सूत्रमिति । 'पाणिनिना पठित'मिति शेषः ॥ १४८ ॥

संज्ञायां मित्रा । विश्वामित्रे विश्वं मित्रमस्येति विग्रहः । परत्वादिति । 'बहुव्रीहौ विश्व'मित्यस्यावकाशो विश्वदेवः विश्वयशाः । अस्यावकाशो देवमित्रः ॥ १६५ ॥

बहोर्नञ्वदु । ननु च न बह्वर्थस्य गुणादयोऽवयवप्रतिपादकाः, किन्तु रज्ज्वादीनां, बहुगुणा रज्जुरित्यादौ तथैव प्रतीतेः । एवं च यस्य गुणादयोऽवयवा इत्ययुक्तमत आह—यस्य विशेष्या इति । उक्तेऽर्थे

† मित्रे चर्षौ ६ । ३ । १३०; बहुव्रीहौ विश्वं संज्ञायाम् ६ । २ । १०६
‡ नञ्सुभ्याम् ६ । २ । १७२

१—क्वचिन्न ।

## बहोर्नञ्वदुत्तरपदाद्युदात्तार्थम् ॥ १ ॥

बहोर्नञ्वदतिदेशः क्रियत उत्तरपदाद्युदात्तार्थम् । उत्तरपदस्याद्युदात्तत्वं यथा स्यात् । विदेशस्थमपि यन्नञः कार्यं तदपि बहोर्यथा स्यात् । 'नञो जरमरमित्रमृताः' [ ६ । २ । ११६ ] । अजरः अमरः । बहुजरः बहुमित्रः ॥ १७५ ॥

## उपसर्गात्स्वाङ्गं ध्रुवमपर्शु ॥ ६ । २ । १७७ ॥

## उपसर्गात्स्वाङ्गं ध्रुवं मुखस्यान्तोदात्तत्वात् ॥ १ ॥

मुखस्यान्तोदात्तत्वादुपसर्गात्स्वाङ्गं ध्रुवमित्येतद्भवति विप्रतिषेधेन* । मुखान्तोदात्तत्वस्यावकाशः—गौरमुखः श्लक्ष्णमुखः । उपसर्गात्स्वाङ्गमित्यस्यावकाशः—प्रस्फिक् प्रोदरः । इहोभयं प्राप्नोति—प्रमुखः । उपसर्गात्स्वाङ्गमित्येतद्भवति विप्रतिषेधेन ।

कः पुनरत्र विशेषस्तेन वा सत्यनेन वा ? सापवादकः स विधिरयं पुनर्निरपवादकः । अव्ययात्तस्य प्रतिषेधोऽपवादः† ॥ १७७ ॥

प्र०—प्रायः ॥ १७५ ॥

उपसर्गात् । नित्यं यदेकरूपं तदिह ध्रुवं गृह्यते । निर्गतं ललाटमस्य 'निर्ललाट' इति, ललाटस्य नित्य निर्गमनाद्ध्रुवत्वम् । इह तु न भवत्यन्तोदात्तत्वम्—उद्बाहुः क्रोशतीति, न हि बाहोर्नित्यमूर्ध्वदिगवस्थानम् । प्रमुख इति । यस्य नित्यं प्रगतं मुखं स प्रमुखः । अत्राहुः 'मुखं स्वाङ्ग'मिति प्राप्तिर्नाव्ययदिक्छब्देति प्रतिषिद्धा, ततो विप्रतिषेधानुपपत्तिः । उच्यते । 'नाव्ययदिक्छब्दे'ति प्रतिषेधो बाधकोऽस्त्वथोपसर्गादिति ? तत्र परत्वात्प्रतिषेधं बाधित्वैतदन्तोदात्तत्वं बाधकं प्रवर्तते ॥ १७७ ॥

उ०—भाष्यं सोपस्कारं कृत्वा योजयति—यस्योत्तरपदेति ॥ १७५ ॥

उपसर्गात्स्वाङ्गं । ननु शरीरस्यानित्यत्वात्कथं स्वाङ्गस्य ध्रुवत्वं विशेषणमत आह—नित्यं यदेकरूपमिति । यावत्स्थिति सर्वदैकरूपमित्यर्थः । न हीति । किन्तु क्रोशनसमये एवेति भावः । प्रगतं—प्रकृष्टम् । विप्रतिषेधानुपपत्तिरिति । प्रतिषेधविषयपरिहारेण विधेः प्रवृत्त्यात्र प्राप्त्यभावादिति भावः । तत्र परत्वादिति । विधिप्रतिषेधद्वारायमेव विप्रतिषेधो वार्तिकतात्पर्यविषय इति भावः ॥ १७७ ॥

* मुखं स्वाङ्गम् ६ । २ । १६७ 　　　१—'दीर्घमुखः' पा० ।

† नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः ६ । २ । १६८

## अभेर्मुखम् ॥ ६ । २ । १८५ ॥ अपाच्च ॥ ६ । २ । १८६ ॥

किमर्थमिदमुच्यते नोपसर्गात्स्वाङ्गं ध्रुवमित्येव सिद्धम्‡ ?

अभेर्मुखमपाच्चाध्रुवार्थम् ॥ १ ॥

अध्रुवार्थोऽयमारम्भः ।

अबहुव्रीह्यर्थं वा ॥ २ ॥

अथवा बहुव्रीहेरिति वर्तते§, अबहुव्रीह्यर्थोऽयमारम्भः ॥ १८५ ॥ १८६ ॥

## स्फिगपूतवीणाञ्जोध्वकुक्षिसीरनामनाम च ॥ ६ । २ । १८७ ॥

स्फिगपूतग्रहणं किमर्थं नोपसर्गात्स्वाङ्गं ध्रुवमित्येव सिद्धम्‡ ?

स्फिगपूतग्रहणं च ॥ १ ॥

किम् ? अध्रुवार्थमबहुव्रीह्यर्थमित्येव वा ॥ १८७ ॥

## अतेरकृत्पदे ॥ ६ । २ । १९१ ॥

अतेर्धातुलोपे ॥ १ ॥

अतेर्धातुलोप इति वक्तव्यम् । अकृत्पद इति ह्युच्यमान इह च प्रसज्येत शोभनो गार्ग्योऽतिगार्ग्यः, इह च न स्यात् अतिकारकः अतिपदा शक्वरी ॥ १९१ ॥

प्र०—अतेरकृ । अतिकारक इति । कारकमतिक्रान्तं इति समासः । अतिशब्दो वृत्तिविषये क्रान्तार्थवृत्तिरिति क्रमेरप्रयोग एवात्र लोपः । स्वरव्यङ्ग्यश्चात्र धातुलोपः । यदा पूर्वपदप्रकृतिस्वरस्तदा शोभनः कारक इत्यतिकारकशब्दस्यार्थः ॥ १९१ ॥

उ०—अभेर्मुखम् । भाष्ये—अध्रुवार्थोऽबहुव्रीह्यर्थं इति । 'अस्वाङ्गार्थं' इति तु नोक्तं स्वाङ्गग्रहणस्यात्राप्यनुवृत्तेरिष्टत्वात् । एवं च वृत्तिश्चिन्त्यैवेति भावः ॥ १८५ ॥ १८६ ॥

अतेरकृ । शोभनः कारक इति । 'स्वती पूजाया'मिति समासः ॥ १९१ ॥

‡ उपसर्गात् स्वाङ्गं ध्रुवमपर्शु ६ । २ । १७७

§ बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने; उपसर्गात् स्वाङ्गं ध्रुवमपर्शु ६ । २ । १६२; १६७

१–'मबहुव्रीह्यर्थमेव वा' पा० ।

## द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ ॥ ६ । २ । १९७ ॥

किमिदं द्वित्रिभ्यां मूर्धन्यकारान्तग्रहणमाहोस्विन्नकारान्तग्रहणम् । कश्चात्र विशेषः ?

**द्वित्रिभ्यां मूर्धन्यकारान्तग्रहणं चेन्नकारान्तस्योपसङ्ख्यानम् ॥ १ ॥**

द्वित्रिभ्यां मूर्धन्यकारान्तग्रहणं चेन्नकारान्तस्योपसङ्ख्यानं कर्तव्यम् । द्विमूर्धा त्रिमूर्धा ॥ अस्तु तर्हि नकारान्तग्रहणम् ।

**नकारान्तेऽकारान्तस्य ॥ २ ॥**

नकारान्तेऽकारान्तस्योपसङ्ख्यानं कर्तव्यम् । द्विमूर्धः त्रिमूर्धः ।

**उदात्तलोपात्सिद्धम् ॥ ३ ॥**

अस्तु तर्हि नकारान्तग्रहणम् । अन्तोदात्तत्वे कृते लोपः, उदात्तनिवृत्तिस्वरेण सिद्धम्* ॥ इदमिह संप्रधार्यम्—अन्तोदात्तत्वं क्रियतां लोप इति किमत्र कर्तव्यम् ? परत्वाल्लोपः ।

प्र०—द्वित्रिभ्यां । पूर्वपदप्रकृतिस्वरापवादो योगः । किमिदमिति । ननु चाकारान्तनिर्देशे मूर्धेष्विति भाव्यमिति द्वैतानुपपत्तिः । उच्यते—न शब्दाश्रयं द्वैतं किं तु कार्यिभेदाश्रयम् । यदा समासस्यान्तोदात्तत्वं विधीयते नित्यश्च समासान्त इति पक्षस्तदाकारान्तग्रहणमेव सामर्थ्याद्भवति । यदा तूत्तरपदस्यान्तोदात्त इति पक्षस्तदा कृतेऽपि समासान्ते तस्योत्तरपदे अनन्तर्भावान्नकारान्तस्य स्वरविधिरिति पक्षोऽवतिष्ठते ।

नकारान्तस्योपसङ्ख्यानमिति । समासश्चेत् कार्यी नित्यश्च समासान्तस्तदा नकारान्तस्य साधुत्वं स्वरश्चोपसङ्ख्येय इत्यर्थः ॥ द्विमूर्ध इति । यदोत्तरपदस्य कार्यित्वं तदा कृते समासान्ते उत्तरपदस्यान्तोदात्तत्वं विधीयमानं प्रत्ययस्य न प्राप्नोति ।

उदात्तलोपादिति । उत्तरपदस्यान्तोदात्तत्वे सति शेषनिघातेन प्रत्ययोऽनुदात्तस्तत्रानुदात्तस्य च यत्रोदात्तलोप इति प्रत्ययस्योदात्तत्वं सिद्धमित्यर्थः । परत्वाल्लोप इति । ततश्चो-

उ०—द्वित्रिभ्यां । पूर्वपदेति । 'बहुव्रीहौ प्रकृत्ये'ति प्राप्तस्य पूर्वपदप्रकृतिस्वरस्यापवाद इत्यर्थः । कार्यिभेदाश्रयमिति । नकारान्तः कार्यी, उताकारान्त इति विचार्यते । तत्कथमित्यत आह—यदेति । सामर्थ्यादिति । नकारान्तनिर्देशेऽपि तद्रूपसमासाभावात्सामर्थ्यादकारान्तस्यैव कार्यित्वमित्यर्थः । अत एव पाद्दत्साहचर्यमपि न विरुध्यते । कृतेऽपि समासान्ते इति । 'द्वित्रिभ्यां ष मूर्ध्नः' इत्यनेन ।

नकारान्तस्य साधुत्वमिति । नित्यसमासान्तविधानादसाधुत्वप्रसङ्ग इति भावः । प्रत्ययस्य न प्राप्नोतीति । समासावयवत्वात्तस्योत्तरपदेऽनन्तर्भावादिति भावः । उदात्तलोपो न भवतीति मूर्धन्शब्द आद्युदात्त

१—'सत्यकारान्तस्य' पा० ।

* द्वित्रिभ्यां ष मूर्ध्नः ५ । ४ । ११५; नस्तद्धिते ६ । ४ । १४४; अनुदात्तस्य च यत्रोदात्तलोपः ६ । १ । १६१

७३ ।

एवं तर्हीदमिह संप्रधार्यम्—अन्तोदात्तत्वं क्रियतां समासान्त इति किमत्र कर्तव्यम् ? परत्वादन्तोदात्तत्वम् । नित्यः समासान्तः । कृतेऽप्यन्तोदात्तत्वे प्राप्नोत्यकृतेऽपि । अन्तोदात्तत्वमपि नित्यम् । कृतेऽपि समासान्ते प्राप्नोत्यकृतेऽपि । अनित्यमन्तोदात्तत्वं न हि कृते समासान्ते प्राप्नोति । परत्वाल्लोपेन भवितव्यम् । [[1]भवत्येव लोपः । ]

यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् । न च समासान्त एवान्तोदात्तत्वस्य निमित्तं विहन्ति । अवश्यं लक्षणान्तरं लोपः प्रतीक्ष्यः । उभयोर्नित्ययोः परत्वादन्तोदात्तत्वम् । अन्तोदात्तत्वे कृते समासान्तः, टिलोपः, टिलोपे कृत उदात्तनिवृत्तिस्वरेण सिद्धम् ।

युक्तं पुनरिदं विचारयितुम् । नन्वनेनासंदिग्धेन नकारान्तस्य ग्रहणेन भवितव्यं

प्र०—दात्तलोपो न भवतीत्यर्थः ।

एवं तर्हि इदमिहेति । यदा कृते समासे समासान्तः क्रियत इति पक्षस्तदेयं संप्रधारणा । यदा तु समासार्थादुत्तरपदात्समासान्तः क्रियत इति पक्षस्तदा संप्रधारणैवात्र नास्ति ।

युक्तं पुनरिति । ननु कृतेऽपि समासान्ते नकारान्त एव मूर्धशब्द उत्तरपदं संभवतीति

उ०—इति भावः ।

समासार्थादुत्तरपदादिति ! उत्तरपदग्रहणं चिन्त्यप्रयोजनम् । समासार्थाद्वाक्यादित्युचितं वक्तुम् । 'समासात्प्रागेवालौकिकविग्रहवाक्ये'इति शेषः । संप्रधारणैव नास्तीति । 'समासान्तानामन्तरङ्गत्वा'दिति शेषः । अयं च पक्षो 'गोस्त्रियोरुपसर्जनस्य', 'अन्त' इति सूत्रस्थन्याययुक्तभाष्यसंमत इति तद्विरोधादिदं भाष्यमेकदेश्युक्तिरिति ध्वनितम् । न च आद्यपक्षरीत्या संप्रधारणायामपि परत्वादन्तोदात्तत्वे ततः समासान्ते सतिशिष्टत्वात्तस्य प्रत्ययाद्युदात्तत्वे कथमुदात्तनिवृत्तिस्वरप्राप्तिरिति वाच्यम् । डच्शिचरवेन समासान्तविधावनुदात्तश्चेत्यस्यासंकचज्ञापनेन पश्चाज्जातस्य समासान्तस्यानुदात्तत्वमित्याशयात् । द्वितीयपक्षे त्वन्तरङ्गत्वात्समासान्ते ततः स्वरात्परत्वाल्लोपे उदात्तनिवृत्तिस्वराप्राप्त्या नकारान्तग्रहणे 'द्विमूर्ध' इत्यादौ स्वराप्राप्तिर्दोषः स्थित एवेति बोध्यम् । अन्तोदात्तत्वस्यानित्यत्वं निवर्तयति भाष्ये—भवत्येव लोप इति । परत्वाल्लोपो भवत्येव, तावतापि अन्तोदात्तत्वस्य नानित्यत्वमिति भावः ।

तदेवोपपादयति—यस्य चेति । 'तावदेव लोप' इति पाठः । समासान्ते कृत एव लोप इत्यर्थः ।

ननु कृतेऽपीति । नित्येऽपि समासान्ते उत्तरपदस्य कार्यित्वात्तस्य च नान्तत्वान्मूर्धस्विति निर्देश

१–इदं क्वचिन्न ।

यावता मूर्धस्वित्युच्यते । यदि ह्यकारान्तस्य ग्रहणं स्यान्मूर्धेष्विति ब्रूयात् । सैषा समासान्तार्था विचारणा । एवं तर्हि ज्ञापयत्याचार्यो 'विभाषा समासान्तो भवती'ति ॥ १९७ ॥

## परादिश्छन्दसि बहुलम् ॥ ६ । । २ । १९९ ॥

अत्यल्पमिदमुच्यते ।

परादिश्च परान्तश्च पूर्वान्तश्चापि दृश्यते ।
पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलं स्मृतः ॥

प्र०—किमत्रायुक्तम् ? एवं मन्यते, यथा 'पाद्'दिति समासान्तनिर्देशः, एवं मूर्धेष्विति समासान्तनिर्देश एव न्याय्यः । एवं ह्यसंदिग्धं समासस्य कार्यित्वं विज्ञायते । न च कृतम् । तस्मादुत्तरपदस्यैव कार्यित्वेन भाव्यम् । सैषा समासान्तार्थेति । यदि नित्यः समासान्तः स्यात्तदा कार्यविशेषसंदेहव्यावृत्तये प्रक्रमाभेदाय वा समासान्त एवोच्चार्येत । तदनुच्चारणात्तु समासान्तस्यानित्यत्वं ज्ञाप्यते । तत्र यदा समासान्तो नास्ति तदा समासस्योत्तरपदस्य वा कार्यित्वे विशेषाभावः । यदा तु समासान्तः क्रियते तदा समासस्य कार्यित्वे सिद्धं समासान्तस्योदात्तत्वम् । यदाप्युत्तरपदस्य कार्यित्वं तदा परत्वादन्तोदात्तत्वे कृते समासान्तः, तत्र टिलोप इति उदात्तनिवृत्तिस्वरेणापि सिद्धम् । ननु प्रत्ययस्वरेण समासान्तस्य भाव्यम् । नैतदस्ति । बहुव्रीहिस्वरेण तस्य बाधनात् । बहुव्रीहिस्वरस्याप्यनेन ॥ १९७ ॥

परादिश्छन्दसि । व्यत्ययो बहुलं स्मृत इति । बहुलग्रहणलभ्यः स्वरव्यत्यय इत्यर्थः ।

उ०—उपपन्न इत्यर्थः । एवं मूर्धेष्विति । एवं हि न प्रक्रमभङ्गः । हेत्वन्तरमाह—एवं हीति । तस्मादुत्तरपदस्यैवेति । एवं च नकारान्तस्यैव कार्यित्वं स्थितमिति 'द्विमूर्ध' इत्यसिद्धिरिति भावः । अनेनापि भाष्येण पूर्वभाष्यस्यैकदेश्युक्तित्वं ध्वनितम् । सैषा समासान्तार्थेति । सिद्धान्तभाष्यस्य समासान्तस्यानित्यत्वज्ञापनार्थेत्यर्थः । स एव 'एवं तर्ही'त्यादीना भाष्ये व्याख्यात इत्याशयेनाह—यदि नित्य इति । तत्र समासान्ताभावपक्षे त्रिमूर्धानमित्यादाविष्टस्वरसिद्धिं दर्शयति—तत्र यदेति । ननु समासान्तपक्षे तस्य शब्दान्तरत्वाद्द्विमूर्ध इत्यादौ स्वरो न स्यादत आह—यदा त्विति । बहुव्रीहेरेव कार्यित्वे तदेकान्तत्वात्समासान्तस्य इष्टस्वरसिद्धिरित्यर्थः । उत्तरपदस्य कार्यित्वेऽपि समासान्तत्वपक्षे इष्टस्वरसिद्धिं दर्शयति—यदापीति । इदं प्राक्तनभाष्यवदेव निरूपितरीत्या प्रौढ्येति बोध्यम् । तस्मादत्र सूत्रे समासस्यैव कार्यित्वमिति तत्त्वम् । बहुव्रीहिस्वरेण तस्येति । समासान्ते कृते तस्य समासावयवत्वात् 'समासस्ये'त्यन्तोदात्तत्वं प्राप्तं, तस्य च बहुव्रीहौ प्रकृतिस्वरो बाधकस्तस्यायं विकल्पो बाधक इति स्थिते कुतः प्रत्ययस्वरस्य प्राप्तिः । डच्श्चित्त्वेन समासान्तविधा'वाद्युदात्तश्चे'त्यस्यासंबन्धज्ञापनात् । अन्यथा विग्रहवाक्य एव समासान्तप्रवृत्तौ तस्य तत्सन्नियोगशिष्टाद्युदात्तत्वे तदेकवाक्यतापन्ने शेषनिघाते पूर्वपदस्योदात्तस्वरितयोगित्वाभावेन पूर्वपदप्रकृतिस्वराप्राप्त्या तद्वैयर्थ्यं स्पष्टमेवेति भावः ॥ १९७ ॥

परादिश्छन्दसि । स्वरव्यत्यय इति । स एव वार्तिककृता दर्शित इत्यर्थः । बहुव्रीहिस्वरे—पूर्वपद-

## अन्तोदात्तप्रकरणे त्रिचक्रादीनां छन्दस्युपसङ्ख्यानम् ॥ १ ॥

अन्तोदात्तप्रकरणे त्रिचक्रादीनां छन्दस्युपसङ्ख्यानं कर्तव्यम् । त्रिचक्रेण [1]'त्रिबन्धुरेण त्रिवृता रथेन ॥ १९९ ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठस्याध्यायस्य
द्वितीये पादे द्वितीयमाह्निकम् ॥ पादश्च समाप्तः ।

प्र०—त्रिचक्रेणेत्यादौ बहुव्रीहिस्वरे प्राप्तेऽन्तोदात्तत्वं विधीयते ॥ १९९ ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे षष्ठस्याध्यायस्य
द्वितीये पादे द्वितीयमाह्निकम् ॥ पादश्च द्वितीयः समाप्तः ।

उ०—प्रकृतिस्वरेणाद्युदात्तत्वे ॥ १९९ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते महाभाष्यप्रदीपोद्द्योते षष्ठस्याध्यायस्य
द्वितीये पादे द्वितीयमाह्निकम् ॥ पादश्च समाप्तः ।



१–'त्रिबन्धुरेण त्रिवृता रथेन त्रिचक्रेण' ऋ० सं० १ । ११८ । २

## अलुगुत्तरपदे ॥ ६ । ३ । १ ॥

आ कुतोऽयमधिकारः ? अलुगाधिकारः प्रागानङः* । उत्तरपदाधिकारः प्रागङ्गाधिकारात्† ।

कानि पुनरुत्तरपदाधिकारस्य प्रयोजनानि ?

**उत्तरपदाधिकारस्य प्रयोजनं स्तोकादिभ्योऽलुगानङिकोह्रस्वनलोपाः ॥१॥**

पञ्चम्याः स्तोकादिभ्यः [ ६ । ३ । २ ] । स्तोकान्मुक्तः अल्पान्मुक्तः । उत्तरपद इति किमर्थम् ? निष्क्रान्तः स्तोकान्निःस्तोकः ॥ आनङिकोह्रस्वनलोपाः प्रयोजनम् । आनङ्*—होतापोतारौ । उत्तरपद इति किमर्थम् ? होतापोतृभ्याम् ॥

प्र०—अलुगुत्तरपदे । आ कुतोऽयमिति । अन्येष्वधिकारेषु व्याख्यानादवधिनिर्णयोऽत्र तु सामर्थ्यादिति प्रतिपादयितुं चोद्यप्रतिसमाधानोपन्यासः । प्रागानङ इति । उत्तरपदेऽनन्तरस्य ऋकारान्तस्यानङ भाव्यम् । अलुकि च सति विभक्त्या व्यवधानादृकारान्तयोः पूर्वपदोत्तरपदयोरानन्तर्यं न स्यादिति सामर्थ्यात्प्रागानङोऽलुगधिकारः । अथवा कार्यान्तरं प्रकृतस्य विधेर्निवर्तकमित्यलुगधिकारः प्रागानङः । प्रागङ्गाधिकारादिति । प्रत्यये परतोऽङ्गं भवति न तूत्तरपद इति सामर्थ्यादवधिपरिच्छेदः ।

कानीति । समास एव लुक् प्राप्तः प्रतिषिध्यत इति सामर्थ्यात् समासाधिकाराद्वोत्तरपदं लभ्यते । कार्यान्तरविधावपि 'वनं समास' इत्यतः समासग्रहणानुवृत्त्योत्तरपदलाभ इति प्रश्नः ।

निःस्तोक इति । यद्यप्यत्र 'स्तोकान्तिके'ति प्रतिपदोक्तसमासाश्रयणादलुङ्न भवतीति शक्यते वक्तुं तथाप्यन्यार्थोऽवश्यं वक्तव्य उत्तरपदाधिकार इति लक्षणप्रतिपदोक्तपरिभाषा नाश्रिता । होतापोतृभ्यामिति । पोतृशब्दस्यानङ् न भवति । होतापोताराविव्यत्र तु परत्वाद्गुणेनानङ्

उ०—अलुगुत्तरपदे । ननु 'प्रत्यय' इत्यादाविव अधिकारावधिविषयप्रश्नप्रतिवचनानुपन्यास एव युक्तोऽत आह—अन्येष्विति । कार्यान्तरम्—आनङादि ।

अलुग्विधावुत्तरपदाधिकारस्य प्रयोजनं नास्तीत्याह—समास एवेति । 'तत्पुरुषे कृती'ति साहचर्यात्प्रतिपदोक्तपरिभाषयात्र सामासिकलुक एवायमलुगिति भावः । सामर्थ्यपर्यालोचनस्य स्थूलमत्यसाध्यत्वादाह—समासेति । 'वनं समासे' इत्यत इत्यर्थः । अन्यत्र तु सामर्थ्याभावेऽपि अधिकारेणैव तल्लाभ इत्याह—कार्यान्तरेति । आनङादीत्यर्थः । अनुवृत्तसप्तम्यन्तसमासपदं च तदर्थोत्तरपदलाक्षणिकमिति भावः ।

पोतृशब्दस्येति । समासग्रहणानुवृत्तावपि समासे ऋकारान्तस्यानङ् भवतीत्यर्थादिति भावः । ननु 'होतापोतारा'वित्यस्यैवोदाहरणत्वसंभवे किमित्युदाहरणान्तरदानमत आह—होतापोताराविति । पदस्य विभज्यान्वाख्यानमिति पक्षे एतदिति भावः । न च समस्तत्वात्कथं समासे इत्यधिकारेण विधीयमानो ह्रस्वः

* आनङ् ऋतो द्वन्द्वे ६ । ३ । २५

† अङ्गस्य ६ । ४ । १

* आनङ् ऋतो द्वन्द्वे ६ । ३ । २५

'इको ह्रस्वोऽङ्यो गालवस्य' [ ६१ ] प्रयोजनम् । ग्रामणिकुलम् सेनानिकुलम् । उत्तरपद इति किमर्थम् ? ग्रामणीः सेनानीः ॥ नलोपः प्रयोजनम् । 'नलोपो नञः' [ ७३ ] । अब्राह्मणः अवृषलः । उत्तरपद इति किमर्थम् ? परमन । नैषोऽस्ति प्रयोगः । इदं तर्हि—नतरांगमनम् ।

'एकवच्चालुग्भवतीति वक्तव्यम् । किं प्रयोजनम् ? स्तोकाभ्यां मुक्तः स्तोकेभ्यो मुक्त इति विगृह्य 'स्तोकान्मुक्त' इत्येव यथा स्यात् ।

**एकवद्वचनमनर्थकम् ॥ २ ॥**

एकवद्भावश्चानर्थकः ॥ द्विबह्वोरलुकस्मान्न भवति ?

प्र०—बाध्यत इत्युदाहरणान्तरोपन्यासः । अथ विभक्त्यपेक्षत्वाद्गुणो बहिरङ्ग, आनङ् तु तदनपेक्षत्वादन्तरङ्गस्तथा सति होतापोतारावित्युदाहरणं भवति । ग्रामणिकुलमिति । षष्ठीसमासः । ग्रामणीरिति । समासाधिकारेऽप्यत्रोत्तरपदस्य ह्रस्वप्रसङ्गः । परमनेति । यथा नतरामिति प्रतिषेधस्य प्रकर्ष एवं पारम्यमपीति भावः । नैषोऽस्ति प्रयोग इति । प्रयुक्तानामिदमन्वाख्यानं प्रवृत्तमिति भावः । नतरांगमनमिति । गमनस्यायुक्ततरत्वप्रतिपादनाय प्रतिषेधप्रकर्षाश्रयस्तरपः प्रयोगः । अत्र तु समासानुवृत्त्यापि नलोपः शक्यते पराकर्तुम् ।

एकवच्चेति । अर्थातिदेशोऽयम् । तेन द्वावर्थौ बहवश्चैकवत्समासे भवन्तीति स्तोकाभ्यां मुक्तः स्तोकेभ्यो मुक्त इति समासे 'स्तोकान्मुक्त' इत्येव भवति ॥ द्विबह्वोरिति । भावप्रत्ययमन्तरेणापि वृत्तिविषये द्विबहुशब्दौ द्वित्वबहुत्वयोर्वर्त्तेते । यथा 'द्व्येकयो'रिति ।

उ०—स्यादत आह–षष्ठीसमास इति । 'इको ह्रस्वोऽङ्यो गालवस्ये'ति ह्रस्वः । 'परमने'ति । विशेषणसमासः । तदाह—यथेति । पारम्यमपि नञर्थविशेषणमिति भावः । ननु प्रतिषेधस्य सर्वत्रैकरूपत्वात्कथं प्रकर्षाश्रयस्तरवत आह—गमनस्यायुक्ततरत्वेति । प्रतिषेधप्रकर्षेति । प्रतिषेधे प्रकर्षमारोप्य तदाश्रयस्तरबित्यर्थः । आरोपाश्रयेण तत्करणफलं तु गमनस्यायुक्ततरत्वप्रतिपत्तिरिति भावः । केचित्तु प्रतियोग्यसमानाधिकरणत्वरूपात्यन्तिकत्वमभावगतः प्रकर्षः । प्रवृत्तिनिमित्तगतप्रकर्षे एव तरबादिरिति तु प्रकृत्यर्थगतप्रकर्षासम्भवे । द्योत्यार्थप्रकर्षेऽपि द्योतकात्तरब्भवत्येव । यथा नितरां गच्छतीत्यादौ । नतरांगमनमित्यत्र मयूरव्यंसकादित्वात्सुप्सुपेति वा समास इति वदन्ति ।

तेन द्वावर्थाविति । यस्य स्वत एकत्वं नास्ति तस्यैवातिदेशापेक्षेतीदं लब्धम् । अलुग्विषयेऽर्थस्यायमेकवद्भाव इति कथं जाताया विभक्तेर्निवृत्तिरिति न शङ्क्यम् । सङ्ख्येयपरत्वे द्विवचनासङ्गतिं मत्वाह—भावप्रत्ययमन्तरेणापीति ।

१–अस्मात्पूर्वम् 'एकवच्च' इति वार्तिकं क्वचिद् दृश्यते ।

## द्विबहुष्वसमासः ॥ ३ ॥

द्विवचनबहुवचनान्तानामसमासः ॥ किं वक्तव्यमेतत् ? न हि कथमनुच्यमानं गंस्यते ?

## उक्तं वा ॥ ४ ॥

किमुक्तम् ? अनभिधाना'दिति‡ ॥ तच्चावश्यमनभिधानमाश्रयितव्यम् ।

प्र०—अनभिधानादिति । समास उपसर्जनार्थस्य द्वित्वबहुत्वानवगमादभेदैकत्वसङ्ख्याया एवोपजना द्विशेषपरित्यागात् सङ्ख्यासामान्यमभेदैकत्वसङ्ख्योच्यते । यथा सन्तमसे रूपमात्रमवधार्यते न तु शुक्लकृष्णादिर्विशेषः । एवं 'राजपुरुष' इत्यत्र सङ्ख्यावान् राजार्थो न त्वव्ययार्थवदसङ्ख्य इत्येतावान् संप्रत्ययो भवति न तु सङ्ख्याविशेषप्रतिपत्तिः । अन्ये तु सर्वसङ्ख्याविशेषाणामविभागोऽभेदैकत्वसङ्ख्येत्याहुः । यथौषधिरसाः सर्वे मधुन्यविभागेनावस्थिता, एवमुपसर्जनार्थे सङ्ख्याविशेषः । क्वचित्तु वृत्तावपि सङ्ख्याविशेषावगमो यथा 'तावकीन' इत्यादावादेशप्रयोगादेकत्वप्रतीतिः । 'मासजातः' 'शौर्पिक' इत्यादौ प्रातिपदिकस्यैव विशिष्टार्थाभिधायित्वादेकत्वावगमः । 'कुण्डशो ददाति' 'वनशः प्रविशती'त्यादौ प्रकरणादिवशादेकत्वावसायः । 'स्तोकाभ्यां मुक्त' इत्यादावपि तद्वर्लुग्विधानाद्द्वित्वबहुत्वावगमात्समासोऽस्तु । नैतदस्ति । प्रयुक्तानामन्वाख्यानात् । न च 'स्तोकाभ्यां मुक्त' इति समासो लोके प्रयुज्यते, तन्निबन्धनस्यैकस्वर्यस्याभावात् । 'स्तोकाभ्यां मुक्त' इत्यादावपादाने पञ्चमी, न तु 'करणे च स्तोकाल्पे'त्यनेन । धर्ममात्रवाचित्वे द्वित्वबहुत्वयोर्दुर्लभत्वादित्याहुः ।

उ०—का नामाभेदैकत्वसङ्ख्येत्यत्राह–विशेषपरित्यागादिति । एवं च सङ्ख्यात्वेन सङ्ख्या भासते । तत्र चौत्सर्गिकमेकवचनमेवेत्युक्तं भवति । रूपमात्रमिति । चाक्षुषत्वाद्रूपवदिदमिति गम्यते, न तु नीलादिविशेष इत्यर्थः । विशेषातिरिक्तसामान्याभावादाह—अन्ये त्विति । अत्र मते सर्वेषां रसानां मधुनि रसत्वेन भानवद्वृत्तावुपसर्जने सङ्ख्यात्वेन सर्वविशेषभानमित्यर्थः । यत्र तु निमित्तमस्ति तत्रास्त्येव तद्विशेषावगम इत्याह—क्वचित्त्विति । आदेशेति । 'तवकममकावेकवचन' इति विहितात् । शौर्पिकादावनियतसङ्ख्यात्वे परिच्छेदासंभवेन परिच्छेदबोधकप्रयोगप्रामाण्येनैकत्वविशिष्टस्यैवोपसर्जनार्थस्य प्रतीतिरिति बोध्यम् । प्रकरणादिवशादिति । यदा प्रकरणादित एकत्वावसायस्तदैवैकत्वसङ्ख्यावच्छिन्नार्थाभिधायिनः शस्प्रत्ययो भवतीत्यर्थः । अत्र यत्तत्त्वं तदुपपादितं 'समर्थ'सूत्रे भाष्ये इति भाष्योक्तमेव साधु । 'अनभिधाना'दित्यस्य समासेनात्रानेकव्यक्त्यनभिधानादित्यर्थः । अत्र च कुमार्योरगारं कुमार्यगारमितिवत्प्राप्तः समासः, अलुको गमकस्य सत्त्वाच्च प्राप्तः समासोऽनभिधानेनैव वारणीय इति दिक् । दुर्लभत्वादिति । 'करणे चे'ति सूत्रेऽसत्त्ववचनस्येत्युक्तेर्धर्ममात्रवाचित्व एव तेन प्रत्ययः । स चैक एवेति तत्र द्वित्वाद्यभावः । अपादाने पञ्चमी तु धर्मिवाचकादपि भवतीति भावः ।

‡ ३ । २ । १ वा० ५

**एकवद्वचने हि गोषुचरेऽतिप्रसङ्गः ॥ ५ ॥**

एकवद्वचने हि गोषुचरेऽतिप्रसङ्गः स्यात् । गोषुचरः ।

**वर्षाभ्यश्च जे ॥ ६ ॥**

वर्षाभ्यश्च जेऽतिप्रसङ्गो भवति । वर्षासुजः ।

**अपो योनियन्मतिषु च ॥ ७ ॥**

अपो योनियन्मतिषु चोपसङ्ख्यानं कर्तव्यम् ।

**जे चरे च ॥ ८ ॥**

जे चरे चातिप्रसङ्गो भवति । योनि—अप्सुयोनिः । यत्—अप्सव्यम्* । मति—अप्सुमतिः । जे—अप्सुजः । चरे—अप्सुचरो गह्वरेष्ठाः ॥ १ ॥

**पञ्चम्याः स्तोकादिभ्यः ॥ ६ । ३ । २ ।**

**पञ्चमीप्रकरणे ब्राह्मणाच्छंसिन उपसङ्ख्यानम् ॥ १ ॥**

पञ्चमीप्रकरणे ब्राह्मणाच्छंसिन उपसङ्ख्यानं कर्तव्यम् । ब्राह्मणाच्छंसी ।

**अन्यार्थे च ॥ २ ॥**

प्र०—गोषुचर इति । गोशब्दो बहुवचनान्त एवाप्शब्दवदुदकस्य वाचकः । तत्रैकवद्भावे सति गविचर इति प्राप्नोति । एवं 'वर्षासुज' इति । वर्षाशब्दो बहुवचनान्त एवर्तुविशेषवाची, न तु ऋतुप्रचयापेक्षमत्र बहुत्वम् । अप्सव्यमिति । अप्सु साधुः । 'तत्र साधु'रिति यत् ॥ १ ॥

पञ्चम्याः । अन्यार्थ इति । वृत्तिविषये च द्वितीयार्थे पञ्चमी वक्तव्येत्यर्थः ।

उ०—उदकस्येति । न तु सास्नादिमद्वाचिनो व्यक्तिबहुत्वविवक्षायामिदं बहुवचनं, गोषुचरशब्दात्तथैव प्रतीतेः, नित्यबहुवचनान्तानामेव भाष्ये उदाहरणेषु साहचर्याच्चेति भावः । भाष्ये—अपो योन्यादिषूपसङ्ख्यानं कर्तव्यमिति । 'अलुक्' इति शेषः । जे चरे चाप उपसङ्ख्यानं कर्तव्यं भवति तत्रातिप्रसङ्गो भवतीत्यर्थः । अप्सुमतिरिति । वृत्तिकारहरदत्तादयस्तु वार्तिके मतुब्विति पठित्वा 'अप्सुमन्तावाज्यभागा'-वित्युदाहरन्ति । भाष्येऽप्येवमेव पाठः । दृश्यमानपाठस्तु लेखकप्रमादादिति तदनुयायिनः । 'हलोऽनन्तरा' इति सूत्रे 'हरि'ग्रन्थे तु 'अप्सुमति'रित्येव पाठो दृश्यते । युक्तं चैतत् । 'एकवच्चे'त्यस्यातिप्रसङ्गव्याजेनास्योपन्यासो भाष्ये । न ह्यप्सुमन्तावित्यत्रास्यातिप्रसङ्गोऽस्ति । अप्स्वित्यनुकरणाद्ध्ययं मतुप् । न हि तत्राप्-शब्दो बह्वर्थः शब्दपरत्वात् । शब्दस्य चैकत्वात् । प्रकृतिवदित्यदेशोऽपि शास्त्रीयधर्मातिदेशको न त्वस्य लौकिकस्य । किं च 'अस्यवामीय'मित्यादाविव तत्र लुकः प्राप्तिरेव नेति दिक् ॥ १ ॥

पञ्चम्याः । 'आहरणाङ्गे' इति बहुव्रीहिः । ऋत्विग्विशेषस्येयं संज्ञा ।

१—'चोपसंख्यानम्' पा० ।

२—नेदं स्वतन्त्रं वार्तिकमिति केचित् ।

* तत्र साधुः ४ । ४ । ९८; ओर्गुणः ६ । ४ । १४६; वान्तो यि प्रत्यये ६ । १ । ७९

अन्यार्थे चैषा पञ्चमी द्रष्टव्या । ब्राह्मणानि शंसतीति ब्राह्मणाच्छंसी ।

अथवा युक्त एवात्र पञ्चम्यर्थः । ब्राह्मणेभ्यो गृहीत्वा=आहृत्याहृत्य शंसतीति ब्राह्मणाच्छंसी ॥ २ ॥

## ओजःसहोम्भस्तमसस्तृतीयायाः ॥ ६ । ३ । ३ ।

### अञ्जस उपसङ्ख्यानम् ॥ १ ॥

अञ्जस उपसङ्ख्यानं कर्तव्यम् । अञ्जसाकृतम् ।

### पुंसानुजो जनुषान्धो विकृताक्ष इति च ॥ २ ॥

पुंसानुजो जनुषान्धो विकृताक्ष इति चोपसङ्ख्यानं कर्तव्यम् । पुंसानुजः । जनुषान्धो विकृताक्षः ॥ ३ ॥

## आज्ञायिनि च ॥ ६ । ३ । ५ ॥

### आत्मनश्च पूरणे ॥ १ ॥

आत्मनश्च पूरण उपसङ्ख्यानं कर्तव्यम् । आत्मनापञ्चमः । आत्मनादशमः[1] ।

### अन्यार्थे च ॥ २ ॥

अन्यार्थे चैषा तृतीया द्रष्टव्या । आत्मा पञ्चमोऽस्यात्मनापञ्चमः ।

प्र०—युक्त एवेति । आहरणाङ्गे शंसने शसिर्वर्तत इत्युपात्तविषयमेतदपादानम् । यथा 'बलाहकाद्विद्योतते विद्यु'दिति निस्सरणाङ्गे विद्योतने विद्युतिर्वर्तत इति बलाहकोपादानम् ॥ २ ॥

आज्ञायिनि । अन्यार्थ इति । आत्मा पञ्चमोऽस्येत्यत्रार्थे 'आत्मनापञ्चम' इत्यादि प्रयुज्यत

उ०—भाष्ये—ब्राह्मणेभ्य इति । ब्राह्मणाख्यवेदभाग[2]विशेषेभ्य इत्यर्थः । 'गृहीत्वे'त्यस्य व्याख्यानमाहृत्येत्यादि । पुंसानुज इति । यस्य पुमानग्रजः स पुंसा हेतुनानुज इत्यर्थः । 'जनुषान्धो विकृताक्ष' इति काचित्कप्रयोगस्य वार्तिके उपादानम् । परे तु विकृदिति भावे क्विबन्तं, तेन तृतीयान्तेन विकारयुक्तमक्षि यस्येत्यर्थे समास इत्याहुः ॥ २ ॥

आज्ञायिनि च । अत्रात्मनश्च पूरणे इति विशिष्टं वार्तिकमिति अत्रत्यभाष्यस्वरसादायाति । 'वैयाकरणाख्याया'मित्यत्र 'परस्य चे'ति चेन परशब्दप्रतिद्वन्द्वितया आत्मशब्दस्यैव ग्रहणं, तदुभयञ्चैकसूत्रमित्याहुः । अन्यार्थशब्देन प्रथमार्थ उच्यते इत्याह—आत्मा पञ्चम इति । एवं च बहुव्रीह्यर्थे तृतीयातत्पुरुष इति भाष्यार्थ इति भावः । ननु पूरणार्थशब्दसमभिव्याहारे बहुव्रीह्यर्थे तृतीयासमासविधाने तेन बहुव्रीहि-

१–'आत्मनादशमः' इत्यधिकं क्वचित् ।

–२"ब्राह्मणानि तु वेदव्याख्यानान्येव सन्ति, नैव वेदाख्यानीति ।" ( ऋ० भाष्यभूमिका-वेदसंज्ञाविचारविषयः )

७४ ‡

अथवा युक्त एवात्र तृतीयार्थः । आत्मना कृतं तत् तस्य येनासौ पञ्चमः । कथं 'जनार्दनस्त्वात्मचतुर्थ एवे'ति ? बहुव्रीहिरयम् । आत्मा चतुर्थोऽस्येति ॥५॥

## वैयाकरणाख्यायां चतुर्थ्याः ॥ ६ । ३ । ७ ॥

## परस्य च ॥ ६ । ३ । ८ ॥

### आत्मनेभाषपरस्मैभाषयोरुपसङ्ख्यानम् ॥ १ ॥

आत्मनेभाषपरस्मैभाषयोरुपसङ्ख्यानं कर्तव्यम् । आत्मनेभाषः परस्मैभाषः ।

तत्कथं कर्तव्यम् ? यदि व्याकरणे भवा वैयाकरणी, वैयाकरणयाख्या वैयाकरणाख्या वैयाकरणाख्यायामिति । अथ हि वैयाकरणानामाख्या वैयाकरणाख्या [ वैयाकरणाख्यायामिति ] नार्थ उपसङ्ख्यानेन ।

यद्यपि व्याकरणे भवा वैयाकरणी, वैयाकरणयाख्या वैयाकरणाख्या [ वैयाकरणाख्यायामिति ] एवमपि नार्थ उपसङ्ख्यानेन । वचनाद्भविष्यति । अस्ति वचने

प्र०—इत्यर्थः । अत्र च 'वे'ति वक्तव्यं, तेनात्मपञ्चम इत्यपि भवति । आत्मना कृतमिति । वृत्तिविषये प्रतीयमाना करोतिक्रिया कारकत्वनिमित्तं भवति । हेतौ वा तृतीया कार्या । अथवा दध्योदनादौ उपसेकादिवत् करोतिक्रियाया अन्तर्भावात् करोतेरप्रयोगः, आत्मनापञ्चम इत्युक्ते आत्मनाऽस्य कृतं पञ्चमत्वमिति संप्रत्ययात् । आत्मा चतुर्थोऽस्येति । एकस्यैव वस्तुनो बुद्धिप्रकल्पितभेदस्य वर्तिपदार्थत्वमन्यपदार्थत्वं च न विरुध्यते ॥ ५ ॥

वैयाकरण । व्याकरणे भवेति । 'अणृगयनादिभ्य' इत्यण् । अत्र पक्षे आख्याशब्दः संज्ञापर्यायः । आत्मनेभाषपरस्मैभाषशब्दौ च न केषुचिद्व्याकरणेषु संज्ञात्वेन विनियुक्ताविति अलुकोऽप्रसङ्गः । अथ हीति । आख्या—प्रतिपादनं, व्यवहार इत्यर्थः । आत्मनेपदिनश्च धातवो वैयाकरणैरात्मनेभाषशब्देन व्यवह्रियन्ते, परस्मैपदिनः परस्मैभाषशब्देनेत्यलुक् सिद्धः ।

उ०—बाधापत्तौ 'आत्मचतुर्थ इति बहुव्रीहि'रिति भाष्यासङ्गतिरत आह—अत्र च वेति वक्तव्यमिति । 'बहुव्रीह्यर्थे तृतीयातत्पुरुष' इति कल्पितवाक्ये इत्यर्थः । वृत्तिविषये इति । वृत्तावर्थान्तरप्रादुर्भावात् । दध्योदनादिवृत्तौ, 'प्रविश पिण्डी'मित्यादौ च प्रतीयमानक्रियापेक्षकारकभावस्यापि दर्शनादिति भावः । हेतौ तृतीयापक्षे 'कृतं तस्य त'दिति भाष्यं निष्फलं स्यादतः पूर्वोक्तमेव पक्षं दृष्टान्तप्रदर्शनपूर्वकमाह—अथवेति । बुद्धिप्रकल्पित-भेदस्येति । 'राहोः शिर' इतिवदिति भावः ॥ ५ ॥

वैयाकरणाख्यायां । वृद्धत्वाच्छप्राप्तेराह—अणृगेति । अत्र पक्षे 'पुंवत्कर्मधारये'ति पुंवत्त्वम् । गुरुभूतषष्ठीतत्पुरुषाश्रयणसामर्थ्यादेवाख्याशब्दः केवलयौगिक इत्याह—प्रतिपादनमिति । संव्यवहारमात्र-

१—क्वचिन्न ।

प्रयोजनम् । किम् ? आत्मनेपदम् । परस्मैपदमिति । निपातनादेतत्सिद्धम् । किं निपातनम् ? 'अनुदात्तङित आत्मनेपदम्' 'शेषात्कर्तरि परस्मैपदम्' [ १ । ३ । १२; ७८ ] इति ॥ ७ ॥

## हलदन्तात्सप्तम्याः सञ्ज्ञायाम् ॥ ६ । ३ । ९ ॥

### हृद्द्युभ्यां ङेरुपसङ्ख्यानम् ॥ १ ॥

हृद्द्युभ्यां ङेरुपसङ्ख्यानं कर्तव्यम् । हृदिस्पृक् दिविस्पृक् ।

### अन्यार्थे च ॥ २ ॥

अन्यार्थे चैषा सप्तमी द्रष्टव्या । हृदयं स्पृशतीति हृदिस्पृक् । दिवं स्पृशतीति दिविस्पृक् ।

### हलदन्ताधिकारे गोरुपसङ्ख्यानम् ॥ ३ ॥

हलदन्ताधिकारे गोरुपसङ्ख्यानं कर्तव्यम् । गविष्ठिरः ॥ न कर्तव्यम् । लुकोऽवादेशो विप्रतिषेधेन । लुक्क्रियतामवादेश इत्यवादेशो भविष्यति विप्रतिषेधेन* । अवादेशे कृते 'हलदन्ता'दित्येव सिद्धम् ।

प्र०—यद्यपीति । आत्मनेपदपरस्मैपदशब्दयोर्निपातनादेवालुकः सिद्धत्वादाख्याशब्देन संव्यवहारमात्रमुच्यत इत्यर्थः ॥ ७ ॥ ८ ॥

हलदन्तात् । हृदयं स्पृशतीति । स्पर्शनक्रियायां हृदयस्य कर्मत्वं, न त्वधिकरणत्वमिति वृत्तिविषये द्वितीयार्थे सप्तमी वक्तव्येत्यर्थः । 'पद्दन्नोमास्हृन्नि'शिति च्छान्दसो हृदयस्य हृदादेशः । 'दिविस्पृ'गित्येतत्तु भाषायामपि भवति । लुकोऽवादेश इति । ननु चावादेशोऽन्तरङ्गो लुग्बहिरङ्ग इति कुतो विप्रतिषेधः ? अपि चान्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधत इत्यवादेशेन न भाव्यम् । एवं तर्ह्यन्तरङ्गभावमनपेक्ष्य विप्रतिषेध उच्यते । कृते चावादेशेऽलुका भाव्यमिति लुकः प्रवृत्तिः संदिग्धेति बाधकत्वमपि लुकः संदिग्धमिति विप्रतिषेधोपपत्तिः । अन्ये त्वाहुः, किं व्यक्तिपक्षाश्रये एतद्विषये लक्षणस्याचरितार्थत्वाद्भाविहलन्तत्वाश्रयेणालुका लुको बाधनादवादेशोऽस्त्वथ जातिपक्षे सांप्रतिकहलन्तेषु सावकाशोऽलुगत्रानुपजातनिमित्तो नालं लुकं बाधितुमिति लुक् प्रवर्ततामित्येवंविधो विप्रतिषेधः ।

उ०—मिति । आरम्भसामर्थ्याद्रूढिपरित्यागेन योगपरिग्रह इत्यर्थः ॥ ७ ॥ ८ ॥

हलदन्तात् । वृत्तिविषये द्वितीयार्थे इति । हृदयादिनिष्ठसंयोगानुकूलव्यापारवानित्यर्थे एषां प्रयोगाणामिष्टत्वादिति भावः । छान्दस इति । लोकेऽपि तेषां दर्शनान्मासश्छन्दसीति वार्तिके छन्दोग्रहणाच्च चिन्त्यमिदम् । असंज्ञार्थमिदं वचनम् । लुग्बहिरङ्ग इति । समासप्रातिपदिकापेक्षत्वादिति भावः । अपि चेत्याद्युक्तदोषं परिहरति—कृते चेति । एतद्विषयलक्षणस्य-कृतावादेशगोशब्दविषयस्य । भावीति । लुक्प्रवृत्तेः प्रागन्तरङ्गानपीति न्यायेनावादेशाप्रवृत्तेरिति भावः । विप्रतिषेधः—विरोधः । तत्र विरोधे प्रसक्ते

* सुपो धातुप्रातिपदिकयोः २ । ४ । ७१; एचोऽयवायावः ६ । १ । ७८

**लुकोऽवादेशो विप्रतिषेधेनेति चेद्भूमिपाशेऽतिप्रसङ्गः ॥ ४ ॥**

लुकोऽवादेशो विप्रतिषेधेनेति चेद्भूमिपाशेऽतिप्रसङ्गो भवति । भूम्यां† पाशो भूमिपाशः ।

**अकोऽत इति वा सन्ध्यक्षरार्थम् ॥ ५ ॥**

एवं तर्ह्यविशेषेण सप्तम्या अलुकमुक्त्वाकोऽत इति वक्ष्यामि । तन्नियमार्थं भविष्यति—अकोऽत एव भवति नान्यत इति । [ १तत्सन्ध्यक्षरार्थम् ] तेन सन्ध्यक्षराणां सिद्धं भवति । सिध्यति । सूत्रं तर्हि भिद्यते ।

यथान्यासमेवास्तु । ननु चोक्तं 'हलदन्ताधिकारे गोरुपसङ्ख्यान'मिति । नैष दोषः । निपातनादेतत्सिद्धम् । किं निपातनम् ? गविष्ठिरशब्दो विदादिषु‡ पठ्यते । असकृत्खल्वपि निपातनं क्रियते—गवियुधिभ्यां स्थिरः [ ८ । ३ । ९५ ] इति ॥६॥

प्र०—जातौ पदार्थे दृषदिमाषकादिषु सांप्रतिकहलन्तेष्वलुक् सावकाशो भाविहलन्तत्वाश्रयणेन न शक्नोति लुकं बाधितुम् । अन्तरङ्गाणां च विधीनां बाधको लुगिति मन्यमान आह—लुक इति । अत्रापि यणादेशे कृते हलन्तत्वादलुक्प्रसङ्गः ।

अक इति । 'सप्तम्याः संज्ञाया'मिति कृत्वाकोऽत इति नियमार्थं कर्तव्यमित्यर्थः । तत्सन्ध्यक्षरार्थमिति । सन्ध्यक्षरान्तेभ्योऽलुगर्थमित्यर्थः । असकृदिति । नाञ्विषयमेव निपातनमपि तु सर्वार्थमिति दर्शयति । 'गवियुधिभ्यां स्थिर' इत्यनेन समासे गविशब्दात्परस्य स्थिरस्य सकारस्य षत्वं विदधद्गविष्ठिरशब्दे सप्तम्या अलुकमभ्यनुजानाति ॥ ९ ॥

उ०—व्यक्तिपक्षाश्रयणेन परत्वादवादेश इत्याशयः । 'अथ जातिपक्षे' इत्यादिना 'नालं लुकं बाधितु'मित्यन्तेनोक्तमेवार्थं स्फुटत्वायोपपादयति–'जातौ'वित्यादिना 'न शक्नोति लुकं बाधितु'मित्यन्तेन । अत्र मते व्यक्तिपक्षे संभावनामात्रेणालुका लुको [ वा ] बाधो बोध्यः । अत्रारुचिबीजं स्वरूपकथनेनैव सुज्ञानां स्फुटम् । भाष्यकारोऽन्तरङ्गत्वाद्युपेक्ष्य लक्ष्यविरोधादेव विप्रतिषेधं दूषयति—भूमिपाशे इत्यादिना ।

एवं च बलवत्त्वाल्लुगेवेत्युपसङ्ख्यानस्य कर्तव्यत्वे प्राप्ते आह—अकोऽत इति वेति । हलदन्तादित्यस्य स्थाने [ नन्वेकेनैव सिद्धत्वात्किं निपातनान्तरकथनेनेत्याशङ्क्य पूर्वोक्तस्यैव सन्देहनिराकरणेन दृढीकरणायेत्याह—नाञ्विषयमेवेति । अत्र विशिष्टनिपातनाभावेऽपि निपातनसाम्यान्निपातनव्यवहार इत्याह—समासे गवीत्यादि । तत्र हि 'समासेऽङ्गुलेः सङ्ग इत्यतः समास इति वर्तते ॥ ६ ॥

† इको यणचि ६ । १ । ७७
२–क्वचिन्न ।
१–'तत्सन्ध्यक्षरार्थम्' पा० ।
‡ 'गविष्ठिर । निषाद ।' ४ । १ । १०४ गण० ।

## कारनाम्नि च प्राचां हलादौ ॥ ६ । ३ । १० ॥

किमियं प्राप्ते विभाषाहोस्विदप्राप्ते । कथं च प्राप्ते कथं वाप्राप्ते ? यदि संज्ञायामिति§ वर्तते ततः प्राप्ते । अथ निवृत्तं ततोऽप्राप्ते । कश्चात्र विशेषः ?

### कारनाम्नि वावचनार्थं चेदजादावतिप्रसङ्गः ॥ १ ॥

कारनाम्नि वावचनार्थं चेदजादावतिप्रसङ्गो भवति । इहापि प्राप्नोति—अविकट

प्र०—कारनाम्नि च । कारः—स्वमिग्राह्यो भागः । यदि संज्ञायामिति । संज्ञाग्रहणानुवृत्तौ रूढो यः कारो नियतद्रव्यो नियतपरिमाणस्तस्य ग्रहणेन भाव्यम् । यस्तु सांप्रतिकः कारः केनचिदेवोत्पादितस्तस्य ग्रहणाभावः । तत्र पूर्वेण नित्यमलुकि प्राप्ते विभाषेयं संपद्यते । अथ संज्ञाग्रहणं नानुवर्तते, पूर्वविप्रतिषेधाच्च संज्ञायां नित्येनालुका भाव्यं तदा सांप्रतिककाराभिधायिन्यप्राप्तो विभाषालुग्विधीयत इति पक्षोऽवतिष्ठते । तस्मिंश्च पक्षे कारनाम्नीति नामशब्दो व्यपदेशमात्राभिधायी ।

अविकटोरण इति । अवीनां सङ्घातोऽविकटः । सङ्घाते कटच् । उरणो—मेषः । कारविशेषस्य रूढिरियमिति पूर्वेणालुक् प्राप्नोतीत्यर्थः । 'प्राचा'मिति चैतदुभयथा व्याख्यायते । प्राचामाचार्याणां मतेन हलादावुत्तरपदे कारनाम्न्यलुक् भवति नान्येषामिति विकल्पः संपद्यते । व्यवस्थितविभाषा च विज्ञायते । तेन प्राग्देशे कारनाम्नि हलादौ नित्यमलुक् भवति, देशान्तरे तु कारनाम्नि लुगेव—यूथपशुरिति । अथवा प्राचां देशे यत् कारनाम तत्र हलादावुत्तरपदेऽलुक्, न तु देशान्तरे—यूथपशु इत्यादाविति समार्थ्याद्देशभेदेन लुगलुकोर्व्यवस्थानाद्विकल्पः संपद्यते ।

उ०—कारनाम्नि च । कारशब्दार्थमाह—स्वामीति । कर एव कारः । प्रज्ञाद्यण् । स च पालयितुः स्वामिनः प्रजाभिर्देयोंऽशो [1]धान्यषड्भागादिः । स च देशभेदेन नियतरूपः । रूढो य इति । कृतालुग्यो रूढ इत्यर्थः । ननु संज्ञाग्रहणाननुवृत्तावपि नामशब्दस्य सञ्ज्ञापर्यायत्वात्तत्रैव प्राप्तेः कथमप्राप्तविभाषात्वोपपत्तिरत आह—तस्मिंश्च पक्ष इति ।

भाष्ये—कारनाम्नीति । काररूढे इत्यर्थः । वावचनार्थं चेदिति । 'प्राचा'मिति विकल्पार्थकं चेदित्यर्थः । पूर्वेणालुगिति । नित्यालुगित्यर्थः । लुगेवात्रेष्यते । ननु प्राचामित्यस्य देशविशेषणत्वान्नित्य एवायं विधिरिति विचारोऽयमसङ्गत इत्यत आह—प्राचामिति चैतदिति । ननु प्राचामित्याचार्यनिर्देशे देशविशेषणे यत्फलं तन्न सिध्येदत आह—व्यवस्थितेति । देशविशेषणपक्षेऽपि सामर्थ्याद्विकल्पोपपत्तिं दर्शयति—अथवेति । इदमेव युक्तम्, अन्यथा पूर्वेण नित्ये प्राप्तेऽस्य विकल्पार्थत्वेन नियमार्थत्वाभावाद् यूथपश्वादिष्वपि पूर्वसूत्रप्रवृत्तिर्दुर्वारा । एवं च हलादावुत्तरपदे कारनाम्नि चेदलुक् प्राग्देशीय एवेति

§ हलदन्तात् सप्तम्याः संज्ञायाम् ६ । ३ । ६

१—'पञ्चाशद्भाग आदेयो राज्ञा पशुहिरण्ययोः । धान्यानामष्टमो भागः षष्ठो द्वादश एव वा ॥'
(मनुस्मृतिः ७ । १३० )

उरणो दातव्योऽविकटोरणः ॥ अस्तु तर्ह्यप्राप्ते ।

**अप्राप्ते समासविधानम् ॥ २ ॥**

यद्यप्राप्ते समासो विधेयः । प्राप्ते पुनः सति संज्ञायाम् [ २ । १ । ४४ ] इत्येव समासः सिद्धः ।

नष दोषः । एतदेव ज्ञापयति 'भवत्यत्र समास' इति यदयं कारनाम्नि सप्तम्या अलुकं शास्ति । यद्यपि तावज्ज्ञापकात्समासः स्यात्स्वरस्तु न सिध्यति । यद्धि तत्सप्तमीपूर्वपदं प्रकृतिस्वरं भवतीति* लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेत्येवं तत् । नैवात्रानेन स्वरेण भवितव्यम् । किं तर्हि ? 'सप्तमीहारिणौ धर्म्येऽहरणे' [ ६ । २ । ६५ ] इत्यनेनात्र स्वरेण भवितव्यम् ॥ किं च भोः संज्ञा अपि [वै[1]] लोके[2] क्रियन्ते न लोकः संज्ञासु प्रमाणम् । लोके च कारनाम संज्ञा । ननु

प्र०—यूथपश्वादय उदग्देशे काराः । हलेद्विपादिकादयः प्राग्देशे, अविटोरणादयः प्रागुदक् चेति ।

एतदेवेति । समासमन्तरेण लुक्प्रसङ्गाभावादलुग्विधानादत्र समासोऽनुमीयत इत्यर्थः । अस्मिन्स्थाने अविकटोरणः सांप्रतिककार इत्यभ्युपगमः । यथैव स्तूपेशाणादयः । अत्र हलादिग्रहणादजादिनिवृत्त्यर्थादजादावपि समासानुमानम् । यद्यपीति । यथा परमे कारके परमकारके इत्यत्र पूर्वपदप्रकृतिस्वरो न भवति लाक्षणिकत्वात्सप्तमी समासस्य, एवं स्तूपेशाणादावपि पूर्वपदप्रकृतिस्वराप्राप्तिः । इतरो यद्यपि 'संज्ञाया'मिति प्रतिपदोक्तः सप्तमीसमासो विधीयते तथापि स्वरान्तरेणैवात्र भाव्यमित्याह—नैवात्रेति । पूर्वपदाद्युदात्तत्वेन भाव्यमित्यर्थः । एवं स्थिते निर्णेतुमाह—किं च भो इति । अयमर्थः—संज्ञाग्रहणानुवृत्तौ स्तूपेशाणादयो रूढाः, तन्निवृत्तौ न रूढा इत्येतन्न क्रियते । एकस्य रूढित्वारूढित्वविरोधात् । लोके चेति । रूढा

उ०—नियमादविकटोरणस्याव्यावृत्तेस्तत्र पूर्वसूत्रप्रवृत्तिर्दुर्निवारा, यूथपश्वादौ च नेति बोध्यम् ।

अस्मिन्स्थाने इति । अस्यां स्थितौ । एवमङ्गीकारे । सांप्रतिकानामेवोदाहरणत्वाङ्गीकारे इत्यर्थः । एवं चोदाहरणभूतस्तूपेशाणादीनां यथा सांप्रतिकत्वं तथाविकटोरणस्यापीति न तत्र पूर्वसूत्रप्राप्तिरित्यर्थः । तत्र संज्ञाग्रहणेन प्राचीनसङ्केतानामेव ग्रहणादित्यभिमानः । नन्वनेन हलादावुत्तरपदे समासानुमानेऽपि अजादौ कथमत आह—अत्र हलादीति । एवं स्तूपेति । अत्र सप्तमीसमासस्यानुमेयत्वात्प्रतिपदोक्तत्वाभाव इति भावः । पूर्वपदाद्युदात्तत्वेनेति । 'सप्तमीहारिणा'वित्यनेन । अत्र तु लक्षणप्रतिपदोक्तपरिभाषा भाष्यप्रामाण्यान्नेति भावः । संज्ञा अपि लोके क्रियन्ते इति भाष्यस्य—संज्ञात्वं न शास्त्रैकगम्यं, संज्ञायामित्युच्चार्य विहिता एव संज्ञाशब्दा इति नेत्यर्थः । लोकशब्देनात्र शास्त्रम् । क्वचित्तु 'शास्त्रे' इत्येव पाठः । तत्र हेतुमाह—लोकः संज्ञास्विति । तेन रूढा एव संज्ञा इत्यर्थस्तदाह—अयमर्थ इत्यादिना । 'लोके च कारनाम-

* तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः ६ । २ । २

१–क्वचिन्न । २–'शास्त्रे' पा० द्रष्टव्योऽत्रोद्द्योतः ।

चोक्तं 'कारनाम्नि वावचनार्थं चेदजादावतिप्रसङ्ग' इति । नैष दोषः ।

योगविभागात्सिद्धम् ॥ ३ ॥

योगविभागः करिष्यते । 'कारनाम्नि च प्राचाम्' । ततो 'हलादौ' । हलादौ च कारनाम्नि सप्तम्या अलुग्भवति । इदमिदानीं किमर्थम् ? नियमार्थम् । 'हलादावेव कारनाम्नि [ सप्तम्या अलुग्भवति ] नान्यत्र' । क्व मा भूत् ? अविकट उरणो दातव्योऽविकटोरणः ॥ १० ॥

मध्याद्गुरौ ॥ ६ । ३ । ११ ॥

गुरावन्ताच्च ॥ १ ॥

गुरावन्ताच्चेति वक्तव्यम् । अन्तेगुरुः ॥ ११ ॥

बन्धे च विभाषा ॥ ६ । ३ । १३ ॥

स्वाङ्गग्रहणमनुवर्तत उताहो न† । किं चातः ? यद्यनुवर्तते सिद्धं हस्तेबन्धः

प्र०—एव स्तूपेशाणादयः । ते तु चिरन्तनाः सांप्रतिका वा भवन्तीत्यर्थः, संज्ञाग्रहणानुवृत्त्यैव सिद्धेऽर्थे नामग्रहणं विस्पष्टार्थम् । एवं हि स्फुटाप्राप्ते विभाषा भवति । अन्यथा संज्ञाग्रहणानुवृत्तिः संदिह्येत ।

कारनाम्नि च प्राचामिति । प्राचामेव कारनाम्नीति नियमादुदीचां कारेऽविकटोरणेऽलुग्निवर्त्यते । प्राचामपि कारेऽविकटोरणे हलादावित्यनेन द्वितीयेन नियमेनालुग्निवृत्तिः ॥ १० ॥

बन्धे च । नेन्सिद्धेति निषेधस्यास्य च विकल्पस्य विषयविभागज्ञानायोपन्यस्यति—

उ०—संज्ञे'त्यस्य नामशब्दसंज्ञाशब्दौ पर्यायावित्यर्थः । नन्वेवं तदनुवृत्त्यैव सिद्धेऽत्र नामग्रहणं व्यर्थमत आह—संज्ञाग्रहणेति ।

भाष्ये वाक्यभेदेन नियमद्वयमुक्तं, तत्राद्यस्य स्वरूपव्यावर्त्ये दर्शयति—प्राचामेवेत्यादि । अविकटोरणेऽलुग्निवर्त्यते इति । इदमुपलक्षणं, यूथपश्वादावप्युदीचां कारनाम्न्यनेनैव व्यावृत्तेरिति बोध्यम् । एवं चाविकटोरणस्योदक्कारत्वे कैयटोक्ते दृढं भाष्यारूढं मानं चिन्त्यम् । द्वितीयं दर्शयति—प्राचामपीति । अभ्यर्हितपशौ तु संज्ञात्वाभावात्प्राप्तिरेव नेति तृतीयो नियमो भगवता नादृतः । परे तु 'वावचनार्थ चे'दित्युपक्रमात्कारनाम्नि च प्राचामिति सर्वत्र कारनाम्नि विकल्पार्थं, प्राचाङ्ग्रहणं विकल्पार्थमेव । हलादाविति नियमार्थं, तदुपक्रमेणैव नियमार्थत्वस्य भगवतोक्तेः । अयं च योगविभागसामर्थ्यात्पूर्वस्यापि नियमः । एवं च सर्वदेशीयकारनाम्नि हलादौ विकल्पः प्रतीयते, अजादौ च लुगेवेति वदन्ति ॥ १० ॥

बन्धे च । ननु चक्रेबन्धश्चक्रबन्ध इत्यादिप्रयोगदर्शनेनात्र स्वाङ्गग्रहणानुवृत्तिनिश्चयात्प्रश्नानुपपत्ति-

१–इदं क्वचित्र । † अमूर्धमस्तकात् स्वाङ्गादकामे ६ । ३ । १२

हस्तबन्धः, चक्रे बन्धः चक्रबन्ध इति न सिध्यति। अथ निवृत्तं सिद्धं चक्रे बन्धः चक्रबन्धः, हस्ते बन्धः हस्तबन्ध इति न सिध्यति। किं कारणम्? 'नेन्सिद्ध बध्नातिषु' [ ६। ३। १९ ] इति प्रतिषेधः प्राप्नोति।

नैष दोषः। सर्वत्रैवात्रोत्तरपदाधिकारे 'तत्पुरुषे कृति बहुलम्' [ १४ ] इति प्राप्ते 'नेन्सिद्धबध्नातिष्वि'ति प्रतिषेध उच्यते। तस्मिन्नित्ये प्राप्त इयं विभाषा-रभ्यते॥ एवमपि न ज्ञायते कस्मिन्विषये विभाषा कस्मिन्विषये प्रतिषेध इति। घञन्तस्येदं बन्धशब्दस्य ग्रहणं प्रतिषेधे पुनर्धातुग्रहणम्। [ तेन[1] ] घञन्ते विभा-षान्यत्र प्रतिषेधः॥ १३॥

## तत्पुरुषे कृति बहुलम्॥ ६। ३। १४॥

### तत्पुरुषे कृति बहुलमकर्मधारये॥ १॥

तत्पुरुषे कृति बहुलमित्यत्राकर्मधारय इति वक्तव्यम्। इह मा भूत्—परमे कारके परमकारक इति॥ तत्तर्हि वक्तव्यम्? न वक्तव्यम्। बहुलवचनान्न भविष्यति।

प्र०—स्वाङ्गग्रहणमिति। स्वाङ्गग्रहणेऽनुवर्तमाने स्वाङ्गादुत्तरस्याः सप्तम्या अलुको विकल्पः, अन्यस्मात्तु तत्प्रतिषेध इति विषयविभागसिद्धिः। अथ निवृत्तमिति। तदा विकल्पनिषेध-योर्विषयविभागाविज्ञानाद्यथेष्टसिद्ध्यभावः। सर्वत्रेति। 'चक्रबन्धन'मित्यादौ। सर्वत्र बध्नाति-धात्वादावुत्तरपदेऽलुक्प्रतिषेधः। अत्र तु सूत्रे बन्धशब्दो घञन्त उपात्तो न धातुमात्रनिर्देश इत्यर्थः॥ १३॥

तत्पुरुषे। बहुलवचनादिति। प्रकृतत्वादलुगिति विज्ञेयम्। न्यायोऽप्यत्रास्ति।

उ०—माशङ्क्य तद्बीजं दर्शयति—नेन्सिद्धेति। उभयत्रापि धातुग्रहणमाश्रित्य किं स्वाङ्गग्रहणानुवृत्त्या विषय-विभागलाभः, आहोस्वित्प्रकारान्तरेणेति सन्देहात्प्रश्नोपपत्तिरिति भावः। भाष्ये—अथ निवृत्तं सिद्धं चक्रे बन्धश्चक्रबन्धः, हस्ते बन्धः हस्तबन्ध इति न सिध्यतीति। अयं भावः—अत्र स्वाङ्गग्रहणनिवृत्तावस्या-स्वाङ्गार्थत्वे निषेधः स्वाङ्गविषयः स्यादिति। विषयविभागाज्ञानादिति। इष्टविषयविभागाज्ञानादित्यर्थः। तदाह—यथेष्टसिध्यभाव इति। उभयत्रापि विकल्पस्यैष्टत्वमिति भावः। 'सर्वत्र'पदार्थमाह—चक्रबन्धन-मित्यादाविति। भाष्ये—तस्मिन्नित्ये प्राप्ते इति। अवश्यं प्राप्ते इत्यर्थः। एवञ्चेदमपि उत्तरसूत्रात्तत्पुरुष इत्यपकृष्य तत्पुरुष एवेति भावः। एवमपि न ज्ञायत इति। उभयत्रापि धातुनिर्देशादित्यभिमानः। एवं च बहुव्रीहावप्यस्य प्रवृत्तिं स्वीकुर्वतां वृत्तिकृतामाशयश्चिन्त्यः। घञन्त इति। तेन पचाद्यजन्तेऽपि निषेध एवेति बोध्यम्॥ १३॥

तत्पुरुषे कृति। अन्तरङ्गेति। कृति सप्तमीत्युक्त्या प्रत्यासन्ना चेत्यपि बोध्यम्। यथा स्तम्बेरमादौ।

१–क्वचिन्न।

अथ किमर्थं लुगलुगनुक्रमणं क्रियते न 'तत्पुरुषे कृति बहुल'मित्येव सिद्धम् ।

लुगलुगनुक्रमणं बहुवचनस्याकृत्स्नत्वात् ॥ २ ॥

लुगलुगनुक्रमणं क्रियतेऽकृत्स्नं बहुलवचनमिति ॥ यद्यकृत्स्नं [ बहुलवचनं ] यदनेन कृतमकृतं तत् । एवं तर्हि न ब्रूमोऽकृत्स्नमिति । कृत्स्नं च कारकं च साधकं च निर्वर्तकं च । यदनेन कृतं सुकृतं तत् । किमर्थं तर्हि लुगलुगनुक्रमणं क्रियते ? उदाहरणभूयस्त्वात् । ते वै खल्वपि विधयः सुपरिगृहीता भवन्ति येषां लक्षणं प्रपञ्चश्च । केवलं लक्षणं केवलः प्रपञ्चो वा न तथा कारकं भवति ॥ अवश्यं खल्व-

प्र०—अन्तरङ्गा कृदन्तवाच्यक्रियानिमित्ता सप्तमी गृह्यते, इह तु क्रियान्तरनिमित्ता 'परमे कारके निधेही'ति बहिरङ्गेति न गृह्यते ।

अकृत्स्नत्वादिति । अकृत्स्नकारित्वादित्यर्थः । न हि बहुलग्रहणमात्राल्लुगलुकोर्विषयविभागनिश्चयः । इतरस्त्वपरिपूर्णत्वमकृत्स्नत्वं मन्यमान आह—यद्यकृत्स्नमिति । कृत्स्नं चेति । एतावत्युक्ते अवयवसाकल्यमपि कात्स्न्यं गम्यत इत्याह—कारकं चेति । कृत्स्नकारित्वात् कृत्स्नमित्यर्थः । कारकमपि प्रारब्धस्यान्तागमनात्प्रतिबन्धसद्भावादकृत्स्नं स्यादित्याह—साधकं चेति । साधकमपि कदाचिदसामर्थ्यादकृत्स्नं स्यादित्याह—निर्वर्तकं चेति । सर्वदा सर्वं कार्यं निष्पादयतीत्यर्थः । उदाहरणभूयस्त्वादिति । भूयांस्युदाहरणानि प्रपञ्चेन ज्ञाप्यन्त इत्यर्थः । लक्षणमिति । सामान्यलक्षणं बहुलग्रहणादियुक्तं विषयविभागस्याप्रतिपादकत्वान्न तथा कारकम् । प्रपञ्चोऽप्यानन्त्यप्रसङ्गान्न कारक इति मध्यमावस्थाश्रीयत इत्यर्थः ॥ अवश्यं खल्विति । प्रातिशाख्यसद्भावेऽपि सर्ववेदसाधारणेनानेन शब्दानां प्रतिपादनं क्रियते, तच्च प्रतिपदपाठस्या-

उ०—विषयविभागेति । 'क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषे'त्येव बहुलग्रहणेन लभ्यते, न तु विषयविभागइति मन्दबुद्धीनां विषयविभागज्ञानार्थं लुगलुगनुक्रमणं प्रपञ्चेन क्रियत इति वार्तिकार्थ इति भावः । अपरिपूर्णत्वम्—अव्यापकत्वम् । अनेकपर्यायोपादानोपयोगमाह—एतावतीति । यथा 'कृत्स्नोऽयं पट' इत्युक्ते सर्वावयवपूर्णो न तु केनचिदवयवेन न्यून इति गम्यते । न तु कार्यविषयं साकल्यम् । एवमत्राप्यवयवगतसाकल्यं प्रतीयेत, तन्निवृत्त्यर्थं कारकमित्युक्तमिति भावः । अन्तागमने हेतुः—प्रतिबन्धसद्भावादिति । साधकमित्यस्य प्रारब्धकार्यनिष्पत्तिपर्यन्तं साधयतीत्यर्थः । अकृत्स्नं स्यादिति । कार्यस्य कदाचिदकरणादकृत्स्नमित्यर्थः । उदाहरणभूयस्त्वस्य तत्करणे हेतुत्वासंभवादाह—भूयांसीति । भूय उदाहरणज्ञापनायेति भाष्याक्षरार्थः । ननु प्रपञ्चस्यापि लक्षणत्वाल्लक्षणं प्रपञ्चश्चेत्ययुक्तमत आह—सामान्यलक्षणमिति । प्रातिशाख्येति । तत्र हि तत्तच्छाखागतानामेव शब्दानां प्रतिपादनं, तदपि न कात्स्न्येन, प्रकृतिप्रत्ययविभागानां स्वराणां च सर्वेषां तत्रासङ्ग्रहात् । इदं तु सर्वेषां वैदिकानां लौकिकानां च शब्दानामनुशासन-

१–क्वाचित्कः पाठ ।

प्यस्माभिरिदं वक्तव्यं बहुलम् अन्यतरस्याम् उभयथा एकेषामिति । सर्ववेदपारिषदं हीदं शास्त्रम् । तत्र नैकः पन्थाः शक्य आस्थातुम् ॥ १४ ॥

## षष्ठ्या आक्रोशे ॥ ६ । ३ । २१ ॥

### षष्ठीप्रकरणे वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषूपसङ्ख्यानम् ॥ १ ॥

षष्ठीप्रकरणे वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषूपसङ्ख्यानं कर्तव्यम् । वाचोयुक्तिः दिशोदण्डः पश्यतोहरः ।

### आमुष्यायणामुष्यपुत्रिकेत्युपसङ्ख्यानम् ॥ २ ॥

आमुष्यायणामुष्यपुत्रिकेत्युपसङ्ख्यानं कर्तव्यम् । आमुष्यायणः आमुष्यपुत्रिका । आमुष्यकुलिकेति च वक्तव्यम् । आमुष्यकुलिका ।

### देवानांप्रिय इति च ॥ ३ ॥

देवानांप्रिय इति चोपसङ्ख्यानं कर्तव्यम् । देवानांप्रियः ।

### शेपपुच्छलाङ्गूलेषु शुनः संज्ञायाम् ॥ ४ ॥

शेपपुच्छलाङ्गूलेषु शुनः संज्ञायामुपसङ्ख्यानं कर्तव्यम् । शुनःशेपः शुनः पुच्छः शुनोलाङ्गूलः ।

### दिवश्च दासे ॥ ५ ॥

दिवश्च दास उपसङ्ख्यानं कर्तव्यम् । दिवोदासाय गायत ॥ २१ ॥

---

प्र०—शक्यत्वाद्बहुलादिग्रहणेन कर्तव्यमित्यर्थः । सर्ववेदपारिषदमिति । अध्येतृसङ्घः परिषत् । तत्र भवं पारिषदम् । सर्ववेदानां पारिषदमिति षष्ठीसमासः । नैक इति । वेदेषु वैचित्र्येण व्यवहारात्तदङ्गव्याकरणेऽपि तथैव बहुलादिशब्देन व्यवहारः । तेनैतन्न चोदनीयम्—वाग्रहणमेव क्रियतां व्यवस्थितविभाषा वाश्रीयतां किं बहुलग्रहणेनेति ॥ १४ ॥

षष्ठ्या आक्रोशे । पश्यतोहर इति । 'षष्ठी चानादर' इति षष्ठी । पश्यन्तमनादृत्य हरतीत्यर्थः । शुनः शेप इति । ऋषिविशेषसंज्ञेयमकारान्ताप्यस्ति । शेपशब्दो न केवलं सकारान्तः । शुन इव शेपोऽस्येति बहुव्रीहिः ॥ २१ ॥

---

उ०—मित्यर्थः । सर्ववेदपारिषद'मित्यस्यार्थः–'सर्ववेदसाधारणेनानेने'त्यनेन दर्शितः । तमेवावयवार्थकथनेन स्पष्टयति— अध्येत्रिति । सर्ववेदशब्दस्य पारिषदशब्देनावयवद्वारकसंबन्धे षष्ठ्यन्तस्य समासः । बहुलादिशब्देनेति । वेदाङ्गत्वं बोधयितुं वैदिकैर्व्यवहार इति भावः ॥ १४ ॥

षष्ठ्या आक्रोशे । पश्यतोहरे कर्तरि पचाद्यजित्याह—हरतीत्यर्थ इति । शुनःशेपादयो ऋषिविशेषस्य संज्ञाः ॥ २१ ॥

## ऋतो विद्यायोनिसंबन्धेभ्यः ॥ ६ । ३ । २३ ॥

### विद्यायोनिसंबन्धेभ्यस्तत्पूर्वपदोत्तरपदग्रहणम् ॥ १ ॥

विद्यायोनिसंबन्धेभ्यस्तत्पूर्वपदोत्तरपदग्रहणं कर्तव्यम् । विद्यासम्बन्धेभ्यो विद्यासम्बन्धेषु यथा स्यात् । योनिसंबन्धेभ्यो योनिसम्बन्धेषु यथा स्यात् । व्यतिकरो मा भूत् ॥ अथैषां व्यतिकरेण भवितव्यम् ? बाढं भवितव्यम् । होतुःपुत्रः पितुरन्तेवासी ॥ २३ ॥

## आनङृतो द्वन्द्वे ॥ ६ । ३ । २५ ॥

क्वायं नकारः श्रूयते ? न क्वचिच्छ्रूयते लोपोऽस्यं भवति 'नलोपः प्रातिपदिकान्तस्य' [ ८ । २ । ७ ] इति । यदि न श्रूयते किमर्थमुच्चार्यते ? रपरत्वं* मा भूदिति ।

क्रियमाणेऽपि वै नकारे रपरत्वं प्राप्नोति । किं कारणम् ? नलोपे कृत एषोऽपि ह्युः स्थानेऽण् शिष्यते । नैष दोषः । 'उः स्थानेऽण प्रसज्यमान एव रपरो भवती'त्युच्यते न चायमुः स्थानेऽणेत्र शिष्यते । किं तर्हि ? अण् चानण् च ।

प्र०—ऋतोविद्या । तत्पूर्वपदोत्तरपदग्रहणमिति । अन्यनिवृत्तिपरत्वादस्य व्यतिकरेऽपि कार्यप्रवृत्तिः ॥ २३ ॥

आनङृतो । क्वायमिति । कार्यार्थः श्रवणार्थो वा वर्णानामुपदेश इति मत्वा प्रश्नः ! क्रियमाणेऽपीति । 'उः स्थाने यः कृतोऽण स रपर' इति सूत्रार्थं मन्यते। इतरः स्थानग्रहणद्वयानुवृत्त्याश्रयेणाह—नैष दोष इति ।

उ०—ऋतो विद्या । भाष्ये—व्यतिकरो मा भूदिति । विद्यायोनिसंबन्धातिरिक्तसंबन्धेऽलुक् मा भूदित्यर्थः । तत्पूर्वोत्तरपदग्रहणे होतुःपुत्र इत्युदाहरणासङ्गतिरत आह—अन्येति । व्यतिकरेऽपीति । परस्परमनयोः संबन्धे इत्यर्थः; । तेन 'पितृधन' इत्याद्येव व्यावर्त्यमिति भावः ॥ २३ ॥

आनङृतो । इति मत्वेति । तदुभयमपि नेहेत्यर्थः । 'मन्यत' इत्यनेन नायं सूत्रार्थस्तत्र स्थित इति दर्शयति ।

१–'क्वचिच्छ्रूयते' पा० ।  * उरण् रपरः १ । १ । ५१

कथं पुनरिदं विज्ञायते—ऋकारान्तानां यो द्वन्द्व इति, आहोस्विद्द्वन्द्व ऋकारस्येति । कश्चात्र विशेषः ?

**ऋकारान्तानां द्वन्द्वे पुत्र उपसङ्ख्यानम् ॥ १ ॥**

ऋकारान्तानां द्वन्द्वे पुत्र उपसख्यानं कर्तव्यम् । पितापुत्रौ ।

**कार्यी चानिर्दिष्टः ॥ २ ॥**

कार्यी चानिर्दिष्टो भवति । ऋकारान्तानां द्वन्द्वे न ज्ञायते कस्यानङ भवितव्यमिति ॥ अस्तु तर्हि द्वन्द्व ऋकारस्येति ।

**अविशेषेण पितृपितामहादिष्वतिप्रसङ्गः ॥ ३ ॥**

अविशेषेण पितृपितामहादिष्वतिप्रसङ्गो भवति । पितृपितामहाविति ।

अस्तु तर्हि 'ऋकारान्तानां यो द्वन्द्व' इति । ननु चोक्तमृकारान्तानां द्वन्द्वे पुत्र उपसङ्ख्यानमिति । नैष दोषः । पुत्रग्रहणमपि प्रकृतमनुवर्तते । क्व प्रकृतम् ? 'पुत्रेऽन्यतरस्याम्' [ २२ ] इति । यदि तदनुवर्तते 'विभाषा स्वसृपत्योः' [ २४ ] पुत्रे चेति पुत्रेऽपि विभाषा प्राप्नोति । नैष दोषः । सम्बन्धमनुवर्तिष्यते । षष्ठ्या आक्रोशे [ २१ ] । पुत्रेऽन्यतरस्याम् [ २२ ] षष्ठ्या आक्रोशे । ऋतो विद्ययोनिसंबन्धेभ्यः [ २३ ] पुत्रेऽन्यतरस्यां षष्ठ्या आक्रोशे । विभाषा स्वसृपत्योः [ २४ ] पुत्रेऽन्यतरस्यां षष्ठ्या आक्रोशे । आनङ्ऋतो द्वन्द्वे । पुत्रग्रहणमनुवर्तते षष्ठ्या आक्रोश इति निवृत्तम् ।

प्र०—पुत्रेऽपीति । अनाक्रोशेऽपि भ्रातुः पुत्रादावित्यभिप्रायः । संबन्धमिति । आक्रोशग्रहणेन

उ०—ननु 'पुत्रेऽन्यतरस्या'मित्युक्तेः पुत्रे विभाषाप्राप्तिरिष्टैवेत्यत आह—अनाक्रोशेऽपीति । 'पुत्रेऽन्यतरस्या'मित्यत्राक्रोशे इत्यनुवर्तनाद्दास्याः पुत्र इत्यादौ आक्रोश एव विकल्प इष्यते । 'विभाषा स्वस्रि'त्यत्रानुवृत्तौ त्वनाक्रोशेऽपि भ्रातुः पुत्रादौ विकल्पेनालुक् प्राप्नोतीति भावः । ऋकारान्तपूर्वपदे पुत्रोत्तरपदे आक्रोशेऽपि पूर्वविप्रतिषेधेन विकल्प एवेष्यते, संबन्धानुवृत्तिपरभाष्यप्रामाण्यात् । एतेन परत्वात्तत्र विषये 'ऋतो विद्यायोनी'त्येव प्राप्नोतीति परास्तमिति तात्पर्यम् । संबन्ध्यन्तरेण—अनाक्रोशविषय ऋकारान्तपूर्वपदस्थषष्ठ्यलुग्रूपेण ।

१—'किमृकारान्तानां' पा० । २—क्वचिन्न ।
३—'ऋकारान्तस्य' पा० ।

यदप्युच्यते 'कार्यो चानिर्दिष्ट' इति, कार्यो च निर्दिष्टः । कथम् ? उत्तरपद इति* वर्तते । ङिच्चायं क्रियते । सोऽन्तरेणापि कार्यिनिर्देशमृकारान्तस्यैव भविष्यति ॥ पुत्रे तर्हि कार्य्यनिर्दिष्टः । पुत्रे च कार्यो निर्दिष्टः । कथम् ? ऋकारग्रहणमपि प्रकृतमनुवर्तते । क्व प्रकृतम् ? 'ऋतो विद्यायोनिसम्बन्धेभ्य' इति । तद्वै पञ्चमीनिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः । 'पुत्र' इत्येषा सप्तमी 'ऋत' इति पञ्चम्याः षष्ठीं प्रकल्पयिष्यति 'तस्मिन्निति निर्दिष्टे पूर्वस्य' [ १ । १ । ६६ ] इति ॥ २५ ॥

## देवताद्वन्द्वे च ॥ ६ । ३ । २६ ॥

### देवताद्वन्द्व उभयत्र वायोः प्रतिषेधः ॥ १ ॥

देवताद्वन्द्व उभयत्र वायोः प्रतिषेधो वक्तव्यः । वाय्वग्नी अग्निवायू ।

### ब्रह्मप्रजापत्यादीनां च ॥ २ ॥

ब्रह्मप्रजापत्यादीनां च प्रतिषेधो वक्तव्यः । ब्रह्मप्रजापती शिववैश्रवणौ स्कन्दविशाखौ ।

स[1] तर्हि वक्तव्यः ? न वक्तव्यः । द्वन्द्व इति† वर्तमाने पुनर्द्वन्द्वग्रहणस्यैतत्प्रयोजनं लोकवेदयोर्यो द्वन्द्वस्तत्र यथा स्यात् । कश्च लोकवेदयोर्द्वन्द्वः ? वेदे ये सहनिर्वापनिर्दिष्टाः, न चैते वेदे सह निर्वापनिर्दिष्टाः ॥ २६ ॥

प्र०—संबन्धात्संबध्यन्तरेण पुत्रशब्दो न संबध्यते, तन्निवृत्तौ तु संबध्यत इत्यर्थः ॥ २५ ॥

देवताद्वन्द्वे च । उभयत्रेति । पूर्वपदत्वे उत्तरपदत्वे चेत्यर्थः । लोकवेदयोरिति । साहचर्येण यौ लोकवेदयोः प्रसिद्धौ द्वन्द्वसमासवाच्यौ तत्रानङित्यर्थः । सहनिर्वापः—सहदानम् ॥ २६ ॥

उ०—भाष्ये—ऋत इति पञ्चम्याः षष्ठीं प्रकल्पयिष्यतीति । न चोभयोरपि चरितार्थत्वात्परत्वेन 'तस्मादित्युत्तरस्ये'त्येव प्रकल्पकं स्यादिति वाच्यम् । 'उत्तरपदे' इत्यधिकारेणात्रोपस्थितेन सामानाधिकरण्यानुरोधात्सप्तम्या एव प्रकल्पकत्वमित्याशयात् ॥ २५ ॥

देवताद्वन्द्वे च । ननु ब्रह्मप्रजापत्यादयो लोकवेदयोः प्रयुक्ता एवेत्यत आह—साहचर्येणेति । पुनर्द्वन्द्वग्रहणात्प्रसिद्धसाहचर्यवाचकद्वन्द्वग्रहणमिति भावः । सहदानमिति । पूर्वं मनसा हविषो दानसङ्कल्पः 'इन्द्रावरुणाभ्यां जुष्टं निर्वपामी'ति, पश्चादग्नौ प्रक्षेपेण स्वत्वनिवृत्तिपर्यन्तं दानं स्वाहादिशब्दोच्चारणेन । तत्सर्वं निर्वापशब्देन विवक्षितमिति भावः । तेन 'स्कन्दविशाखौ तृप्येता'मित्युदकदाने सह प्रसिद्धत्वेऽपि न क्षतिः । भाष्ये—लोकपदेनात्र कल्पसूत्रम् ॥ २६ ॥

* अलुगुत्तरपदे ६ । ३ । १

† आनङृतो द्वन्द्वे ६ । ३ । २५

१—'तत्तर्हि वक्तव्यम् । न वक्तव्यम् ।' कीलहार्नपाठः ।

## इद्वृद्धौ ॥ ६ । ३ । २८ ॥

### इद्वृद्धौ विष्णोः प्रतिषेधः ॥ १ ॥

इद्वृद्धौ विष्णोः प्रतिषेधो वक्तव्यः । आग्नावैष्णवं चरुं निर्वपेत् ॥ २८ ॥

## मातरपितरावुदीचाम् ॥ ६ । ३ । ३२ ॥

## पितरामातरा च च्छन्दसि ॥ ६ । ३ । ३३ ॥

किं निपात्यते ? पूर्वपदोत्तरपदयोर्ऋकारस्यारारौ निपात्येते । मातरपितरौ भोजयतः । मातरपितरावानय । आ मां गन्तां पितरामातरा चा मा सोमो अमृतत्वाय गम्यात्‡ ॥ ३२ ॥ ३३ ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठस्याध्यायस्य तृतीये पादे प्रथममाह्निकम् ।

प्र०—मातर । पूर्वोत्तरपदयोरिति । सप्तम्यन्तमेतत् । तत्र मातरपितरावित्यत्र पूर्वपदस्यारशब्दोऽन्तादेशो निपात्यते । उत्तरपदस्य तु 'ऋतो ङि सर्वनामस्थानयो'रिति गुणो रपरत्वं च । 'पितरामातरे'त्यत्र पूर्वपदस्याराशब्दोऽन्तस्य निपात्यते, समासात्तु परस्य प्रथमाद्विवचनस्य 'सुपां सुलु'गित्याकारः । पूर्ववत् गुणरपरत्वे ॥ ३२ ॥ ३३ ॥

इत्युपाध्यायजैय्यटपुत्रकैयटविरचिते भाष्यप्रदीपे षष्ठस्याध्यायस्य तृतीये पादे प्रथममाह्निकम् ।

उ०—मातर । ननु भाष्ये 'पूर्वोत्तरपदयो'रित्युक्त्या उभयोरप्यृकारस्यारारौ निपात्येते इत्यर्थो भाति । तेन भ्यामादावपि मातरपितराभ्यामित्येवेति चेन्न, औरूपद्विवचनाविवक्षणे मानाभावेनान्यत्र निपातनाभावादित्याशयेनाह–सप्तम्यन्तमिति । पूर्वपदोत्तरपदयोः सतोः पूर्वपदस्थऋकारस्य सूत्रद्वयक्रमेण अर अरा इत्यादेशौ निपात्येते इत्यर्थः । केचित्तु 'पूर्वोत्तरसूत्रोपात्तनिपात्यमानपदयोः पूर्वपदे' इति शेष इत्यर्थमाहुः । अन्ये तु प्रयोगद्वयेऽपि पूर्वपदोत्तरपदयोर्निपातनम् । तेन 'मातरपितराभ्या'मित्येव । उत्तरत्रापि भ्यामादेः 'सुपां सुलु'गित्याकारविषये उत्तरखण्डेऽपि 'अरा'आदेशविधानमिति भाष्यार्थमाहुः । स्यादयमर्थो यदि तथा लक्ष्यं प्रमितमस्ति इति बहुदर्शिनो निर्णयन्तु ।

भाष्ये—आ मा गन्तामित्यादि । यद्यपि तैत्तिरीये माध्यन्दिनशाखायां च पितरेत्यादिभिन्नपदत्वेन पदपाठे पठन्ति, तथापि शाखान्तरे ऐकपद्येन पाठो भाष्यप्रामाण्याद्द्रष्टव्यः । यद्वा पदच्छेदपाठो भ्रान्त्येति बोध्यम् । तत्र तत्रावग्रहवत्, आधुनिकानां वा संप्रदायभ्रंश इति कल्प्यम् ॥ ३२ ॥ ३३ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते षष्ठस्याध्यायस्य तृतीये पादे प्रथममाह्निकम् ।

‡ यजु० वा० ६।१६; तै० सं० १ । ७ । ८ । ३; का० सं० १४।१; शत० ब्रा० ५।१।५।२६

# स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ॥ ६ । ३ । ३४ ॥

भाषितपुंस्कादिति कथमिदं विज्ञायते । समानायामाकृतौ यद्भाषितपुंस्कमाहोस्वित् क्वचिद्यद्भाषितपुंस्कमिति । किं चातः ? यदि विज्ञायते 'समानायामाकृतौ यद्भाषितपुंस्क'मिति गर्भिभार्यः प्रजातभार्यः प्रसूतभार्य इत्यत्र न प्राप्नोति । अथ विज्ञायते 'क्वचिद्यद्भाषितपुंस्क'मिति द्रोणीभार्यः कुटीभार्यः पात्रीभार्यः अत्रा[1]पि प्राप्नोति ।

अस्तु[2] 'समानायामाकृतौ यद्भाषितपुंस्क'मिति । कथं गर्भिभार्यः प्रजातभार्यः

प्र०—स्त्रियाः पुंवद्भा । कथमिदमिति । भाषितः पुमान् यस्मिन्नर्थे प्रवृत्तिनिमित्तलक्षणे स भाषितपुंस्क इति प्रवृत्तिनिमित्तस्यान्यपदार्थत्वाश्रयणे तद्योगाच्च शब्दस्यापि भाषितपुंस्कत्वविज्ञाने समानायामाकृतावित्यर्थो लभ्यते । प्रत्यासत्त्या च यस्य शब्दस्य पुंवद्भावो विधीयते तेनैव पुमान् भाषित इति गृह्यते । भाषितपुंस्कग्रहणसामर्थ्याच्च । शब्दान्तरेण सर्वस्यार्थस्य भाषितपुंस्कत्वादन्ततोऽर्थशब्देनापीति व्यवच्छेद्याभावादनर्थकं भाषितपुंस्कग्रहणं स्यात् । यदा तु भाषितः पुमान् येन शब्देन स भाषितपुंस्क इति शब्दोऽन्यपदार्थ आश्रीयते तदा समानायामाकृतावित्यस्य विशेषस्य नास्ति लाभः । गर्भिभार्य इति । स्त्रियां वर्तमानस्य गर्भिशब्दस्यानवयवभूतगर्भसंबन्धः प्रवृत्तिनिमित्तम् । गर्भी व्रीहिरित्यादौ तु पुंसि वर्तमानस्यावयवभूतगर्भसंबन्ध इति समानाकृतित्वाभावः । प्रसूतप्रजातशब्दौ स्त्रियां वर्तमानौ गर्भविमोचनं प्रवृत्तिनिमित्तमाश्रयतः । पुंसि तु गर्भाधानमिति समानाकृतित्वाभावः ।

द्रोणीभार्य इति । द्रोणशब्दः परिमाणवृत्तिर्भाषितपुंस्कः, स एव च सादृश्यनिबन्धन-

उ०—स्त्रियाः पुंवद्भा । अन्यपदार्थभूतोऽर्थश्चान्तरङ्गत्वात्प्रवृत्तिनिमित्तलक्षणो गृह्यत इत्याह—प्रवृत्तिनिमित्तेति । भाषितः पुमान्यस्य प्रवृत्तिनिमित्तस्याश्रय इति षष्ठ्यर्थे बहुव्रीहिः । मूलोक्ते सप्तम्यर्थे बहुव्रीहौ त्वाधेयस्याधारत्वकल्पनाक्लेश इत्यन्ये । समानायामिति । समाने प्रवृत्तिनिमित्ते इत्यर्थः । नन्वेवं सति एकप्रवृत्तिनिमित्ते शब्दान्तरेण पुंसोऽभिधानेऽपि स्यादत आह—प्रत्यासत्त्येति । 'वरटाभार्य' इत्यादौ 'हंसभार्य' इत्यादीनि प्रौढया । युक्त्यन्तरमाह—भाषितेति । अन्ततोऽर्थशब्देनापीति । अर्थशब्दः सामान्यशब्दोऽपि यदा खट्वादिविशेषे तद्गतसामान्यावलम्बेन वर्तते तदा समानं प्रवृत्तिनिमित्तमित्यभिमानः । नास्ति लाभ इति । शब्देनासङ्गृहीतत्वादिति भावः । पुंसि तु गर्भाधानमिति । एवं हि गर्भाधानोत्तरं गर्भिण्यामेव स्त्रियां 'प्रसूतो देवदत्त' इति प्रयोगापत्तिः । तस्माद्गर्भविमोचनवत्स्त्रीकत्वं प्रवृत्तिनिमित्तमिति वक्तुं युक्तम् ।

द्रोणशब्द इति । आढकचतुर्गुणो द्रोणः । सादृश्येति । ज्वालासु 'सैवेयं ज्वाले'ति प्रत्यभिज्ञाव-

1—'अत्र' पा० । 2—'अस्तु तर्हि' पा० ।

प्रसूतभार्य इति ? कर्तव्योऽत्र यत्नः ।

अथ किमर्थमूङः पृथक् प्रतिषेध उच्यते न यत्रैवान्यः प्रतिषेधस्तत्रैवायमुच्येत । 'न कोपधायाः' [ ३७ ] इत्युक्त्वा तत 'ऊङश्चे'त्युच्येत । तत्रायमप्यर्थो द्विः प्रतिषेधो न वक्तव्यो भवति ।

नैवं शक्यम् । पठिष्यति ह्याचार्यः 'पुंवत्कर्मधारये प्रतिषिद्धार्थ'मिति* । स पुंवद्भावो यथेह भवति कारिका वृन्दारिका कारकवृन्दारिकेत्येवमिहापि स्यात् ब्रह्मबन्धूर्वृन्दारिका ब्रह्मबन्धूवृन्दारिकेति ।

प्र०—प्रत्यभिज्ञानवचात्तत्त्वनिबन्धनप्रत्यभिज्ञानवशाद्वा अभेदेनावसीयमानो गवादन्यां वर्तत इति नास्ति समानकृतित्वम् । एवं कुटशब्दो घटे भाषितपुंस्को गेहे स्त्रीलिङ्गः । 'पात्र' शब्दोऽर्धर्चादित्वाद्भाषितपुंस्को भाजनविशेषे स्त्रीलिङ्गः ।

कर्तव्योऽत्र यत्न इति । गर्भिशब्दस्य गर्भसंबन्धः प्रवृत्तिनिमित्तं पुंसि स्त्रियां च समानम्, अवान्तरभेदस्त्वविवक्षितः । प्रसूतप्रजातशब्दयोरपत्यापत्यवत्संबन्धः समानं प्रवृत्तिनिमित्तमस्तीति दोषाभावः ।

पृथगिति । पृथक्प्रतिषेधः प्रतिषेधान्तराद्वैलक्षण्यं सूचयतीत्यर्थः ।

उ०—दित्यर्थः । तत्त्वनिबन्धनेति । 'तदेवेदं रजत'मिति प्रत्यभिज्ञावदित्यर्थः । 'अर्थभेदाच्छब्दभेद इति नये आद्यं, तदभेदेऽपि शब्दैक्ये द्वितीयम् । पात्रशब्द इति । परिमाणादिवाची अर्धर्चादित्वात्पुँल्लिङ्गः । सर्वत्र द्रोण्यादीनां भार्यासामानाधिकरण्यं सदृशपरत्वात् ।

समानमिति । एवं हि 'पुंयोगादाख्याया'मिति सूत्रस्थभाष्यग्रन्थविरोधः । तत्र हि 'प्रसूतादेः पुमाख्यत्वं ने'त्युक्तम् । तस्माद्गर्भिणो दाराः प्रसूना दारा इत्यादौ समानायामाकृतौ भाषितपुंस्कत्वमिति वक्तुं युक्तम् । कर्तव्योऽत्र यत्न इति । भाष्यस्य—यथा समानायामाकृतौ भाषितपुंस्कत्वं भवति तथा यत्नः कार्य इत्यर्थः । परे तु शब्दार्थसंबन्धस्य नित्यताहान्या शब्दप्रवृत्तिनिमित्तं न यत्नसाध्यम् । गर्भिणीप्रसूतादौ पूर्वपक्ष्युक्तप्रवृत्तिनिमित्तभेद एव युक्तः । तत्र पुंवत्वार्थं वचनमेव कार्यमिति भाष्यार्थः । एवं चानवयवभूतगर्भसंबन्धे प्रवृत्तिनिमित्ते गर्भिणीशब्दो नित्यस्त्रीलिङ्ग इति 'गर्भिण्यो दारा' इत्येव । प्रसूतादिशब्दा अपि गर्भविमोचने प्रवृत्तिनिमित्ते नित्यस्त्रीलिङ्गा एवेत्याहुः ।

पृथक् प्रतिषेधेऽपि वचनस्योक्तार्थप्रतिपादने कथं सामर्थ्यमत आह—पृथगिति । वैलक्षण्यं च प्रतिषेधविषये विधीयमानस्य विधेरेतद्विषयेऽप्रवृत्तिरिति भावः ।

* ६ । ३ । ४२ वा० १

अथ पृथक्प्रतिषेधेऽप्युच्यमाने यावता स प्रतिषिद्धार्थ आरम्भः कस्मादेवात्र न भवति ? पृथक्प्रतिषेधवचनसामर्थ्यात् । अथवानूङिति तत्रानुवर्तिष्यते । अथवा नायं प्रसज्यप्रतिषेधः । किं तर्हि ? पर्युदासोऽयं यदन्यदूङ इति, स च प्रतिषेधार्थ आरम्भः ।

किं पुनरिदं पुंवद्भावे स्त्रीग्रहणं स्त्रीप्रत्ययग्रहणमाहोस्वित्स्त्रीशब्दग्रहणमाहोस्वि-

प्र०—अथवा नायमिति । सत्यामेवानुवृत्तौ पर्युदास आश्रीयते न प्रसज्यप्रतिषेध इति पूर्वस्मात्पक्षादस्य पक्षस्य भेदः । भाष्यकारेणात्रानूङ्ग्रहणस्यैवोत्तरत्रानुवृत्तिर्दर्शिता न त्वपूरणीप्रियादिष्वित्यस्य । तेन महानवमी महाद्वादशीत्यादावपि पुंवद्भावो भवति ।

किं पुनरिति । यदा स्त्रीग्रहणं स्वर्यते तदा स्वरितेनाधिकारगतिर्भवतीति स्त्र्यधिकारविहितटाबादिग्रहणं भवति । तेन भाषितपुंस्कात्परस्यानूङः स्त्रीप्रत्ययस्य पुंवद्भवतीति सूत्रार्थः संपद्यते । यदा तु स्त्र्यर्थवाची शब्दः स्त्रीशब्देनोच्यते तदा शब्दग्रहणं भवति । यदा तु स्त्रीत्वयुक्तं वस्तु स्त्रीशब्देनोच्यते तदार्थग्रहणं भवति । तत्रार्थग्रहणे स्त्रीशब्दो मुख्यः, अर्थस्य तूत्तरपदेन

उ०—नन्वत्रैवानूङ इति पर्युदासे ब्रह्मबन्धूभार्येमा भूदनेन पुंवत्त्वं, ब्रह्मबन्धूवृन्दारिकेत्यत्र 'पुंवत्कर्मधारये'ति स्यादेवेत्यत्रापि पक्षेऽनुवृत्तिरावश्यकीति पूर्वस्मात्पक्षात्को विशेषोऽत आह—सत्यामेवेति । नन्वनुवृत्तौ सत्यां पर्युदासप्रसज्यप्रतिषेधयोः को विशेषः ? किं चैतावता विशेषेण न पक्षान्तरत्वं, समाधेरेकरूपत्वादिति चिन्त्यम् । तस्मादयमत्र भाष्यार्थः—'पुंवत्कर्मधारये'त्यत्र 'ने'त्यनुवर्त्य प्रतिषेधविषये कर्मधारयादौ पुंवदित्यर्थो व्याख्येयः । एवं चानूङ इत्यस्य पर्युदासत्वे ऊङः शाब्दप्रतिषेधविषयत्वाभावान्नास्य तत्र प्रवृत्तिरिति । तद्ध्वनयन्नाह—(भाष्ये) स च प्रतिषेधार्थ इति । एवं चात्र पक्षेऽनूङ इत्यस्य व्यवहितस्यानुवृत्तिक्लेशोऽपि नेति लाघवं, पूर्वपक्षाद्विशेषश्च स्पष्ट एव । ऐडविडभार्यासिद्धयेऽस्य प्रसज्यप्रतिषेधत्वमेव न्याय्यमितीदं भाष्यमेकदेश्युक्तिः । तेन महानवमीति । एवं चापूरणीप्रियादिष्विति 'न कोपधायाः' इति प्रकरणात्पृथक् प्रतिषेधकरणे फलं चिन्त्यमेव । फलकल्पना तु न कार्या, अत्रैव पृथङ्निषेधफलविचारपरभाष्यविरोधादिति भावः । अपूरणीत्यादिश्च प्रसज्यप्रतिषेध एव । पुंवद्भावो भवतीति । 'पुंवत्कर्मधारये'त्यनेनेति भावः ।

अधिकारगतिरिति । तदधिकारविहितप्रत्ययप्रतीतिरित्यर्थः । अनूङ इति । अनूङिति लुप्तषष्ठीकं पदं पर्युदासपरमिति भावः । स्त्र्यर्थवाची शब्द इति । लक्षणयेति भावः । नन्वेवं शब्दग्रहणपक्षे जघन्यवृत्त्याश्रयणादर्थपक्ष एव युक्त इत्याशङ्क्य पक्षद्वयेऽपि गौणार्थपरिग्रहः समान इत्याह—तत्रार्थग्रहण इति । अर्थपक्षे शब्दद्वारकपौर्वापर्याश्रयणमिति जघन्यार्थाश्रयणं समानमिति भावः । वस्तुतस्तु 'शब्दद्वारकं पौर्वापर्यमित्यस्य शब्दनिष्ठपरत्वाद्यवधित्वस्य परत्वस्य चार्थ आरोप इत्यर्थः । एवं च गौणत्वात्तत्र संबन्धे तन्निरूपितसंबन्धे च न विभक्तिः । अत एव 'गङ्गायां घोष' इत्यत्र गौणाधारेऽधिकरणत्वनिमित्तविभक्तिः स्वरितत्वप्रतिज्ञानादिना साधिता । अत एव तादृशस्थले षष्ठ्यपि न । अत एवार्थग्रहणपक्षे भाष्यकृद्दूषयति 'भाषित-

१—'प्रातिषिद्धार्थ' पा० । २—'स्त्री' क्वचिन्न ।

स्त्र्यर्थग्रहणम् । कश्चात्र विशेषः ?

पुंवद्भावे स्त्रीग्रहणं स्त्रीप्रत्ययग्रहणं चेत्तत्र पुंवदित्युत्तरपदे तत्प्रतिषेधविज्ञानम् ॥ १ ॥

पुंवद्भावे स्त्रीग्रहणं स्त्री[1]प्रत्ययग्रहणं चेत्तत्र पुंवदित्युत्तरपदे तत्प्रतिषेधोऽयं[2] विज्ञायेत । कस्य ? स्त्रीप्रत्ययस्य प्रतिषेधः ।

किमुच्यते स्त्रीप्रत्ययस्य प्रतिषेध इति न पुनरन्यदपि किंचित्पुंसः प्रतिपदं कार्यमुच्यते यत्समानाधिकरण उत्तरपदे भाषितपुंस्कस्यातिदिश्येत ? अनारम्भात्पुंसि । न हि किंचित्पुंसः प्रतिपदं कार्यमुच्यते यत्समानाधिकरण उत्तरपदे भाषितपुंस्कस्यातिदिश्येत । तत्र किमन्यच्छक्यं विज्ञातुमन्यदतः स्त्रीप्रत्ययप्रतिषेधात् ।

कथं पुनः 'पुंव'दित्यनेन स्त्रीप्रत्ययस्य प्रतिषेधः शक्यो विज्ञातुम् ? वतिनिर्देशोऽयं कामचारश्च वतिनिर्देशे वाक्यशेषं समर्थयितुम् । तद्यथा—उशीनरवन्मद्रेषु यवाः । सन्ति न सन्तीति । मातृवदस्याः कलाः । सन्ति न सन्तीति । एवमिहापि पुंवद्भवति पुंवन्न भवतीत्येवं वाक्यशेषं समर्थयिष्यामहे । यथा पुंसः स्त्रीप्रत्ययो न भवत्येवं समानाधिकरण उत्तरपदे भाषितपुंस्क[3]स्य न भवतीति ।

प्र०—पौर्वापर्यानुपपत्तिः । शब्दग्रहणे तु स्त्रीशब्दो गौणः । उत्तरपदेन तु शब्दस्य पौर्वापर्योपपत्तिः ।

कथं पुनरिति । 'पुंव'दित्यनेन प्रतिषेधो न प्रत्याख्यत इति मत्वा प्रश्नः । वतिनिर्देशोऽयमिति । उपमानोपमेयभावविषयो वतिस्तत्रोपमाने सत्ताऽसत्ता वा प्रसिद्धोपमेये प्रतिपाद्यत इति यथासंभवं वाक्यशेषपरिकल्पने कामचार इत्यर्थः । पुंसि च स्त्रीप्रत्ययस्याभावात् स्त्रियामभावोऽतिदिश्यते इति 'न भवती'ति वाक्यशेषः कल्प्यते ।

उ०—पुंस्कानुपपत्तिश्च, न ह्यर्थेन पौर्वापर्यमस्ती'ति ।

भाष्ये—'किमुच्यते' इत्याद्यतिदिश्येतेत्याशङ्का । 'अनारम्भा'दित्युत्तरम् ।

न प्रत्याख्यते इति । क्रियापदाश्रवणे लट्परास्तैरेव प्रयोगादिति भावः । उपमानेति । 'पुंव'दिति सप्तम्यन्ताद्वतिः । पुंसि यथा स्त्रीप्रत्ययस्याभावस्तथा स्त्रियामपीत्यर्थं इति सामर्थ्या'न्न भवती'ति वाक्यशेष इत्यर्थः । अयं चाभावो न प्रागभावः, प्रागेव स्त्रीप्रत्ययस्य कृतत्वादिति 'लुक्तद्धिते'त्यादिवज्जातनिवृत्तिरूप एव । भाष्ये—भाषितपुंस्कस्यापीति । संबन्धे षष्ठी । तस्य स्त्रियामपि स्त्रीप्रत्ययो नेत्यर्थः । तेन जातनिवृत्तिं सूचयति ।

१–'स्त्री' क्वचिन्न । २–'अयं' क्वचिन्न । ३–'पुंस्कस्यापि' पा० ।

## प्रातिपदिकस्य च प्रत्यापत्तिः ॥ २ ॥

प्रातिपदिकस्य च प्रत्यापत्तिर्वक्तव्या । एनी भार्यास्य एतभार्यः । श्येतभार्यः । पुंवद्भावेन किं क्रियते ? स्त्रीप्रत्ययस्य निवृत्तिः । अर्थोऽनिवृत्तः स्त्रीत्वं तस्यानिवृत्तत्वात् केन 'न'शब्दो न श्रूयेत ? स्त्रियामित्युच्यमानः प्राप्नोति* ।

## स्थानिवत्प्रसङ्गश्च ॥ ३ ॥

स्थानिवद्भावश्च प्राप्नोति । पट्वी भार्यास्य पटुभार्यः । मृदुभार्यः । पुंवद्भावेन किं क्रियते ? स्त्रीप्रत्ययस्य निवृत्तिः । तस्य स्थानिवद्भावाद्यणादेशः प्राप्नोति† ।

किमर्थमिदमुभयमुच्यते न 'प्रातिपदिकस्य च प्रत्यापत्ति'रित्येव स्थानिवद्भावोऽपि चोदितः स्यात् ? पुरस्तादिदमाचार्येण दृष्टं 'स्थानिवत्प्रसङ्गश्चे'ति तत्पठितम् । तत

प्र०—अस्मिन् पक्षे यद्वक्तव्यं तदाह—प्रातिपदिकस्य चेति । चशब्दो वक्ष्यमाणापेक्षः । एनी भार्येति । एतशब्दा'द्वर्णादनुदात्तात्तोपधात्तो न' इति ङीप्, तकारस्य च नकारः । तत्रैकदेशविकृतमनन्यवदिति भाषितपुंस्कादेतशब्दात् पर ईकार इति तन्निवृत्तावर्थस्यानिवृत्तत्वान्नकारश्रवणप्रसङ्गः । ननु च सन्नियोगशिष्टत्वादीकारनिवृत्तौ नकारस्यापि निवृत्तिर्भविष्यति । एवं तर्हि स्थानिवद्भावात् पुनर्नकारस्योन्मज्जनं मन्यते । उत्तरपदनिमित्तत्वाच्च स्त्रीप्रत्ययनिवृत्तेः स्थानिवद्भावः ।

स्थानिवद्भावोऽपि चोदितः स्यादिति । ननु च 'प्रातिपदिकस्य च प्रत्यापत्ति'रिति परिहारः, 'स्थानिवत्प्रसङ्गश्चे'ति तु चोद्यं, तत्रैवं वक्तव्यं 'स्थानिवद्भावोऽपि परिहृतः स्या'दिति । नैष दोषः । अयं हि भाष्यार्थो यथा दोषसद्भावात् प्रत्यापत्तिवचनं परिहारस्तथा स्थानिवद्भावोऽपि चोदितः परिहृतश्च भवति । पुरस्तादिदमिति । यद्यपि पश्चात्पठितं तथापि पाठक्रमादार्थक्रमो बलवानिति 'पूर्वं दृष्ट'मित्युच्यते । 'पूर्वं चोद्यदर्शनं पश्चात्समाधान'मिति न्यायात् । तत्पठितमिति । पुरस्तादपि दृष्टं पश्चात्पठितमित्यर्थः । प्रत्यापत्तिवचनमेव व्याप्यभ्युपगम्यताम्,

उ०—तत्र दोषमाह भाष्ये—प्रातिपदिकस्य चेति । पूर्वं वक्तव्यान्तरस्याभावादाह- चशब्द इति । स्थानिवद्भावादिति । सन्नियोगशिष्टन्यायकृतनिवृत्तिप्रतिबन्ध एव पूर्वविधिरिति भावः । नन्वयं न परनिमित्तकोऽत आह—उत्तरपदनिमित्तत्वाच्चेति ।

परिहृतश्च भवतीति । एतद्वाक्यशेषपूरणेन भाष्यं व्याख्येयमिति भावः । पश्चात्पठितमिति । 'पठित'मित्यत्र 'पुरस्ता'दिति नानुषञ्जनीयमिति भावः । व्याप्यभ्युपगम्यतामिति । व्यापि— उभयार्थसङ्ग्राहि । दोषद्वयपरिहारकमित्यर्थः । ननु प्रयोजनाभावे कुतो न परित्यागोऽत आह—

* वर्णादनुदात्तात्तोपधात्तो नः ४ । १ । ३९ † इको यणचि ६ । १ । ७७

उत्तरकालमिदं दृष्टं 'प्रातिपदिकस्य च प्रत्यापत्ति'रिति तदपि पठितम् । न चेदानीमाचार्याः सूत्राणि कृत्वा निवर्तयन्ति ।

वतण्ड्यादिषु पुंवद्वचनम् ॥ ४ ॥

वतण्ड्यादिषु पुंवद्भावो वक्तव्यः । के पुनर्वतण्ड्यादयः ? लुगलुगस्त्रीविषयद्विस्त्रीप्रत्ययाः । लुक्—गार्ग्यो वृन्दारिका गर्गवृन्दारिकाः । पुंवद्भावेन किं क्रियते ? स्त्रीप्रत्ययस्य निवृत्तिः । अर्थोऽनिवृत्तः स्त्रीत्वं तस्यानिवृत्तत्वात् केन 'यशब्दो न श्रूयेत ? अस्त्रियामिति हि लुगुच्यते‡ । लुक् ।

अलुक्—वतण्डी वृन्दारिका वातण्ड्यवृन्दारिका । पुंवद्भावेन किं क्रियते ? स्त्रीप्रत्ययस्य निवृत्तिः । अर्थोऽनिवृत्तः स्त्रीत्वं तस्यानिवृत्तत्वाल्लुक्स्त्रियां वतण्डादिति§ यकारस्य लुक् प्राप्नोति ॥ यदि पुनरयमीकार एव लुगुच्येत ? तदीकारग्रहणं कर्तव्यम् । न कर्तव्यम् । क्रियते न्यास एव । प्रश्लिष्टनिर्देशोऽयम् । स्त्री ई

प्र०—स्थानिवत्प्रसङ्गश्चेत्येतत्तु परित्यज्यतामित्याशङ्क्याह—न चेदानीमिति । सूत्रव्याख्यानार्थत्वाद्वाक्यानां विस्पष्टार्थमुभयोरुपादानमित्यर्थः । तत्रैतभार्ये यद्यपि स्थानिवद्भावाश्रयो दोषस्तथापि सन्नियोगशिष्टत्वात् संभावितनिवृत्तेर्नकारस्य स्थानिवद्भावाश्रयं पुनरुपस्थानं न त्वीकारो नकारस्य निमित्तम्, ईकारनकारयोः सह विधानात् । यणादेशस्य तु निमित्तमीकार इत्येतावता भेदेनैतभार्यपटुभार्ययोः पृथगुपन्यासः ।

लुगलुगिति । लुगलुकौ यथायोगमिष्यमाणौ न सिध्यत इति पुंस्त्वलक्षणार्थातिदेशः कर्तव्य इत्यर्थः ॥ यदि पुनरिति । 'लुक्स्त्रिया'मित्यनेन चेदीकारे परतो लुग्विधीयते तदेकारे पुंवद्भावेन निवर्तिते यकारनिवृत्तौ कर्तव्यायां 'स्थानिवत्प्रसङ्गश्चे'ति स्थानिवद्भावे प्रतिषिद्धे वातण्ड्यवृन्दारिकेति सिध्यतीति भावः । स्त्री ई इति । स्त्रियां य ईकारस्तस्मिन्परत इत्यर्थः । एकादेशस्य

उ०—सूत्रव्याख्यानेति । ननूभयत्रापि स्थानिवद्भावकृते दोषेऽन्यतरत्रैव स्थानिवत्त्वचोदना न युक्तेत्याशङ्क्य विशेषमाह-तत्रैतभार्ये इत्यादिना । न ह्येतभार्ये स्थानिवत्त्वकृतो नकारश्रवणप्रसङ्गः, किं तर्ह्यर्थस्यानिवृत्तत्वादेव । सन्नियोगशिष्टपरिभाषया तु निवृत्तौ प्राप्तायां स्थानिवत्त्वात्पुनरुन्मज्जनमित्येतावदेव । परा तु स्थानिवत्त्वादेव प्राप्नोतीति विशेष इति भावः ।

पुंस्त्वलक्षणेति । ततश्च स्त्रीत्वस्य निवृत्तत्वाल्लुगलुकौ यथेष्टं सिध्यत इति भावः ॥ स्थानिवद्भावे प्रतिषिद्धे इति । प्रातिपदिकप्रत्यापत्तिवचनेनेति भावः । स्त्रियामिति स्त्रीशब्दस्येकारेण सुप्सुपेति समास इति भावः । स्त्रियां विहितो य ईकारस्तस्मिन्नित्यक्षरार्थः । नन्वेवं स्त्रीशब्दाद्विभक्तेरविधानेन कथमियङत आह—एकादेशस्येति । अनयैव रीत्या नद्यन्तत्वादामाद्यपि बोध्यम् । वस्तुतस्तु 'कृदतिङ्' सूत्रस्थभाष्यरीत्या पूर्ववर्तिधर्मावच्छिन्नोद्देश्यके विधावियङि कर्तव्येऽचः परस्मिन्निति स्थानिवत्त्वेनेयङ् दुर्लभ इति भाष्यप्रामा-

‡ यञञोश्च २ । ४ । ६४ § लुक् स्त्रियाम् ४ । १ । १०९ —१ 'पुनरीकार' पा० ।

स्त्री, स्त्रियामिति ।। ईकारविधौ वा अप्रत्ययकस्य पाठः क्रियते—वतण्डेति¶ । शार्ङ्गरवादौ सप्रत्ययकस्य पाठः करिष्यते । स वै तत्र सप्रत्ययकस्य पाठः कर्तव्यः । अन्तरङ्गत्वाच्च लुक् प्राप्नोति । अलुक् ।

अस्त्रीविषय—कौण्डीवृसी वृन्दारिका कौण्डीवृस्यवृन्दारिका । पुंवद्भावेन किं क्रियते ? स्त्रीप्रत्ययस्य निवृत्तिः । अर्थोऽनिवृत्तः स्त्रीत्वं तस्यानिवृत्तत्वात् केन 'य'-शब्दः श्रूयेत ? अस्त्रियामिति हि ञ्यो विधीयते* । अस्त्रीविषय ।

द्विस्त्रीप्रत्यय—गार्ग्यायणी वृन्दारिका गार्ग्यवृन्दारिका अत्र पुंवद्भावो न प्राप्नोति† । किं कारणम् ? भाषितपुंस्कादनूङः समानाधिकरण उत्तरपदे पुंवद्भावो भवतीत्युच्यते, यश्चात्र भाषितपुंस्कात्परं नैतदुत्तरपदे यच्चोत्तरपदे न तद्भाषितपुंस्कात्परम् ।

अस्तु तर्हि स्त्रीशब्दग्रहणम् ।

प्र०—पूर्वान्तवद्भावात् 'स्त्रिया' इतीयङादेशः । ईकारविधाविति । शार्ङ्गरवादिगणे वतण्डशब्दः कृतयञ्लुक् पठ्यते, ततश्चाकृते लुकीकारो नास्त्यकृते चेकारे लुकोऽप्रसङ्ग इतीतरेतराश्रयदोषप्रसङ्गः । अन्तरङ्गत्वाच्चेति । उत्तरपदमनपेक्ष्य लुग्विधीयमानोऽन्तरङ्गत्वात् प्रागेव स्त्रीप्रत्ययनिवृत्तेः प्राप्नोति । तत्रैतत्स्यान्निमित्ताभावाल्लुङ्निवर्तिष्यत इति । एतच्च नास्ति । न ह्येषा परिभाषा सर्वत्राश्रीयते, 'इया'नित्यादौ निवृत्तायामपि प्रकृतौ प्रत्ययस्यानिवर्तनात्, असिद्धं बहिरङ्गमन्तरङ्ग इतीकारनिवृत्तेरसिद्धत्वाच्च । कौण्डीवृस्यवृन्दारिकेति । स्त्रीत्वस्यानिवर्तनात् 'व्रातच्फञोरस्त्रिया'मिति ञ्यो न प्राप्नोति । गार्ग्यायणीति । ष्फस्योत्तरपदेनाऽऽनन्तर्याभावात् पुंवद्भावेन निवृत्तिर्न प्राप्नोति । ङीषस्त्वभाषितपुंस्काद्विधानात् श्रवणप्रसङ्ग इत्यर्थः ।

उ०—एयास्सौत्रत्वेनेयङ् साध्य इति तत्त्वम् । भाष्ये एतद्दूषयति—ईकारविधाविति । तद्व्याचष्टे—शार्ङ्गरवादीति । शङ्कते भाष्ये—शार्ङ्गरवादाविति । तद्दूषयति—स वै तत्रेति । अनेनापूर्वकर्तव्यतालक्षणो दोष उक्तः । दोषान्तरमप्याह—अन्तरङ्गत्वाच्चेति । एवं च वातण्डयवृन्दारिकाया असिद्धिस्तदवस्थैवेत्यर्थः । तत्र पुंवद्भावाल्लुकोऽन्तरङ्गत्वं दर्शयति—उत्तरपदमिति । न ह्येषेति । निमित्तापायपरिभाषेत्यर्थः । सत्यामपि परिभाषायां न दोष इत्याह—असिद्धमिति । इदं चिन्त्यम्—अकृतव्यूहपरिभाषाविषये तस्या अप्रवृत्तेरिति । अस्त्रीविषयेति । भाष्यस्थास्त्रीविषयप्रत्ययासिद्धिरित्यर्थः । 'कौण्डीवृसी'शब्दो व्रातवाची । गौरादित्वान्ङीष् । भाष्ये—यच्चात्रेति । ष्फरूपम् । नैतदुत्तरपपदे इति । ङीषा व्यवधानादिति भावः । यच्चोत्तरपदे इति । ङीष् । न तदिति । ष्फेण व्यवधानादिति भावः ।

¶ ४ । १ । ७३ गणे । १—'स च सप्रत्ययकस्य' पा० । * व्रातच्फञोरस्त्रियाम् ५।३।११३

† प्राचां ष्फ तद्धितः; षिद्गौरादिभ्यश्च ४ । १ । १७; ४१

२—'यश्चात्र भाषितपुंस्कादनूङ् नासावुत्तरपदे यश्चोत्तरपदे नासौ भाषितपुंस्कादनूङिति ।' कीलहार्नपाठः ।

**स्त्रीशब्दस्य पुंशब्दातिदेश इति चेत् सर्वप्रसङ्गोऽविशेषात् ॥ ५ ॥**

स्त्रीशब्दस्य पुंशब्दातिदेश इति चेत् सर्वस्य स्त्रीशब्दस्य पुंशब्दातिदेशः प्राप्नोति । अस्यापि प्राप्नोति—अङ्गारका नाम शकुनयः । तेषां कालिकाः स्त्रियः । कालिकावृन्दारिकाः । अङ्गारकवृन्दारिकाः प्राप्नुवन्ति । क्षेमवृद्धयः क्षत्रियाः । तेषां तनुकेश्यः स्त्रियः । तनुकेशीवृन्दारिकाः । क्षेमवृद्धिवृन्दारिकाः प्राप्नुवन्ति । हंसस्य वरटा । कच्छपस्य डुली । ऋश्यस्य रोहित् । अश्वस्य वडवा । पुरुषस्य योषित् । किं कारणम् ? 'अविशेषात्' । न हि कश्चिद्विशेष उपादीयत एवंजातीयकस्य स्त्रीशब्दस्य पुंशब्दातिदेशो भवतीति । अनुपादीयमाने विशेषे सर्वत्र प्रसङ्गः ।

कथं च नाम नोपादीयते यावता 'भाषितपुंस्का'दित्युच्यते ?

**भाषितपुंस्कानुपपत्तिश्च ॥ ६ ॥**

ह्यर्थे चायं चः पठितः । सर्वो हि शब्दो भाषितपुंस्कात्परः शक्यः कर्तुम् ।

प्र०—सर्वप्रसङ्ग इति । यथा प्रत्ययपक्षे 'भाषितपुंस्कात्परः स्त्रीप्रत्यय' इति शक्यते विशेषयितुं नैवं 'स्त्र्यर्थाभिधायी शब्दो भाषितपुंस्कात्पर' इति शक्यते विशेषयितुम् । शुक्लचूडादौ पुंवद्भावस्याप्रसङ्गात् । न ह्यत्र शुक्लाशब्दो भाषितपुंस्कात्परः । अङ्गारका इति । अङ्गारकशब्देन न कदाचित् स्त्रिया अभिधानं, कालिकाशब्देन च पक्षिजातौ तस्याः स्त्रिया एवाभिधानमिति पुंवत्कर्मधारयेत्यनेनार्थत आन्तर्यादङ्गारकशब्दादेशप्रसङ्गः । शक्यन्ते हि कालिका अङ्गारकशब्देन साहचर्यादभिधातुम् । एवमन्यत्रापि योज्यम् ।

सर्वो हि शब्द इति । 'एताः कालिकावृन्दारिका' इति भवत्येतच्छब्दाद्भाषितपुंस्कात्परः कालिकाशब्द इति पुंवत्प्रसङ्गः ।

उ०—स्त्रीशब्दग्रहणे सर्वप्रसङ्गे अविशेषो हेतुरुक्तस्तस्य हेतोरसिद्धिं परिहरति–यथा प्रत्ययपक्षे इति । न कदाचिदिति । न कदापीत्यर्थः । स्त्रिया एवेति । न पुंस इत्यर्थः । नन्वत्र 'न कोपधाया' इति प्रतिषेधात्कथं पुंवत्त्वप्राप्तिरत आह—पुंवत्कर्मधारयेति । नन्वङ्गारकशब्दस्य स्थानिभूतकालिकार्थाभिधाने सामर्थ्याभावात्कथमेतदत आह—शक्यन्ते हीति ।

भाष्ये—ह्यर्थे चायमिति । 'यतः शब्दग्रहणपक्षे भाषितपुंस्कादिति विशेषणमनुपपन्नं, शुक्लचूडाद्यसिद्धेरतः सर्वप्रसङ्ग' इत्यर्थः । तथा विशेषणेऽपि उक्तदोषो दुर्वार इत्याह—सर्वो हीति । तद्व्याचष्टे—एताः कालिका इति ।

१–'यदा' पा० ।

अस्तु तर्ह्यर्थग्रहणम् ।

अर्थातिदेशे विप्रतिषेधानुपपत्तिः ॥ ७ ॥

अर्थातिदेशे विप्रतिषेधो नोपपद्यते । पठिष्यति ह्याचार्यो विप्रतिषेधं 'पुंवद्भावाद्ध्रस्वत्वं खिद्घादिकेभ्य'ति ‡ स विप्रतिषेधो नोपपद्यते । किं कारणम् ? द्विकार्ययोगो हि नाम विप्रतिषेधो न चात्रैको द्विकार्ययुक्तः । शब्दस्य ह्रस्वत्वमर्थस्य पुंवद्भावः ।

किं च । सर्वप्रसङ्गोऽविशेषादिति । सर्वस्य स्त्र्यर्थस्य पुंवदर्थः प्राप्नोति । अस्यापि प्राप्नोति—अङ्गारका नाम शकुनयः । तेषां कालिकाः स्त्रियः । कालिकावृन्दारिकाः । अङ्गारकवृन्दारिकाः प्राप्नुवन्ति । क्षेमवृद्धयः क्षत्रियाः । तेषां तनुकेश्यः स्त्रियः । तनुकेशीवृन्दारिकाः । क्षेमवृद्धिवृन्दारिकाः प्राप्नुवन्ति । हंसस्य वरटा । कच्छपस्य डुली । ऋश्यस्य रोहित् । अश्वस्य वडवा । पुरुषस्य योषित् । किं कारणम् ? 'अविशेषात्' । न हि कश्चिद्विशेष उपादीयत एवंजातीयकस्य स्त्र्यर्थस्य पुंवद्भावो भवतीति । [ अनुपादीयमाने विशेषे सर्वप्रसङ्गः । ] कथं च नाम नोपादीयते यावता भाषितपुंस्कादित्युच्यते । भाषितपुंस्कानुपपत्तिर्हि भवति, न ह्यर्थेन पौर्वापर्यमस्ति ।

अयं तावददोषो यदुच्यतेऽर्थातिदेशे विप्रतिषेधानुपपत्तिरिति । नावश्यं द्विकार्ययोग एव विप्रतिषेधः । किं तर्हि ? असंभवोऽपि, स चात्रास्त्यसंभवः । कोऽसावसंभवः ? पुंवद्भावोऽभिनिर्वर्तमानो ह्रस्वत्वस्य निमित्तं विहन्ति । ह्रस्वत्वमभिनिर्वर्तमानं पुंवद्भावं बाधते । एषोऽसंभवः । सत्यसंभवे युक्तो विप्रतिषेधः ।

---

प्र०—अर्थातिदेश इति । स्त्र्यर्थस्य पुमर्थो भवतीत्यर्थेऽतिदिष्टे तद्वाची शब्दः प्रवर्तते । भिन्नविषयत्वात्तु विप्रतिषेधानुपपत्तिः, अचो ह्रस्वोऽर्थस्य पुंवद्भावः ।

पुंवद्भावोऽभिनिर्वर्तमान इति । स्त्रीप्रत्ययस्य निवृत्तौ दीर्घान्तत्वाभावाद्ध्रस्वस्याप्रवृत्तिरित्यर्थः । ह्रस्वत्वमिति । ननु ह्रस्वे प्रवृत्तेऽप्यर्थस्यानिवृत्तत्वात् कथं पुंवद्भावो ह्रस्वेन बाध्यते । उच्यते । यदि कृतं ह्रस्वत्वं प्रयोगे श्रूयते एव तत् कृतं भवति, यदि तु कृतमपि पुंवद्भावेन निवर्त्येत तदाकृतमेवैतत्स्यादिति परत्वात्प्रवर्तमानं ह्रस्वत्वं पुंवद्भावं बाधते । तस्मा-

---

उ०—नन्वर्थातिदेशे शब्दे किमायातमत आह—अर्थस्येति । विप्रतिषेधानुपपत्तिः—कालिमन्येत्यादौ । यदि कृतमिति । एवं च ह्रस्वप्रवृत्तिसामर्थ्यात्पुंवत्त्वबाध इति भावः । नन्वर्थपक्षेऽपि वक्ष्यमाण-

---

‡ ६ । ३ । ४२ वा० ५ १—क्वचिन्न । २—'यदा' पा० ।

अयं तर्हि दोषः सर्वप्रसङ्गोऽविशेषादिति । तस्मादस्तु स एव मध्यम पक्षः ।

ननु चोक्तं स्त्रीशब्दस्य पुंशब्दातिदेश इति चेत्सर्वप्रसङ्गोऽविशेषादिति । नैष दोषः । समासनिर्देशोऽयम् । भाषितपुंस्कादनूङ्यस्मिन्सोऽयं भाषितपुंस्कादनूङिति । यद्येवं लुक् प्राप्नोति* । निपातनान्न भविष्यति । अथवालुक् प्रकृतः† सोऽनुवर्तिष्यते ।

कथं पुनरनूङित्यनेन स्त्रीप्रत्ययग्रहणं शक्यं विज्ञातुम् ? 'नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः' । नञ्युक्तमिवयुक्तं चान्यस्मिंस्तत्सदृशे कार्यं विज्ञायते तथा ह्यर्थो गम्यते । तद्यथा—अब्राह्मणमानयेत्युक्ते ब्राह्मणसदृशं पुरुषमानयति नासौ लोष्टमानीय कृती भवति । एवमिहाप्यनूङित्यूङ्प्रतिषेधादन्यस्मिन्नूङ्सदृशे कार्यं विज्ञास्यते । किं चान्यदनूङूङ्सदृशम् ? स्त्रीप्रत्ययः ।

एवमपि [1]इडविड्वृन्दारिका ऐडविडवृन्दारिका, पृथ्वृन्दारिका पार्थवृन्दारिका,

उ०—दस्त्विति । शब्दपक्षे साक्षादुत्तरपदेन पौर्वापर्यसंभवात् । भाषितपुंस्कादनूङ् यस्मिन्निति । समुदायः समासार्थोऽवयवेन विग्रहः । निपातनादिति । नन्वलौकिकत्वादस्य कथं निपातनादिति परिहारः ? लुकापि तर्ह्यलौकिकत्वान्न भाव्यम् । अथ लुक्प्रसङ्गोऽध्यवसीयतेऽलुगप्यध्यवसीयतामित्यदोषः । अथवेति । ननु च परार्थत्वात् कथं लक्षणयोः सम्बन्धः ? उच्यते । अलुगधिकारसामर्थ्याल्लक्षणाङ्गमपि लक्षणं भविष्यति, संज्ञापरिभाषवत् ।

इडविडिति । इडविडोऽपत्यम्, पृथोऽपत्यम्, 'जनपदशब्दा'दित्यत्र् । उशिग्दरद्भ्यां 'द्व्यञ्मगधे'त्यण् । उभयो'रतश्चे'ति स्त्रियां लुक् ।

उ०—परिहारस्य समानत्वात् कुतस्तत्त्यागेन मध्यमशब्दपक्षस्वीकरणमत आह—शब्दपक्ष इति । न चात्र पक्षे स्त्रीशब्दस्य गौणता दोषः । बाहुल्येन तथा शास्त्रे आश्रयेण न स दोष इति भावः । किं च विप्रतिषेधानुपपत्तिरपि, अर्थपक्षे पुंवद्भावोत्तरमपि ह्रस्वप्रवृत्त्या ह्रस्वोत्तरमपि तत्प्रवृत्त्यासंभवाभावात्, कार्यिभेदाच्च । विप्रतिषेधोपपादनपरभाष्यं त्वेकदेश्युक्तिः । स्पष्टीकृतं च तत्त्व कैयटेनेति दिक् । समुदाय इति । प्रत्ययविशिष्ट इत्यर्थः । अवयवेनेति । प्रत्ययरहितार्थकेन, प्रत्ययमात्रार्थकेन चेत्यर्थः । नन्वलौकिकत्वादिति । शास्त्रातिरेकेण लोकेऽप्रयुज्यमानत्वादित्यर्थः । इत्यदोष इति । एवं च 'निपातना'दित्यस्य सौत्रत्वादित्यर्थ इति भावः । लक्षणाङ्गमपीति । शास्त्रमात्राङ्गमपीत्यर्थः । 'गुणः कृतात्मसंस्कार' इति न्यायेनेति भावः ।

नन्वनूङ्शब्देन पुंवद्भावविषयशब्दस्योक्तावत्राप्यनुपपत्तिरिति शङ्कते भाष्ये—कथं पुनरिति ।

'पृथोऽपत्य'मिति पाठः । 'पृथोरपत्य'मित्यपपाठः, पार्थेत्यसिद्ध्यापत्तेः । भाष्येऽपि '[3]पृथ्वृन्दारिके'ति पाठः । स्त्रियां लुगिति । भाषितपुंस्कादनूङः स्त्रीप्रत्ययस्याभावात्प्रत्ययलक्षणेन सत्त्वेऽपि विशेषानतिदेशेन

१—'अस्मिन्' पा० । * सुपो धातुप्रातिपदिकयोः २ । ४ । ७१
† अलुगुत्तरपदे ६ । ३ । १ २—'इडविड्' पा० । ३—'पृद्वृन्दारिका' पा० ।

दरदवृन्दारिका दारदवृन्दारिका उशिग्वृन्दारिका औशिजवृन्दारिका‡ अत्र पुंवद्भावो न प्राप्नोति । कर्तव्योऽत्र यत्नः ।

अथेह कथं भवितव्यम् । पट्वीमृद्व्यौ भार्ये अस्य—पट्वीमृदुभार्यः, आहोस्वित्पटुमृदुभार्य इति ? पट्वीमृदुभार्य इति भवितव्यम् । पुंवद्भावः कस्मान्न भवति ? 'भाषितपुंस्का'दित्युच्यते । ननु च भोः पटुशब्दो मृदुशब्दश्च पुंसि भाष्येते । समानायामाकृतौ यद्भाषितपुंस्कमाकृत्यन्तरे चैतौ भाषितपुंस्कौ । समानायामाकृतावप्येतौ भाषितपुंस्कौ । कथम् ? आरभ्यते[1] मतुब्लोपः§ । एवं तर्हि भाषितपुंस्कादनूङ् समानाधिकरण उत्तरपदे पुंवद्भवतीत्युच्यते, यश्चात्र भाषितपुंस्कादनूङ्समानाधिकरण उत्तरपदे कृतस्तस्य पुंवद्भावः, यस्य चाकृतो नासौ भाषितपुंस्कादनूङ्समा-

प्र०—कर्तव्योऽत्र यत्न इति । नेह टावादीनामेव ग्रहणम्, किं तर्हि प्रत्ययमात्रस्य । लुक् च स्थानिवद्भावात्प्रत्ययो भवत्येव । यदा तु भाषितपुंस्कादूङ् यस्मिन्नकृतः स भाषितपुंस्कादनूङिति प्रसज्यप्रतिषेध आश्रीयते तदा दोषस्याप्रसङ्ग एव ।

पट्वीमृदुभार्य इति । पट्वीशब्दस्योत्तरपदेनानन्तर्यभावात् पुंवद्भावाभावो मृद्वीशब्दस्यानन्तर्यात् पुंवद्भावः । इतरो यथोक्तमप्रतिपद्याह—पुंवद्भावः कस्मान्न भवतीति । भाषितपुंस्कादिति । एकदेशेन समस्तं सूत्रं लक्ष्यते । तत्रोत्तरपदेनानन्तर्यभावात् पट्वीशब्दस्य पुंवद्भावाभावः । इतरस्तु भाषितपुंस्कत्वमत्र नास्तीत्यनेनोक्तमिति मत्वाह—ननु चेति । इतरः शिष्यबुद्धिपरीक्षार्थमाह—समानायामिति । आकृत्यन्तर इति । पटुर्गुणो मृदुर्गुण इति गुणे भाषितपुंस्कौ, भार्यादौ तु स्त्रीलिङ्गाविति भावः । आरभ्यत इति । ततश्च पाटवे मार्दवे

उ०—तस्य स्त्रीप्रत्ययत्वाभावात् पुंवत्त्वं न स्यादिति भावः । नेहेति । प्रत्ययत्वेन सादृश्यमाश्रीयत इति भावः । स्थानिवद्भावादिति । प्रत्ययलक्षणेन स्थानिवदादेश इत्यनेन वा । प्रसज्यप्रतिषेध इति । समासस्तु सौत्रत्वादिति भावः । अत्र कर्मधारयसमासोदाहरणानि तु 'पुंवत्कर्मधारये'त्यत्राप्यस्यानुवृत्तिं दर्शयितुं तदर्थं निर्णेतुं च । 'ऐडविडभार्य' इत्यादावपि दोषो बोध्यः । अनन्तरापत्यपरत्वे जातित्वाभावेन 'जातेश्चे'ति निषेधाप्रवृत्तेः । 'कर्तव्योऽत्र यत्न' इत्यस्य भाष्यस्यायमर्थः—प्रसज्यप्रतिषेध आश्रयणीयः, रूपातिदेशश्च । रूपञ्च प्रत्यासत्त्या पुंवद्भावभाजः शब्दस्य प्रयोगान्तरे पुमांसमाचक्षाणस्य गृह्यते । तेन हंसवरटादौ न दोषः । यद्यप्यत्राप्यर्थस्यानिवृत्तेर्नीतएडययुवत्यादौ दोषस्तथापि अतिदिश्यमानरूपविरुद्धस्वाश्रयस्यातिदेशविषयेऽप्रवृत्तेर्न दोषः । स्त्रीप्रत्ययनिवृत्त्यतिदेशपक्षे तु न तयोः कश्चिद्विरोध इति न पूर्वभाष्यासङ्गतिः । किं च स्त्रीत्वविशिष्टार्थवाचकशब्दस्थाने पुंस्त्ववाचकशब्दरूपातिदेशे विशिष्टस्य निवृत्तिरित्यर्थस्यापि निवृत्तिरेव । 'समासनिर्देशोऽय'मित्यादि 'ऊङ्सदृशः स्त्रीप्रत्यय' इति भाष्यं त्वेकदेश्युक्तिः ।

पट्वीशब्दस्येति । समुदायस्तु न भाषितपुंस्क इति भावः । तस्योत्तरत्वानुपपत्तेराशयमाह—एकदेशेनेति । ततश्च पाटवे इति । गुणे प्रवृत्तिनिमित्ते । द्रव्ये इमौ भाषितपुंस्काविल्यर्थः । अत्रोत्तरपदेन पूर्वपदं

‡ जनपदशब्दात् क्षत्रियादञ्; द्व्यञ्मगधकलिङ्गसूरमसादण्; अतश्च ४।१। १६८; १७०; १७७.

१—'आरभ्यतेऽत्र' पा० ।  § गुणवचनेभ्यो मतुपो लुक् ५ । २ । ६४ वां० ३ पृ० १६१

७७ ‡

नाधिकरण उत्तरपदे।

पूरण्यां प्रधानपूरणीग्रहणम् ॥ ८ ॥

पूरण्यां प्रधानपूरणीग्रहणं कर्तव्यम्। [ प्रधानं या पूरणी तत्रेति वक्तव्यम्।] इह मा भूत्—कल्याणी पञ्चम्यस्य पक्षस्य कल्याणपञ्चमीकः* पक्ष इति।

अथेह कथं भवितव्यम्—कल्याणी पञ्चम्यासां रात्रीणामिति[२]? 'कल्याणीपञ्चमा रात्रय' इति भवितव्यम्। रात्रयोऽत्र प्रधानम् ॥ ३४ ॥

## तसिलादिष्वा कृत्वसुचः ॥ ६। ३। ३५ ॥

इह केचित्तसिलादय आ कृत्वसुचः† पठ्यन्ते येषु पुंवद्भावो नेष्यते, केचिच्चान्यत्र पठ्यन्ते येषु पुंवद्भाव इष्यते। तत्र किं न्याय्यम्? परिगणनं कर्तव्यम्।

तसिलादी त्रतसौ ॥ १ ॥

त्रतसौ तसिलादी द्रष्टव्यौ। तस्यां शालायां वसति तत्र वसति। तस्याः ततः। यस्याम् यत्र। यस्याः यतः।

प्र०—च समाने प्रवृत्तिनिमित्ते पटुमृदुशब्दौ पुंसि स्त्रियां च वर्त्तेते। इदानीमाचार्यः स्वाभिप्रायं प्रकाशयति—एवं तर्हीति।

कल्याणपञ्चमीक इति। पक्षेऽन्यपदार्थेऽवयवानामत्यन्ततिरोधानान्नास्ति पूरण्याः प्राधान्यम्। 'अप्पूरणीप्रमाण्यो'रिति समासान्तोऽपि प्रधानपूरण्या एव विहित इत्यत्र न भवतीति 'नद्यृतश्चे'ति कब् भवति। इतरस्तु सर्वत्र बहुव्रीहौ वर्तिपदार्थस्याप्राधान्यं मत्वा पृच्छति—अथेह कथमिति। रात्रयोऽत्रेति। उद्भूतावयवा रात्रयोऽत्र प्रधानम्, तत्र यथैव प्रथमाद्या रात्रयः समासाभिधेया एवं पञ्चम्यपीति वर्तिपदार्थस्यान्यपदार्थेऽनुप्रवेशात् प्राधान्यमित्यर्थः। प्रधाने कार्यसंप्रत्ययात् प्रधानपूरणीग्रहणमित्याहुः ॥ ३४ ॥

उ०—नाक्षिप्यते, एतद्भाष्यप्रामाण्यादिति बोध्यम्।

पक्षेऽन्यपदार्थ इति। तिरोहितावयवभेदसमुदायस्य पक्षशब्देनाभिधानात्तत्रावयवानामनुमीयमानत्वेनाशब्दार्थत्वादप्राधान्यमिति भावः। रात्रय इति। बहुवचनान्तरात्रिशब्दवाच्यः समुदाय इत्यर्थः ॥ ३४ ॥

१—क्वचित्कः पाठः। * अपि प्रधानपूरणीग्रहणम् ५। ४। ११६ वा० १ पृ० २७१
२—'इति' क्वचिन्न।
† पञ्चम्यास्तसिल् ५। ३। ७—संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् ५। ४। १७

**तरप्तमपौ ॥ २ ॥**

तरप्तमपौ तसिलादी द्रष्टव्यौ । दर्शनीयतरा दर्शनीयतमा ।

**चरड्जातीयरौ ॥ ३ ॥**

चरड्जातीयरौ तसिलादी द्रष्टव्यौ । पटुचरी पटुजातीया ।

**कल्पब्देशीयरौ ॥ ४ ॥**

कल्पब्देशीयरौ तसिलादी द्रष्टव्यौ । [1]दर्शनीयकल्पा दर्शनीयदेशीया ।

**रूपप्पाशपौ ॥ ५ ॥**

रूपप्पाशपौ तसिलादी द्रष्टव्यौ । दर्शनीयरूपा दर्शनीयपाशा ।

**थम्थालौ ॥ ६ ॥**

थम्थालौ तसिलादी द्रष्टव्यौ । कयाकृत्या कथम् । [2]यया यथा ।

**दार्हिलौ ॥ ७ ॥**

दार्हिलौ तसिलादी द्रष्टव्यौ । तस्यां वेलायां तदा । [3]तर्हि ।

**तिल्थ्यनौ ॥ ८ ॥**

तिल्थ्यनौ तसिलादी द्रष्टव्यौ । वृकी वृकतिः* । अजथ्या† यूथिः[4] ।

**शसि बह्वल्पार्थस्य ॥ ९ ॥**

शसि बह्वल्पार्थस्य‡ पुंवद्भावो वक्तव्यः । बह्वीभ्यो देहि बहुशो देहि । अल्पशः [ देहि[5] ] ।

प्र०—तसिलादि । '[3]पटुकल्ने'त्यपपाठः । 'घरूपकल्पे'ति परत्वाद्घ्रस्वस्य भावात् । तस्माद्दर्शनीयकल्पेति पाठः । वृकतिरिति । लिङ्गविशिष्टपरिभाषया वृकीशब्दात् 'वृकज्येष्ठाभ्या'मिति तिल्प्रत्ययः । परिगणनेसामर्थ्याच्च 'जातेश्चे'ति पुंवद्भावप्रतिषेधाभावः । अजथ्येति । पूर्ववदजाशब्दादजाविभ्यां थ्यन्निति थ्यन् प्रत्ययः ।

उ०—तसिलादि । भाष्ये—आकृत्येति पाठः । ननु वृकीशब्दस्य जातिशब्दत्वात् 'जातेश्चे'ति पुंवत्वप्रतिषेधः स्यादत आह—परिगणनेति । भाष्ये—कठीत्वमिति । आकडारसूत्रे संज्ञाजातिकृदन्ततद्धितान्तसमस्त-

१—'पटुकल्पा पटुदेशीया' इत्यपपाठ इति कैयटः ।  २—'ययाकृत्या यथा' पा० ।
३—'तस्यां वेलायां तर्हि' पा० ।  * वृकज्येष्ठाभ्यां तिल्तातिलौ च च्छन्दसि ५ । ४ । ४१
† अजाविभ्यां थ्यन् ५ । १ । ८  ४—'यूतिः' पा० ।
‡ बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ५ । ४ । ४२  ५—क्वचिन्न ।

## त्वतल्लोर्गुणवचनस्य ॥ १० ॥

त्वतल्लोर्गुणवचनस्य पुंवद्भावो वक्तव्यः । पट्व्या भावः पटुत्वम् पटुता[1] । गुणवचनस्येति किमर्थम् ? कठ्या भावः कठीत्वम् कठीता[2] ।

## भस्याढे तद्धिते ॥ ११ ॥

भस्याढे तद्धिते पुंवद्भावो वक्तव्यः । हस्तिनीनां समूहो हास्तिकम्§ । अढ इति किमर्थम् ? श्यैनेयः रौहिणेयः¶ ।

यद्यढ इत्युच्यते अग्नायी देवतास्य × [ स्थालीपाकस्य[3] ] आग्नेयः स्थालीपाकः अत्र न प्राप्नोति । इह च प्राप्नोति—कौण्डिन्यः* सापत्नः† इति । यदि पुनर-

प्र०—हास्तिकमिति । यद्यत्र पुंवद्भावो न स्यात्तदा हस्तिनीशब्दस्य 'यस्येति चे'ति लोपे कृते तस्य स्थानिवत्त्वादसिद्धत्वाच्च 'नस्तद्धित' इति टिलोपो न स्यादिति पुंवद्भावो विधीयते । 'ठक्छसोश्चे'त्येनेनात्र पुंवद्भावो न भवति, छसा सहचरितस्य ठको ग्रहणात् । श्यैनेय इति । श्येतरोहिताभ्यां 'वर्णा'दिति ङीब्नकारौ । पुंवद्भावे श्यैतेयः रौहितेय इति स्यात् ।

अग्नायीति । 'अग्नेर्ढ'गिति वा 'सर्वत्राग्निकलिभ्यां ढग्वक्तव्य' इति वा ढक् । तत्रपुंवद्भावप्रतिषेधादाग्नायेय इति प्राप्नोति । कौण्डिन्य इति । कुण्डिन्या अपत्यं गर्गादित्वाद्यञ् ।

उ०—सर्वनामसङ्ख्याशब्दातिरिक्तशब्दस्यैव गुणवचनत्वोक्तेरिति भावः ।

ननु हस्तिनीशब्दात्समूहे ठकि 'यस्येति'लोपे 'नस्तद्धिते' इति टिलोपे रूपसिद्धेः किं वचनेनेत्यत आह—यद्यत्रेति । छसा सहचरितस्येति । 'भवतष्ठक्छसा'वित्यस्य । रौहितेय इति । पुंवत्त्वेन ङीब्नकारयोर्निवृत्तेरिति भावः । न च 'भस्याढे तद्धिते' इत्यत्र 'सिद्धश्च प्रत्ययविधा'वित्यर्थस्य 'बहुपूगे'त्यादिसूत्रस्थभाष्ये उक्तत्वेन प्रत्ययोत्पत्तेः पूर्वमेव पुंवत्त्वे 'स्त्रीभ्यो ढ'गित्यस्याप्रवृत्तौ 'रौहिति'रिति स्यादित्यापादनमुचितमिति वाच्यम् । दोषप्रतिपादने तात्पर्येण तदनपेक्ष्येदमुक्तमिति न दोष इत्याहुः । न च श्येतरोहितयोः शुभ्रादिषु पाठ इति कैयटाशयः, तथा सति श्येनीरोहिणीभ्यामपि लिङ्गविशिष्टपरिभाषया परत्वात्तस्यैव प्रवृत्तौ स्त्रियां यो ढो विहित इति सिद्धान्तेऽपि पुंवत्त्वापत्तौ श्यैनेयरौहिणेययोरसिद्धिरेव स्यादिति बोध्यम् । अग्नेरिति । न चास्य पुंस्यग्नित्वं प्रवृत्तिनिमित्तं, स्त्रियां त्वग्निसम्बन्ध इति प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कत्वाभावात्कथं पुंवत्त्वमिति वाच्यं, शक्यतावच्छेदकारोप एव लक्षणेत्यर्थस्य 'पुंयोगादाख्याया'मिति सूत्रभाष्ये उक्तत्वेनादोषात् । गङ्गादिशब्दास्तु तटादिरूपं लक्षणमपि शास्त्रीयस्त्रीत्वविशिष्टमेवाभिदधतीति न कदाचिदपि ते भाषितपुंस्का इति दिक् ।

१–'पट्वीभावः—पटुत्वम् । मृद्वीभावः—मृदुत्वम् । पटुता । मृदुता' पा० ।

२–'कठीभावः' पा० । § अचित्तहस्तिधेनोष्ठक् ४ । २ । ४७; नस्तद्धिते ६ । ४ । १४४

¶ वर्णादनुदात्तात्तोपधात्तो नः; स्त्रीभ्यो ढक् ४ । १ । ३९; १२०

× वृषाकप्यग्निकुसितकुसीदानामुदात्तः ४ । १ । ३७; अग्नेर्ढक् ४ । २ । ३३ ३–क्वचिन्न ।

* गर्गादिभ्यो यञ् ४ । १ । १०५; ( नस्तद्धिते ६ । ४ । १४४ )

† नित्यं सपत्न्यादिषु; शिवादिभ्योऽण् ४ । १ । ३५; ११२

नपत्य इत्युच्येत ? नैवं शक्यम् । इह हि न स्यात्—गार्ग्यायण्या अपत्यं‡ माणवको गार्गो जाल्मः ।

अस्तु तर्हि 'अढ' इत्येव । कथं कौण्डिन्यः सापत्न इति ? कौण्डिन्ये निपातनात्सिद्धम् । किं निपातनम् ? 'आगस्त्यकौण्डिन्ययो'रिति§ । 'सापत्नः प्रकृत्यन्तरत्वात्'[1] । सपत्नशब्दः प्रकृत्यन्तरमस्ति[2] । कथमग्नायी देवतास्य स्थालीपाकस्य आग्नेयः

प्र०—तत्र पुंवद्भावे सति कौण्डय इति प्राप्नोति । सपत्नीशब्दादणि 'सापत' इति प्राप्नोति । यदि पुनरिति । 'अढे'इत्यपनीयानपत्य इति उच्यमाने आग्नेय इत्यनपत्यत्वात् सिध्यति । श्यैतेयरौहिणेयकौण्डिन्यसापताश्चापत्यप्रत्ययान्तत्वात्सिध्यन्ति । गार्ग्यायण्या इति । 'गोत्रस्त्रियाः कुत्सने ण चे'ति णे अपत्यप्रत्यये पुंवद्भावो न प्राप्नोति ।

सपत्नशब्द इति । 'व्यन्सपत्ने' इति निर्देशोऽत्र लिङ्गं, तस्मादेव शार्ङ्गरवादिषु दृष्टान्ङीनि कृते सपत्न्या अपत्यमिति शिवाद्यणि पुंवद्भावे सापत्नः सिध्यति । कर्तव्योऽत्रेति ।

उ०—कौण्डय इतीति । पुंवत्त्वेन स्त्रीप्रत्ययनिवृत्तौ स्थानिवत्त्वाभावात् 'नस्तद्धिते' इति टिलोपापत्तिरिति भावः । सापत इतीति । अयं भावः, सपत्नीशब्दस्य स्वामिपर्यायपतिशब्देन समानः पतिर्यस्या इति विग्रहे 'नित्यं सपत्न्यादिष्वि'ति साधुत्वं, स्वविवाहितपतिविवाहितद्वितीयादिस्त्रियामेव ङ्यन्तरूढिः । तेन नातिप्रसङ्गः । योगार्थमादाय च भाषितपुंस्कत्वनिर्वाहः । पुंसि तु सपतिरिति । तत्र शिवादौ सपत्नीशब्दपाठसामर्थ्यात्पुंवत्त्वेऽपि भूतपूर्वसपत्नीशब्दत्वमाश्रित्य पत्युत्तरपदण्यं बाधित्वाणि 'सापत्न' इत्येवेष्यते । 'सापत' इत्यनिष्टं प्राप्नोतीति । अस्यानिष्टत्वं च 'यदि पुनरनपत्य इत्युच्यते' इत्यग्रिमभाष्याल्लभ्यते । न हि तदा सापत इति कथमपि सिध्यति । तन्न्यासे एतद्दोषानुपन्यासाच्चेति । पुंवद्भावो न प्राप्नोतीति । एवं च ष्फङीषोरनिवृत्तौ 'गार्ग्यायण' इति स्यादिति भावः ।

भाष्ये—सापत्नः प्रकृत्यन्तरत्वादिति । अन्या प्रकृतिर्यस्य स प्रकृत्यन्तरस्तत्त्वादित्यर्थः । एवं च सापत्नो न भवदुक्तसपत्नीशब्दप्रकृतिको येन दोषः स्यात्, किन्तु अन्यप्रकृतिक इति तात्पर्यम् । तत्प्रकृत्यन्तरमेवाह—सपत्नशब्दः प्रकृत्यन्तरमस्तीति । 'अण्' इति शेषः । एवं च शिवादौ सपत्नेत्येव पठथत इति भावः । यत्तु स्त्रीप्रत्ययस्य प्रकृत्यन्तरमिति व्याचक्षते । तेषां लक्षणां विना यथाश्रुताक्षरैः साध्यहेत्वोः सामानाधिकरण्यालाभः ( हेतोः साध्यवृत्तित्वालाभो वेति बोध्यम् )। नन्वेवं सपत्न्या अपत्यमित्यर्थे सापत्नासिद्धिरत आह—तस्मादेवेति । शार्ङ्गरवादीति । पूर्वपक्ष्युक्त'सपत्नी'शब्दस्याद्युदात्तत्वात्तत्वकल्पनम् । शिवाद्यणीति । लिङ्गविशिष्टपरिभाषयेति भावः । 'सापत्नो भ्राते'त्यादिप्रयोगास्तु औपचारिका बोध्याः । केचित्तु सपत्नीत्येव शिवादौ पाठः । भाष्यं तु लक्षणया व्याख्येयम् । न च पूर्वपक्ष्युक्तसपत्नीशब्दादप्यणापत्तौ सापतापत्तिः, शिवादौ रूढस्यैव ग्रहणादिति वदन्ति, तन्न । तस्यापि स्त्रीविशेषे रूढेरवश्यं स्वीकर्तव्यत्वात् । अन्यथातिप्रसङ्गः स्यात् । एवं च ततोऽपि शिवाद्यणापत्तौ सापतापत्तेर्दुर्वारत्वात् । तस्माच्छिवादौ

‡ प्राचां ष्फ तद्धितः; गोत्रस्त्रियाः कुत्सने ण च ४ । १ । १७; १४७

§ आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् २ । ४ । ७०

१–कीलहार्नभाष्येऽयं पाठः नास्ति ।

२–'अस्ति' क्वचिन्न ।

स्थालीपाक इति ? अस्तु तर्ह्यनपत्य इत्येव । कथं गार्गो जाल्मः ? गार्गाग्नेयौ न संवदेते । कर्तव्योऽत्र यत्नः ।

ठक्छसोश्च ॥ १२ ॥

ठक्छसोश्च* पुंवद्भावो वक्तव्यः । भवत्याश्छात्रा भावत्काः । भवदीयाः ।

ठग्ग्रहणं किमर्थं न इके कृते†ऽजादावित्येव सिद्धम् ? नैवं शक्यम् । 'अजादिलक्षणे हि माथितिकादिवत्प्रसङ्गः'‡ । अजादिलक्षणे हि माथितिकादिवत्प्रसज्येत । तद्यथा—मथितं पण्यमस्य माथितिक इत्यकारलोपे कृते§ तान्तादिति¶ कादेशो न भवति । एवमिहापि न स्यात् ॥ ३५ ॥

## क्यङ्मानिनोश्च ॥ ६ । ३ । ३६ ॥

मानिन्ग्रहणं किमर्थम् ?

मानिन्ग्रहणमस्त्र्यर्थमसमानाधिकरणार्थं च ॥ १ ॥

मानिन्ग्रहणं क्रियतेऽस्त्र्यर्थमसमानाधिकरणार्थं च । अस्त्र्यर्थं तावत्—दर्शनीयां मन्यते देवदत्तो यज्ञदत्तां दर्शनीयमान्ययमस्याः । असमानाधिकरणार्थम्—दर्शनीयां मन्यते देवदत्ता यज्ञदत्तां दर्शनीयमानिनीयमस्याः ॥ ३६ ॥

प्र०—स्त्रियां यो ढो विहितः 'स्त्रीभ्यो ढ'गित्यनेन तत्र पुंवद्भावप्रतिषेधो न 'त्वग्नेर्ढ'गित्यस्मिन्निति व्याख्येयम् ।

ठक्छसोरिति । छसः सित्त्वात् तत्र 'सिति चे'ति पदसंज्ञाविधानाद्भत्वाभावाद्वचनम् । तान्तादिति कादेशो न भवतीति । ठस्येति वर्णमात्रस्य स्थानित्वेऽल्विधित्वात् स्थानिवत्त्वाभावात् । सङ्घातस्य तु स्थानित्वे संनिपातपरिभाषोपस्थानात् ॥ ३५ ॥

क्यङ्मानि० । मानिन्ग्रहणमिति । स्त्रीलिङ्गे समानाधिकरणे उत्तरपदे पूर्वेण सिद्धत्वात् । यथा दर्शनीयामात्मानं मन्यते दर्शनीयमानिनी देवदत्तेति । अत्र ह्येकस्या एव कर्मत्वात् कर्तृत्वाच्चास्ति सामानाधिकरण्यम् ॥ ३६ ॥

उ०—सपत्न इति भिन्ना प्रकृतिरेव पठ्यते न तु सपत्नीतीत्येव भाष्याशयः । स्त्रियां यो ढ इति । 'अढे' इत्यत्र सूत्रस्थं स्त्रियामित्यनुवर्त्य आवर्त्य च स्वरितत्वगुणयुक्तत्वं वाश्रित्य स्त्रीतिशब्दमुच्चार्य विहितढस्यैव ग्रहणादेतदर्थलाभ इति भावः ॥ ३५ ॥

* भवतष्ठक्छसौ ४ । २ । ११५ † ठस्येकः ७ । ३ । ५०
‡ ५ । ३ । ८३ वा० २ पृ० २३८
§ तदस्य पण्यम् ४ । ४ । ५१; ठस्येकः ७ । ३ । ५०; यस्येति च ६ । ४ । १४८
¶ इसुसुक्तान्तात् कः ७ । ३ । ५१

## न कोपधायाः ॥ ६ । ३ । ३७ ॥

किमिदमेवमाद्यनुक्रमणमाद्यस्य योगस्य* विषये, आहोस्वित्पुंवद्भावमात्रस्य+ ?¹ किं चातः ? यद्याद्यस्य योगस्य विषये माध्यमिकीयः‡ शालूकिकीयः§ अत्र न प्राप्नोति ॥ विधिरप्यत्र न सिध्यति । किं कारणम् ? भाषितपुंस्कादनूङित्युच्यते न ह्येतद्भवति भाषितपुंस्कादनूङ् ॥ इह तर्हि विलेपिकाया धर्म्यं वैलेपिकम्¶ विधिश्च सिद्धो भवति प्रतिषेधश्च न प्राप्नोति ।

अथ पुंवद्भावमात्रस्य विषये हस्तिनीनां समूहो हास्तिकम् × जातिलक्षणः पुंवद्भावप्रतिषेधः+ प्राप्नोति ॥ एवं तर्हि 'न कोपधाया' इत्येष योगः पुंवद्भावमात्रस्य [ विषये । तत ] उत्तरमेवमाद्यनुक्रमणमाद्यस्य योगस्य विषये ।

प्र०—न कोपधायाः । आद्यस्येति । पाणिनिपठितसूत्रत्रयस्येत्यर्थः । पुंवद्भावमात्रस्येति । औपसङ्ख्यानिकस्यापीति यावत् । माध्यमिकीय इति । मध्यमिकायां भव इति 'वेणुकादिभ्यश्छण्वक्तव्य' इति च्छण् प्रत्ययः । तत्र 'भस्याढे' ति पुंवद्भावप्रसङ्गः । शालूकिकीय इति । शालूकानि विद्यन्तेऽस्यामिति 'वुञ्छण्के'ति कः । शालूकिकायां भव इति 'वृद्धादकेकान्तखोपधा'-दिति च्छः । विधिरपीति । नगर्यां ग्रामे चाभाषितपुंस्कत्वात् । वैलेपिकमिति । 'अण्महिष्यादिभ्य' इत्यण् ।

एवं तर्हीति । प्रयोगमूलाद्व्याख्यानाद्यथेष्टविषयविभागलाभः ।

उ०—न कोपधायाः । औपसङ्ख्यानिकस्यापीति । तस्यापि यथाकथञ्चित्सूत्रेण सङ्ग्रहादिति भावः । अनेन वार्तिकानामपि सूत्रानुमतत्वं दर्शयति ।

पुंवद्भावप्रसङ्ग इति । एवञ्चेकारश्रवणं न स्यादिति भावः । नगर्यामिति । ²मध्यमिका—नगरी । शालूकिका-ग्रामः । वार्तिकेऽपि सूत्रतो भाषितपुंस्कादनूङ इत्यस्यानुवृत्तेरिति भावः ।

* स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रियादिषु, तसिलादिष्वाकृत्वसुचः, क्यङ्मानिनोश्च ६ । ३ । ३४—३६

† ६ । ३ । ३५ वा० १—१२

‡ ४ । २ । १३८ गहादिगणे पाठाच्छः ।

§ वृद्धादकेकान्तखोपधात् । ४ । २ । १४१

¶ अण् महिष्यादिभ्यः ४ । ४ । ४८

× अचित्तहस्तिधेनोष्ठक् ४ । २ । ४७

+ जातेश्च ६ । ३ । ४१

१-क्वचिन्न ।

२-चित्तौडगढतो नातिदूरमेतन्नाम्ना प्रसिद्धा नगरी ।

## कोपधप्रतिषेधे तद्धितवुग्रहणम् ॥ १ ॥

कोपधप्रतिषेधे तद्धितवुग्रहणं कर्तव्यम् । तद्धितस्य यः ककारो वोश्च यः ककारस्तस्य ग्रहणं कर्तव्यम् । इह मा भूत्—पाकभार्यः भेकभार्य इति ॥ ३७ ॥

## स्वाङ्गाच्चेतः ॥ ६ । ३ । ४० ॥

### स्वाङ्गाच्चेतोऽमानिनि ॥ १ ॥

स्वाङ्गाच्चेतोऽमानिनीति वक्तव्यम् । इहापि यथा स्यात्—दीर्घमुखमानी श्लक्ष्णमुखमानी ॥ यद्यमानिनीत्युच्यते दीर्घमुखमानिनी श्लक्ष्णमुखमानिनीति न सिध्यति । 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवती'त्येवं भविष्यति ॥ ४० ॥

## पुंवत्कर्मधारयजातीयदेशीयेषु ॥ ६ । ३ । ४२ ॥

किमर्थमिदमुच्यते [ ननु सामान्येन सिद्धम् ] ?

### पुंवत्कर्मधारये प्रतिषिद्धार्थम् ॥ १ ॥

प्रतिषिद्धार्थोऽयमारम्भः । 'न कोपधायाः' [ ३७ ] इत्युक्तं तत्रापि पुंवद्भवति । कारिका वृन्दारिका कारकवृन्दारिका । कारकजातीया कारकदेशीया ।

प्र०—पाकभार्य इति । 'पाक'शब्दः प्रथमवयोवाची । ततो ङीब्रपवादोऽजादित्वाट्टाप् । भेकभार्य इति । भेकशब्दः क्रियाशब्दः । मण्डूकजातिवाचित्वे तु भेकीभार्य इति भाव्यम् । 'जातेश्चे'ति पुंवद्भावनिषेधात् ॥ ३७ ॥

स्वाङ्गाच्चेतः । 'स्वाङ्गाच्चेतः' इत्येतावत्सूत्रमिति मत्वा वार्तिकारम्भः ॥ ४० ॥

पुंवत् । किमर्थमिति । कर्मधारये 'स्त्रियाः पुंव'दिति सिद्धः पुंवद्भावो जातीयदेशी-

उ०—क्रियाशब्द इति । भययुक्तो भेक इत्यर्थः । भेका भार्या यस्येति विग्रहः ॥ ३७ ॥

स्वाङ्गाच्चेतः दीर्घमुखमानिनीति । प्रातिपदिकत्वतद्व्याप्यधर्माणां स्त्रीप्रत्ययसमभिव्याहारे विशिष्ट एव पर्याप्त्या मानिन्शब्दस्योत्तरपदत्वाभावादसिद्धिरिति भावः । तर्हि तेनैव न्यायेन मानिन्शब्दत्वमपि विशिष्टे इत्याह—प्रातिपदिकग्रहण इत्यादि । 'यतो यो विहितस्तद्विशिष्टस्यैव तेन ग्रहण'मिति तु न नियम इति भावः ॥ ४० ॥

पुंवत्कर्म । प्रतिषिद्धविषयेऽर्थः प्रयोजनं यस्येति भाष्यार्थ इत्याह—प्रतिषिद्धोऽपीति । ननु सतो

१—क्वाचित्कः पाठः ।

'संज्ञापूरण्योश्च' [ ३८ ] इत्युक्तं तत्रापि पुंवद्भवति । दत्ता वृन्दारिका दत्तवृन्दारिका । दत्तजातीया दत्तदेशीया । पञ्चमी वृन्दारिका पञ्चमवृन्दारिका । पञ्चमजातीया पञ्चमदेशीया ।

'वृद्धिनिमित्तस्ये'त्युक्तं* तत्रापि पुंवद्भवति । स्रौघ्नी वृन्दारिका स्रौघ्नवृन्दारिका । स्रौघ्नजातीया स्रौघ्नदेशीया ।

'स्वाङ्गाच्चेतोऽमानिनी'त्युक्तं† तत्रापि पुंवद्भवति । श्लक्ष्णमुखी वृन्दारिका श्लक्ष्णमुखवृन्दारिका । श्लक्ष्णमुखजातीया श्लक्ष्णमुखदेशीया ।

'जातेश्च' [ ४१ ] इत्युक्तं तत्रापि पुंवद्भवति । कठी वृन्दारिका कठवृन्दारिका । कठजातीया कठदेशीया ।

कुक्कुट्यादीनामण्डादिषु पुंवद्वचनम् ॥ २ ॥

कुक्कुट्यादीनामण्डादिषु पुंवद्भावो वक्तव्यः । कुक्कुट्या अण्डं कुक्कुटाण्डम् । मृग्याः पदं मृगपदम् । काक्याः शावः काकशावः ।

न वास्त्रीपूर्वपदाविवक्षितत्वात् ॥ ३ ॥

न वा वक्तव्यम् । किं कारणम् ? अस्त्रीपूर्वपदविवक्षितत्वात् । नात्र स्त्रीपूर्वपदं विवक्षितम् । किं तर्हि ? अस्त्रीपूर्वपदम् । उभयोरण्डमुभयोः पदमुभयोः शावः ।

यद्यपि तावदत्रैतच्छक्यते वक्तुमिह तु कथम्—मृग्याः क्षीरं मृगक्षीरमिति ? अत्रापि न वास्त्रीपूर्वपदविवक्षितत्वादित्येव । कथं पुनः सतो नामाविवक्षा स्यात् ?

प्र०—ययोरपि तसिलादिष्विति मत्वा प्रश्नः । प्रतिषिद्धार्थमिति । प्रतिषिद्धोऽपि पुंवद्भावो यथा स्यादित्येवमर्थम् ।

न वेति । पुमान् वृत्तिवाक्यविषयः । स्त्रियां तु वाक्यमेव भवति । वृत्तिस्त्वनभिधानान्न भवति । इह तु कथमिति । न हि पुंसा क्षीरस्य संबन्धसंभवः । अत्रापीति । जात्यन्तरनिवृत्तिपरायां चोदनायां स्त्रीत्वमनुपकारित्वादविवक्षितमित्यर्थः । यत्र तु लिङ्गविशेष उपकारकस्तत्रासौ विवक्ष्यत एव यथाजामूत्रेण पर्युक्षितं दातव्यमिति । असतश्चेति । विवक्षाया एव बलीयस्त्व-

उ०—विवक्षाया एव प्रकृतत्वादसतश्चेत्यादिप्रकृतानुपयुक्तमत आह—विवक्षाया एवेति । न तु वस्तुसत्पदार्थसत्ताया इति भावः ।

* वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे ६ । ३ । ३९   † ६ । ३ । ४० वा० १

सतोऽप्यविवक्षा भवति । तद्यथा—अलोमिकैडका, अनुदरा कन्येति । असतश्च विवक्षा भवति । तद्यथा—समुद्रः कुण्डिका, विन्ध्यो वर्धितकमिति ।

अग्नेरीत्त्वाद्वरुणस्य वृद्धिर्विप्रतिषेधेन ॥ ४ ॥

अग्नेरीत्त्वाद्वरुणस्य वृद्धिर्भवति विप्रतिषेधेन । अग्नेरीत्त्वस्यावकाशः—अग्नीषोमौ* । वरुणस्य वृद्धेरवकाशः—वायुवारुणम्† । इहोभयं प्राप्नोति—आग्निवारुणीमनड्वाहीमालभेत । वरुणस्य वृद्धिर्भवति विप्रतिषेधेन ।

नैष युक्तो विप्रतिषेधः । द्विकार्ययोगो हि विप्रतिषेधो न चात्रैको द्विकार्ययुक्तः । कथम् ? अग्नेरीत्त्वं वरुणस्य वृद्धिः ।

नावश्यं द्विकार्ययोग एव विप्रतिषेधः । किं तर्हि ? असंभवोऽपि, स चात्रास्त्यसंभवः । कोऽसावसंभवः? अग्नेरीत्त्वमभिनिर्वर्तमानं वरुणस्य वृद्धिं बाधते‡ । वरुणस्य वृद्धिरभिनिर्वर्तमानाग्नेरीत्त्वं बाधते§ । एषोऽसंभवः । सत्यसंभवे युक्तो विप्रतिषेधः ।

प्र०—मित्यनेन प्रतिपाद्यते । समुद्रः कुण्डिकेति । असदेव समुद्रत्वं कुण्डिकायामसत् कुण्डिकात्वं समुद्रे वारोप्य शब्दप्रयोगः ।

वायुवारुणमिति । उभयत्र 'वायोः प्रतिषेधो वक्तव्य' इत्यानङ्न भवति । वायुवरुणौ देवतास्य 'सास्य देवते'त्यण् । 'देवताद्वन्द्वे चे'त्युभयपदवृद्धिः । आग्निवारुणीमिति । नन्वीत्वमन्तरङ्गं, बहिरङ्गा तूत्तरपदवृद्धिस्तद्धितापेक्षणादित्ययुक्तो विप्रतिषेधः । नैतदस्ति । इद्वृद्धावितीत्त्वस्यापवाद इत्त्वं विधीयते, ततोऽपवादविषयापेक्षणान्नास्त्यन्तरङ्गत्वमीत्त्वस्यात्र विषये ।

वरुणस्य वृद्धिमिति । 'दीर्घाच्च वरुणस्ये'ति निषेधात् । ईत्त्वं बाधत इति । 'इद्वृद्धा'-

उ०—ईदग्नेरिति ईत्वस्यापवाद इद्वृद्धाविति इत्वमित्यन्वयः । ततोऽपवादेति । अपवादविषयप्रकल्पनेनोत्सर्गप्रवृत्त्यात्र विषये ईत्वस्य प्रथममप्रवृत्तेर्नान्तरङ्गत्वमिति भावः । भाष्ये—अग्नीषोमावित्यवकाशप्रदर्शनमुपलक्षणम्, अग्नीवरुणावित्यवकाशो बोध्यः ।

१–३ । २ । ११० सूत्रे २६७ पृष्ठे टिप्पणी ४ द्रष्टव्या ।

* ईदग्नेः सोमवरुणयोः ६ । ३ । २७

† देवताद्वन्द्व उभयत्र वायोः प्रतिषेधः ६ । ३ । २६ वा० १; सास्य देवता ४ । २ । २४; देवताद्वन्द्वे च ७ । ३ । २१

२–कीलहार्नभाष्ये नास्ति ।

‡ दीर्घाच्च वरुणस्य ७ । ३ । २३

§ इद् वृद्धौ ६ । ३ । २८

## पुंवद्भावाद्ध्रस्वत्वं खिद्घादिकेषु ॥ ५ ॥

पुंवद्भावाद्ध्रस्वत्वं भवति विप्रतिषेधेन खिद्घादिकेषु¶ । पुंवद्भावस्यावकाशः—पटुभार्यः मृदुभार्यः । खिति 'ह्रस्वो भवतीत्यस्यावकाशः—कालिंमन्यः हरिणिंमन्यः । इहोभयं प्राप्नोति—कालिंमन्या हरिणिंमन्या । [²ह्रस्वो भवति विप्रतिषेधेन । ] घादिषु नद्या ह्रस्वो भवतीत्यस्यावकाशः—नर्तकितरा नर्तकितमा* । पुंवद्भावस्यावकाशः—दर्शनीयतरा दर्शनीयतमा । इहोभयं प्राप्नोति—पटूवितरा पटूवितमा । [ ह्रस्वो भवति विप्रतिषेधेन । ] के ह्रस्वो भवतीत्यस्यावकाशः—नर्तकिका* । पुंवद्भावस्यावकाशः—दारदिका† । इहोभयं प्राप्नोति—पटूविका मृद्विका । ह्रस्वत्वं भवति विप्रतिषेधेन ।

अथेदानीं ह्रस्वत्वे कृते पुनःप्रसङ्गविज्ञानात्पुंवद्भावः कस्मान्न भवति ? 'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवे'ति ॥ ४२ ॥

प्र०—विति वचनात् ।

कालिंमन्य इति । कालीमात्मनं मन्यते । काल्येवाहमिति मन्यत इत्यर्थः । नर्तकितरेति । अत्र 'न कोपधाया' इति पुंवद्भावः प्रतिषिद्धः । दारदिकेति । दरदोऽपत्यं स्त्री । द्व्यञ्मगधे'-त्यण् । तस्या 'अतश्चे'ति लुक् । ततः 'प्रागिवात्क' इति कः । 'तसिलादिष्वि'ति पुंवद्भावः । ननु परिगणितास्त्रतसिलादयो न च कप्रत्ययः परिगणितः । एवं तर्हि विप्रतिषेधाभिधानात्कप्रत्ययोऽपि तत्राभ्युपगत इत्यनुमीयते, तेनासौ परिगणितः ॥ ४२ ॥

उ०—(भाष्ये) कालिंमन्य इति । स्त्रीलिङ्गोत्तरपदत्वाभावात्पुंवत्त्वाप्राप्तिः । कालिमन्य इत्यस्य कालीं स्वप्रियात्वेन मन्यते इत्यर्थे वैयधिकरण्यात्पुंवत्त्वाप्राप्तेरुदाहरणे सामानाधिकरण्यं दर्शयति—कालीमात्मानमिति । अत्र न कोपेति । 'नर्तकिके'त्यत्राप्येतद्बोध्यम् । विप्रतिषेधाभिधानादिति । 'दारदिके'त्यवकाशप्रदर्शनात्, 'पटूविके'त्युदाहरणादित्यपि बोध्यम् । तेन नासाविति । तेनास्यात्यल्पविषयता सूच्यते इति भावः ॥ ४२ ॥

¶ खित्यनव्ययस्य; घरूपकल्पचेलड्……ह्रस्वः ६ । ३ । ६६; ४३; केऽणः ७ । ४ । १३
१—'ह्रस्वत्वं' पा० ।  २—अयं पाठः क्वचिन्न ।
* न कोपधायाः ६ । ३ । ३७
† द्व्यञ्मगधकलिङ्गसूरमसादण्; अतश्च ४ । १ । १७०, १७७; प्रागिवात्कः ५ । ३ । ७०; तसिलादिष्वाकृत्वसुचः ६ । ३ । ३५

## घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः ॥ ६ । ३ । ४३ ॥

ङीग्रहणं किमर्थम् ? 'अनेकाचो ह्रस्व' इतीयत्युच्यमाने खट्वातरा मालातरा अत्रापि प्रसज्येत । नैतदस्ति प्रयोजनम् । भाषितपुंस्कादिति‡ वर्तते ॥ एवमपि दत्तातरा गुप्तातरा अत्रापि प्राप्नोति । 'ईत' इति§ वर्तते ॥ एवमपि ग्रामणीतरः सेनानीतरः अत्रापि प्राप्नोति । स्त्रियामिति‡ वर्तते ॥ एवमपि ग्रामणीतरा सेनानीतरा अत्रापि प्राप्नोति । स्त्रियाः स्त्रियामिति‡ वर्तते ॥ शेषप्रक्लृप्त्यर्थं तर्हि ङीग्रहणं कर्तव्यम् । 'नद्याः शेषस्यान्यतरस्याम्' [ ६ । ३ । ४४ ] इति । कश्च शेषः ? अङी च या नदी ङ्यन्तं च यदेकाच् ।

अन्तरेणापि ङीग्रहणं प्रक्लृप्तः शेषः । कथम् ? 'ईत' इति§ वर्तते । अनीच्च या नदी, ईदन्तं च यदेकाच् ।

शेषग्रहणं चापि शक्यमकर्तुम् । कथम् ? अविशेषेण घादिषु नद्या अन्यतरस्यां

प्र०—घरूप । ईत इति वर्तत इति । 'स्वाङ्गाच्चेत' इत्यतः । स्त्रियाः स्त्रियामिति वर्तत इति । तेन स्त्रीवाचिन ईकारस्य ह्रस्वो विधीयमानो ग्रामणीशब्दस्य न भविष्यत्यनर्थकत्वादीकारस्य । शेषप्रक्लृप्त्यर्थमिति । विशिष्टस्य शेषस्य प्रक्लृप्त्यर्थमित्यर्थः ।

अनीच्च या नदीति । ब्रह्मबन्धुतरा ब्रह्मबन्धूतरेति । ईदन्तं चेति । स्त्रितरा स्त्रीतरेति ।

उ०—घरूप । ननु ग्रामणीशब्दस्यापि स्त्रीवाचकतया षष्ठ्यन्तस्त्रिया इत्यस्यानुवृत्तौ कथमतिप्रसङ्गनिवृत्तिरत आह—तेनेति । नन्वसत्यपि ङीग्रहणे एकाज्रूपशेषप्रक्लृप्तिः सिद्धैव, उपयुक्तादन्यस्य शेषत्वादत आह—विशिष्टस्येति । तच्च—'अङी च या नदी'त्यादिना भाष्ये दर्शितम् ।

भाष्ये 'ङी'ग्रहणं विनापि शेषप्रक्लृप्तिं प्रदर्श्य शेषग्रहणमपि च न कार्यमित्याह—शेषग्रहणं चापीति । 'ङी'ग्रहणं 'च'शब्दार्थः । तस्यानेकाच इति । 'स्त्रियां विहितेकारान्तस्ये'ति शेषः । नन्वेवमुगितश्चेत्यस्यापि नित्यं ह्रस्वत्वमपवादः स्यात्, एवं च 'विदुषितरे'त्यादौ विकल्पानापत्तिरत आह भाष्ये—

‡ स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ६ । ३ । ३४
§ स्वाङ्गाच्चेतः ६ । ३ । ४०
¶ स्वाङ्गाच्चेतः ६ । ३ । ४०
१—'ग्रहणमपि' पा० ।

ह्रस्वत्वमुत्सर्गः । तस्यानेकाचो[1] नित्यं ह्रस्वत्वमपवादः । तस्मिन्नित्ये प्राप्त उगितो विभाषारभ्यते‡ ।

यद्येवं लक्ष्मितरा तन्त्रितरा इति न सिध्यति, लक्ष्मीतरा तन्त्रीतरेति प्राप्नोति । इष्टमेवैतत्संगृहीतम् । लक्ष्मीतरा तन्त्रीतरेत्येव भवितव्यम् । एवं हि सौनागाः पठन्ति—'घादिषु नद्या ह्रस्वत्वे कृन्नद्याः प्रतिषेध' इति ॥ ४३ ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठस्याध्यायस्य
तृतीये पादे द्वितीयमाह्निकम् ।

प्र०—अविशेषेणेति । 'ईतोऽनेकाच' इति विशेषानाश्रयात् । यद्येवमिति । यदि 'ईत' इत्यनुवृत्त्या ङीग्रहणं शेषग्रहणं च प्रत्याख्याय स्त्रिया इत्यनेनेकारो विशेष्यते तदा लक्ष्मीतन्त्र्यो-रीकारः स्त्रियां न विहित इति नित्यह्रस्वत्वं नास्ति । 'नद्या अन्यतरस्या'मित्यत्रापि 'स्त्रिया' इत्यनुवर्तनाद्व विकल्पेन ह्रस्वत्वं नास्ति । सति त्विह ङीग्रहणे 'स्त्रिया' इत्यस्य प्रयोजनाभावा-दनुवृत्त्यभावा'न्नद्याः शेषस्ये'त्यनेन ह्रस्वः सिध्यतीति भावः । इष्टमिति । सति इह ङीग्रहणे 'नद्याः शेषस्ये'ति विकल्पेन प्राप्तं ह्रस्वत्वं वचनेन प्रतिषेध्यम् । असति तु ङीग्रहणे स्त्रिया इत्यस्य सूत्रद्वयोऽप्यनुवृत्त्या ह्रस्वस्याप्रसङ्गः कृत्स्त्रिया इति नास्ति लक्ष्यभेद इति सिद्धं सर्वमिष्टम् ॥ ४३ ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे षष्ठस्याध्यायस्य
तृतीय पादे द्वितीयमाह्निकम् ।

उ०—तस्मिन्नित्ये प्राप्ते इति । उगितः परनद्यन्तस्यैकाचोऽसंभवेन तस्याचारितार्थ्यादिति भावः । उगितो विभाषेयमिति । उगित्परनदीसंबन्धिनीत्यर्थः । ईकारो विशेष्यत इति । 'ग्रामणीतरे'त्यादावतिप्रसङ्गवारणायेति भावः । स्त्रियां न विहित इति । 'अवितॄस्तृ' इत्यादेः स्त्रियामित्यधिकृत्याविधानात् । शब्दशक्त्या तु तयोः स्त्रियां वृत्तिरिति भावः । प्रयोजनाभावादिति । स्त्रियामित्यधिकृत्य ङीबादेर्विधानेन व्यभिचाराभावादिति भावः । भाष्ये 'इति प्राप्नोती'त्यस्य इत्येव प्राप्नोतीत्यर्थः । सूत्रद्वयेऽपीति । 'घरूपे'त्यत्र 'नद्या अन्यतरस्या'-मित्यत्र च । एवं च ङीग्रहणप्रत्याख्याने शेषग्रहणं 'कृन्नद्या' इति च न वक्तव्यमिति महल्लाघवमिति भावः ॥ ४३ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्योते षष्ठस्याध्यायस्य
तृतीये पादे द्वितीयमाह्निकम् ।

१—'अस्यानेकाचो' पा०　　‡ उगितश्च ६ । ३ । ४५

## आन्महतः समानाधिकरणजातीययोः ॥ ६ । ३ । ४६ ॥

इह कस्मान्न भवति—अमहान् महान्संपन्नो महद्भूतश्चन्द्रमा इति ?

**अन्यप्रकृतिस्त्वमहान्भूतप्रकृतौ महान्महत्येव ।**

अन्यो महान् । अन्योऽमहान्भूतप्रकृतौ वर्तते । महान्महत्येव ।

**तस्मादात्त्वं न स्यात्**

तस्मादात्त्वं न भविष्यति ।

प्र०—आन्महतः । महद्भूत इति । महच्छब्दो भूतशब्दश्चैकस्मिन्नर्थे चन्द्रादौ वर्तते इति सामानाधिकरण्यादात्त्वं प्राप्नोति ।

अन्यप्रकृतिरिति । अन्यस्य-महतः, प्रकृतिः-कारणम्-अन्यप्रकृतिरमहान् । भूतप्रकृताविति । भूतशब्दस्य प्रकृतिः कारणमर्थः । अर्थप्रतिपादनाय शब्दोच्चारणाच्छब्दस्यार्थः कारणमुच्यते । तदयमर्थो भूतशब्दार्थेऽमहान् वर्तते । अमहतो भूतेन सामानाधिकरण्यं न तु महत इत्यर्थः । महान्महत्येवेति । महच्छब्दो महत्येव वर्तते न तु भूतार्थे । च्विविषये हि प्रकृतिः कर्त्री न विकृतिः । तथा हि 'सङ्घीभवन्ति ब्राह्मणाः', 'पटीभवन्ति तन्तव' इति प्रकृतिसङ्ख्याश्रयं वचनं दृश्यते न विकृतिसङ्ख्याश्रयम् । तथा अत्वं त्वं संपद्यते त्वद्भवतीति प्रकृत्याश्रयः प्रथमपुरुषो भवति न विकृत्याश्रयो मध्यमपुरुषः । ततश्च 'भूते' इति निष्ठाप्रत्ययो भवनक्रियायाः कर्तर्यमहत्युत्पन्नो न तु विकारे महति । पुंवच्चिवति । वैयधिकरण्यादात्त्ववत्पुंवद्भावोऽपि न प्राप्नोति । यथा च प्रकृतेः कर्तृत्वं दृश्यते तथा विकृतेरपि । 'सुवर्णपिण्डः खदिराङ्गारसवर्णे कुण्डले भवत' इति विकारसङ्ख्याश्रयद्विवचनदर्शनात् । तथा 'क्लृपि संपद्यमाने चतुर्थी'ति

उ०—आन्महतः । महच्छब्द इति । इह प्रकृतिविकृत्योरभेदाध्यासविषये 'सुवर्णं कुण्डले भवत'-इत्यादौ विकारस्य प्राधान्येन क्रियासम्बन्धो दृश्यते, प्रकृतेस्तु गुणभावेन । तथा प्रकृतेऽपि महदर्थस्य भवनकर्तृत्वेन प्राधान्यतस्तस्य क्रियासम्बन्धान्महद्भूतशब्दयोः सामानाधिकरण्यादात्त्वप्राप्तिरिति प्रश्न इति भावः ।

कारणमर्थ इति । कर्तृरूपोऽर्थ इत्यर्थः । तत्रामहान् शब्दो वर्तत इति भाष्याक्षरार्थः । अन्यप्रकृतिरिति । वार्तिकस्थमन्यशब्दं व्याचष्टे भाष्ये—अन्यो महानिति । अमहतस्तत्प्रकृतित्वोपपादनायाह—अन्योऽमहानिति । महत्येवेति । न तु भूतप्रकृतावित्यर्थः । महत्त्वरूपेण भूत इत्यर्थावगमादिति भावः । कुतः पुनरयं नियमोऽत आह—च्विविषये हीति । अन्यत्र विकृतेः कर्तृत्वेऽपि शब्दशक्तिस्वाभाव्याच्चिवविषये प्रकृतेरेव कर्तृत्वमिति भावः । तत्र मानान्तरमप्याह—तथा हीति । सङ्घीभवन्तीति । असङ्घा ब्राह्मणाः सङ्घः संपद्यते इत्यर्थः । नन्वत्र विकृतेः कर्तृत्वमाश्रित्य पुंवद्भावः सुलभ इति शङ्कते—यथा चेत्यादिना । 'सङ्घीभवन्ती'त्यादौ । क्लृपि संपद्यमान इति । तेन संपत्तिक्रियाकर्तरि विधीयमाना चतुर्थी विकारादेवोत्पद्यत इति विकारस्यैव संपत्तिकर्तृत्वमावेद्यते इत्यर्थः । उत्तरयति—तत्र यदीति । आत्वप्रसङ्ग-

१—'रमहान्' पा० ।

पुंवत्तु कथं भवेदत्र ॥ १ ॥

पुंवद्भावोऽपि तर्हि न प्राप्नोति । अमहती महती संपन्ना महद्भूता* ब्राह्मणी ॥ एवं तर्हि—

अमहति महान् हि वृत्तस्तद्वाची चात्र भूतशब्दोऽयम् ।

अमहति हि महच्छब्दो वर्तते तद्वाची चात्र भूतशब्दः प्रयुज्यते । किंवाची ?

प्र०—विकाराच्चतुर्थी दृश्यते न प्रकृतेः । 'मूत्राय संपद्यते यवागूः' 'उच्चाराय कल्पते यवान्न'मिति । तथा 'असङ्घो ब्राह्मणाः सङ्घः संपद्यते' 'अपटस्तन्तवः पटः संपद्यते' इति विकारसङ्ख्याश्रयं वचनं दृश्यते । तत्र यदि 'महद्भूते'त्यत्र सामानाधिकरण्यमाश्रित्य पुंवद्भावो विधीयते तदा 'गोमतीभूते'-त्यत्रापि प्राप्नोति । आत्वप्रसङ्गश्च । तत्र पुंवद्भावं तावत्साधयितुमाह–एवं तर्हीति । अमहत्यर्थे महच्छब्दो वर्तत इति भूतशब्दसामानाधिकरण्ये पुंवद्भावो भवतीत्यर्थः ।

महद्वाचीति । अयं भावः, च्व्यन्तोऽत्र महच्छब्दः । च्विप्रत्ययस्य यदा प्रकृतिर्विकार-रूपतामापद्यमाना विवक्ष्यते तदोत्पद्यते, परिणामविषयत्वाच्च्विप्रत्ययस्य । यदा चैकोऽर्थः प्रकृति-विकारात्मकतया आश्रीयते तदा परिणामव्यवहारो भवति । यथोक्तम्—

'जहद्धर्मान्तरं पूर्वमुपादत्ते यदा परम् ।
तत्त्वादप्रच्युतो धर्मी परिणामः स उच्यते' ॥ इति ।

यदा तूत्तरावस्था पूर्वावस्था वा नाश्रीयते तदा च्वेरभावः । 'तन्तवो भवन्ति' 'पटो भवती'ति । उक्तं च हरिणा—

'पूर्वावस्थामविजहत्संस्पृशद्धर्ममुत्तरम् ।
संमूर्च्छित इवार्थात्मा जायमानोऽभिधीयते' ॥ इति ।

उ०—रचेति । 'महद्भूतश्चन्द्रमा' इत्यत्र । यदि वैयधिकरण्याश्रयेण आत्ववारणं तदा पुंवत्त्वाप्रसक्तिरिति सेयमुभयतः स्पाशेति भावः । तावदिति । पुंवद्भावे दोषपर्यवसानात्प्रथमं तमेव परिहरतीत्यर्थः । अमहत्यर्थे इति । अनेन च्विविषये प्रकृतिविकृत्योरभेदस्यैव विवक्षणान्महच्छब्दस्यापि गौण्या वृत्त्यामहद्बोधकतया तस्य च कर्तृत्वात्सामानाधिकरण्याश्रयपुंवत्त्वसिद्धिरिति भावः ।

ननु 'महद्वाची'त्युक्तं, च्व्यन्ते प्रकृतेरेव कर्तृत्वादत आह—अयं भाव इति । विवक्ष्यते तदोत्प-द्यत इति । 'कृष्णीभूत' इत्यादौ तादृशावस्थाया एवातीतत्वप्रतिपत्तेः । द्रव्यात्मकतयेति । प्रकृतिविकारा-त्मकतयेत्यर्थः । क्वचित्तु तथैव पाठः ॥ जहद्धर्मान्तरमिति । क्षीरावस्थायां विद्यमानं धर्मं द्रवत्वादिकं जहत्—न तु त्यक्तवान्, किंचिदन्वयात् । परं–दध्यवस्थायामवस्थितं धर्मम् । एवं च धर्मस्यैव त्यागोपा-दाने, धर्मी त्ववस्थित एवेति भावः । तदाह—तत्त्वादिति । स्वस्वरूपादित्यर्थः । पूर्वावस्थामिति । पूर्वां कारणावस्थामविजहदुत्तरं धर्ममवस्थाविशेषरूपमासादयन् संमूर्छितइवोभयरूपतयाध्यवसीयमानो जायमानो-ऽर्थात्मा च्व्यन्तेनाभिधीयत इत्यर्थः । एवञ्चैकस्यैव वस्तुनः पूर्वोत्तरावस्थोपाधिव्यवच्छिन्नत्वात्प्रकृतिविकृत्यो-रुभयोरपि कर्तृत्वमुपपद्यत इति भावः । उभयोः कर्तृत्वेऽपि वचनं प्रकृतिसङ्ख्याश्रयं, पुरुषोऽपि प्रकृत्याश्रय

* पुंवत्कर्मधारयजातीयदेशीयेषु ६ । ३ । ४२

महद्वाची ।

[1] तस्मात्सिध्यति पुंवत्

तस्मात्सिध्यति पुंवद्भावः ॥ यद्येवमात्त्वमपि प्राप्नोति—महद्भूतश्चन्द्रमाः ।

निवर्त्यमात्त्वं तु मन्यन्ते ॥ २ ॥

आत्त्वमपि प्राप्नोति ॥ नैष दोषः । [ कथम् ? ]

प्र०—तत्र विकारस्य कर्तृत्वाद्भूतशब्देन सामानाधिकरण्यात्सिद्धः पुंवद्भावः ॥ निवर्त्यमिति । पुंवद्भाववदात्त्वस्यापि प्रसङ्गात् । तदत्र क्वचित्सामानाधिकरण्यं क्वचिद्वैयधिकरण्यमाश्रित्य प्रयोगाः समर्थ्यन्ते । 'महद्भूते'त्यत्र विकारभागः कर्तृत्वेनाश्रीयते । 'गोमतीभूते'त्यत्र तु प्रकृतिभागः । 'महद्भूतश्चन्द्रमा' इत्यत्रापि प्रकृतिभागः । 'सङ्घीभवन्ति ब्राह्मणा' इत्यादौ तु प्रकृतेरेव कर्तृत्वम् । च्व्यन्तस्य गतित्वाद्गतीनां च क्रियाविशेषकत्वात्सङ्घीभवनलक्षणायां विशिष्टायां क्रियायां ब्राह्मणानां कर्तृत्वात् । 'सङ्घः संपद्यते' इत्यादौ तु वाक्ये जन्ममात्रस्य सङ्घः कर्ता । यथा 'व्याकरणस्य सूत्रं करोती'ति करोतिमात्रस्य सूत्रं कर्म । 'व्याकरणं सूत्रयती'त्यत्र सूत्रविशिष्टस्य करोतेर्व्याकरणम् । एवमिहापि प्रकृतिविकृत्योर्भिन्नक्रियाविषयं कर्तृत्वम् । तेन वृत्तौ प्रकृतिसङ्ख्याश्रयं वचनमेवं महद्भूतशब्दः प्रकृतेरेव कर्तृत्वमवगमयितुं शक्तो महद्भूतेत्ययं तु विकृतेरिति दोषाभावः । तत्र तु विकृतेः कर्तृत्वे प्रकृतिरानुमानिकी । महती संपन्ना, केति सामर्थ्यादिवामहतीति गम्यते । प्रकृतेस्तु कर्तृत्वे सामर्थ्याद्विकारावस्था प्रतीयते । अमहान्संपन्नः, केन धर्मेणेति महत्त्वेनेति गम्यते । अत्वं त्वं संपद्यते त्वद्भवतीत्यत्र तु वृत्तौ वाक्ये च प्रकृतेरेव कर्तृत्वमिति तदाश्रयः पुरुषो भवति । मध्यमे तु क्रियमाणे युष्मदर्थस्य प्रकृतित्वं प्रतीयेत—त्वमन्यो भवसीति । सर्वत्र चात्र शब्दशक्तिः प्रयोगानुसारिणी प्रमाणम् । एष तु न्यायो महद्भूत इत्यत्र परिहारान्तरसंभवादमहद्भूतेत्यत्र च पुंवद्भाववदात्त्वप्रसङ्गाद्भाष्यकृता नोक्तः ।

उ०—एवेति बोध्यम्, शब्दशक्तिस्वभावात् । केचित्तु यतो महान्महच्छब्दस्सादृश्येनामहति वर्ततेऽतो भूतशब्दो महद्वाची महच्छब्दसमानाधिकरणः, तस्याप्यमहदर्थकत्वादिति भाष्यार्थमाहुः ॥ 'निवर्त्यमात्व'मिति वार्तिकमवतारयति भाष्ये—यद्येवमिति । 'इत्याहे'ति वाक्यशेषः । तमेवार्थं वार्तिके वाक्यशेषपूरणेन स्पष्टयति—आत्त्वमपीत्यादिना । भाष्योक्तप्रकारादन्यप्रकारेण सर्वेष्टलक्ष्यसिद्धिं परोक्तामनूद्य दूषयति—तदत्र क्वचिदिति । 'असङ्घः सङ्घः संपद्यते' 'सङ्घीभवन्ति ब्राह्मणा' इति वाक्यवृत्त्योर्वैषम्यमुपपादयति—सङ्घीभवन्तीति । 'व्याकरणं सूत्रयती'त्यस्य व्याकरणं सूत्ररूपेण करोतीत्यर्थः । सूत्रविशिष्टस्य करोतेरिति । प्रकृत्याद्युपादानेन व्युत्पत्तिमात्रं क्रियते । तत्त्वतस्तु विशिष्टक्रियावचनः सूत्रयतिः, तस्य व्याकरणं कर्मेति भावः । भिन्नक्रियाविषयमिति । केवलविशिष्टभेदेन भिन्नत्वं क्रिययोरित्यर्थः । नन्वेकस्यैव कर्तृत्वे परस्य क्रियान्वयः कथमत आह—तत्र विकृतेरिति । कर्तृत्वं तु द्वयोरपि । किन्तु कस्यचित्प्राधान्यं, कस्यचिद्गुणत्वमित्येतावानेव विशेषः । 'सव्यापारतरः कश्चित्कश्चिद्धर्मः प्रतीयते' इत्युक्तेः । उक्तस्य विषयविभागस्य निदानमाह—सर्वत्र चेति । तदनाश्रयणे बीजमाह—एष तु न्याय इति । महद्भूतेत्यत्र चेति । न ह्येकस्मिन्प्रयोगे सामानाधिकरण्यं वैयधिकरण्यञ्चाश्रयितुमुचितमिति भावः ।

१–इदं क्वचिन्न ।

**यस्तु महतः प्रतिपदं समास उक्तस्तदाश्रयं स्यात्त्वम् ।**
**कर्तव्यं मन्यन्ते न लक्षणेन लक्षणोक्तश्चायम् ॥ ३ ॥**

एवं तर्हि लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति प्रतिपदं यः समासो विहितस्तस्य ग्रहणं[1]† लक्षणोक्तश्चायम्‡ ।

इहापि तर्हि न प्राप्नोति—महान् बाहुरस्य महाबाहुरिति ।

**शेषवचनात्तु योऽसौ प्रत्यारम्भात्कृतो बहुव्रीहिः ।**
**तस्मात्सिध्यति तस्मिन्**

यस्माच्छेषो बहुव्रीहिः [ २ । २ । २३ ] इति सिद्धेऽनेकमन्यपदार्थे [ २४ ] इत्याह तेन प्रतिपदं भवति[2] ।

**प्रधानतो वा यतो वृत्तिः ॥ ४ ॥**

प्र०—तद्दर्शयति—यस्तु महत इति । सन्महदिति प्रतिपदोक्तसमासस्येह ग्रहणम् । 'महद्भूत' इत्यत्र तु 'कुगतिप्रादय' इति लाक्षणिकः समास इत्यात्वाभावः ।

शेषवचनादिति । शेषग्रहणमन्यपदार्थग्रहणं वा कर्तव्यम् । अन्यतरेणेष्टस्य लाभात् । उभयोपादानं तु पुनर्विधानार्थं, पुनर्विधानाच्च प्रतिपदोक्तवद्बहुव्रीहिर्भवतीत्यर्थः संपद्यते । प्रधानतो वेति । यस्मात्प्रधानस्य वृत्तिरस्ति तस्माद्गौणस्यात्वं न भवतीत्यर्थः । गुणादागतो गौणः । मुखमिव मुख्यः । प्रधानमित्यर्थः । 'शाखादिभ्यो यत्' इति यत् प्रत्ययः । लोके हि शब्दे

उ०—तद्दर्शयतीति । परिहारान्तरं दर्शयतीत्यर्थः ॥ शेषग्रहणमिति । ननु शेषग्रहणं प्रथमान्तानां समासलाभार्थं, 'शेषाद्विभाषे'त्यत्र शेषाधिकारस्यादित्यर्थज्ञानार्थं च । अन्यपदार्थग्रहणं च 'नद्यां ग्राहाः सन्ती'त्यत्र 'मा स्नाही'ति वाक्यार्थे मा भूदित्यर्थमिति चेन्न । 'पञ्च भुक्तवन्तोऽस्ये'ति बहुव्रीहेरिवानभिधानेनास्यापि वारणसंभवात् । वर्तिपदार्थप्रधानप्रथमान्तानां शेषग्रहणेनैव वारणसंभावच्च, संबन्धिपर्यन्तमेकार्थीभावोऽपि लोकत एव सिद्ध इति अन्यपदार्थग्रहणं व्यर्थं सत्पुनर्विधानार्थमित्यर्थः । अत एव भाष्ये 'शेषो बहुव्रीहिरिति सिद्धे' इत्युक्तम् । एवं चान्यतरेणेति चिन्त्यम् । प्रतिपदोक्तवदिति । यथा प्रतिपदोक्ते झटिति प्रतिपत्तिः पुनर्विधानेऽपि तद्वदिति बहुव्रीहावप्यात्वसिद्धिरिति भावः । वस्तुतोऽनभिधानमाश्रित्य प्रतिपदोक्तत्वोपपादनं न युक्तम् । किञ्चैवमपि महच्छब्दोच्चारणेन विहितस्वरूपं प्रतिपदोक्तत्वं दुर्लभमिति अनित्यत्वादत्र परिभाषाप्रवृत्तिरित्येव युक्तम् । इत एवास्वरसादग्रे 'प्रधानतो वा यत' इत्युक्तमिति बोध्यम् । 'प्रधानत' इत्याद्यादित्वात्तसिरित्याह—यस्मात्प्रधानस्येति । यतः प्रधानतो वृत्तिरतस्तस्मिन्नेवात्वशास्त्रप्रवृत्तिरिति भाष्याक्षरार्थः । गुणादिति । धर्मत इत्यर्थः । 'शाखादिभ्य इति य'दिति पाठः । 'शाखा-

१–'ग्रहणं कर्तव्यं मन्यन्ते, न लक्षणेन' इत्यधिकः पाठः क्वचित् ।
† सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः २ । १ । ६१
‡ कुगतिप्रादयः २ । २ । १८
२–'प्रतिपदोक्तं तत्र भवति' पा० ।

अथवा गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः। तद्यथा—'गौरनुबन्ध्योऽजोऽग्नीषोमीय' इति न वाहीकोऽनुबध्यते। कथं तर्हि वाहीके वृद्ध्यात्त्वे* भवतः—गौस्तिष्ठति, गामानयेति? अर्थाश्रय एतदेवं भवति। यद्धि शब्दाश्रयं शब्दमात्रे तद्भवति।

प्र०—उच्चारिते गौणमुख्यार्थसंभवे मुख्य एवार्थे कार्याणि क्रियन्ते। व्याकरणेऽपि 'स्वं रूप'मित्यत्र रूपग्रहणेन ज्ञापितं 'रूपवदर्थोऽप्यङ्गीक्रियत' इति तत्रापि मुख्यस्यैवार्थस्य कार्येष्वङ्गीकरणम्। कथं पुनरत्र गौणता महदर्थस्य? उच्यते। यस्यानुपचरितमहत्त्वं स मुख्योऽर्थः। च्व्यन्तेन तु पूर्वावस्थ उपचरितोत्तरावस्थोऽर्थात्माभिधीयत इति महत्त्वममहत्युपचरितमिति गौणार्थाभिधायी महच्छब्दः। यथा गौर्वाहीक इति वाहीके गोशब्दः। पुंवद्भावे तु शब्दविशेषस्यानाश्रयणाद्गौणमुख्यन्यायानवतारान्महद्भूतेति पुंवद्भावः सिद्धः। कथं तर्ह्यादित्यत्र शब्दविशेषानाश्रयेऽपि गोऽभवदित्यत्र गौणमुख्यन्यायाश्रयेण प्रगृह्यसंज्ञा परिहृता? एवं तर्हि महद्भूतेत्यत्र स्त्रीत्वमर्थस्य मुख्यमेव, तदाश्रयश्च पुंवद्भावः। गोमतीभूतेत्यत्र तु प्रकृतेः कर्तृत्वाश्रयणाद्वैयधिकरण्यात् पुंवद्भावाभावः। गोभवदित्यत्र त्वोदन्तस्य निपातस्य गौणार्थत्वात्प्रगृह्यसंज्ञाभावः।

उ०—दिग्भ्यो य' इति पाठस्तु उगवादिसूत्रस्थभाष्यविरुद्धः। नन्विह शास्त्रे 'स्वं रूप'मिति वचनाच्छब्दस्वरूपस्यैवग्रहणादर्थो न गृह्यत इति कुतो गौणमुख्यन्यायोऽत आह—व्याकरणेऽपीति। च्व्यन्ते न त्विति। प्रकृतिविकृत्योरभेदविवक्षायां हि च्विः। तत्र महत्त्वाऽमहत्त्वयोर्विरोधात्कस्यचिन्मुख्यत्वमपरस्योपचरितत्वमास्थेयमिति लोकानुभवानुरोधेन वस्तुसत्पूर्वावस्थे वस्तुनि उत्तरावस्थोपचर्यत इति महदर्थस्य गौणतेत्यर्थः।

पूर्वावस्थ इति। विद्यमानपूर्वावस्थ इत्यर्थः। नन्वनया रीत्या पुंवत्त्वमपि न स्यादत आह—पुंवद्भावे त्विति। शब्दविशेषस्य—अर्थोपस्थापकशब्दविशेषस्य। एवञ्च पदान्तरसम्बन्धनिमित्तकोपात्तविशिष्टरूपकार्ये एव गौणमुख्यन्यायो नैवं पुंवद्भाव इति भावः। यत्तु 'स्त्रिया' इत्यर्थोपस्थापकं, स त्वर्थोऽत्रापि मुख्य एवेति तात्पर्यम्। 'अस्त्रं त्वं संपद्यते त्वद्भवती'त्यादौ युष्मदाद्यादेशार्थ—पदान्तरेति। कथं तर्हीति। इयं शङ्कोपलक्षणम्। पुंवत्त्वेऽपि स्त्रीत्वरूपार्थोपस्थित्या गौणमुख्यन्यायविषयोऽस्तीत्यपि शङ्का बोध्या। तत्रोपलक्षितशङ्कोत्तरमाह—एवं तर्हीति। स्त्रीत्वमर्थस्य मुख्यमेवेति। तस्यैवार्थस्योपस्थितेरिति भावः। नन्वेवं 'गोमतीभूते'त्यत्रापि पुंवत्त्वं स्यादत आह—गोमतीभूतेत्यत्रेति। वस्तुतो गोमतीभूतेत्यत्र गोमतीनदीभिन्नगोमतीनदीभूतेत्यर्थे नाभाषितपुंस्कत्वान्न पुंवत्त्वमिति बोध्यम्। गोमतीभूतेत्यत्रत्वि'त्यादिग्रन्थः प्रौढ्या, च्व्यन्ते सर्वत्र मूर्च्छितावस्थायाः प्रकृतेरेव कर्तृत्वस्योक्तत्वात्। किञ्चैवं महद्भूतेत्यत्रापि पुंवत्त्वानापत्तिः। अथ 'कथं तर्ही'त्यादिना कण्ठतः कृतशङ्कोत्तरमाह—निपातस्य गौणार्थत्वादिति। निपातपदेन चादित्वेनैव चादीनामुपस्थितौ ये सार्थकास्तेषां तत्तदर्थविशिष्टानामेवोपस्थितेरिति भावः। ननु 'गोतो णि'दित्यत्रार्थवतो रूपस्य ग्रहणाच्छब्दमात्राश्रयत्वं वृद्धेरसिद्धमत आह—प्रातिपदिकस्येति। तस्यामवस्थायां—प्रातिपदिकमात्रज्ञानावस्थायाम्। एवं च तत्संस्कारवेलायां तन्मात्रपर्यालोचनया गौणार्थस्यानुन्मेषान्नास्ति न्यायस्य विषय इत्यर्थः। अर्थप्रकरणशब्दान्तरसंबन्धादिनिरपेक्षस्वरूपमात्रेण यमर्थं शब्दः प्रत्याययति स

* गोतो णित् ७। १। ९०; औतोऽम्शसोः ६। १। ९३

शब्दाश्रये च वृद्ध्यात्वे ।

महदात्त्वे घासकरविशिष्टेषूपसङ्ख्यानं पुंवद्वचनं चासमानाधिकरणार्थम् ॥ १ ॥

महदात्त्वे घासकरविशिष्टेषूपसङ्ख्यानं कर्तव्यं पुंवद्भावश्चासमानाधिकरणार्थः कर्तव्यः । महत्या घासो महाघासः । महत्याः करो महाकरः । महत्या विशिष्टो

प्र०—शब्दाश्रये च वृध्यात्वे इति । प्रातिपदिकस्य सर्वनामस्थाने अम्शसोश्च वृद्ध्यात्वविधानात्प्रातिपदिकस्य चान्वयव्यतिरेकाभ्यां कल्पिताभ्यामर्थवत्ताकल्पनात्तस्यामवस्थायां नास्ति गौणार्थत्वम् । पदान्तरसंबन्धे हि पदस्य गौणार्थत्वाभिव्यक्तिः । अथवा शब्दो न कदाचित् स्वार्थपरित्यागेनार्थान्तरमभिदधाति, अनित्यत्वप्रसङ्गात् शब्दार्थसंबन्धस्य । गोत्वं तु क्वचिदारोपितं गोशब्दप्रयोजकं गौर्वाहीक इति । क्वचित्तु मुख्यम् । यथा रज्जुं सर्पत्वेनाध्यवसाय सर्पशब्दः प्रयुज्यमानो न स्वार्थं जहाति । अर्थस्तु विपर्यस्तः । तत्र पदस्य पदान्तरसंबन्धेऽर्थविपर्याससंभवात् पदकार्येष्वेव गौणमुख्यन्यायो न प्रातिपदिककार्येष्वित्यविपर्यस्त एव चार्थे वृद्ध्यात्वे अनुभूय गोशब्दो वाहीके समारोपितगोत्वे प्रवर्तते । अग्निसोमौ माणवकावित्यत्र 'अग्नेस्तुत्स्तोमसोमा' इति षत्वं न भवति, गौणत्वादग्निसोमशब्दार्थयोः, प्रसिद्धाप्रसिद्धिकृतत्वान्मुख्यगौणव्यवस्थायाः ।

महदात्त्व इति । केचिदन्वाचये 'च'शब्दं मन्यमाना महतो घासो महाघास इत्यत्राप्यात्त्वं

उ०—मुख्यो यस्तु तदपेक्षः सोऽमुख्य इति व्यवस्थेति भावः । तदाह—पदान्तरेति । अमुं पक्षं दूषयन् गौणत्वं प्रकारान्तरेणाह—अथवेति । पूर्वं तु मुख्यार्थपरित्यागेनान्यार्थपरिग्रहः शब्दस्योक्तः, इदानीं तु मुख्यार्थस्यैवारोपेणान्यत्र प्रयोग इत्युच्यत इति भावः । अनित्यत्वप्रसङ्गादिति । शब्दार्थसंबन्धस्य नित्यत्वं हि यत्रार्थे यस्य संबन्धग्रहस्तस्य कदाचिदपि तच्छब्दोच्चारणे बोधविषयत्वाभावाभावात् । तदुक्तं—स्वार्थपरित्यागेनेति । स्वार्थस्य बोधविषयत्वत्यागेनेत्यर्थः । तज्जन्यबोधविषयत्वमेव हि शब्दस्यार्थेन सम्बन्धः । तादात्म्यादिरूपोऽपि बोधविषयताबलकल्प्यस्तदभावे हीयेत । अनेकार्थानां तु तदन्यतमस्य बोधविषयत्वाभावाभाव एव तत्संबन्धनित्यत्वमित्याशयः । क्वचित्त्विति । 'गां दोग्धी'त्यादौ । अन्यत्रान्यशब्दः स्वार्थापरित्यागेन वर्तत इत्यत्र दृष्टान्तमाह—यथा रज्जुमिति । तत्र क्वचिदनाहार्यारोपः, क्वचिदाहार्यारोप इत्यन्यत् । अर्थस्त्विति । विशेष्यभूतोऽर्थस्त्वित्यर्थः । अप्रसिद्धार्थकत्वमपि गौणत्वं दर्शयन्नाह—अग्निसोमाविति । देवताविशेषवाचिनोर्यदा यदृच्छयान्यत्र सङ्केतस्तदेदमुदाहरणम् । यदा स्वयं माणवकोऽग्निरयं सोम इति केनचिदप्रयुक्ते परोऽग्निसोमौ भोजयेति द्वन्द्वं प्रयुङ्क्ते तदा गौणलाक्षणिकत्वमपि गौणत्वमत्रेति बोध्यम् । प्रसिद्धदेवताद्वन्द्ववाच्यग्निसोमशब्दस्य तत्सदृशपरत्वे 'अग्नीषोमौ माणवका' वित्यत्र ईत्वषत्वे भवत एव । तद्प्रवृत्तिवेलायां गौणार्थोपस्थापकत्वाभावात् ।

१–'नानाधिकरणा' पा० ।  २–'द्रष्टव्यः' पा० ।

महाविशिष्टः ।

अष्टनः कपाले हविषि ॥ २ ॥

अष्टनः कपाले हविष्युपसङ्ख्यानं कर्तव्यम् । अष्टाकपालं† चरुं निर्वपेत् । हविषीति किमर्थम् ? अष्टकपालं‡ ब्राह्मणस्य ।

गवि च युक्ते ॥ ३ ॥

गवि च युक्त उपसङ्ख्यानं कर्तव्यम् । अष्टागवेन§ शकटेन । युक्त इति किमर्थम् ? अष्टगवं ब्राह्मणस्य ।

[ अन्यै³प्रकृतिस्त्वमहान् भूतप्रकृतौ महान्महत्येव ।
तस्मादात्त्वं न स्यात्पुंवत् तु कथं भवेत्तत्र ॥ १ ॥
अमहति महान् हि वृत्तस्तद्वाची चात्र भूतशब्दोऽयम् ।
तस्मात्सिध्यति पुंवन्निवर्त्यमात्त्वं तु मन्यन्ते ॥ २ ॥
यस्तु महतः प्रतिपदं समास उक्तस्तदाश्रयं ह्यात्त्वम् ।
कर्तव्यं मन्यन्ते न लक्षणेन लक्षणोक्तश्चायम् ॥ ३ ॥
शेषवचनात् तु योऽसौ प्रत्यारम्भात्कृतो बहुव्रीहिः ।
तस्मात्सिध्यति तस्मिन्प्रधानतो वा यतो वृत्तिः ॥ ४ ॥ ] ॥ ४६ ॥

प्र०—वर्णयन्ति । यथा तु भाष्यं तथा समुच्चये 'च'शब्द इति पुंवद्भावसन्नियोगेनात्त्वं विधीयमानमन्यत्र न भवतीति लक्ष्यते ।

अष्टाकपाल इति । अष्टसु कपालेषु संस्कृत इति तद्धितार्थे समासः । 'संस्कृतं भक्षा' इत्यण् । तस्य 'द्विगोर्लु'गिति लुक् । अष्टकपालमिति । समाहारे द्विगुः, 'पात्रादिभ्यः प्रतिषेध' इति स्त्रीत्वाभावः ।

अष्टागवेनेति । अष्टौ गावो युक्ता अस्मिन्निति त्रिपदे बहुव्रीहौ द्वयोर्द्विगुः । गोरतद्धितलुकीति टच् समासान्तः । तत्र दीर्घत्वेन युक्तार्थसंप्रत्याद्गतार्थत्वाद्युक्तशब्दस्य निवृत्तिः । अथवा समाहारे द्विगुस्तत्र साहचर्यादभेदोपचारादष्टगवेन युक्तं शकटमष्टागवमुच्यते ॥ ४६ ॥

उ०—यथा तु भाष्यमिति । उपात्तशब्दोदाहरणं विहाय लिङ्गविशिष्टपरिभाषागम्योदाहरणदानादिति भावः ।

कथं तर्हि युक्तशब्दाभावे तदर्थप्रतीतिरत आह—अष्टौ गाव इति । ननु त्रिपदे बहुव्रीहौ दीर्घे सत्यपि युक्तशब्दनिवृत्तिर्दुर्लभा, उपायाभावादित्यत आह—अथवेति । अभेदोपचाराभावे तु प्रत्युदाहरणं बोध्यम् ॥ ४६ ॥

१–'अष्टाकपालः' पा० । † संस्कृतं भक्षाः ४ । २ । १६; द्विगोर्लुगनपत्ये ४ । १ । ८८
२–इदं क्वचिन्न । ‡ तद्धितार्थोत्तरपदसमाहारे च २ । १ । ५१
§ गोरतद्धितलुकि ५ । ४ । ९२ ३–इमे श्लोका इह क्वचिन्न ।

## द्व्यष्टनः सङ्ख्यायामबहुव्रीह्यशीत्योः ॥ ६ । ३ । ४७ ॥

प्राक्शतादिति वक्तव्यम् । इह मा भूत्—द्विशतम् द्विसहस्रम् । अष्टशतम् अष्टसहस्रम् ॥ ४७ ॥

## विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् ॥ ६ । ३ । ४९ ॥

सर्वेषांग्रहणं किमर्थम् ? चत्वारिंशत्प्रभृतौ सर्वेषां [ ग्रहणं सर्वेषां ] विभाषा यथा स्याद् द्व्यष्टनोश्च त्रेश्च[¶] । नैतदस्ति प्रयोजनम् ।। प्रकृतं द्व्यष्टन्ग्रहणमनुवर्तिष्यते । यदि तदनुवर्तते त्रेस्त्रयो द्व्यष्टनोश्चेति द्व्यष्टनोरपि त्रय आदेशः प्राप्नोति । नैष दोषः । मण्डूकगतयोऽधिकाराः । यथा मण्डूका उत्प्लुत्योत्प्लुत्य गच्छन्ति तद्वदधिकाराः । अथवैकयोगः करिष्यते । 'द्व्यष्टनः सङ्ख्यायामबहुव्रीह्यशीत्योस्त्रेस्त्रयः' । ततो 'विभाषा चत्वारिंशत्प्रभृतौ सर्वेषा'मिति[१] । [ नैकयोगेऽनुवृत्तिर्भवति । ] अथवोभयं निवृत्तं तदपेक्षिष्यामहे ॥ ४९ ॥

## हृदयस्य हृल्लेखयदण्लासेषु ॥ ६ । ३ । ५० ॥

यदण्ग्रहणमिदं प्रत्ययग्रहणं तत्र 'प्रत्ययग्रहणे यस्मात्स [३]तदादेर्ग्रहणं भवती'ति[२] यदणन्ते प्राप्नोति ।

प्र०—विभाषा । मण्डूकगतय इति । द्व्यष्टन्शब्दार्थं त्रय आदेशो न शक्नोति वक्तुमिति त्रयआदेशेन संबन्धाभावादिहैव द्व्यष्टनोरभिसंबन्धः । अथवेति । एका भवतिक्रिया आत्वत्रयआदेशकर्तृकोपादीयते । ततो यस्मिन् काले द्व्यष्टनोरात्वं तस्मिन्नेव त्रिशब्दस्य त्रयआदेश इत्यर्थः । अथवोभयमिति । समुदायोऽपेक्ष्यते स तु एक एवेत्यनन्तरस्य विधिर्वा भवति प्रतिषेधो वेत्यपि नास्ति ॥ ४९ ॥

हृदयस्य । रूपग्रहणमिति । स्वरूपस्य ग्रहणं न तु तदन्तस्येत्यर्थः । लेखग्रहणादिति ।

उ०—विभाषा । नन्वधिकारेषु नदीप्रवाहन्यायस्य युक्तत्वात्कथं मण्डूकगतिरित्याशङ्क्यायोग्यत्वादत्रासम्बन्ध इत्याह—द्व्यष्टशब्दार्थमिति । ननु विधेयभेदेन वाक्यभेदस्य युक्तत्वात्कथमेकयोगत्वमत आह—एका भवतिक्रियेति । प्रतिपत्तिवाक्यमेकं, प्रक्रियावाक्यं तु भिद्यत इति भावः । ननु लौकिकेऽपेक्षालक्षणेऽधिकारेऽपि अनन्तरस्यैवापेक्षा स्यान्न तु व्यवहितस्येत्यत आह—समुदाय इति ॥ ४९ ॥

हृदयस्य हृल्लेख । भाष्ये—यदणन्ते प्राप्नोतीति । ननु 'प्रत्ययग्रहणे चापञ्चम्या' इति निषेधात्

१–कचिन्न ।
२–'इति' कचिन्न ।
¶ द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः; त्रेस्त्रयः ६ । ३ । ४७; ४८
३—'विहितस्तदादे' पा० ।

यदण्ग्रहणे रूपग्रहणं लेखग्रहणात् ॥ १ ॥

यदण्ग्रहणे रूपग्रहणं द्रष्टव्यम् । कुतः ? लेखग्रहणात् । यदयं लेखग्रहणं करोति तज्ज्ञापयत्याचार्यो 'न यदणन्ते भवती'ति ।

अपर आह—अत्यल्पमिदमुच्यते । सर्वत्रैवोत्तरपदाधिकारे प्रत्ययग्रहणे रूपग्रहणं द्रष्टव्यम् । कुतः ? लेखग्रहणादेव । किं प्रयोजनम् ? कुमारी गौरितरा । 'घादिषु नद्या ह्रस्वो भवती'ति* ह्रस्वत्वं प्रसज्येत ।

प्र०—एतद्वचनान्यथानुपपत्त्या च लेखशब्दोऽणन्तो गृह्यते न तु घञन्त इति घञि 'हृदयलेख' इत्येव भवति ।

सर्वत्रैवेति । प्रकरणापेक्षं ज्ञापकमाश्रीयते न त्वेतद्योगापेक्षमेवेत्यर्थः । कुमारी गौरितरेति । उदाहरणदिगियं, समासस्तूदाहार्यः 'कुमारगौरितरे'ति । अत्र हि घान्त उत्तरपदे पुंवद्भावं बाधित्वा ह्रस्वः स्यात् । संज्ञाविधौ च प्रत्ययग्रहणे तदन्तविधेः प्रतिषेध, उत्तरपदाधिकारे तूत्तरपदस्य घेन विशेषणात्स्यादेव तदन्तविधिः । संज्ञाविधौ तदन्तविधिनिषेधस्य तु फलं 'दृषत्तीर्णा' इत्यत्र धातुतकारस्य नत्वनिवारणम् । विशेष्यानिर्देशान्नत्वे निष्ठया तदन्तविध्यभावात् क्तक्तवतुतकारस्यैव नत्वं प्रवर्तते ।

उ०—कथमत्र तदन्तविधिः, यदणोः परत इत्युक्ते कस्मादिति आकाङ्क्षासत्त्वेन हृदयाद्यदणोः परतस्तस्यादेश इत्यवगमात् । अत एव 'सुपि चे'त्यादौ न तदन्तविधिरिति चेन्न । 'उत्तरपदे' इत्यनेनान्वयाय तमेव विशेष्यमाश्रित्य सामर्थ्येन तदन्तविधिरित्यदोषात् । सिद्धान्ते त्वेतद्विषये उत्तरपदे इत्यसंबन्धो ज्ञापकादेवेति बोध्यम् ।

'रूपग्रहण'मित्यस्य रूपस्य ग्रहणं नार्थस्येति नार्थ इत्याह—स्वरूपस्येति । ननु घञन्ते लेखग्रहणस्य चारितार्थ्यात्कथं ज्ञापकत्वमत आह—एतद्वचनेति । एतज्ज्ञापकत्ववचनेत्यर्थः ।

उदाहरणदिगिति । भाष्ये—कुमारी गौरितरेति स्थिते इत्यर्थ इत्यन्ये । वस्तुतो वयोवाचकानां 'जातेरस्त्रीविषये'ति सूत्रे जातिलक्षणद्वयप्रणयनेन वैकल्पिकजातिकार्यबोधनाज्जातेश्चेति निषेधपक्षे भाष्ये प्रयोगः समास एवेति न दोषः । बाधित्वेति । परत्वादिति भावः । ननु संज्ञाश्रये विधौ तदन्तग्रहणाभावस्य 'सुप्तिङन्त'मित्यन्तग्रहणेन ज्ञापितत्वात्कथमत्र तत्प्रसङ्गोऽत आह—संज्ञाविधाविति । संज्ञाया विधेयत्वे स निषेधो न तु तदाश्रयेऽन्यत्रेत्यर्थः । नन्वेवं संज्ञाविधौ तदन्तविधिप्रतिषेधस्य किं फलमत आह—संज्ञेति । अन्यथा 'क्तक्तवतू' इत्यनेन तदन्तस्यैव संज्ञायामत्र दोषः । दात्परत्वसंपत्तये—दृषदिति । ननु नत्वविधायके निष्ठान्तस्येत्यर्थात्स्यादेव दोषोऽत आह—विशेष्येति ।

* घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः ६ । ३ । ४३

यद्येतज्ज्ञाप्यते 'खित्यनव्ययस्य' [ ६ । ३ । ६६ ] इति खित्येवानन्तरस्याऽनव्ययस्य ह्रस्वत्वं प्राप्नोति । खित्यनन्तरो ह्रस्वभावी नास्तीति कृत्वा खिदन्ते [ उत्तरपदे ] भविष्यति । ननु चायमस्ति स्तनन्धय इति† । अत्रापि शपा‡ व्यवधानम् । एकादेशे कृते नास्ति व्यवधानम् । एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यवधानमेव । अथवैतज्ज्ञापयत्याचार्यः 'खित्यनन्तरस्य न भवती'ति यदयमनव्ययस्येति प्रतिषेधं शास्ति । न हि खित्यनन्तरमव्ययमस्ति ॥ ५० ॥

## पादस्य पदाज्यातिगोपहतेषु ॥ ६ । ३ । ५२ ॥

### पदादेशेऽन्तोदात्तनिपातनं पदोपहतार्थम्[3] ॥ १ ॥

पदादेशेऽन्तोदात्तनिपातनं कर्तव्यम् । किं प्रयोजनम् ? पदोपहतार्थम् । पादेनोपहतं पदोपहतम् । 'तृतीया कर्मणि' [ ६ । २ । ४८ ] इति [ पूर्वपद ] प्रकृतिस्वरत्वे पूर्वपदान्तोदात्तत्वं यथा स्यात्§ ।

---

प्र०—ननु चायमिति । खशैव कर्तुरभिधानाच्छपोऽप्रवृत्तिं मन्यते । अत्रापीति । यथा पचतीत्यत्र लेनाभिहिते कर्तरि शब्भवति' एवमत्रापीति भावः । एकादेशे कृत इति । अयादेशात्परत्वादेकादेश इति भावः । स्थानिवद्भावादिति । श्रुतेर्लिङ्गं दुर्बलमिति स्थानिवद्भावो न बाध्यते । अथवेति । न ह्यव्ययात्परः खित्प्रत्ययः संभवति ॥ ५० ॥

पादस्य । पादशब्दो वृषादित्वात्, 'स्वाङ्गशिटामदन्ताना'मिति वाद्युदात्तः, तदादेश आन्तर्यादाद्युदात्त एव प्राप्नोतीत्याह—पदादेश इति । पदोपहतमिति । अत्र 'तृतीया कर्मणी'त्यनेन पूर्वपदप्रकृतिस्वरोऽन्तोदात्तत्वं भवति । तत एकादेशः 'स्वरितो वानुदात्ते पदादा'विति पक्षे स्वरितः, पक्षे तूदात्तः ।

---

उ०—खशैवेति । कर्तरीति विकरणस्यैवार्थनिर्देश इति तदभिमानः । यथेति । सार्वधातुकविशेषणं कर्तृग्रहणमिति भावः । नन्वयादेशोत्तरमेकादेशे ह्रस्वभाविनोऽभावान्न दोषोऽत आह—परत्वादिति । ननु ज्ञापिततदन्तविध्यभावसामर्थ्यात्स्थानिवत्त्वं बाध्यतामत आह—श्रुतेर्लिङ्गमिति । स्थानिवत्त्वं श्रौतं, तदन्तविध्यभावस्तु लैङ्ग इति भावः ॥ ५० ॥

पादस्य । पदादेशोऽत्रादन्तः । अदन्तानामिति । अन्तानामिति पाठेऽपि स एवार्थः । भाष्ये—पूर्वपदप्रकृतिस्वरत्वे इति । परत्वादेकादेशात्पूर्वं स्वर इत्यर्थः ।

---

१–क्वचिन्न । † नासिकास्तनयोर्ध्माधेटोः ३ । २ । २६ ‡ कर्तरि शप् ३ । १ । ६८
२–'अथवैतदेव ज्ञापयति खिदन्ते ह्रस्वो भवतीति' इति कीलहार्नपाठः ।
३–कीलहार्नभाष्ये विभज्य व्याख्यातम् । ४–क्वचिन्न ।
§ स्वरितो वानुदात्ते पदादौ ८ । २ । ६

## उपदेशिवद्वचनं च स्वरसिद्ध्यर्थम् ॥ २ ॥

उपदेशिवद्भावश्च वक्तव्यः । किं प्रयोजनम् ? स्वरसिद्ध्यर्थम् । उपदेशावस्थायामन्तोदात्तनिपातने कृते समासस्वरेण* बाधनं यथा स्यात् । पदाजिः पदातिः ॥ ५२ ॥

## पद्यत्यतदर्थे ॥ ६ । ३ । ५३ ॥

## पद्भाव इके चरतावुपसङ्ख्यानम् ॥ १ ॥

पद्भाव इके चरतावुपसंख्यानं कर्तव्यम् । पादाभ्यां[1] चरति पदिकः† ॥ ५३ ॥

## वा घोषमिश्रशब्देषु ॥ ६ । ३ । ५६ ॥

[2]निष्के चोपसङ्ख्यानं कर्तव्यम् । पन्निष्केण पादनिष्केण ॥ ५६ ॥

## उदकस्योदः संज्ञायाम् ॥ ६ । ३ । ५७ ॥

## संज्ञायामुत्तरपदस्य च ॥ १ ॥

संज्ञायामुत्तरपदस्येति वक्तव्यम् । इहापि यथा स्यात्—लोहितोदः क्षीरोद [2]इति ॥ ५७ ॥

प्र०—उपदेशिवद्वचनमिति । यथोपदेशिनः स्वरः सतिशिष्टेन स्वरेण बाध्यते तथास्यापीत्यर्थः । समासस्वरेणेति । समासाश्रयेण कृत्स्वरेणेत्यर्थः ॥ ५२ ॥

पद्य । पदिक इति । 'पर्पादिभ्यः ष्ठ'न्निति ष्ठन्प्रत्ययः ॥ ५३ ॥

उदक । उदकशब्दसमानार्थ उदशब्दो विद्यते तथा चाप्रसन्नः प्रसन्नोदमित्यसंज्ञायामप्युदशब्दः प्रयुज्यते । संज्ञायां तूदकशब्दप्रयोगनिवृत्त्यर्थमुदादेशविधानमित्याहुः । एतदन्ये न मृष्यन्ति । एवमभ्युपगमे वक्ष्यमाणो विकल्पोऽनर्थकः स्यात् ॥ ५७ ॥

उ०—कृत्स्वरेणेति । समासान्तोदात्तत्वापवादत्वात्कृदुत्तरपदप्रकृतिस्वरस्येत्यर्थः ॥ ५२ ॥

उदकस्योदः । एतदन्ये इति । एवं च 'प्रसन्नोद'मिति प्रयोगोऽसाधुरिति सूत्रबलादवसीयत इति भावः । व्यवस्थार्थं स इत्यपरे ॥ ५७ ॥

* गतिकारकोपपदात् कृत् ६ । २ । १३९

† पर्पादिभ्यः ष्ठन् ४ । ४ । १०; 'पादः पच्च' ग० ।

१–'पादेन' पा ।

२–'निष्के चोपसंख्यानम्' इति वार्तिकं क्वचित् ।

२—क्वचिन्न ।

## एकहलादौ पूरयितव्येऽन्यतरस्याम् ॥ ६ । ३ । ५९ ॥

एकहलादाविति किमर्थम् ? उदकस्थानम्[1] ॥ उच्यमानेऽप्येतस्मिन्नत्र प्राप्नोति । एतदप्येकहलादि । किं कारणम् ? एकैकवर्णवर्तित्वाद्वाच उच्चरितप्रध्वंसित्वाच्च वर्णानाम्‡ । एकैकवर्णवर्तिनी वाक्, न द्वौ वर्णौ युगपदुच्चारयति । तद्यथा—गौरित्युक्ते यावद्गकारे वाक्प्रवर्तते तावन्नौकारे न विसर्जनीये, यावदौकारे न [2]तावद्गकारे न विसर्जनीये, यावद्विसर्जनीये न [3]तावद्गकारे नौकारे । उच्चरितप्रध्वंसित्वाच्च वर्णानाम् । उच्चरितो [4]वर्णः प्रध्वस्तश्च[5] । अथापरः प्रयुज्यते न वर्णो [6]वर्णस्य सहायः ।

एवं तर्ह्येकहलादावित्युच्यते सर्वश्चैवै[7]कँहलादिस्तत्र प्रकर्षगतिर्विज्ञास्यते—'साधीयो य एक हलादि'रिति । कश्च साधीयः ? यत्रैकं हलमुच्चार्या[8]ज्ञुच्यते ॥५९॥

प्र०—एकहलादौ । एकहलादाविति किमर्थमिति । अतिप्रसङ्गनिवारणासामर्थ्याद-नर्थकमिति भावः । एतदपीति । सकारस्यैवादित्वात् । एकैकवर्णवर्तित्वादिति । यद्यनेकस्य वर्णस्य युगपदुच्चारणं स्यात्तदा स्थानशब्द एकहलादिर्न स्यात् । क्रमोच्चारिता अपि वर्णा यद्यवतिष्ठेरन् घटादिवत्तदा स्थानशब्दे युगपद्द्वयोरुपलम्भादादित्वं स्यात्, यतस्तु नोच्चारणे, नाप्युपलब्धौ वर्णानां यौगपद्यं तस्मादेकस्यैव हल आदित्वमिति नार्थ एकग्रहणेन । 'हलादा'वित्येवाजादिनिवृत्त्यर्थं वक्तव्यमिति भावः । तत्र प्रकर्षगतिरिति । असहायवाच्येकशब्द आश्रीयते । समानजातीयश्च सहायत्वेन प्रसिद्धतर इति स एव निवर्त्यते, तत्र यद्यप्युच्चारण उपलब्धौ वा वर्णो वर्णस्य न सहायस्तथापि 'बुद्धौ कृत्वा सर्वाश्चेष्टा' इत्यनेन न्यायेन यस्यानन्तरं द्वितीयो हल् नोच्चार्यते सोऽसहायो हलादिरस्येत्याश्रीयते ॥ ५९ ॥

उ०—एकहलादौ किमर्थमिति । किंशब्दः क्षेप इत्याह—अतिप्रसङ्गेति । भाष्योक्तं हेतुद्वयं प्रतिपादयति—यद्यनेकस्येति । एकशब्दः संख्यावाचीति भावः । एकग्रहणस्यैवायमाक्षेपो न तु हलादिग्रहणस्यापीत्याह—एकग्रहणेनेति । असहायवाच्याश्रयेण परिहार इत्याह—असहायेति । यद्यपि 'असिद्वितीयोऽनुससार पाण्डव'मित्यादौ विजातीयोऽपि सहायस्तथापि स न प्रसिद्धतर इत्यर्थः । समानजातीयत्वं चोपस्थितहल्त्वेन । तत्र यद्यपीति । एवं सर्वत्र वर्णस्यासहायत्वाद्व्यावर्त्याप्रसिद्धिरित्यर्थः । तथापीति । बौद्धं साहायकमाश्रित्य व्यावर्त्यप्रसिद्धिरिति भावः । तदेव दर्शयति—यस्यानन्तरमिति । भाष्यस्वरसस्तु सङ्ख्यावाच्येकशब्दाश्रयणे एवेत्यन्ये ॥ ५९ ॥

---

१—'उदकस्थालम्' पा० । ‡ १।४।१०६ वा० १० पृ० ४८३ अत्रत्यां टिप्पणीमपि द्रष्टव्या ।
२—'तावत्' इति क्वाचित्कः पाठः । ३—'नापि औकारे' पा० ।
४—क्वचिन्न । ५—'प्रध्वस्त इति' पा० । ६—'वर्णान्तरस्य सहायः' पा० ।
७—'सर्वश्चैक' पा० । ८—'ज्जुच्चार्यते' पा० ।

८० ‡

# इको ह्रस्वोऽङ्यो गालवस्य ॥ ६ । ३ । ६१ ॥

## इको ह्रस्वत्वमुत्तरपदमात्रे ॥ १ ॥

इको ह्रस्वत्वमुत्तरपदमात्रे वक्तव्यम् । इहापि यथा स्यात्—अलाबुकर्कन्धुदृन्भुफलमिति ॥ किं पुनः कारणं न सिध्यति ?

## सर्वान्ते हि लोकविज्ञानम् ॥ २ ॥

लोकविज्ञानाद्धि यदेव सर्वान्त्यं पदं तस्मिन्पूर्वपदस्य ह्रस्वत्वं स्यात् ।

अथवैवं विग्रहः करिष्यते । अलाबूश्च कर्कन्धूश्चालाबुकर्कन्ध्वौ, अलाबुकर्कन्ध्वौ च दृन्भूश्चालाबुकर्कन्धुदृन्भ्वः । अलाबुकर्कन्धुदृन्भूनां फलमलाबुकर्कन्धुदृन्भुफलमिति । यद्येवं दृन्भ्वाः पूर्वनिपातः प्राप्नोति* । राजदन्तादिषु† पाठः करिष्यते ।

'अथवैवं विग्रहः करिष्यते दृन्भ्वाः फलं दृन्भुफलम्, कर्कन्धूश्च दृन्भुफलं च कर्कन्धुदृन्भुफलम्, अलाबूश्च कर्कन्धुदृन्भुफलं चालाबुकर्कन्धुदृन्भुफलमिति[२] । एवमपि फलेनाकृतोऽभिसंबन्धो भवति । [ नैष दोषः[३] । ] प्रत्येकं फलशब्दः परिसमाप्यते ।

## इयङुवङ्व्ययप्रतिषेधः ॥ ३ ॥

इयङुवङ्भाविनामव्ययानां च प्रतिषेधो वक्तव्यः । श्रीकुलम् भ्रूकुलम् । काण्डीभूतं वृषलकुलम् । कुड्यीभूतं वृषलकुलम् ।

अभ्रूकुंसादीनामिति वक्तव्यम् । भ्रुकुंसः [ भ्रूकुंसः[३] ] भ्रुकुटिः [ भ्रूकुटिः[३] ] ।

प्र०—इको ह्रस्वो । उत्तरपदमात्र इति । यस्यान्यापेक्षया व्यभिचार्युत्तरपदत्वं तस्मिन्नपीत्यर्थः ॥ अलाबुकर्कन्ध्वाविति । जातिपरत्वाभावादेकवद्भावो न कृतः । यद्येवमिति । 'अल्पाच्तर'मित्यनेन । त्रयाणां तु द्वन्द्वे तन्त्रे तरब्निर्देशेऽल्पाच्तरत्वाभावात् पूर्वनिपाताप्रसङ्गः । प्रत्येकमिति । 'ओर'त्रित्यत्र फले लुकि कृते नपुंसकाश्रयं ह्रस्वत्वमिति प्रकारान्तरेणोक्तं

उ०—इको ह्रस्वो । मात्रशब्दः कार्त्स्न्यवाचीत्याह—यस्येति । तन्त्रे तरब्निर्देश इति । द्वयोरेकस्य निर्धारणे एव तरब्विधानाद्द्वयोरेव समासे तत्प्रवृत्तिरिति भावः । ननूक्तसमासे प्रत्येकं फलशब्दसंबन्धो न युक्त इत्याशङ्क्य प्रकारान्तरेणैव फलवाचित्वमलाब्वादेस्तत्फलसंपत्त्या तु प्रत्येकं फलशब्दस्य समाप्तिरुक्तेत्यत

* अल्पाच्तरम् २ । २ । ३४ ।

† राजदन्तादिषु परम् २ । २ । ३१ ।

१—'अथवा दृन्भ्वाः' पा० ।

२—'इति' क्वचिन्न ।

३—क्वचिन्न ।

४—'भ्रुकुटिः भ्रुकुंसः' पा० ।

अपर आह—अकारो भ्रूकुंसादीनामिति वक्तव्यम् । भ्रकुंसः [1]भ्रकुटिः ॥ ६१ ॥

## एकतद्धिते च ॥ ६ । ३ । ६२ ॥

[2]तद्धिते किमुदाहरणम् ? एकत्वम् एकता । नैतदस्ति प्रयोजनम् । पुंवद्भावेनाप्येतत्सिद्धम् । कथं पुंवद्भावः ? 'तसिलादिष्वा कृत्वसुचः' [ ६ । ३ । ३५ ] । इदं तर्हि प्रयोजनम्—एकस्या आगतमेकरूप्यम् एकमयम्‡ । इदं चाप्युदाहरणम् एकत्वम् एकता । ननु चोक्तं 'पुंवद्भावेनाप्येतत्सिद्ध'मिति । न सिध्यति । उक्तमेतत् 'त्वतलोर्गुणवचनस्ये'ति* ।

अथोत्तरपदे किमुदाहरणम् ? एकशाटी । नैतदस्ति । पुंवद्भावेनाप्येतत्सिद्धम् । कथं पुंवद्भावः ? समानाधिकरणलक्षणः [ पुंवद्[3]भावः ] । इदं तर्हि प्रयोजनम्—एकस्याः क्षीरमेकक्षीरम् । इदं चाप्युदाहरणम् एकशाटी । ननु चोक्तं 'पुंवद्भावेनाप्येतत्सिद्ध'-मिति । न सिध्यति । 'न कोपधायाः' [ ६ । ३ । ३७ ] इति प्रतिषेधः प्राप्नोति ।

प्र०—भवति ॥ ६१ ॥

एकतद्धिते । त्वतलोर्गुणवचनस्येति । एकशब्दो यदा सङ्ख्यावाची तदा गुणवचनः, यदा असहायवाची तदा गुणवचनो न भवति । उक्तमेतदिति । 'न कोपधाया' इति प्रतिषेधाभावे 'स्त्रियाः पुंव'दित्यनेनात्र पुंवद्भावो न तु 'पुंवत्कर्मधारये'त्यनेन, तस्य प्रतिषिद्धार्थत्वात् । अथोच्येत परत्वात्कर्मधारयलक्षणेन पुंवद्भावेन भाव्यमिति । नैतदस्ति । परत्वाश्रयणे ह्रस्वत्वेनैवानेन परत्वाद्भाव्यम् । भाष्यकारस्तु तात्पर्येणोदाहरणत्वमस्य निराकृतवान्,

उ०—आह-ओरजित्यत्रेति । ओरजित्यस्यात्रेत्यर्थः । इयङुवङिति निषेधनिषेधमाह भाष्ये—भ्रू इति ॥ ६१ ॥

एकतद्धिते । भाष्ये—तसिलादिष्विति । तसिलादिषु त्वतलावपि परिगण्येते । 'त्वतलो'रिति तस्यैव नियामकमिति भावः । नन्वेकशब्दस्य संख्यावाचितया गुणवचनत्वमस्त्येवेत्यत आह—एकशब्द इति । चिन्त्यमेतत्, आकडारसूत्रशेषस्थभाष्योक्तरीत्या संख्याशब्दानां गुणवचनत्वाभावात् । ननूक्तमेतदित्यादि व्यर्थम्, प्रतिषेधविषयस्य पुंवत्कर्मधारयेत्यस्यात्र प्राप्तेः । किञ्च समानाधिकरणलक्षणः पुंवद्भाव इत्यप्ययुक्तं, परत्वेन कर्मधारयलक्षणस्यैवौचित्यादत आह—न कोपधाया इतीति । तात्पर्येणेति । विनापि सूत्रं सिद्धत्वेन सूत्रस्यैतत्तात्पर्यकत्वाभावेनेत्यर्थः । कृते त्विदमेव प्राप्नोतीत्यन्यत् । न च भाष्यकारोदाहरणान्यपि 'सर्वनाम्नो वृत्तिमात्र' इत्यनेन सिद्धानीति वाच्यम् । तत्सूत्रैतद्भाष्याभ्यां तस्य क्वाचित्कत्वकल्पनात् । यत्त्वेतस्मादेव ज्ञापकादस्य तद्धिते प्रवृत्तिरिति तन्न, 'दक्षिणोत्तराभ्यामतसु'जिति सूत्रस्थभाष्यविरोधा-

१—'भ्रकुटिः भ्रकुंसः' पा० ।　　२—'एकतद्धिते' पा० ।

‡ हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः, मयट् च ४ । ३ । ८१; ८२ ।

* ६ । ३ । ३५ वा० १० ।　　३—क्वचिन्न ।

नैष दोषः । उक्तमेतत् 'कोपधप्रतिषेधे तद्धितवुग्रहण'मिति† ॥ ६२ ॥

## खित्यनव्ययस्य ॥ ६ । ३ । ६६ ॥

### खिति ह्रस्वाप्रसिद्धिरनजन्तत्वात् ॥ १ ॥

खिति ह्रस्वस्याप्रसिद्धिः । कालिंमन्या हरिणिंमन्या । किं कारणम् ? अनजन्तत्वात् । मुमि‡ कृतेऽनजन्तत्वाद्ध्रस्वत्वं न प्राप्नोति ।

### सिद्धं तु ह्रस्वान्तस्य मुम्वचनात् ॥ २ ॥

सिद्धमेतत् । कथम् ? ह्रस्वान्तस्य मुम्भवतीति वक्तव्यम् ।

### सन्नियोगाद्वा ॥ ३ ॥

अथवा सन्नियोगः करिष्यते । क एष यत्नश्चोद्यते सन्नियोगो नाम ? चकारः कर्तव्यः । मुम् च । किं च ? यच्चान्यत्प्राप्नोति । किं चान्यत्प्राप्नोति ? ह्रस्वत्वम् । सिध्यति । सूत्रं तर्हि भिद्यते ॥ यथान्यासमेवास्तु । ननु चोक्तं 'खिति ह्रस्वाप्रसिद्धिरनजन्तत्वा'दिति । परिहृतमेतत् 'सिद्धं तु ह्रस्वान्तस्य मुम्वचना'दिति । तत्तर्हि ह्रस्वग्रहणं कर्तव्यम् ? न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् ? 'इको ह्रस्वोऽङ्यो

---

प्र०—रूपस्यान्यथासिद्धत्वात् ॥ ६२॥

खित्य । खिति ह्रस्वाप्रसिद्धिरिति । इह ह्रस्वश्रुत्याच्युपस्थापितेऽचा पूर्वपदस्य विशेषणादजन्तस्य ह्रस्वेन भाव्यं, पूर्वपदेन त्वचि विशेष्यमाणे वाङ्मन्यादिष्वपि ह्रस्वप्रसङ्गः । तत्र मुमि कृतेऽनजन्तत्वाद्ध्रस्वाप्रसङ्गः । अथ स्तनन्धयादिषु सावकाशो मुमागमः कालिमन्यादिषु ह्रस्वत्वेन बाध्यते तथापि मुन्न प्राप्नोतीति मुमर्थो यत्नः कर्तव्यः ।

अत्रोत्तरमाह—सिद्धं त्विति ॥ सन्नियोगाद्वेति । सन्नियोगो यौगपद्यमित्यर्थः । खितीत्येषा सप्तमीति । इह सूत्रे ह्रस्वस्य विधीयमानत्वात् खितीति सप्तम्या षष्ठीप्रकल्पनं नास्ति । उत्तरसूत्रे तु खितीत्यनुवृत्ता सप्तमी 'ह्रस्व' इति प्रथमायाः षष्ठीं प्रकल्पयति । तत्र कालिमन्यादिषु

---

उ०—पचेः ॥ ६२ ॥

खित्यनव्ययस्य । पूर्वपदस्येति । 'उत्तरपदे'इत्यनेनास्य वाक्यस्य तद्घटितवाक्यैकदेशत्वानुमानादिति भावः । तत्र मुमीति । द्वयोरपि निरवकाशत्वेन परत्वादिति भावः । स्तनन्धयादिष्विति । फलाभावाद्ध्रस्वाप्राप्तिं मन्यते । मुन्न प्राप्नोतीति । अपवादेन ह्रस्वेन बाधादिति भावः ।

सन्नियोग इति । 'अरुर्द्विष'दिति सूत्रे 'मुम्चे'ति पाठ्यमित्यर्थः । यदि मुम्विधौ सप्तम्या प्रथमायाः षष्ठीकल्पनं तर्हीहापि स्यादत आह—इह सूत्रे इति । उत्तरसूत्रे खितीति । तत्रानुवृत्तिसामर्थ्यादयमर्थः—'पूर्वसूत्रेण

---

२—'नैषोऽस्ति प्रतिषेधः' पा० । † ६ । ३ । ३७ वा० १ ।
‡ अरुर्द्विषदजन्तस्य मुम् ६ । ३ । ६७ ।

गालवस्य' [ ६१ ] इति । तर्द्धि प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः । 'खिती'त्येषा सप्तमी 'ह्रस्व' इति प्रथमायाः षष्ठीं प्रकल्पयिष्यति 'तस्मिन्निति निर्दिष्टे पूर्वस्य' [ १ । १ । ६६ ] इति ।

अथवा खिति ह्रस्वो भवतीत्युच्यते । खित्यनन्तरो ह्रस्वभावी नास्तीति कृत्वा भूतपूर्वगतिर्विज्ञास्यते—'अजन्तं यद्भूतपूर्व'मिति ।

अथवा कार्यकालं संज्ञापरिभाषं यत्र कार्यं तत्र द्रष्टव्यम् । खिति ह्रस्वो भवतीत्युपस्थितमिदं भवत्यच इति§ । तत्र वचनादनजन्तस्यापि भविष्यति ।

इहापि तर्हि वचनात्प्राप्नोति—वाङ्मन्य इति । नैतदस्ति । इक इति* वर्तते । एवमपि खट्वंमन्यः अत्र न प्राप्नोति । नैष दोषः । आब्ग्रहणमपि प्रकृतमनुवर्तते । क्व प्रकृतम् ? 'ङ्यापोः संज्ञाछन्दसोर्बहुलम्' [ ६३ ] इति । एवमपि कीलालपंमन्यः शुभंयंमन्यः अत्र न प्राप्नोति । तस्मात् पूर्वोक्तावेव परिहारौ ॥ ६६ ॥

प्र०—स्तनन्धयादिषु च पर्जन्यवल्लक्षणप्रवृत्त्या कृते ह्रस्वे ह्रस्वान्तस्य मुमागम इति ह्रस्वमुमागमयोर्निमित्तनिमित्तिभावादुत्सर्गापवादभावाभावः । अथवेति । पर्जन्यवल्लक्षणप्रवृत्त्या ह्रस्वस्यापि ह्रस्वेन भाव्यमित्येकविषयत्वाद्ध्रस्वमुमागमयोरुत्सर्गापवादभावाभावाद्विरोधाभावाच्च मुमि कृते भूतपूर्वाजन्तत्वाश्रयेण ह्रस्वः प्रवर्तते । तत्र वचनादिति । पूर्वपदेनाज्विशेष्यते,खितीत्यनेन च । तत्र 'येन नाव्यवधान'मिति न्यायेन मुमि कृते एकहल्व्यवहितस्याचो ह्रस्वप्रवृत्तिः ॥ ६६ ॥

उ०—यो ह्रस्वो विहितस्तदन्तस्य मु'मिति । नन्वेवं स्तनन्धयादिषु दोषोऽत आह—तत्र कालमित्यादि । उत्सर्गापवादभावाभाव इति । बाधकत्वाभाव इति यावत् । ननु भूतपूर्वगत्याश्रयणेऽपि स्तनन्धयादिषु सावकाशमुमः कालिंमन्यादौ ह्रस्वेन बाधः स्यादत आह—पर्जन्यवदिति । 'एकविषयत्वा'दित्यनेन द्वयोर्निरवकाशत्वरूप उत्सर्गापवादभावाभावे हेतुरुक्तः । विरोधाच्चेति पाठः । अनेन प्रथमं मुमः प्रवृत्तौ निमित्तस्य विप्रतिषेधसूत्रस्य प्रवृत्तिबीजं दर्शितम् । मुमि ह्रस्वाप्रवृत्तेर्विरोधः । विरोधाभावाच्चेति पाठे तदुक्तिफलं चिन्त्यम् ॥ ६६ ॥

§ अचश्च १ । २ । २८ ।

१—क्वचिन्न । * इको ह्रस्वोऽङ्यो गालवस्य ६ । ३ । ६१ ।

## इच एकाचोऽम्प्रत्ययवच्च ॥ ६ । ३ । ६८ ॥

अमः प्रत्ययवदनुदेशे किं प्रयोजनम् ?

**अमः प्रत्ययवदनुदेश प्रयोजनमात्वपूर्वसवर्णगुणेयङुवङादेशाः ॥ १ ॥**

अमः प्रत्ययवदनुदेश आत्वपूर्वसवर्णगुणेयङुवङादेशाः† प्रयोजनम् । आत्वं प्रयोजनम्—गांमन्यः । पूर्वसवर्णः प्रयोजनम्—स्त्रींमन्यः‡ । गुणः प्रयोजनम्—नरंमन्यः । इयङुवङौ प्रयोजनम्—श्रियंमन्यः भ्रुवंमन्यः ।

**अमः प्रत्ययवदनुदेश आत्वपूर्वसवर्णाप्रसिद्धिरप्रथमात्वात् ॥ २ ॥**

अमः प्रत्ययवदनुदेश आत्वपूर्वसवर्णयोरप्रसिद्धिः । किं कारणम् ? अप्रथमात्वात् । प्रथमयोरित्युच्यते न चात्र प्रथमां पश्यामः । किं च भो आत्वं प्रथमयोरित्युच्यते ? न खलु प्रथमयोरित्युच्यते प्रथमयोरिति तु विज्ञायते । कथम् ? अम्शसोरित्युच्यते§ त एवं विज्ञास्यामः शस्सहचरितो योऽम्शब्दः । कश्च शस्सहचरितः ? प्रथमैव ॥ ननु च प्रत्ययवदनुदेशाद्भविष्यति । न सिध्यति । किं कारणम् ?

**सामान्यातिदेशे हि[1] विशेषानतिदेशः ॥ ३ ॥**

सामान्ये ह्यतिदिश्यमाने विशेषोऽनतिदिष्टो भवति । तद्यथा—'ब्राह्मणवदस्मिन्क्षत्रिये वर्तितव्य'मिति सामान्यं यद्ब्राह्मणकार्यं तत्क्षत्रियेऽतिदिश्यते, यद्विशिष्टं माठरे कौण्डिन्ये वा न तदतिदिश्यते । एवमिहापि सामान्यं यत्प्रत्ययकार्यं तदति-

---

प्र०—इच । शसा सहचरित इति । साहचर्यं विशेषस्मृतिहेतुर्भवति, यथा रामलक्ष्मणाविति, तथा 'औतोऽम्शसो'रित्यत्र शस्सहचरितस्यामो ग्रहणादन्यस्य ग्रहणाभावः ॥ सामान्यातिदेश इति । सामान्यस्य शब्दार्थत्वाद्विशेषाणां त्वशब्दार्थत्वात्सामान्यशब्दोपादानेनातिदेशः क्रियमाणः सामान्यनिबन्धनमेव कार्यं प्रापयति न तु विशेषनिबन्धनम् । विशेषशब्दाश्रयेण त्वतिदेशे क्रियमाणे तस्मिन्विशेषे यत्कार्यं सामान्यनिबन्धनं विशेषनिबन्धनं च तत्सर्वमतिदिश्यते । आत्वपूर्व-

---

उ०—इच एका । भाष्ये-अम्शब्दः प्रथमैवेति । प्रथमापदं द्वितीयालाक्षणिकं बोध्यम् ॥ ननु सामान्ये विशेषाणामन्तर्भावात्कथं तदतिदेशे विशेषानतिदेशोऽत आह—सामान्यस्येति । ततश्चेयङाद्येव स्यान्न त्वात्वादिकमित्यर्थः । नन्वेवं तुल्यन्यायाद्विशेषातिदेशेऽपि सामान्यकार्यानापत्तिरिति अम्प्रत्ययवदित्युक्त्यापि नेष्टसिद्धिरत आह-विशेषशब्देति । व्याप्योपस्थितौ व्यापकस्य नियमेनोपस्थितेरिति भावः । गुणस्यापीति ।

---

† औतोऽम्शसोः, अमि पूर्वः ६ । १ । ६३; १०७; ऋतो ङिसर्वनामस्थानयोः ७ । ३ । ११०; अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ६ । ४ । ७७ । ‡ वाम्शसोः ६ । ४ । ८० ।
§ औतोऽम्शसोः ६ । १ । ६३; वाम्शसोः ६ । ४ । ८० । १-क्वचिन्न ।

दिश्यते यद्विशिष्टं द्वितीयैकवचने भवति 'प्रथमयो'रिति न तदतिदिश्यते ।

**सिद्धं तु द्वितीयैकवचनवद्वचनात् ॥ ४ ॥**

सिद्धमेतत् । कथम् ? [ "द्वितीयैकवचनवद्वचनात्' । ] द्वितीयैकवचनवद्भवतीति वक्तव्यम् ।

**एकशेषनिर्देशाद्वा ॥ ५ ॥**

अथवैकशेषनिर्देशोऽयम् । अम् च अम् च अम् । इच एकाचोऽम् भवति, अम्प्रत्ययवच्चास्मिन् कार्यं भवतीति ।

अथेह कथं भवितव्यम्—श्रियमात्मानं मन्यते ब्राह्मणकुलम् । श्रियंमन्यं [ ब्राह्मणकुलम् ] आहोस्विच्छ्रिमन्यमिति ? श्रियंमन्यमिति भवितव्यम् । 'स्वमोर्नपुंसकात्' [ ७ । १ । २३ ] इति लुक्कस्मान्न भवति ? नाप्राप्ते लुक्यमारभ्यते, स

प्र०—सवर्णवद्गुणस्याप्यसिद्धिर्वक्तव्या ।

एकशेषनिर्देशाद्वेति । यद्यपि सहविवक्षायामेकशेषोऽत्र च तस्या असंभवोऽमागमस्य विधेयत्वादपरस्यामः प्रत्ययविशेषणत्वात्, तथापि जातिपक्षाश्रयेण वृत्ताद्यर्थः प्रत्याख्यात एकशेषः सहविवक्षाया अभावेऽपि संज्ञापरिभाषवल्लक्षणाङ्गं विज्ञायते । अथेति । अत्र विषये श्रीशब्दो ब्राह्मणकुले स्वलिङ्गपरित्यागेन वर्तते, यथा प्रष्ठादयः पुंयोगात् स्त्रियां वर्तमानाः स्वलिङ्गमपहाय स्त्रीलिङ्गमुपाददते । नाप्राप्ते लुकीति । अमागमो'ऽम्प्रत्ययव'दित्यतिदेशात्

उ०—'नरंमन्य' इत्यादौ । तस्यापि सर्वनामस्थाननिमित्तत्वेन विशेषकार्यत्वात् । एवं च भाष्यमुपलक्षणमिति भावः ।

ननु यथा गङ्गादयस्तीरे वर्तमाना अपि स्वलिङ्गं न त्यजन्ति एवं श्रीप्रभृतयो ब्राह्मणकुले वर्तमानाः स्त्रीत्वमेवोपाददत इति कथं लुक्प्राप्तिरत आह—अत्र विषये इति । वृत्तिविषये, प्रातिपदिकस्यैव श्रीत्वस्य कुले वृत्त्या स्वलिङ्गपरित्यागः, श्रीत्वारोपश्चात्र । यत्र तु स्वलिङ्गप्रयुक्तकार्योत्तरं लक्षणयान्यत्र वृत्तिस्तत्रैव स्वलिङ्गात्याग इति भावः । तत्र दृष्टान्तमाह—यथा प्रष्ठादय इति । स्वलिङ्गमिति शक्यार्थगतस्ववाच्यलिङ्गमित्यर्थः । ननु लुक्यपि प्रत्ययलक्षणेन गुणाद्यर्थमम्विधानं स्यात्, 'न लुमते'त्यस्य च विधानसामर्थ्यादनित्यत्वाच्च न प्रवृत्तिरत आह—अमागम इति । अम्प्रत्ययो हि लुप्तः सन् न गुणादिनिमित्तम्, एवमतिदेशेनायमपि तन्निमित्तं न स्यात् । एवं च विधानमेव व्यर्थं स्यादतो लुक् न प्रतिपद्यत इत्यर्थः । आत्मविनाशं वर्जयित्वेत्यस्य तदभावे इत्यर्थः । प्रतिलक्ष्यं लक्षणभेदादेतद्विषयकामागमविधानसामर्थ्यान्नपुंसकलुकोऽपि बाध इत्याशयः । नन्वस्यामः इजन्तस्योत्तरपदपरत्वसंपत्तये समासप्रातिपदिकसंज्ञोत्तरं प्रवृत्त्या प्रातिपदिकावयवत्वाभावात्कथमत्र 'सुपो धा'त्वित्यस्य प्राप्तिः, अत एवेत्थंभूतलक्षणे इति सूत्रे 'कमण्डलुपाणिमित्यादिसमासावयवाल्लक्षणवाचकात्कमण्डलुशब्दात्तृतीया प्राप्नोति' इति भाष्यमुपादाय 'न च लुका सिद्धिस्तस्याः कृते

१—क्वाचित्कः पाठः ।

यथैव 'सुपो धातुप्रातिपदिकयोः' [ २ । ४ । ७१ ] इत्येतं बाधत एवं स्वमोर्नपुंसकादित्येतमपि 'लुकं बाधेत ।

न बाधते । किं कारणम् ? येन नाप्राप्ते तस्य बाधनं भवति, न चाप्राप्ते सुपो धातुप्रातिपदिकयोरित्येतस्मिन्नेतदारभ्यते, स्वमोर्नपुंसकादित्येतस्मिन् पुनः प्राप्ते चाप्राप्ते च । अथवा 'मध्येऽपवादाः पूर्वान् विधीन् बाधन्त' इत्येवमयं 'सुपो धातुप्रातिपदिकयो'रित्येतं बाधते' स्वमोर्नपुंसकादित्येतं न बाधिष्यते ।

एवं तर्ह्यसिद्धं बहिरङ्गमन्तरङ्ग इत्यसिद्धत्वाद्बहिरङ्गलक्षणस्यामोऽन्तरङ्गलक्षणो लुग् न भविष्यति ।

नैषा परिभाषेहोत्तरपदाधिकारे शक्या विज्ञातुम् । इह हि दोषः स्यात्—द्विषन्तपः परन्तपः* । संयोगान्तलोपो† न स्यात् । तस्माच्छ्रिमन्यमित्येव[2] भवितव्यम् ॥६८॥

प्र०—कार्याण्यात्मविनाशं वर्जयित्वा प्रतिपद्यते । विधानसामर्थ्याद्धि लुकं न प्रतिपद्यते । यथा 'परिधिर्यूपो भवती'ति यूपकार्याणि तक्षणं विहाय परिधौ क्रियन्ते, 'अतष्टाः परिधयो भवन्ती'ति वचनात्तक्षणे परिधित्वहानिप्रसङ्गात् ॥ द्विषन्तप इति । संयोगान्तलोपो न स्यादिति केचिदाहुः । एतत्तु द्वयोरेकस्य वा तकारस्य श्रुतौ विशेषानवधारणादन्येऽसाधु मन्यमाना अनुस्वाराप्राप्तिलक्षणं दोषमाहुः । एवं च 'परन्तप' इत्यपि समर्थितं भवति ॥ ६८ ॥

उ०—समासे उत्पादेन समासप्रातिपदिकानवयवत्वात्तदप्राप्ते'रिति कैयटेनोक्तमिति चेन्न । 'प्रातिपदिकयोरित्येवं बाधते' इत्यस्य 'पश्चादुत्पन्नस्य तदनवयवत्वबोधनद्वारे'ति शेषपूरणेनादोषात् । इत्येतमपीत्यस्य 'तत्रार्थवत एवाप्रत्ययस्य ग्रहणमित्यर्थबोधनद्वारे'ति शेषः । सिद्धान्तस्य तु येन नाप्राप्तिन्यायेन मध्येऽपवादन्यायेन च सुपो धात्वित्यस्याप्रवृत्तिनिमित्तार्थज्ञापकतेत्याशय इति कैयटानुसारिणः । एतद्भाष्यविरोधात्तस्य कैयटस्य तत्र चिन्त्यतोक्तेत्यपरे ।

समर्थितं भवतीति । अनेनान्त्यपक्षस्यैव युक्तत्वं दर्शितम् । एवञ्च भाष्ये 'संयोगान्तलोपो न स्या'दिति क्वाचित्कोऽपपाठ इति बोध्यम् । एतत्सर्वं कार्यकालपक्षे बोध्यम् । परे तु 'अथेह कथं भवितव्य'मिति पूर्वपक्षे सिद्धान्त्याह—श्रियंमन्यमिति भवितव्यमिति । पूर्वपक्ष्याह—स्वमोरिति लुक्समान्नेति । सिद्धान्त्याह—नाप्रासे इत्यादि स्वमोरिति लुकमपि बाधेतेत्यन्तम् । बाध्यसामान्यचिन्तयेति भावः । पूर्वपक्षी बाध्यविशेषचिन्तामाश्रित्याह—न बाधते किं कारणमित्यादि । नपुंसकादित्येतं न बाधत इति । बाध्यविशेषचिन्तायामप्याह सिद्धान्ती—एवं तर्ह्यसिद्धमिति । पूर्वपक्ष्याह—नैषेति' 'इत्येव भवितव्य'मित्यन्तम् । कार्यकालपक्षेऽपिऽत्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषाप्रवृत्तेर्विसर्जनीयसूत्रे भाष्ये वार्तिकखण्डकसिद्धान्तिनोक्तत्वाद्यथोद्देशपक्षेण साधयितुं शक्यत्वाचेदं प्रयोजनं शिथिलमित्यत्र तदप्रवृत्तौ मानाभावाच्च 'श्रियंमन्य' इत्येव रूपमित्याहुः ॥ ६८ ॥

१—क्वचिन्न । * अरुर्द्विषदजन्तस्य मुम् ६ । ३ । ६७ ।
† संयोगान्तस्य लोपः ८ । २ । २३ । २—'मिति भवितव्यम्' पा० ।

## कारे सत्यागदस्य ॥ ६ । ३ । ७० ॥

### अस्तुसत्यागदस्य कारे ॥ १ ॥

अस्तुसत्यागदस्य कार उपसङ्ख्यानं कर्तव्यम् । अस्तुङ्कारः सत्यङ्कारः अगदङ्कारः ।

### भक्षस्य च्छन्दसि ॥ २ ॥

भक्षस्य च्छन्दस्युपसङ्ख्यानं कर्तव्यम् । तस्य ते भक्षङ्कारस्य । छन्दसीति किमर्थम् ? भक्षकारस्य तन्मतमिति ।

### धेनोर्भव्यायाम् ॥ ३ ॥

धेनोर्भव्यायामुपसङ्ख्यानं कर्तव्यम् । धेनुम्भव्या ।

### लोकस्य पृणे ॥ ४ ॥

लोकस्य पृण उपसङ्ख्यानं कर्तव्यम् । लोकंपृणस्य [1]धन्विनः ।

### इत्येऽनभ्याशस्य ॥ ५ ॥

इत्येऽनभ्याशस्योपसङ्ख्यानं कर्तव्यम् । अनभ्याशमित्यः[2] ।

प्र०—कारे । अस्तुङ्कार इति । अभ्युपगमकरणमुच्यते । सत्यङ्कारः शपथकरणम् । अशपथेऽपि डाचं परत्वाद्बाधित्वा कारशब्दे मुम्भवति । अगदङ्कारो—विषप्रतिपक्षद्रव्यकरणम् ॥ भक्षंकारस्येति । यागशेषद्रव्यभक्षणस्य कर्तुरित्यर्थः । धेनुम्भव्याशब्देन भविष्यन्ती धेनुरुच्यते । 'भव्यगेये'ति कर्तरि कृत्यो धेनुर्भव्येति विशेषणसमासः ॥ लोकंपृणस्येति । पृणतिः पूरणार्थः । लोकस्य पूरकस्येत्यर्थः । इत्य इति । अनभ्याशं दूरमित्यमस्येति समासः । दूरात्परिहर्तव्य

उ०—कारे सत्यागदस्य । अस्तु इति निपातोऽभ्युपगमे । तस्य भावघञन्तकारशब्देन समासमाश्रित्याह—अभ्युपगमकरणमिति । समयः—शपथः । डाचं—'सत्यादशपथे' इति प्राप्तम् । इदं चिन्त्यम् । अथ च्व्यन्ते उपपदे अणा भवितव्यमुत ने'ति 'तत्रोपपद'मितिसूत्रस्थभाष्यप्रामाण्येन च्व्विवदेवाणुत्पत्तेः पूर्वं डाचः प्राप्तेः, घञन्तेऽपि समासप्रवृत्तिकाल एव डाचः प्रवृत्तिरिति । प्रतिपक्षः—विरोधी । भक्षशब्देन—विशिष्टं भक्षमुच्यते इत्याह—यागशेषेति । भविष्यन्ती धेनुरिति । कालसामान्यविहितकृत्यस्यापि शब्दशक्तिस्वभावाद्भविष्यति काले वृत्तिरित्यर्थः । विशेषणसमास इति । अत एव वचनाद्विशेषणस्य परनिपातः । इत्यं—गन्तव्यम् । एतिस्तुशास्विति क्यप् । तुक् ।

१—क्वचिन्न ।　　२—'मित्यम्' पा० ।

आष्ट्राग्न्योरिन्धे ॥ ६ ॥

आष्ट्राग्न्योरिन्ध उपसङ्ख्यानं कर्तव्यम् । आष्ट्रमिन्धः अग्निमिन्धः ।

गिलेऽगिलस्य ॥ ७ ॥

गिलेऽगिलस्योपसङ्ख्यानं कर्तव्यम् । तिमिङ्गिलः । अगिलस्येति किमर्थम् ? गिलगिलः ।

गिलगिले चेति वक्तव्यम् । तिमिङ्गिलगिलः ।

उष्णभद्रयोः करणे ॥ ८ ॥

उष्णभद्रयोः करण उपसङ्ख्यानं कर्तव्यम् । उष्णङ्करणम् भद्रङ्करणम् ।

सूतोग्रराजभोजकुलमेरुभ्यो दुहितुः पुत्रड्वा ॥ ९ ॥

सूतोग्रराजभोजकुलमेरुभ्यो दुहितुः पुत्रड्वा भवतीति वक्तव्यम् । सूतपुत्री* सूतदुहिता । उग्रपुत्री उग्रदुहिता । राजपुत्री राजदुहिता । भोजपुत्री भोजदुहिता । कुलपुत्री कुलदुहिता । मेरुपुत्री मेरुदुहिता ॥ ७० ॥

रात्रेः कृति विभाषा ॥ ६ । ३ । ७२ ॥

किमियं प्राप्ते विभाषाहोस्विदप्राप्ते । कथं च प्राप्ते कथं वाप्राप्ते ? [1]खितीति† वा नित्ये प्राप्तेऽन्यत्र वाप्राप्ते ।

प्र०—इत्यर्थः ॥ तिमिंगिलगिल इति । तिमेर्गिलगिल इति समासः । तिमिंगिलं गिलतीति व्युत्पत्तौ नार्थ उपसङ्ख्यानेन ॥ ७० ॥

उ०—दशयोजनविस्तारो मीनविशेषस्तिमिः । नार्थ इति । भाष्यवार्तिकप्रामाण्यादत्रार्थेऽस्यासाधुत्वमाहुः ॥ भाष्ये—सूतोग्रराजेति । न चेदं शार्ङ्गरवादिगणे पुत्रशब्दपाठाद्व्यर्थम् । स च 'प्रत्ययस्था'दिति सूत्रस्थ'सूतकापुत्रिके'ति वार्तिकादावश्यक इति वाच्यम् । स्वरे भेदात् । ङीनन्तेन तत्पुरुषे सूतादिपुंशब्देभ्यः परत्वे 'पुत्रः पुंभ्य' इत्यनेन लिङ्गविशिष्टपरिभाषया पुकारोकारोदात्तत्वम् । पुत्रडादेशे तु न तत्प्रवृत्तिः, सानुबन्धकत्वात् । अतस्तत्रोदात्तनिवृत्तिस्वरेणान्तोदात्तत्वम् । कुलशब्दान्तबहुव्रीहौ पुंस्त्वे तत्पूर्वकेऽपि स्वरे विशेष इति दिक् ॥ ७० ॥

रात्रेः कृति विभाषा । ननु खितीति निवृत्तावपि प्राप्ते परत्वाद्विभाषया भाव्यमिति उभयत्र विभाषो-

* टिड्ढाणञ्.........क्वरपः ४ । १ । १५ । [1]—'यदि खितीत्यनुवर्तते ततो नित्यं प्राप्ते । अथ नानुवर्तते तदाप्राप्ते' पा० । † खित्यनव्ययस्य; अरुर्द्विषदजन्तस्य मुम् ६ । ३ । ६६; ६७ ।

## रात्रेरप्राप्ते ॥ १ ॥

रात्रेरप्राप्ते विभाषा । प्राप्ते नित्यो विधिः—रात्रिंमन्यः । अप्राप्ते विभाषा—रात्र्यटः रात्रिमटः ॥ ७२ ॥

## नलोपो नञः ॥ ६ । ३ । ७३ ॥

किमर्थं नञः सानुबन्धकस्य ग्रहणं क्रियते न नस्येत्येवोच्येत । नस्येतीयत्युच्यमाने कर्णपुत्रः वर्णपुत्र[1] इत्यत्रापि प्रसज्येत । नैष दोषः । अर्थवद्ग्रहणे नानर्थकस्येत्येवमेतस्य न भविष्यति ॥ एवमपि प्रश्नपुत्रः विश्नपुत्र इत्यत्रापि प्राप्नोति* । नैष दोषः । अननुबन्धकग्रहणे न सानुबन्धकस्येत्येवमेतस्य न भविष्यति ॥ एवमपि वामनपुत्र पामनपुत्र इत्यत्रापि प्राप्नोति† । तस्मात्सानुबन्धकस्य ग्रहणं कर्तव्यम् ।

### नञो नलोपेऽवक्षेपे तिङ्युपसङ्ख्यानम् ॥ १ ॥

नञो नलोपेऽवक्षेपे तिङ्युपसङ्ख्यानं कर्तव्यम् । अपचसि वै त्वं जाल्म । अकरोषि वै त्वं जाल्म ॥ ७३ ॥

---

प्र०—रात्रेः । प्राप्ते नित्य इति । पूर्वविप्रतिषेधेनेति भावः ॥ ७२ ॥

न लोपो । किमर्थमिति । चादिष्वननुबन्धक एव पठ्यतां स एव चेहानुक्रियतामिति भावः । अर्थवद्ग्रहण इति । उणादीनामव्युत्पन्नत्वान्नस्यानर्थक्यम् । अव्युत्पत्तिपक्षाश्रयणे च नकारोऽपि न भवति, किं तर्हि ? णकारः । व्युत्पत्तिपक्षे हि णत्वस्य पूर्वत्रासिद्धत्वान्नकारो भवति । तस्मादिति । अथ क्रियमाणेऽपि सानुबन्धकग्रहणे 'स्त्रैणपुत्रः' इत्यत्र कस्मान्न भवति । प्रत्ययञित्त्वस्य वृद्धिस्वरयोश्चरितार्थत्वान्निपातञित्त्वस्य त्वनन्यार्थत्वात् । अवक्षेपे तिङीति । अवक्षेपो निन्दा ॥ ७३ ॥

---

उ०—चितेत्यत आह—पूर्वविप्रतिषेधेनेति ॥ ७२ ॥

नलोपो । नन्विह ञकाराभावे चादिषु सानुबन्धकस्य पाठो व्यर्थोऽत आह—चादिष्विति । नन्वनयोरपि क्नुप्रकृतिकनक्प्रत्ययान्तत्वात्कथं नस्यानर्थकत्वमत आह—उणादीनामिति । आनर्थक्यमुपलक्षणमित्याह—नकारोऽपि नेति । अनन्यार्थत्वादिति । एवञ्चानन्यार्थञित्वे चरितार्थं शास्त्रमन्यत्र न प्रवर्तत इत्यर्थः । इदं चिन्त्यं, बीजाभावात् । तस्मात्स्त्रैणपुत्रादीनामनभिधानमिति भाष्याशयः । एतेन 'नैकधे'त्यादौ निषेधार्थकनशब्द इति परास्तम् । एतद्भाष्यविरोधेन तस्य खपुष्पायमाणत्वात् । अन्यथा स एव प्रत्युदाह्रियेत भाष्ये इति दिक् ॥ ७३ ॥

---

१—'पर्णपुत्र' पा० ।

* यजयाचयतविच्छप्रच्छरक्षो नङ् ३ । ३ । ९० ।

† लोमादिपामादिपिच्छादिभ्यः शनेलचः ५ । २ । १०० ।

## तस्मान्नुडचि ॥ ६ । ३ । ७४ ॥

किमर्थं तस्मादित्युच्यते न नुडचीत्येवोच्येत ? नुडचीतीयत्युच्यमाने नञ एव नुट्प्रसज्येत ॥ एवं तर्हि पूर्वान्तः करिष्यते । तत्रायमप्यर्थस्तदोः सः सावनन्त्ययोः [ ७ । २ । १०६ ] इति तदोर्ग्रहणं न कर्तव्यं भवति । तत्र हि तवर्गानिर्देश एतत्प्रयोजनमिह मा भूत् अनेषः करोतीति । यावता पूर्वान्तः सोऽप्यदोषो भवति ।

नैवं शक्यम् । [ इह हि ] अनुष्ण इति 'नलोपः प्रातिपदिकान्तस्य' [ ८ । २ । ७ ] इति नलोपः प्रसज्येत । नुग्वचनान्न भविष्यति । ङमुट् तर्हि प्राप्नोति‡ । तस्मात्परादिः कर्तव्यः, परादौ च क्रियमाणे तस्मादिति वक्तव्यम् ॥ ७४ ॥

## एकादिश्चैकस्य चादुक् ॥ ६ । ३ । ७६ ॥

किमर्थमादुगुच्यते न अदुगेवोच्येत ? का रूपसिद्धिः एकान्नविंशतिः ऐकान्नशतम् । सवर्णदीर्घत्वेन§ सिद्धम् । न सिध्यति । 'अतो गुणे' [ ६ । १ । ९७ ] इति पररूपत्वं प्राप्नोति ॥ एवं तर्ह्यदुट्करिष्यते । अदुट्चाशक्यः कर्तुमानुनासिक्यं हि

प्र०—तस्मा । नञ एवेति । 'तस्मिन्निति निर्दिष्टे पूर्वस्ये'ति वचनात् । तस्मादिति तूच्यमाने पञ्चमीनिर्देशसामर्थ्या'त्तस्मादित्युत्तरस्ये'ति परिभाषोपस्थानादजादेरुत्तरस्य पदस्य नुड्भवति । सप्तमीनिर्देशोऽप्यागमसंबन्धे युज्यते । अवयवत्वादागमस्यावयविन आधारत्वात् । संबन्धविवक्षायां तु षष्ठी भवतीति । तवर्गानिर्देश इति । 'तदो'रित्यपनीय 'तो'रित्येवमनिर्देशे इत्यर्थः । अनेषः करोतीति । परादावपि नुटि बहिरङ्गत्वान्नस्यासिद्धत्वा'त्तोः सः सा'वित्यपि क्रियमाणे सत्वं न भविष्यतीति चिन्त्यमेतत् ॥ ७४ ॥

एकादि । तुल्यायामपि संहितायां प्रतिपत्तिलघवाय वृत्तिकारैरादुगाश्रितो भाष्यकारेण

उ०—तस्मान्नुडचि । ननु तस्मादित्यस्याभावेऽपि आगमिन आधारत्वेन निर्देशादजादेरेव नुड्भविष्यतीत्यत आह-तस्मिन्निति । ननु तत्करणेऽप्यनया परिभाषया नञ एव स्यादत आह-तस्मादिति त्विति । सप्तमीनिर्देशस्तु 'यस्मिन्विधि'रिति परिभाषाप्रवृत्त्या चरितार्थ इति भावः । नन्वागमविधौ कथमागमिनः सप्तमीनिर्देशोऽत आह—सप्तमीति । यद्यप्यवयवा अवयविन आधारा इति तान्त्रिकास्तथापि लौकिकानां 'वृक्षे शाखे'ति व्यवहारादेवमुक्तम् । वस्तुतः षष्ठ्यर्थे एषा सप्तमी सौत्री, 'यस्मिन्विधि'रिति परिभाषाप्रवृत्तिफलिकेति बोध्यम् । चिन्त्यमेतदिति । बहिर्भूतसुनिमित्तकत्वेनास्यैव बहिरङ्गत्वाच्चिन्त्यमेव चिन्त्यम् ॥ ७४ ॥

एकादिश्चै । ननु संहितया निर्देशस्य साम्यादादुगुच्यत इत्युपपन्नमत आह—तुल्यायामपीति ।

१—क्वचिन्न । ‡ ङमो ह्रस्वादचि ङमुण्नित्यम् ८ । ३ । ३२ ।
२—'एकान्नत्रिंशत्' पा० । § 'अकः सवर्णे दीर्घः ६ । १ । १०१ ।

न स्यात् । यद्धि तद्यरोऽनुनासिकेऽनुनासिको वा [ ८ । ४ । ४५ ] इति पदान्तस्येत्येवं तत् । किं पुनः कारणं पदान्तस्येत्येवं तत् । इह मा भूत्—बुध्नः ब्रध्नः बध्नाति [ गृभ्णाति ] ।। एवं तर्ह्यनुट्करिष्यते । अनुट् चाशक्यः कर्तुम् । विभाषयानुनासिक्यम् । तेनेदमेव रूपं स्यात् एकान्नविंशतिः, इदं न स्यादेकाङ्नविंशतिरिति ।

अस्तु तर्ह्यदुगेव । ननु चोक्तमतो गुण इति पररूपत्वं प्राप्नोतीति । नैष दोषः । अकारोच्चारणसामर्थ्यान्न भविष्यति ।। यदि तर्हि प्राप्नुवन्विधिरकारोच्चारणसामर्थ्याद्बाध्यते सवर्णदीर्घत्वमपि न प्राप्नोति । यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव नासौ बाध्यते । पररूपं च प्रत्यकारोच्चारणमनर्थकं, सवर्णदीर्घत्वस्य पुनर्निमित्तमेव ।। ७६ ।।

## सहस्य सः संज्ञायाम् ।। ६ । ३ । ७८ ।।

### सहस्य हलोपवचनम् ।। १ ।।

सहस्य हलोपो वक्तव्यः ।

### सादेशे हि स्वरे दोषः ।। २ ।।

सादेशे हि सति स्वरे दोषः स्यात् । आन्तर्यत उदात्तानुदात्तयोः स्थाने स्वरित आदेशः प्रसज्येत । संपुत्रः सभार्यः ।

स तर्हि लोपो वक्तव्यः ? न वक्तव्यः । आद्युदात्तनिपातनं करिष्यते स निपातनस्वरः प्रकृतिस्वरस्य बाधको भविष्यति ।। एवमप्युपदेशिवद्भावो वक्तव्यः । स

प्र०—तु न्यायाददुगेव स्थापितः । एवं तर्हीति । अदुटि क्रियमाणे 'एकस्ये'ति न वक्तव्यं, नञः प्रकृतत्वादागमित्वात् । अकारस्य च पदन्तत्वात्पररूपाप्रसङ्गः ।। ७६ ।।

सहस्य । 'निपाता आद्युदात्ता' इति सहशब्द आद्युदात्तः । प्रकृतिस्वरस्येति । आन्तर्यतः प्राप्तस्य स्वरितस्येत्यर्थः । एवमपीति । तेनैतदाद्युदात्तत्वं 'सपुत्र' इत्यादौ बहुव्रीहौ पूर्वपदप्रकृति-

उ०—एवञ्चादुमुच्येतेत्यस्य व्याख्यायेत इत्यर्थ इति भावः । प्रतिपत्तीति । 'यं विधि'मित्यादिन्यायानाश्रयणमेवात्र प्रतिपत्तिलाघवम् । ननु टित्त्वे एकशब्दस्यादिः स्यादिति रूपं न सिध्येदत आह—अदुटीति ।।७६।।

सहस्य सः । आन्तर्यत इति । प्रकृतिः स्थानी तन्निमित्तस्वर आन्तर्यतो य आदेशस्य प्राप्तस्तस्येति भाष्यार्थ इति भावः । ननु निपातनस्वरस्य समासस्वरेण बाधे क्व निपातस्वरश्रवणमत आह—तेनेति । पूर्वपदप्रकृतिस्वरविधौ । तद्विधाने सतीत्यर्थः । 'सेष्टि' 'सपशुबन्ध'मित्यव्ययीभावौ । यद्यपि 'पादस्य पदे'ति सूत्रे 'आद्युदात्तस्याद्युदात्त आदेशः प्राप्नोती'त्युक्तं, तथापि तत्रानेकाच्त्वात्तथावक्तुमौचित्येऽपि इहैकाच्त्वा-

१—क्वचिन्न । २—'प्रत्यकारोच्चारणमनर्थकं भवति स विधिर्बाध्यते' पा० ।

यथैव हि निपातनस्वरः प्रकृतिस्वरं बाधत एवं समासस्वरमपि बाधेत । सेष्टि सपशुबन्धम्* ॥ ७८ ॥

## ग्रन्थान्ताधिके च ॥ ६ । ३ । ७६ ॥

### ग्रन्थान्ते वचनानर्थक्यमव्ययीभावेन कृतत्वात् ॥ १ ॥

ग्रन्थान्ते वचनमनर्थकम् । किं कारणम् ? अव्ययीभावेन कृतत्वात् । 'अव्ययीभावे चाकाले' [ ६ । ३ । ८१ ] इत्येव सिद्धम्† ।

यस्तर्हि कालोत्तरपदो ग्रन्थान्तस्तदर्थमिदं वक्तव्यम् । सकाष्ठं ज्योतिषमधीते । सकलम् समुहूर्तम् ॥ ७६ ॥

## वोपसर्जनस्य ॥ ६ । ३ । ८२ ॥

### उपसर्जनस्य वावचने सर्वप्रसङ्गोऽविशेषात् ॥ १ ॥

उपसर्जनस्य वावचने सर्वप्रसङ्गः । सर्वस्योपसर्जनस्य सादेशः प्राप्नोति । अस्यापि प्राप्नोति—सहयुध्वा सहकृत्वा । किं कारणम् ? अविशेषात् । न हि कश्चिद्विशेष उपादीयत एवंजातीयकस्य [ सहशब्दस्योपसर्जनस्य ] सादेशो भवतीति । अनुपादीयमाने विशेषे सर्वप्रसङ्गः ।

प्र०—स्वरविधौ श्रूयते । अव्ययीभावे तु समासान्तोदात्तत्वमेव भवति ॥ ७८ ॥

ग्रन्थान्ता । यस्तर्हीति । बहुव्रीहौ परत्वाद्विकल्पेन भाव्यमित्यव्ययीभाव एवोदाहरणम् । सकाष्ठमिति । काष्ठादयः शब्दाः कालविशेषवाचिन उपचारात्तदर्थे ग्रन्थे वर्तन्ते । तत्रान्तवचनेऽव्ययीभावः ॥ ७९ ॥

वोपसर्जनस्य । नन्वेतदपीति । ननु बहुव्रीहौ यदुत्तरपदं तत्परः सहशब्दो न भवति

उ०—स्वरितः स्यादित्युक्तमिति बोध्यम् ॥ ७८ ॥

ग्रन्थान्ताधिके च । ननु 'सपशुबन्धो वेदोऽधीत' इत्यादि बहुव्रीहावपि ग्रन्थान्ते सहशब्दस्य प्रवृत्तिसंभवात्स किं नोदाहृतोऽत आह—बहुव्रीहाविति । काष्ठादय इति । अष्टादश निमेषाः काष्ठाः, तास्त्रिंशत्कलाः, त्रिंशत्कलाः क्षण इत्यादिः, तदर्थे ग्रन्थे—तत्प्रतिपादके ग्रन्थे ॥ ७६ ॥

वोपसर्जनस्य । भाष्ये—बहुव्रीहिनिर्देशः कर्तव्य इति । 'वोपसर्जनस्य बहुव्रीहा' वितिन्यासः कार्य इत्यर्थः । नन्विति । एवञ्च बहुव्रीहिग्रहणस्योत्तरपदविशेषणत्वेन सहयुध्वप्रियादौ दोषाभावे 'नन्वेतदपी'ति

* समासस्य ६ । १ । २२३ । † अव्ययं विभक्ति……साकल्यान्तवचनेषु २ । १ । ६ ।

१—'ग्रन्थस्तदर्थमिदं' पा० । २—इदं क्वचिन्न ।

## सिद्धं तु बहुव्रीहिनिर्देशात् ॥ २ ॥

सिद्धमेतत् । कथम् ? बहुव्रीहिनिर्देशात् । बहुव्रीहिनिर्देशः कर्तव्यः ।

एवमपि सहयुध्वप्रियः सहकृत्वप्रियः अत्र प्राप्नोति । बहुव्रीहौ यदुत्तरपदमित्येवं विज्ञास्यते । नन्वेतदपि बहुव्रीहावुत्तरपदम् । एवं तर्हि बहुव्रीहौ यदुपसर्जनमित्येवं विज्ञास्यते । [ नन्वेतदपि बहुव्रीहावुपसर्जनम् । एवं तर्हि नैवं विज्ञायते—बहुव्रीहौ यदुपसर्जनमिति । किं तर्हि ? ] बहुव्रीहौ च यदुपसर्जनं बहुव्रीहिं प्रति च यदुपसर्जनम् ।

स तर्हि बहुव्रीहिनिर्देशः कर्तव्यः ? न कर्तव्यः । इह कश्चित्प्रधानानामेव समासः, कश्चिदुपसर्जनानामेव कश्चित्प्रधानोपसर्जनानाम् । तद्य उपसर्जनानामेव समासस्तदुपसर्जनम् । [ तस्येदं ग्रहणम् । ]

अथवाकारो मत्वर्थीयः । तद्यथा—तुन्दः घाट इति ।

अथवा मतुब्लोपोऽत्र द्रष्टव्यः । तद्यथा—पुष्यका ऐषां त इमे पुष्यकाः । कालका ऐषां त इमे कालका इति ॥ ८२ ॥

प्र०—व्यवधानात् । युद्धकृत्वशब्दयोश्च बहुव्रीहावनुत्तरपदत्वात् । एवं तर्हि बहुव्रीहिग्रहणस्य कर्तव्यत्वेनास्थितत्वान्नैतद्विचारितम् ।

तद्य उपसर्जनानामिति । सहशब्दस्य तावदसत्त्ववाचित्वाद्द्वन्द्वाभावोऽन्यस्मिंस्तु समासे सहशब्द उपसर्जनमेवेत्युपसर्जनग्रहणसामर्थ्यात्सर्वोपसर्जनावयवः समास उपसर्जनशब्देन मत्वर्थीयाकारान्तेन वोच्यते ॥ ८२ ॥

उ०—भाष्यं न युक्तमिति भावः । युध्वकृत्वशब्दयोश्चोपपदसमासतत्पुरुषोत्तरपदत्वमिति तात्पर्यम् । बहुव्रीहौ घटकं यदुत्तरपदमित्यर्थं इति भाष्याशयमन्ये । भाष्ये—बहुव्रीहिं प्रति चेति । बहुव्रीह्यर्थान्यपदार्थे विशिष्टमुपसर्जनं न तु सहशब्द इत्यर्थः । बहुव्रीहिग्रहणसामर्थ्यात्तदर्थं प्रत्येव यदुपसर्जनमित्यर्थं इति भावः ।

सहशब्द उपसर्जनमेवेति । ननु 'सहपूर्वाह्ण'मित्यादौ सादृश्येऽव्ययीभावे सहशब्दस्य प्राधान्यमस्तीति नेदं युक्तमिति चेन्न । 'उपसर्जनस्थे'ति उत्तरपदाक्षिप्तसमासस्यावगवद्वारकं विशेषणं, व्याख्यानात् । तच्च सहशब्देन द्वन्द्वाभावात्सर्वस्यापि तद्घटितसमासस्यास्तीति सामर्थ्यादुपसर्जनसर्वावयवकस्य ग्रहणमित्याशयात् । भाष्ये—तदुपसर्जनस्येति । तदर्थमात्रोपसर्जनस्येत्यर्थः ।

उपसर्जनसर्वावयवक इत्यर्थं स्फुटं लब्धुमाह—भाष्ये—अथवाकार इत्यादिः । तद्व्याचष्टे—मत्वर्थीयेति । सर्वोपसर्जनकः समास उपसर्जनपदेन लक्षणया मत्वर्थीयाकारान्तेन वोच्यत इत्यन्वयः ।

भाष्ये—अथवा मतुब्लोप इति । सौत्रो मतुब्लोपः । अनेन मत्वर्थे लक्षणयासाधुत्वं बोधितम् । अत्रापि पक्षद्वये उपसर्जनसर्वावयवकं ग्रहणं मत्वर्थीयसामर्थ्याद्बोध्यम् ॥ ८२ ॥

१—क्वचिन्न । २—'ऐषां' पा० ।

## प्रकृत्याशिषि ॥ ६ । ३ । ८३ ॥

### प्रकृत्याशिष्यगवादिषु ॥ १ ॥

प्रकृत्याशिष्यगवादिष्विति वक्तव्यम् । इह मा भूत् । [ स्वस्ति भवते ] सगवे सवत्साय सहलायेति ॥ ८३ ॥

## चरणे ब्रह्मचारिणि ॥ ६ । ३ । ८६ ॥

चरणे[1] किं निपात्यते ?

### ब्रह्मण्युपपदे समानपूर्वे व्रते कर्मणि चरेर्णिनिर्व्रतलोपश्च ॥१॥

ब्रह्मण्युपपदे समानपूर्वे व्रते कर्मणि चरेर्णिनिः प्रत्ययो व्रतलोपश्च निपात्यते । समाने ब्रह्मणि व्रतं चरतीति सब्रह्मचारी ॥ ८६ ॥

प्र०—प्रकृत्या । 'अगोवत्सहले'ष्विति भाष्यवार्तिकदर्शनात्सूत्रे केनचित्प्रक्षिप्तम् ॥ ८३ ॥

चरणे । सब्रह्मचारिशब्देन चरणेन तुल्य उच्यते । अत एव चरणे सभावो विधीयते । तत्र ब्रह्मणो ग्रन्थत्वाच्चर्यमाणता न संभवतीति निपातनमाश्रयितव्यमिति मत्वा प्रश्नः—अत्रेति ।

ब्रह्मण्युपपद इति । अवयवनिपातनद्वारेण विशिष्टेऽर्थे समुदायस्यैव साधुत्वमन्वाख्येयमिति मत्वा समुदायमेव निपात्यत्वेनोपन्यस्यति । समाने साधारणे ब्रह्मणि वेदे यो व्रतं चरति स सब्रह्मचारीत्यर्थः । व्रतलोपश्चेति । गतार्थत्वादप्रयोग एव व्रतशब्दस्य लोपः । ब्रह्मशब्देन हि तादर्थ्याद्व्रतमुच्यते । ब्रह्मणश्च समानत्वात्समानो ब्रह्मचारी सब्रह्मचारीत्युच्यते ॥ ८६ ॥

उ०—प्रकृत्या । भाष्यवार्तिकेति । वार्तिकस्थादिशब्देन भाष्योदाहरणाद्वत्सहलयोरेव सङ्ग्रह इति भावः ॥ ८३ ॥

चरणे । ननु चरणेऽभिधेये ब्रह्मचारिण्युत्तरपदे समानस्य सभावविधानात् 'किं निपात्यते' इति प्रश्नासामञ्जस्यमाशङ्क्य ब्रह्मचारिशब्दविषयमेतच्चोद्यमित्याह—सब्रह्मचारिशब्देनेति । चरणशब्देन शाखाध्यायी उच्यते, तेन तुल्यत्वं तदध्येयतुल्याध्येयत्वेन । अयं चार्थो ब्रह्मचारिशब्दनिपातनाश्रयणं विना न लभ्यत इत्याह—तत्रेति । ग्रन्थत्वादिति । शब्दरूपत्वाच्चरतिकर्मत्वासंभव इत्यर्थः ।

नन्वेवं समुदायस्य निपात्यत्वेन निर्देशो न युक्तोऽवयवस्यैव तत्त्वादत आह—अवयवनिपातनेति । ब्रह्मणश्चेति । अवयवसमानत्वात्समुदायार्थस्य समानत्वम् । समानो ब्रह्मचारीति विग्रह इत्यर्थः । सूत्रे 'चरण'शब्दः शाखावाची । चरणे समानत्वेन गम्ये इत्यर्थ इति भावः । अयमेव चार्थो निपातनोक्तिद्वारा भगवतोक्त इति तात्पर्यम् ॥ ८६ ॥

---

१—क्वचिन्न । २—'अत्र किं' पा० ।

## दृग्दृशवतुषु ॥ ६ । ३ । ८६ ॥

### दृग्दृशवतुषु दृक्ष उपसङ्ख्यानम् ॥ १ ॥

दृग्दृशवतुषु दृक्ष उपसङ्ख्यानं कर्तव्यम् । सदृक्षासः प्रतिसदृक्षासः ॥ ८६ ॥

## समः समि ॥ ६ । ३ । ९३ ॥

## नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ॥ ६ । ३ । ११६ ॥

किमर्थमञ्चतिनह्यादिषु क्विब्ग्रहणं क्रियते । इह मा भूत्—समञ्चनम् उपनहनम् । नैतदस्ति प्रयोजनम् । उत्तरपद इति* वर्तते, न चान्तरेण क्विपमञ्चतिनह्यादय उत्तरपदानि भवन्ति, तत्रान्तरेण क्विब्ग्रहणं क्विबन्त एव भविष्यति । तदादिविधिना प्राप्नोति ॥ अत उत्तरं पठति—

### अञ्चतिनह्यादिषु क्विब्ग्रहणानर्थक्यं यस्मिन्विधिस्तदादावल्ग्रहणे ॥१॥

अञ्चतिनह्यादिषु क्विब्ग्रहणमनर्थकम् । किं कारणम् ? यस्मिन्विधिस्तदादावल्ग्रहणे । अल्ग्रहणेष्वेतद्भवति, न चेदमल्ग्रहणम् ।

प्र०—दृग्दृश । सदृक्षास इति । दृशेः क्सो वक्तव्यः । जस 'आज्जसेरसु'गित्यसुगागमः ॥८९॥

समः समि । विचारस्य समानत्वान्नह्यादिग्रहणं कृतम् । तदादिविधिनेति । 'अतः कृकमी'त्यादौ धातुग्रहणे दृष्टस्तदादिविधिरिति भावः ।

एवं तर्हीति । अनल्ग्रहणेऽपि धातुग्रहणे तदादिविधिर्भवतीति ज्ञाप्यते । स च तदन्तविधिवद्विशेषणविशेष्यभावसंनिपाते भवति । तत्रातः कृकमीत्यत्र समासानुवृत्त्या समासाच्चिप्रमुत्तरपदं करोतिना विशेष्यत इति भवति तदादिविधिः । सुड्विधौ तु विशेष्यासंनिधानात्तदादिविध्यभावेऽन्तरङ्गत्वं धातूपसर्गाश्रयत्वात्सुट उच्यते । अयस्कृदयस्कार इत्यपीति ।

उ०—समः समि । प्रदेशान्तरस्थ'नहिवृती'त्यनेनास्य विचारः कथमत आह—विचारस्येति । भाष्ये—न चान्तरेण क्विपमिति । क्विब्ग्रहणं क्विन्विचोरुपलक्षणम् । अत एव सूत्रे वप्रत्यय इति चरितार्थमिति केचित् । नन्वल्ग्रहणाभावात् कथं तदादिविधिरत आह—अतः कृकमीति ।

ज्ञाप्यत इति । एवञ्च 'समञ्चन'मित्यादि व्यावृत्तये क्विग्रहणमिति भावः । नन्वेवं सुड्विधावपि तदादिग्रहणापत्तौ प्रागुक्तं सुटोऽन्तरङ्गत्वं हीयेतेत्यत आह—स च तदन्तेति । विधिविधान विधिभाक्संनिपात इति । विधिः—विधेयम् । विधानशब्दः करणल्युडन्तो विशेषणपरः । विधिभाक्—विशेष्यमित्यर्थः ।

* अलुगुत्तरपदे ६ । ३ । १ । १—'ग्रहण एव भवति न चेदमल्ग्रहणम्' कीलहार्नपाठः ।

एवं तर्हि सिद्धे सति यत् [ अञ्चति नद्यादिषु ] क्विन्ग्रहणं करोति तज्ज्ञापयत्याचार्योऽन्यत्र धातुग्रहणे तदादिविधिर्भवतीति । किमेतस्य ज्ञापने प्रयोजनम् ? अतः कृकमीत्यत्र अयस्कृत् अयस्कार इत्यपि सिद्धं भवति† ॥ ६३ ॥

## विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये ॥ ६ । ३ । ९२ ॥

## सहस्य सध्रिः ॥ ६ । ३ । ९५ ॥

### अद्रिसध्र्योरन्तोदात्तवचनं कृत्स्वरनिवृत्त्यर्थम् ॥ १ ॥

अद्रिसध्र्योरन्तोदात्तत्वं वक्तव्यम् । किं प्रयोजनम् ? कृत्स्वरनिवृत्त्यर्थम् । कृत्स्वरो‡ मा भूत् । विष्वद्र्यङ् विष्वद्र्यञ्चौ विष्वद्र्यञ्चः । सध्र्यङ् सध्र्यञ्चौ सध्र्यञ्चः§ ।

### तत्र च्छन्दसि स्त्रियां प्रतिषेधः ॥ २ ॥

तत्र च्छन्दसि स्त्रियां प्रतिषेधो वक्तव्यः । विश्वाची घृताची । यदि च्छन्दसि स्त्रियां प्रतिषेध उच्यते कथं सा कद्रीची । एवं तर्हि च्छन्दसि स्त्रियां बहुलमिति वक्तव्यम् ॥ ६२ ॥ ६५ ॥

प्र०—उभयमपीत्यर्थः । अन्यथायस्कृदित्यत्रैव स्यात् ॥ ९३ ॥

विष्वग्देवयोश्च । विष्वद्र्यङिति । 'उदात्तस्वरितयो'रिति स्वरितोऽञ्चत्यकारो भवति ॥ ९२ ॥ ९५ ॥

उ०—ननु विनापि ज्ञापकेनायस्कृतः सिद्धेस्तदुपन्यासोऽयुक्तोऽत आह—अन्यथेति । दृष्टान्तार्थं तदुपादानमिति भावः ॥ ६३ ॥

विष्वग्देवयोश्च । ननु विष्वद्र्यङादौ यणोकारस्य निवृत्तेः स्वरश्रवणाभावात्किं निपातनेनेत्यत आह—उदात्तस्वरितयोरिति । अन्यथा कृत्स्वरेणोदात्त एव श्रूयेतेति भावः । 'सा[2] कद्रीची'त्यादावकारलोपे स्वस्यैव स्वरस्यावस्थानं बोध्यम् । 'समः सम्यञ्चतावप्रत्यये' 'विश्वग्देवयोश्च टेरद्रि' 'सहस्य सध्रि'रिति सूत्रपाठ इति एतद्भाष्यात्प्रतीयते ॥ ६२ ॥ ६५ ॥

१—क्वचिन्न । † अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य ८ । ३ । ४६ । ‡ गतिकारकोपपदात् कृत् ६ । २ । १३६ । § उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ८ । २ । ४ । २—'सा कद्रीची कं स्विदर्धं परागात् ( ऋ० १ । १६४ । १७ )

## द्व्यन्तरुपसर्गेभ्योऽप ईत् ॥ ६ । ३ । ९७ ॥

### समाप ईत्त्वप्रतिषेधः ॥ १ ॥

समाप ईत्त्वप्रतिषेधो वक्तव्यः । समापं नाम देवयजनम् ।

अपर आह—ईत्त्वमनवर्णादिति वक्तव्यम् । समीपम् अन्तरीपम् । इह मा भूत्—प्रापम् परापम् ॥ ९७ ॥

## ऊदनोर्देशे ॥ ६ । ३ । ९८ ॥

दीर्घोच्चारणं किमर्थं न उदनोर्देश इत्येवोच्येत ? का रूपसिद्धिः अनूपः । सवर्णदीर्घत्वेन* सिद्धम् । न सिध्यति । अवग्रहे-दोषः स्यात् ॥ ९८ ॥

## अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु ॥ ६ । ३ । ९९ ॥

अषष्ठ्यतृतीयास्थस्येत्युच्यते तत्रेदं न सिध्यति—अन्यस्येदमन्यदीयम् । अन्यस्य कारकमन्यत्कारकम् ॥ एवं तर्ह्यविशेषेणान्यस्य दुक्छकारकयोरित्युक्त्वा ततो वक्ष्याम्यषष्ठ्यतृतीयास्थस्याशीराशास्थास्थितोत्सुकोतिरागेष्विति ॥ ९९ ॥

## कोः कत्तत्पुरुषेऽचि ॥ ६ । ३ । १०१ ॥

### कद्भावे त्र्यावुपसङ्ख्यानम् ॥ १ ॥

कद्भावे त्र्यावुपसङ्ख्यानं कर्तव्यम् । [ कत्त्रयः । किमिदं कत्त्रय इति ? ] कुत्सितास्त्रयः कत्त्रयः । के वा त्रयः । न विभृयुः कत्त्रयः ॥ १०१ ॥

प्र०—ऊदनोर्देशे । अवग्रहे दोषः स्यादिति । 'न लक्षणेन पदकारा अनुवर्त्याः पदकारैर्नाम लक्षणमनुवर्त्यं यथालक्षणं पदं कर्तव्य'मिति प्रदेशान्तरोक्तेनैतद्विरुध्यते ॥ ९८ ॥

कोः कत्त । के वा त्रय इति । किंशब्दस्य क्षेपार्थस्य कद्भावः ॥ १०१ ॥

उ०—ऊदनोर्देशे । एतद्विरुध्यत इति । एवञ्च दीर्घोच्चारणं नात्यावश्यकम् । अत एवानूपे गोमानित्यादौ ऋग्वेदे पदपाठे नावगृह्णन्ति । यत्रावग्रहः क्रियते तत्रैतत्पदीयावग्रहस्य शास्त्रानुसारित्वबोधनायात्र दीर्घोच्चारणमिति एकदेश्युक्तिरियमिति भावः ॥ ९८ ॥

कोः कत्त । के वा त्रय इत्यत्र पूर्वस्माद्भेदमाह—किंशब्दस्येति । पूर्वत्र कोः, इदानीं किम इति भेदः, क्षेप एव 'न बिभृयु'रिति वाक्यशेषेण दर्शितो भाष्ये । भरणसामर्थ्याभावाच्च क्षेपः ॥ १०१ ॥

* अकः सवर्णे दीर्घः ६ । १ । १०१ ।     १—क्वचिन्न ।

## पृषोदरादीनि यथोपदिष्टम् ॥ ६ । ३ । १०६ ॥

पृषोदरादीनीत्युच्यते कानि पृषोदरादीनि ? पृषोदरप्रकाराणि । कानि पुनः पृषोदरप्रकाराणि ? येषु लोपागमवर्णविकाराः श्रूयन्ते न चोच्यन्ते ।

अथ यथेति किमिदम् ? प्रकारवचने थाल् [ ५ । ३ । २३ ] ।

अथ किमिदमुपदिष्टानीति ? उच्चारितानि । कुत एतत् ? दिशिरुच्चारणक्रियः । उच्चार्य हि वर्णानाह उपदिष्टा इमे वर्णा इति । कैः पुनरुपदिष्टाः ? शिष्टैः । के पुनः शिष्टाः ? वैयाकरणाः । कुत एतत् ? शास्त्रपूर्विका हि शिष्टिर्वैयाकरणाश्च शास्त्रज्ञाः । यदि तर्हि शास्त्रपूर्विका शिष्टिः शिष्टिपूर्वकं च शास्त्रं तदितरेतराश्रयं भवति । इतरेतराश्रयाणि च न प्रकल्पन्ते । एवं तर्हि निवासत आचारतश्च । स चाचार आर्यावर्त एव । कः पुनरार्यावर्तः ? प्रागदर्शनात्प्रत्यक्कालकवनाद्दक्षिणेन हिमवन्तमुत्तरेण पारि-

प्र०—पृषोदरादीनि । कानीति । किमादिशब्दः प्रकारेऽथ व्यवस्थायामिति संदेहात्प्रश्नः । पृषोदरप्रकाराणीति । प्रकार आदिशब्दः । व्यवस्थार्थे ह्यादिशब्दे यथोपदिष्टग्रहणमनर्थकं स्यात् प्रकारवचने थालिति । येन प्रकारेणोपदिष्टानि तेन साधूनि भवन्तीत्यर्थः । अथेति । उपदेशः शास्त्रेण भवति, स चैषां नास्ति, सद्भात्रे वा किं निपातनेनेति प्रश्नः । [२]प्रागादर्शादिति । आदर्शादयः—पर्वतविशेषाः । प्राचि देशे प्राक् । 'दिक्छब्देभ्य' इत्यस्ताते रुत्पन्नस्या'ञ्चेर्लु'गिति

प्र०—पृषोदरादीनि । व्यवस्थार्थत्वे वृत्तिकारादिपठितानामेव साधुत्वं स्यादिति तदपठितानामपि साधुत्वबोधकं यथोपदिष्टग्रहणमनर्थकं स्यादिति प्रकारे आदिशब्द इत्याह—प्रकार इति । 'उपदिष्ट'मिति जातावेकवचनं तदाह—उपदिष्टानीति । यच्छब्दस्य नित्यं तच्छब्दापेक्षत्वादाह—तेन साधूनीति । उपदेशः—प्रतिपादनम् । भाष्ये वैयाकरणाः—व्याकरणाध्येतारः । तेषामेव शिष्टत्वे हेतुप्रश्ने उत्तरम्–शास्त्रपूर्विका हि शिष्टिरिति । शिष्टपदप्रवृत्तिनिमित्तभूतशिष्टेः शासनस्य शास्त्रपूर्वकत्वात्—शास्त्रज्ञानपूर्वकत्वादित्यर्थः । शिष्टिपूर्वकं च शास्त्रमिति । शिष्टशासनमूलकं पृषोदरादिशास्त्रमित्यन्योन्याश्रय इत्यर्थः । तत्र शिष्टनिवास-

१—आसमुद्रात्तु वै पूर्वादासमुद्रात्तु पश्चिमात् । तयोरेवान्तरं गिर्योरार्यावर्तं विदुर्बुधाः ॥ ( मनु० २ । २२ )

२—भाष्यपुस्तकेषु सर्वत्र 'प्रागादर्शात्' इत्येव पाठ उपलभ्यते । विषयेऽस्मिन् २ । ४ । १० सूत्रभाष्ये टिप्पणी द्रष्टव्या ।

आर्यावर्तलक्षणमिदं भाष्यकारेण बोधायनधर्मसूत्रादुद्धृतम् ( १ प्र० । १ अ० । २खं० । १० सू० ) । "हिमवद्विन्ध्ययोर्मध्ये यत्प्राग्विनशनादपि । प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः" ॥ ( २ । २१ ) इति मनूक्तो मध्यदेश एव मध्यकाले बोधायनपतञ्जलिभ्यामार्यावर्तत्वेन गृहीतः । "प्राग्विनशनात्" इति मनुपाठः "प्रागदर्शनात्" इति भाष्यपाठं पुष्णाति । विनशनादर्शनशब्दौ समानार्थौ सरस्वत्यन्तर्धानदेशवाचकौ वेदितव्यौ ।

यात्रम् । एतस्मिन्नार्यनिवासे ये ब्राह्मणाः कुम्भीधान्या अलोलुपा अगृह्यमाणकारणाः किंचिदन्तरेण कस्याश्चिद्विद्यायाः पारगास्तत्रभवन्तः शिष्टाः ।

यदि तर्हि शिष्टाः शब्देषु प्रमाणं किमष्टाध्याय्या क्रियते ? शिष्टज्ञानार्थाष्टाध्यायी । कथं पुनरष्टाध्याय्या शिष्टाः शक्या विज्ञातुम् ? अष्टाध्यायीमधीयानोऽन्यं

प्र०—लुक् । अञ्चूत्तरपदलक्षणा पञ्चमी । दक्षिणेनेति । दक्षिणस्मिन्देश इत्येनबन्यतरस्यामित्येनप् । 'एनपा द्वितीये'ति द्वितीया । आचारमाह—कुम्भीधान्या इति । कुम्भ्यामेव येषां धान्यं ते कुम्भीधान्याः । दम्भार्थं कुम्भीधान्यत्वं स्यादित्याह—अलोलुपा इति । अगृह्यमाणकारणा इति । दृष्टकारणमन्तरेणैव सदाचारानुवर्त्तिन इत्यर्थः । किंचिदन्तरेणेति । विनैवाभियोगादिना

उ०—देशमाह—स चाचार इति । एवं च स एव शिष्टनिवासदेश इति भावः । कः पुनरार्यावर्त इति । किम्—

'आसमुद्रात्तु वै पूर्वादासमुद्राच्च पश्चिमात् ।
तयोरेवान्तरा गिर्योरार्यावर्तं प्रचक्षते ॥'

इति मनूक्तः, किं वा तद्व्याप्य इति प्रश्नः । मनुवाक्ये 'तयो'रित्यस्य हिमवद्विन्ध्ययोरित्यर्थः ।

'हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि ।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः ।'

इति पूर्वमुक्तेः । प्रागादर्शादिति । 'आदर्शः-कुरुक्षेत्रे पर्वतः । कालकवनं प्रयागः । पारियात्रो विन्ध्य एवेति मनूक्तमध्यदेश एवात्र भगवतोऽभिमत' इत्यन्ये । कुम्भ्यामेवेति । विशेषणसामर्थ्यादवधारणगर्भः समास इति भावः । दम्भः—सर्वेभ्यः स्वस्याधिक्यभावनम् । दृष्टं कारणं—लाभपूजादि । विहितबुध्या नित्यादिकर्मकर्तार इत्यर्थः । एवं सदाचारानुष्ठानकृतान्तःकरणशुध्याविद्यापगमा दृदिव्यज्ञानावाप्तिस्तेषामिति दर्शयितुं भाष्ये—किञ्चिदन्तरेणेति । तद्व्याचष्टे—विनाभियोगादिनेति । अभियोगः—गुरूपदेशः । आदिना—अभ्यासादिः । कस्याश्चिदित्यस्यार्थमाह—सर्वविद्येति । अन्ययानामनेकार्थत्वादिति भावः । तपोबलादेव शब्दतोऽर्थतश्च प्रतिभातसर्वविद्या इति तात्पर्यम् ।

१—'एतस्मिन्नार्यावर्ते निवासे' पा० ।
२—'धर्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः । ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः' ॥ ( मनु० १२ । १०६ )

शिष्टलक्षणं बौधायनस्मृतौ ( १ । १ । ५–६ ) वसिष्ठस्मृतौ ( ५ । ३६ ) न्यायभाष्ये ( २ । १ । ६८ ) चापि द्रष्टव्यम् ।

'शिष्टः पुनरकामात्मा ॥ ६ ॥ अगृह्यमाणकारणो धर्मः ॥ ७ ॥ ( वासिष्ठधर्मशास्त्रे १ अ० )
'रजस्तमोभ्यां निर्मुक्तास्तपोज्ञानबलेन ये । येषां त्रिकालममलं ज्ञानमव्याहतं सदा' ॥ १८ ॥
'आप्ताः शिष्टा विबुद्धास्ते तेषां वाक्यमसंशयम् । सत्यं वक्ष्यन्ति ते कस्मादसत्यं नीरजस्तमाः' ॥१९ ।
( चरकसंहितायां सूत्रस्थाने ११ अ० )

३—'शिष्टपरिज्ञानार्था' पा० ।

पश्यत्यनधीयानं येऽत्र विहिताः शब्दास्तान् प्रयुञ्जानम् । स पश्यति—नूनमस्य दैवानुग्रहः स्वभावो वा योऽयं न चाष्टाध्यायीमधीते ये चास्यां विहिताः शब्दास्तांश्च प्रयुङ्क्ते । [2]नूनमयमन्यानपि जानाति । एवमेषा शिष्टज्ञानार्थाष्टाध्यायी ।

## दिक्शब्देभ्यस्तीरस्य तारभावो वा ॥ १ ॥

दिक्शब्देभ्यस्तीरस्य तारभावो वा वक्तव्यः । दक्षिणतीरम् दक्षिणतारम् । [ [3]उत्तरतीरम् उत्तरतारम् । ]

## वाचो वादे डत्वं वलभावश्चोत्तरपदस्येञि ॥ २ ॥

वाचो वादे डत्वं वक्तव्यं वलभावश्चोत्तरपदस्येञि वक्तव्यः । वाग्वादस्यापत्यं वाड्वलिः ।

## षष उत्वं दतृदशसूत्तरपदादेः ष्टुत्वं च ॥ ३ ॥

षष उत्वं वक्तव्यमुत्तरपदादेः ष्टुत्वं च वक्तव्यम् । षोडन्* षोडश ।

प्र०—सर्वविद्यापारगाः । ते हि साधुत्वपरिज्ञाने प्रमाणम् । तदुक्तम्—

'आविर्भूतप्रकाशानामनुपप्लुतचेतसाम् ।
अतीतानागतज्ञानं प्रत्यक्षान्न विशिष्यते ॥
अतीन्द्रियानसंवेद्यान् पश्यन्त्यार्षेण चक्षुषा ।
ये भावान् वचनं तेषां नानुमानेन बाध्यते' ॥ इति ।

दक्षिणतीरमिति । विशेषणसमासः । षोडन्निति । षड् दन्ता अस्येति बहुव्रीहिः । 'वयसि दन्तस्य दतृ'ति दत्रादेशः । धासु वेति । उत्वं विकल्प्यते, तेन ष्टुत्वं नित्यमेव भवति ।

उ०—आविर्भूतेति । अविद्यापगमेन योगाभ्याससहकृतप्रत्यक्षेणाविर्भूतसर्वविषयज्ञानामित्यर्थः । तत्र कारणम्—अनुपप्लुतेति । विहितकर्मानुष्ठानाच्छुद्धान्तःकरणानामित्यर्थः । प्रत्यक्षात्—विद्यमानवस्तुविषयास्मदादिप्रत्यक्षादित्यर्थः । अतीन्द्रियान्—बाह्येन्द्रियाग्राह्यान् । असंवेद्यान् -अन्यैर्मनसाप्यनुपलभ्यमानान् । आर्षेण—योगाभ्याससहकृतदिव्यचक्षुषा । शिष्टवचनविरुद्धमनुमानं न प्रमाणमिति भावः । भाष्ये—नूनमयमन्यानपीति । अष्टाध्याय्यनध्ययनेऽपि तत्प्रतिपादितसाधुज्ञानेन दैवानुग्रहं शिष्टत्वं च निर्णीय यानन्यानपि प्रयुङ्क्ते तेऽध्यनेन तथैव साधुत्वेन ज्ञाता इति कल्पयन्ति तेषां चानेन सङ्ग्रह इति भावः ।

विशेषणसमास इति । तथैवार्थप्रतीतेरिति भावः । भाष्ये—वादेरिति । वाशब्द आदिर्यस्य तस्य चकारस्येत्यर्थः ॥ ननु 'धासु वे'त्यनेनैवोक्तं वेत्यर्थकेन सिद्धे 'उत्तरपदादे'रिति वचनं व्यर्थमित्यत आह—उत्वं विकल्प्यत इति । अत एव भाष्ये ष्टुत्ववचनं वाशब्दाघटितं पृथगेवोक्तम् । एवञ्चोत्वाभावपक्षे

१—'चात्र' पा० । २—'अयं नून' पा० । ३—क्वचिन्न ।

* वयसि दन्तस्य दतृ ५ । ४ । १४१

## धासु वा ॥ ४ ॥

धासु वेति वक्तव्यमुत्तरपदादेः ष्टुत्वं च वक्तव्यम् । षोढा । षड्ढा कुरु ।

अथ किमर्थं बहुवचननिर्देशः क्रियते न पुनर्धायामित्येवोच्येत ? नानाधिकरणवाची यो धाशब्दस्तस्य ग्रहणं यथा विज्ञायेत† । इह मा भूत्—षड् दधातीति षड्धेति ।

## दुरो दाशनाशदभध्येषु ॥ ५ ॥

दुरो दाशनाशदभध्येषूत्वं वक्तव्यमुत्तरपदादेश्च ष्टुत्वम् । दूडाशः दूणाशः दूडभः दूढ्यः ।

## स्वरो रोहतौ छन्दसि ॥ ६ ॥

स्वरो रोहतौ छन्दस्युत्वं वक्तव्यम् । एहि त्वं जाये स्वो रोहाव ।

पीवोपवसनादीनां छन्दसि लोपो वक्तव्यः । पीवोपवसनानाम् पयोपवसनानाम् श्रियेदम् ॥ १०६ ॥

प्र०—उत्तरपदशब्देनात्र भाष्ये धाप्रत्ययोऽभिधीयते । पद्यतेऽनेनार्थ इति पदं-प्रत्यय उच्यते । उत्तरं पदमिति विशेषणसमासः । नानाधिकरणवाचीति । अर्थगतं बहुत्वं शब्दे समारोप्य धास्विति बहुवचननिर्देश इत्यर्थः । तेनाधकरणविचाले चेति विहितस्य धाप्रत्ययस्य ग्रहणम् । षड्धेति । 'न पदान्ताट्टोरना'मिति ष्टुत्वप्रतिषेधः । दूडाश इति । दुःखेन दाश्यते नाश्यते दभ्यते इति खल् । दम्भेर्नलोपोऽत एव निपातनात् । दुष्टं ध्यायतीत्यातश्चोपसर्गे इति कः ॥ रोहावेति । लोडुत्तमद्विवचनम् । पीवोपवसनानामिति । पीवस्पयसित्येतयोः सलोपः । श्रियेदमिति । श्रिये इदमिति स्थिते इकारलोपः ॥ १०९ ॥

उ०—'षड्ढे'ति ढकारविशिष्ट एव पाठो भाष्ये । यत्तु हरदत्तेनोत्वपक्षे ष्टुत्वं नित्यमित्युक्तं, तन्न । सन्नियोगशिष्टपरिभाषयैव सिद्धे पृथग्वचनवैयर्थ्यापत्तेरित्याहुः । ननु समासचरमावयवरूढोत्तरपदग्रहणेन कथं प्रत्ययग्रहणमत आह—पद्यते इत्यादि । नानाधिकरणवाची—नानाद्रव्यवाची । तद्ग्रहणेऽपि कथं बहुवचनं स्यादत आह—अर्थगतमिति । खलि नलोपः कथमत आह—दम्भेरिति । तत्र रेफस्योत्वे सवर्णदीर्घे 'दूडभ'इत्यादिसिद्धिः । आतश्चोपसर्गं इति । कृन्मेजन्तसूत्रे 'दुर्धिय'इत्यर्थे 'दूढ्य'इति कैयटेनोक्तम् । भाष्ये—पीवोपवसनादीनामिति । पीवस्शब्दः सान्तः । 'पीवसा' वसाथे' इति लिङ्गात् । तदाह—पीवस्पयसित्येतयोरिति ॥ १०६ ॥

† अधिकरणविचाले च ५ । ३ । ४३

१–युवं वस्त्राणि पीवसा वसाथे ( ऋ० सं० १ । १५२ । १ ) ( तै० ब्रा० २ । ८ । ६ । ६ )

## ढ्रलोपे पूर्वस्य दीर्घोऽणः ॥ ६ । ३ । १११ ॥

पूर्वग्रहणं किमर्थं न 'तस्मिन्निति निर्दिष्टे पूर्वस्य' [ १ । १ । ६६ ] इति पूर्वस्यैव भविष्यति । न सिध्यति, न हि ढ्रलोपेनानन्तर्यम् ।

इह[1] कस्मान्न भवति—करणीयम् हरणीयम्* । [2]नैवं विज्ञायते ढ्रोर्लोपो ढ्रलोपः ढ्रलोप इति । कथं तर्हि ? ढ्रोर्लोपोऽस्मिन् सोऽयं ढ्रलोपः ढ्रलोप इति । यद्येवं नार्थः पूर्वग्रहणेन, भवति हि ढ्रलोपेनानन्तर्यम् ।

इदं तर्हि प्रयोजनम्—उत्तरपद इति† वर्तते, तेना[3]नन्तर्यमात्रे कार्यं यथा स्यात् । औदुम्बरी राजा[4] । पुना रूपाणि [5]कल्पयेत् ॥ १११ ॥

## सहिवहोरोदवर्णस्य ॥ ६ । ३ । ११२ ॥

वर्णग्रहणं किमर्थं न सहिवहोरोदस्येत्येवोच्येत ? वृद्धावपि‡ कृतायामोत्त्वं यथा स्यात् । उदवोढाम् उदवोढम् उदवोढेति ।

प्र०—ढ्रलोपे । न हि ढ्रलोपेनेति । आचार्यदेशीयस्तत्पुरुषं मत्वा परिहरति । निर्दिष्टग्रहणस्य प्रयोजनमुक्तं शब्दे सप्तमीनिर्दिष्टे परिभाषोपस्थानं यथा स्यादर्थे मा भूत् । शब्दो हि शब्दाद्बहिर्भूतः । अर्थस्त्वबहिर्भूतः । निःशब्दो हि बहिर्भाववाच्याश्रीयते ॥ १११ ॥

सहिवहो । उदवोढामिति । वहेर्लुङि तामादिषु सिचि वृद्धौ सलोपे ढत्वधत्वष्टुत्वढलोपेष्वोत्त्वे च रूपम् । अत्रासति वर्णग्रहणे 'तादपि परस्तपर' इत्यकारस्य तपरत्वाद्भिन्नकालस्य

उ०—ढ्रलोपे । ननु 'ढ्रलोप' इत्यस्य बहुव्रीहित्वे आनन्तर्यसंभवादाह—तत्पुरुषं मत्वेति । अभावेन पौर्वापर्यासंभव इति भावः । ननु लोपेनापि बुद्धिकृतं पौर्वापर्यं संभवति, स्थानिद्वारेण वेत्यत आह—निर्दिष्टग्रहणस्येति । 'तस्मिन्निति निर्दिष्टे' 'विरामोऽवसान'मितिसूत्रस्थभाष्यविरोधादुक्तम्—आचार्यदेशीय इति । भाष्ये तेनानन्तर्यमात्रे इति । ढ्रलोपेनानन्तर्यमात्रे, उत्तरपदपरत्वाभावेऽपीत्यर्थः । 'औदुम्बरी राजे'त्याद्यसमस्तम् । अनेनोत्तरपदशब्दस्य समासचरमावयवे रूढिं दर्शयति । अत एव 'लीढः' 'अजर्घाः' इत्यादिसिद्धिः । ढसाहचर्याच्च रेफांशेऽप्यसिद्धपरिभाषाबाध इति 'अजर्घा' इत्यादौ 'सिपि धातो'रिति रुत्वस्यासिद्धत्वात्कथं दीर्घ इति न शङ्क्यम् ॥ १११ ॥

सहिवहो । सिचि वृद्धाविति । 'वदव्रजे'त्यनेन । ननु वर्णग्रहणाभावेऽपि सवर्णग्रहणादेव दीर्घस्यौत्वं सिध्यतीत्यत आह—अत्रासतीति । वर्णग्रहणे तु तत्सामर्थ्यात्तपरसूत्राप्रवृत्तिरिति भावः ।

---

१—'अथेह' पा० ।
२—'नैष दोषः' इत्यधिकं क्वचित् ।
३—'आनन्तर्यमात्रे' पा० ।
४—'धूमाकी रथेन' इत्यधिकं क्वचित् ।
५—'प्रकल्पयन्' पा० ।

* तव्यत्तव्यानीयरः ३ । १ । ९६; तस्य लोपः १ । ३ । ९
† अलुगुत्तरपदे ६ । ३ । १
‡ वदव्रजहलन्तस्याचः ७ । २ । ३

अथावर्णग्रहणं किमर्थम् ? इह मा भूत्—ऊढः ऊढवानिति§ । नैतदस्ति प्रयोजनम् । भवत्येवात्रौत्त्वम् । श्रवणं कस्मान्न भवति ? पूर्वत्वमस्य भविष्यति । इदमिह संप्रधार्यम्—ओत्त्वं क्रियतां पूर्वत्वमिति किमत्र कर्तव्यम् ? परत्वादोत्त्वम् । अन्तरङ्गं पूर्वत्वम् ।

एवं तर्हीदमिह संप्रधार्यम्—ओत्त्वं क्रियतां संप्रसारणमिति किमत्र कर्तव्यम् ? परत्वादोत्त्वम् । नित्यं संप्रसारणम् । कृतेऽप्योत्त्वे प्राप्नोत्यकृतेऽपि । ओत्त्वमपि नित्यम् । कृतेऽपि संप्रसारणे प्राप्नोत्यकृतेऽपि । अनित्यमोत्त्वं न हि कृते संप्रसारणे प्राप्नोति । [ किं कारणम् ? ] अन्तरङ्गं पूर्वत्वम् । यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् । न च संप्रसारणमेवौत्त्वस्य निमित्तं विहन्त्यवश्यं लक्षणान्तरं पूर्वत्वं प्रतीक्ष्यम् । उभयोर्नित्ययोः परत्वादोत्त्वम् । ओत्त्वे कृते [2]संप्रसारणं संप्रसारणपरपूर्वत्वम् । तत्र कार्यकृतत्वात् पुनरोत्त्वं न भविष्यति ॥ ११२ ॥

प्र०—ग्रहणं न स्याद्वर्णग्रहणात्त्ववर्णमात्रस्य भवति । परत्वादोत्त्वमिति । ननु ढलोपनिमित्तमोत्त्वं, तत्र 'पूर्वत्रासिद्ध'मिति ढत्वादीनामसिद्धत्वात् पूर्वं संप्रसारणेन भाव्यमिति युगपत्प्राप्त्यभावाद्विप्रतिषेधानुपपत्तिः । अत्राहुः—वर्णमात्रापेक्षत्वाड्ढत्वादीनामन्तरङ्गत्वात्प्रकृतिप्रत्ययविशेषाश्रयत्वात् संप्रसारणस्य बहिरङ्गत्वादसिद्धत्वात् 'पूर्वत्रासिद्ध'मित्यस्यानुपस्थानाड्ढत्वादिषु कृतेषु युगपत्प्राप्तिसद्भावाद्युक्तो विप्रतिषेधः ॥ केचित्तु वर्णयन्ति, ढलोपस्यौत्त्वदीर्घत्वविधौ निमित्तत्वेनाश्रयणादत्र विषये ढत्वादीनां सिद्धत्वमनुमीयत इति भाष्यकारस्याभिप्रायः । ओत्त्वे कृते इति । ओत्वस्य पुनःप्रवृत्त्यभावे निमित्तसद्भावाद्दीर्घत्वं प्रवर्तिष्यते ॥ ११२ ॥

उ०—भाष्ये—अवर्णग्रहणं किमिति । आन्तरतम्यादवर्णस्यैव भविष्यतीति प्रश्नः । भवत्येवात्रौत्त्वमिति । 'अवर्णग्रहणे कृतेऽपी'ति शेषः । पूर्वं संप्रसारणेनेति । पूर्वत्वस्याप्युपलक्षणमेतत् । पूर्वत्रासिद्धमित्यस्यानुपस्थानादिति । पूर्वत्रेति निर्दिष्टकार्यस्याभावादित्यर्थः । अत्र विषये इति । कार्यान्तरं प्रत्यपीत्यर्थः । केचिदित्यत्रारुचिबीजं तु अर्थापत्तेः साक्षादुपपादकविषयताया औत्सर्गिकत्वम् ; अत्र वदन्ति—'ढूलोप' इति तत्पुरुषो विषयसप्तमी च शब्दाधिकारादिति भाष्याशय इति वक्तुमुचितम् । तत्र क्तप्रत्ययं विना तद्विषयज्ञानाभावात्तत्र कृते उभयोः प्राप्तौ परत्वादोत्त्वमिति भावः । 'उदवोढा'मित्यादौ तु सिज्लोपोत्तरमेव तद्विषयताज्ञानात्सिज्लोपात्पूर्वमेव वृद्धौ ततः सिज्लोपे चौत्त्वमिति न दोषः । एतेनोदवोढामित्यादौ सिज्लोपस्यासिद्धत्वाड्ढकारपरत्वाभावेन कथमोत्त्वमित्यपास्तमिति । ननु दीर्घस्य पूर्वमोत्त्वेन बाधात्कथं पुनरोत्त्वाभावेऽपि दीर्घप्रवृत्तिरत आह—ओत्त्वस्येति । भ्रष्टावसरन्यायोऽत्र शास्त्रे नास्त्येवेति भावः । दीर्घत्वमिति । पूर्वसूत्रेणेति भावः । तदेवमवर्णग्रहणं भगवता प्रत्याख्यातम् ॥ ११२ ॥

§ वचिस्वपियजादीनां किति; सम्प्रसारणाच्च ६ । १ । १५; १०८  १–क्वचिन्न ।
२–'संप्रसारणे कृते' पा० ।

## इको वहेऽपीलोः ॥ ६ । ३ । १२१ ॥

अपील्वादीनामिति वक्तव्यम् । इह मा भूत्—रुचिवहम् चारुवहम् ॥ १२१ ॥

## उपसर्गस्य घञ्यमनुष्ये बहुलम् ॥ ६ । ३ । १२२ ॥

अमनुष्यादिष्विति वक्तव्यम् । इह मा भूत्—प्रसेवः प्रहारः प्रसारः ।

### सादकारयोः कृत्रिमे ॥ १ ॥

सादकारयोः कृत्रिम इति वक्तव्यम् । इहैव यथा स्यात् । [ 'एषोऽस्य ] प्रासादः [ 'एषोऽस्य ] प्राकारः । इह मा भूत्—एषोऽस्य प्रसादः । एषोऽस्य प्रकारः ।

### प्रतिवेशादीनां विभाषा ॥ २ ॥

प्रतिवेशादीनां विभाषा दीर्घत्वं वक्तव्यम् । प्रतिवेशः प्रतीवेशः । प्रतिकारः प्रतीकारः ॥ १२२ ॥

## दस्ति ॥ ६ । ३ । १२४ ॥

कथमिदं विज्ञायते–दा इत्येतस्मिंस्तकारादौ, आहोस्विद्दा इत्येतस्मिंस्तकारान्त इति । किं चातः ? यदि विज्ञायते तकारादाविति नीत्ता वीत्ता अत्र न प्राप्नोति ।

प्र०—दस्ति । कथमिदमिति । उत्तरपदमिह संनिहितम् । तत्र विशेष्यविशेषणभावे कामचारात् 'ती'त्यनेन पूर्वं यदोत्तरपदं विशेष्यते तदा 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति विज्ञायते । पश्चाद्' 'द'इत्यनेन तकारो विशेष्यते । दःसम्बन्धीयस्तकारस्तदादावित्यर्थः संपद्यते । अथ तु 'द' इत्यनेन पूर्वं तकारो विशेष्यते तदा यो 'दा'शब्दसम्बन्धित्वेन सिद्धस्तकारः सोऽनूद्यते । चर्त्वस्य चासिद्धत्वादादिभूतो नास्तीति सामर्थ्यादन्तभूतस्य ग्रहणमिति 'तकारान्त'

उ०—उपसर्गस्य घ । भाष्ये—कृत्रिम इति । पुरुषव्यापाराभिनिर्वृत्त इत्यर्थः ॥ १२२ ॥

दस्ति । पूर्वं यदेति । पूर्वं विशेष्येण संबन्धमनुभूय पश्चाद्विशेषणेन संबध्यत इत्यर्थः । दः सम्बन्धीति । 'दा इत्येतस्य तकारादा'विति भाष्यप्रामाण्यादेव सविशेषणत्वेऽपि गमकत्वात्समास इति भावः । अनुभूतविशेषणस्य विशेष्येण संबन्धेऽपि का हानिरिति चिन्त्यम् । तकारान्त इत्येष पक्ष इति । अत्र पक्षे तकारान्तावयवकत्वादुत्तरपदं 'ती'त्यनेन व्यपदेश्यमिति द्रष्टव्यम् । अत्र पक्षे'ती'ति 'दा' इत्यस्य

१–क्वचिन्न । २–कृत्रिम इति किमर्थम् ?' पा० ।

अथ विज्ञायते तकारान्त इति सुदत्तम् प्रतिदत्तम् अत्रापि प्राप्नोति* । यथेच्छसि तथास्तु ।

अस्तु तावत्तकारादाविति । कथं नीत्ता वीत्ता ? चर्त्वे† कृते भविष्यति । असिद्धं चर्त्वं तस्यासिद्धत्वान्न प्राप्नोति । आश्रयात्सिद्धत्वं भविष्यति ।

अथवा पुनरस्तु तकारान्त इति । कथं सुदत्तम् प्रतिदत्तम् ? नैतत्तकारान्तं थकारान्तमेतत्‡ ॥ १२४ ॥

## चौ ॥ ६ । ३ । १३८ ॥

इहान्य आचार्याश्चौ प्रत्यङ्गस्य× प्रतिषेधमाहुस्तदिहापि साध्यम् । नैष दोषः । [१]एतदेव ज्ञापयत्याचार्यो न चौ प्रत्यङ्गं भवतीति यदयं चौ दीर्घत्वं शास्ति ॥ १३८ ॥

## सम्प्रसारणस्य ॥ ६ । ३ । १३९ ॥

### इको ह्रस्वात्सम्प्रसारणदीर्घत्वं विप्रतिषेधेन ॥ १ ॥

प्र०—इत्येष पक्षोऽवतिष्ठते । तत्र निर्णयाय प्रश्नप्रतिवचनोपन्यासः ।

नीत्तेति । दाशब्दस्य निपात्या'मच उपसर्गात्' इत्यन्तस्य तादेशे दकारस्य चर्त्वे टापि च कृते रूपम् । थकारान्तमिति । तत्र चर्त्वस्यासिद्धत्वात्तकारान्तत्वाभावः । क्वचित्प्रदत्तमिति पाठः सोऽयुक्तः, 'इक' इत्यधिकाराद्दीर्घाप्रसङ्गात् ॥ १२४ ॥

चौ । प्राचा दधीचेत्यादौ अन्तरङ्गत्वादेकादेशयणादेशयोः कृतयोरनजन्तत्वाद्दीर्घो न प्राप्नोतीत्याह—इहान्य इति ॥ १३८ ॥

उ०—विशेषणं, सौत्री षष्ठ्यर्थे सप्तमी । तकारान्तदासंबन्ध्युत्तरपदे इत्यर्थः । दकारस्य चर्त्वे इति । एवं च चर्त्वस्यासिद्धत्वात्तादित्वाभावाद्दीर्घो न प्राप्नोतीति सूत्रोदाहरणासंभव इति चोद्यतात्पर्यम् । ननु सुदत्तादौ 'अच उपसर्गा'दिति तत्वं कुतो नेति चेन्न 'अवदत्तं विदत्तं चे'त्यादिभाष्यात्तत्वाभावस्योक्तत्वेनादोषात् । चर्त्वस्यासिद्धत्वादिति । सूत्रं तु 'नीत्ते'त्यादौ चरितार्थमिति भावः ॥ १२४ ॥

चौ । प्रत्यङ्गस्येति । भाष्ये—प्रत्यङ्गशब्दोऽन्तरङ्गवाची एवं च चौसूत्रं प्रति यदन्तरङ्गं तस्य प्रतिषेधो वक्तव्य इत्यर्थः । इत्याहेति । इत्यत आहेत्यर्थः ॥ १३८ ॥

* दो दद् घोः; अच उपसर्गात्तः ७ । ४ । ४६; ४७ † खरि च ८ । ४ । ५५

‡ थान्तेऽदोषस्तस्मात्थान्तः ७ । ४ । ४६ भा० पृ० २५६

+ इको यणचि; अकः सवर्णे दीर्घः ६ । १ । ७७; १०१

१—'एतज्ज्ञापयति न चौ' पा० ।

इको ह्रस्वात्सम्प्रसारणदीर्घत्वं भवति विप्रतिषेधेन§ । इको ह्रस्वस्यावकाशः—ग्रामणिकुलम् सेनानिकुलम् । सम्प्रसारणदीर्घत्वस्यावकाशः—विभाषा ह्रस्वत्वं यदा न ह्रस्वत्वं सोऽवकाशः । ह्रस्वप्रसङ्ग उभयं प्राप्नोति—कारीषगन्धीपुत्रः‡ । कौमुदगन्धीपुत्रः । सम्प्रसारणदीर्घत्वं भवति विप्रतिषेधेन ।

अथेदानीं दीर्घत्वे कृते पुनःप्रसङ्गविज्ञानाद्ध्रस्वत्वं कस्मान्न भवति ? 'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति ।। १३६ ।।

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठस्याध्यायस्य तृतीये पादे तृतीयमाह्निकम् ।। पादश्च समाप्तः ।

प्र०—इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे षष्ठस्याध्यायस्य तृतीये पादे तृतीयमाह्निकम् ।। पादश्च समाप्तः ।

उ०—इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टविरचिते भाष्यप्रदीपोद्द्योते षष्ठस्याध्यायस्य तृतीये पादे तृतीयमाह्निकम् ।। पादश्च समाप्तः ।

§ इको ह्रस्वोऽङ्यो गालवस्य ६ । ३ । ६१

‡ ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे ६ । १ । १३

१–क्वाचित्कः पाठः ।

## अङ्गस्य ॥ ६ । ४ । १ ॥

आ कुतोऽयमधिकारः ? आ सप्तमाध्यायपरिसमाप्तेरङ्गाधिकारः ।

यद्या सप्तमाध्यायपरिसमाप्तेरङ्गाधिकारो 'गुणो यङ्लुकोः' [ ७।४।८२ ] इति यङ्लुग्ग्रहणं कर्तव्यम्* । प्रागभ्यासविकारेभ्यः† पुनरङ्गाधिकारे सति प्रत्ययलक्षणेन‡ सिद्धम् । अस्तु तर्हि प्रागभ्यासविकारेभ्योऽङ्गाधिकारः ।

यदि प्रागभ्यासविकारेभ्योऽङ्गाधिकारो वव्रश्च § वकारस्य संप्रसारणं प्राप्नोति । आ सप्तमाध्यायपरिसमाप्तेः पुनरङ्गाधिकारे सत्युरदत्वस्य स्थानिवद्भावान्न संप्रसारणे संप्रसारणम् [ ६ । १ । ३७ ] इति प्रतिषेधः सिद्धो भवति¶ । स चेदानीम-

---

प्र०—अङ्गस्य । आकुत इति । अवधिविशेषनिश्चये प्रमाणमदृष्ट्वा पृच्छति । इतरो वव्रश्चेत्यादिसिद्धिं प्रयोजनमभिसंधायाह—आ सप्तमाध्यायपरिसमाप्तेरिति । इतरोऽस्मिन्पक्षे गौरवमुद्भावयितुमाह—यदि तर्हीति । 'न लुमाङ्गस्ये'त्यनेनाङ्गाधिकारविहिते कार्ये प्रतिषिध्यमान इति भावः । न लुमता तस्मिन्निति पाठे तूभयथा दोषप्रसङ्गाल्लुग्ग्रहणं कर्तव्यमेव । उरदत्वस्येति । व्रश्चेर्लिटि द्विर्वचने कृते रेफस्य संप्रसारणं च प्राप्नोति हलादिःशेषेण निवृत्तिश्च । तत्र 'हलादिशेषात्संप्रसारणं विप्रतिषेधेने'ति पूर्वविप्रतिषेधादुभयेषां ग्रहणाद्वा संप्रसारणम् । उरदत्त्वम् । तस्याङ्गाधिकारे विधीयमानस्याङ्गेन प्रत्ययस्याक्षेपात्परनिमित्तत्वात्स्थानिवद्भावात् 'न संप्रसारणे संप्रसारण'मिति वकारस्य संप्रसारणानिषेधः सिध्यति । प्रागभ्यासविकारेभ्यस्त्वङ्गाधिकारे उरदत्वस्यापरनिमित्तत्वात्स्थानिद्भावाप्रसङ्गः । तत्र यदा प्रतिषेधवचनात्परस्य तावद्यणः संप्रसारणं क्रियते पूर्वस्य तु प्राप्तं संप्रसारणं संप्रसारणे परतः प्रतिषिध्यते तदैतदुदा-

---

उ०—अङ्गस्य । ननु 'प्रत्यय' इत्याद्यधिकारेषु विचारमकृत्वेह विचारणाकरणे बीजमाह—अवधीति । अन्यत्र लक्ष्यसिध्यादिनावधिनिर्णय इह तु न तथा प्रमाणमुत्पश्याम इति प्रश्न इत्याशयः । गौरवमिति । लक्ष्यसिद्धिरूपप्रयोजनसत्त्वेऽपीत्यर्थः । क्रियते न्यास एवेति वक्ष्यमाणपरिहारस्याशयमत्रैव दर्शयति—न लुमता तस्मिन्निति । उभयथा पक्षद्वयेऽपीत्यर्थः । उभयेषां ग्रहणाद्वेति । अनुवृत्त्यैव सिद्ध उभयेषां ग्रहणं पुनर्विधानद्वारा हलादिशेषबाधकमित्यर्थः । अङ्गेन प्रत्ययस्याक्षेपादिति । अङ्गसंज्ञानिमित्तकस्यास्य तद्द्वारा परनिमित्तकत्वात्स्थानिवत्त्वमिति भावः । प्रतिषेधवचनादिति । यदि पूर्वस्य प्रथमं संप्रसारणं स्यात्तदा

---

* न लुमताङ्गस्य १ । १ । ६३ । † अत्र लोपोऽभ्यासस्य ७ । ४ । ५८ ।

‡ प्रत्ययलोपे प्रत्ययलक्षणम् १ । १ । ६२ ।

§ लिट्यभ्यासस्योभयेषाम् ६ । १ । १७; उरत् ७ । ४ । ६६; उरण् रपरः १ । १ । ५१; हलादिः शेषः ७ । ४ । ६० । ¶ अचः परस्मिन् पूर्वविधौ १ । १ । ५७ ।

परिहारो भवति यत्तदुक्तमङ्गान्यत्वाच्च सिद्धमिति* ।

अस्तु तर्ह्यासप्तमाध्यायपरिसमाप्तेरङ्गाधिकारः । ननु चोक्तं गुणो यङ्लुकोरिति यङ्लुग्ग्रहणं कर्तव्यमिति । क्रियते न्यास एव ।

किं पुनरियं स्थानषष्ठी—अङ्गस्य स्थान इति ? एवं भवितुमर्हति† ।

**अङ्गस्येति स्थानषष्ठी चेत्पञ्चम्यन्तस्य चाधिकारः ॥ १ ॥**

अङ्गस्येति स्थानषष्ठी चेत्पञ्चम्यन्तस्य चाधिकारः कर्तव्यः । अङ्गादित्यपि वक्तव्यम् । अनुच्यमाने ह्यतो भिस ऐस्भवतीत्यत इति पञ्चम्यङ्गस्येति स्थानषष्ठी तत्राशक्यं विविभक्तिकत्वादत इति पञ्चम्याङ्गं विशेषयितुम्‡ । तत्र को दोषः ?

प्र०—हरणम् । यदा तु संप्रसारणभाविनि यणि परतः पूर्वस्य संप्रसारणप्रतिषेध इति पक्षः समाश्रीयते तदा वव्रश्चेति सिद्धमेवेत्यप्रयोजनमुरदत्वेऽङ्गाधिकारस्य । अङ्गान्यत्वाच्च सिद्धमिति । 'सन्वल्लघुनि चङ्परेऽनग्लोपे' इत्यत्र 'अमीमप'दित्यादौ सन्वद्भावादभ्यासलोपः प्राप्नोति इति चोदिते परिहारः-अङ्गान्यत्वाच्च सिद्धमिति । सन्यङ्गानां मीमादीनामभ्यासलोप इत्युच्यते, एतान्यङ्गान्तराणीत्यभ्यासलोपाभावः । सति चाभ्यासविकारेऽङ्गाधिकारेऽयं परिहार उपपद्यते नान्यथा । एष तु परिहारस्तत्रैव दूषयिष्यत इह तु सिद्धवदुपन्यस्तः ।

किं पुनरिति । यदा 'अङ्गस्ये'ति शब्दस्वरूपमनपेक्षितार्थमधिक्रियते तदा 'षष्ठी स्थानेयोगे'त्यस्याः परिभाषाया उपस्थानं नास्ति । अनेकसंबन्धसंभवे संबन्धविशेषप्रतिपादनफलत्वात्तस्याः परिभाषायाः । यदा त्वर्थाधिकारपक्षस्तदा परिभाषोपस्थानमिति द्वैतसंभवात्प्रश्नः । आचार्यदेशीयः परिभाषाश्रयेणाह—एवं भवितुमर्हतीति ।

चोदक आह—अङ्गस्येति स्थानषष्ठी चेदिति । चशब्दात्षष्ठ्यन्तस्य चेति विज्ञेयम् । तत्राशक्यं त्रिविभक्तिकत्वादिति । ननु चात इति संबन्धा'दङ्गस्ये'त्यस्य विभक्तिविपरिणामो

उ०—निवृत्तप्रतिषेधायोगात्प्रतिषेधवचनमनर्थकं स्यादित्यर्थः । यदा त्विति । तत्र कृते संप्रसारणादौ निषेधसामर्थ्यात्पुनः संप्रसारणं नेति भावः । भाष्ये दूषणान्तरमाह—स चेदानीमिति । प्रागभ्यासविकारेभ्योऽङ्गाधिकारे सति स वक्ष्यमाणोऽपरिहारश्च भवतीत्यर्थः । अङ्गान्तराणीति । णयन्तत्वादिति भावः । सिद्धवदिति । तस्योक्तिसंभवोऽपि न स्यादिति अत्रोच्यत इति भावः ।

नन्वत्र शास्त्रे परिभाषोपस्थितेर्नियतत्वात् किं पुनरिति प्रश्नानुपपत्तिरत आह—यदाङ्गस्येति । तत्र शब्दाधिकारे तत्र तत्रोपस्थितस्य यत्र यादृशार्थयोग्यता तत्र तादृशार्थकत्वं भविष्यति । अर्थाधिकारे तु परिभाषोपस्थित्या तदर्थकस्य यत्रान्वययोग्यत्वाभावस्तत्र तदनुपस्थितिरेव स्यात्तत्र कस्य पक्षस्य ग्रहणमिति प्रश्नोपपत्तिरित्यर्थः ।

चशब्दादिति । पञ्चम्यन्तस्य चेति चशब्दादित्यर्थः । विपरिणाम इति । एनमित्यस्य विशेषापेक्षायां

* अङ्गान्यत्वाद्वा सिद्धम् ७ । ४ । ८३ वा० ४ ।

† षष्ठी स्थानेयोगा १ । १ । ४६ । ‡ अतो भिस ऐस् ७ । १ । ९ ।

अकारात्परस्य भिस्मात्रस्यैस्भावो भवतीतीहापि प्रसज्येत—ब्राह्मणभिस्सा ओदनभिस्सटेति ।

**अवयवषष्ठ्यादीनां चाप्रसिद्धिः ॥ २ ॥**

अवयवषष्ठ्यादयश्च न सिध्यन्ति । तत्र को दोषः ? शास इदङ्हलोः [ ६ । ४ । ३४ ] इति शासेश्चान्त्यस्य स्यादुपधामात्रस्य च । ऊदुपधाया गोहः [ ६ । ४ । ८९ ] इति गोहेश्चान्त्यस्य स्यादुपधामात्रस्य च ।

**सिद्धं तु परस्परं प्रत्यङ्गप्रत्ययसंज्ञाभावात् ॥ ३ ॥**

प्र०—भविष्यति । यथोच्चानि देवदत्तस्य गृहाण्यामन्त्रयस्वैनमिति । उच्यते । सर्वनामपरामर्शादत्र विपरिणामः । इह तु नान्तरीयकमुत्तरार्थत्वा'दङ्गस्ये'त्यस्योपस्थानं स्यादिति कुतो विभक्तिविपरिणामः । यद्येवं विशेष्यासंनिधाना दकारान्ता'दिति कथं तदन्तविधिः । 'नेदमदसोरको'रिति प्रतिषेधात् 'सप्तमीशौण्डै'रित्यादेर्वा ज्ञापकात्तदन्तविधिर्भविष्यति । क्वचिदकारात्परस्येति पाठः । भिस्साभिस्सटाशब्दावोदनतद्विकारयोर्वाचकौ ।

अवयवषष्ठ्यादीनामिति । आदिशब्दो निमित्तषष्ठीपरिग्रहार्थः । 'ठस्येक' इत्यत्राङ्गस्य निमित्तं यष्ठस्तस्येक इत्याश्रीयते । ननु च 'षष्ठीस्थानेयोगे'त्यत्रैव विचारितं तत्किमर्थं पुनर्विचार्यते । उच्यते–'ऊदुपधाया गोह'इत्यत्र गोह इत्येषा स्थानषष्ठी स्यादित्येवं तत्र विचारितम् । इह 'त्वङ्गस्ये'त्यस्यां स्थानषष्ठ्यां विज्ञायमानायां तत्सामानाधिकरण्याद्गोह इत्यपि स्थानषष्ठी स्यादिति विचार्यते । ततश्च स्थानषष्ठ्या अन्त्येऽल्युपसंहारादुपधाग्रहणाच्च गोहोऽन्त्यस्योत्त्वमुच्येत उपधामात्रस्य च ।

आद्यं तावच्चोद्यं परिहर्तुमाह—सिद्धं त्विति । प्रत्ययोत्पत्तौ प्रकृतेर्निमित्तत्वेनाश्रयणात्

उ०—देवदत्तमिति प्रतीतेरिति भावः । संबन्धानुपपत्तिर्विभक्तिविपरिणामे प्रमाणं स्यादत आह—इह त्विति । तथा चात्र संबन्ध एव नेति न तदनुपपत्तिः प्रमाणमिति भावः । भाष्येऽकारान्तात्परस्येति पाठमाश्रित्य शङ्कते—यद्येवमिति । अङ्गस्येत्यस्य संबन्धाभाव इत्यर्थः । नेदमदसोरिति । भिसाक्षिप्तप्रकृतिविशेषणत्वेन तदन्तविधाविदं ज्ञापकम् । यद्यपीद्रूपलोपे 'अभि'सित्यत्र तदन्तविध्यभावेऽपि प्राप्तेः प्रतिषेध उपपद्यते तथाप्यदसः स ज्ञापकः, 'अको'रिति प्रतिषेधश्चेति भावः । ऐस्विधायकं तु विष्णुवाचक—'अ'शब्दादर्थवतो भिस ऐस्विधानेन चरितार्थमित्यभिमानः । तदन्तविध्यभावेऽपि अकारात्परत्वेनेदं सर्वमुपपन्नं वर्णग्रहणे नार्थवत्परिभाषा प्रवृत्तावित्वे च न मानमित्याशयेनाह—क्वचिदकारात्परस्येति । ओदनतद्विकारयोरिति । दध्यौदनो हि भिस्सटा । 'भिस्सा स्त्री भक्तमन्धोऽन्नं, भिस्सटा दग्धिके'ति कोशादिति भावः ।

अङ्गस्य निमित्तमिति । अन्यथा कर्मठेऽतिप्रसङ्गः स्यादिति भावः । 'अतो भिस' इत्यतोऽस्य को विशेष इति चिन्त्यम् । तस्मादादिशब्दस्याश्रयवाचितया तदाश्रयाणां कार्याणामप्रतिपत्तिरित्यर्थ उचितः । स्थानषष्ठी स्यादिति । 'षष्ठी स्थानेयोगे'ति नियमादिति भावः ।

अङ्गप्रत्ययसंज्ञयोः परस्परापेक्षत्वं कथमत आह—प्रत्ययोत्पत्ताविति । प्रत्ययसंज्ञाविशिष्टस्योत्पत्ता-

सिद्धमेतत् । कथम् ? परस्परं प्रत्यङ्गप्रत्ययसंज्ञे भवतः । अङ्गसंज्ञां प्रति प्रत्ययसंज्ञा प्रत्ययसंज्ञां प्रत्यङ्गसंज्ञा ॥ किमतो यत्परस्परं प्रत्यङ्गप्रत्ययसंज्ञे भवतः ?

संबन्धषष्ठीनिर्देशश्च ॥ ४ ॥

संबन्धषष्ठीनिर्देशश्चायं कृतो भवति—अङ्गस्य यो भिस्शब्द इति । किं चा-

प्र०—प्रकृतिमन्तरेण प्रत्ययो नास्ति प्रत्यये परतोऽङ्गसंज्ञाविधानात्प्रत्ययानपेक्षमङ्गं नास्ति । तत्रान्यतरस्मिन्नुपादीयमानेऽव्यभिचारादितरस्याक्षेप इत्यर्थः । इतरस्तु सत्यपि परस्पराक्षेपे स्थानषष्ठ्यां सत्यां संबन्धान्तरस्य विनाशं मत्वाह—किमत इति ।

संबन्धषष्ठीनिर्देशश्चेति । अयं भावः प्रतिसूत्रमङ्गस्येत्यस्य शब्दरूपस्योपस्थाने यत्र विशिष्टसंबन्धो निमित्तनिमित्तिभावादिकः संभवति तत्र परिभाषाया उपस्थानाभावः । यत्रानेकसंबन्धसंभवस्तत्र संबन्धान्तरव्यवच्छेदफलायाः परिभाषाया उपस्थानम् । तत्र संबन्धसामान्येऽनाश्रितविशेषेऽङ्गस्येति षष्ठी न तु स्थान्यादेशसंबन्ध एवेत्ययमर्थः—संबन्धषष्ठीनिर्देशश्चेति । अधिकारस्य पारार्थ्याद्वक्ष्यमाणानेकसंबन्ध्यनुग्रहाय संबन्धसामान्यमुपादाय प्रवृत्ता षष्ठी प्रतियोग-

उ०—वित्यर्थः । संज्ञिनोर्निमित्तत्वेन च संज्ञयोर्निमित्तत्वं भगवतोक्तम् । ननु परस्परापेक्षत्वोपपादनस्य क उपयोगस्तत्राह—तत्रान्यतरस्मिन्निति । यथात्रैवाङ्गनिमित्तस्य 'भिस' इत्युक्त्या तस्य प्रत्ययत्वे लब्धे तेन प्रातिपदिकरूपप्रकृत्याक्षेपः । आक्षेपश्च प्रातिपदिकात्परस्य भिस इति वाक्यैकदेशत्वानुमानम् । भिस इत्यस्य यस्माद्विहितस्तदादेरित्यस्य योग्यतया पञ्चम्यन्तस्य वा एतदर्थमेवात्र स्थाने भाष्ये परस्परं प्रतीत्युक्तम् । अन्यथा प्रत्ययसंज्ञां प्रत्यङ्गसंज्ञेत्येवाङ्गस्येत्यस्य संबन्धषष्ठीत्वोपपत्तौ तदनुपयोगः स्पष्ट एव । तत्राङ्गनिमित्तस्येत्यस्याभावे ब्राह्मणभिस्सेत्यत्रातिप्रसङ्गः । प्रातिपदिकात्परस्येत्यस्याभावे तदन्तविध्यलाभः । विभक्तिविपरिणामेनाङ्गात्परस्येत्यर्थेऽपि ब्राह्मणभिस्सेत्यत्रातिप्रसङ्गः । प्रत्ययलक्षणेन ब्राह्मणेत्यस्याङ्गत्वात् । प्रत्यासत्तिस्तु दुर्ज्ञेयेत्युभयोपादानम् । किं च भिसः प्रत्ययस्यैव ग्रहणमित्यत्र न मानमिति प्रत्यासत्तिरतिदुर्ज्ञेयेति भावः । वस्तुतोऽदन्तादित्यस्य न फलमित्याक्षेपोऽत्र व्यर्थः । परस्परं प्रतीतिस्वरूपकथनमेव दृष्टान्तार्थमित्याहुः । परस्पराक्षेपे तत्प्रयोजके निमित्तनिमित्तिभावे इत्यर्थः । विनाशं—अप्रतीतिम् ।

किमत इत्यादेरुत्तरं भाष्ये—संबन्धषष्ठीनिर्देशश्चेति । संबन्धसामान्ये या षष्ठी तदन्तस्य शब्दस्यायं निर्देश इति वार्तिकार्थ इत्यभिप्रेत्याह—अयं भाव इति यथाश्रुते तु सर्वस्याः षष्ठ्याः संबन्धषष्ठीत्वादनुपपत्तिः स्पष्टैव । यत्र विशिष्टेति । 'अतो भिस ऐस्,' 'युवोरनाका'वित्यादौ निमित्तनिमित्तिभावः । 'ऊदुपधाया' इत्यादाववयवावयविभाव एवेति । तत्रानियमाभावान्नियमार्थपरिभाषाया अनुपस्थितिरित्यर्थः । अयमर्थः—संबन्धषष्ठीनिर्देशश्चेति । संबन्धषष्ठीनिर्देशश्चेत्यस्यायमर्थ इत्यन्वयः । क्वचित्तु तथैव पाठः । नन्वर्थाधिकारपक्षे 'षष्ठी स्थाने' इति परिभाषणात्स्थानसंबन्ध एव षष्ठी युक्तेत्यत आह—अधिकारस्येति । एवं चाधिकारपरिभाषयोः पारार्थ्याद्गुणत्वेन परस्परमसंबन्धात्परिभाषा नोपतिष्ठते इत्यर्थः । नन्वेवं संबन्धसामान्यार्था षष्ठी कथमुत्तरत्र विशेषमुपस्थापयेदत आह—वक्ष्यमाणेति । सामान्यशब्दस्यापि योग्यतावशा-

ङ्गस्य भिस्शब्दः ? निमित्तम् । यस्मिन्नङ्गमित्येतद्भवति । कस्मिंश्चैतद्भवति ? प्रत्यये ।

एवमप्यवयवषष्ठ्यादयोऽविशेषिता भवन्ति । अवयवषष्ठ्यादयोऽपि संबन्ध एव ॥ एवमपि स्थानमविशेषितं भवति । स्थानमपि संबन्ध एव ॥ एवमपि न ज्ञायते क्व स्थानषष्ठी क्व विशेषणषष्ठीति ? यत्र षष्ठ्यन्ययोगं नापेक्षते सा स्थानषष्ठी । यत्र ह्यन्ययोगमपेक्षते सा विशेषणषष्ठी ।

कानि पुनरङ्गाधिकारस्य प्रयोजनानि ?

प्र०—मुपतिष्ठमाना यथासं व संबन्धविशेषफलोपतिष्ठते । इह तु प्रतियोग्यनुपादानादपर्याप्ता विशेषमवगमयितुम् । ततो यथा देवदत्तस्येति संबन्धमात्राश्रयेणोपात्ता षष्ठी पुत्रः पाणिः कम्बल इत्येवमादिभिर्विजातीयैः संबन्धिभिः संबध्यमाना विशेषावगतिनिमित्ततां यात्येवमङ्गस्येत्यपि । तत्र शब्दस्वरूपं वाविक्रियतामर्थो वा संबन्धमात्रलक्षणः । उभयथा दोषाभावात् । तत्राङ्गस्य भिसा संबन्धान्तरं न संभवतीति भिसा निमित्तनिमित्तिभावः समाश्रीयत इति ब्राह्मणभिस्सादावतिप्रसङ्गाभावः ।

इतरो यथोक्तमर्थमप्रतिपद्य निमित्तनिमित्तिभाव एव संबन्धेऽङ्गस्येति षष्ठीत्यनेनोक्तमिति मत्वा पृच्छति—एवमपीति । इतरः पूर्वोक्तेनाभिप्रायेणाह—अवयवषष्ठ्यादय इति । स्थानसंबन्धः सर्वथा परित्यक्त इति मत्वाह—एवमपीति । स्थानमपि संबन्ध एवेति । संबन्धनिमित्तत्वात्संबन्ध इत्यर्थः । यत्र षष्ठीति । सामर्थ्याद्विषयविभागोऽवतिष्ठत इत्यर्थः । 'ऊदुपधाया गोहः' इत्यवयवस्योपादानादङ्गस्य गोह इत्युपधापेक्षावयवषष्ठी संपद्यते । 'अतो भिस ऐस्' इत्यादौ तु निमित्तषष्ठी । संबन्धविशेषावधारणहेत्वभावे तु स्थानषष्ठीत्यर्थः ।

कानि पुनरिति । अर्थवद्ग्रहणप्रत्ययग्रहणाभ्यां सर्वस्येष्टस्य सिद्धिं मत्वा प्रश्नः ।

उ०—लक्षणया वा तत्र तत्र विशेषोपस्थापकत्वमिति भावः । ननु यथोत्तरत्र विशेषे पर्यवसानं तथेहापि स्यादत आह—इह त्विति ।

ननूक्तेन न्यायेनावयवषष्ठ्यादीनामपि सिद्धत्वादेवमपीत्यादिप्रश्नासङ्गतिरत आह—इतर इति । भाष्ये—अविशेषिता इति । असंगृहीता इत्यर्थः । भाष्येऽवयवषष्ठ्यादयोऽपि संबन्धे एव जायन्ते इत्यर्थः । यद्वा तद्व्याख्यायकत्वादयोऽपि संबन्धेऽन्तर्भूता इत्यर्थः । स्थानसंबन्धः सर्वथेति । संबन्धद्वयमेवानेन गृहीतमिति भावः । ननु प्रसङ्गोऽर्थो वा स्थानं तन्निरूपितो हि संबन्धो न तु तदेव संबन्धोऽत आह—संबन्धनिमित्तत्वादिति । संबन्धिनो हि संबन्धस्य निमित्तं निमित्तनिमित्तिनोरभेदोपचारादेवमुक्तिरित्यर्थः । संबन्धविशेषेति । यथा 'हन्तेर्जः' इत्यादौ । अन्ययोगं नापेक्षत इति भाष्यस्य स्थानातिरिक्तसंबन्धिनं नापेक्षत इत्यर्थः । अन्ययोगसंबन्धमिति पाठे—अन्यसंबन्धिनिरूपित संबन्धमपेक्षत इत्यर्थः । यद्यपि स्थानषष्ठ्यपि विशेषणषष्ठ्येव तथापि ब्राह्मणवसिष्ठन्यायेन निर्देशः ।

**अङ्गाधिकारस्य प्रयोजनं संप्रसारणदीर्घत्वे ॥ ५ ॥**

हलः उत्तरस्य संप्रसारणस्य दीर्घो भवति* । हूतः जीनः संवीतः शूनः । अङ्गस्येति किमर्थम् ? निरुतम् दुरुतम् ।

**नाम्सनोश्च ॥ ६ ॥**

नाम्सनोश्च दीर्घत्वे प्रयोजनम् । नामि दीर्घो भवति†—अग्नीनाम् वायूनाम् । अङ्गस्येति किमर्थम् ? क्रिमिणां‡ पश्य । पामनां पश्य ॥ सनि दीर्घो भवति§—चिचीषति तुष्टूषति । अङ्गस्येति किमर्थम् ? दधि सनोति । मधु सनोति ।

**लिङ्‌येत्वे ॥ ७ ॥**

लिङ्येत्वे+ प्रयोजनम् । ग्लेयात् म्लेयात् । अङ्गस्येति किमर्थम् ? निर्यायात् निर्वायात् ।

प्र०—संप्रसारणदीर्घत्व इति । 'हल' इत्यत्राङ्गस्येत्यस्यानुवृत्तस्यावृत्त्याङ्गस्येत्यनेन हल्विशेष्यते संप्रसारणेन चाङ्गं विशेष्यत इति तदन्तविधिर्भवतीत्ययमर्थो भवति—अङ्गावयवाद्धलो यदुत्तरं संप्रसारणं तदन्तस्याङ्गस्य दीर्घो भवतीति । हूत इति । ह्वेञः क्तः । जीन इति । ज्या वयोहानौ । 'ग्रहिज्या'दिसूत्रेण संप्रसारणम् । 'ल्वादिभ्य' इति निष्ठातकारस्य नत्वम् । संवीत इति । व्येञ् संवरणे । क्तः । यजादित्वात्संप्रसारणम् । संप्रसारणान्ताङ्गग्रहणाद्‌'विद्ध' इत्यादौ दीर्घाभावः । निरुतमिति । वेञो निरुपसृष्टस्य निष्ठायां संप्रसारणम् । क्रिमिणामिति । क्रिमयोऽस्यां सन्तीति पामादित्वान्नप्रत्ययः । टाप्प्रत्ययः । द्वितीयैकवचनम् । लाक्षणिकत्वादस्य न भवतीति चेन्न । प्रतिपदोक्तस्य नामोऽभावात्षष्ठीबहुवचनस्यापि नुटि कृते लाक्षणिकमेव नामिति रूपम् । दधि सनोतीति । सानुबन्धोऽयं धातुरिति चेत् । प्रत्ययोऽपि नकारेत्संज्ञकत्वात्सानुबन्धकः । धातोश्चाव्यभिचारी नकार इति तस्यैव ग्रहणप्रसङ्गः ।

उ०—'हल' इत्यत्राङ्गस्येत्यस्य द्वेधोपकारं दर्शयति—हल इत्यत्रेति । आवृत्तिफलं दर्शयति—विद्ध इत्यादाविति ॥ क्रिमयोऽस्यामिति । क्रिमिशब्दस्य नप्रत्ययापेक्षयाङ्गत्वेऽपि नाम्निरूपिताङ्गत्वाभावाद्दीर्घाभाव इत्यर्थः । सानुबन्धक इति । 'षणु दाने' इत्युकारानुबन्धत्वात् । ननु येनानुबन्धेन सानुबन्धत्वं तदनुच्चारण एव निरनुबन्धकपरिभाषाप्रवृत्तिरित्यत आह—धातोश्चेति । अङ्गाधिकाराभावे 'दधि सिनोति' इत्यादावेव स्यान्न तु 'चिचीषती'त्यादाविति भाष्याशय इति भावः । अङ्गाधिकारे तु सनि परेऽङ्गस्य दीर्घ इत्यर्थे प्रत्यासत्त्या सन्प्रत्ययस्यैव तन्निरूपिताङ्गस्यैव च ग्रहणान्न दोष इति बोध्यम् ।

* हलः ६ । ४ । २ । † नामि ६ । ४ । ३ ।
‡ लोमादिपामादिपिच्छादिभ्यः शनेलचः ५ । २ । १०० ।
§ अज्झनगमां सनि ६ । ४ । १६ । + वान्यस्य संयोगादेः ६ । ४ । ६८ ।

## अतो भिस ऐस्त्वे ॥ ८ ॥

अतो भिस ऐस्त्वे× प्रयोजनम् । वृक्षैः प्लक्षैः । अङ्गस्येति किमर्थम् ? ब्राह्मणभिस्सा ओदनभिस्सटा ।

## लुङादिष्वडाटौ ॥ ९ ॥

लुङादिष्वडाटौ* प्रयोजनम् । अकार्षीत् ऐहिष्ट । अङ्गस्येति किमर्थम् ? प्राकरोत् उपैहिष्ट ।

## इयङुवङ्युष्मदस्मत्तातङामिनुडानेमुक्केह्रस्वयिदीर्घभितत्वानि ॥ १० ॥

इयङुवङौ† प्रयोजनम् । श्रियौ श्रियः । भ्रुवौ भ्रुवः । अङ्गस्येति किमर्थम् ? श्र्यर्थम् भ्र्वर्थम् ॥ युष्मदस्मदोः प्रयोजनम् । साम आकम् [ ७ । १ । ३३ ] युष्माकम् अस्माकम् । अङ्गस्येति किमर्थम् ? युष्मत्साम । अस्मत्साम ॥ तातङ्‡ प्रयोजनम् । जीवताद्भवान् । अङ्गस्येति किमर्थम् ? पच हि तावत्त्वम् । जल्प तु

प्र०—पच हि इति । हितू निपातौ । तत्राशिषि लोटो हेरन्यतरस्यां तातङ्विधानात्पक्षे तदभावा'दतो हे'रिति हेर्लुकि कृते निपातयोरपि तुह्योः प्रतिव्यक्ति लक्षणप्रवृत्तौ अभावोपक्रमेऽपि तातङ्प्रसङ्गः । तथा चोच्यते—विभाषिताः प्रयोजयन्ति द्रोग्धा द्रोग्धा द्रोढा द्रोढेति । प्राण इति । प्रपूर्वस्यानितेर्घञि वृद्धौ च कृतायां 'प्र आन' इति स्थिते मुक्प्रसङ्गः सार्वधातुकाधिकारेऽनपेक्ष्यमाणे । ननु धातूपसर्गयोरेकादेशेनान्तरङ्गत्वाद्भाव्यं न तु वृद्ध्या । नैतदस्ति ।

उ०—नन्वेकस्या आकृतेरिति न्यायादभावोपक्रमे कथं तद्भावोऽत आह—अभावोपक्रमेऽपीति । तिङ्व्यक्तिविषयेऽभावोपक्रमेऽपि निपातविषये तदभावात्तत्प्रसङ्ग इति भावः । किं च सार्थकानेकविषये एवैष न्यायः । न चाभावोऽर्थवानित्यर्थं दृष्टान्तव्याजेनाह—तथा चेति । 'सर्वस्य द्वे' इत्यत्र 'पूर्वत्रासिद्धीयमद्वित्वे' इत्यस्य प्रयोजनत्वेनैतद्भगवता वक्ष्यते । तत्र हि तदभावे घत्वादिभ्यः पूर्वं द्वित्वे द्रोग्धा द्रोढेत्येव स्यादित्यापादितम् । तच्चैतन्न्यायस्य सार्वत्रिकत्वाङ्गीकारे विरुध्येत । मम तु घढयोरनर्थकत्वान्न तद्विषये एतन्न्यायप्रवृत्तिरिति न दोष इति भावः । सार्वधातुकाधिकार इति । 'रुदादिभ्यः सार्वधातुके' इत्यतः । वार्णादाङ्गस्येति । असमानकालप्राप्तिकेऽपि तन्न्यायप्रवृत्तिः । यत्र तु नेष्टा तत्रानित्यत्वमाश्रयणीयमिति भावः । अत एव 'प्रत्यय' इत्यत्र सवर्णदीर्घं बाधित्वा गुणः । 'मुट्कात्पूर्वं' इति सूत्रभाष्योक्तरीत्या तु

× अतो भिस ऐस् ७ । १ । ९ ।

* लुङ्लङ्लृङ्क्ष्वडुदात्तः; आडजादीनाम् ६ । ४ । ७१; ७२ ।

† अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ६ । ४ । ७७ ।

‡ तुह्योस्तातङाशिष्यन्यतरस्याम् ७ । १ । ३५ ।

तावत्त्वम् ॥ आमि नुट्§ प्रयोजनम् । कुमारीणाम् किशोरीणाम् । अङ्गस्येति किमर्थम् ? कुमारी आमित्याह । किशोरी आमित्याह ॥ आने मुक् [७ । २ । ८२] प्रयोजनम् । पचमानः यजमानः । अङ्गस्येति किमर्थम् ? प्राणः ॥ के ह्रस्वः× प्रयोजनम् । किशोरिका कुमारिका । अङ्गस्येति किमर्थम् ? कुमारीं कायति कुमारीकः । यि दीर्घः+ प्रयोजनम् । चीयते स्तूयते । अङ्गस्येति किमर्थम् ? दधियानम् मधुयानम् ॥ भि तत्त्वं* प्रयोजनम् । अद्भिः अब्भ्यः । अङ्गस्येति किमर्थम् ? अब्भारः अब्भक्षः । नैतानि सन्ति प्रयोजनानि । कथम् ?

**अर्थवद्ग्रहणप्रत्ययग्रहणाभ्यां सिद्धम् ॥ ११ ॥**

अर्थवद्ग्रहणप्रत्ययग्रहणाभ्यामेवैतानि सिद्धानि । क्वचिदर्थवद्ग्रहणे नानर्थक-

प्र०—वार्णादाङ्गस्य बलीयस्त्वात् । तथा च 'प्रत्यय' इत्यादौ सवर्णदीर्घत्वाभावः । अत्र तु लाक्षणिकत्वेनापि मुक्निरासो वक्तुं शक्यते । कुमारिकेति । अल्पादावर्थे 'प्रागिवात्कः' । कुमारीक इति । अत्रापि लाक्षणिकत्वात्कस्य ह्रस्वाभावः सिध्यति ।

क्वचिदर्थवद्ग्रहण इति । अयं परिहारो 'निरुतं' 'विद्ध' इत्यादौ संप्रसारणदीर्घत्वे न संभवति । तत्र 'क्रिमिणा'मित्यत्र नाम्प्रत्ययो, नाप्यर्थवान् प्रत्ययत्रयार्थस्य परस्परानन्वयादिति दीर्घाप्रसङ्गः । दधि सनोतीति । सनोऽप्रत्ययत्वाद्दीर्घाभावः । 'निर्याया'दित्यादौ संयोगादेरानर्थक्यादेत्वाभावः । अडाटोस्तु नायं परिहारः । 'ब्राह्मणभिस्से'त्यादौ भिसोऽप्रत्यय-

उ०—शङ्कैवेयं निर्दला । लाक्षणिकत्वेनापीति । निरनुबन्धकपरिभाषालक्षणपरिभाषाभ्यामुभयोर्ग्रहणस्य संभवाच्चिन्त्यमिदम् ।

¹भाष्ये क्वचित्प्रत्ययग्रहणेऽप्रत्ययस्य नेतीति पाठः । न प्रत्यय इति । प्रत्ययत्रयसमुदायस्याप्रत्ययत्वादिति भावः । अडाटोरिति । सोपसर्गस्यार्थवत्त्वात, प्रत्ययग्रहणपरिभाषाया असंभवाच्च । लुङा धात्वाद्देपेण शक्यवारणमिदम् । वर्णग्रहणेष्विति । इयङादिविधावङ्गाधिकाराभावे प्रत्ययस्यासंनिधानादङ्रूपवर्णाश्रय एव स इति भावः । अङ्गाधिकारे तु इवर्णाद्यन्ताङ्गस्य निमित्तेऽजादौ प्रत्यये परतः प्रत्ययसत्त्वा तस्यैवाङ्गस्येयङादीत्यर्थो बोध्यः । आमोऽप्रत्ययत्वे हेतुः—अनुकरणस्येति । तत्र पूर्व इति । 'प्रत्ययविधौ चापञ्चम्या' इति

§ ह्रस्वनद्यापो नुट् ७ । १ । ५४ । × केऽणः ७ । ४ । १३ ।
+ अकृत्सार्वधातुकयोर्दीर्घः ७ । ४ । २५ । * अपो भि ७ । ४ । ४८ ।

१—"अयं परिहार इति । यद्यपि अर्थवद्ग्रहणपरिभाषासञ्चारे 'निरुत'मित्यादाववारणेऽपि 'विद्ध' इत्यादौ वारणमेव । तथापि लक्ष्यसिद्धे वर्णग्रहणाच्च प्रत्ययग्रहणपरिभाषावत् अर्थवद्ग्रहणपरिभाषाया अप्यसम्भव एवेत्यर्थः । अत एव 'विद्ध इति'''''न सम्भवति' इत्येव चोक्तम्, न तु नास्तीति ।" इत्यधिकः पाठ उद्द्योते क्वचिदुपलभ्यते ।

स्येत्येवं भविष्यति क्वचित्प्रत्ययाप्रत्ययोर्ग्रहणे प्रत्ययस्यैव ग्रहणं भवतीति ।

अथवा प्रत्यय इति प्रकृत्याङ्गकार्यमध्येष्ये । यदि प्रत्यय इति प्रकृत्याङ्गकार्यमधीषे प्राकरोत् उपैहिष्ट उपसर्गात्पूर्वमडाटौ प्राप्नुतः । सिद्धं तु प्रत्ययग्रहणे यस्मात्स तदादितदन्तविज्ञानात्† । सिद्धमेतत् । कथम् ? प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य च ग्रहणं भवतीत्येवमुपसर्गात्पूर्वमडाटौ न भविष्यतः ॥१॥

## हलः ॥ ६ । ४ । २ ॥

इह कस्मान्न भवति—तृतीयः‡ ?

प्र०—त्वादानर्थक्याच्चैसोऽप्रसङ्गः । इयङ्वङोस्तु नायं परिहारः । वर्णग्रहणेषु परिभाषाद्वयस्यानुपस्थानाद्यथा 'इको यणची'ति दध्याशयतीत्यादावप्रत्ययेऽप्यनर्थकेऽप्यचि यणादेशो भवत्येवं श्रयर्थमित्यादावियङ्वङ्प्रसङ्गः । युष्मत्सामेति । साम्नोऽप्रत्ययत्वादानर्थक्याच्चाकमोऽप्रसङ्गः । तुह्योर्निपातयोरप्रत्ययत्वात्तातङोऽप्रसङ्गः । एवमामोऽप्रत्ययस्यानुकरणस्य नुडभावः । प्राण इत्यत्र नस्याप्रत्ययत्वात् मुगभावः । भितत्वेऽयं परिहारो नोपपद्यते, वर्णग्रहणात् । अत एवाव्यापकत्वमस्य परिहारस्य मत्वाह—अथवेति । सिद्धं त्विति । यत्र प्रत्ययो निमित्तत्वेनोपादीयते तत्र पूर्वः कार्यित्वेन गृह्यमाणो यस्मात्स विहितस्तदादिर्गृह्यते । एतच्चाङ्गसंज्ञासूत्रे योगविभागेन साधितम् । यत्र तु प्रत्यय एव कार्यित्वेनोपादीयते तत्र तदन्तग्रहणमिति द्वे एते परिभाषे । अङ्गाधिकारप्रत्याख्यानाय प्रत्ययाधिकारे क्रियमाणे न किंचित्प्रयोजनं दृश्यते । 'अतो भिस ऐ'सित्यादिषु विविभक्तिकत्वाद्भिसादीनां प्रत्ययेन सबन्धो दुरुपादः । 'हल' इति संप्रसारणादीर्घत्वं च निरुतं दुरुतमित्यादौ न परिहृतं भवति ॥ १ ॥

हलः । अण्ग्रहणमिक्ग्रहणेन विच्छिन्नमिति मत्वाह—इह कस्मादिति । अणवि-

उ०—निषेधात्तदन्तविधेरभाव इति भावः । न च 'प्रत्यय' इत्यधिकारेऽपि उक्तरीत्या परस्पराव्यभिचारादङ्गाक्षेपेण सिद्धे परिभाषापर्यन्तधावनमफलमिति वाच्यम् । प्रत्ययस्योत्पत्तावङ्गापेक्षत्वेऽपि ज्ञाने तदपेक्षत्वाभावेन शाब्दे तदाक्षेपे मानाभाव इत्याशयात् । योगविभागेनेति । 'यस्मात्प्रत्ययविधिस्तदादिप्रत्यये' इत्यनेनेत्यर्थः । द्वे एते इति । आद्या योगविभागसिद्धा । अन्या तदन्तपरिभाषासिद्धेति बोध्यम् । अयं परिहारः प्रौढ्येत्याह—अङ्गाधिकारेति । न किंचित्प्रयोजनमिति । अक्षरसाम्येन लाघवाभावात्, मात्राधिक्येन गौरवाच्चेति भावः । विभक्तिपरिणामेन कथंचित्संबन्धस्योपपादयितुं शक्यत्वेऽप्याह—हल इतीति । तस्मादङ्गाधिकारः कर्तव्य इति भगवतो गूढाभिसंधिरिति भावः । नैतानीत्यादिग्रन्थ एकदेश्युक्तिरिति तात्पर्यम् ॥ १ ॥

हलः । ननु 'ढ्लोप' इत्यतोऽण्ग्रहणानुवृत्तेः पूर्वेणाण्ग्रहणात्तृतीये दीर्घाप्रासिरत आह—अण्ग्रहण-

† १ । ४ । १३ वा० ७ पृ० ३५७    ‡ नेः सम्प्रसारणं च ५ । २ । ५५

## अरणप्रकरणादृकारस्याप्राप्तिः ।

अरणप्रकरणादृकारस्य दीर्घत्वं न भविष्यति । अरण इति वर्तते । क्व प्रकृतम् ? ढ्रूलोपे पूर्वस्य दीर्घोऽणः [ ६ । ३ । १११ ] इति ॥ तद्वा इकः काशे [ १२३ ] इत्यनेनेग्ग्रहणेन व्यवच्छिन्नं न शक्यमनुवर्तयितुम् ।

## इग्ग्रहणस्य चाणिवशेषणत्वात् ।

अणिवशेषणमिग्ग्रहणम्—अण इक इति ॥ यदि तर्ह्यणिवशेषणमिग्ग्रहणं चौ* दीर्घो भवतीतीह न प्राप्नोति—अवाचा अवाचे । नैष दोषः । अणग्रहणमनुवर्तत इग्ग्रहणं निवृत्तम् ॥ एवमपि कर्तृचा कर्तृचे अत्र न प्राप्नोति। यथालक्षणमप्रयुक्ते ।

अथवोभयं निवृत्तम् । कस्मान्न भवति तृतीय इति ? निपातनात् । किं निपातनम् ? द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् [ २ । २ । ३ ] इति ॥ २ ॥

## नामि ॥ ६ । ४ । ३ ॥

---

प्र०—शेषणमिति । 'प्रकाश'इत्यादावकारस्य दीर्घनिवृत्त्यर्थमिकाण विशेष्यत इत्यर्थः । अवाचेति । 'चा'वित्यत्रग्ग्रहणानुवर्तनादकारस्य दीर्घाप्रसङ्गः । यथेकः काशे इत्यत्र विरोधाभावादणकोः संबन्ध एवं योगान्तरेऽपीति भावः । लक्ष्यनिबन्धनापेक्षावशादधिकाराणां निवृत्त्यनुवृत्ती इति मत्वाह—नैष दोष इति । एवमपीति । केवलाणग्रहणानुवृत्तावपि दोष इत्यर्थः । तन्निवृत्तौ त्वच्परिभाषोपस्थानादृकारस्यापि दीर्घः सिध्यति । यथालक्षणमिति । मा भूदत्र दीर्घत्वमित्यर्थः । अथ नन्त्यात्प्रयोगविषयस्य 'कर्तृचे'त्यादिप्रयोगः स्यादित्युच्यते, तत्रापि ब्रूमः—अथवेति । 'चा'वित्यत्रोभयाननुवर्तनात् 'कर्तृच' इत्यादिसिद्धिः ॥ २ ॥

नामि । नुड्दीर्घयोरेकविषयत्वादुभयानुग्रहाय पूर्वं नुटि कृतेऽव्यवधायकत्वादागमानां

---

उ०—मिति । 'इकः काशे'इतीक्ग्रहणेनेत्यर्थः ।

'मा भूदत्रेति । अप्रयुक्ते लक्षणाप्रवृत्तेरीदृशं लक्ष्यमेव नास्तीत्यर्थः । सिद्धिरिति । वस्तुतो लाघवमाश्रित्यैवोभयनिवृत्तिरुच्यते इति बोध्यम् ॥ २ ॥

नामि । नन्वसति सनकारग्रहणे निरथत्वात्पूर्वं दीर्घे कृते ह्रस्वान्तस्य विधीयमानो नुट् न स्यादत

---

* चौ ६ । ३ । १३८

१–इतः प्रागुद्द्योते क्वचिदधिकं पठ्यते—"भाष्ये–अणप्रकरणादिति । यतः स्वरितत्वप्रतिज्ञाया दीर्घग्रहणस्य 'क्रमश्च क्त्वि' इत्यन्तं प्रतिसूत्रं प्रतिसम्बन्धस्तत्रैवाणदीर्घयोर्नियतसम्बन्धबोधनाय अग्रे तावत्पर्यन्तमननुवृत्तावपि अग्रिमसूत्रलक्ष्याणां तथैव सत्त्वेन स्थानित्वेन प्रक्रमादित्यर्थः ।" "इकाणिति । तथा च भाष्ये षष्ठीतत्पुरुषो बोध्यः । अत एव तदाकारप्रदर्शनं 'अण इकः' इति कृतम् ।" इति ।

किमर्थमामः सनकारस्य ग्रहणं क्रियते न 'आमि दीर्घ' इत्येवोच्येत ? केनेदानीं सनकारके भविष्यति ? नुडयमाम्भक्त आम्ग्रहणेन ग्राहिष्यते ॥ अत उत्तरं पठति—

नामि दीर्घ आमि चेत्स्यात्कृते दीर्घे न नुड्भवेत् ।

नामि दीर्घ आमि चेत्स्यात्कृते दीर्घत्वे न नुट् स्यात् । अग्नीनाम् इन्दूनाम् ।

इदमिह संप्रधार्यम्—दीर्घत्वं क्रियतां नुडिति* किमत्र कर्तव्यम् ? परत्वान्नुट् । नित्यं दीर्घत्वम् । कृतेऽपि नुटि प्राप्नोत्यकृतेऽपि । नित्यत्वाद्दीर्घत्वे कृते ह्रस्वाश्रयो नुड् न प्राप्नोति ।

एवं तर्ह्याहायं ह्रस्वान्तान्नुडिति न च ह्रस्वान्तोऽस्ति तत्र वचनाद्भविष्यति ।

प्र०—दीर्घो भविष्यत्यन्तरेण सनकारकनिर्देशमिति मत्वाह—किमर्थमिति । इतरश्चोदकबुद्धिपरीक्षार्थमाह—केनेदानीमिति । चोदकः स्वाभिप्रायमाह—आमिति ।

नामि दीर्घ इति । योऽयं नामि दीर्घ उच्यते स यद्यामीति सूत्रन्यासेनामि स्यात्तदा नित्यत्वान्नुटं बाधित्वा दीर्घे प्रवृत्ते ह्रस्वान्तत्वाभावादग्नीनामित्यादौ नुण्न स्यादित्यर्थः । इतरस्त्वनवकाशत्वादशक्यो नुड् बाधितुमिति मत्वाह—इदमिहेति । नन्वनवकाशत्वाद्विप्रतिषेधानुपपत्तौ कथमुच्यते परत्वान्नुडिति । एवं मन्यते द्वावपि नुड्दीर्घावनवकाशौ तत्राङ्गप्रत्यययोर्युगपन्निमित्तनिमित्तिभावाभावादवश्याश्रयितव्ये क्रमे विप्रतिषेधोपपत्तिः । वाक्यकारेण तु संभवमात्रमाश्रित्योक्तं—'द्वौ प्रसङ्गावन्यार्थावेकस्मिन्युगपत्प्राप्नुतः स विप्रतिषेध' इति । तत्रानवकाशत्वात्पुनःप्रसङ्गविज्ञानाद्दीर्घत्वम् । नित्यं दीर्घत्वमिति । तिसृणां चतसृणां नृणामित्यत्र सावकाशो नुडग्नीनामित्यादौ नित्यत्वाद्दीर्घेण बाध्यते । तत्र वचनादिति । भूतपूर्वगत्येति भावः ।

उ०—आह–नुड्दीर्घयोरिति । अव्यवधायकत्वादिति । नुट आम्भक्तत्वेन तद्ग्रहणेन ग्रहणादित्यर्थः तिसृणां नृणामिति । भिन्नविषयसत्त्वादिति मत्त्वेत्युक्तम् । 'द्वावपीति । नुड्विषयपरिहारेण दीर्घस्यावकाशाभाव इव दीर्घविषयपरिहारेण नुटोऽप्यवकाशभाव इत्यभिमानः । तत्राङ्गेति । नुटयङ्गस्य निमित्तत्वं प्रत्ययस्य निमित्तित्वं दीर्घे तु विपरीतम् । विरोधमात्रस्य विप्रतिषेधशब्दवाच्यत्वादत्र परत्वेन व्यवस्थोक्तेति भावः । सावकाशयोरिवानवकाशयोरपि विरोधे शास्त्रप्रवृत्तिरुचितेति तात्पर्यम् । नन्वेवं विप्रतिषेधलक्षणमसंगतं स्यादत आह—वाक्यकारेण त्विति । सावकाशयोर्विप्रतिषेधः प्रायेण संभवतीति तथोक्तमिति भावः । वस्तुतोऽत्र विप्रतिषेधसूत्राप्रवृत्तावप्युभयोश्चारितार्थ्यायान्यत्र पूर्वप्रवृत्तौ परत्वस्य नियामकताया इष्टत्वेन नुटि दीर्घं इति भाष्यतात्पर्यम् । नित्यस्याप्यनवकाशो बाधक इत्याशङ्क्य नुटः सावकाशत्वमाह—तिसृणामिति । द्वयोर्निरवकाशयोः परत्वमिव नित्यत्वमपि वक्तुं शक्यमिति न्यायैषोक्तिरिति तत्त्वम् ।

१—"भाष्ये नेति शङ्क्याम्" इत्यधिकमिहोद्द्योते क्वचित् ।

* ह्रस्वनद्यापो नुट् ७ । १ । ५४

वचनाद्यत्र तन्नास्ति

नेदं वचनाल्लभ्यम्। अस्ति ह्यन्यदेतस्य वचने प्रयोजनम्। किम्? यत्र दीर्घत्वं प्रतिषिध्यते—तिसृणाम् चतसृणामिति*।

नैतदस्ति प्रयोजनम्। इह तावच्चतसृणामिति षट्चतुर्भ्यश्च [ ७ । १ । ५५ ] इत्येवं भविष्यति। तिसृणामिति त्रिग्रहणमपि तत्र प्रकृतमनुवर्तते। क्व प्रकृतम्? त्रेस्त्रयः [ ५३ ] इति।

इदं तर्हि—त्वं नृणां† नृपते जायसे शुचिः‡ ॥ नैकमुदाहरणं ह्रस्वग्रहणं प्रयोजयति। तत्र वचनाद्भूतपूर्वगतिर्विज्ञास्यते—ह्रस्वान्तं यद्भूतपूर्वमिति।

उत्तरार्थं तर्हि सनकारग्रहणं कर्तव्यम्।

नोपधायाश्च चर्मणाम् ॥

नोपधाया नामि यथा स्यात्×। इह मा भूत्—चर्मणाम् वर्मणामिति।

प्र०—वचनादिति। वचनात्स्यादिति चेत्। यत्र दीर्घत्वं नास्ति तत्र वचनस्य चरितार्थत्वात्सांप्रतिकसद्भावे भूतपूर्वगत्याश्रयणस्यायुक्तत्वादग्नीनामित्यादौ कृते दीर्घे नुण्न स्यादित्यर्थः। तिसृणामित्यादौ नुटोऽन्यथासिद्धत्वाद्ध्रस्वलक्षणो नुडनवकाश एवेति दर्शयन्नाह—नैतदस्ति। नैकमुदाहरणमिति। अन्यथा 'नृनग्रामो नु'डिति ब्रूयात्। तदेवं वचनसामर्थ्याद्भूतपूर्वगत्या नुटः सिद्धत्वान्नार्थः सनकारनिर्देशेनेति स्थिते प्रयोजनान्तरोपन्यासः। उत्तरार्थमिति। नोपधा-

उ०—नृनग्राप[1] इति। न च भूतपूर्वगत्याश्रयणे 'पदां' 'दतां'मित्यादावतिप्रसङ्गः। शस्प्रभृतिष्वित्यत्र विवक्षित ( विषय ) सप्तम्याश्रयणेन भूतपूर्वगत्यापि ह्रस्वान्तात्परत्वाभावादित्याशयः। किं च ह्रस्वत्वं नाम मात्राकालिकत्वम्। तत्र सामर्थ्याद्विशेषणभूतमात्राकालिकत्वांश एव भूतपूर्वगतिर्न तु विशेष्यभूतत्वांशेऽपि मानाभावादित्याशयः। एतद्भाष्यप्रामाण्यात् 'षट्चतुर्भ्यश्चे'त्यस्य गौणेऽपि प्रवृत्तिः। अप्रवृत्तौ मानाभावाच्च। बहुवचनं तु द्विवचनप्रयोगे गौरवाल्लाघवार्थं भविष्यति। अत्राप्रवृत्तिसाधकभाष्यान्तरस्याभावाच्चेति प्रियवत-

* न तिसृचतसृ ६।४।४ † नृ च ६।४।६

‡ ऋ० सं० २।१।१; यजु० ११ २७; तै० सं० ४।१।२। ५; मै० सं० २।७।२; निरु० ६। १

× नोपधायाः ६।४।७; षट्चतुर्भ्यश्च ७।१।५५

१—"भाष्ये—अनुवर्तत इति। 'षट्चतुर्' इत्यत्रेत्यर्थः। चकारबलाद्बहुवचनबलात् षट्त्रिचतुर्भ्य इति स्वरविधायके तथैव दृष्टत्वाच्च। एतेन द्वयोरन्यतरस्य वा निराकाङ्क्षत्वे चकाराभावे चानुवृत्तिः स्वध्यवसाना नेति मिश्रोक्तमपास्तम्।" इत्युद्द्योतेऽधिकं क्वचित्।

नामि दीर्घ आमि चेत्स्यात्कृते दीर्घे न नुड्भवेत् ।
वचनाद्यत्र तन्नास्ति नोपधायाश्च चर्मणाम् ॥ ३ ॥

इन्हन्पूषार्यम्णां शौ ॥ ६ । ४ । १२ ॥ सौ च ॥ ६।४।१३ ॥

हनः क्वावुपधादीर्घत्वप्रसङ्गः ॥ १ ॥

हनः क्वावुपधालक्षणं दीर्घत्वं प्राप्नोति । अनुनासिकस्य क्विझलोः क्ङिति [ १५ ] इति । तस्य प्रतिषेधो वक्तव्यः । वृत्रहणौ वृत्रहण इति ॥ नियमवचनात्सिद्धम् । इन्हन्पूषार्यम्णां शौ सौ चेत्येतस्मान्नियमवचनाद्दीर्घत्वं न भविष्यति ।

नियमवचनात्सिद्धमिति चेत्सर्वनामस्थानप्रकरणे नियमवचनादन्यत्रानियमः ॥ २ ॥

नियमवचनात्सिद्धमिति चेत्सर्वनामस्थानप्रकरणे* नियमवचनादन्यत्र नियमो न प्राप्नोति । क्वान्यत्र ? वृत्रहणि भ्रूणहनि ॥ एवं तर्हि

---

प्र०—यश्चेति । चशब्दस्तर्ह्यर्थे ॥ ३ ॥

इन्हन् । हनः क्वाविति । वृत्रं हतवान् । 'ब्रह्मभ्रूणे'ति क्विप् । तत्रा'नुनासिकस्य क्विझलो'रिति सर्वत्र दीर्घत्वं प्राप्नोति । सर्वनामस्थाने तु 'नोपधायाः' सर्वनामस्थाने चासंबुद्धा'-विति प्राप्नोति । तत्र सर्वनामस्थाने वृत्रहणावित्यादौ नियमविधानसामर्थ्याद्यद्यप्युभयोर्निवृत्तिः सिध्यति तथापि सर्वनामस्थानप्रकरणात्सर्वनामस्थान एव दीर्घस्य नियमेन निवृत्त्या भाव्यं नान्यत्रेति वृत्रहणीति सप्तम्येकवचने'विभाषा ङिश्यो'रित्यल्लोपाभावपक्षेऽनुनासिकलक्षणदीर्घ-प्रसङ्गः । सर्वत्र च हनः क्वौ दीर्घत्वप्रसङ्गान्न क्वचिदल्लोपः स्यात् । इतरस्तु यथोक्तमभिप्राय-मप्रतिपद्य दूषणार्थं सर्वनामस्थानमुपन्यस्यति—वृत्रहणाविति । अत्र चेद्दीर्घत्वं मन्यसे तन्न । यतो 'नियमवचनात्सिद्धि'मिति नियमविधानसामर्थ्यात्सर्वस्य दीर्घस्य व्यावर्तनमित्यर्थः । इदानीं चोदकः स्वाभिप्रायं प्रकाशयन्नाह—नियमवचनात्सिद्धमिति चेदिति ।

---

उ०—सुगणामित्यादौ केन नुडिति न वाच्यम्[1] ॥ ३ ॥

इन्हन् । सर्वनामस्थानप्रकरणादिति । सर्वनामस्थाने चेद्दीर्घः 'शिश्वो'रेवेति नियमादिति भावः । दोषान्तरमप्याह—सर्वत्र चेति । नित्याल्लोपविषयेऽपीत्यर्थः । अल्लोपापेक्षया दीर्घस्यान्तरङ्गत्वात्तत्र कृते तपरकरणाल्लोपो न स्यादिति भावः । नन्वेवं पूर्वपक्षिणोऽपि 'वृत्रहणा'वित्यादावुभयोर्दीर्घयोर्निवृत्तेरिष्टत्वेन 'वृत्रहणी'त्येवोदाहर्तुमुचितमित्याशङ्क्य वृत्रहणौ वृत्रहण इति नियमवचनात्सिद्धमित्येकवाक्यरूपं परिहारवा-दिनो वचनमित्याह—इतरस्त्विति । दूषणार्थमिति । चोदकं दूषयितुमित्यर्थः । तदेव वाक्यशेषाध्याहारेण योजयति—अत्र चेदिति । दीर्घत्वं दीर्घत्वप्राप्तिम् ।

---

१—"भाष्यलब्धमेवाह—चशब्द इति" इत्यधिकमुद्द्योते क्वचिद् दृश्यते ।

* सर्वनामस्थाने चासम्बुद्धौ ६ । ४ । ८

८५ ‡

**दीर्घविधिर्य इहेन्प्रभृतीनां तं विनियम्य सुटीति सुविद्वान्[1]।**

दीर्घविधिर्य इहेन्प्रभृतीनां तं सर्वनामस्थाने विनियम्य। इन्हन्पूषार्यम्णां सर्वनामस्थाने दीर्घो भवति। किमर्थमिदम्? नियमार्थम्। इन्हन्पूषार्यम्णां सर्वनामस्थान एव नान्यत्र।

**शौ नियमं पुनरेव विदध्यात्**

ततः शौ। शावेव सर्वनामस्थाने नान्यत्र। ततः सौ। सावेव सर्वनामस्थाने नान्यत्र।

**भ्रूणहनीति तथास्य न दुष्येत् ॥ १ ॥**

तथास्य भ्रूणहनीति न दोषो भवति।

प्र०—एवं तर्हीति। अत्र तु योगविभागः क्रियते। तत्राद्येन नियमेनान्तरङ्गोऽप्यनुनासिकलक्षणो दीर्घो निवर्त्यते द्वितीयेन वृत्रहणावित्यादौ सर्वनामस्थानलक्षणः। सुड्ग्रहणं सर्वनामस्थानोपलक्षणमिति शसादेशोऽपि शिर्गृह्यते। इतिशब्दो हेतौ। स च भिन्नक्रमः। न दुष्येदित्यनेन च संबध्यते। शावेवेति। अस्मिन्नियमे स्थिते 'सौ चे'ति सूत्रं विध्यर्थं संपद्यते। यदा तु शौ सौ चेति यौगपद्येनापेक्ष्यते तदा प्रत्ययद्वयाश्रयो नियमः क्रियते। भाष्यकारस्तु यौगपद्याश्रयं नियमक्रममाश्रित्य व्याचष्टे—ततः साविति।

एवं योगविभागेन चोद्यं परिहृत्यैकस्मिन्नपि योगे परिहर्तुमाह—शास्मीति। शास्म्युपदिशामि तं प्रकारं येनैकयोगेऽपि दोषाभावः। पूर्ववत्सुटीत्येकदेशेन सर्वनामस्थानं लक्ष्यते।

उ०—एकयोगे नियमद्वयस्यालाभादाह—योगविभाग इति। अन्तरङ्गोऽपीति। सामर्थ्यादित्यर्थः। भाष्ये 'सर्वनामस्थान एव'इत्यस्य 'तद्विषय एवे'त्यर्थः। अयं च हन्विषय एव। अन्येषां ग्रहणमुत्तरार्थमिति भावः। तेन वृत्रहणावित्यादौ न दीर्घः। एवं वृत्रघ्नः, स्त्री वृत्रघ्नीत्यादावपि न दीर्घः। अन्यथा वृत्रहाणीति स्यात्। अत एव वार्तिकेन समफलता। एतेनान्यत्रेत्यस्य सुडानन्तर्येणेत्यर्थः। नियमस्य सजातीयापेक्षत्वादित्यपास्तम्। इतिशब्द इति। 'सुटीति' इत्यत्रेतिशब्द इत्यर्थः। न दुष्येदित्यनेनेति। एवं पुनरेवेत्येवकारोऽपि नेत्यनन्तरं योज्यः। तदयमर्थः—तथा योगद्वये सति इति हेतोः, नियमद्वयपरतया व्याख्यानाद्धेतोः। अस्याचार्यस्य 'भ्रूणहनी'ति नैव दुष्येदिति। एतेनेतिशब्दस्य हेत्वर्थत्वे तथेति व्यर्थं स्यादित्यपास्तम्। 'कथं तर्हि भाष्ये 'सौ चे'त्यस्य नियमार्थमुक्तमत आह—यदा त्विति। एवमपि वाक्यद्वयेन नियमद्वयकथनमयुक्तमत आह—भाष्यकारस्त्विति। एकवाक्यतया यौगपद्याश्रयो यो नियमस्तं स्पष्टप्रतिपत्तये वाक्यभेदेन क्रममाश्रित्य विवृणोतीत्यर्थः।

१—"सुविद्वानिति तु कर्तृत्वेन विनियम्येत्यनेनान्वेति। विदध्यादित्यनेन समानकर्तृकत्वात् क्त्वेति बोध्यम्।" इत्युद्द्योतेऽधिकं क्वचिद्दृश्यते।

**शासिम निवर्त्य सुटीत्यविशेषे शौ नियमं कुरु वाप्यसमीक्ष्य ।**

अथवा निवृत्ते सर्वनामस्थानप्रकरणेऽविशेषेण शौ नियमं वक्ष्यामि[१] । इन्हन्पूषार्यम्णां शावेव । ततः सौ । सावेव ।

इहापि तर्हि नियमान्न प्राप्नोति—इन्द्रो वृत्रहायते* ।

**दीर्घविधेरुपधानियमान्मे हन्त यि दीर्घविधौ च न दोषः ॥ २ ॥**

उपधालक्षणदीर्घत्वस्य नियमो न चैतदुपधालक्षणं दीर्घत्वम् ।

प्र०—सर्वनामस्थानग्रहणं निवर्त्यनाश्रितसर्वनामस्थानत्वविशेषे प्रत्ययत्वमात्राश्रयेण शौ नियमं कुरु । असत्यपि शास्त्रीयेऽधिकारेऽपेक्षाकृतः संबन्धः स्यादिति तन्निवृत्त्यर्थमाह—असमीक्ष्येति । सर्वनामस्थानं विशेषमनपेक्ष्य शौ नियमः क्रियमाणः प्रत्ययेन तुल्यजातीये सर्वत्र प्रत्ययान्तरे दीर्घनिवृत्तिं करोतीत्यर्थः । इहापीति । विशेषानाश्रयणात् । वृत्रहेवाचरतीति क्यङ् । 'अकृत्सार्वधातुकयो'रिति दीर्घः ॥ दीर्घविधेरिति । इह यदि 'येन नाप्राप्ते' इत्याश्रीयते तदानुनासिकलक्षणस्यैव दीर्घस्य नियमेन व्यावृत्तिः स्यात् । अथ मध्येऽपवादा इत्याश्रीयते तथापि सर्वनामस्थाने चासंबुद्धावित्यस्यैव व्यावृत्तिप्रसङ्ग इत्यनपेक्षितविशेषं दीर्घत्वमात्रं निवर्त्यते । तत्रोपधाग्रहणात्तु नृत्याजन्तलक्षणदीर्घत्वस्याकृत्सार्वधातुकयोरिति प्राप्तस्य नियमेनाव्यावर्तनाद्दोषाभावः । हन्तेर्यः—हन्तियः, तस्मिन्यो दीर्घविधिस्तत्र न दोषः । कश्चित्तु 'हन्ते'ति निपातोऽभिमुखीकरणार्थः पठ्यते । यिग्रहणस्योपलक्षणार्थत्वाद्द'दण्डीभूत'इत्यत्र च्वावपि न दोषः ।

उ०—एकस्मिन्नपीति । लाघवाश्रयेणेति भावः । प्रत्ययत्वमात्राश्रयेणेति । अत एव 'वृत्रघ्नी'ति सिध्यति । अपेक्षाकृत इति । नियमस्य सजातीयव्यावर्त्यापेक्षाकृत इत्यर्थः । वार्तिके सुटीति निवर्त्यासमीक्ष्यानपेक्ष्य वेत्यन्वयः । अपिः पादपूरणे । विशेषानाश्रयणादिति । सर्वनामस्थानस्वरूपसुप्स्वरूपविशेषानाश्रयणादित्यर्थः ॥ दीर्घविधेरिति । सामान्योक्तौ बीजमाह—इह यदीति । इदं हन्विषयवाक्याभिप्रायेण । इन्नादिविषये तेन येन नाप्राप्त्यभावादिति बोध्यम् । अनपेक्षितविशेषं दीर्घत्वमात्रमिति । बाध्यसामान्यचिन्तयेति भावः । विशेषचिन्तायां दोषादिति तात्पर्यम् । 'हन्तियी'ति पाठं व्याचष्टे—हन्तेरिति । य इत्यत्राकार उच्चारणार्थः । हन्तेः संबन्धश्च ततः परं श्रूयमाणत्वमेव । दीर्घविधाविति । निर्धारणसप्तमी । दीर्घविधीनां मध्ये य उपधालक्षणदीर्घस्तस्य नियमाद्यकारे योऽजन्तलक्षणो दीर्घस्तत्र न दोष इत्यर्थः । वृत्रहायतेः कर्तरि क्विपि वृत्रहा । वृत्रहामित्यादावपि दीर्घो भवत्येव । दण्डीभूत इति । दण्डिन्शब्दाच्च्विः । न चैवं पथीनतीत्यादौ माधवाद्युदाहृतो दीर्घो विरुध्येत, इष्टापत्तेः । 'हन्तेः क्वावुपधादीर्घत्वप्रतिषेध' इति वार्तिके हन्ग्रहणादिन्नादिम्य

* कर्तुः क्यङ् सलोपश्च ३ । १ । ११; नः क्ये १ । ४ । १५; नलोपः प्रातिपदिकान्तस्य ८ । २ । ७; अकृत्सार्वधातुकयोर्दीर्घः ७ । ४ । २५

१—'हन्तियि' पा० ।

**सुट्यपि वा प्रकृतेऽनवकाशः शौ नियमोऽप्रकृतप्रतिषेधे ।**

अथवानुवर्तमाने सर्वनामस्थानग्रहणेऽनवकाशः शौ नियमोऽप्रकृतस्यापि दीर्घत्वस्य नियामको भविष्यति । कथम् ?

**यस्य हि शौ नियमः सुटि नैतत्तेन न तत्र भवेद्विनियम्यम् ॥ ३ ॥**

यस्य हि शिः सर्वनामस्थानं न तस्य सुट् । यस्य सुट्सर्वनामस्थानं न तस्य शिः* । तत्र सर्वनामस्थानप्रकरणे नियम्यं नास्तीति कृत्वाविशेषेण शौ नियमो विज्ञास्यते ।

दीर्घविधिर्य इहेन्प्रभृतीनां तं विनियम्य सुटीति सुविद्वान् ।
शौ नियमं पुनरेव विदध्याद्भ्रूणहनीति तथास्य न दुष्येत् ॥ १ ॥

प्र०—एकस्मिन्नपि योगे सर्वनामस्थानानुवृत्तावपि दोषं परिहर्तुमाह—सुट्यपि वेति । अपिशब्दो भिन्नक्रमः, अप्रकृतप्रतिषेध इत्यनेन संबध्यते । इह द्विविधं सर्वनामस्थानं शिः सुट् च । शिर्नपुंसकसंबन्धी सुट् स्त्रीपुंमयोः, 'सुडनपुंमकस्ये'ति वचनात् । तत्र तुल्यजातीयापेक्षे नियमे आश्रीयमाणे व्यवच्छेद्याभावादनर्थक एव नियमः स्यादिति नियमविधिसामर्थ्यात्तु सर्वस्य दीर्घस्य नियमेन व्यावृत्तिरित्यर्थः । यस्य हीति ॥ यस्य नपुंसकस्य संबन्धिनि शौ नियमः क्रियते सुटि सर्वनामस्थानसंज्ञके एतन्नपुंसकं नास्त्यनपुंसकस्येति वचनात् । तेन कारणेन तत्र सर्वनामस्थाने सुटि नियन्तव्यं दीर्घत्वं न संभवतीति सामर्थ्यादविशेषेण नियम आश्रीयते । एतदुक्तं भवति—यदि तुल्यजातीयापेक्षो नियम आश्रीयते तदा शेर्नपुंसकलिङ्गसंबन्धित्वं सर्वनामस्थानत्वं चास्तीति तदाश्रयेण नियमे विज्ञायमानेऽयमर्थः स्यादिन्हन्पूषार्यम्णां नपुंसकानां शावेव सर्वनामस्थाने दीर्घो भवति न सर्वनामस्थानान्तर इति । न च तेषां नपुंसकानामन्यत्सर्वनामस्थानमस्तीति नियमविधानसामर्थ्यात्प्रकरणापन्नं सर्वनामस्थानत्वं सामर्थ्यप्रापितसंनिधानं च नपुंसक-

उ०—आचारक्विवेव नेच्छन्त्येके । अनुवृत्तावपीति । प्रकरणानुरोधादिति भावः । अपिशब्द इति । अप्रकृतप्रतिषेधेऽपि व्याप्रियत इत्यर्थ इति भावः । वार्तिके 'सुटी'ति सर्वनामस्थानोपलक्षणम् । अनवकाश इति हेतुगर्भविशेषणम् । तत्र तुल्यजातीयेति । शेर्नपुंसकसंबन्धित्वादिन्नादीनां नपुंसकानां श्यन्यसर्वनामस्थानाभावान्नियमबाध्यस्यासंभव इति भावः । [1]एवं तात्पर्यमुक्त्वा श्लोकोत्तरार्धं योजयति-यस्य नपुंसकस्येति । तत्र नपुंसके सर्वनामस्थाने सुटि तत्संज्ञके सुटि नियन्तव्यमिति । वार्तिके विनियमे साधुविनियम्यमिति तद्धितान्तं न तु कृदन्तम् । अनुपसर्गे यमो यद्विधानेन सोपसर्गाण्णयतः प्राप्तेः । उभयमप्यविशेषादिति । श्रुतिप्रापितोऽत्र नियम इति. तद्विरोधिनोर्लिङ्गप्रकरणयोरविशेषाद्बाध इत्यर्थः । अत्रोभयमपीत्युपलक्षणम् ।

* शि सर्वनामस्थानम्; सुडनपुंसकस्य १ । १ । ४२; ४३
१–"भाष्ये—कथमिति । अनवकाशत्वं कथमित्यर्थः ।" इत्युद्द्योतेऽधिकं क्वचित् ।

शास्मि निवर्त्य सुटीत्यविशेषे शौ नियमं कुरु वाप्यसमीक्ष्य ।
दीर्घविधेरुपधानियमान्मे हन्त यि दीर्घविधौ च न दोषः ॥ २ ॥
सुट्यपि वा प्रकृतेऽनवकाशः शौ नियमोऽप्रकृतप्रतिषेधे ।
यस्य हि शौ नियमः सुटि नैतत्तेन न तत्र भवेद्विनियम्यम् ॥ ३ ॥

## अत्वसन्तस्य चाधातोः ॥ ६ । ४ । १४ ॥

### अत्वसन्तस्य दीर्घत्वे पित उपसंख्यानम् ॥ १ ॥

अत्वसन्तस्य दीर्घत्वे पित उपसंख्यानं कर्तव्यम् । गोमान् यवमान्* । किं पुनः कारणं न सिध्यति ? अननुबन्धकग्रहणे हि सानुबन्धकस्य ग्रहणं नेत्येवं पितो न प्राप्नोति ॥ अननुबन्धकग्रहण इत्युच्यते सानुबन्धकस्येदं ग्रहणम् । एवं तर्हि

प्र०—त्वमुभयमप्यविशेषादनपेक्ष्य प्रत्ययमात्रे स्त्रीपुंनपुंसकसंबन्धिनि दीर्घत्वव्यावृत्तिः क्रियत इति सर्वमिष्टं सिद्धम् ॥ १२ ॥ १३ ॥

अत्वसन्तस्य चाधातोः । अत्वसन्तस्येति । सूत्रन्यासप्रदर्शनपरमिदम् । अत्वन्तविषयं तु वचनम् । अननुबन्धकग्रहण इति । उकारस्यानुबन्धस्य सूत्रोपात्तत्वात्तद्व्यतिरिक्तानुबन्धाभावेनाननुबन्धकत्वमवसेयम् । भाष्यकारस्त्वनुबन्धमात्राभावेऽननुबन्धकव्यपदेशो युक्तः, इह चानुबन्ध उकारोऽस्तीति मत्वाह—अननुबन्धकग्रहण इत्युच्यत इति । परिभाषान्तरमाश्रित्याह—एवं तर्हीति । स एवानुबन्धो यस्यासौ तदनुबन्धकः । स चान्यश्चानुबन्धो यस्य सोऽतदनुबन्धकः । यद्येवं क्तवतोरपि ककारानुबन्धसद्भावाद्ग्रहणं न प्राप्नोति । उच्यते, आनन्तर्यलक्षणेऽनुबन्धानुबन्धवतोः संबन्धे तवतुशब्दस्य ककारोऽनुबन्धो न त्वतुशब्दस्य । मतुपि तु

उ०—सर्वनामस्थानत्वव्यापकतयोपस्थितं सुप्त्वमित्यपि बोध्यम् । अत्रापि पक्षे उपधाग्रहणमनुवर्त्याजन्तलक्षणदीर्घोनियम इति बोध्यम् ॥ १२ ॥ १३ ॥

अत्वसन्तस्य । सूत्रन्यासेति । न त्वसन्ते दोषप्रदर्शनपरं तदाह—अत्वन्तेति । ननु सानुबन्धकग्रहणात्कथमत्राननुबन्धकपरिभाषाप्रवृत्तिरत आह—उकारस्येति । सामर्थ्यादवधारणगर्भो बहुव्रीहिरित्याह—स एवेति । स चान्यश्चेति । तत्र नञ् भिन्नार्थक इत्यर्थः । अन्यत्वं चोपस्थितत्वात्तच्छब्दार्थापेक्षया बोध्यम् । तद्भिन्नानुबन्धस्येत्यर्थ उचितः । मूलोक्तार्थे सामानाधिकरण्याभावाद्बहुव्रीहिर्न स्यात् । नियतार्थेन केवलेन सहविवक्षासंभवान्न द्वन्द्वगर्भः स इति कश्चित् । क्तवतोरपीति । भवत्वित्यादेरेव ग्रहणं स्यादिति भावः ।

१—"अतु इति लुप्तषष्ठीकं पृथक् पदम् ।" इति लघुशब्देन्दु शेखरे नागेशः ।
* तदस्यास्त्यस्मिन्निति मतुप् ५ । २ । ९४.

तदनुबन्धकग्रहणेऽतदनुबन्धकस्य ग्रहणं नेत्येवं पितो न प्राप्नोति ।

तत्तर्ह्युपसंख्यानं कर्तव्यम् ? न कर्त्तव्यम् । पकारलोपे कृते नातुबन्तं भवत्यत्वन्तमेव । यथैव तर्हि पकारलोपे कृते नातुबन्तमेवमुकारलोपेऽपि कृते नात्वन्तम् । ननु च भूतपूर्वगत्या भविष्यत्यत्वन्तम् । यथैव तर्हि भूतपूर्वगत्यात्वन्तमेवमतुबन्तमपि । एवं तर्ह्याश्रीयमाणे भूतपूर्वगतिरत्वन्तं चाश्रीयते नातुबन्तम् ।

न सिध्यति । इह हि व्याकरणे सर्वेष्वेव सानुबन्धकग्रहणेषु रूपमाश्रीयते यत्रास्यैतद्रूपमिति । रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगम् । तस्मिंश्च लौकिके प्रयोगे सानुबन्धकानां प्रयोगो नास्तीति कृत्वा द्वितीयः प्रयोग उपास्यते ।

प्र०—पकारोऽतुशब्दस्यानन्तर इति तेनासावनुबन्धवानिति तत्रैव दोषः । पकारलोप इति । अयमत्रार्थः । पकारोऽनुबन्धः प्रत्ययस्य न तु तदेकदेशस्य । ततश्च प्रत्ययैकदेशग्रहणादव्यापार एव पूर्वोक्तयोः परिभाषयोः श्रूयमाणश्च वर्णो रूपं भिन्द्यात् । न च पकारः श्रूयते । इतरस्तु श्रूयमाणस्यैव भेदकत्वे उकारोऽपि लोपान्न भेदकः स्यादिति मत्वाह—यथैवेति । इतरस्तु भेदकत्वेनाश्रितस्य लुप्तस्यापि भूतपूर्वगत्या स्मृत्युपारूढस्य भेदकत्वं युक्तं मत्वाह—भूतपूर्वगत्येति । इतरस्तूभयोस्तुल्यं भूतपूर्वत्वं मत्वाह—यथैवेति । इतरो भेदकत्वे-नाश्रीयमाणे भूतपूर्वगतिर्युक्ता नान्यत्रेति मत्वाह-एवं तर्हीति । इतरस्तु यथोपलब्धिस्मरणं न्याय्यं न तु मतुपः क्वचिदप्यत्वन्तत्वमुपलब्धमिति मत्वाह-न सिध्यतीति । सानुबन्धकप्रस्ता-वात्सानुबन्धकेष्वित्युक्तम् । रूपनिर्ग्रहश्चेति । रूपनिश्चय इत्यर्थः । नान्तरेण लौकिकमिति ।

उ०—आनन्तर्यलक्षण इति । तन्मूलकावयवत्वलक्षणेत्यर्थः । ननु सर्वत्रानुबन्धानामुपदेश एव लुप्तत्वात्कार्य-प्राप्तिवेलायामसंनिधानेन स्मृत्योपस्थितानामेव विशेषकत्वाल्लोपोऽप्रयोजक इत्यत आह—अयमत्रेति । प्रत्य-स्येति । समुदायस्यैवान्यपदार्थत्वेनाश्रयणादिति भावः । नन्वस्तु समुदायानुबन्धत्वं तावतापि श्रुतिकृतो रूपभेदो दुर्वारोऽत आह—श्रूयमाणश्चेति । अत्रायं गूढोऽभिसंधिर्भगवतः सूत्रोपात्तान्तग्रहणं तदन्तविधि-लब्धार्थोऽनुवाद एव । एवं चात्वन्ताङ्गस्योपधाया दीर्घ इत्यर्थः । एवं च प्रयोगे थकारलोपे कृतेऽत्वन्त-मेवाङ्गमिति । इतरस्तु श्रूयमाणस्येति । एवं चात्वन्तत्वमपि नेत्यर्थः । ननु भूतपूर्वगत्याश्रयणेऽतुबन्तमेत-न्नात्वन्तमेवेत्यत आह—इतरस्तु भेदकत्वेनेति । पकारस्तु तत्त्वेन नाश्रितोऽत्र सूत्रे इति भावः । इतरस्त्विति । पूर्वोक्ताशयमजानन्नित्यर्थः । इतरो भेदकत्वेनेति । भूतपूर्वगत्या योऽनुनासिकोकारविशिष्टोऽत्तदन्ताङ्गस्य दीर्घ इत्यर्थं इति न दोषः । इतरः सूत्रेऽन्तग्रहणस्यानुवादकत्वमजानानोऽत्वन्तान्ताङ्गस्य दीर्घ इत्यर्थं मत्वाह—भाष्ये—न सिध्यतीति । नन्वननुबन्धकग्रहणेऽपीह शास्त्रे 'ऽग्नेर्ढ'गित्यादौ रूपस्यैव ग्रहणमिति सानुबन्धकेष्विति विशेषणमयुक्तमत आह—सानुबन्धकेति । (भाष्ये) नान्तरेणेत्यादिना लौकिकप्रयोगस्य न्यायप्राप्तं ग्रहणमित्युक्तम् ।

कोऽसौ ? उपदेशो नाम । उपदेशे चैतदतुबन्तं नात्वन्तम् ।

यदि पुनरत्शब्दं गृहीत्वा दीर्घत्वमुच्येत । नैवं शक्यम् । इहापि प्रसज्येत— जगत् जनगत्* । अर्थवद्ग्रहणे नानर्थकस्येत्येवमेतस्य न भविष्यति । इहापि तर्हि न प्राप्नोति—कृतवान् भुक्तवानिति । क्व तर्हि स्यात् ? पचन् यजन् । न वा अत्रे-ष्यते ।। अनिष्टं च प्राप्नोति । इष्टं च न सिध्यति । तस्मादुपसंख्यानं कर्तव्यम् ॥१४॥

## अज्झनगमां सनि ॥ ६ । ४ । १६ ॥

### गमेर्दीर्घत्व इङ्ग्रहणम् ॥ १ ॥

गमेर्दीर्घत्व इङ्ग्रहणं कर्तव्यम् । इङ्गमेरिति वक्तव्यम्† । इह मा भूत्—संजिगं-

प्र०—अव्यभिचाराल्लौकिकस्य प्रयोगस्य प्राधान्येनोपादानं तदसंभवे तु शास्त्रीयप्रयोगाश्रय इत्याह— तस्मिंश्चेति । उपदेशे चैतदिति । पकारे सत्यत्वन्तत्वाभावात् । डयतस्त्वेकदेशं यतमाश्रित्य 'ययतोश्चातदर्थे' इत्यत्र ग्रहणे प्राप्ते तदनुबन्धकपरिभाषया निवृत्तिः क्रियते ।

यदि पुनरिति । सूत्र उकारमनुच्चार्येत्यर्थः । ततोऽच्छब्दस्य केवलस्य च शास्त्रेऽभावा-त्प्रत्ययैकदेशग्रहणं भविष्यतीति नार्थः पित उपसंख्यानेन । जगदिति । द्युतिगमिजुहोतीनां द्वे चे'ति क्विप् । 'गमः क्वा'विति मलोपः । जनं गच्छतीति 'क्विप् चे'ति क्विप् । पचन्निति । अच्छब्दोऽत्रार्थवानित्यत्रैव दीर्घप्रसङ्गः । तस्मादव्याप्त्यतिव्याप्तिलक्षणदोषद्वयप्रसङ्गादच्छब्दं गृहीत्वा दीर्घो विधातुमशक्य इत्युपसंख्यानं कर्तव्यमेव । अन्ये त्वसैवान्तशब्दस्य संबन्धो न त्वतुनेति व्याचक्षाणा मतुपो ग्रहणं साधयन्ति । अपरे त्वन्तग्रहणात्सामर्थ्यलब्धे तदन्तविधाव-धिकत्वाद्यथाकथंचित्तदन्तता गृह्यत इति मन्यमाना मतुपो ग्रहणं व्याचक्षते ॥ १४ ॥

अज्झनगमां सनि । इह बहवो गमयः । गम्लृ गताविति धातुः, 'णौ गमिरबोधने,'

उ०—तत्र हेतुमाह—अव्यभिचारादिति । शास्त्रीयं तु रूपं लोपादेशादिभिरपहाराद्व्यभिचारीत्यर्थः । डयत-स्त्विति । 'वामदेवाड्ड्यड्ड्यौ'विति विहितस्य । ण्यतस्त्विव्यपपाठः । 'ययतोश्चातदर्थे' इत्यत्र तद्धितग्रहणा-नुवृत्तेः । 'षण्मासाण्ण्यच्चे'ति ण्यतो वा ग्रहणम् । तेन हि नञ उत्तरस्योपदेशे यो यत् श्रूयते तदन्तस्यान्तो-दात्तत्वं विधीयते । प्रकृते तु उपदेशे यदन्तत्वं श्रूयते तदन्ताङ्गस्य दीर्घ इत्यर्थं इति दोषोपन्यास इति भावः । अच्छब्दं गृहीत्वेति । अतुग्रहणे त्वर्थवतोऽसंभवादेव तत्र परिभाषाया अप्रवृत्तिरिति भावः । अन्ये त्वसैवेति । एवं च भूतपूर्वगत्यानुनासिकोकारविशिष्टो योऽत्तदन्तं प्रयोगे श्रूयत इति न दोषः । 'न सिध्यती'त्यादि तु 'तस्मादुपसंख्यानं कर्तव्य'मित्यन्तैकदेश्युक्तिरिति तदाशयः ॥ १४ ॥

अज्झनगमां । इङ्ग्रहणादिणिगादेशस्यापि दीर्घत्वं नेति प्रतीयते । तच्चायुक्तम् । 'अनादेशस्यापि

* द्युतिगमिजुहोतीनां द्वे च ३ । २ । १७८ वा० ३; क्विप् च ३ । २ । ७६ । गमः क्वौ ६ । ४ । ४०; ह्रस्वस्य पिति कृति तुक् ६ । १ । ७१ ।　　† इङश्च २ । ४ । ४८ ।

सते वत्सो मात्रेति ।

**अग्रहणे ह्यनादेशस्यापि दीर्घप्रसङ्गः ॥ २ ॥**

अक्रियमाणे हीङ्ग्रहणेऽनादेशस्यापि दीर्घत्वं प्रसज्येत—संजिगंसते वत्सो मात्रेति ।

**न वा छन्दस्यनादेशस्यापि दीर्घत्वदर्शनादिङ्ग्रहणानर्थक्यम् ॥ ३ ॥**

न वेङ्ग्रहणं कर्तव्यम् । किं कारणम् ? छन्दस्यनादेशस्यापि दीर्घत्वदर्शनात् । छन्दस्यनादेशस्यापि गमेर्दीर्घत्वं दृश्यते—स्वर्गं लोकं संजिगांसत् । छन्दस्यनादेशस्यापि गमेर्दीर्घत्वदर्शनादिङ्ग्रहणमनर्थकम् ।

यथैव तर्हि च्छन्दस्यनादेशस्यापि गमेर्दीर्घत्वं भवत्येवं भाषायामपि प्राप्नोति । तस्मादिङ्ग्रहणं कर्तव्यम् ।

न कर्तव्यम् । योगविभागः करिष्यते । अचः सनि । अजन्तानां सनि दीर्घो भवति । ततो हनिगम्योः । हनिगम्योश्च सनि दीर्घो भवति । अच इत्येव । अचः स्थाने यौ हनिगमी ।

प्र०—'सनि चे'तीणादेशो गमिः । 'इण्वदिक इति वक्तव्य'मितीकादेशः । 'इङश्चे'तीङादेशश्च । तत्राविशेषात्सर्वप्रसङ्गे सत्याह—गमेर्दीर्घत्व इति । इण इक इङश्च गमिरेक एवादेश इङोपलक्ष्यते । तथा च भाष्यकृत्परतो वक्ष्यति-'अचः स्थाने यौ हनिगमी' इति । एवं चेणिगादेशस्यापि गमेरात्मनेपद इडभावे दीर्घत्वेन भाव्यमित्याहुः ।

संजिगांसदिति । संपूर्वाद्गमेः सन्, छान्दसत्वादिडभावः, लङ् । सकर्मकत्वात्परस्मैपदम्, 'बहुलं छन्दस्यमाङ्योगेऽपी'त्यडभावः । तस्मादिङ्ग्रहणमिति । भाषायामनादेशस्य गमेर्दीर्घनिवृत्त्यर्थमित्यर्थः । छन्दसि तु वर्णव्यत्ययेन ह्रस्वस्य दीर्घः । ये त्विङ्ग्रहणमुपलक्षणार्थमिच्छन्ति तन्मतेनेणादेशस्य गमेश्छन्दसि प्रयोगः । योगविभाग इति । 'अचः सनी'त्येको योगः । तत्र दीर्घश्रुत्या परिभाषोपस्थानात्तदन्तस्य दीर्घे सिद्धेऽज्ग्रहणमुत्तरार्थं विज्ञायते । अचः स्थाने

उ०—दीर्घत्वं प्रसज्येते'ति वाक्यशेषविरोधात् । 'अचः स्थाने यौ हनिगमी' इत्यग्रिमभाष्यविरोधाच्चेत्यत आह—इण इक इत्यादि । आत्मनेपद इति । भावकर्मणोरात्मनेपदे 'गमेरिट्परस्मैपदे'ष्वितीडभावात् । हलादौ सनि दीर्घो भवतीत्यर्थः ।

सकर्मकत्वादिति । 'समो गम्यृच्छि' इत्यत्राकर्मकादित्यनुवृत्तेस्तादृशादेव 'पूर्ववत्सन' इत्यात्मनेपदमित्यर्थः । इणादेशस्येति । अत्र पदे वर्णव्यत्ययो नाश्रयितव्यः, अनेनैव दीर्घसिद्धेः । केचित्तु क्छान्दसप्रयोगे बोधनार्थत्वान्नेणोऽयं गमिः । किंतु गमेरेव धातूनामनेकार्थत्वाद्बोधने वृत्तिः । तत्राबोधने इति तु प्रतीषिषतीत्यादेः साधुत्वायेति भाष्यं सम्यगेवेत्याहुः । ननु हन्तेरजादेशत्वाभावाद्धनिगमी इत्यनु-

अथोपधाग्रहणमनुवर्तत उताहो न* । किं चातः ?

सनि दीर्घ उपधाधिकारश्चेद् व्यञ्जनप्रतिषेधः ॥ ४ ॥

सनि दीर्घ उपधाधिकारश्चेद्व्यञ्जनस्य प्रतिषेधो वक्तव्यः । चिचीषति तुष्टूषतीत्येवमर्थम् ॥ एवं तर्हि निवृत्तम् ।

अनधिकार उक्तम् ॥ ५ ॥

किमुक्तम् ? हनिगमिदीर्घेष्वज्ग्रहणमिति† । नैष दोषः । उक्तमेतद्ध्रस्वो दीर्घः प्लुत इति यत्र ब्रूयादच इत्येतत्तत्रोपस्थितं द्रष्टव्यमिति‡ ॥ १६ ॥

च्छ्वोः शूडनुनासिके च ॥ ६ । ४ । १९ ॥

अथ ऊडादिः कस्मान्न भवति । आदिष्टद्भवतीति प्राप्नोति । कस्य पुनरादिः ? वकारस्य । अस्तु । वकारस्य का प्रतिपत्तिः ? लोपो व्योर्वलि [ ६ । १ । ६६ ]

प्र०—इति । संभवाद्गमिरेवात्र विशेष्यते न तु हनिः । सहनिर्देशात् तूभयोपादानम् । चिचीषतीति । अत्र चकारस्य दीर्घः प्राप्नोति । उपधाधिकारादजन्तस्य या उपधा तस्या दीर्घ इति सूत्रार्थव्यवस्थापनात् ।

हनिगमिदीर्घेष्विति । 'अचश्चे'त्यत्र तच्छेषपक्ष आश्रीयमाण इहाज्ग्रहणं हनिगम्यर्थं कर्तव्यमित्यर्थः । उक्तमेतदिति । न तच्छेषो नापि तदपवादः । किं तर्हि ? द्वितीया षष्ठी प्रदेशेषु प्रादुर्भाव्यते । तत्र विशेषणविशेष्यभावस्य यथेष्टत्वाद्धनिगमिभ्यामज्विशेष्यत इति सिद्धम् ॥ १६ ॥

च्छ्वोः शूडनु । अथेति । च्छ्वोरिति एकापि षष्ठीह ग्रहणकशास्त्रे श्रुता प्रक्रियावाक्ये संबन्धिभेदाद्भिद्यते कचित्स्थानषष्ठी कचिदवयवषष्ठी । यथा 'फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्चे'ति भावः । अस्त्विति । रूपभेदाभावादङ्गस्य यो वकारस्तस्यानुनासिकादौ प्रत्यये परे कौ झलादौ

उ०—पपन्नमत आह—गमिरेवेति । नन्वच्परिभाषायां सत्यां कथं व्यञ्जनस्य दीर्घोऽत आह—उपधाधिकारादिति ।

तच्छेषपक्ष इति । अत्र पक्षे समावेशासंभवात्परिभाषाद्वयस्यापि निवृत्तौ सर्वादेशवारणायात्राज्ग्रहणं कर्तव्यमित्यचश्चेत्यत्रोक्तमित्यर्थः ॥ १६ ॥

च्छ्वोः शू । ननु टित्त्वेऽपि 'च्छ्वो'रित्यस्य शापेक्षया स्थानषष्ठीत्वस्याश्रयणावश्यकत्वादूडव्यादेश एव भविष्यति कथं दोषोद्भावनमत आह—च्छ्वोरित्येकापीति । यथा 'फली'त्यत्र गुकागमोऽन्ये आदेशाः । ननु वकारान्तस्याङ्गस्योडित्यर्थेऽङ्गस्यादिरूडिति कथं रूपे भेदाभावो वकारस्यादिरित्यसंगतं चात आह—अङ्गस्येति । लक्षणानुरोधाद्वैयधिकरण्येनान्वय इति भावः । वस्तुतोऽङ्गत्वनिमित्तेऽनुनासिकादौ वस्योडित्यर्थ इति भाष्याभिप्रायः । भाष्ये—वकारस्य का प्रतिपत्तिरिति । तस्य कथमश्रवणमित्यर्थः ।

* नोपधायाः ६ । ४ । ७ । † ह्रस्वादि······हनिगमिदीर्घेष्वज्ग्रहणम् १ । २ । २८ वा० ।
‡ १ । २ । २८ वा० २ भाष्यम् पृ० ४१ पं० १५ । § आद्यन्तौ टकितौ १ । १ । ४६ ।

इति लोपो भविष्यति । नैवं शक्यम् । ज्वरत्वरस्रिव्यविमवामुपधायाश्च [ ६ । ४ । २० ] इति द्वावूटौ स्याताम् ।

एवं तर्हि नैष टित् । कस्तर्हि ? ठित् । यदि तर्हि ठित् धौतः पट इत्येत्येधत्यूठ्सु [ ६ । १ । ८९ ] इति वृद्धिर्न प्राप्नोति । चर्त्वे§ कृते भविष्यति । असिद्धं× चर्त्वं तस्यासिद्धत्वान्न प्राप्नोति । आश्रयात्सिद्धत्वं भविष्यति । असत्यन्यस्मिन्नाश्र-

प्र०—च परत ऊडिति सूत्रार्थाश्रयणाद्वकारस्यादिष्ठ् भवति । लोपो भविष्यतीति । ननु नाप्राप्ते लोप आरम्भमाण ऊठ् लोपस्य बाधकः प्राप्नोति । अत्र केचिदाहुः–भिन्नजातीयत्वादागमेनादेशो न बाध्यते, यथा दधि ब्राह्मणेभ्यो दीयतां कम्बलः कौण्डिन्यायेति दध्नः कम्बलो न बाधकः । अन्ये त्वाहुः—व्यक्तौ पदार्थे प्रतिव्यक्ति लक्षणप्रवर्तनादूठि कृते यद्वलोपलक्षणं तदकृतार्थम् । न च तस्मिन्प्राप्त ऊडारभ्यत इति तत्प्रवर्तत एव । अकृते ऊठि यद्वलोपशास्त्रं तदेव बाध्यते । संसर्गिभेदाद्धि वकारो भिद्यते । द्वावूटाविति । आगमिभेदादेको वकारात्पूर्व ऊठ् स्यादपर उपधाया इति दोषः ।

वृद्धिर्न प्राप्नोतीति । टितस्तत्र निर्देशादस्य च ठित्वात् । चर्त्वे कृत इति । धौत इत्यत्र वकारस्योठि कृते ठकारस्य 'खरि चे'ति चर्त्वं क्रियते । कृते चेत्वे 'एत्येधत्यूट्स्वि'त्यत्रानुकृत इति भावः । असिद्धं चर्त्वमिति । 'पूर्वत्रासिद्ध'मिति टकारान्तानुकरणे चर्त्वमसिद्धमित्येत्येवत्यूट्स्वित्यत्र वाह ऊडित्यस्योटो ग्रहणम् । आश्रयादिति । एत्येधत्यूट्स्वित्यत्रोठ एव कृतचर्त्वस्यानुकरणनिर्देशस्तत्र चर्त्वस्याश्रयात्सिद्धत्वमित्यर्थः । अस्ति चान्य इति । तत-

उ०—भिन्नजातीयत्वादिति । भिन्नफलकत्वादित्यर्थः । लोपो हि स्थानिनिवृत्तिफलकः, ऊट् तु न तन्निवृत्तिफलक इति भावः । अत्रारुचिबीजं 'व'पवादो नुग्दीर्घत्वस्ये'ति 'दीर्घोऽकितः' इति सूत्रस्थभाष्यविरोधः । ननु कृते चाकृते चोठि वस्यैव लोपप्राप्तेर्व्यक्तिभेदोऽसिद्धोऽत आह—संसर्गिभेदादिति । भिन्नसमुदायस्थत्वाद्वकारो भिद्यत इत्यर्थः । अन्ये तु 'वलोपे ऊडनवकाश' इत्यनवकाशत्वात्पूर्वमूठि ततो वलोपप्राप्तिः संभवत्येव यत्र ह्युत्सर्गे कृतेऽपवादश्चरितार्थस्तत्र सामान्यविशेषन्यायेन बाधे पुनरुत्सर्गाप्रवृत्तिरित्याहुः । स्पष्टा चेयं रीतिः 'गुणोयङ्लुको'रिति सूत्रे भाष्ये ।

कृते चर्त्वं इति । ठित्करणाद्वृद्धिविधौ टान्तानुकरणसामर्थ्याच्चान्तरङ्गावपीत्संज्ञालोपौ पूर्वं न प्रवर्तेते इत्यभिमानः । टकारान्तानुकरण इति । वृद्धिविधिस्थ इत्यर्थः । जश्त्वे चर्त्वे चेति । सप्तमीबहु-

§ खरि च ८ । ४ । ५५ । × पूर्वत्रासिद्धम् ८ । २ । १ ।

यात्सिद्धत्वं स्यादस्ति चान्यः सिद्धो वाह ऊडिति+ । एषोऽपि ठित्करिष्यते । तत्रोभयोश्चर्त्वे कृत आश्रयात्सिद्धत्वं भविष्यति ।

अथ क्ङिद्ग्रहणमनुवर्तत उताहो न† । किं चातः ?

**शूट्त्वे क्ङिदधिकारश्चेच्छः षत्वम्**

शूट्त्वे क्ङिदधिकारश्चेच्छः षत्वं वक्तव्यम्* । प्रष्टा प्रष्टुम् प्रष्टव्यम् ।

**तुक्प्रसङ्गश्च ।**

तुक्च प्राप्नोति × ।। निवृत्तेऽपि वै क्ङिद्ग्रहणेऽवश्यमत्र तुगभावार्थो यत्नः कर्तव्यः । अन्तरङ्गत्वाद्धि तुक्प्राप्नोति । च्छ्वोरिति संनिपातग्रहणं विज्ञायते । ननु

प्र०—स्तस्यैव सूत्रे निर्देशो युक्तः । तत्रोभयोरिति । धौत इत्यादावूठि कृते चर्त्वे च यट्टकारान्तं रूपं यच्च वाह ऊ'डित्यत्र ठकारस्य जश्त्वे 'वावसाने' इति चर्त्वे तयोः सामान्येनैत्येधत्यूट्स्वित्यत्र निर्देश इति मन्यते । उभयोस्तु ठित्त्वे ठकारस्यैव जश्त्वे चर्त्वे च कृत 'एत्येधत्यूट्स्वि'ति निर्देशोपपादनान्न किंचिच्चर्त्वस्याश्रयात्सिद्धत्वे प्रयोजनं दृश्यत इति चिन्त्यमेतत् ।

अथेति । स्वरितत्वप्रतिज्ञानस्य व्याख्यानाधीनत्वात्तदनुवृत्तौ छशां ष इति च्छग्रहणलिङ्गस्य दर्शनान्निवृत्तौ 'दिव उ'दिति तपरकरणलिङ्गदर्शनाच्च प्रश्नः ।। शूट्त्व इति । इह क्ङिदधिकारेऽक्ङिति तृजादौ शकाराभावात्षत्वे छग्रहणं कर्तव्यं क्ङितस्त्वननुवृत्तौ क्ङिति चाक्ङिति चानेन शकारो विधीयत इति षत्वविधौ छग्रहणं पृथक् न कर्तव्यं भवति । तुक्प्रसङ्गश्चेति । क्रियमाणेऽपि षत्वविधौ छग्रहणे 'पूर्वत्रासिद्ध'मिति षत्वस्यासिद्धत्वात्तुकि सति प्रतष्टेति प्राप्नोतीत्यर्थः । अस्य तु शकारस्य सिद्धत्वात्तुक् न भवति । निवृत्तेऽपीति । परमपि शत्वं बाधित्वा वर्णाश्रयत्वादन्तरङ्गत्वात्तुक् प्राप्नोति । 'वार्णादाङ्गं बलीय' इत्येतच्चाङ्गवार्णयोर्युगपत्प्राप्तावुपतिष्ठत इति तुकोऽश्रवणाय सतुक्छनिर्देशः कर्तव्य इत्यर्थः । ननु चैवमपीति । 'नानर्थकेऽलोऽन्त्यविधि'रिति परिभाषा प्रयोजनाभावादनादृता । सतुक्केन च च्छकारेणाङ्गविशेष-

उ०—वचने पदत्वसत्त्वात् । चिन्त्यमेतदिति । एवं 'नैष टित्, कस्तर्हि ? ठि'दित्येव सिद्धान्त्युक्तिः । 'यदि तर्ही'त्यादिभाष्यमेकदेश्युक्तिरिति तत्त्वमिति भावः ।

ननु स्वरितत्वकरणाकरणाभ्यामनुवृत्तिभावाभावयोः सुज्ञानत्वात्प्रश्नोऽयमयुक्तोऽत आह—स्वरितत्वेति । पृथक् न कर्तव्यमिति । शग्रहणेनैव सिद्धत्वादिति भावः । अस्य तु शकारस्येति । तृजुत्पत्त्यनन्तरं तुकं मन्यते । अन्तरङ्गत्वादिति । प्रत्ययोत्पत्तेः प्रागेव तुक् । छः शस्तु प्रत्ययापेक्षत्वाद्बहिरङ्ग इति भावः । परिभाषायां सत्याम'च्लोऽन्त्यस्ये'त्यस्य प्रसङ्गमाह—सतुक्केन चेति । पुतशब्दोऽकारान्तो

+ वाह ऊठ् ६ । ४ । १३२ ।

† अनुनासिकस्य क्विझलोः क्ङिति ६ । ४ । १५ ।

* व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ८ । २ । ३६ ।

× पूर्वत्रासिद्धम् ८ । २ । १; छे च ६ । १ । ७३ ।

चैवमप्यन्त्यस्य प्राप्नोति‡ । संनिपातग्रहणसामर्थ्यात्सर्वस्य भविष्यति । एवमप्यङ्गस्य प्राप्नोति । निर्दिश्यमानस्यादेशा भवन्तीत्येवमङ्गस्य न भविष्यति ।

यद्येवमुत्पुच्छयतेरप्रत्यय उत्पुडिति प्राप्नोति, उत्पुदिति चेष्यते । तथा वाञ्छतेरप्रत्ययो वान् वांशौ वांश इति न सिध्यति । यथालक्षणमप्रयुक्ते ।

तत्र त्वेतावान्विशेषः—अनुवर्तमाने क्ङिद्ग्रहणे छः षत्वं वक्तव्यं तत्र × चापि संनिपातग्रहणं विज्ञेयम् ।

**निवृत्ते दिव ऊड्भावः**

निवृत्ते दिव ऊड्भावः प्राप्नोति । द्युभ्याम् द्युभिः । अस्तु । कथं द्युभ्याम् द्युभिरिति ? ऊठि कृते दिव उत् [ ६ । १ । १३१ ] इत्युत्त्वं भविष्यति । न

प्र०—णात्तदन्तविधौ सत्यङ्गस्यार्थवत्त्वादलोऽन्त्यस्य प्रसङ्गः । संनिपातग्रहणसामर्थ्यादिति । अलोऽन्त्यविधौ सति सतुङ्निर्देशोऽनर्थकः स्यात् । वाञ्छतिनिवृत्त्यर्थत्वान्नानर्थक इति चेत्, वक्ष्यत एतद् 'यथालक्षणमप्रयुक्ते' इति । उत्पुच्छयतेरिति । पुतं छादयतीति 'पुच्छम्', कर्मण्यण्, पृषोदरादित्वाद्धातूपपदयोष्टिलोपः । पुच्छमुदस्यतीति णिङ् । ततः क्विप् । सतकारस्य छस्य शकारे कृते षत्वे जश्त्वे चोत्पुडिति भवति । यदा तु केवलः छः स्थानी तदा छस्य शकारे कृते तस्य च संयोगान्तत्वाल्लोपे तकारस्य श्रवणं सिध्यति । तथेति । तकारसहितस्य च्छस्य स्थानिनो निर्देशात्केवलस्य शकारो न प्राप्नोति । यथालक्षणमिति । उत्पुडिति वाञ्छाविति चास्त्वित्यर्थः । अथवाप्रयुक्ते न किंचिल्लक्षणं प्रवर्तते । प्रयुक्तानामन्वाख्यानारम्भात् ।

दिव ऊड्भावः प्राप्नोतीति । ऊठोऽवकाशः स्यूतः स्यूतवानिति । उत्वस्यावकाशो विमलद्यु अहरिति । द्युभ्यामित्यादौ तु परत्वादूठ्प्रसङ्गः । उत्वं भविष्यतीति । पुनः प्रसङ्गविज्ञानादेकदेशविकृतस्यानन्यत्वात् । दीर्घः प्राप्नोतीति । भाव्यमानोऽप्युकारः सवर्णान् गृह्णातीति

उ०—गुह्यस्थानवाची । तदाह–धातूपपदयोरिति । णिङि 'णाविष्ठव'दिति टिलोपः । वाञ्छाविति चास्त्विति । यस्य प्रचुरप्रयोगो न दृश्यते तस्यानन्तविषयत्वात्प्रयोगाणां क्वचित्प्रयोगसंभावनया लक्षणानुसारेण साधुत्वं द्रष्टव्यमिति भाष्यार्थ इति भावः । वास्तवमर्थमाह—अथवेति । प्रयुक्तविषयप्रवृत्तिरेव लक्षणस्वभाव इति भावः । भाष्ये तत्र चापि संनिपातग्रहणमिति । 'प्रष्टा प्रष्टु'मित्यादिसिध्यर्थं 'व्रश्चे'ति सूत्रेऽपि सतुक्ग्रहणं कर्तव्यमनुवृत्तिपक्षे इत्यर्थः । अत्रापि कार्यं प्रष्टुमित्यादिसिद्धये । निवृत्तिपक्षे त्वत्रैव कार्यं न तु तत्रेति तात्पर्यम् ।

‡ अलोऽन्त्यस्य १ । १ । ५२ । × व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ८ । २ । ३६ ।

१—"तथा च चारायणिसूत्रम्–'पुरुकृते च्छच्छ्वोः' इति पुरुशब्दः कृतशब्दश्च लुप्यते यथासंख्यं छे छ्रे परतः । पुरु च्छदनं पुच्छम्" इति देवपालः ( लौगाक्षिगृह्यसूत्रव्याख्यायाम् भा० १ पृ० १०२ ) ।

सिध्यति । आन्तर्यतो दीर्घस्य दीर्घः प्राप्नोति ।

तदर्थं तपरः कृतः ॥

एवमर्थं तपरः क्रियते ।

क्व पुनः क्ङिद्ग्रहणं प्रकृतम्? अनुनासिकस्य क्विझलोः क्ङिति [ १५ ] इति। यदि तदनुवर्ततेऽज्झनगमां सनि [ १६ ] क्विझलोश्चेति क्विझलोरपि दीर्घत्वं प्राप्नोति ।

झलि तावन्न दोषः । सनं झल्ग्रहणेन विशेषयिष्यामः—सनि झलादाविति। क्वावप्याचार्यप्रवृत्तिर्ज्ञापयति नानेन क्वौ दीर्घत्वं भवतीति यदयं क्विब्वचिप्रच्छ्यायत-

प्र०—'ऋत उ'दिति तपरत्वेन ज्ञापनात् । तदर्थमिति । दीर्घस्यापि मात्रिको यथा स्यादिति तपरत्वं कृतम् । किमुच्यत एतावान्विशेष इति यावता दिवादीनां यङ्लुगन्तानां तिबादिषु भेदो भवति। ऊठि सति 'देद्योती'ति भवत्यसति तु 'देदेती'ति । नैष दोषः । छान्दसो यङ्लुक् । न चैते छन्दसि प्रयोगा दृश्यन्ते । भाषायां तु 'हुश्नुवोः सार्वधातुके' इत्यत्र हुश्नुग्रहणाज्ज्ञापकात्क्वचिदेव यङ्लुक् भवति न सर्वत्र । अन्यथा 'यङोऽचि च'त्यत्र चच्छन्दोग्रहणानुवृत्तिरनर्थिकैव स्यादिति भाष्यकारस्य दर्शनम् ।

क्व पुनरिति । क्ङिद्ग्रहणानुवृत्तावन्यस्यापि तद्योगनिर्दिष्टस्यानुवृत्तिप्रसङ्गं मत्वा पृच्छति—सनि झलादाविति । तेनेणिगादेशस्य गमेरजादौ सनि दीर्घो न भवति जिगमिषति, अधिजिगमिषतीति । यदयमिति । वाक्यकारो वच्यादिष्वजन्तानां दीर्घत्वं शास्ति । तेन

उ०—ननु छ्वम्यामित्यादावुत्वस्य बाधकस्य सत्त्वात्कथमूडत आह—उठ इति । देदेतीति । 'लोपो व्यो'रिति सूत्रे भाष्ये वलोपस्य प्रत्याख्यानादत्र लोपश्चिन्त्यः । न चैत इति । एतच्चास्मादेव भाष्यादवसीयते । न चैत्रमपि वृत्त्वम्यामित्यादावूड्भावाभावाभ्यां फले विशेषः । न च णिलोपटिलोपयोः स्थानिवत्त्वम् । 'न पदान्ते'ति निषेधादिति चेन्न । एषामप्यनभिधानात् । न च प्राङित्यादौ सोर्लोपे लुकि वा षत्वार्थं छ्ग्रहणमावश्यकम् । 'च्छ्वोः शू'डित्यनेन त्वन्न न निर्वाहः । वर्णाश्रयत्वेन लुका लुप्तत्वेन वा प्रत्ययलक्षणाभावादिति वाच्यम् । क्विब्निमित्तकशादेशस्य दुर्वारत्वात्, विचोऽसार्वत्रिकत्वाच्च । वस्तुतस्तु तद्भाष्यं पदकर्तव्यत्वाकर्तव्यत्वरूपविशेषमात्रपरम् । तदपि क्ङिद्ग्रहणानुवृत्तिज्ञापकबोधनाय । 'दिव उ'दिति तपरत्वं तु स्पष्टार्थमेव । भाव्यमानोकारसवर्णग्राहकत्वज्ञापकं तु ऋत उदित्येव । किं च तपरत्वं सुखोच्चारणार्थं बहुशो दृष्टम् । अनन्यथासिद्धछ्ग्रहणं त्वनुवृत्तिज्ञापकमेवेति गूढोऽभिसन्धिः । एवं च प्रागुक्तलक्षणामभावकल्पने न मानम् । 'लोपो व्यो'रिति सूत्रस्थवलोपप्रत्याख्यानपरभाष्यप्रामाण्याच्चेभ्यो यङ्लुग् नास्तीत्यन्यदेतत् । इदमेव ध्वनयितुं क्ङिद्ग्रहणानुवृत्तिपक्षे संभावितान्दोषान्परिहर्तुमाह—भाष्ये क्व पुनरित्यादि। अन्यथा लाघवसहकृतेन तपरकरणेन ज्ञापकेनाननुवृत्तेरेव युक्ततया 'यदि तदनुवर्तते' इत्यादिग्रन्थासंगतिरेव स्यात् । क्ङिद्ग्रहणस्यानन्तरे प्रकृतत्वात्किं प्रश्नेनेत्यत आह—क्ङिद्ग्रहणेति । अन्यस्यापि—क्विझल्-

तस्तुकटप्रजुश्रीणां दीर्घोऽसंप्रसारणं चे'ति दीर्घत्वं शास्ति* ।

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठस्याध्यायस्य
चतुर्थे पादे प्रथममाह्निकम् ।

## असिद्धवदत्राभात् ॥ ६ । ४ । २२ ॥

प्र०—ज्ञापयति मण्डूकप्लुत्यादिभिर्न्यायैरिहैव क्ङिद्ग्रहणं संबध्यते न पूर्वत्रेत्यर्थः ॥ १९ ॥

इत्युपाध्यायजैय्यटपुत्रकैयटकृते महाभाष्यप्रदीपे षष्ठस्याध्यायस्य
चतुर्थे पादे प्रथममाह्निकम् ।

असिद्धवदत्राभात् । इह क्वचिदुपमानोपमेययोरभेदं विवक्षित्वा सामानाधिकरण्येन निर्देशः क्रियतेऽयं ब्रह्मदत्त इति । शास्त्रेऽपि 'षत्वतुकोरसिद्धः', 'लिट् कित्', 'गोतो णित्' इति च । तत्र सामर्थ्यादतिदेशप्रतिपत्तिः । क्वचित्तु प्रतिपत्तिलाघवाय भेदोपक्रमे वतिना निर्देशः क्रियते ब्रह्मदत्तवदयमिति । इहाप्यसिद्धवदत्राभादिति । अन्ये त्वाहुः—स्वाश्रयमपि यथा स्यादित्येवमर्थं वत्करणम् । तेन 'देभतु'रित्यत्र स्वाश्रयैकहल्मध्यगताश्रयावेत्वाभ्यासलोपौ भवत इति । एतदपरे न मृष्यन्ति—सत्यसति वा वतावतिदेशेष्वातिदेशिकाविरुद्धस्वाश्रयकार्यानिवृत्तिः । सिद्धत्वासिद्धत्वयोर्विरोधात्कथं वतिना सिद्धत्वस्य प्रापणं कथं वा सिद्धत्वासिद्धत्वयोर्विषयविभागो लभ्यते । 'स्थानिव'दित्यादौ तु वतिमन्तरेण संज्ञा स्यादिति वत्करणमतिदेशं

उ०—रूपस्यापि । अनुवृत्तिप्रसङ्गम् । मध्यस्था'ज्झनगमां सनी'त्यत्रानुवृत्तिप्रसङ्गमित्यर्थः । क्ङिद्ग्रहणं तद्घटितनिमित्तसमुदायः । क्वचित्तु क्ङिग्रहणमित्येव पाठः ॥ १६ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते षष्ठस्याध्यायस्य
चतुर्थपादे प्रथममाह्निकम् ।

असिद्धवदत्राभात् । ननु वतिनिर्देशं विनापि 'लिट्कि'दित्यादाविव वत्यर्थावगतौ किं वतिनेत्याशङ्क्य स्पष्टार्थं तदित्याह—इहेत्यादिना । अभेदमिति । सादृश्यमूलकमित्यर्थः । तेन देभतुरिति । 'ग्रन्थिग्रन्थिदम्भिस्वञ्जीनामिति वक्तव्य'मिति लिटः कित्त्वा'दनिदिता'मिति नलोपे तत्प्रयुक्तैत्वाभ्यासलोपौ भवत इत्यर्थः । स्वाश्रयैकेति । स्वाश्रयं यदेकहल्मध्यं तद्गतत्वाश्रयेत्यर्थः । सत्यसति वेति । अतिदेशस्वभाव एवायं यदतिदिश्यमानधर्माविरुद्धस्वाश्रयकार्यानिवृत्तिरिति वतावपि दोषस्तदवस्थ एवेति भावः । दोषान्तरमाह—कथं वेति । स्वाश्रये कार्ये सिद्धत्वं स्थानिकार्येऽसिद्धत्वमिति विषयविभागो दुर्लभः । विपरीतस्यापि तस्य वक्तुं शक्यत्वादिति भावः । नन्वेवं स्थानिवत्सूत्रे वत्करणं स्वाश्रयप्राप्त्यर्थमित्युक्तं विरुध्येतेत्यत आह—स्थानिवदित्यादौ त्विति । तत्राप्यतिदेशप्रापणद्वारा तत्स्वभावादेवाविरुद्धस्वाश्रय-

* ३ । २ । १७८ वा० २ पृ० ३०६

**असिद्धवचनं किमर्थम् ?**

**असिद्धवचन उक्तम् ॥ १ ॥**

किमुक्तम् ? तत्र* तावदुक्तं 'षत्वतुकोरसिद्धवचनमादेशलक्षणप्रतिषेधार्थमुत्सर्गलक्षणभावार्थं चे'ति । इहाप्यसिद्धवचनमादेशलक्षणप्रतिषेधार्थमुत्सर्गलक्षणभावार्थं च । आदेशलक्षणप्रतिषेधार्थं तावत्—आगहि जहि । गतः गतवानिति । अनुनासिकलोपे जभावे च कृते† ऽतो लोपः [ ६ । ४ । ४८ ] अतो हेः [ १०५ ] इति च प्राप्नोति । असिद्धत्वान्न भवति । उत्सर्गलक्षणभावार्थं च । एधि शाधीति । अस्ति-

प्र०—गमयत्स्वाश्रयप्राप्त्यर्थं विज्ञायते । 'श्नसोरल्लोप' इति तपरकरणाच्च लिङ्गात्कचित्सिद्धत्वं शक्यमनुमातुम् । अन्यथा 'आस्ताम्' 'आस'न्नित्यादावाटोऽसिद्धत्वाल्लोपाप्रसङ्गात्किं तपरत्वेन ।

असिद्धवचनं किमर्थमिति । इह शास्त्रस्य कार्यार्थत्वात्कार्यस्य प्राधान्यादसिद्धत्वेन भाव्यम् । तदसिद्धावपि स्थानिनो निवृत्तत्वात्तल्लक्षणं कार्यं न प्राप्नोतीत्यव्याप्तिं मत्वा प्रश्नः ।

इतरो व्यापकत्वाच्छास्त्रासिद्धत्वं प्रदेशान्तर एव स्थापितं मन्यमान आह—असिद्धवचन उक्तमिति । उत्सर्गशब्देन सामान्यविषयत्वसाधर्म्यात्स्थान्यभिधीयते । आगहीति । शपो 'बहुलं छन्दसी'ति लुक् । जहीति । 'हन्तेर्जः' । गत इति । अवयवलोपिनामतो लोपो नास्तीत्येतत्परिभाषार्थमुपदेशग्रहणानुवृत्त्या भाष्यकारः संपादयिष्यति । एधीति । परत्वान्नि-

उ०—प्राप्त्यर्थतोक्ता न तु सामर्थ्यात् । यथा 'ब्राह्मणवदयं क्षत्रिय इत्युक्ते' ब्राह्मण्यविरुद्धमद्यपानादेरेव निवृत्तिर्न तु युद्धादेस्तद्वदिति भावः । देभतुरित्यादौ तर्हि का गतिरत आह—श्नसोरिति[1] । 'अस् ता'मिति स्थिते विप्रतिषेधे आभीयासिद्धत्वाभावस्य वक्ष्यमाणतयाऽपेक्षया परत्वादल्लोपे तस्यासिद्धत्वात्पुनःप्रसङ्गविज्ञानेनाटि विकारान्यानुपूर्व्या ऐक्याभावाल्लोपे लक्षणस्येति न्यायाप्राप्त्या प्राप्ताटो लोपस्य वारणाय कृतं तपरत्वमाटोऽसिद्धत्वे व्यर्थं सत्तदनित्यतां ज्ञापयति—आटि तु नित्यत्वमेवेति । ज्ञापितेऽपि वैयर्थ्यमसिद्धत्वानित्यत्वेनाटोऽप्राप्तेरिति न शङ्क्यम् ।

आगहीत्यादेः प्रयोजनस्य स्पष्टत्वात्प्रश्नानुपपत्तेराह—इह शास्त्रस्येति । देवदत्तहन्तृहतन्यायेन 'शाधी'त्याद्यसिद्धिरिति भावः ।

[1]उत्सर्गशब्देनेति । यद्यप्युत्सर्गशब्दः सामान्यविधौ रूढस्तथाऽप्यत्र तत्साधर्म्यात्स्थानी लक्ष्यत इत्याशयः । गत इत्यसिद्धवद्भावं विनापि सिध्यतीत्याह—अवयवेति । [2]परत्वादिति । शास्त्रासिद्धत्व

* ६ । १ । ८६ वा० १

† अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति; हन्तेर्जः ६ । ४ । ३७; ३६

१—"आस्तामित्यादेस्तु सिद्धिरेव, लोपस्याभावरूपत्वेन भावप्रतियोगिकाभावस्यैव न्यायविषयत्वेन तत्र तदप्राप्तेः, तदाह—अव्याप्तिमिति ।" इत्युद्द्योतेऽधिकं क्वचित् ।

२—"प्रत्यासत्त्या व्युत्क्रमेणाह—अतो लोप इति ।" इत्युद्द्योतेऽधिकः पाठः क्वचित् ।

शास्त्योरेत्त्वशाभावयोः कृतयोर्झल्लक्षणं घित्वं† न प्राप्नोति । असिद्धत्वाद्भवति ।

अथात्रग्रहणं किमर्थम् ?

अत्रग्रहणं विषयार्थम् ॥ २ ॥

विषयः प्रतिनिर्दिश्यते । अत्रैतस्मिन्नाभाच्छास्त्र आभाच्छास्त्रमसिद्धं यथा स्यात् । इह मा भूत्- अभाजि‡ रागः§ उपबर्हणमिति¶ ।

कानि पुनरस्य योगस्य प्रयोजनानि ?

प्र०—त्यत्वाच्च पूर्वमेत्त्वम् । शाधीत्यत्रापि नित्यत्वात्पूर्वं शाभावोऽल्विधित्वाच्च धित्वे नास्ति स्थानिवद्भावः ।

अथात्रग्रहणमिति । यथा 'अङ्गस्ये'त्यादयोऽधिकारा अवध्युपादानमन्तरेणापि व्याख्यानाद्विशिष्टावधयो विज्ञायन्ते तथासिद्धवदधिकारोऽप्याभाद्विज्ञायते । तत्राभाद्ग्रहणस्य विषयावधारणार्थत्वादत्रग्रहणं न कर्तव्यमिति भावः ।

अत्रग्रहणं विषयार्थमिति । विशिष्टो यो विषयः समानलक्षणस्तन्निर्देशार्थम् । तेन समानाश्रयमसिद्धं व्याश्रयं तु सिद्धमित्येषोऽर्थो वार्तिककारस्याभिमतः । भाष्यकारोऽमुमेवार्थं परस्तात्स्थापयिष्यति । संप्रति त्वाभाद्ग्रहणमधिकारस्य प्रतिपत्तिलाघवायावध्युपादानार्थं मत्वासिद्धवद्भावस्याभाच्छास्त्रमेव विषयोऽत्रग्रहणेन निर्दिश्यत इति व्याचष्टे—अभाजि राग इति । 'भञ्जेश्च चिणि', 'रञ्जेश्च', 'घञि च भावकरणयो'रिति नलोपो'ऽत उपधाया' इति वृद्धौ कर्तव्यायां नासिद्धो भवति । उपबर्हणमिति । 'बृहि वृद्धा'वित्यस्य 'बृंहेरच्यनिटी'ति नलोपो गुणेनासिद्धो भवति ॥ कानि पुनरिति । अन्यथा सिद्धिं मत्वा पृच्छति ।

उ०—एत्त्वशाभावशास्त्राभ्यां तत्कार्ययोरप्रमितेर्धिशास्त्रं प्रति स्थानिबुद्धिरनेनेति तन्निबन्धनकार्यसिद्धिरिति भावः । नन्वाभादित्यधिकारपरिमाणार्थमित्यत्रग्रहणं विषयावधारणार्थमावश्यकम् । आभीये कर्तव्य आभीयमसिद्धवदिति तत्किं प्रश्नेनेत्यत आह—यथाङ्गस्येति ।

समानलक्षणमिति । समानमेकं लक्षणं निमित्तमस्य तत्प्रतिपत्त्यर्थमित्यर्थः । 'अनुदात्तोपदेशे'त्यादावस्योपस्थितावनुदात्तोपदेशादीनां क्ङिति लोपो भवति स चासिद्धवदत्रैव क्ङिति निमित्ते यदाभीयं प्राप्नोति तत्र कर्तव्यमित्यर्थादिति भावः । भाष्यकारेण तर्हि एवं रीत्या वार्तिकं कुतो न प्रत्याख्यातमत आह—भाष्यकारेति । 'अधिकारस्य प्रतिपत्ती'ति पाठः । प्रतिपत्तिलाघवायाधिकारस्यावध्युपादानार्थमाभाद्ग्रहणमित्यन्वयः । भाष्ये अत्रैतस्मिन्निति । 'अत्रे'त्यस्य व्याख्या 'एतस्मि'न्निति । तद्व्याख्यानमाभाच्छास्त्रे इति । नासिद्ध इति । वृद्धेराभीयत्वाभावादित्यर्थः ।

† ध्वसोरेद्धावभ्यासलोपश्च; शा हौ; हुझल्भ्यो हेर्धिः ६ । ४ । ११६; ३५; १०१
‡ भञ्जेश्च चिणि ६ । ४ । ३३; अत उपधायाः ७ । २ । ११६
§ घञि च भावकरणयोः ६ । ४ । २७; अत उपधायाः ७ । २ । ११६
¶ बृंहेरच्यनिटि ६ । ४ । २४ वा० २; पुगन्तलघूपधस्य च ७ । ३ । ८६

## प्रयोजनं शैत्त्वं धित्वे ॥ ३ ॥

शाभाव एत्त्वं च धित्वे प्रयोजनम्* । एधि शाधीति । अस्तिशास्त्योरेत्त्वशाभावयोः कृतयोर्झल्लक्षणं धित्वं न प्राप्नोति । असिद्धत्वाद्भवति ।

शाभावस्तावन्न प्रयोजयति । एवं वक्ष्यामि शास् हौ शाहाविति । यत्वभूतः† सकारस्तत्र साद्धित्वं धि च [ ८ । २ । २५ ] इति सकारस्य लोपः । अथवा आ हाविति वक्ष्यामि । एवमपि सकारस्य प्राप्नोति । उपधाया इति‡ वर्तते । उपधाया आत्वे कृते साद्धित्वं धि चेति सकारलोपः । अथवा न हाविति वक्ष्यामि । तत्रेत्त्वे§ प्रतिषिद्धे साद्धित्वं धि चेति सकारलोपः ॥ एत्त्वमपि लोपापवादो¶ विज्ञास्यते न च सकारस्य लोपः प्राप्नोति ।

## हिलोप उत्त्वे ॥ ४ ॥

हिलोप उत्त्वे प्रयोजनम्+ । कुर्वित्यत्र हिलोपे कृते सार्वधातुकपर उकार इत्युत्त्वं न प्राप्नोति । असिद्धत्वाद्भवति ।

प्र०—शासूहाविति । इत्त्वबाधनाय शासिरेवादेशः शासो विधीयतेऽतो झलन्तत्वात्सिद्धं धित्वमित्यर्थः । धि चेति सकारस्य लोप इति । 'धिसकारे सिचो लोप' इति नाश्रीयते । 'चकाधी'त्येव भवतीति निर्णेष्यते । एत्त्वमपीति । श्नसोरल्लोप इत्यस्य लोपस्यापवादोऽकारस्य स्थान एत्वं विधीयते । 'श्नसोरल्लोप' इत्यस्य विषयार्थस्यानुवर्तनात्तेन लोपविषय एत्वं भवतीत्यर्थः संपद्यते तदाह—न च सकारस्येति ।

कुर्विति । 'कृ उ हि' इति स्थिते हिलुकः परत्वात्प्राग्गुणः, उत्वाच्च प्राङ् नित्यत्वाद्धिलुक्, तत उत्त्वं न प्राप्नोतीत्यसिद्धत्वात्तु हिलुको भवति ।

उ०—शासेः शास्विधानं किमर्थमत आह—इत्त्वबाधनार्थमिति । 'मो राजी'तिवदिति भावः । न चाहाविति 'न हा'विति वा न्यासे शासेर्यङ्लुकि 'शाधी'त्यसिद्धिरिति वाच्यम् । यङ्लुकश्छान्दसत्वादिति भावः । कथं पुनरेत्त्वं लोपापवादोऽत आह—श्नसोरिति । अनुवर्तनादिति । उत्सर्गसमानदेशा अपवादा इति न्यायेन तत्सिध्यति । भाष्यस्वरसोऽपि अत्रैव ।

ननूत्वमेव हि लुकः परत्वाद्भविष्यतीत्यत आह—उत्त्वाच्चेति । लुका लुप्तत्वाच्च प्रत्ययलक्षणं

* शा हौ; ध्वसोरेद्धावभ्यासलोपश्च; हुझल्भ्यो हेर्धिः ६ । ४ । ३५; ११९; १०१

† भोभगोअघोअपूर्वस्य योऽशि ८ । ३ । १७

‡ अनिदितां हल उपधाया क्ङिति ६ । ४ । २४

§ शास इदङ्हलोः ६ । ४ । ३४

¶ श्नसोरल्लोपः ६ । ४ । १११

\+ उतश्च प्रत्ययादसंयोगपूर्वात्; अत उत्सार्वधातुके ६ । ४ । १०६; ११०

एतदपि नास्ति प्रयोजनम् । वक्ष्यति× तत्र सार्वधातुकग्रहणस्य प्रयोजनं सार्वधातुके भूतपूर्वमात्रेऽपि यथा स्यादुत्त्वम् ।

तास्तिलोपेण्यणादेशा अडाड्विधौ ॥ ५ ॥

तलोपोऽस्तिलोप इणश्च यणादेशोऽडाड्विधौ प्रयोजनम्* । अकारि ऐहीति । तलोपे कृते लुङीत्यडाटौ न प्राप्नुतः । असिद्धत्वाद्भवतः । अस्तिलोप इणश्च यणादेशः प्रयोजनम् । आसन् आयन्निति । इणस्त्योर्यणलोपयोः कृतयोरनजादित्वादाड्न प्राप्नोति । असिद्धत्वाद्भवति ।

अस्तिलोपस्तावन्न प्रयोजयति । आचार्यप्रवृत्तिर्ज्ञापयति लोपादाड्बलीयानिति यदयं श्नसोरल्लोपः [ ६ । ४ । १११ ] इति तपरकरणं करोति ॥ इण्यणादेशश्चापि न प्रयोजयति । यणादेशे+ योगविभागः करिष्यते । इणो यण्भवति । तत एरनेकाचः । एश्चानेकाच इणो यण्भवति । ततोऽसंयोगपूर्वस्य यण्भवति । एरनेकाच इत्येव ॥ सर्वेषामेव परिहारः । उपदेश इति† वर्तते तत्रोपदेशावस्थायामेवाडाटौ

प्र०—तलोपे कृत इति । नित्यत्वात् । यदयमिति । तपरकरणस्य प्रयोजनमास्तामासन्नित्यादावाटि कृते 'वार्णादाङ्गं बलीय' इत्येकादेशं बाधित्वा मा भूदाकारस्य लोप इति । यदि प्राग्लोपः स्यात्ततोऽनजादित्वादाटोऽभावात्तल्लोपनिवृत्तये तपरत्वं न कर्तव्यं स्यादित्यर्थः । एरनेकाच इति । आटमन्तरेणानेकाजिण्न भवतीति पूर्वमाड्भवतीत्यनुमीयते । ईयतुरित्यादौ योगविभागमन्तरेण यणः सिद्धत्वादाड्विध्यर्थमेव योगविभागो विज्ञायते । तेन नित्योऽपि यणादेशोऽकृत आटि न भवति । तत्रोपदेशावस्थायामिति । अन्तरङ्गानपि विधीन्बाधित्वा लुङाद्युपदेश एवाडाटौ

उ०—नेति भावः । भाष्ये तत्र सार्वधातुकेति । उप्रत्ययान्तकरोतेः सार्वधातुकपरत्वाव्यभिचारादिति भावः । न चात्रोत्त्वाभावार्थं तत् । तस्यानिष्टत्वात् । लुप्तप्रत्ययनिरूपिताङ्गस्य कार्ये एव 'न लुमते'ति निषेधाच्च ।

वार्णादाङ्गं बलीय इत्येकादेशं बाधित्वेति—वस्तुस्थितिकथनम् । आटमन्तरेणेति । अनेकाजिण एर्यणित्यर्थादिति भावः । नन्वीयतुरित्यादौ द्वित्वे यणर्थं योगविभागश्चरितार्थ इति कथं ज्ञापकोऽत आह—ईयतुरित्यादौ हीति । यण इति । 'इणो य'णितीति भावः । नित्योऽपीति । योगविभागाभाव इति भावः । अन्तरङ्गानपीति । तिबाद्यपेक्षया अडाटौ लविशेषाङ्गादिबह्वपेक्षत्वाद्बहिरङ्गौ । अपिना

× ६ । ४ । ११० सूत्रभाष्यान्ते ।

* चिणो लुक्० श्नसोरल्लोपः; इणो यण्; लुङ्लङ्लृङ्क्ष्वडुदात्तः; आडजादीनाम् ६ । ४ । १०४; १११; ८१; ७१; ७२

+ एरनेकाचोऽसंयोगपूर्वस्य ६ । ४ । ८२

† स्वसिच्.........इपदेशे.........चिण्वदिट् च ६ । ४ । ६२

भवतः । अथवार्धधातुक इति‡ वर्तते । अथवा लुङ्लङ्लृङ्क्ष्वडिति द्विलकारको निर्देशः—लुङादिषु लकारादिष्विति ॥ सर्वथा ऐज्यत औप्यतेति न सिध्यति । वक्ष्यत्येतदजादीनामटा सिद्धमिति§ ।

**अनुनासिकलोपो हिलोपाल्लोपयोर्जभावश्च ॥ ६ ॥**

अनुनासिकलोपो हिलोपाल्लोपयोर्जभावश्च प्रयोजनम्* । आगहि जहि । गतः गतवानिति । अनुनासिकलोपे कृते जभावे चातो हेरतो लोप इति च लोपः प्राप्नोति । असिद्धत्वान्न भवति ।

अनुनासिकलोपस्तावन्न प्रयोजयति । अल्लोप उपदेश इति† वर्तते । यद्युपदेश इति वर्तते धिनुतः कृणुतः अत्र+ न प्राप्नोति । नैष दोषः । नोपदेशग्रहणेन प्रकृतिरभिसंबध्यते । किं तर्हि ? आर्धधातुकमभिसंबध्यते—आर्धधातुकोपदेशे यदकारान्तमिति ॥ जभावश्चापि न प्रयोजयति । हिलोपे× योगविभागः करिष्यते ।

प्र०—भवत इत्यर्थः । अथवेति । आर्धधातुकग्रहणानुवृत्तिसामर्थ्यादकृतेषु लादेशेषु लावस्थायां लब्धार्धधातुकसंज्ञायामडाटौ भवत इत्यर्थः । सर्वथेति । त्रिष्वपि परिहारेपु यज्यादीनां लावस्थायां संप्रसारणाभावादनजादित्वादाटोऽभावादट् प्राप्नोतीत्यर्थः । अटा सिद्धमिति । 'आटश्चे'ति यत्सूत्रं त'दटश्चे'ति क्रियते । 'अची'त्यधिकाराच्च हलि वृद्ध्यभावः । कथमायन्नासन्निति, यावतेणस्त्योर्यल्लोपयोः कृतयोर्वृद्धिर्नास्ति । अन्तरङ्गत्वाद्वृद्धिर्भविष्यतीत्यदोषः । नानाश्रयत्वाच्च 'वार्णादाङ्गं बलीय' इति नास्ति । कृतायां वृद्धावासन्निति तपरकरणादाकारलोपाभावः । इणोऽपि वृद्धेरैकारस्य यण्न भविष्यति । 'इणो यण्' 'ए'रिति योगविभागादिकारान्तस्येणो यण्विधानात्तदभावाच्चायादेशे कृत आयन्निति भविष्यति ।

आर्धधातुकोपदेश इति । आर्धधातुकोपदेशकाले यदकारान्तमङ्गं तस्यार्धधातुके परतो लोप इति सूत्रार्थः । तत्र 'धिन्विकृण्व्योर च'त्युप्रत्ययसंनियोगेनाकारस्य विधानादकारान्तत्वं

उ०—परनित्यावपि । अकृतेष्विति । कृतेषु तेषु तिङ्शित्सार्वधातुकत्वादिति भावः । यण्लोपयोरिति । वृद्धेः पूर्वं परत्वादिति भावः । अन्तरङ्गत्वादिति । वार्णत्वाल्लादेशेभ्यः प्रागेवेति भावः । नानाश्रयत्वादिति भिन्नकालत्वादित्यर्थः । योगविभागादिति । 'इणो य'णित्यत्र 'ए'रित्यपकृष्य संबध्यत इति तत्त्वम् ।

आर्धधातुकोपदेशेति । तत्फलं तु पत् । पयतेः क्विप् । नन्वनन्तरस्येति न्याया'दुत' इत्यस्यैव शेषः

‡ । आर्धधातुके ६ । ४ । ४६ § ६ । ४ । ७४ श्लोकवार्तिकम् ।

* : अनुदात्तोपदेश·········झलि क्ङिति; हन्तेर्जः; अतो हेः; अतो लोपः ६ । ४ । ३७; ३६; १०५; ४८ † अनुदात्तोपदेश·········झलि क्ङिति ६ । ४ । ३७

+ धिन्विकृण्व्योर च ३ । १ । ८० × उतश्च प्रत्ययादसंयोगपूर्वात् ६ । ४ । १०६

अतो हेः । तत उतश्च । उतश्च हेर्लुग्भवतीति । ततः प्रत्ययात् । प्रत्ययादित्युभयोः शेषः ।

अथ किमर्थमनुनासिकलोपो हिलोपाल्लोपयोर्जभावश्चेत्युच्यते नानुनासिकलोपजभावाल्लोपहिलोपयोरित्येवोच्येत । संख्यातानुदेशो§ मा भूदिति । अनुनासिकलोपो हिलोपे प्रयोजयति । मण्डूकि ताभिरागहि । शेहिर्देश्च इहागहि[2] । मरुद्भिरग्न आगहि[3] ।

## संप्रसारणमवर्णलोपे ॥ ७ ॥

संप्रसारणमवर्णलोपे प्रयोजनम् । मघोनः पश्य । मघोना मघोने । संप्रसारणे कृते यस्येति लोपः प्राप्नोति* । असिद्धत्वान्न भवति ॥ नैतदस्ति प्रयोजनम् ।

प्र०—धिन्विकृण्व्योरार्धधातुकोपदेशे भवतीति सिध्यत्यल्लोपस्तस्य च परनिमित्तकत्वात्स्थानिवद्भावाद्धिनुत इत्यादौ गुणाभावः । प्रत्ययादित्युभयोः शेष इति । समुदायापेक्षणात् । असंयोगपूर्वादित्यत्र तु भेदेनापेक्षणादानन्तर्या'दुत' इति संबध्यते न 'त्वत' इति । संख्यातानुदेशो मा भूदिति । यद्यपि प्रयोजनाख्यानपरत्वाद्वाक्यस्य यथासंख्याभावस्तथापि क्रमस्यान्यत्र व्यवस्थाहेतुत्वदर्शनादिहापि तदाशङ्का स्यादिति तन्निवारणायैवं निर्देशः कृतः । आगहीति । अत्रापि 'प्रत्यया'दित्यस्योभयोः शेषत्वाद्धेर्लुगभावः सिध्यति ।

मघोन इति । मघमस्यास्तीति 'च्छन्दसीवनिपा'विति वनिप् । 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषया संप्रसारणस्यासिद्धत्वं नास्ति । एषा हि परिभाषा 'वाह ऊ'डित्यत्र ज्ञापितत्वादाभाच्छास्त्रीया तस्यां प्रवर्तमानायामकारलोपसंप्रसारणयोरसिद्धत्वादन्तरङ्गबहिरङ्गयो-

उ०—स्यादत आह—समुदायेति । न चैवं कादिभ्य आचारक्विबन्तेभ्यो हय्धातोश्च यङ्लुकि यलोपे हिलोपानापत्तिः । अनभिधानेन तेभ्यो यङ्लुक एवाभावादित्याहुः । यद्यपीति । शास्त्रीयकार्य एव परिभाषाप्रवृत्तिरिति भावः । क्रमस्यान्यत्रेति 'आद्यन्ता'वित्यादौ व्याकरणशास्त्रे समासवाक्ये यथासंख्यप्रवृत्त्या क्रमिकसंबन्धदर्शनादस्यापि तच्छास्त्रीयवाक्यत्वेन तदाशङ्का स्यादित्यर्थः । सिध्यतीति । तथा च नेदं प्रयोजनमिति भावः ।

नन्वन्तरङ्गे 'यस्येति'लोपे कर्तव्ये विभक्त्यपेक्षबहिरङ्गसंप्रसारणस्यासिद्धत्वादल्लोपाभावः सिद्धोऽत आह—असिद्धमिति । नाजान्तर्येति । 'भस्ये'त्यधिकाराद् 'यस्येति'लोपोऽजानन्तर्याश्रयः । अत्राद्यमेव

§ यथासंख्यमनुदेशः समानाम् १ । ३ । १०

१—बहुलं छन्दसि २ । ४ । ७३ इति शपो लुक् ।

२—यजु० ११ । ७२; तै० सं० ४ । १ । ६ । ३; मै० सं० २.७।७; शत० ब्रा० ६।६।३।४

३—ऋ० सं० १ । १६ । १–६; साम० १।२।६। (१६); मै० सं० ४।११।२; निरु० १०।३६

* श्वयुवमघोनामतद्धिते; यस्येति च ६ । ४ । १३३; १४८

वक्ष्यत्येतन्मघवन्शब्दोऽव्युत्पन्नं प्रातिपदिकमिति† ।

रेभाव आल्लोपे ॥ ८ ॥

रेभाव आल्लोपे प्रयोजनम् । किं स्विद्गर्भं प्रथमं दध्र आपः । रेभावे‡ कृत आतो लोप इटि च [ ६ । ४ । ६४ ] इत्याकारलोपो न प्राप्नोति । असिद्धत्वाद्भवति ।

एतदपि नास्ति प्रयोजनम् । छान्दसो रेभावो लिट् च च्छन्दसि सार्वधातुकमपि भवति । तत्र सार्वधातुकमपिन्ङिद्भवतीति× ङित्त्वं श्नाभ्यस्तयोरातः [ ६ । ४ । ११२ ] इत्याकारलोपो भवति ।

यदि तर्ह्ययं योगो नारभ्यते

उत्तु कृञः कथमोर्विनिवृत्तौ

इह कुर्वः कुर्मः कुर्यादित्युकारलोपे कृते सार्वधातुकपर उकार इत्युत्त्वं न प्राप्नोति§ ।

प्र०—र्युगपदनुपस्थाना'न्नाजानन्तर्य' इति प्रतिषेधाद्वा । अव्युत्पन्नमिति । ततश्च तद्धिते विधीयमानोऽकारलोपो न भवति । व्याश्रयत्वादसिद्धत्वमपि न स्यादित्यव्युत्पत्तिपक्ष एवाश्रयणीयः ।

रेभावे कृत इति । नित्यत्वात् । लिट् चेति । सार्वधातुके शपः श्लौ द्विर्वचनेऽघोरितीत्वनिषेधादाकारलोपः ।

वार्तिककारोक्तेषु प्रयोजनेषु प्रत्याख्यातेषु श्लोकवार्तिककारोक्त प्रयोजनोपक्षेपः । उत्तु कृञ इति । सार्वधातुकपर इति । अथ सार्वधातुक एव परतः कस्मादुत्त्वं न क्रियते । नैवं शक्यम् । उकारलोप एव सत्युत्त्वं स्यात् 'कुरुत' इत्यादौ तु विकरणेन व्यवधानान्न स्यात् ।

उ०—समाधानं युक्तम् । 'नाजानन्तर्य' इत्यस्याः सिद्धान्त्यसंमतत्वादिति बोध्यम् । अव्युत्पत्तिपक्षस्यावश्याश्रयणीयतां दर्शयति—आश्रयत्वादिति । वनन्तस्य तु संप्रसारणविषये प्रयोग एव नास्तीति भावः ।

अघोरितीति । 'ई हल्यघो'रित्यस्याभावे 'श्नाभ्यस्तयो'रित्याल्लोप इति भावः । द्वित्वं तु 'श्लौ'वित्यनेन ।

वार्तिककारः कात्यायनः । श्लोकवार्तिककारस्त्वन्य एवेति भावः । एवं प्रयोजनाभावादस्य योगस्यानारम्भत्वे स्थिते श्लोकवार्तिककृता प्रयोजनान्युक्तानीति संगतिं दर्शयति—प्रत्याख्यातेष्वित्यनेन । भाष्ये सार्वधातुकपर उकार इति । 'अत उ'दिति सूत्रे 'उतश्च प्रत्ययादित्यत 'उत' इत्यनुवृत्तं सप्तम्या विपरिण-

† ४ । १ । ७ पृ० ४६४ पं० ४.

× सार्वधातुकमपित् १ । २ । ४

§ नित्यं करोतेः; ये च; अत उत्सार्वधातुके ६ । ४ । १०८—११०

‡ इरयो रे ६ । ४ । ७६

१—'नास्ति' पा० ।

णेरपि चेटि कथं विनिवृत्तिः ।

इह च कारयतेः कारिष्यते* णेरनिटि [ ६ । ४ । ५१ ] इति णिलोपो न प्राप्नोति ।

अनुवतस्तव योगमिमं स्याल्लुक्च चिणो नु कथं न तरस्य ॥

इह च अकारितराम् अहारितरामिति चिण उत्तरस्य तरस्य लुकथं न स्यात्† ।

चं भगवान्कृतवांस्तु तदर्थं तेन भवेदिटि णेर्विनिवृत्तिः ।

इह स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च [ ६ । ४ । ६२ ] । किं च ? णिलोपश्च ।

प्र०—'कुर्व' इत्यादावपि स्थानिवद्भावाद्व्यवधानमिति चेत्, न, वचनादीदृशं व्यवधानमाश्रीयते । ननु च सार्वधातुकपर उकार इत्याश्रीयमाणे नित्यत्वात्कृतेऽप्युकारलोपे तल्लोपस्य स्थानिवद्भावादुत्त्वं भविष्यति । अत्र हि परत्वाद्गुणे कृत उकारलोपः । ततश्चानादिष्टादचः पूर्वस्य विधावस्त्येव स्थानिवद्भावः । प्रत्ययलक्षणं तु वर्णाश्रयत्वान्मा भूत् । एवं तर्हि परिहारान्तरस्य वक्ष्यमाणत्वात्स्थानिवत्त्वं भाष्यकृता नाश्रितम् । अथवा नित्यत्वात्पूर्वमुकारलोपः, पश्चाद्गुणः । कृते ह्युकारलोपे प्रत्ययलक्षणमिति गुणेन भाव्यम् । ततो 'लक्षणान्तरेण च प्राप्नुवन्विधिरनित्य' इति गुणस्यानित्यत्वम् । ततश्चादिष्टादचः पूर्वोऽकार इति तद्विधौ नास्ति स्थानिवद्भावः । ननु व्याश्रयत्वादुकारलोपस्यासिद्धत्वं न प्राप्नोति । म्वोरुकारलोपविधानात्सार्वधातुके परत उत्त्वविधानात् । नैतदस्ति । मकारवकारादौ प्रत्यय उकारलोपविधानादस्त्येव समानाश्रयत्वम् । कारिष्यत इति । प्रकृतिप्रत्ययाश्रयत्वादिण्णिलोपयोः समानाश्रयत्वम् ।

'चं भगवा'नित्यादिना प्रयोजननिराकरणम् । इट् चेति । चकारेण णिलोपो विधीयत

उ०—म्यत इति भावः । उकारान्तस्य करोतेरित्यर्थस्तु न । करोतिशब्दबोधितधातोस्तदन्तत्वासंभवात् । तत्रानुवृत्तिमकृत्वा सार्वधातुक एवोत्त्वं विधीयतामिति शङ्कते—अथेति । स्थानिवद्भावादिति । तथा च वचनादुकारव्यवधानं सहिष्यत इत्यर्थः । ईदृशमिति । स्थानिवद्भावकृतम्, न तु श्रौतमित्यर्थः । स्थानिवद्भावादिति । 'अचः परस्मि'न्नित्यनेन । ननु पूर्वमुकारलोपे पश्चाद्गुणेऽकारस्यादिष्टादचः पूर्वस्योत्त्वविधानात्कथं स्थानिवत्त्वमत आह—अत्र हीति । ननु कृताकृतप्रसङ्गित्वाद्गुणोऽपि नित्योऽत आह—कृते हीति । प्रत्ययलक्षणमिति । कार्यातिदेशादिति भावः । म्वोरुकारेति । तदीयनिमित्तसमुदायापेक्षयास्याधिकनिमि-

* स्यसिच्सीयुट्..........चिण्वदिट् च ६ । ४ । ६२

† चिणो लुक् ६ । ४ । १०४

" ण्वोरपि ये च तथाप्यनुवृत्तौ

इहापि कुर्वः कुर्मः कुर्यादिति ण्वोर्ये चेत्येतदप्यनुवर्तिष्यते* ।

चिएलुकि च क्ङित एव हि लुक्स्यात् ॥

चिएलुक्यपि प्रकृतं क्ङिद्ग्रहणमनुवर्तते । क्व प्रकृतम् ? गमहनजनखनघसां लोपः क्ङित्यनङि [ ६ । ४ । ९८ ] इति । तद्वै सप्तमीनिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः । चिण इत्येषा पञ्चमी क्ङितीति सप्तम्याः षष्ठीं प्रकल्पयिष्यति तस्मादित्युत्तरस्य [ १ । १ । ६७ ] इति ।

उत्तु कृञः कथमोर्विनिवृत्तौ णेरपि चेटि कथं विनिवृत्तिः ।
अब्रुवतस्तव योगमिमं स्याल्लुक्च चिणो नु कथं न तरस्य ॥
चं भगवान्कृतवांस्तु तदर्थं तेन भवेदिटि णेर्विनिवृत्तिः ।
ण्वोरपि ये च तथाप्यनुवृत्तौ चिएलुकि च क्ङित एव हि लुक्स्यात् ॥

आरभ्यमाणेऽप्येतस्मिन्योगे

प्र०—इत्यर्थः । ण्वोरिति । 'अत उत्सार्वधातुके' इत्यत्र 'ण्वोर्ये चे'त्यनुवर्तनात्कृत उकारलोपेऽत उत्त्वं भविष्यतीत्यर्थः । मकारादिभिश्च वाक्यभेदेन सार्वधातुकस्य विशेषणात्कुरुत इत्यादावुत्त्वं भवत्येवेति भावः ।

आरभ्यमाणेऽपीति । अनेकपरिहाराश्रयणे प्रतिपत्तिगौरवं मा भूदित्येवमर्थमारभ्यमाण इत्यर्थः ॥ पपुष इति । ननु चान्तरङ्गत्वादिटा भाव्यम् । न च संप्रसारणे कृतेऽपीटोऽनिवृत्तिः । 'निमित्ताभावे नैमित्तिकस्याप्यभाव' इत्यस्याः परिभाषाया भाष्यकारेणानाश्रयणात् । तथा च 'चा'वित्यत्रोक्तम्—'इहान्ये चौ प्रत्यङ्गस्य प्रतिषेधमारभन्ते तदिहापि साध्य'मित्यकारस्य निवृत्तावपि यणाद्यादेशानिवर्तनाचैतदुक्तम् । तथा 'च्छ्वो'रित्यत्रोक्तम्—'अवश्यमत्र तुगभावार्थो

उ०—त्तकत्वादिति भावः । मकारवकारादाविति । 'अङ्गस्ये'ति स्थानषष्ठ्या निमित्त इत्यध्याहारेणाङ्गनिमित्ते मकारवकारादावित्यर्थं इति भावः । कारिष्यत इति । चिणवदिद ।

ननु मकारवकारादौ प्रत्यय इत्यर्थे कृञो मनिनि गुण उत्वं स्यादेवैतदेकवाक्यतयाऽन्वये 'कुरुत' इत्यादौ न स्यादत आह—मकारादिभिश्चेति । माद्यादौ सार्वधातुके गुण इत्यर्थ इति भावः ।

ननु प्रयोजनाभावादनारम्भे साधिते आरम्भोक्तिर्न युक्तेत्यत आह—अनेकेति । प्रतिषेधमारभन्त

* लोपश्चास्यान्यतरस्यां म्वोः; ये चः अत उत्सार्वधातुके ६ । ४ । १०७; १०९; ११०

१—"भाष्ये-चिण इत्येषेति । एकदेशयुक्तिरियम् तत्पक्षस्य दूषितत्वात् ।" इत्युद्योतेऽधिकं क्वचित् ।

## सिद्धं वसुसंप्रसारणमज्विधौ ॥ ९ ॥

वसोः संप्रसारणमज्विधौ सिद्धं वक्तव्यम् । किं प्रयोजनम् ? पपुषः पश्य तस्थुषः पश्य । निन्युषः पश्य चिच्युषः पश्य । लुलुवुषः पश्य पुपुवुषः पश्येति । वसोः संप्रसारणे कृतेऽचीत्याकारलोपादीनि यथा स्युरिति* । किं पुनः कारणं न सिध्यन्ति ?

## बहिरङ्गलक्षणत्वादसिद्धत्वाच्च ॥ १० ॥

बहिरङ्गलक्षणं चैव हि वसुसंप्रसारणमसिद्धं च ।

## आत्वं यलोपाल्लोपयोः पशुषो न वाजान् चाखायिता चाखायितुम् ॥११॥

आत्वं यलोपाल्लोपयोः सिद्धं वक्तव्यम् । किं प्रयोजनम् ? पशुषो न वाजान् । पशुष† इत्यात्वस्यासिद्धत्वादातो धातोः [ ६ । ४ । १४० ] इत्याकारलोपो न प्राप्नोति । चाखायिता‡ चाखायितुमित्यात्वस्यासिद्धत्वाद्यस्य हलः [६ । ४ । ४९] इति यलोपः प्राप्नोति ।

## समानाश्रयवचनात्सिद्धम् ॥ १२ ॥

समानाश्रयमसिद्धं भवति व्याश्रयं चैतत् । इह तावत्पपुषः पश्य तस्थुषः पश्य निन्युषः पश्य चिच्युषः पश्य लुलुवुषः पश्य पुपुवुषः पश्येति वसावाकारलोपादीनि

---

प्र०—यत्नः कर्तव्योऽन्तरङ्गत्वाद्धि तुकः प्राप्तिरिति कृतेऽपि शकारे कृतस्य तुकोऽनिवृत्तिं मत्वा चैतदुक्तम् । एवं तर्हि नित्यशब्ददर्शने प्रविभज्यावयवेषु कल्प्यमानेष्वन्तरङ्गबहिरङ्गभावो नास्तीति 'प पा वस् अस्' इति स्थिते नित्यत्वादिटं बाधित्वा संप्रसारणं भवत्यल्विधित्वाच्च स्थानिवत्त्वाभावादिटोऽप्रसङ्गः । अथवा 'संप्रसारणं तदाश्रयं च बलीयो भवती'त्यत्र विषये पूर्वमिट् न प्रवर्तते ।

---

उ०—इति । उक्तपरिभाषासत्त्वे हि तदारम्भो व्यर्थ एव स्यात् । ननु प्रविभज्यान्वाख्यानेऽप्यन्तर्भूतनिमित्तत्वादिनान्तरङ्गत्वं वक्तुं शक्यमेवेत्यरुचेराह—अथवेत्यादि । 'लिट्यभ्यासस्ये'ति सूत्रस्थभाष्यविरुद्धमिदम् । तस्माद्विभज्यान्वाख्याने इटः पूर्वं प्रतिपदविधित्वेन शीघ्रोपस्थिततया संप्रसारणे ततोऽन्तरङ्गपरिभाषाया अनित्यत्वात्प्रतिपदविधिविषये तदप्रवृत्तेश्चेडभावे वस्निमित्तक एवाल्लोप इत्याशयः ।

---

* वसोः सम्प्रसारणम्; आतो लोप इटि च; एरनेकाचोऽसंयोगपूर्वस्य; अचिश्नुधातुभ्रुवां य्वोरियङुवङौ ६ । ४ । १३१; ६४; ८२; ७७

† जनसनखनक्रमगमो विट् ३ । २ । ६७; विड्वनोरनुनासिकस्यात् ६ । ४ । ४१

‡ ये विभाषा ६ । ४ । ४३

वस्वन्तस्य विभक्तौ संप्रसारणम् । पशुष इति विटचात्त्वं विडन्तस्य विभक्तावाकारलोपः । चाखायिता चाखायितुमिति यङ्चात्त्वं यङन्तस्य चार्धधातुके लोप इति ।

किं वक्तव्यमेतत् ? न हि । कथमनुच्यमानं गंस्यते ? अत्रग्रहणसामर्थ्यात् ॥ ननु चान्यदत्रग्रहणस्य प्रयोजनमुक्तम् । किमुक्तम् ? अत्रग्रहणं विषयार्थमिति§ । अधिकारादप्येतत्सिद्धम् ।

इह पपुषः चिच्युषः लुलुवुषः द्वौ हेतू व्यपदिष्टौ बहिरङ्गलक्षणत्वं चासिद्धत्वं चेति । तत्र भवेदसिद्धत्वं प्रत्युक्तं बहिरङ्गलक्षणं तु नैव प्रत्युक्तम् । नैष दोषः ।

प्र०—पशुष इति । पशुं सनोतीति 'जनसने'ति विट् । 'विड्वनो'रित्यात्त्वम् । तस्यासिद्धत्वात् 'आतो धातो'रित्याकारलोपाप्रसङ्गः । लक्षणप्रतिपदोक्तपरिभाषा त्वाल्लोपे नाश्रीयतेऽव्याप्तिप्रसङ्गात् । चाखायितेति । खनो यङि द्विर्वचनात्परत्वाद् 'ये विभाषे'त्यात्वे द्विर्वचने च तृचि रूपम् । अधिकारादपीति । ततश्चाभाद्ग्रहणविषयार्थ मत्र'ग्रहणं तु समानाश्रयत्वप्रसिद्धयर्थं संपद्यते ।

असिद्धत्वं प्रत्युक्तमिति । समानाश्रयत्वपरिग्रहात् । बहिरङ्गलक्षणं त्विति । यद्यपि 'नाजानन्तर्ये' इत्ययमत्र निषेधोऽवतरति तथापि परिभाषायाः कारणाभावात्प्रसङ्ग एव नास्तीति प्रतिपादयितुमुपन्यासः । प्रतिद्वन्द्विभाविनाविति । न हि वस्त्वन्तरानपेक्षमन्तरङ्गं बहिरङ्गं वा स्वभावसिद्धं किंचिदस्ति । परस्परापेक्षया युगपत्प्राप्तौ तयोरवस्थानाद्यथा 'स्योन' इत्यत्र यण्गुणयोः पपुष इत्यादौ तु युगपत्प्राप्तिर्नास्ति संप्रसारणप्राप्तिकाले आल्लोपादीनां निमित्ताभावादप्रसङ्गः । आल्लोपप्राप्तिकाले च निर्वृत्तं संप्रसारणम् । ततश्च निमित्तमेवाल्लोपादीनां संप्रसारणमिति नास्ति परिभाषोपस्थानमित्यर्थः । यद्येवं 'पचावेद'मित्यादावपि नाकृते आद्गुणे 'एत ऐ' इत्यैत्वं प्राप्नोतीति निमित्तनिमित्तिभावात्परिभाषाया अनुपस्थानप्रसङ्गः । एवं तर्ह्यन्यथा व्याख्यायते । 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्येषा परिभाषा 'वाह ऊ'ठित्यत्र ज्ञापितेत्याभा-

उ०—लक्षणेति । एवं च लक्ष्यानुसारेण सात्र नाश्रीयत इत्यर्थः । अत एव 'क्षीरं पयन्ति तान्पश्ये'-त्यर्थे 'क्षीरधः पश्य'त्यादिसिद्धिः । 'ततश्चेति । अधिकारादाभीयस्यासिद्धत्वे सिद्धे आभाद्ग्रहणमाभीये कर्तव्य इत्यर्थरूपविषयलाभार्थमिति अत्रग्रहणं समानाश्रयत्वार्थमिति भावः । समानाश्रयत्वेति । समानाश्रयत्वं च तत्प्रयोगप्राप्तासिद्धत्वाश्रयशास्त्रीयनिमित्तसमुदायापेक्षयान्यूनानतिरिक्ताश्रयकत्वम् । आश्रयश्च स्थानित्वेनैव निमित्तत्वेनैवेति नाग्रहः । किं तु यथाकथंचित् । विकारकृतमतिरिक्तत्वं तु न । 'जही'त्यादेरनुदाहरणत्वापत्तेः । तत्र 'पपुष' इत्यत्र न्यूनः, चाखायितेत्यादावधिकः, अतिरिक्तमपि पूर्वविध्युपात्ततावच्छेदकरूपेणाश्रितं चेत्तदपि समानाश्रयमेव, समानशब्दस्वारस्यात् । अत एव चिणो लुकि चिणो लुगसिद्ध इति संगच्छते । एवं च 'स्त्री इयती'त्यत्रेदम्संबन्धीशस्थानिक'यस्ये'तिलोपीयनिमित्तसमुदायापेक्षया 'स्त्रिया' इति इयङि अधिकस्य स्त्रीशब्दस्यापेक्षणादङ्गसंज्ञासूत्रस्थविधिग्रहणस्य तत्प्रयोजनमाकरोक्तं संगच्छत इत्याहुः ।

§ ६ । ४ । २२ वा० २ । १—"अन्यासीति । पशुष इत्यादाविति भावः ।" इत्युद्द्योतेऽधिकं क्वचित् ।

बहिरङ्गमन्तरङ्गमिति च प्रतिद्वन्द्विभाविनावेतावर्थौ । कथम् ? सत्यन्तरङ्गे बहिरङ्गं सति च बहिरङ्गेऽन्तरङ्गम् । न चात्रान्तरङ्गबहिरङ्गयोर्युगपत्समवस्थानमस्ति । नानभिनिर्वृत्ते बहिरङ्गेऽन्तरङ्गं प्राप्नोति । तत्र निमित्तमेव बहिरङ्गमन्तरङ्गस्य ।

ह्रस्वयलोपाल्लोपाश्चायादेशे ल्यपि ॥ १३ ॥

ह्रस्वयलोपाल्लोपाश्चायादेशे ल्यपि सिद्धा वक्तव्याः । प्रशमय्य गतः प्रतमय्य गतः । प्रबेभिदय्य गतः प्रचेच्छिदय्य गतः । प्रस्तनय्य गतः प्रगदय्य गतः । ह्रस्वयलोपाल्लोपानामसिद्धत्वाल्ल्यपि लघुपूर्वात् [ ६ । ४ । ५६ ] इत्ययादेशो

प्र०—चछाञ्जीया । अथवा 'विप्रतिषेधे परं कार्य'मित्यत्रोपसंख्यातापि संज्ञापरिभाषाणां कार्यकालत्वाद्वसुसंप्रसारणादेशत्वादभाच्छाञ्जीया, आभाच्छाञ्जीयेत्वाल्लोपादिषु कर्तव्येषु 'असिद्धे'ति न प्रवर्तते । तदप्रवृत्तौ चाल्लोपादीनि भवन्तीति वाक्यार्थः, पदान्यस्मिन्नर्थे योज्यन्ते । सत्यन्तरङ्ग इति । बुद्ध्यापेक्षित इत्यर्थः । तत्र निमित्तमेवेति । परिभाषाया असिद्धत्वादप्रवृत्ताविति भावः । वसुसंप्रसारणं चैकं परिभाषाया आल्लोपादीनां चाश्रय इति समानाश्रयत्वाद्भवत्यसिद्धत्वं परिभाषायाः ।

प्रशमय्येति । ह्रस्वस्यासिद्धत्वाल्लघुपूर्वो मकारो न भवतीत्ययादेशो न प्राप्नोति । प्रबेभिदय्येति । भिदेर्यङन्ताण्णिच् । तत्र यलोपस्यासिद्धत्वाल्लघुपूर्वादुत्तरो णिज् न भवति यकारेण व्यवधानादित्ययादेशाप्रसङ्गः । प्रस्तनय्येति । अदन्ताधिकारे 'स्तनगदी देवशब्द' इति

उ०—यद्यपि नाजानन्तर्येति । वस्तुत इयं सिद्धान्त्यसंमतेत्यसकृदावेदितम् । परस्परापेक्षयेत्यस्य तयोरित्यनेनान्वयः । तयोरन्तरङ्गत्वबहिरङ्गत्वयोर्युगपत्प्राप्तौ । 'लक्ष्ये' इति शेषः । तयोरित्यस्यावृत्त्या तयोरन्तरङ्गबहिरङ्गयोर्युगपल्लक्ष्ये प्राप्तौ परस्परापेक्षया तयोरन्तरङ्गत्वबहिरङ्गत्वावस्थानादित्यर्थः । स्योन इति । अत्र सिवेर्बाहुलकान्नप्रत्यये 'च्छ्वो'रित्यूठि, इकारस्य लघूपधगुणो यण् च प्राप्नोति । वाह ऊठित्यत्रेति । एतदेव युक्तम् । अथवेति तु प्रौढ्या । कर्तव्येष्वसिद्धेति । तद्दृष्ट्या तयोरप्यसिद्धत्वमित्यपि बोध्यम् । एतदपि 'मघोन' इति प्रतीके कैयटेन स्पष्टमुक्तम् । इति वाक्यार्थ इति । तात्पर्यार्थ इत्यर्थः । बुद्ध्यापेक्षित इति । परिभाषाप्रवृत्तयेऽन्तरङ्गबहिरङ्गयोः परिभाषायाश्च विद्यमानत्वेन बुद्धिसंनिधिरपेक्षितः । अत्र स्वसिद्धत्वात्परिभाषायाः परिभाषादृष्ट्या तयोरप्यसिद्धत्वान्न तथा बुद्धौ संनिधानमिति भावः । ( भाष्ये ) न युगपत्समवधानमस्तीत्यनेनासिद्धत्वाद्विद्यमानत्वेन बुद्धौ संनिधानं नास्तीत्येव विवक्षितम् । नानभिनिर्वृत्त इत्यस्य तथा बुद्धिविषयत्वमप्राप्त इत्यर्थः । अन्तरङ्गं प्राप्नोतीत्यस्यान्तरङ्गत्वेन बुद्धिविषयत्वं प्राप्नोतीत्यर्थः । अप्रवृत्ताविति परिभाषाया अप्रवृत्तौ सत्यां बहिरङ्गं संप्रसारणमन्तरङ्गलोपस्य निमित्तमित्यर्थ इति भावः । परे तु तत्र निमित्तमेवेति भाष्यस्य परिभाषाया अनित्यत्वादित्यर्थः । एवं चासिद्धवत्सूत्रप्रत्याख्यानेऽपि न दोष इत्याहुः ।

प्रशमय्येति । शमेर्णिचि उपधावृद्धिर्मितां ह्रस्वः, क्त्वो ल्यप् । भिदेरिति । 'बेभिद इ य' इति

न प्राप्नोति* ।

अत्राप्येष परिहारः समानाश्रयवचनात्सिद्धमिति । कथम् ? णावेते विधयो णेर्ल्यप्ययादेशः ।

वुग्युटावुवङ्यणोः ॥ १४ ॥

वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ । बभूवतुः बभूवुः । वुकोऽसिद्धत्वादुवङादेशः प्राप्नोति† । उपदिदीये उपदिदीयाते । युटोऽसिद्धत्वाद्यणादेशः प्राप्नोति‡ ।

वुकस्तावन्न वक्तव्यम् । वुकं न वक्ष्यामि । एवं वक्ष्यामि भुवो लुङ्लिटोरूदुपधाया इति§ । अत्रोवङादेशे कृते योपधा तस्या ऊत्त्वं भविष्यति ।

एवमपि कुतो नु खल्वेतदुवङादेशे कृते योपधा तस्या ऊत्त्वं भविष्यति न पुनः सांप्रतिकी योपधा तस्याः स्यादकारस्येति । नैष दोषः । ओरिति × वर्तते तेनोवर्णस्य भविष्यति ।

प्र०—पठ्येते । तत्राल्लोपस्यासिद्धत्वादकारेण व्यवधानादयादेशाप्राप्तिः ।

बभूवतुरिति । भू अतुस् वुक्, तस्यासिद्धत्वादुवङ् प्राप्नोति । ननु च नाप्राप्त उवङि वुगारभ्यमाणस्तस्यापवादो भवति 'सत्यपि संभवे बाधनं भवती'त्येष न्यायः । नैतदस्ति । बाधकप्रवृत्त्यवस्थायां यद्विद्यते तद्बाधकेन निर्वर्तितं न प्रवर्तते उवङ् तु निरवकाशत्वात्प्रवर्तमाने वुक्यसिद्धत्वादात्मानमदर्शयन्न शक्यो बाधितुमिति वुकि कृते तस्यासिद्धत्वात्प्रवर्तते । तेनोवर्णस्येति ।

उ०—स्थितेऽल्लोपयलोपयोरयादेश इष्यते । [1]अदन्तेति । चुरादावित्यर्थः ।

ननु कृतेऽपि उवङि वुकः प्रवृत्तिसंभवाद् विरोधाभावेन कथं बाधकत्वमत आह—सत्यपीति । न चात्रोवङ्यप्युपधायां चेति दीर्घे वलि लोपे बभूवतुरित्यादिसिद्धिः । बहिरङ्गवुकोऽसिद्धत्वेन वलोपाप्राप्तेरिति भावः । तद्बाधकेनेति । यथा केनाण् । [2]न'न्विन्धिभवतिभ्या'मिति कित्वाज्झिटो गुणवृद्ध्यभावे

* मितां ह्रस्वः; यस्य हलः; अतो लोपः ६ । ४ । ९२; ४९; ४८
† भुवो वुग्लुङ्लिटोः; अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ६ । ४ । ८८; ७७
‡ दीङो युडचि क्ङिति; एरनेकाचोऽसंयोगपूर्वस्य ६ । ४ । ६३; ८२
§ ऊदुपधाया गोहः ६ । ४ । ८९ × ओः सुपि ६ । ४ । ८३

१—"यद्यप्यत्रोभयलोपस्तथापि वार्तिकेऽल्लोपमात्रोक्त्या नैतत्सिद्धिः, यलोपासिद्धत्वस्य सत्त्वात् । अतो यलोपोऽपि तत्रोपात्तः । एवं चाभयोरिदमुदाहरणं बोध्यम् । अत एव समुदितमेव व्याख्यातं भाष्ये ।" इत्युद्द्योतेऽधिकं क्वचित् ।

२—"भाष्ये—एवं वक्ष्यामीति । भुवो लुङ्लिटोरुदुपधायाः । ततः—'गोहः' इति योगविभागं करिष्यामीत्यर्थः । तदपकृष्य तत्र व्याख्यास्यामीत्यर्थो वा ।" इत्युद्द्योतेऽधिकं क्वचित् ।

भवेत्सिद्धं बभूवतुः बभूवुः, इदं तु न सिध्यति बभूव बभूविथेति। किं कारणम्? गुणवृद्धचोः× कृतयोरुवर्णाभावात्। नात्र गुणवृद्धी प्राप्नुतः। किं कारणम्? क्ङिति च [ १ । १ । ५ ] इति प्रतिषेधात्। कथं कित्त्वम्? इन्धिभवतिभ्यां च [ १ । २ । ६ ] इति। तद्वै वयं कित्त्वं प्रत्याचक्ष्महे वुका। इह तु कित्त्वेन वुक्प्रत्याख्यायते। किं पुनरत्र न्याय्यम्? वुग्वचनमेव न्याय्यम्। सत्यपि हि कित्त्वे स्यातामेवात्र गुणवृद्धी। किं कारणम्? इग्लक्षणयोर्गुणवृद्धचोः स प्रतिषेधो न चैषेग्लक्षणा वृद्धिः।

एवं तर्हि नार्थो वुका नापि कित्त्वेन। स्तामत्र गुणवृद्धी गुणवृद्धचोः कृतयोरवावोश्च कृतयोर्योपधा तस्या ऊत्त्वं भविष्यति। कथम्? ओरित्यत्रावर्णमपि प्रतिनिर्दिश्यते*। इहापि तर्हि प्राप्नोति—कीलालपः पश्य, शुभंयः पश्येति। लोपोऽत्र

प्र०—उवर्णस्य उपधाया ऊद्भवतीत्येवमाश्रयणादुवङि च कृत उवर्ण उपधा भवति नान्यथा। 'इन्धिभवतिभ्यां चे'ति कित्त्वं प्रत्याख्यातमिति मत्वाह—भवेत्सिद्धमिति। तद्वै कित्त्वं वयमिति।'भुवो वुको नित्यत्वा'दिति न्यायात्। इह तु कित्त्वेनेति। 'क्ङिति चे'ति गुणवृद्धिनिषेधादुवङि च कृत उवर्णस्योत्वविधानात्। स्यातामेवेति। गुणग्रहणं प्रसङ्गोच्चारितं गुणस्येग्लक्षणत्वात्सिध्यति हि प्रतिषेधः। न चैषेति। 'अचो ञ्णिती'त्यत्रेक इत्यनुपस्थानादिग्लक्षणत्वाभावः। ओरित्यत्रावर्णमिति। अकारोकारयोराद्गुणे कृते 'ङसिङसोश्चे'ति पूर्वैकादेशेन निर्देशात्। इहापीति। 'ओः सुपी'त्यत्रावर्णस्यापि निर्देशाद्यण्प्रसङ्गः। लोपोऽत्रेति। परत्वादिति भावः। 'आतो धातो'रिति लोपस्यावकाशः संयोगपूर्वाकारान्तो धातुरकारप्रश्लेषस्योत्तरत्रावकाशो बभूव बभूविथेति। 'कीलालप' इत्यत्रोभयप्रसङ्गे परत्वादाकारलोपः। विप्रतिषेधे

उ०—उवङि सिद्धमिष्टमत आह—इन्धीति। नित्यत्वादिति। नित्यत्वाद्वुकि गुणवृद्धयोः प्राप्त्यभाव इति भावः। प्रसङ्ग इति। प्रतिषेधे गुणवृद्धयोः सह निर्देशादिति भावः। अत एव भाष्ये वृद्धेरेवानिग्लक्षणत्वमुक्तम्। न च कित्त्वविधानसामर्थ्यादनिग्लक्षणत्वेऽपि निषेधः। थलि' उत्तमे णलि चारितार्थ्यात्। वुका भवतिग्रहणप्रत्याख्यानं न्याय्यं लाघवादिति भाष्याशयः। न च 'द्विर्वचनेऽची'त्यस्यापि प्रवृत्त्या द्वित्वात्पूर्वं गुणवृद्धयोरभावे भुवो वुकोनिर्विघ्नत्वान्नित्यत्वादिति हेतुरयुक्त इति वाच्यम्। तत्र 'द्वित्वे कर्तव्ये' इति वाक्यशेषेण वुकि तत्प्रवृत्तौ मानाभावेन परत्वात्तयोः प्राप्तौ तस्य सार्थक्यादित्याहुः। पूर्वैकादेशेनेति। समाहारद्वन्द्वे नुमभाव इतरेतरद्वन्द्वे वा एकवचनं सौत्रत्वादिति भावः। मध्यमपदलोपी वा समासोऽत एव न पूर्वनिपातदोषः। संयोगपूर्वेति। 'प्रा''ग्ला'इत्यादयः। ननूभयोरप्याभाच्छास्त्रीयत्वेनान्यतरस्यासिद्धत्वात्कथं विप्रतिषेधः

× सार्वधातुकार्धधातुकयोः ७ । ३ । ८४; अचो ञ्णिति ७ । २ । ११५

* ओः सुपि ६ । ४ । ८३

बाधको भविष्यति† । इह तर्हि प्राप्नोति—कीलालपौ कीलालपा इति । एवं तर्हि व्योरिति‡ वर्तते तेनोवर्णं विशेषयिष्यामः—'ओ'र्व्योरिति । इहेदानीमोरित्यनुवर्तते व्योरिति निवृत्तम् ।

युटश्चापि न वक्तव्यम् । युड्वचनसामर्थ्यान्न भविष्यति । अस्त्यन्यद्युड्वचने प्रयोजनम् । किम् ? द्वयोर्यकारयोः श्रवणं यथा स्यात् । न व्यञ्जनपरस्यानेकस्यैकस्य वा यकारस्य श्रवणं प्रति विशेषोऽस्ति ।

किं पुनः प्राग्भादसिद्धत्वमाहोस्वित्सह तेन§ । कुतः पुनरयं संदेहः ? आङयं निर्देशः क्रियते, आङ् च पुनः संदेहं जनयति । तद्यथा—आ पाटलिपुत्राद्वृष्टो देव इति संदेहः किं प्राक्पाटलिपुत्रात् सह तेनेति । एवमिहापि संदेहः प्राग्भात् सह तेनेति । कश्चात्र विशेषः ?

**प्राग्भादिति चेच्छुनामघोनाभूगुणेषूपसंख्यानम् ॥ १५ ॥**

प्राग्भादिति चेच्छुनामघोनाभूगुणेषूपसंख्यानं कर्तव्यम् । शुनः पश्य । शुना शुने । संप्रसारणे* कृतेऽल्लोपोऽनः [ ६ । ४ । १३४ ] इति प्राप्नोति ।

प्र०—चासिद्धत्वं न भवतीति ज्ञापयिष्यति । कीलालपाविति । असर्वनामस्थान इत्यनुवर्तनाद्भसंज्ञाया अभावादाकारलोपप्रसङ्गात् । एवं तर्हि व्योरिति । यदेव 'य्वो'रिति प्रकृतं तदेव वर्णक्रमव्यत्ययेन 'व्यो रित्युक्तम् । तत्राकारोकारसमुदायनिर्देशेऽपि 'व्यो'रित्यनेन विशेषणादुकारस्यैव यण् भवति न त्ववर्णस्येति । इहेति । 'भुवो वुग्लुङ्लिटोः' 'ऊदुपधाया गोहः' इत्यत्र । न व्यञ्जनपरस्येति । व्यञ्जनात्परस्येति 'सुप्सुपे'ति समासः । श्रुतिभेदपक्षेऽपि 'यणो मय' इति द्विर्वचनविधाना'द्धलो यमां यमि लोप' इति पक्षे लोपविधानात्पक्षे यकारद्वयं भवत्येवेति नार्थो युटेति तद्विधानसामर्थ्याद्यण् न भवति ।

शुन इति । श्वन् शस् इति स्थिते संप्रसारणम् । वार्णादाङ्गस्य बलीयस्त्वात्पूर्वैकादेशं

उ०—स्यादत आह–विप्रतिषेधे चेति । । उभयोरप्यसिद्धत्वेन समत्वाद्विप्रतिषेध इति तत्त्वम् । 'व्यो'रित्यस्य प्रकृतत्वाभावादाह—यदेवेति । तद्विधानसामर्थ्यादिति । चिन्त्यमिदम् । यकारत्रयश्रवणार्थमेतत्स्यादिति ।

अन्तरङ्गत्वात्पूर्वरूपे कृतेऽल्लोपाप्राप्तेराह—वार्णादिति । प्रत्ययस्वरेणेति । 'श्वन्नुक्ष'न्नित्यादिना

---

† आतो धातोः ६ । ४ । १४०

‡ अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ६ । ४ । ७७ य्वोरित्येव वर्णक्रमव्यत्ययेन व्योरित्युक्तम् ।

१—'व्योः–ओः–इति' पा० ।

§ मघवा बहुलम्; भस्य;–अल्लोपोऽनः......छन्दसि ६ । ४ । १२८; १२९—१७५

* श्वयुवमघोनामतद्धिते ६ । ४ । १३३

यस्य पुनः सह तेनासिद्धत्वमसिद्धत्वात्तस्य न संयोगाद्वमन्तात् । [ १३७ ] इति प्रतिषेधो भविष्यति ।

यस्यापि प्राग्भादसिद्धत्वं तस्याप्येष न दोषः । कथम् ? नास्त्यत्र विशेषोऽल्लोपेन वा निवृत्तौ सत्यां पूर्वत्वेन† वा ।

अयमस्ति विशेषः । अल्लोपेन निवृत्तौ सत्यामुदात्तनिवृत्तिस्वरः‡ प्रसज्येत । नात्रोदात्तनिवृत्तिस्वरः प्राप्नोति । किं कारणम् ? न गोश्वन्साववर्ण [ ६ । १ । १८२ ] इति प्रतिषेधात् । नैष उदात्तनिवृत्तिस्वरस्य प्रतिषेधः । कस्य तर्हि ? तृतीयादिस्वरस्य§ । यत्र तर्हि तृतीयादिस्वरो नास्ति—शुनः पश्येति । एवं तर्हि न वयं लक्षणस्य प्रतिषेधं शिष्मः । किं तर्हि ? येन केनचिल्लक्षणेन प्राप्तस्य विभक्तिस्व-

प्र०—बाधित्वाल्लोपः प्राप्नोति : उपसंख्यानवादी विशेषं प्रतिपादयितुमाह—अयमस्तीति । अनुदात्तनिमित्तत्वादुदात्तलोपस्यैकादेशे तु सति 'एकादेश उदात्तेनोदात्त' इत्याद्युदात्तं पदं भवति । श्वशब्दाकारस्य प्रत्ययस्वरेणान्तोदात्तत्वात्प्रत्याख्यानवाद्याह—नात्रेति । उपसंख्यानवाद्याह—नैष इति । तृतीयादिस्वरस्येति । 'सावेकाच' इति प्राप्तस्य । तत्र प्रतिषिद्धेऽपि तृतीयादिस्वरे लोपे सत्युदात्तनिवृत्तिस्वरप्रसङ्ग इति विशेषोऽस्ति 'न गोश्व'न्नित्यस्य तु निषेधस्य फलं 'श्वभ्यां श्वभि'रिति हलादौ विभक्तावस्ति । स एवाह—यत्र तर्हीति । चार्थे तर्हिशब्दः । न केवलं शुना शुन इत्यत्र तृतीयास्वरे प्रतिषिद्धेऽप्युदात्तनिवृत्तिप्रसङ्गोऽपि तु यत्र तृतीयाद्यभावः शुनः पश्येति तत्राप्युदात्तनिवृत्तिस्वरप्रसङ्ग इत्यर्थः । न ह्यत्रैतदपि शक्यते वक्तुं येन केनचिल्लक्षणेन प्राप्तस्य तृतीयादिस्वरस्य निषेध इति ।

प्रत्याख्यानवाद्याह—एवं तर्हीति । न सावेकाच इत्यस्यैव लक्षणस्यायं प्रतिषेधः किं तर्हि विभक्तेः प्राप्तस्योदात्तमात्रस्येत्यर्थः । विभक्तिस्वरस्येति । वचनाद्विभक्तिग्रहणानुवृत्तिरनेनाभ्युपगतेति । अत्रोपसंख्यानवाद्याह—यत्र तर्हीति । बहवः श्वानोऽस्यामिति बहुव्रीहिः ।

उ०—कनिप्रत्ययान्तत्वादिति भावः । वकारस्थानिकसंप्रसारणस्यानुदात्तत्वादित्यपि बोध्यम् । यदि प्रतिषिद्धे तृतीयादिस्वरे उदात्तनिवृत्तिस्वरः स्यात्प्रतिषेधोऽनर्थकः स्यादत आह—न गोश्वन्निति । यत्र तर्हीत्यादि वचनं ग्रन्थच्छायया प्रत्याख्यानवादिन इति प्रतीयते, तन्निराकरणायाह—स एवेति । अन्यथा ग्रन्थासंगतिः स्यात् । चार्थं इति । अनेकार्थत्वान्निपातानामित्यर्थः ।

किं तर्हि ? विभक्तेरिति । ततश्चोदात्तनिवृत्तिस्वरस्यापि प्रतिषेधाद्विशेषाभाव इति भावः । भाष्ये-

† संप्रसारणाच्च ६ । १ । १०८ ‡ अनुदात्तस्य च यत्रोदात्तलोपः ६ । १ । १६१

§ सावेकाचस्तृतीयादिर्विभक्तिः ६ । १ । १६८

रस्यायं प्रतिषेधः । यत्र तर्हि विभक्तिस्वरो नास्ति—बहुशुनीति¶ ।

यदि पुनरयमुदात्तनिवृत्तिस्वरस्यापि प्रतिषेधो विज्ञायेत । नैवं शक्यम् । इहापि प्रसज्येत—कुमारीति ।

एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति नोदात्तनिवृत्तिस्वरः शुन्यवतरतीति यदयं श्वन्शब्दं गौरादिषु पठति* । अन्तोदात्तार्थं यत्नं करोति । सिद्धं हि स्याङीपैव ।

मघोनः पश्य । मघोना मघोने । संप्रसारणे कृते यस्येति लोपः प्राप्नोति† । यस्य पुनः सह तेनासिद्धत्वमसिद्धत्वात्तस्य न भविष्यति ॥ यस्यापि हि प्राग्भादसिद्धत्वं तस्याप्येष न दोषः । कथम् ? वक्ष्यत्येतन्मघवन्शब्दोऽव्युत्पन्नं प्रातिपदिकमिति‡ ।

प्र०—तत्राल्लोपवादिमतेन 'अन उपधालोपिन' इति ङीपि 'बहोर्नञ्वदुत्तरपदभूम्नी'त्यन्तोदात्तत्वादुदात्तनिवृत्तिस्वरप्रसङ्गः । प्रत्याख्यानवाद्याह—यदि पुनरिति । विभक्तिग्रहणं नानुवर्तत इति भावः । उपसंख्यानवाद्याह—नैवं शक्यमिति ।

प्रत्याख्यानवाद्याह—एवं तर्हीति । 'न गोश्व'न्नित्यनेनानिषिध्यमानोऽप्युदात्तनिवृत्तिस्वरः शुनि ज्ञापकान्नावतरतीत्यर्थः । एवं प्रत्याख्यानवादिना विशेषाभावः प्रतिपादितः । विद्यते तु विशेषः । अल्लोपे सत्युपधालोपित्वान्ङीपा भाव्यम्—'बहुशुनी'ति । तदभावे तु बहुश्वेति । गौरादिङीषोऽप्यनुपसर्जनान्निकारादत्राप्रसङ्गः । 'सह तेनासिद्ध'मित्येतच्चान्ते स्थापयिष्यते । तत्र सुपर्वादिवद्बहुश्वेत्येव भाव्यम् । स्वरविशेषनिराकरणपरत्वात्तु ग्रन्थस्य नैतदत्र भाष्ये सुष्ठु निरूपितम् । 'डाबुभाभ्या'मित्यत्र 'बहुश्वे'त्येव भवितव्यमिति व्यवस्थापितम्' । क्वचित्तु पाठः—'नैष उदात्तनिवृत्तिस्वरस्य प्रतिषेधः कस्य तर्हि ? तृतीयादिस्वरस्य । एवं तर्हि येन केनचित्प्राप्तस्य तृतीयादिस्वरस्य । यत्र तर्हि तृतीयादिर्नास्ति शुनः पश्ये'ति । अत्र पाठे तर्हि-

उ०—यदि पुनरयमुदात्तनिवृत्तीति । अविभक्तिकस्थानिकस्यापीत्यर्थः ।

भाष्ये—नोदात्तनिवृत्तिस्वर इति । अविभक्तिविषयेऽपीत्यर्थः । नन्वल्लोपाभावेऽपि गौरादित्वान्ङीषि 'बहुशुनी'ति भाव्यमेवेत्यत आह—गौरादीति । स्वरविशेषनिराकरणेति । नन्वल्लोपे वकारस्यानिकोकारस्य हल्स्थानिकत्वेनानुदात्तत्वात्सर्वानुदात्तं पदम् । एकादेशे तु तस्योदात्तत्वाच्छुनेस्त्याद्युदात्तमिति स्वरविशेषोऽस्त्येवेति कथं तस्यापि निराकरणमिति चेन्न । उदात्तनिवृत्तिस्वरकृतविशेषनिराकरणपरत्वादित्यर्थेनादोषात् । व्यवस्थापितमिति । वस्तुतस्तु तद्धावन्तस्य कीदृशं रूपमिति प्रस्तावप्रवृत्तमिति न तदत्र साधकत्वेनोपन्यसितुं युक्तमिति चिन्त्यम् । भाष्ये—अव्युत्पन्नमिति । वनिबन्ते त्वनभिधानात्संप्रसारणाभाव इति

¶ बहोर्नञ्वदुत्तरपदभूम्नि ६ । २ । १७५; ( अन उपधालोपिनोऽन्यतरस्याम् ४ । १ । २८ )

* षिद्गौरादिभ्यश्च ४ । १ । ४१  † श्वयुवमघोनामतद्धिते; यस्येति च ६।४।१३३; १४८

‡ ४ । १ । ७ पृ० ४६४ पं० ४

भूगुणः । भूयान् । भूभावे कृत ओर्गुणः प्राप्नोति§ । यस्य पुनः सह तेनासिद्धत्वमसिद्धत्वात्तस्य न भविष्यति ॥ यस्यापि प्राग्भादसिद्धत्वं तस्याप्येष न दोषः। कथम् ? दीर्घोच्चारणसामर्थ्यान्न भविष्यति । अस्त्यन्यद्दीर्घोच्चारणस्य प्रयोजनम् । किम् ? भूमेति । निपातनादेतत्सिद्धम् । किं निपातनम् ? बहोर्नञ्वदुत्तरदभूम्नि [ ६ । २ । १७५ ] इति ॥ अथवा पुनरस्तु सह तेनेति ।

**आ भादिति चेद्वसुसंप्रसारणयलोपप्रस्थादीनां प्रतिषेधः ॥ १६ ॥**

आ भादिति चेद्वसुसंप्रसारणयलोपप्रस्थादीनां प्रतिषेधो वक्तव्यः । पपुषः पश्य तस्थुषः । निन्युषः चिच्युषः । लुलुवुषः पुपुवुष इति । वसुसंप्रसारणे कृते तस्यासिद्धत्वादचीत्याकारलोपादीनि* न सिध्यन्ति ॥ नैष दोषः । उक्तमेतत्समानाश्रयवचनात्सिद्धमिति† । कथम् ? वसावाकारलोपादीनि वस्वन्तस्य विभक्तौ संप्रसारणमिति ।

यलोपः । सौरी बलाका । योऽसावणयकारो लुप्यते तस्यासिद्धत्वादीतीति

प्र०—शब्दश्चार्थे न व्याख्यातव्यो भिन्नकर्तृत्वात् । यस्य पुनरिति । ननु च भूभावस्यासिद्धत्वाद्बहुशब्द एवायमिति स्यादेव गुण । नैष दोषः। गुणे कर्तव्ये भूभावशास्त्रस्यासिद्धत्वात् पूर्वं गुणे कृते भूभावः । न च गुणभूभावयोश्चक्रकापत्तिः । चक्रके इष्टतो व्यवस्थाश्रयणात् । भूमेति । भत्वाभावादत्र गुणाभावः । निपातनादिति । ह्रस्वान्तेऽप्यादेशे क्रियमाणे 'भूमे'त्यत्र निपातनाद्दीर्घो भविष्यतीत्यर्थः ।

आ भादिति चेति । 'प्राग्भा'दित्यस्य पक्षस्य प्रतिपक्षभावेनोपादानादभिविधावाकारो बोद्धव्यः । 'पपुष' इत्यादीनां परिहृतानामपि पुनरुपादानमस्मिन्पक्षे दोषः प्रागुद्भावित इति प्रदर्शनार्थम् । सौरीति । 'सूर्येणैकदि'गित्यण् । 'यस्ये'ति लोपस्ततो ङीप् । पुनर्यस्येति लोपः । तत्र द्वयोरल्लोपयोरसिद्धत्वाद्यकार उपधा न भवतीति यलोपाप्रसङ्गः । ननु च प्राग्भादसिद्धत्वे

उ०—भावः । गुणे कर्तव्य इति । विप्रतिषेधेऽसिद्धत्वाभावस्य वक्ष्यमाणत्वात्परत्वाद्भूभावेनैव भाव्यमिति चिन्त्यमिदम् । तस्मात्सकृद्गतिन्यायेन समाधानमुचितम् ।

पुनर्यस्येति लोप इति । उपधाभूतयलोपापेक्षया नित्यत्वादिति भावः । वचनसामर्थ्याद्वेति । वस्तुत उपधाग्रहणमेव 'भाधिकारमभिव्याप्यायमधिकार' इत्यर्थे मानमिति बोध्यम् । सूत्रप्रत्याख्याने तु वचनसामर्थ्यमेव

§ बहोर्लोपो भू च बहोः; ओर्गुणः ६ । ४ । १५८; १४६

* वसोः सम्प्रसारणम्; आतो लोप इटि च; एरनेकाचोऽसंयोगपूर्वस्य; अचिश्नुधातुभ्रुवां य्वोरियङुवङौ ६ । ४ । १३१; ६४; ८२; ७७

† ६ । ४ । २२ वा० १२

यलोपो‡ न प्राप्नोति ॥ अत्राप्येष एव परिहारः समानाश्रयवचनात्सिद्धं भवति । कथम् ? अएयकारलोपोऽसन्तस्येति यलोपः ।

प्रस्थादिषु । प्रेयान् स्थेयान् × । प्रस्थादीनामसिद्धत्वात्प्रकृत्यैकाच् [ ६ । ४ । १६३ ] इति प्रकृतिभावो न प्राप्नोति ॥ नैष दोषः । यथैव प्रस्थादीनामसिद्धत्वात्प्रकृतिभावो न प्राप्नोत्येवं टिलोपोऽपि§ न भविष्यति ॥ २२ ॥

## श्नान्नलोपः ॥ ६ । ४ । २३ ॥

अथ किमर्थं श्नमः सशकारस्य ग्रहणं क्रियते न नान्नलोप इत्येवोच्येत ? नान्नलोप इतीयत्युच्यमाने नन्दिता नन्दक इत्यत्रापि प्रसज्येत ।

प्र०—लोपद्वयस्य सिद्धत्वादुपधा यकारो न भवतीति लोपस्याप्रसङ्ग एव । स्थानिवद्भावोऽपि यलोपविधौ प्रतिषिद्धः । भूतपूर्वगत्यो पधाश्रयणाददोषः । वचनसामर्थ्याद्वा पूर्वं यलोपः पश्चादकारलोप इति क्रम आश्रयिष्यते नित्यत्वेऽप्यकारलोपस्य । टिलोपोऽपीति । नन्वादेशलक्षणः प्रकृतिभावोऽसिद्धत्वान्न भवतीति वक्तुं युक्तम् । टिलोपः पुनरुत्सर्गलक्षणः प्राप्नोति । नैष दोषः । आदेशेन निरवकाशत्वात्प्रवृत्तेन स्थानिनो निवर्तितत्वादसतः कुतष्टिलोपः । तत्र यद्यपि प्रादीनामसिद्धत्वात्प्राक् टिलोपः क्रियते तथाप्यादेशेषु कृतेषु तेषामसिद्धत्वान्न तल्लक्षणष्टिलोपो नाप्युत्सर्गलक्षणः । उत्सर्गेषु प्रागेव प्रवृत्तत्वात् । अनवकाशत्वाच्च प्रादीनां चक्रकदोषोऽपि नास्ति ॥ २२ ॥

श्नान्नलोपः । किमर्थमिति । यथान्तरेण मकारनिर्देशं 'श्ना'दिति श्नमेव गृह्यतेऽन्यस्यासंभवात्तथा विनापि शकारनिर्देशेन 'श्न'मेव ग्राहिष्यत इति भावः । नन्दितेति । इदित्वमस्य

उ०—गतिरिति बोध्यम् । ननु कृते टिलोपे तेषां चारितार्थ्यमित्यभिमानेन शङ्कते—तत्र यद्यपीति । उत्सर्गेषु प्रागेवेति । एतेन शास्त्रासिद्धत्वाश्रयणा'दसत' इत्याद्ययुक्तमित्यपास्तम् । ननूभयोरपि परस्परमसिद्धत्वाच्चक्रकापत्तिरत आह—अनवकाशत्वाच्चेति । टिलोपस्यावश्यंप्राप्तावस्यारम्भात्तदपवादत्वेन प्रादीनामेव प्रवृत्त्या न चक्रकमिति भावः । परे तु—प्रादीनामसिद्धत्वात्प्राक् टिलोप इत्ययुक्तम्, टिलोपस्याप्यसिद्धत्वात् । किं चापवादत्वादसिद्धा अपि प्रादय एवोचिताः । चक्रकापत्तिरपि चिन्त्या । टिलोपे प्रादिषु च कृतेषु कैयटोक्तरीत्या पुनष्टिलोपाप्राप्तेः । तस्माट्टिलोपापवादतया तं बाधित्वा प्रादिषु जातेषु तेषामसिद्धत्वान्न तदाश्रयष्टिलोपो नापि स्थानिलक्षणस्तस्य बाधितत्वादिति भाष्यार्थ इत्याहुः ॥ २२ ॥

श्नान्नलोपः । नन्वितरव्यावृत्त्यर्थं शकारः स्यादत आह—यथान्तरेणेति । श्न प्रत्ययादिति ।

‡ तेनैकदिक् ४ । ३ । ११२; यस्येति च; सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः ६।४।१४८; १४९

× प्रियस्थिर.........द्राघिवृन्दाः ६ । ४ । १५७ § टेः ६ । ४ । १५५

एवं तर्ह्येवं वक्ष्यामि—नान्नलोपोऽनिदिताम् । ततो हल उपधायाः क्ङिति । अनिदितामिति* । नैवं शक्यम् । इह हि न स्यात्—हिनस्ति । तस्मान्नैवं शक्यम् । न चेदेवं नन्दिता नन्दक इति प्राप्नोति ।

एवं तर्हि क्ङितीति† वर्तते । एवमपि हिनस्तीत्यत्र न प्राप्नोति । नैषा परसप्तमी । का तर्हि ? सत्सप्तमी । क्ङिति सति‡ । एवमपि नन्दमान इत्यत्रापि§ प्राप्नोति । एवं तर्हि नशब्द एवात्र क्ङित्त्वेन विशेष्यते क्ङिच्चेन्नशब्दो भवतीति । एवमपि

प्र०—किमर्थं स्यादिति चेत्-उपदेशावस्थायां नुमि सति 'अप्रत्यया'दित्यकारार्थम् । तथा ननन्दतुरित्यादौ कृतेऽपि नलोपे तस्यासिद्धत्वादेत्वाभ्यासलोपाप्रवृत्त्यर्थं स्यात् । क्ङिति सतीति । श्नमेव ङिदस्तीति हिनस्तीत्यादौ नलोपः सिद्धः । कथं पुनः संभवन्त्यां परसप्तम्यां सत्सप्तमी शक्या विज्ञातुम् ? यथेष्टं वाक्यशेषाध्याहाराददोषः । क्ङिति सतीत्येव हि विज्ञायमाने पौर्वापर्यानाश्रयणान्नास्ति 'तस्मि'न्नित्यस्याः परिभाषाया उपस्थानम् । यदा त्वौपश्लेषिकेऽधिकरणे सप्तमी तदा किं पूर्वस्य कार्यमथ परस्येत्यनियमप्रसङ्गे नियमाय परिभाषोपस्थानम् । नन्दमान इति । ताच्छील्यादिषु चानशि कृते शपि च चानशो व्यवहितस्यापि ङितो भावान्नलोपप्रसङ्गः । क्वचिन्नन्द्यमान इति पाठस्तत्र यगाश्रयो नलोपप्रसङ्गः । अर्थवद्ग्रहणपरिभाषा तु विकरणानामानर्थक्यान्नोपन्यस्ता । नशब्द एवेति । अर्थवशाद्विभक्तिविपरिणामो भवतीति सप्तमीपरित्यागेन

उ०—तत्रानुवर्तमाने 'गुरोश्च हल'इत्यनेन । 'ननु सत्सप्तम्यां कथमिष्टसिद्धिरत आह–श्नमेवेति । कथं पुनरिति । निर्दिष्टपरिभाषाया दुर्वारत्वादित्यर्थः । यथेष्टमिति । 'तस्मि'न्निति परिभाषायां 'निर्दिष्टे'इत्यस्य कारकविभक्त्यधिकरणसप्तम्यन्तत्वेनाधिकरणसप्तम्यन्त एव तत्प्रवृत्तेरिति भावः । उपपदविभक्तेरिति न्यायेनाधिकरणसप्तम्येव तत्रोचिता च । स्पष्टं चेदं पञ्चमे कैयटे । अत एव 'कर्तृकर्मणोः कृती'ति सूत्रे नैतत्परिभाषाप्रवृत्तिः । 'कृती'त्यस्य सत्सप्तमीत्वात् । कृति सति प्रत्यासत्त्या तत्प्रकृत्यर्थकर्तृकर्मणोः षष्ठीति तदर्थः । 'इको यणची'त्यादौ तूपश्लिष्टस्येत्यध्याहृत्याचि उपश्लिष्टस्येक इत्यन्वयेन न दोष इति 'संहिताया'मिति सूत्रे भाष्ये स्पष्टम् । एतेन सत्सप्तम्यामपि किं पूर्वा सत्ता उत परेति संदेहोऽस्त्येव । परिभाषाया अप्रवृत्तावनियमप्राप्तेश्चेति परास्तम् । किं पूर्वस्येति । किं पूर्वस्योपश्लिष्टस्येत्याद्यर्थः । ननु नन्दतेः परस्मैपदित्वाच्छानचोऽप्राप्तेराह—चानशीति । अर्थवद्ग्रहणेति । अन्यथा 'हिनस्ती'त्यत्रापि विकरणं ङितमाश्रित्य नलोपो न स्यात् । प्रत्ययेति । एवं च कृद्ग्रहणानुवृत्तिरनावश्यकीति भावः । वस्तुतो'ऽङ्गस्ये'ति सूत्रे तत्प्रत्याख्यानायैकदेशिनोपन्यस्ताप्येषा क्वापि भाष्यकृता लक्ष्यसिद्धये नोपन्यस्तेत्येषा नास्त्येवेत्यत्रत्यभाष्याशयः । अत

* अनिदितां हल उपधायाः क्ङिति ६ । ४ । २४

† अनुनासिकस्य क्विझलोः क्ङिति ६ । ४ । १५ ‡ सार्वधातुकमपित् १ । २ । ४

§ ताच्छील्यवयोवचनशक्तिषु चानश् ३ । २ । १२९

१–"असिद्धत्वादिति । अनित्यत्वं लक्ष्यानुसारीति भावः । भाष्ये—एवं वक्ष्यामीति । अन्यथा सूत्रभेदं करिष्यामीत्यर्थः ॥ ( भाष्ये ) वर्तत इति । अनुकृष्यत इत्यर्थः ।" इत्युद्द्योतेऽधिकं क्वचित् ।

यज्ञानाम् यत्नानामित्यत्र* प्राप्नोति । दीर्घत्वमत्र बाधकं भविष्यति† । इदमिह संप्रधार्यम्—दीर्घत्वं क्रियतां नलोप इति किमत्र कर्तव्यम् ? परत्वान्नलोपः । तस्मात्सशकारस्य ग्रहणं कर्तव्यम् ।

अथ क्रियमाणेऽपि सशकारग्रहण इह कस्मान्न भवति—विश्नानाम् प्रश्नानामिति‡ । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेत्येवं न भविष्यति ॥ २३ ॥

## अनिदितां हल उपधायाः क्ङिति ॥ ६ । ४ । २४ ॥

### अनिदितां नलोपे लङ्गिकम्प्योरुपतापशरीरविकारयोरुपसंख्यानम् ॥ १ ॥

अनिदितां नलोपे लङ्गिकम्प्योरुपतापशरीरविकारयोरुपसंख्यानं कर्तव्यम् ।

प्र०—पञ्चम्याश्रयणात् । 'प्रत्ययाप्रत्यययोः प्रत्यये संप्रत्यय' इत्यत्र परिहारः संभवति । यज्ञानामिति । 'पूर्वत्रासिद्ध'मिति श्चुत्वस्यासिद्धत्वान्नशब्दादुत्तरो नकारः । परत्वान्नलोप इति । अग्नीनामित्यादौ 'नामी'ति दीर्घत्वं सावकाशम् । नलोपो हिनस्तीत्यादौ सावकाशः । यज्ञानामित्यादावुभयप्रसङ्गे परत्वान्नलोपप्रसङ्गः । यत्तु 'सुपि चे'ति दीर्घत्वं तत्संनिपातलक्षणपरिभाषावशान्न भवति । लक्षणप्रतिपदोक्तयोरिति । लाक्षणिकस्यानुमेयरूपत्वादितरत्र तु प्रत्यक्षत्वात् । यदा तु विकरणानामपि स्वार्थेनार्थवत्ताश्रीयते तदार्थवद्ग्रहणपरिभाषया विश्नानां प्रश्नानामिति नलोपव्यावृत्तिसिद्धिः ॥ २३ ॥

अनिदितां । विलगित इति । गत्यर्थत्वात्कर्तरि क्तः । कृच्छ्रप्राप्तिरत्रोपतापो गृह्यते न तु रोगः, यथा 'द्वन्द्वोपतापगर्ह्या'दिति । अन्यथा शरीरविकारग्रहणं केवलं कुर्यात् । विकपित

उ०—एव 'तित्स्वरित'मिति सूत्रे कैयटेनोक्तम्—'प्रत्ययाप्रत्यययोरित्येषा न क्वापि भाष्य आश्रिते'ति । तस्य लक्ष्यसिद्ध्य इति शेषः । 'यज्ञाना'मित्यत्र नशब्दो न श्रूयतेऽत आह—श्चुत्वस्येति । 'परत्वान्नलोपेति । दीर्घे कृतेऽप्येकदेशविकृतन्यायेन नशब्दत्वान्नलोपप्राप्तिरस्त्येव । दीर्घत्वमत्रेति पूर्वपक्ष्युक्तिः । इदमिहेत्यादिपरत्वान्नलोप इत्यन्ता तु सिद्धान्त्येकदेश्युक्तिरित्यन्ये । ननु ततोऽपि परत्वात् 'सुपि चे'ति दीर्घः स्यादत आह—यत्त्विति । 'नामी'त्यनेन स्वारम्भसामर्थ्यात्परिभाषा बाध्यते । कतीनामित्यर्थं तु 'कतेर्नामी'त्येव वदेत् । एवं च 'न तिसृ' इति न कर्तव्यं भवतीति लाघवमिति भावः । वस्तुतः 'सुपि चे'त्येतद्बाधित्वा नित्यत्वात् 'नामी'त्येव दीर्घः, दीर्घे कृतेऽप्युक्तरीत्या नलोपप्राप्तिश्चात्रेति बोध्यम् ॥ २३ ॥

अनिदितां । यथा द्वन्द्वेति । व्यतिरेके दृष्टान्तः । विगलितविकपितयोर्यथाक्रमं कृच्छ्रप्राप्तव्याधि-

* यजयाचयतविच्छप्रच्छरक्षो नङ् ३ । ३ । ९०

† नामि ६ । ४ । ३　　‡ च्छ्वोः शूडनुनासिके च ६ । ४ । १९

१—"भाष्ये—दीर्घत्वमिति । परशब्दस्येष्टवाचित्वमिति भावः ।" इत्यधिकमुद्द्योते ।

विलगितः विकम्पितः। उपतापशरीरविकारयोरिति किमर्थम् ? विलङ्गितः विकम्पितः।

## बृंहेरच्यनिटि ॥ २ ॥

बृंहेरच्यनिट्युपसंख्यानं कर्तव्यम्। निबर्हयति निबर्हकः। अचीति किमर्थम् ? निबृंह्यते। अनिटीति किमर्थम् ? निबृंहिता निबृंहितुम्।

तत्तर्ह्युपसंख्यानं कर्तव्यम् ? न कर्तव्यम्। बृहिः प्रकृत्यन्तरम्। कथं ज्ञायते। अचीति लोप उच्यतेऽनजादावपि दृश्यते—निबृह्यते। अनिटीत्युच्यत इडादावपि दृश्यते—निबर्हितुम्। अजादावित्युच्यतेऽजादावपि न दृश्यते—निबृंहयति निबृंहकः।

## रञ्जेर्णौ मृगरमणे ॥ ३ ॥

रञ्जेर्णौ मृगरमण उपसंख्यानं कर्तव्यम्। रजयति मृगान्। मृगरमण इति किमर्थम् ? रञ्जयति वस्त्राणि।

घिनुणि चोपसंख्यानं कर्तव्यम्। रागी।

## घिनुणि निपातनात्सिद्धम् ॥ ४ ॥

किं निपातनम् ? त्यजरजे†॥ अशक्यं धातुनिर्देशे निपातनं तन्त्रमाश्र-

प्र०—इति। 'गत्यर्थाकर्मके'ति गत्यर्थत्वात्कर्तरि क्तः। शरीरविकारोऽत्र व्याधिरुच्यते न तु स्थौल्यादि। कम्पेरतद्विषयत्वात्।

बृंहेरिति। 'बृहि वृद्धा'वित्यस्य। बृहिः प्रकृत्यन्तरमिति। 'बृह बृहि वृद्धा'विति पाठात्। अजादावपि न दृश्यत इति। ततश्च दोषायैवोपसंख्यानं स्यान्न धातुलोप इति गुणनिषेधनिवारणाय यत्नश्च कर्तव्यः स्यादित्यनारम्भणीयमेवोपसंख्यानम्।

रजयतीति। नलोपे वृद्धौ च 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्चे'ति मित्वाद्ध्रस्वः। प्रत्ययान्तस्येति। शबन्तस्येत्यर्थः। यङ्लुङ्निवृत्त्यर्थश्च तत्र शब्निर्देशः। घिनुण् तु ताच्छील्ये

उ०—तावर्थः। कृच्छ्रप्राप्तिर्मानसं दुःखम्। गत्यर्थत्वादिति। वस्तुतोऽकर्मकत्वात्कर्तरि क्तः। उपसंख्यानस्याकर्तव्यत्वे हेत्वन्तरमाह—न धात्विति। यत्नः—परिगणनरूपः।

मित्वाद्ध्रस्व इति। अत्र मृगरमणमाखेट इत्येके। परे तु 'रजयांचकार विरजाः स मृगा'निति भारविप्रयोगान्मृगरमणं यथाश्रुतमेव। अत एव भगवता 'रञ्जयति वस्त्राणी'ति प्रत्युदाहृतमित्याहुः। ननु घिनुणिवधावपि 'रञ्जेश्चे'ति नलोपेन 'रजे'ति शपा निर्देश एव यङ्लुङ्निवृत्त्यर्थोऽस्त्वत आह—घिनुणीति।

† संपृचानुरुध........त्यजरज..........हनश्च ३। २। १४२

यितुम् । इह हि दोषः स्यात्—दशनहः करणे* । दंष्ट्रा[1] । नैतद्धातुनिपातनम् । किं तर्हि ? प्रत्ययान्तस्यैतद्रूपं तस्मिंश्चास्य प्रत्यये लोपो भवति दंशसञ्जस्वञ्जां शपि [ ६ । ४ । २५ ] इति ।

[2]रजकरजनरजःसूपसंख्यानं कर्तव्यम् । रजकः रजनम् रज इति ।

**रजकरजनरजःसु कित्त्वात्सिद्धम् ॥ ५ ॥**

कित एवैत औणादिकाः । तद्यथा—रुचकः भुवनम् शिर इति ॥ २४ ॥

## शास इदङ्हलोः ॥ ६ । ४ । ३४ ॥

**शास इत्त्व आशासः क्वौ ॥ १ ॥**

शास इत्त्व आशासः क्वावुपसंख्यानं कर्तव्यम् । आशीरिति ।

किं पुनरिदं नियमार्थमाहोस्विद्विध्यर्थम् । कथं च नियमार्थं स्यात्कथं वा विध्यर्थम् ? यदि तावच्छासिमात्रस्य ग्रहणं ततो नियमार्थम् । अथ हि यस्माच्छासेरङ्विहितस्तस्य† ग्रहणं ततो विध्यर्थम् । यद्यपि शासिमात्रस्य ग्रहणमेवमपि विध्य-

प्र०—विधीयते । रूढिशब्दप्रकाराश्च ताच्छीलिका इति यङ्लुगन्ताद्रञ्जेर्न भवति ।

औणादिका इति । रजक इत्यत्र 'क्वुन् शिल्पिसंज्ञयो'रिति क्वुन्प्रत्ययः । रजकीति । 'पुंयोगादाख्याया'मिति ङीष् । अपुंयोगे तु ङीषा न भाव्यमिति भाष्यकाराभिप्रायः । रजनमित्यत्र 'रञ्जेः क्यु'न्निति क्युन्प्रत्ययः । स च बाहुलकात्कित् द्रष्टव्यः । तेन 'रजनी'ति ङीप् भवति । रज इत्यत्र 'भूरञ्जिभ्यां कि'दित्यसुन्प्रत्ययः किद्भवति ॥ २४ ॥

शास इद० । शासिमात्रस्येति । 'शासु अनुशिष्टा'वित्यस्य 'आङः शासु इच्छाया'-मित्यस्य चेत्यर्थः । नियमार्थमिति । क्वावेवाशास इत्त्वं यथा स्यादाशास्त इत्यादौ मा भूदित्यर्थः । यस्माच्छासेरिति । 'शासु अनुशिष्टावित्यस्मादङ्विहितः 'सर्तिशास्त्यर्तिभ्यश्चेत्यत्र

उ०—वस्तुतः 'श्तिपा शपे'ति परिभाषा न भाष्यसंमतेतीदं चिन्त्यम् । तत्र शपा निर्देशो नकारश्रवणार्थ एवेति बोध्यम् । ननु शिल्पिनि ष्वुनभावे 'रजकी'ति ङीष् न स्यादत आह—रजकीतीति । क्रियासम्बन्धमात्रविवक्षायां 'रजके'त्येव तदाह—अपुंयोग त्विति । कथं तर्हि 'रजनी'ति ङीबत आह—स चेति ॥ २४ ॥

शास इद० । इत्यस्य चेति । मात्रशब्दः कार्त्स्न्ये इति भावः । आद्यः परस्मैपदी । अन्त्य आत्म-

* दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे ३ । २ । १८२

१—धातुनिर्देशे यदि निपातनं तन्त्रं स्वीक्रियेत तर्हि 'दंष्ट्रा' इत्यादौ निपातनान्नलोपः प्रसज्येत ।

२—"रजकरजनरजःसूपसंख्यानम्" इति वार्तिकमपि क्वचिद् दृश्यते ।

† सर्तिशास्त्यर्तिभ्यश्च ३ । १ । ५६

र्थमेव । कथम् ? अङ्हलोरित्युच्यते न चात्र हलादिं पश्यामः । ननु च क्विवेव हलादिः । क्विपो लोपे† कृते हलाद्यभावान्न प्राप्नोति । इदमिह संप्रधार्यम्—क्विब्लोपः क्रियतामङ्हलोरित्त्वमिति किमत्र कर्तव्यम् ? परत्वादङ्हलोरित्त्वम् । नित्यः क्विब्लोपः । कृतेऽप्यङ्हलोरित्त्वे प्राप्नोत्यकृतेऽपि । नित्यत्वात्क्विब्लोपे कृते हलाद्यभावान्न प्राप्नोति । एवं तर्हि प्रत्ययलक्षणेन‡ भविष्यति । वर्णाश्रये नास्ति प्रत्ययलक्षणम् । यदि वा कानिचिद्वर्णाश्रयाण्यपि प्रत्ययलक्षणेन भवन्ति तथा चेदमपि भविष्यति ।

अथवैवं वक्ष्यामि—शास इदङ्हलोः । ततः क्वौ । क्वौ च शास इद्भवति । आर्यशीः मित्रशीः । तत आङः । आङ्पूर्वाच्च क्वौ शास इद्भवति । आशीरिति । इदमिदानीं किमर्थम् ? नियमार्थम् । आङ्पूर्वाच्छासेः क्वावेव । क्व मा भूत् ? आशास्यते आशास्यमान इति ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । अविशेषेण शास इद्भवतीत्युक्त्वा ततोऽङीति

प्र०—परस्मैपदाधिकारात्तत्राङः संसर्गाद्विशिष्टस्य शासो ग्रहणम्, संसर्गस्य विशिष्टस्मृतिहेतुत्वात् । यथा सकिशोरा धेनुरानीयतां सवत्सा सकरभेति विशिष्टा धेनुः प्रतीयते । यद्येवं शासिमात्रग्रहणं कथमाशङ्कितम् । अथ हलोऽप्युपादानात्तस्य च शासिमात्रेण संबन्धसंभवादित्युच्यते, तन्न । साधारणासाधारणसंनिपातेऽप्यसाधारणसंबन्धिग्रहणं दृश्यते यथा वृद्धानां किशोराणां च मध्ये धेनवो बध्यन्तामित्युक्ते वडवा एव बध्यन्ते न तु गवादयः । एवं तर्ह्येकशेषाद्याश्रयणाच्छासिमात्रग्रहणपक्षसंभवः । यद्यपीति । आचार्यदेशीयस्येदं वचनं विध्यर्थे चाशास्ते इत्यादावित्त्वमनिवारितं स्यात् । 'आर्यशी'रित्यत्र च न प्राप्नोति ।

यदि वेति । यथैवेत्यर्थः । तथा चेति । तथैवेत्यर्थः । यत्र कार्ये वर्णरूपमेवोपादीयते तत्प्रत्ययलक्षणेन न भवति । यथा रायः कुलं रैकुलमित्यायादेशः । यत्तु वर्णविशिष्टप्रत्ययनिमित्तं तद्भवत्येव यथातृणेडिति हलादौ पिति सार्वधातुके विधानात्प्रत्ययनिमित्तत्वादिमागमः । इत्त्वमपि हलादौ प्रत्यये क्ङिति विधीयमानं प्रत्ययनिमित्तत्वात्प्रत्ययलोपेऽपि भवति । अथवेति । वर्णाश्रयत्वात्प्रत्ययलक्षणेनाप्राप्तमित्त्वं 'क्वा'वित्यनेन विधीयते । अविशेषेणेति । प्रत्ययमात्रे

उ०—नेपदी । तस्यैवात्र ग्रहणमिति नियमः कुतोऽत आह—संसर्गादिति । धेनुशब्दो दोग्ध्रीपर्यायः । किशोरादयोऽश्वादिबालेषु रूढाः । तत्संबन्धाच्च धेनुशब्दो वडवादिरूपं विशेषं प्रत्याययति । आचार्यदेशीयवचनत्वे हेतुमाह—विध्यर्थे चेति । यदि वेत्यादि सिद्धान्तिवचस्तत्र यद्यन्तर्भावोऽयुक्तोऽत आह—यथैवेत्यर्थं इति । प्रत्ययलक्षणसूत्रमप्राधान्येनालाश्रयणेऽपि विध्यर्थमिति भावः । प्रत्ययलक्षणसूत्रस्य नियमार्थत्वेनाप्राधान्येना-

† वेरपृक्तस्य ६ । १ । ६७ ‡ प्रत्ययलोपे प्रत्ययलक्षणम् १ । १ । ६२

वक्ष्यामि । तन्नियमार्थं भविष्यति—अङ्येवाजादौ नान्यस्मिन्नजादाविति । इहापि तर्हि नियमादित्त्वं प्राप्नोति । आशास्यते अ.शास्यमान इति । यस्माच्छासेरङ्विहितस्तस्य ग्रहणं न चैतस्माच्छासेरङ्विहितः । कथमाशीरिति ? निपातनात्सिद्धम् । किं निपातनम् ? क्षियाशीःप्रैषेषु तिङाकाङ्क्षम् [ ८ । २ । १०४ ] इति ॥ ३४ ॥

## अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ॥ ६ । ४ । ३७ ॥

### अनुदात्तोपदेशेऽनुनासिकलोपो ल्यपि च ॥ १ ॥

अनुदात्तोपदेशेऽनुनासिकलोपो ल्यपि चेति वक्तव्यम्* । प्रमत्य प्रतत्य । ततो

### वामः ॥ २ ॥

वाम इति वक्तव्यम् । प्रयत्य प्रयम्य । प्ररत्य प्ररम्य । प्रणत्य प्रण य ॥३७॥

प्र०—'क्ङिती'त्यर्थः । अङ्येवाजादाविति । तेन शासति शशासुरित्यादावित्त्वाभावः । हलादौ क्ङिति क्वौ च नियमाभावादित्त्वं भवत्येव । तुल्यजातीयापेक्षत्वान्नियमस्याजादिरेव व्यावर्त्यते । इहापीति । शासिमात्रग्रहणं मत्वा चोदयति । यस्माच्छासेरिति । वाक्यान्तरे श्रुतः संसर्गो विशेषावगतिहेतुर्भवति । अथ धेनवो मुच्यन्तां किशोरा बध्यन्तामिति वडवा एव प्रतीयन्ते । निपातनादिति । यथान्यासे तु पूर्वोक्तेन न्यायेन प्रत्ययलक्षणसद्भावादार्यशीरित्यत्रेत्त्वं भवति । आशीरित्यत्र तु निपातनादेव ॥ ३४ ॥

अनु० । 'वा ल्यपी'ति सूत्रन्यासेऽविशेषेण विकल्पः प्राप्नोतीति वार्तिकारम्भः । तेनामन्तानां गमियमिरमिनमीनां ल्यपि विकल्पोऽन्येषां त्वनुदात्तोपदेशवनतितनोत्यादीनां नित्यं लोपः ॥ ३७ ॥

उ०—लाश्रयणेऽपि प्रत्ययलक्षणाभाव इत्यतः परिहारान्तरमाह—भाष्येऽथवेति । तदाह—वर्णाश्रयत्वादिति । नन्वविशेषेण विधाने 'शास्ती'त्यादावित्त्वं स्यादत आह—प्रत्ययमात्रे क्ङितीति । ननु योगविभागेन परिहारे वाक्यान्तरे संसर्गिणः श्रुतत्वादन्यत्र विशेषस्मृतिहेतुत्वं न स्यादत आह—वाक्यान्तरेऽपीति । पूर्वोक्तेनेति । प्रत्ययलक्षणसूत्रस्य विध्यर्थत्वमाश्रित्योक्तेनेत्यर्थः । निपातनादेवेति । आङ्पूर्वस्य शासेः सूत्रे ग्रहणाभावादिति भावः ॥ ३४ ॥

अनुदात्तोपदेशवनति० । वार्तिके स्थिते फलितं विषयविभागं दर्शयति—तेनामन्तानामिति ॥३७॥

* वा ल्यपि ६ । ४ । ३८

## गमः क्वौ ॥ ६ । ४ । ४० ॥

गमादीनामिति वक्तव्यम् । इहापि यथा स्यात्—परीतत्सहकण्ठिका । संयत् सुनदिति ।

ऊङ् च गमादीनामिति वक्तव्यम् । अग्रेगूः । भ्रूः ॥ ४० ॥

## जनसनखनां सञ्झलोः ६ । ४ । ४२ ॥

अथ किमयं समुच्चयः—सनि च झलादौ चेति । आहोस्वित्सन्विशेषणं झल्ग्रहणम्—सनि झलादाविति । किं चातः ? यदि समुच्चयः सन्यझलादावपि प्राप्नोति । सिसनिषति जिजनिषते चिखनिषति । अथ सन्विशेषणं झल्ग्रहणं जातः जातवानित्यत्र न प्राप्नोति ।

यथेच्छसि तथास्तु । अस्तु तावत्समुच्चयः । ननु चोक्तं सन्यझलादावपि प्राप्नोतीति । नैष दोषः । प्रकृतं* झल्ग्रहणमनुवर्तते तेन सनं विशेषयिष्यामः—सनि झलादाविति । अथवा पुनरस्तु सन्विशेषणम् । कथं जातः जातवानिति ? प्रकृतं* झलि क्ङितीत्यनुवर्तते ।

यद्येवं नार्थो झल्ग्रहणेन । योगविभागः करिष्यते । जनसनखनामनुनासिक-

---

प्र०—गमः क्वौ । परीतदिति । तनोतेः क्विपि नलोपे कृते तुकि 'नहिवृतिवृषी'ति पूर्वपदस्य दीर्घः । संयदिति । यमेः क्विप् । ऊङ् चेति । अनुनासिकलोपोऽकारस्योङ् च विनापि ङित्त्वेनान्त्यस्य सिध्यत्यूकार इति नार्थो ङिद्ग्रहणेन । अग्रेगूरिति । 'ओः सुपी'ति यणादेशो धातुत्वाद्भवति, अग्रेग्वाविति । [2]भ्रूरिति । 'अचि श्नुधातुभ्रुवा'मित्यत्र भ्रूग्रहणं न कर्तव्यम् । धातुत्वादुवङः सिद्धत्वात् ॥ ४० ॥

जन० । अथ किमयमिति । यदि द्वन्द्वनिर्देशः, ततः समुच्चयः । अथ सौत्रो निर्देशस्ततो विशेष्यभाव इति पक्षद्वयसंभवः । सिसनिषतीति । 'सनीवन्तर्धे'ति पक्षे इडागमः । ततः

---

उ०—गमः क्वौ । ऊङ् चेति । चशब्दार्थमाह—अनुनासिकलोप इति । नार्थो ङिद्ग्रहणेनेति । 'नेविंश' इत्यादिसाहचर्यादाचारक्विबन्ते'ऽनुदात्तङित' इत्यस्याप्रवृत्तेरिति भावः । धातुत्वादिति । भ्रमेः क्विपि भ्रूरिति सिद्धेरिति भावः । परे त्वेतन्निष्पाद्यः शुद्धयौगिकः, शरीरावयवविशेषवाची त्वव्युत्पन्नं प्रातिपदिकं तस्योवङर्थं च सूत्रे तद्ग्रहणमावश्यकम् । अग्रेभ्रूरित्यस्य 'अग्रे भ्रमती'त्यर्थ इत्याहुः ॥ ४० ॥

जनसनखनां । अथ सौत्र इति । एकवचनस्य स्थाने सौत्रं द्विवचनम् । विशेषणस्य च परनिपात इति भावः । ननु 'जनसने'त्यत्र क्ङिद्ग्रहणानुवृत्तिः किमर्था यतोऽक्ङिदर्थमेतत्स्यादत आह—

---

१—'परीतन्महाकण्ठिका' 'परीतत्सह कण्डिका' पा० । २—'अग्रेभ्रूः' पा० ।

* अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ६ । ४ । ३७

स्याकारो भवति झलि क्ङिति । ततः सनि । सनि च जनसनखनामनुनासिकस्याकारो भवति झलीत्येव । तस्मान्नार्थो झल्ग्रहणेन ।

## सनोतेरनुनासिकलोपादात्त्वं विप्रतिषेधेन ॥ १ ॥

सनोतेरनुनासिकलोपादात्त्वं भवति विप्रतिषेधेन* । सनोतेरनुनासिकलोपस्यावकाशोऽन्ये तनोत्यादयः । आत्त्वस्यावकाशोऽन्ये जनादयः । सनोतेरनुनासिकस्योभयं प्राप्नोति—सातः सातवानिति । आत्त्वं भवति विप्रतिषेधेन ।

नैष युक्तो विप्रतिषेधः । न हि सनोतेरनुनासिकलोपस्यान्ये तनोत्यादयोऽवकाशः । सनोतेर्यस्तनोत्यादिषु पाठः सोऽनवकाशः । न खल्वप्यात्त्वस्यान्ये जनादयोऽवकाशः । सनोतेर्यदात्त्वे ग्रहणं तदनवकाशं तस्यानवकाशत्वादयुक्तो विप्रतिषेधः ।

एवं तर्हि तनोत्यादिषु पाठस्तावत्सावकाशः । कोऽवकाशः ? अन्यानि तनोत्यादिकार्याणि । तनादिभ्यस्तथासोः [ २ । ४ । ७९ ] इति । आत्त्वेऽपि ग्रहणं सावकाशम् । कोऽवकाशः ? सनि च ये विभाषा [ ६ । ४ । ४३ ] च । उभयोः सावकाशयोर्युक्तो विप्रतिषेधः ।

प्र०—सनीति । अक्ङिदर्थमेतत् । जन्तुरित्यादावात्त्वाप्रसङ्गार्था हि पूर्वत्र क्ङिद्ग्रहणानुवृत्तिः ।

सनोतेरनुनासिकलोपस्येति । सनोतेर्योऽनुनासिकलोपः प्राप्नोति तनोत्यादित्वात्तस्यान्ये तनोत्यादयोऽवकाश इत्यर्थः । सनोतेस्तु तनोत्यादिषु पाठः 'तनादिकृञ्भ्य उः' 'तनादिभ्यस्तथासो'-रित्येवमर्थः । अन्ये जनादय इति । समुदायस्य कार्यं विधीयमानमवयवानां प्रवर्तते तत्र कस्य-चिदप्यवयवस्य कृतं समुदायस्य कृतं भवतीति भावः । जनादय इति बहुवचननिर्देशः प्रयोगभेदा-दारोपितबहुत्वजनखनापेक्षः । आत्त्वं भवतीति । सातः सातवानित्यादौ । सन्ग्रहणं तु सनोत्यर्थ-मेव सिषासतीति । जनखनाभ्यां तु सनः सेट्त्वाज्झलादित्वाभावः ।

उ०—जन्तुरित्यादाविति । जनेस्तुन्नौणादिकः ।

ननु सनोतेरनुनासिकलोपस्यान्ये तनोत्यादयोऽवकाशा इति विरुद्धमित्याशङ्क्याह—सनोतेर्य इति । सनोतेस्तर्हि तनोत्यादिषु पाठोऽनर्थकोऽत आह—सनोतेस्त्विति । नन्वत्र सनोतेर्ग्रहणमनवकाशमत आह—समुदायस्येति । ननु जनखनौ द्वावेवेति बहुवचनमयुक्तमत आह—बहुवचनेति । केचित्तु ष्वादि-पठितसनमादाय बहुवचनस्योपपत्तिमाहुः । सिषासतीति । 'सनीवन्तर्ध'ेति विकल्पितेट्त्वात्तदभावे उदाहर-णम् । भाष्ये—सनि च ये विभाषा चेति । आद्यचकारेण ष्वादिसनोऽपि ग्रहणमिति केचित् । एकस्य

* अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ६ । ४ । । ३७ ।

१–'सातः सातवानिति' कीलहार्नसंस्करणे नास्ति ।   २–क्वचिन्न ।

एवमप्ययुक्तो विप्रतिषेधः । पठिष्यति ह्याचार्यः 'पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्ये'ति* । एकस्य हि नामाभावे विप्रतिषेधो न स्यात् किं पुनर्यत्रोभयं नास्ति† ।

नैष दोषः । भवतीह विप्रतिषेधः । किं वक्तव्यमेतत् ? न हि । कथमनुच्यमानं गंस्यते ? आचार्यप्रवृत्तिर्ज्ञापयति भवतीह विप्रतिषेध इति यदयं घुमास्थागापाजहातिसां हलि [ ६ । ४ । ६६ ] इति हल्ग्रहणं करोति । कथं कृत्वा ज्ञापकम् ? हल्ग्रहणस्यैतत्प्रयोजनं हलादावीत्त्वं यथा स्यादिह मा भूत् गोदः कम्बलद इति× । यदि चात्र विप्रतिषेधो न स्याद्धल्ग्रहणमनर्थकं स्यात् । अस्त्वत्रेत्त्वम् । ईत्त्वस्यासिद्धत्वाल्लोपो+ भविष्यति । पश्यति त्वाचार्यो भवतीह विप्रतिषेधस्ततो हल्ग्रहणं करोति ।

नैतदस्ति ज्ञापकम् । व्यवस्थार्थमेतत्स्यात् । हलादावीत्त्वं यथा स्यादजादौ मा भूदिति । किं च स्यात् ? इयङादेशः प्रसज्येत‡ । ननु चासिद्धत्वादेवेयङादेशो न

प्र०—भवतीह विप्रतिषेध इति । विप्रतिषेधेन व्यवस्थायां क्रियमाणायामसिद्धत्वं न भवतीत्यर्थः । गोद इत्यादावसति हल्ग्रहणे परत्वादीत्त्वं स्यादिति हल्ग्रहणं क्रियते । असति चेह विप्रतिषेधे द्वयोः परस्परस्मिन्नसिद्धत्वात्कृतेऽपीत्त्वे आल्लोपेन गोदादेः सिद्धत्वादनर्थकं हल्ग्रहणं स्यात् । नैतदस्तीति । हल्ग्रहणस्य ज्ञापकत्वं विघटयति । असत्यपि विप्रतिषेधे गोद इत्यादि न सिध्यति । कृते ईत्त्वे इयङादेशप्रसङ्गादिति, तन्निवारणार्थं हल्ग्रहणं न ज्ञापकमित्यर्थः ।

उ०—हि नामेति । न चैकस्यासिद्धत्वे सिद्धेन सह तुल्यबलत्वाभाव इति युक्तो विप्रतिषेधाभावः । द्वयोरपि परस्परमसिद्धत्वे तु तुल्यबलत्वात्ततः कुतो न विप्रतिषेधः । परस्परद्दष्ट्या परस्परमसिद्धत्वेन पर्यायप्रसङ्गे नियमार्थं शास्त्रप्रवृत्तेर्दुर्वारत्वाच्चेति वाच्यम् । कैमुतिकन्यायेनात्रापि विप्रतिषेधाभावं मन्यते । यद्वा कार्यकालपक्षे 'विप्रतिषेधे' इति परिभाषाया आभीयत्वेन तद्दृष्ट्योभयोरप्यसिद्धत्वाद्विप्रतिषेधानुपपत्तिः । द्वयोः शास्त्रयोः समानाश्रयत्वे तदाश्रयाश्रयकस्यापि समानाश्रयत्वमिति भावः ।

नन्वसिद्धवच्छास्त्रे जाग्रति कथं हल्ग्रहणस्य विप्रतिषेधलिङ्गत्वं स्यादित्याशङ्क्य हल्ग्रहणानुपपत्तेरसिद्धत्वं बाधित्वा विप्रतिषेधो ज्ञाप्यत इत्याह—विप्रतिषेधेनेति । कृतेऽपीत्त्व आल्लोपेनेति । ननु विप्रतिषेधशास्त्राप्रवृत्तौ शास्त्रक्रमेण प्रथमोपस्थितत्वादाल्लोपे तस्यासिद्धत्वादीत्त्वे लक्ष्ये लक्षणस्येति न्यायेन पुनराल्लोपाप्रवृत्तौ कथं हल्ग्रहणं विना सिद्धिरिति चेन्न । 'घुमास्थे'त्येव प्रतिपदोक्तत्वात्प्रथमोपस्थितमित्याशयत् । इयङादेशप्रसङ्गादिति । ईकारस्य श्रूयमाणत्वेनाकारस्यातिदेशिकत्वेनेयङेव प्रथमोपस्थित

* ८ । २ । १ वा० १ † असिद्धवदत्राभात् ६ । ४ । २२
× आतोऽनुपसर्गे कः ३ । २ । ३ । + आतो लोप इटि च ६ । ४ । ६४ ।
‡ अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ६ । ४ । ७७ ।

भविष्यति । न शक्यमीत्त्वमियङादेशेऽसिद्धं विज्ञातुम् । इह हि दोषः स्यात् धियौ धियः पियौ पिय इति । नैतदीत्त्वम् । किं तर्हि ? ध्याप्योः संप्रसारणमेतत् । समानाश्रयं खल्वप्यसिद्धं भवति व्याश्रयं चैतत् । कथम् ? क्वावीत्त्वं क्विबन्तस्य विभक्तावियङादेशः ।

व्यवस्थार्थमेव तर्हि हल्ग्रहणं कर्तव्यम् । कुतो ह्येतदीत्त्वस्यासिद्धत्वाल्लोपो न पुनर्लोपस्यासिद्धत्वादीत्त्वमिति । तत्र चक्रकमव्यवस्था प्रसज्येत । नास्ति चक्रकप्रसङ्गः । न ह्यव्यवस्थाकारिणा शास्त्रेण भवितव्यम् । शास्त्रतो नाम व्यवस्था । तत्रेत्त्वस्यासिद्धत्वाल्लोपो लोपेनावस्थानं भविष्यति । न खल्वपि तस्मिंस्तदेवासिद्धं भवति ।

व्यवस्थार्थमेव तर्हि हल्ग्रहणं कर्तव्यम् । हलादावीत्त्वं यथा स्यादजादौ मा भूदिति । कुतो ह्येतदीत्त्वस्यासिद्धत्वाल्लोपो लोपेनावस्थानं भविष्यति न पुनर्लोप-

प्र०—ज्ञापकवाद्याह–ननु चासिद्धत्वादिति । ज्ञापकभङ्गवाद्याह–न शक्यमिति । धियाविति । दधातेः पिबतेश्च क्विपि लुप्तेऽपि प्रत्ययलक्षणेनेत्त्वं भवति । तस्यासिद्धत्वे आश्रीयमाणे इयङ् न प्राप्नोतीतीयङ्यवश्याश्रयितव्यमीत्त्वस्य सिद्धत्वमित्यर्थः । ज्ञापकवाद्याह—नैतदीत्त्वमिति । अभ्युपगम्यापीत्त्वमाह—समानाश्रयमिति । धियावित्यादावीत्त्वं व्याश्रयं गोद इत्यादौ तु समानाश्रयत्वादियङ्यसिद्धमेवेति ज्ञापकमेव हल्ग्रहणं स्थितम् । पुनर्ज्ञापकभङ्गवाद्याह—व्यवस्थार्थमिति । ज्ञापकवाद्याह—नास्ति चक्रकप्रसङ्ग इति । द्वयोरपि शास्त्रयोः प्रवृत्तौ सत्यां पुनःप्रवृत्तौ कारणाभावादित्यर्थः । लोपेनावस्थानमिति । अथ विपरीतक्रमः कस्मान्न भवति । पूर्वमाल्लोपस्तस्यासिद्धत्वादीत्त्वमिति । उच्यते । अस्मिन्नपि क्रमे ईत्त्वस्यासिद्धत्वात्पुनराल्लोपो भविष्यति, लक्ष्यसंस्कारार्थत्वाच्छास्त्रप्रवृत्तेः । न खल्वपीति । आल्लोपे कर्तव्ये ईत्त्वस्यासिद्धत्वं न त्वीत्त्वे कर्तव्ये । अस्मिन्निदमसिद्धमिति भेदनिबन्धनत्वाद्विषयविषयिभावस्य । ततश्चाल्लोपो भविष्यति । न तु पुनः पुनरीत्त्वमिति ज्ञापकमेव हल्ग्रहणमित्यर्थः । पुनर्ज्ञापकभङ्गवाद्याह—

उ०—इति भावः । भाष्ये चक्रकमव्यवस्थेति । चक्ररूपाव्यवस्थेत्यर्थः । ननु पुनःप्रवृत्तौ लोपस्याश्रीयमाणायां तस्यासिद्धत्वात्पुनरपीत्त्वं स्यादत आह—लक्ष्यसंस्कारार्थत्वादिति । लोके प्रयुक्तस्य प्रयोगस्य तावतान्वाख्यानसिद्धेरिति भावः । किं च पुनराल्लोपस्यासिद्धत्वेऽप्यनेन शास्त्रेण स्वकृतेकारस्यैव दर्शनान्न पुनरीत्त्वप्रवृत्तिः, स्वस्मिंश्च स्वयं नासिद्धमित्यपि बोध्यम् । तदेवाह—भाष्ये न खल्वपीत्यादि । किं च 'घुमास्थे'त्यस्य प्रतिपदोक्तत्वेन प्रथमोपस्थितत्वात्पूर्वमाल्लोपो दुर्लभ इत्यपि बोध्यम् । आल्लोप इति । पुनः पुनरीत्त्वप्रवृत्त्या यच्चक्रकं प्राप्नोति तदनेन परिहियत इत्यर्थः । ननु चक्रकेऽपीष्टतो व्यवस्थाया उक्तत्वाद् 'व्यवस्थार्थमेव तर्हि'त्याद्यनुपपन्नमत आह—न हि शास्त्रेति । मन्दबुद्ध्यनुग्रहार्थं हल्ग्रहणस्य कर्तव्यत्वेन न ज्ञापकत्वमित्यर्थः ।

स्यासिद्धत्वादीत्त्वमीत्त्वेन व्यवस्थानं स्यात् । तदेव खल्वपि तस्मिन्नसिद्धं भवति । कथम् ? पठिष्यति ह्याचार्यश्चिणो लुकि तग्रहणानर्थक्यं संघातस्याप्रत्ययत्वात्तलोपस्य चासिद्धत्वादिति* । चिणो लुक् चिणो लुक्येवासिद्धो भवति ।

एवं तर्हि यदि व्यवस्थार्थमेतत्स्यान्नैवायं हल्ग्रहणं कुर्वीत । अविशेषेणायमीत्वमुक्त्वा तस्याजादौ लोपमपवादं विदधीत† । इदमस्ति । आतो लोप इटि चेति । ततो घुमास्थागापाजहातिसाम् । लोपो भवतीटि चाजादौ क्ङितीति । किमर्थं पुनरिदम् ? ईत्त्वं वक्ष्यति तद्बाधनार्थम् । तत ईत् । ईच्च भवति घ्वादीनाम् । तत एर्लिङि । वान्यस्य संयोगादेः । न ल्यपि । मयतेरिदन्यतरस्याम् । ततो यति । यति चेद्भवति । सोऽयमेवं लघीयसा न्यासेन सिद्धे सति यद्धल्ग्रहणं करोति गरीयांसं यत्नमारभते तज्ज्ञापयत्याचार्यो भवतीह विप्रतिषेध इति ॥ ४२ ॥

प्र०—व्यवस्थार्थमिति । न हि शास्त्रचक्षुरन्तरेण वचनमिदमिष्टमिदमनिष्टमिति मन्यते । तदेवेति । व्यक्तिपदार्थपक्षे प्रतिलक्ष्यं लक्षणभेदाद्विषयविषयिविभागोपपत्तावीत्त्वशास्त्रमीत्त्वशास्त्र एवासिद्धमिति पुनः पुनरीत्त्वप्रवर्तनादपि चक्रकप्रसङ्ग इत्यर्थः । ज्ञापकवाद्याह—एवं तर्हीति । ईच्च भवतीति । अत्र 'क्ङिती'त्यपेक्ष्यते ॥ ४२ ॥

उ०—भाष्ये न खल्वपीत्यादिनोक्तस्य परिहारमाह—तदेव खल्वपीति । एवं च ईत्त्वेन व्यवस्थाने इष्टरूपासिद्धिः । इष्टासिद्धौ च चक्रकमपि दुर्निवारमिति भावः । लक्ष्ये 'लक्षणस्ये'ति न्यायं तु न पश्यति ।

क्ङितीत्यपेक्ष्यत इति । तेनाजादौ हलादौ च सामान्येन विहितस्येत्त्वस्याजादौ क्ङिति लोपोऽपवाद इत्यन्तरेणापि हल्ग्रहणं सिद्धमिति तज्ज्ञापकमेवेत्यर्थः । परे तु ज्ञापितेऽपि पूर्वोक्तन्यासेनैव सिद्धे हल्ग्रहणस्य चारितार्थ्याभावात्कथं ज्ञापकत्वमिति चिन्त्यमेतत् । तस्मादत्र ज्ञापकोपन्यासपरो ग्रन्थ आचार्यदेशीयस्य । 'भवतीह विप्रतिषेध' इत्येव सिद्धान्त्युक्तिः । द्वयोरसिद्धत्वेऽपि तुल्यबलत्वाद्धानिरित्याशयेन । उभयोः परस्परमसिद्धत्वारोपमात्रं नैतावता सर्वथा शास्त्रयोरभावः । विप्रतिषेधसूत्रे च यथोद्देशपक्ष एव । कार्यकालपक्षेऽपि तदुपस्थितिसामर्थ्यादसिद्धत्वबाधो वेति तत्त्वमित्याहुः ॥ ४२ ॥

* ६ । ४ । १०४ वा० १; २ ।

† आतो लोप इटि च; मयतेरिदन्यरस्याम् ६ । ४ । ६४—७० ।

१—"भाष्ये—अविशेषेणेति । अयं पाणिनिः, लोपमपवादमुक्त्वा तस्य लोपस्येत्त्वमविशेषेणोत्सर्गं कुर्यादित्यर्थः । यद्वा-उक्त्वा—वक्ष्यमाणत्वेन बुद्धिस्थीकृत्य, तथा च नासङ्गतिः—तदेतदिति ।" इत्युद्द्योतेऽधिकः पाठः क्वचित् ।

## सनः क्तिचि लोपश्चास्यान्यतरस्याम् ॥ ६ । ४ । ४५ ॥

इहान्यतरस्यांग्रहणं शक्यमकर्तुम् । कथम् ? सनः क्तिचि लोपश्च, आत्त्वं च विभाषेति* ।

अपर आह—सर्व एवायं योगः शक्योऽवक्तुम् । कथम् ? इह लोपोऽपि प्रकृत आत्त्वमपि प्रकृतं विभाषाग्रहणमपि प्रकृतम्† । तत्र केवलमभिसंबन्धमात्रं कर्तव्यम्—सनः क्तिचि लोपश्चात्त्वं च विभाषेति ॥ ४५ ॥

## आर्धधातुके ॥ ६ । ४ । ४६ ॥

कानि पुनरार्धधातुकाधिकारस्य प्रयोजनानि ?

प्र०—सनः । इह रूपत्रयं साध्यं—'सातिः सतिः सन्ति'रिति । तच्च 'सनः क्तिचि लोपश्चे'त्येतावति सूत्रे 'ये विभाषे'त्यतो विभाषाग्रहणानुवृत्तौ सिध्यतीति मत्वाह—इहेति । सर्व एवायमिति । 'सनः क्तिची'त्येव लोपस्य प्रकरणात्सिद्धत्वाल्लोपश्चेत्यपि न वक्तव्यमित्यर्थः । बहूनां पदानां प्रत्याख्यानाच्च सर्व एवायं योग इत्युच्यते ॥ ४५ ॥

आर्धधातुके । अथ द्वितीयाध्यायविहिता आर्धधातुकनिमित्ता आदेशा इहैव कस्मान्नोक्ताः । एवं हि द्विरार्धधातुकग्रहणं न कर्तव्यं भवति । नैवं शक्यमाभाच्छास्त्रीये कार्ये तेषामसिद्धत्वप्रसङ्गात् । ततश्चास्त्यादेशस्य भुवो वुक् न स्यादनादेशस्यैव तु स्यात्¹ तथा चख्यतुरित्यादौ ख्यात्रोऽसिद्धत्वाल्लोपाप्रसङ्गः ।

कानि पुनरिति । कानिचिदन्यथापि सिध्यन्तीति प्रश्नः ॥ चिकीर्षतीति । अकारो-

उ०—सनः क्तिचि । अन्यतरस्यांग्रहणप्रत्याख्याने इष्टसिद्धिं दर्शयति—इहेति । ननु सर्वस्य योगस्य प्रत्याख्याने लोपादिविधिः कुतो लभ्यतेऽत आह—सनः क्तिचीत्येवेति । एवं तर्हि सर्वशब्दोऽनुपपन्न इत्यत आह—बहूनामिति¹ ॥ ४५ ॥

आर्धधातुके । असिद्धत्वप्रसङ्गादिति । एतेनैते द्वितीयाध्याये कर्तुं शक्या इत्यपास्तम्, असिद्धत्वानापत्तेः, आङ्गत्वानापत्तेश्च । कानिचिदिति । एतच्चोत्तरत्र स्फुटीभविष्यति । ननु सनोऽकारोच्चारणसा-

* ये विभाषा ६ । ४ । ४३ ।  † अनुदात्तोपदेश⋯⋯झलि क्ङिति; विड्वनोरनुनासिकस्यात्; ये विभाषा ६ । ४ । ३७; ४१; ४३

१—"तथा च सर्वशब्दोऽवयवबहुत्वपरः; सर्वः पटो दग्ध इतिवत् । एवं च बह्ववयवोऽयं योगो न कार्यः, किन्तु स्वल्पावयव इत्यर्थो बोध्यः । अत्र 'अपर' इत्यनेनारुचिः सूचिता । तद्बीजं तु लोपस्य प्रकृतत्वेऽपि विच्छेदान्मण्डूकगतिः स्यादिति शब्दागौरवतो ज्ञानगौरवं प्रबलमिति तस्कृत्वानन्तरकिचो लोपाभावाय 'अस्य' इति प्रधानपरामर्शकमुक्तमिति बोध्यम् ।" इत्युद्द्योतेऽधिकं क्वचित् ।

अतो लोपो यलोपश्च णिलोपश्च प्रयोजनम् ।
आल्लोप ईत्त्वमेत्त्वं च चिण्वद्भावश्च सीयुटि ॥

अतो लोपः [ ६ । ४ । ४८ ] चिकीर्षिता चिकीर्षितुम् । आर्धधातुक इति किमर्थम् ? चिकीर्षति ।

नैतदस्ति प्रयोजनम् । अस्त्वत्र सनोऽकारलोपः शपोऽ*कारस्य श्रवणं भविष्यति । शप एव तर्हि मा भूदिति । एतदपि नास्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति नानेन शबकारस्य लोपो भवतीति यदयमदिप्रभृतिभ्यः शपो लुकं शास्ति† । नैतदस्ति ज्ञापकम् । कार्यार्थमेतत्स्यात्‡ । वित्तः मृष्ट इति । यत्तर्ह्याकारान्तेभ्यो लुकं शास्ति । याति वाति ।

प्र०—चारणं तु सनः प्रतीषिषतीत्यादौ द्विर्वचनार्थं स्यात् । शप एव तर्हीति । शब्विधानं तु प्रत्ययलक्षणेन गुणाद्यर्थं स्यात् । 'अतो दीर्घो यञी'त्यस्य सर्वत्राकारलोपे कोऽवकाश इति चेत् । वचनादतो लोपं बाधित्वा पचाव इत्यादौ प्रवर्तेत । तत्र च कृतार्थमदुपदेशाल्लसार्वधातुकानुदात्तत्वमज्ञापकं सार्वधातुकेऽतोलोपाभावस्य । कार्यार्थमेतत्स्यादिति । प्रत्ययलक्षणप्रतिषेधार्थमित्यर्थः । यत्तर्हीति । यदि शपोऽतो लोपः स्याद्यावाप्रभृतय आकारान्ता भूवादिष्वेव पठ्येरन् न त्वदादिषु । लुग्लोपयोस्तत्र विशेषाभावात् । ननु शिंशपाचोद्यमिदं पाठस्यावश्यकर्तव्यत्वात् । नैष दोषः । विशेषकार्यार्थत्वाद्विशिष्टगणपाठस्य । ननु याती ब्राह्मणी यान्ती ब्राह्मणीत्यादौ शप्श्यनोर्नित्यमिति प्रत्ययलक्षणेन नित्यो नुम् मा भूदित्येवमर्थं लुग्विधानं स्यात् ।

उ०—मर्थ्याल्लोपो न भविष्यतीत्यत आह—अकारोच्चारणं त्विति । [ भाष्ये—एवोऽप्यर्थे । ] गुणाद्यर्थमिति । भवत इत्यादौ गुणार्थं 'कायती'त्यादा'वशिती'त्यात्त्वप्रतिषेधार्थं 'ष्ठीवती'त्यादौ दीर्घार्थं चेति बोध्यम् । वचनादिति । स्यप्रत्ययेऽकारोच्चारणसामर्थ्याल्लोपाभावे तत्र चरितार्थत्वाच्चिन्त्यमिदम् । लसार्वधातुकानुदात्तत्वमपि तत्रैव चरितार्थं बोध्यम् । शिंशपाचोद्यमिति । 'लङ्कायां नीता सीता शिंशपामूले स्थापिते'ति केनचिदुक्ते कश्चित्पृच्छति—वृक्षान्तरेषु सत्सु किं शिंशपानुरोधेने'ति तद्वदिदं चोद्यमित्यर्थः । विशेषकार्यत्वादिति । तदभावे हि भ्वादिपाठ एवोचित इति भावः । नित्यो नुम् मा भूदिति । किं त्वा'च्छीनद्यो'रिति विकल्प एव यथा स्यादित्यर्थं पाठः स्यादिति न ज्ञापक इति भावः । तस्याङ्गस्येति । तदङ्गं धातुः । इदं च शत्रन्तस्याङ्गस्य कार्यमिति भावः । ननु सर्वत्रातो लोपे 'शप्श्यनो'रित्यस्य का गतिरत

* कर्तरि शप् ३ । १ । ६८ । † अदिप्रभृतिभ्यः शपः २ । ४ । ७२ ।
‡ सार्वधातुकार्धधातुकयोः; पुगन्तलघूपधस्य च ७ । ३ । ८४; ८६; मृजेर्वृद्धिः ७ । २ । ११४; ( प्रत्ययलोपे प्रत्ययलक्षणम् १ । १ । ६२ ); न लुमताङ्गस्य १ । १ । ६३ ।

इदं तर्हि प्रयोजनम्—वृक्षस्य प्लक्षस्य । अतो लोपः प्राप्नोति ।

यलोपोऽपि प्रयोजनम्* । बेभिदिता चेच्छिदिता । आर्धधातुक इति किमर्थम् ? बेभिद्यते चेच्छिद्यते ।

णिलोपः† । पाच्यते याज्यते । आर्धधातुक इति किमर्थम् ? पाचयति याजयति ।

आल्लोपः‡ । ययतुः ययुः । ववतुः ववुः । आर्धधातुक इति किमर्थम् ? यान्ति वान्ति ।

प्र०—नैतदस्ति । लुमता लुप्ते यदङ्गं तस्य कार्ये प्रत्ययलक्षणप्रतिषेधो न च नुमागमस्तस्याङ्गस्य कार्यमिति लुक्यपि क्रियमाणे प्रत्ययलक्षणप्रसङ्गः । सर्वत्र च शपोऽतो लोपे विज्ञायमाने 'शप्श्यनोर्नित्य'मित्यत्र प्रत्ययलक्षणं भूतपूर्वविज्ञानं वाश्रयणीयमिति नास्त्येव लुग्लोपयोर्विशेष इति ज्ञापक एवाकारान्तानामन्येषां चागुणवृद्धिभाजामदहनासादीनामदादिषु पाठः सार्वधातुकेऽतो लोपाभावस्य । कथं तर्हि याती कुले इत्यादौ प्रत्ययलक्षणेन नुम् न भवति । शपाकारस्य विशेषणात् । शपो योऽकारस्तदन्तादङ्गादुत्तरस्य शतुर्नुम् भवतीति । न च शपि लुप्ते शपोऽकारः संभवति ।

वृक्षस्येति । प्रागेव स्यादतो लोपो भूतपूर्वगत्या तु स्यादेशः । ननु परत्वात्स्यादेशो भविष्यति । तत्र कृते संनिपातपरिभाषयातोलोपो न भविष्यति । उच्यते—'कष्टाये'ति निर्देशेनानित्यत्वज्ञापनादनुपस्थानादस्याः परिभाषायाः स्यादेवातोलोपः । पाचयतीति । णिज्विधानं तु प्रत्ययलक्षणार्थं स्यादिडाद्यर्थं च पाचयितेति । यान्तीति । ननु 'श्नाभ्यस्तयोरेवातः सार्वधातुके नान्यस्ये'त्येवं नियमान्न भविष्यति । विपरीतोऽपि नियमः स्यात् 'सार्वधातुक एव

उ०—आह-सर्वत्र चेति । शप्श्यनोरादिति व्याख्याने प्रत्ययलक्षणाभावादाह—भूतपूर्वेति । भाष्ये आकारग्रहणमुपलक्षणमित्याह—अन्येषां चेति । अदहनेति । हन्ग्रहणस्य ज्ञापकत्वं चिन्त्यम् । तत्र ह्यनेन शपो लोपे तस्यासिद्धत्वादनुनासिकोपधालोपयोरप्राप्तेर्लुक आवश्यकत्वात् । असिद्धत्वमनित्यमिति वाशयः । कथं तर्हीति । लुकि लोपे च शङ्केयम् । शपो योऽकार इति । तथा च वर्णाश्रयत्वान्न प्रत्ययलक्षणमिति भावः । प्रागेवेति । इदं चिन्त्यं स्यादेशस्य परत्वात् । अतोलोपेन स्यादेशनिमित्तानन्तर्यविघातादस्ति विप्रतिषेधः । व्युत्पत्तिपक्षे सप्रत्यय उपदेशेऽकारान्त इति बोध्यम् । भूतपूर्वेति । सामर्थ्यादिति भावः । 'पाक' इति च प्रत्युदाहरणं बोध्यम् । प्रत्ययलक्षणार्थमिति । तेनोपधावृद्धिसिद्धिः । इडाद्यर्थमिति । अन्यथैकाच इति प्रतिषेधः स्यात् । सति चे'ट्यनिटी'ति प्रतिषेधाण्णिलोपो नेति बोध्यम् । ननु श्नाभ्यस्तयोरिति । अजादौ क्ङिति सार्वधातुकेऽप्यनेनैव सिद्धेरिदं नियमार्थमिति भावः । नन्वत्र पक्षे श्नाग्रहणं व्यर्थं स्यादत आह—

* यस्य हलः ६ । ४ । ४९ ।

† णेरनिटि ६ । ४ । ५१ ।

‡ आतो लोप इटि च ६ । ४ । ६४ ।

ईत्त्वम्§ । दीयते धीयते । आर्धधातुक इति किमर्थम् ? अदाताम् अधाताम् ।

एत्वम्¶ । स्नेयात् ग्लेयात् । आर्धधातुक इति किमर्थम् ? स्नायात् ।

चिण्वद्भावश्च सीयुटि+ । चिण्वद्भावे सीयुटि किमुदाहरणम् ? कारिषीष्ट हारिषीष्ट । आर्धधातुक इति किमर्थम् ? क्रियेत ह्रियेत । नैतदुदाहरणम् । यका व्यवहितत्वान्न भविष्यति । इदं तर्ह्युदाहरणम्—प्रस्नुवीत× । इदं चाप्युदाहरणम्—क्रियेत ह्रियेत । ननु चोक्तं यका व्यवहितत्वान्न भविष्यतीति । यक एव तर्हि मा भूदिति ।

प्र०—आभ्यस्तयो'रिति, ययतुरित्यादौ न स्यात् । आग्रहणमुत्तरार्थं स्यात् । अदातामिति । लुङ् ताम् 'गातिस्थाघ्वि'ति सिचो लुक् । प्रस्नुवीतेति । कर्मकर्तरीदमुदाहरणम्, तत्र यकः प्रतिषेधात् । कर्मणि तु प्रस्नूयेतेति भाव्यम् । ननु चिणोऽपि प्रतिषेधात्कथं चिण्वद्भावः । एवं तर्हि भावकर्मणोश्चिण्दर्शनादत्र चिण्वद्भावप्रसङ्ग इत्याशयः । असमाश्वस्योदाहरणान्तरमाह—इदं चापीति । येभ्यो धातुभ्यः कर्मकर्तरि चिण् प्रतिषिध्यते तेषां चिण्वद्भावस्यापि निषेधः ।

वृद्धिरिति । एतच्च 'ण्यल्लोपा'वित्याद्यनपेक्ष्योक्तम् । अत्र हि चिण्वद्भावादतो लोपोऽपि प्राप्तो वृद्धिश्च । यावादिभ्यो हि शपो लुक्विधानेन सार्वधातुकेऽतोलोपाभावो ज्ञापित इति स्वाश्रयोऽतोलोपो मा भूच्चिण्वद्भावाच्चिणि तस्य दर्शनात्स्यादेव । भाष्यकारेण तु प्राप्तिमात्रं वृद्धेराश्रित्योक्तम् । अथवा दोषोपलक्षणं वृद्धिरतोलोपेऽपि रूपासिद्धिप्रसङ्गात् । वृद्धौ कृतायामाद्गुणश्च

उ०—उत्तरार्थमिति । 'लुनीत' इत्यादावीत्त्वार्थमिति भावः ।[1] ननु स्नौतेः परस्मैपदित्वान्नेदं कर्तरि रूपं नापि कर्मणि यक्प्रसङ्गादिति कथमिदमत आह—कर्मकर्तरीति । तत्र 'न दुहस्नुनमा'मिति यक्प्रतिषेधः । असमाश्वासे बीजमाह—येभ्य इति । वस्तुत इदं चिन्त्यम् । चिण्प्रतिषेधेऽपि चिण्वद्भावप्रतिषेधे मानाभावादित्याहुः । अनपेक्ष्येति । तदपेक्षायां तु वृद्धिं बाधित्वाकारलोपेन भाव्यम् ।

ननु यावादिभ्यो लुग्विधानेनातोलोपाभावः सार्वधातुकमात्रे ज्ञापित इति कथमेतत्प्राप्तिरत आह—यावादिभ्य इति । स्वाश्रयः—सार्वधातुकाश्रयः । ननु चिणि अतो लोपाविधानात्कथं चिण्वद्भावात्प्राप्तिरत आह—चिणि तस्येति । अदन्ताच्चिण्प्रयोगस्यानभिधानाच्चिणि तस्यादर्शनमित्यन्ये । ननु वृद्धावाद्गुणप्राप्तेः कुतो युक्प्रसङ्गोऽत आह—वृद्धाविति । चिण्वद्भावादिदप्रसङ्ग इति कुतो नोक्तमत आह—

§ घुमास्थागापाजहातिसां हलि ६ । ४ । ६६ ।

¶ एर्लिङि; वान्यस्य संयोगादेः ६ । ४ । ६७; ६८ । + स्यसिच्सीयुट्......चिण्वदिट् च ६ । ४ । ६२ । × न दुहस्नुनमां यक्चिणौ ३ । १ । ८९ ।

१—"विधिलिङि व्यवधानान्नेत्याशयेनाह—भाष्ये—किमिति ।। नैतदुदेति । प्रत्युदाहरणमित्यर्थः । एवमग्रेऽपि" इत्युद्द्योतेऽधिकं क्वचित् ।

किं च स्यात् ? वृद्धिः। वृद्धौ कृतायां युक्प्रसज्येत* ॥ ४६ ॥

## भ्रस्जो रोपधयो रमन्यतरस्याम् ॥ ६ । ४ । ४७ ॥

अयं रम्रेफस्य स्थाने कस्मान्न भवति ? मिदचोऽन्त्यात्परः [ १ । १ । ४७ ] इत्यनेनाचामन्त्यात्परः क्रियते। रेफस्य तर्हि श्रवणं कस्मान्न भवति ? षष्ठ्युच्चारणसामर्थ्यात्† ।

भारद्वाजीयाः पठन्ति—'भ्रस्जो रोपधयोर्लोपः‡ आगमो रम् विधीयत' इति ।

### भ्रस्जादेशात्संप्रसारणं विप्रतिषेधेन ॥ १ ॥

भ्रस्जादेशात्संप्रसारणं+ भवति विप्रतिषेधेन। भ्रस्जादेशस्यावकाशः—भर्ष्टा भ्रष्टा। संप्रसारणस्यावकाशः—भृज्जति। इहोभयं प्राप्नोति—भृष्टः भृष्टवानिति। संप्रसारणं भवति विप्रतिषेधेन।

प्र०—प्राप्नोति युक्च। तत्र 'वार्णादाङ्गं बलीय' इति युक्प्रसङ्गः। इट्प्रसङ्गस्तु विशेषाभावान्नोक्तः ॥ ४६ ॥

भ्रस्जो०। आदेशान्तराणां स्थानितुल्यदेशानां दर्शनात्पृच्छति—अयं रमिति। रेफग्रहणस्योपलक्षणार्थत्वादुपधाया अपीति बोद्धव्यम्। रेफस्य तर्हीति। स्थानान्तरे प्रवृत्तेन रमाऽनिवर्तितत्वात्। षष्ठ्युच्चारणसामर्थ्यादिति। 'रोपधयो'रिति स्थानषष्ठ्या तयोरत्र विषयेऽप्रयोगः प्रतिपाद्यते। रोपधयोः प्रसङ्गे रम् प्रयुज्यते रोपधे न प्रयुज्येते इत्यर्थः। रम् प्रयुज्यमानो मित्त्वादचोऽन्त्यात्परो भवतीति वाक्यार्थः संपद्यते। यस्य तु देशान्तरे नास्ति विधानं स स्थानिदेश एव भवति। तत्प्रसङ्गे तस्य विधानाद्विशिष्टदेशश्च स्थानिनः प्रसङ्ग इति तद्देशेनैवादेशेन भाव्यम्। भारद्वाजीया इति। ते हि सनः क्तिचि लोप इत्यतो लोपग्रहणमनुवर्त्य रोपधयोर्लोपं रमागमं चान्यतरस्यां विदधति।

उ०—इट्प्रसङ्गस्त्विति। सीयुडादेरिटि सलोपे सवर्णदीर्घे विशेषाभाव इति भावः ॥ ४६ ॥

भ्रस्जो०। उपधाया अपीति। एवं च पर्यायेण तत्तत्स्थाने प्रसङ्ग इति भावः। प्रयुज्येत इत्यन्तेनैतत्सूत्रमात्रीयमवान्तरवाक्यार्थं दर्शयित्वा 'मिदच' इति परमार्थैकवाक्यतया महावाक्यार्थं दर्शयति—रमित्यादिना। मित्त्वादिति। मित्त्वेन स्थानिदेशत्वं बाध्यत इति भावः। आदेशस्य स्थानिदेशत्वे हेतुमाह—विशिष्टदेशश्चेति। यद्देशे स्थानिनः प्रसङ्गस्तद्देश एवादेशौचित्यादिति भावः। स्थानषष्ठीनिर्देशादन्यदेशत्वेऽपि तन्निवृत्तिमृष्यन्तरसंवादेन दर्शयति—भारद्वाजीया इति।

* आतो युक् चिण्कृतोः ७ । ३ । ३३ । † षष्ठी स्थानेयोगा १ । १ । ४९ ।

‡ सनः क्तिचि लोपश्चास्यान्यतरस्याम् ६ । ४ । ४५ ।

\+ ग्रहिज्यावयि·········ङिति च ६ । १ । १६ ।

स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ? न वक्तव्यः । रसोर्ववचनात्सिद्धम् । रसोर्वा अः भवतीति वक्ष्यामि ।

**रसोर्ववचने सिचि वृद्धेर्भ्रस्जादेशः ॥ २ ॥**

रसोर्वा अवचने सिचि‡ वृद्धेर्भ्रस्जादेशो वक्तव्यः । वृद्धौ कृतायामिदमेव रूपं स्यात्—अभ्राक्षीत् । इदं न स्यात्—अभार्क्षीदिति । सर्वथा वयं पूर्वविप्रतिषेधान्न मुच्यामहे । सूत्रं च भिद्यते ।

प्र०—भृज्जतीति । आर्धधातुकाधिकारादत्र रमोऽप्रसङ्गः ॥ रसोरिति । साच्कस्य रेफस्य सकारस्य च अशब्दो वादेशस्तत्र कृतेऽक्ङिति गुणः प्रवर्तते । भर्ष्टेति । अकाराभावपक्षे तु भ्रष्टेति । क्ङिति तु अशब्दे भृष्टमिति भवति । तदभावपक्षेऽपि संप्रसारणे सति भृष्टमिति नार्थः पूर्वविप्रतिषेधेन । इतरोऽत्रापि पूर्वविप्रतिषेधो वक्तव्य इति तुल्यतां प्रतिपादयन्नाह—रसोरिति । भ्रस्जेः सिचि अभावं विकल्पितं बाधित्वा परत्वान्नित्यं हलन्तलक्षणा वृद्धिः प्राप्नोतीति अभावार्थः पूर्वविप्रतिषेधो वक्तव्य एव । तेन रूपद्वयं सिध्यति । अभ्राक्षीत्, अभार्क्षीदिति । ननु अभावो

उ०—भाष्ये भ्रष्टा भ्रष्टुमिति । क्ङित्त्वाभावादत्र संप्रसारणाप्रसङ्ग इति भावः । रसोरिति । 'रस' इति निर्देशेऽलोऽन्त्यस्य प्रसङ्गाद्रसोरिति द्विवचननिर्देशः । साच्कस्येति । रेफमात्रस्य अकारेऽकारे यणि 'भ्रष्टे'त्येव स्यादिति तद्विधानानर्थक्यं स्यादिति भावः । एकदेशविकृतस्येति । 'राजकीय'मित्यादाविव स्थानिवद्भावाप्राप्तावपि लोकसिद्धश्वपुच्छादिदृष्टान्तमूलकैकदेशविकृतन्यायेन रस्त्वमिति भावः । शब्दान्तरस्येति । कृते अकारस्याकृतेऽकारस्येति भावः । जातिपदार्थाश्रयेण परिहरति—अजाकृतेरिति । वस्तुत अभावस्यापि शब्दान्तरप्राप्त्यानित्यत्वम् । कृताकृतप्रसङ्गित्वमात्राश्रयणे तु द्वयोरपि नित्यत्वं बोध्यम् । तस्माद्वृद्धौ कृतायां पुनःप्रसङ्गविज्ञानादभावेऽपि 'लक्ष्ये लक्षणस्ये'ति न्यायेन पुनर्वृद्ध्यप्राप्ता'वभार्क्षी'दिति न सिध्येत् । इष्टरूपयोरभ्राक्षीदिति सिध्येदभार्क्षीदिति न सिध्येदिति भाष्यार्थ इति बोध्यम् । अन्तरङ्ग इति । आर्धधातुकमात्राश्रयत्वात् । वृद्धिस्तु परस्मैपदमप्यपेक्षत इति बहिरङ्गेति भावः । न सिचीति । अयं निषेध उभयोरप्यस्थानिकत्व एव णिश्विग्रहणस्य सजातीयापेक्षज्ञापकत्वादिति तु नाश्रितम् । 'इको गुणवृद्धी' इति सूत्रे भाष्ये उक्तत्वाज्ज्ञापितमिति वक्तुं युक्तम् । अग्रे तु भाष्ये क्वापीदं न दृश्यते इति ध्येयम् । बहुस्थानिकत्वेनास्यापि बहिरङ्गत्वम् । अत एव 'न सिध्यन्तरङ्ग'मित्यस्याभावेऽपि न क्षतिरित्यन्ये । ननु रम्भावमतेऽप्ययं पूर्वविप्रतिषेध आवश्यकः । अन्यथा परत्वाद्वृद्धौ सकृद्गतिन्यायेन स न स्यादत आह—रम्भाव इति । तत्र रम्चाकारादुत्तर इति सिद्धमिति भावः । इदमुपलक्षणम्, 'बरीभृज्ज्यत' इत्यत्र नित्यतया जद्वयश्रवणार्थं'मृभावात्संप्रसारणं पूर्वविप्रतिषेधेने'त्यस्याप्यावश्यकत्वात् । किं चापिल्लिटि अभावेऽसंयोगात्परत्वेन कित्वे गुणाभावे 'बभृजतु'रिति स्यादिष्यते तु 'बभर्जतु'रिति तत्सिद्ध्यर्थं रमेव कार्यः । न च संनिपातपरिभाषयात्र न दोषः । शब्दतोऽर्थतो वास्याकित्संनिपातलक्षणत्वाभावात् । सर्वं चेदं 'सूत्रं चे'ति

१—इदं वार्तिकमिति केचित् । ‡ वदव्रजहलन्तस्याचः ७ । २ । ३ ।

यथान्यासमेवास्तु । ननु चोक्तं भ्रस्जादेशात्संप्रसारणं विप्रतिषेधेनेति । इदमिह संप्रधार्यम्—भ्रस्जादेशः क्रियतां संप्रसारणमिति किमत्र कर्तव्यम् ? परत्वाद्भ्रस्जादेशः । नित्यत्वात्संप्रसारणम् । कृतेऽपि भ्रस्जादेशे प्राप्नोत्यकृतेऽपि । भ्रस्जादेशोऽपि नित्यः । कृतेऽपि संप्रसारणे प्राप्नोत्यकृतेऽपि प्राप्नोति । कथम् ? योऽसावृकारे रेफस्तस्य चोपधायाश्च कृतेऽपि प्राप्नोति । अनित्यो भ्रस्जादेशो न हि कृते संप्रसारणे प्राप्नोति । किं कारणम् ? न हि वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते । अथापि गृह्यन्त एवमप्यनित्यः । कथम् ? उपदेश इति* वर्तते । तच्चावश्यमुपदेशग्रहणमनुवर्त्यं बरीभृज्ज्यत इत्येवमर्थम् ॥ ४७ ॥

प्र०—नित्यः कृतायामपि वृद्धावेकदेशविकृतस्यानन्यत्वात्प्रसङ्गात् । वृद्धिस्तु शब्दान्तरस्य प्रसङ्गादनित्या । अजाकृतेरेकत्वान्नास्ति वृद्धेः शब्दान्तरस्य प्राप्त्यानित्यत्वमिति द्वयोर्नित्ययोः परत्वाद्वृद्धिप्रसङ्गः । अन्तरङ्ग अभाव इति चेत्, न सिच्यन्तरङ्गमस्तीति ज्ञापयिष्यते । रम्भावे तु क्रियमाणे परत्वाद्वृद्धौ कृतायां पुनःप्रसङ्गविज्ञानाद्रमि सति सिद्धमभार्क्षीदिति । योऽसावृकारे रेफ इति । ननु च ऋकारावयवस्य रेफस्य रम् क्रियमाणः कथमन्त्यादचः परः स्यात् । मा भूदन्त्यादचः परः । तत्र विषय आदेशो भविष्यति । मित्त्वं तु भर्ष्टेत्यादौ सावकाशम् । उपदेश इति वर्तत इति । भ्रस्जेरुपदेशे यो रेफस्तत्स्थाने रम् भवति । न च ऋकारावयव उपदेशे भ्रस्जे रेफो भवति । बरीभृज्यत इति । 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यत' इति रीको रेफो भ्रस्जेर्भवतीति रम्प्रसङ्गः । भ्रस्जेरुपदेशे तु नासौ रेफ इति रमभावः । 'अनन्त्यविकारे' इत्येतत्तु प्रयोजनाभावान्नाश्रितम् ॥ ४७ ॥

उ०—चेन संगृहीतं भाष्ये । ननु चेति । तदवयवरेफस्य पृथङ्निष्कर्षायोगादृकारस्यैव रमा निवृत्तिर्वाच्येत्यजभावादन्त्यादचः परो न स्यादिति प्रश्नः । तत्र विषये । संप्रसारणविषये । आदेशो भविष्यतीति । स्थानिसमानदेश आदेशो भविष्यतीत्यर्थः । तन्मध्यपतित इति । ननु द्विःप्रयोगे द्विर्वचने द्वयोः प्रत्येकं तत्त्वेऽपि न समुदायस्य तत्त्वमिति नैतन्न्यायावसरः । अत एव 'दयते'रिति सूत्रेऽस्तेर्द्वित्वे कृत उत्तरखण्डस्य भूमावे कृत इत्यादि वक्ष्यति भाष्यकृत् । अभ्यासस्य नैरर्थक्येन तदवयवत्वेऽपि न तत्र रमशास्त्रप्रवृत्तिः । उत्तरखण्डेन व्यवधानाच्चेति चेन्न । अथापि कथंचिदित्यादिभाष्यस्यैकदेश्युक्तित्वेनादोषात् ॥ ४७ ॥

* अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ६ । ४ । ३७ ।

## अतो लोपः ६ । ४ । ४८ ॥

### एयल्लोपावियङ्यण्गुणवृद्धिदीर्घत्वेभ्यः पूर्वविप्रतिषिद्धम् ॥ १ ॥

एयल्लोपावियङ्यणगुणवृद्धिदीर्घत्वेभ्यो भवतः पूर्वविप्रतिषेधेन । णिलोपस्यावकाशः*—कार्यते हार्यते । इयङादेशस्यावकाशः†—श्रियौ श्रियः । इहोभयं प्राप्नोति—आटिटत् आशिशत् । ननु चात्र यणादेशेन‡ भवितव्यम् । इदं तर्हि—अततदत् अररचत् ।

यणादेशस्यावकाशः‡ —निन्यतुः निन्युः । णिलोपस्य स एव । इहोभयं प्राप्नोति—आटिटत् आशिशत् ।

वृद्धेरवकाशः—सखायौ सखायः§ । णिलोपस्य स एव । इहोभयं प्राप्नोति—कारयतेः कारकः, हारयतेर्हारकः¶ ।

गुणस्यावकाशः+—चेता स्तोता । णिलोपस्यावकाशः—आटिटत् आशिशत् । इहोभयं प्राप्नोति—कारणा हारणा ।

प्र०—अतो लोपः । यणादेशेनेति । 'एरनेकाच' इत्यनेन । ततश्च यणा बाधनादियङः संप्रधारणगोचरत्वाभावः । सखायाविति । 'सख्युरसंबुद्धा'विति शास्त्रातिदेशपक्षे वृद्धेरयमवकाशो न तु कार्यातिदेशपक्ष इत्यवसेयम् । णिलोपस्यावकाशः—आटिटदिति । यणो णिलोपेन बाधितत्वादिति भावः । कारणेति । ननु चात्रापीयङोऽपवाद 'एरनेकाच' इति यण् प्राप्नोति । परत्वात्तस्य गुणेन बाधनाद्गुणस्यापि पूर्वविप्रतिषेधाण्णिलोपेनेत्यदोषः । एकैकेन सह णिलोपस्य विचारादियङादीनामन्यतमविषयोऽपि णिलोपस्यावकाश उपन्यस्यते । सन्त्वत्रैते इति । ननु

उ०—अतो लोपः । शास्त्रातिदेशेति । तत्पक्षे हि 'सखाया'वित्यादावचो ञ्णिती'त्येव वृद्धिः प्रवर्तते । तस्या एव च 'कारक' इत्यादौ प्राप्तिः । कार्यातिदेशे तु कारक इत्यादौ प्राप्ताया 'अचो ञ्णिती'ति वृद्धेर्नायमवकाशः स्यादिति भावः । कार्यातिदेशेऽपि वृद्धिशासनकर्तृत्वं तस्यैवेति भाष्याल्लभ्यत इत्यन्ये । नन्वाट्टिदित्यादौ यणः प्राप्तेः कथमयं णिलोपावकाशोऽत आह—यण इति । एवं गुणणिलोपयोः स्पर्धायामवकाश एव इति भावः । तद्ध्वनयति—एकैकेन सहेति । ननु चात्रापीति । एवं च गुणस्यैव कथमिदं स्पर्धास्थानमिति भावः । समाधत्ते—परत्वादिति । अन्तरङ्गत्वादिति । वर्णमात्राश्रयत्वादिति भावः ।

* णेरनिटि ६ । ४ । ५१ । † अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ६ । ४ । ७७ ।
‡ एरनेकाचोऽसंयोगपूर्वस्य ६ । ४ । ८२ ।
§ सख्युरसम्बुद्धौ ७ । १ । ९२; अचो ञ्णिति ७ । २ । ११५ ।
¶ ण्वुल्तृचौ ३ । १ । १३३ । + सार्वधातुकार्धधातुकयोः ७ । ३ । ८४ ।

दीर्घत्वस्यावकाशः×—चीयते स्तूयते । णिलोपस्यावकाशः—कारणा हारणा । इहोभयं प्राप्नोति—कार्यते हार्यते । णिलोपो भवति विप्रतिषेधेन ।

स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ? न वक्तव्यः । सन्त्वत्रैते विधयः, एतेषु विधिषु कृतेषु स्थानिवद्भावाण्णिग्रहणेन ग्रहणाण्णिलोपो भविष्यति । नैवं शक्यम् । इयङादेशे हि दोषः स्यात् । अन्त्यस्य लोपः प्रसज्येत* ।

अल्लोपस्येयङ्यणोश्च नास्ति संप्रधारणा ।

वृद्धेरवकाशः—प्रियमाचष्टे प्रापयति+ । अल्लोपस्यावकाशः—चिकीर्षिता चिकीर्षितुम् । इहोभयं प्राप्नोति—चिकीर्षकः जिहीर्षकः† ।

गुणस्याल्लोपस्य च नास्ति संप्रधारणा ।

दीर्घत्वस्यावकाशः—अपि काकः श्येनायते‡ । अल्लोपस्य स एव । इहोभयं प्राप्नोति—चिकीर्ष्यते जिहीर्ष्यते । अल्लोपो भवति विप्रतिषेधेन ।

स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ? न वक्तव्यः । इष्टवाची परशब्दः§ । विप्रतिषेधे परं यदिष्टं तद्भवतीति ॥ ४८ ॥

प्र०—कारणा कारक इत्यादौ गुणवृद्ध्योः कृतयोरन्तरङ्गत्वादयायोः कृतयोरन्त्यस्य णिलोपः प्राप्नोति । 'वार्णादाङ्गं बलीय' इत्ययायौ बाधित्वा णिलोपो भविष्यतीत्यदोषः । प्रापयतीति । प्रियस्य प्रादेशे वृद्धौ च पुगागमः । अनार्धधातुकत्वाण्णेर्धातोरविधानादतो लोपस्यात्राप्रसङ्गः ॥ ४८ ॥

उ०—अत्र सन्त्वत्रैते इत्यादि, अन्त्यलोपः प्रसज्येतेत्यन्तं भाष्यमेकदेश्युक्तिः । वृद्ध्यादिस्थानीकारवृत्तिणित्वस्य 'भोभगो' इति सूत्रे वक्ष्यमाणभाष्यरीत्याल्विधित्वेन स्थानिवद्भावेन णित्वालाभात् । किं च 'णेरनिटी'-त्यस्य ण्यन्ताङ्गस्य निर्दिश्यमानो योऽन्त्यस्तस्य लोप इत्यर्थ इ'त्येकाच' इति सूत्रभाष्याल्लभ्यते । एवं चेयङि अन्त्यस्य निर्दिश्यमानधर्मावच्छिन्नत्वाभावात्समुदायस्य चान्त्याल्रूपत्वाभावेन लोपाप्राप्त्यास्यैकदेश्युक्तित्वमेवोचितमिति दिक् । णिलोपपूर्वविप्रतिषेधे चानिटीति ज्ञापकम् । परत्वाद्गुणादीनां बाधकत्वे इडादावपि गुणेन बाधे सिद्धे तद्वैयर्थ्यं स्पष्टमेवेति बोध्यम् । नन्वत्राप्यतोलोपप्राप्तेः कथमयं वृद्धेरवकाशोऽत आह—अनार्धधातुकत्वादिति । तत्र हेतुः—धातोरविधानम् ॥ ४८ ॥

× अकृत्सार्वधातुकयोर्दीर्घः ७ । ४ । २५ । * अलोऽन्त्यस्य १ । १ । ५२

+ णाविष्ठवत्प्रातिपदिकस्य पुंवद्भावरभावटिलोपयणादिपरार्थम् ६ । ४ । १५५ वा० १; प्रियस्थिर……द्राघिवृन्दाः ६ । ४ । १५७; अचो ञ्णिति ७ । २ । ११५; अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णौ ७ । ३ । ३६ । † ण्वुल्तृचौ ३ । १ । १३३; ( अचो ञ्णिति ७ । २ । ११५ । )

‡ कर्तुः क्यङ् सलोपश्च ३ । १ । ११; अकृत्सार्वधातुकयोर्दीर्घः ७ । ४ । २५ ।

§ विप्रतिषेधे परं कार्यम् १ । ४ । २ ।

## यस्य हलः ॥ ६ । ४ । ४९ ॥

किमिदं यलोपे वर्णग्रहणमाहोस्वित्संघातग्रहणम् । कश्चात्र विशेषः ?

**यलोपे वर्णग्रहणं चेद्धात्वन्तस्य प्रतिषेधः ॥ १ ॥**

यलोपे वर्णग्रहणं चेद्धात्वन्तस्य प्रतिषेधो वक्तव्यः । शुचियिता शुचियितुम् ।

अस्तु तर्हि संघातग्रहणम् । यदि संघातग्रहणमन्त्यस्य लोपः प्राप्नोति* । सिद्धोऽन्त्यस्य पूर्वेणैव× तत्रारम्भसामर्थ्यात्सर्वस्य भविष्यति ।

एवमपि तेनातिप्रसक्तमिति कृत्वा नियमो विज्ञायेत—यस्य हल एव नान्यतः । क्व मा भूत् ? लोलूयिता पोपूयिता । कैमर्थक्यान्नियमो भवति ? विधेयं नास्तीति कृत्वा । इह चास्ति विधेयम् । किम् ? अन्त्यस्य लोपः प्राप्तः स सर्वस्य विधेयः । तत्रापूर्वो विधिरस्तु नियमोऽस्त्वित्यपूर्व एव विधिर्भविष्यति न नियमः । एवमप्यन्त्यस्य प्राप्नोति । किं कारणम् ? न हि लोपः सर्वापहारी । ननु च संघातग्रहणसामर्थ्यात्सर्वस्य भविष्यति ।

प्र०—यस्य हलः । किमिदमिति । यद्यागन्तुनाकारेण निर्देशस्ततो वर्णमात्रग्रहणमन्यथा तु संघातग्रहणमिति पक्षद्वयसंभवः । अन्त्यस्येति । 'अलोऽन्त्यस्ये'ति वचनात् । कैमर्थक्यादिति । कोऽर्थो यस्य तत्किमर्थकं तस्य भावः कैमर्थक्यम् । प्रश्नविषययोः संबन्धोऽत्र भावप्रत्ययवाच्यः । अपूर्व एव विधिरिति । नियमे हि श्रुतार्थत्यागेनाश्रुताया अन्यनिवृत्तेः सामर्थ्यात्परिकल्पनम् । उक्तानुवाददोषश्च प्राप्नोति । एवमप्यन्त्यस्येति । अलोऽन्त्यपरिभाषोपस्थानादपूर्वस्य विधेरसंभवा'द्विधिनियमसंभवे च विधिरेव ज्याया'नित्यस्य न्यायस्यायमविषय इत्यर्थः । संघातग्रहणसामर्थ्यादिति । किं यस्य हल इत्यस्य विधिरूपत्वं बाध्यतामुतालोऽन्त्यस्येति परिभाषेति । पारार्थ्यादप्रधानस्य परिभाषायास्त्यागो युक्तो न तु प्रधानस्य विधिरूपत्वस्य बाधनम् ।

उ०—यस्य हलः । अलोऽन्त्यस्येति । हलन्ताङ्गस्य निमित्तं यो यशब्दस्तस्य लोप इत्यर्थ इति भावः । नन्वारम्भसाम्र्थ्यादित्युक्तम्, आरम्भस्य नियमार्थत्वेन चारितार्थ्यादित्याशङ्कते—भाष्ये एवमपीति । संबन्धोऽत्रेति । किमर्थकशब्देन जिज्ञासाविषयप्रयोजनकमुच्यते । तदुत्तरभावप्रत्ययेन जिज्ञासाप्रयोजनयोः संबन्धो विषयविषयिभावरूप उच्यते । प्रयोजनज्ञाने हि न तज्जिज्ञासा । तदज्ञानं च तदभावात् । सत्त्वे हि तज्ज्ञाने तैनेति स निष्प्रयोजनत्वरूपतया फलति । नियमाद्विधेर्बलवत्त्वे युक्तिमाह—नियमे हीति । सामर्थ्यात्परिकल्पनमित्यनेन तस्याशाब्दत्वं सूचयति । अलोऽन्त्यपरिभाषेति । एवं च 'परिभाषाबाधस्य विधिवादिनोऽप्यावश्यकत्वेनास्य विधेर्न नियमाल्लघुत्वमिति भावः । विधिरूपत्वस्येति । 'विधिरूपबाधन'मिति पाठे विधेर्यद्रूपं विधित्वं तस्य बाधनमित्यर्थः । इदमुपलक्षणम् । नियमवादिना प्रधानस्यातो लोप इत्यस्य हलोऽनुत्तरयविषये बाधः कल्प्य इत्यपि बोध्यम् ।

* अलोऽन्त्यस्य १ । १ । ५२ × अतो लोपः ६ । ४ । ४८ १–'नियमो वेत्यपूर्व एव' पा०

## संघातग्रहणं चेत्क्यस्य विभाषायां दोषः ॥ २ ॥

संघातग्रहणं चेत्क्यस्य विभाषायां* दोषो भवति। समिधिता समिध्यिता । यदा लोपस्तदा सर्वस्य लोपः । यदालोपस्तदा सर्वस्यालोपः प्राप्नोति ।

## आदेः परवचनात्सिद्धम् ॥ ३ ॥

हल इति पञ्चमी । तस्मादित्युत्तरस्यादेः परस्य [ १ । १ । ६७; ५४ ] इति यकारस्यैव भविष्यति ।

अथवा पुनरस्तु वर्णग्रहणम् । ननु चोक्तं यलोपे वर्णग्रहणं चेद्धात्वन्तस्य प्रतिषेध इति । नैष दोषः । अङ्गादिति हि वर्तते । न वा अङ्गादिति पञ्चम्यस्ति ।

प्र०—समिधितेति। समिधमिच्छति आत्मन इति क्यच्, ततस्तृच् इट् । इह वर्णग्रहणे 'क्यस्य विभाषे'त्यत्र क्येन यकारो विशेष्यते । क्यस्य यो यकारो हलः परस्तस्य विभाषा लोपो भवत्यकारस्य त्वतो लोप इति नित्यो लोप इति यथेष्टं रूपद्वयं सिध्यति । संघातग्रहणे तु 'यस्य हल' इत्यनेन येन नाप्राप्तिन्यायेनातो लोपो बाध्यः । यलोपोऽपि 'क्यस्य विभाषे'ति विकल्पेन बाध्यस्ततश्च पक्षे संघातस्यैव श्रवणं प्राप्नोति । नित्ययलोपवदल्लोपस्यापि विकल्पेन बाधनात् । एतच्च 'न धातुलोप' इत्यस्य प्रत्याख्यानाय 'यस्ये'ति योगविभागो व्याख्यातस्तमनाश्रित्योक्तम् । तदाश्रयेऽल्लोपस्य सिद्धत्वात् । 'क्यस्ये'ति कण्ड्वादियकोऽपि ग्रहणं केचिदिच्छन्ति, कितो यशब्दस्य ग्रहणे तात्पर्यात् । ककारस्यानुबन्धस्यादित्वमविवक्षितमिति वदन्तः। एतदपरे नेच्छन्ति। आदिभूतककारानुबन्धनिर्देश सत्यादित्वाविवक्षायां प्रमाणाभावात् । लक्ष्यस्य च तथा शिष्टैरप्रदर्शनात् ।

आदेरिति । ततश्च 'क्यस्य विभाषे'ति यकारस्यैव लोपो विकल्पेनाकारस्य तु नित्यमिति सिद्धमिष्टम् । अङ्गादिति वर्तत इति । अङ्गस्येति निमित्तनिमित्तिभावसंबन्धाश्रयणे पञ्चम्यर्थलाभात् फलाभेदात्पञ्चमीनिर्देशः कृतः । इतरो यथोक्तमभिप्रायमप्रतिपद्याह—न वै अङ्गादिति।

उ०—अकारस्य त्विति । अत्र पक्षे विषयभेदादल्लोपयलोपयोर्बाध्यबाधकत्वाभाव इति भावः । अतो लोपो बाध्य इति। एकविषयत्वादिति भावः। अल्लोपस्यापि विकल्पेनेति । एवं च तदभावेऽप्यल्लोपाभाव इति भावः । इदं च 'द्वितीतृतीयचतुर्थे'त्यादिसूत्रस्थभाष्यविरोधाच्चिन्त्यम्। तत्र हि वैकल्पिकापवादाभावे उत्सर्गस्य प्रवृत्तिरङ्गीकृता । भाष्यकृता तु वास्तवपरिहारान्तरसद्भावादिदं नोक्तमिति तत्त्वम्। तदाश्रये इति। विशेषविहितयलोपेनाल्लोपस्य बाधो मा भूदित्यर्थस्वायोगविभागस्येति भावः।

'हल' इति पञ्चमी'ति भाष्ये । अङ्गनिमित्तस्य हल उत्तरस्य यस्य लोप इत्यर्थ इत्यल्लोपापवादत्वमेव नास्येति भावः । नन्वङ्गादित्यस्याभावेनाङ्गादिति वर्तत इत्यनुपपन्नमत आह—अङ्गस्येतीति । अनेकसंबन्धेति । अवयवावयविभावादिरूपेत्यर्थः । अन्तरङ्गत्वादिति । अङ्गसंज्ञासूत्रे प्रतीतत्वेन शास्त्रीयत्वेन प्रथमप्रतीत-

* क्यस्य विभाषा ६ । ४ । ५० ।

एवं तर्ह्यङ्गस्येति* संबन्धषष्ठी विज्ञास्यते—अङ्गस्य यो यकारः। किं चाङ्गस्य यकारः? निमित्तम्। यस्मिन्नङ्गमित्येतद्भवति। कस्मिंश्चैतद्भवति? प्रत्यये ॥४६॥

## णेरनिटि ॥ ६ । ४ । ५१ ॥

अथानिटीति किमर्थम्? कारयिता कारयितुम्।

अनिटीति शक्यमवक्तुम् कस्मान्न भवति—कारयिता कारयितुम्? निष्ठायां सेटि [ ६ । ४ । ५२ ] इत्येतन्नियमार्थं भविष्यति–निष्ठायामेव सेटि णेर्लोपो भवति नान्यत्र। क मा भूत्? कारयिता कारयितुम्।

अथवोपरिष्टाद्योगविभागः करिष्यते†। इदमस्ति। निष्ठायां सेटि [ ५२ ] जनिता मन्त्रे [ ५३ ] शमिता यज्ञे [ ५४ ]। ततः अय्। अयादेशो भवति णेः सेटि। तत आमन्ताल्वाय्येत्न्विष्णुषु अय् भवतीत्येव ॥ ५१ ॥

## निष्ठायां सेटि ॥ ६ । ४ । ५२ ॥

अथ सेड्ग्रहणं किमर्थम्? निष्ठायां सेड्ग्रहणमनिटि प्रतिषेधार्थम्। निष्ठायां सेड्ग्रहणं क्रियतेऽनिटि प्रतिषेधो यथा स्यादिति। संज्ञपितः पशुरिति।

---

प्र०—संबन्धषष्ठीति। अनेकसंबन्धसंभवेऽप्यन्तरङ्गत्वान्निमित्तनिमित्तिभावलक्षण एव संबन्धः परिगृह्यते। प्रत्यय इति। प्रत्ययहेतुकत्वादङ्गव्यपदेशस्य। ननु च समुदायः प्रत्ययोऽङ्गस्य निमित्तं न तु यकारमात्रम्। अकारे लुप्ते यकारमात्रस्य प्रत्ययत्वाददोषः ॥ ४९ ॥

णेरनिटि। निष्ठायामेव सेटीति। 'सेटचेव निष्ठाया'मिति नियमो न भवति। अनिटो निष्ठाया अभावात्। अयादेशो भवतीति। लोपापवाद इत्यर्थः ॥ ५१ ॥

निष्ठायां सेटि। संज्ञपित इति। 'सनीवन्तर्धे'ति सनि विकल्पविधाना'द्यस्य विभाषे'-

---

उ०—त्वादित्यर्थः। ननु प्रत्ययोऽङ्गं नोत्पादयतीति कथं तस्य हेतुत्वमत आह–प्रत्ययहेतुकत्वादिति। प्रत्ययत्वाददोष इति। यद्यपि परत्वाद्यलोपेऽकारलोप इति कथं तस्य प्रत्ययत्वं तथापि यदि पूर्वमलोपः स्यात्तस्यापि प्रत्ययत्वं स्यादिति तार्किकप्रत्ययत्वाददोष इत्यर्थः ॥ ४६ ॥

णेरनिटि। अनिटो निष्ठाया अभावादिति। ण्यन्तात्पराया इति शेषः। एतच्चोत्तरत्र स्फुटी-भविष्यति ॥ ५१ ॥

निष्ठायां सेटि। संज्ञपिते 'मारणतोषणनिशामनेषु ज्ञा' इति मारणार्थे मित्त्वाण्णिचि पुकि मितो ह्रस्वत्वम्। अत्रार्थे संपूर्वकस्यैव प्रयोग इति पुरुषकारे उक्तम्। नन्वनेन णिलोपाभावेऽपि पूर्वेण स्यादत

---

* अङ्गस्य ६ । ४ । १ ।  † अयामन्ताल्वाय्येत्न्विष्णुषु ६ । ४ । ५५ ।

निष्ठायां सेड्ग्रहणमनिटि प्रतिषेधार्थमिति चेत्तत्सिद्धमनिडभावात् ॥ १ ॥

निष्ठायां सेड्ग्रहणमनिटि प्रतिषेधार्थमिति चेदन्तरेणापि सेड्ग्रहणं तत्सिद्धम् । कथम् ? अनिडभावात् ॥ ननु च यस्य विभाषा [ ७ । २ । १५ ] इति ज्ञपेरिट्प्रतिषेधः‡ ।

एकाचो हि प्रतिषेधः ॥ २ ॥

एकाचो हि स प्रतिषेधो* ज्ञपिश्चानेकाच् ।

इड्भावार्थं तु तन्निमित्तत्वाल्लोपस्य ॥ ३ ॥

इड्भावार्थं तर्हि सेड्ग्रहणं क्रियते । कथं पुनः सेटीत्यनेनेट् शक्यो भावयितुम् ?

प्र०—तीट्प्रतिषेधः । सेड्ग्रहणसामर्थ्याच्च पूर्वेणापि न भवति । 'वा दान्तशान्ते'त्यत्र ज्ञापेर्निपातनमाश्रीयते—ज्ञप्तः ज्ञापित इति । एकाचो हीति । 'यस्य विभाषे'त्यत्रैकाच इत्यधिकारात् ।

इड्भावार्थं त्विति । इटि कृते णिलोपो यथा स्यादकृते मा भूदिति कालावधारणार्थं सेडग्रहणमित्यर्थः । अक्रियमाणे हि सेट्ग्रहणे 'कारित' इति स्थिते णिलोपश्च प्राप्नोति इट् च । नित्यत्वाण्णिलोपः प्राप्नोति । तत्र कृते 'एकाच' इतीट्प्रतिषेधः प्राप्नोत्येकदेशविकृतस्यानन्यत्वात्स एव करोतिर्भवतीति । यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यमित्येतच्च

उ०—आह-सेड्ग्रहणेति । नन्वेवं 'वा दान्तशान्ते'तीट्प्रतिषेधप्रकरणे ज्ञप्त इति निपातनं किमर्थमत आह—वा दान्तेति । ज्ञापेरिति । मित्संनिधौ पाठे कर्तव्येऽग्रे पाठेन तत्रामित एव ग्रहणम् । 'छन्न' इत्यपि निपातनममित एव । ज्ञपने मित्त्वाभावेन तत्रेट्प्रतिषेधणिलुकोर्विकल्पेन निपातनाज्ज्ञप्तो ज्ञापित इति रूपद्वयसिद्धिः । अत एव 'तज्ज्ञापयत्याचार्य' इत्यादि संगच्छत इति नारायणः । अन्ये तु 'वा दान्ते'ति सूत्रे तु 'ज्ञप मिच्चे'त्यस्य निपातनं प्रतिपदोक्तत्वात् । अत एव वैयटे ज्ञपेर्निपातनमाश्रीयते । ज्ञप्तो ज्ञपित इति क्वचित्पाठो दृश्यत इत्याहुस्तच्चिन्त्यम् । तेनैव सिद्धावत्रत्योदाहरणपरभाष्यविरोधापत्तेः ।

नन्वनेन णिलोपो विधीयत इति कथमिटोऽभावः स्यादत आह—इटि कृत इति । ननु परत्वादेवेटि कृते णिलोपः सिद्ध इति किं सेड्ग्रहणेनात आह—अक्रियमाणे हीति । ननु य एकाच्धातुः 'कृ' इति सोऽयं न भवतीति कथमिट्प्रतिषेधोऽत आह—एकदेशेति । कायगतेति । कृताकृतप्रसङ्गमात्रेण नित्यत्वम् । तद्वैपरीत्येनैवानित्यत्वं चाश्रीयत इति भावः । अत्रापि सेड्ग्रहणमेव मानम् । ननु पूर्वमिटयपि

‡ सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् ७ । २ । ४९ ।

* एकाच उपदेशेऽनुदात्तात्; यस्य विभाषा ७ । २ । १०; १५ ।

तन्निमित्तत्वाल्लोपस्य । नात्राकृत इटि णिलोपेन भवितव्यम् । किं कारणम् ? सेटीत्युच्यते ।

अवचने हि णिलोप इट्प्रतिषेधप्रसङ्गः ॥ ४ ॥

अक्रियमाणे हि सेड्ग्रहणे णिलोपे कृत एकाच इतीट्प्रतिषेधः प्रसज्येत । कारितम् हारितम् ।

एवं तर्हि नार्थः सेड्ग्रहणेन नापि सूत्रेण । कथम् ? सप्तमे† योगविभागः करिष्यते । इदमस्ति । निष्ठायां नेड्भवति* । ततो णेः । णयन्तस्य निष्ठायां नेड्भवति । कारितम् हारितम् । ततो वृत्तम् । वृत्तमिति च निपात्यते । किं निपात्यते ? णेर्निष्ठायां लोपो निपात्यते । किं प्रयोजनम् ? नियमार्थम् । अत्रैव णेर्निष्ठायां लोपो भवति नान्यत्र । क्व मा भूत् ? कारितम् हारितम् । इहापि तर्हि प्राप्नोति-वर्तितमन्नम्, वर्तिता भिक्षेति । ततः अध्ययने । अध्ययने चेद्वृत्तिर्वर्तत इति ।

प्र०—कार्यगतभावाभावापेक्षायां नाश्रीयत इत्यनित्य एवेडागमः । इटि तु णिलोपे क्रियमाणे न प्रवर्तेत इट्प्रतिषेधो निर्वृत्तस्य प्रतिषेद्धुमशक्यत्वात् । एतच्च प्रयोजनं 'पूर्वस्मादपि विधौ स्थानिवद्भाव' इत्यनाश्रित्योक्तम् । सप्तमे योगविभाग इति । 'णेरध्ययने वृत्त'मिति योगं विभज्य योगत्रयं क्रियते । क्रमविपर्ययश्चाश्रीयते । 'णे'रित्येको योगः । तत्र 'निष्ठायां' 'ने'डिति वर्तते । ततो 'वृत्त'मिति द्वितीयो योगो णिलोपनियमार्थो गुणप्रतिषेधार्थश्चानेकप्रयोजनत्वान्निपातनानाम् । अथवा 'वृत्त'मित्येकशेषाश्रयणादेकस्य नियमार्थत्वमपरस्य गुणनिषेधार्थत्वं भविष्यति । ततः—

उ०—णिलोपे कृते प्रतिषेधेन निवृत्तिस्तस्य कथं नेष्यत आह—इटि त्विति । इटि परतो णिलोपे क्रियमाणे इत्यर्थः । अनाश्रित्योक्तमिति । तदाश्रयणे हि णिलोपस्य स्थानिवत्त्वेनैकाचः परत्वाभावादिण्निषेधाप्राप्तेः पूर्वं णिलोपेऽपि दोषाभावात् । कालावधारणार्थं सेड्ग्रहणं व्यर्थं सत्तदनित्यत्वं ज्ञापयतीति भावः । एकाच इति । एकाच इति विहितविशेषणं चाश्रित्येदमित्यपि बोध्यम् । वस्तुत एवं तर्हि नार्थः सेड्ग्रहणेनेति भाष्यस्य तत्र सूत्रे विहितविशेषणादिति शेषः । तदुत्तरं भाष्यं त्वेकदेश्युक्तिरिति बोध्यम् । क्रमविपर्ययश्चेति । 'वृत्त'मित्येतदन्ते श्रुतमपि मध्ये संबन्धनीयमित्यर्थः । ननु णिलोपनियमेन कृतार्थो योगः

† णेरध्ययने वृत्तम् ७ । २ । २६ ।
* नेड्वशि कृति; श्वीदितो निष्ठायाम् ७ । २ । ८; १४

## वृधिरमिशृधीनामुपसंख्यानं सार्वधातुकत्वात् ॥ ५ ॥

वृधिरमिशृधीनामुपसंख्यानं कर्तव्यम् । किं कारणम् ? सार्वधातुकत्वात् । वर्धन्तु त्वा सुष्टुतयो गिरो मे† । वर्धयन्त्वित्येवं प्राप्ते । बृहस्पतिष्ट्वा सुम्ने रम्णातु । रमयत्वित्येवं प्राप्ते । अग्ने शर्ध महते सौभगाय§ । शर्धयेति प्राप्ते ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । वृधिरमिशृधीनामार्धधातुकत्वात्सिद्धम् । कथमार्धधातुकत्वम् ? अन्येऽपि हि धातुप्रत्यया उभयथा छन्दसि दृश्यन्ते ॥ ५२ ॥

## अयामन्तात्वाय्येत्न्विष्णुषु ॥ ६ । ४ । ५५ ॥

किं पुनरयं क्त्नुराहोस्विदित्नुः । कश्चात्र विशेषः ?

### क्त्नाविटि णेर्गुणवचनम् ॥ १ ॥

क्त्नौ सतीटि णेर्गुणो वक्तव्यः* । गदयित्नुः स्तनयित्नुः ॥ अस्तु तर्हीत्नुः ।

प्र०—'अध्ययने' इति तृतीयो योगो वृत्तशब्दस्यार्थविशेषनियमार्थः । रम्णात्विति । व्यत्ययेन श्नाप्रत्ययः ॥ ५२ ॥

अया० । किं पुनरिति । यद्यपि क्त्ना'वयामन्तात्वाय्येत्न्विष्णु'ष्विति निर्देशानुपपत्तिः, तथापि युक्तायुक्तत्वापेक्षो विचारः । कः प्रत्यय आश्रयितुं युक्तः को न युक्त इति । अथवा किं कृतेडागमः क्त्नुरिह निर्दिष्टोऽथ प्रत्यय एवेत्नुरिति विचारः ।

क्त्नाविटीति । 'स्तनिहृषी'त्यत्र यदि क्त्नुर्विधीयते तदा तस्येटि कृते'ऽनिटी'ति वचना-

उ०—कथं गुणप्रतिषेधं कुर्यादत आह—अनेकेति । ननु गुणाभावे विधेये संभवति कथं नियमार्थतेत्यस्वरसादाह—अथवेति । अर्थविशेषेति । 'वृतेरप्यध्ययन एव नान्यत्रे'ति' ॥ ५२ ॥

अयामन्ता० । नन्विह निर्देशेनैवासंदेहात्प्रश्नानुपपत्तिरित्याह—यद्यपीति । कः प्रत्यय इति । उणादिषु व्याकरणान्तरे किं क्त्नुः प्रत्ययोऽथेत्नुरिति विचार्यत इत्यर्थः । नन्वेतत्सूत्रमुपादाय विचारे क्रियमाणेऽत्रैव संदेहो युक्त इत्यत आह—अथवेति ।

किरत्वात्त्विति । तच्च 'कृत्नु'रित्यादौ गुणप्रतिषेधायावश्यकमिति भावः । गुणो विधेय इति ।

१—"भाष्ये–निष्ठायां नेड्भवतीति 'श्वीदित' इति सूत्रस्योपयुक्तोल्लेखः । अत एव मध्यवर्तेकादशसूत्रत्यागः ॥ प्रत्याख्याने वृधीत्यस्य सिद्धमित्यत्रान्वयः ।" इत्युद्द्योतेऽधिकं क्वचित् ।

† ऋ० सं० ७ । ६६ । ७; साम० उ० ८ । १ । ४ । ३; तै० सं० २ । २ । १२ । ५; का० सं० ६ । १० । § ऋ० सं० ५ । २८ । ३; अथर्व० ७ । ७३ । १०; यजु० ३३ । १२; मै० सं० ४ । ११ । १; का० सं० २ । १५; तै० ब्रा० २ । ४ । १ । १ ।

* क्ङिति च १ । १ । ५ ।

इत्नौ प्रत्ययान्तरकरणम् ॥ २ ॥

यदि तर्हीत्नुः प्रत्ययान्तरं कर्तव्यम् ।

अयादेशे चोपसंख्यानम् ॥ ३ ॥

अयादेशे चोपसंख्यानं कर्तव्यम् । उभयं क्रियते न्यास एव ॥ ५५ ॥

## ल्यपि लघुपूर्वस्य ॥ ६ । ४ । ५६ ॥

ल्यपि लघुपूर्वस्येति चेद्व्यञ्जनान्तेषूपसंख्यानम् ॥ १ ॥

ल्यपि लघुपूर्वस्येति चेद्व्यञ्जनान्तेषूपसंख्यानं कर्तव्यम् । प्रशमय्य गतः । प्रतमय्य गतः ।

प्र०—णिलोपो नास्ति । ङित्त्वात् गुणप्रतिषेधे प्राप्ते गुणो विधेयः ॥ इत्नाविति । स्तनिहृषीत्यन्नेत्नुर्विधेयः । कृहनिभ्यां क्त्नुर्विधेयः । यदा तु स्तनादिभ्यः क्त्नुर्विधीयते, स एवोत्तरत्रानुवर्तते, तदा प्रत्ययान्तरं न विधेयम् । स्वरेऽपि भेदो नास्त्युभयथान्तोदात्तत्वात् । अयादेश चेति । णिलोपस्य प्रसङ्गादुपसंख्यानशब्देनात्र सूत्रे पाठ उच्यते न त्वपूर्वं वचनम् । भाष्यकारो गुरुलाघवमनादृत्य यथान्यासं समर्थयितुमाह—उभयमिति । यद्यत्र त्नुग्रहणमयादेशार्थं क्रियते स्तन्यादिभ्यश्च क्त्नुर्विधीयते तदा स्यादेव लाघवम् ॥ ५५ ॥

ल्यपि० । केचिदाचार्येण 'लघुपूर्वस्ये'ति षष्ठ्यन्तमध्यापिताः, अन्ये तु 'लघुपूर्वा'दिति पञ्चम्यन्तम् । तत्र षष्ठीमाश्रित्याह—ल्यपीति । प्रशमय्येति । शमेर्णिचि वृद्धौ 'मितां ह्रस्व'

उ०—अत्र सूत्रे 'इत्नु' इति न पठनीयमिति भावः ॥ उभयथान्तोदात्तत्वादिति । क्त्नौ प्रत्ययस्वरेण, इत्नुचि चित्स्वरेणेति भावः । परे त्विदं सूत्रमयादेशानुवादकं लाघवात्तदनुवादाच्च णिलोपबाधनमन्यथानुवादत्वासंभवात् । अत्र सूत्रे निमित्तत्वेनाश्रयणाण्ण्यन्तेभ्यो यथाप्रयोगमन्तादिप्रत्ययकल्पनं 'ढकि लोप' इत्यत्र ढक्कल्पनवत् । तदाह भाष्ये—क्त्नाविटीति । सूत्रस्यानुवादत्वनिर्वाहाय सूत्रकृतोऽपि तस्यावश्यकत्वमिति तदेवास्तु । अत्र सूत्रे च 'इत्नु'ग्रहणं न कार्यमिति भावः । व्याकरणान्तरे च तथैव कृतम् । णेरेव स्थानेऽयादेशे तु तदंशेऽनुवादत्वभङ्ग इत्याशयः । प्रत्ययान्तरम्—व्याकरणान्तरपठितात्प्रत्ययादन्यत् । अयादेशे चेति । तदनुवादके शास्त्र इत्यर्थः । णिलोपाभावायेति भावः । अत्र सूत्रे निमित्तत्वेनाश्रयणेनापूर्वस्य तस्य कल्पनादस्योपसंख्यानत्वव्यवहारो भाष्ये । अन्यथा सूत्रे पाठस्य निर्विवादत्वेन सूत्रे कः प्रत्ययो निर्दिष्ट इति संदेहे प्रत्ययान्तरकरणमेव दोषो न तु सूत्रेऽकरणमपि दोष इति कैयटोक्तव्याख्यायां न भाष्यसामञ्जस्यम् । क्त्नोस्तु व्याकरणान्तरपठितस्यानुमतिमात्रं नापूर्वमुपसंख्यानमिति भावः । उभयं क्रियत इति । अत्र पाठस्तेन प्रत्ययान्तरं च बोध्यत इत्यर्थः । कृञः सर्वधात्वर्थानुवादकत्वात् । एतेन यद्यत्रेत्यादि कैयटोक्तमपास्तम् । तेनैषां पङ्कजादिवद्योगरूढत्वं सूचितम् । अन्तोदात्तादयश्चैते सूत्रे पठ्यन्त इति न स्वरभेद इत्याहुः ॥ ५५ ॥

ल्यपि लघु० । अग्रिमवार्तिकानुसारात्सूत्रे पञ्चम्यन्तपाठनिर्णयेनाद्यवार्तिके षष्ठ्यन्तानुवादो न युक्तोऽत आह—केचिदिति । लघुः पूर्वो यस्मात्तस्य णेर्ल्यप्ययादेश इत्यत्र पक्षेऽर्थः । मितां ह्रस्व

अल्लोपे च गुरुपूर्वात्प्रतिषेधः ॥ २ ॥

अल्लोपे* च गुरुपूर्वात्प्रतिषेधो वक्तव्यः । प्रचिकीर्ष्य गतः ।

ल्यपि लघुपूर्वादिति वचनात्सिद्धम् ॥ ३ ॥

ल्यपि लघुपूर्वादिति वक्तव्यम् ॥ एवमपि ह्रस्वयलोपाल्लोपानामसिद्धत्वाल्ल्यपि लघुपूर्वादित्ययादेशो न प्राप्नोति† । प्रशमय्य गतः प्रतमय्य गतः । प्रबेभिदय्य गतः प्रचेच्छिदय्य गतः । प्रगदय्य गतः प्रस्तनय्य गतः ।

ह्रस्वादिषु चोक्तम् ॥ ४ ॥

किमुक्तम् ? समानाश्रयवचनात्सिद्धमिति‡ । कथम् ? णावेते विधयो णेर्ल्यप्ययादेशः ॥ ५६ ॥

प्र०—इति ह्रस्वः । तत्र णेः पूर्वं व्यञ्जनं न लघ्वित्ययादेशो न प्राप्नोति । न चात्र व्यवहितेऽपि पूर्वशब्दो वर्तत इति शक्यमाश्रयितुम्, चकासृदरिद्रादीनामपि ण्यन्तानामयादेशप्रसङ्गात्—प्रचकास्य गत इति । न चाव्यवहिते संभवति व्यवहितं पूर्वमाश्रयितुं युक्तम् । ततश्च प्रगणय्य प्रस्तनय्येत्यादावेव स्यादत्र ह्यल्लोपस्यासिद्धत्वाल्लघुपूर्वो णिर्भवति । अथापि व्याश्रयत्वादल्लोपस्यासिद्धत्वं न स्यात् । एवमपि भूतपूर्वगत्या लघुपूर्वताश्रयोऽयादेशः स्यात् । अल्लोपे चेति । अल्लोपे कृते यो गुरुपूर्वस्तस्मात्परस्य णेर्भूतपूर्वां लघुपूर्वतामाश्रित्यायादेशः प्राप्नोति । लघुपूर्वादिति वचनादिति । लघुपूर्वादिति पञ्चम्यन्तं पठितव्यमित्यर्थः । लघुः पूर्वो यस्मादिति लघुपूर्वस्तस्मात्परस्य णेरयादेशः । एवमपीति । क तर्हि स्यात् ? मृदमाचष्ट इति णिच् 'प्रकृत्यैका'-जिति प्रकृतिभावाट्टिलोपप्रतिषेधः 'प्रमृदय्य' गत इत्यादौ स्यात् ॥ ५६ ॥

उ०—इति । अमन्तत्वान्मित्त्वम् । न चात्र व्यवहित इति । उत्तरांशविकलायास्तस्मादिति परिभाषाया दुर्वारत्वादिति भावः । यद्वक्ष्यति 'न चाव्यवहित' इति । दूषणान्तरमाह—चकासिति । भाष्ये दोषान्तरमाह—अल्लोपे चेति ।

पञ्चम्यन्तपाठे यथा व्यञ्जनान्तेषु न दोषस्तथा सूत्रार्थप्रदर्शनव्याजेनाह—लघुः पूर्वो यस्मादिति । अत्रोभयत्राप्यव्यवहित एव गृह्यत इति 'प्रतिचिकीर्ष्य गत' इत्यादावपि न दोषः । न च वर्णग्रहणे जातिग्रहणाद्दोष एवात्रेति वाच्यम् । जातिग्रहणेनानेकग्रहणेऽपि वर्णद्वयस्यैव ग्रहणेनादोषात् । अत एव 'सनि मीमे'त्युत्तरं 'दम्भ इच्च' 'आप्ज्ञप्यृधा'मिति दम्भेरपि-इस्-ईत्वाभ्यां संयोगादिलोपनलोपाभ्यां सिद्धे 'दम्भ इच्चे'ति इत्त्वविधानं चरितार्थम् । इस्भावे हि सन्मेति वर्णत्रयसत्त्वेन किस्वानापत्तेरित्याहुः । न चैवं 'निपात एके'ति सूत्रस्थ 'अ इ उ अपेही'ति भाष्यविरोधः । तत्र 'अ इ उ' इति त्रयाणां सत्त्वादिति वाच्यम् । तत्रापि तद्घटकद्वयोरेवापाद्यत्वात् । क तर्हि स्यादिति । विषयान्तराभावाद्वचनसामर्थ्येन ह्रस्वादीनामसिद्धत्वं बाध्यत इति प्रश्नः ॥ ५६ ॥

* अतो लोपः ६ । ४ । ४८ ।

† मितां ह्रस्वः; यस्य हलः; अतो लोपः ६ । ४ । ९२; ४९; ४८ । ‡ ६।४।२२.वा० १२ ।

## विभाषापः ॥ ६ । ४ । ५७ ॥

इङादेशस्य प्रतिषेधो वक्तव्यः । अध्याप्य* गतः ।

**आपः सानुबन्धकनिर्देशादिङि सिद्धम् ॥ १ ॥**

आपः सानुबन्धकस्य निर्देशः करिष्यते—आप्लृ इति । तेनेङादेशस्य न भविष्यति ॥ स तर्हि सानुबन्धकनिर्देशः कर्तव्यः ? न कर्तव्यः । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेत्येवं न भविष्यति ॥ ५७ ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठस्याध्यायस्य
चतुर्थे पादे द्वितीयमाह्निकम् ।

## स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च ॥ ६ । ४ । ६२ ॥

भावकर्मणोरिति कथमिदं विज्ञायते—भावकर्मणोर्ये स्यादय इति । आहोस्विद्भाव-

---

प्र०—विभाषा० । अध्याप्येति । 'क्रीङ्जीनां णा'वित्यात्व'मर्तिह्री'त्यादिना पुगागमः ॥ सानुबन्धकनिर्देशादिति । 'आपु'लिति पठितव्यमित्यर्थः । आप्लृशब्दात्पञ्चम्येकवचने 'ऋकारलृकारयोः सवर्णविधि'रिति 'ऋत उ'दित्युत्वमुरण्रपर' इत्यत्र प्रत्याहारग्रहणाल्लपरत्वम् । भाष्यकारस्त्वसंदेहार्थमविभक्तिकत्वमाश्रित्याह—आप्लृ इति । लक्षणप्रतिपदोक्तयोरिति । लाक्षणिकस्यानुमेयरूपत्वाद्विलम्बितप्रतीतिगोचरत्वात् । प्रतिपदोक्तस्य तु प्रत्यक्षत्वादविलम्बितप्रतीतिविषयत्वादाकृतौ च पदार्थे इयं परिभाषा न व्यक्तौ तत्र हि सर्वस्यां व्यक्तौ लक्षणेन प्रवर्तितव्यम् ॥ ५७ ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे षष्ठस्याध्यायस्य
चतुर्थे पादे द्वितीयमाह्निकम् ।

स्यसिच्० । कथमिति । किं भावकर्मणोरित्यभिधेयनिर्देशो—भावकर्मणोर्ये वर्तन्ते स्यादय इति, अथ भावकर्माभिधायी प्रत्ययो भावकर्मभ्याममभिधीयते—भावकर्मवाचिनि प्रत्यये

---

उ०—विभाषापः । असंदेहार्थमिति । आपुलिति किमाङ्पूर्वस्य 'पुल महत्त्वे' इत्यस्याविभक्तिको निर्देश उताप्लृधातोरिति संदेहनिवृत्त्यर्थमित्यर्थः । आकृतौ चेति । इदमयुक्तमित्यसकृदावेदितम् ॥ ५७ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते षष्ठस्याध्यायस्य
चतुर्थे पादे द्वितीयमाह्निकम् ।

स्यसिच्सीयुट्० । नन्वर्थद्वयपरिग्रहमाश्रित्य तृतीयपक्षोऽपि किं नोद्भावितोऽत आह—युगपदिति ननु सीयुट आगमत्वाद्भावकर्मवृत्तित्वासंभव इति कथं सीयुटो विशेषितत्वमत आह—आर्धधातुक इति ।

---

*क्रीङ्जीनां णौ ६ । १ । ४८; अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णौ ७ । ३ । ३६ ।

कर्मवाचिनि परतो ये स्यादय इति । किं चातः ? यदि विज्ञायते भावकर्मणोर्ये स्यादय इति सीयुड्विशेषितः स्यसिच्तासयोऽविशेषिताः । अथ विज्ञायते भावकर्मवाचिनि परतो ये स्यादय इति स्यसिच्तासयो विशेषिताः सीयुडविशेषितः । उभयथा चिण्वद्भावोऽविशेषितः ।

यथेच्छसि तथास्तु । अस्तु तावद्भावकर्मणोर्ये स्यादय इति । ननु चोक्तं सीयुड्विशेषितः स्यसिच्तासयोऽविशेषिता इति । स्यसिच्तासयश्च विशेषिताः । कथम् ? भावकर्मणोर्यग्भवतीत्यत्र* स्यादयोऽप्यनुवर्तिष्यन्ते । अथवा पुनरस्तु भाव-

प्र०—परतो ये स्यादय इति । तत्राद्ये पक्षे भावकर्मशब्दस्य मुख्यार्थवृत्तित्वम् । द्वितीये गौणार्थता । युगपत्तु गौणमुख्यार्थवृत्तित्वासंभव इति मत्वा प्रश्नः । यदि विज्ञायत इति । यदि प्रसिद्ध्यनुरोधेन मुख्यार्थपरिग्रहः । सीयुड्विशेषित इति । 'आर्धधातुके' इति वर्तते । न च सीयुट आगममात्रस्यार्धधातुकसंज्ञास्तीति सामर्थ्यात्सीयुडाद्यार्धधातुकं गृह्यते । तस्य च संभवति भावकर्माभिधायित्वमित्यर्थः । स्यसिच्तास इति । भावकर्तृकर्मणां लादेशार्थत्वेन शास्त्रे व्यवस्थापितत्वाद्विकरणानामतदर्थत्वात् । अथेति । अथ भूयसामनुग्रहाय यदि गौणार्थत्वसंश्रयणमिति भावः । सीयुडविशेषित इति । तत्र सीयुटः प्रत्ययैकदेशत्वात्समुदायावयवयोः पौर्वापर्याभावादागमे ह्युपजाते सागमकस्य प्रत्ययादयः संज्ञा अर्थाभिसंबन्धश्च न तदवयवस्येति सीयुटो भावकर्मवाचिप्रत्ययपरत्वासंभवः सत्यप्यवयवयोः पौर्वापर्ये । अतोऽनन्तरं क्वचित्पाठः—'उभयथापि चिण्वद्भावोऽविशेषत' इति । तत्र न दोषान्तरोपन्यासः । किं तर्हि पक्षद्वये दोषोपसंहारः । अन्यतरपक्षपरिग्रहे सर्वविषयाव्यापनादविशेषितश्चिण्वद्भाव इत्यर्थः । स्यादयोऽपीति । स्याद्यनुवृत्तेरिदमेव प्रयोजनम् । भावकर्मणी स्यादीनामप्यभिधेये यथा स्यातामिति । यथा च द्वन्द्वपदानि प्रत्येकं समुदायार्थवाचीनि तथा स्यादयो लादेशाश्च भावकर्मणी अभिदधतीति न कश्चिद्दोषः । भावकर्म-

उ०—शास्त्रे-'सार्वधातुके य'गितिसूत्रस्थभाष्ये । स्यादीनां साधारणत्वेन तद्द्योतकत्वमपि नेति भावः । ननु मुख्ये संभवति गौणग्रहणमन्याय्यमत आह—भूयसामिति । अविशेषित इति । 'भावकर्मणो'रित्यनेन विशेषणेनेति भावः । भाष्ये—चिण्वद्भावोऽविशेषित इति । चिण्वद्भावविषयः सर्वोऽविशेषित इत्यर्थः । ननु 'भावकर्मणोर्य'गित्यत्र स्यादीनामनुवृत्तावपि कथमत्रेष्टसिद्धिरत आह—स्याद्यनुवृत्तेरिति । ये स्यादयो विहितास्ते भावकर्मणोर्भवन्तीति वाक्यभेदेन संबन्ध इति भावः । ननु लादेशैरेव तयोरर्थयोरुक्तत्वात्पुनस्तेषां तदभिधायकत्वं व्यर्थमित्यत आह—यथा चेति । अन्यथा स्यादीनामानर्थक्यात्प्रयोग एव न स्यादिति भावः । समुदायार्थेति । परस्परसमभिव्याहारात्साहित्यरूपार्थवाचीनीति भावः । अभिदधतीति । द्योतय-

* सार्वधातुके यक् ३ । १ । ६७

कर्मवाचिनि परतो ये स्यादय इति। ननु चोक्तं स्यसिच्तासयो विशेषिताः सीयुड-विशेषित इति। सीयुट् च विशेषितः। कथम्? भावकर्मवाचिनि परतः सीयुड् नास्तीति कृत्वा भावकर्मवाचिनि सीयुटि कार्यं विज्ञास्यते।

अथेट् चेत्युच्यते कस्यायमिड्भवति। अङ्गस्येति† वर्तते। यद्येवमादित इट् प्राप्नोत्यडाड्वत्‡। तद्यथाडाटौ टित्त्वादादितो भवतस्तद्वत्।

एवं तर्हि स्यादीनामेव भविष्यति। एवमपि षष्ठ्यभावान्न प्राप्नोति। ननु च भावकर्मणोरित्येषा षष्ठी। नैषा षष्ठी। किं तर्हि? अर्थनिर्देश एषा सप्तमी—भावे चार्थे कर्मणि चेति। एवं तर्हि भावकर्मणोरित्येषा सप्तमी स्यादिष्विति सप्तम्याः षष्ठीं

प्र०—वाचिनि सीयुटीति। तन्त्रन्यायाश्रयणादेकं भावकर्मग्रहणं भिन्नेन रूपेण यथासंभवं स्यादिभिः संबध्यते। अथवा विषयसप्तम्येवाश्रीयते। भावकर्मविषयेषु स्यादिषु चिण्वत्कार्यं भवतीति नास्ति दोषस्यावकाशः।

कस्यायमिति। स्यादीनामागमसंबन्धे षष्ठ्यनिर्देशात्प्रश्नः। स एवाह—अङ्गस्येति वर्तत इति। प्रकरणस्य नियोजकत्वं चेदाश्रीयते तदानिष्टप्रसङ्ग इत्यर्थः। अथवाङ्गस्येति वर्तत इति सिद्धान्तवादिवचनम्। अङ्गस्य निमित्तं यत्तस्येडागम इत्यर्थः। इतरस्त्वङ्गमेवानेनागमित्वेनोक्तमिति मत्वाह—यद्येवमिति। षष्ठ्यभावादिति। इच्छामात्रेण स्यादीनामागमित्वमलभ्यमित्यर्थः। ननु च भावकर्मणोरित्येषा षष्ठीति। षष्ठीनिमित्तत्वात्षष्ठीत्युच्यते। यथा नड्वलोदकं पादरोगः। इह भावकर्मवाचिनि परतो ये स्यादय इति शब्देन शब्दस्य पौर्वापर्यसंभवात् 'तस्मिन्निति निर्दिष्टे पूर्वस्ये'ति परिभाषोपतिष्ठत इत्यस्ति भावकर्मणोरित्यस्य षष्ठीप्रक्लृप्तौ निमित्तभावः। इतरस्तु भावकर्मणोरित्यभिधेयसप्तमीं मत्वाह—

उ०—न्तीत्यर्थः। नन्वेकस्य शब्दस्य सामानाधिकरण्यं वैयधिकरण्यं च युगपन्न संभवतीत्यत आह तन्त्रन्यायेति। अत्र पक्षे 'स्यसिच्सीयुट्तासि'ष्विति द्वन्द्वानुपपत्तेराह—अथवेति। भावकर्मविषयेष्विति। भावकर्मविषयकज्ञानजनकज्ञानविषयेष्वित्यर्थः। ननु स्यादीनां श्रुतत्वादिष्टत्वाच्च तेषामेवेट् सिध्यति, किं प्रश्नेनेत्यत आह—स्यादीनामिति। स एवेति। न तु सिद्धान्ती। श्रुतानां षष्ठ्यन्तत्वाभावेनागमित्वे प्रमाणाभावात्। श्रुतेर्विनियोजकत्वाभावे प्रकरणस्य विनियोजकत्वमाश्रीयत इत्यर्थः। एवं व्याख्याने ग्रन्थच्छायाभङ्गं मत्वा प्रकारान्तरेण व्याचष्टे—अथवेति। इच्छामात्रेणेति। श्रुत्यादिभिः प्रमाणैरेव शेषत्वलाभो न तु केवलेच्छयेत्यर्थः। कथं पुन'र्भावकर्मणो'रित्यस्य षष्ठीनिमित्तत्वमत आह—इहेति। ननु सप्तमीनिर्देशसाम-

† अङ्गस्य ६।४।१

‡ आद्यन्तौ टकितौ १।१।४६; लुङ्लङ्लृङ्क्ष्वडुदात्तः; आडजादीनाम् ६।४।७१; ७२

प्रकल्पयिष्यति तस्मिन्निति निर्दिष्टे पूर्वस्य [ १ । १ ६६ ] इति । एवमपि न सिध्यति । किं कारणम् ? न ह्यर्थेन पौर्वापर्यमस्ति । अर्थेऽसंभवात्तद्वाचिनि शब्दे कार्यं विज्ञास्यते । एवमपि सीयुटो न प्राप्नोति ।

एवं तर्हि सप्तमे × योगविभागः करिष्यते । आर्धधातुकस्येट् । यावानिड्नाम स सर्व आर्धधातुकस्येड् भवति । ततो वलादेः । वलादेरार्धधातुकस्येड् भवतीति ।

यद्येवं स्यसिच्सीयुट्तासिष्विड्भवति चिण्वद्भावोऽविशेषितो भवति । तत्र को दोषः ? स्यसिच्सीयुट्तासिष्विड्भवत्यज्झनग्रहदृशां वा चिण्वदिति क्वचिदेव चिण्वद्भावः स्यात् । एवं तर्हि स्यादीनेवापेक्षिष्यामहे । स्यसिच्सीयुट्तासिष्विड्भवति,

प्र०—नैषा षष्ठीति । इतरः स्वाभिप्रायं प्रकाशयितुमाह—एवं तर्हीति । भावकर्मवाची प्रत्यय उपचाराद्भावकर्मशब्दवाच्यः परस्तेन सप्तम्या प्रतिपादित इति सप्तमी 'स्यसिच्सीयुट्-तासि'ष्विति सप्तम्याः कार्यातिदेशे चरितार्थायाः षष्ठीं प्रकल्पयति । चोदको यथोक्तमभिप्रायम-प्रतिपद्याह—न सिध्यतीति । तत्र निःशब्दस्य प्रयोजनं शब्दे सप्तमीनिर्दिष्टे परिभाषोपस्थानं यथा स्यादर्थे मा भूत् । शब्दश्च शब्दाद्बहिर्भूतोऽर्थस्त्वन्तर्भूतो निःशब्दो बहिर्भाववाची । पूर्वोक्तेना-भिप्रायेणाह—अर्थेऽसंभवादिति । एवमपीति । न हि सीयुटो भावकर्मवाचिना प्रत्ययेन पौर्वापर्यमस्ति । सीयुटस्तदवयवत्वात् । आर्धधातुकस्येडिति । परिभाषेयं क्रियते । यत्रेड् विधीयते तत्रार्धधातुकस्येत्युपतिष्ठते । तेन स्यादीनामेवासत्यामपि षष्ठीप्रक्लृप्ताविड् भविष्यति । 'रुदादिभ्यः सार्वधातुके' इत्यत्र विरोधादार्धधातुकस्येति नोपतिष्ठते । यद्येवमिति । स्यादीनामा-गमविधावुपयोगात्पुनः श्रुत्यभावादविशेषितश्चिण्वद्भावः । आर्धधातुकग्रहणे ह्युपतिष्ठमाने तेन स्यादीनां विशेषणादागमसंबन्धयोग्यषष्ठ्युपादानादयमर्थः स्यात्—अज्झनग्रहदृशां वा चिण्वद्भवति यत्र क्वचित् । यत्र तु स्यादयः सन्ति तेषामिडिति । यथा 'कर्तुः क्यङ् सलोपश्च'इत्यत्रेति भावः । स्यादीनेवेति । तेषामेव श्रुतत्वात्तत्परित्यागेनाश्रुतकल्पनाया अयुक्तत्वात्प्रत्ययापेक्षत्वादङ्गस्येति भावः । सप्तमीनिर्देशसामर्थ्याद्वा चिण्वद्भावे पूर्वमुपयुक्तानां स्यादीनामार्धधातुकोपस्थानसामर्थ्या-

उ०—ष्ष्ठ्याः षष्ठीप्रक्लृप्तिर्न स्यादत आह—कार्यातिदेश इति । स्यादिषु परतोऽज्झनादीनां चिण्वत्कार्यं भवतीति पूर्ववाक्ये चरितार्था सप्तमीति भावः । अर्थे मा भूदिति । 'जनपदे लु'बित्यादौ यथा । असत्यामपीति । 'आर्धधातुकस्ये'त्युपस्थाने प्रत्यासत्त्यार्धधातुकपदेन स्यादीनामेव ग्रहणं स्यादय इटा संबध्यन्ते । सीयुड्-विषये च सीयुडादि गृह्यत इति भावः । अविशेषितश्चिण्वद्भाव इति । तद्विषयो हनादिरित्यर्थः । नन्विट्-संनियोगेन विधीयमानश्चिण्वद्भावस्तत्रैव भवेन्न यत्र क्वचिदित्यत्राह—यथा कर्तुरिति । अन्वाचय-शिष्टश्चिण्वद्भाव इत्यर्थः । प्रत्ययापेक्षत्वादङ्गस्येति । अङ्गसंज्ञाया इत्यर्थः । अजादीनामङ्गानां चिण्वद्भाव-विधानात्प्रत्ययाकाङ्क्षायां प्रत्ययानां संनिहितानामेव योग्यत्वात्संबन्ध इति भावः ! एवमागमविधावुप-युक्तानां स्यादीनां पश्चाच्चिण्वद्भावेनान्वय इत्युक्तम् । वस्तुतः पूर्वं चिण्वद्भाव उपयुक्तानां पश्चादिटा संबन्धो

× आर्धधातुकस्येड्वलादेः ७ । २ । ३५ ।

अज्झनग्रहदृशां वा चिण्वत्स्यादिष्विति ।

अथ के पुनरिमिमिटं प्रयोजयन्ति ? येऽनुदात्ताः* । अथ य उदात्तास्तेषां कथम् ? सिद्धं तेनैव परत्वात्† ।

उदात्तेभ्योऽपि वा अनेनैवेडेषितव्यः । किं प्रयोजनम् ? कारयतेः कारिष्यते । हारयतेर्हारिष्यते । इटोऽसिद्धत्वाण्णेरनिटि [ ६ । ४ । ५१ ] इति णिलोपो यथा स्यात् । कथं पुनरिच्छतापि भवतोदात्तेभ्योऽनेनैवेड्लभ्यो न पुनरनेनास्तु तेन वेति तेनैव स्याद्विप्रतिषेधेन । ननु च नित्योऽयम् । कृतेऽपि तस्मिन्प्राप्नोत्यकृतेऽपि प्राप्नोति । न त्वस्मिन्कृतेऽपि स प्राप्नोति । किं कारणम् ? अवलादित्वात् । तस्मादनेनैव भविष्यतीट् ।

---

प्र०—त्पश्चादिटा संबन्धः ।

के पुनरिति । सर्वेभ्य इष्यते न च प्राप्नोतीति मत्वा प्रश्नः । स एव पराभिप्रायमाशङ्कते—येऽनुदात्ताः । अथ ये उदात्तास्तेषां कथम् ? सिद्धं तेनैव परत्वादिति । किमेवं भवान्मन्यत इत्यर्थः । ततः सिद्धान्तवाचाह—उदात्तेभ्योऽपीति । अथवा शिष्याचार्यदेशीययोः के पुनरित्यादिके प्रश्नप्रतिवचने परत्वादित्यन्ते । आचार्य आह—उदात्तेभ्योऽपीति । उदात्तग्रहणं चोपलक्षणम् । 'ऋद्धनोः स्ये' इत्यनुदात्तेभ्योऽपीड्विधानात् । तुल्यत्वान्न्यायस्य तेभ्योऽप्यनेनैवेड्विधिः । इटोऽसिद्धत्वादिति । ततश्चा'निटी'ति प्रतिषेधाभावात्सिध्यति णिलोपः । अपि चेट्संनियोगेन विधीयमानश्चिण्वद्भावोऽपि भवति । अन्यथैतदभावे चिण्वद्भावो न स्यात् । संनियोगशिष्टानामन्यतराभावे द्वितीयाभावात् । अन्वाचये तु विज्ञायमाने स्याच्चिण्वद्भावः । यथा कर्तुः क्यङ् सलोपाभावेऽपि । नित्योऽयमिति । वलादित्वानपेक्षणात् । आकृतिपक्षे च शब्दान्तरत्वाभावात् । शब्दान्तरप्राप्त्यापि नास्त्यनित्यत्वम् । भावकर्मार्थापेक्षणादस्य बहिरङ्गत्वमिति चेत्तस्यापि वलादित्वापेक्षत्वान्नास्त्यन्तरङ्गत्वमित्यदोषः ।

---

उ०—युक्तर इति स एव भाष्यार्थ इत्याह—सप्तमीनिर्देशसामर्थ्याद्वेति । अयमत्र भाष्यार्थः—पूर्वं चिण्वद्भावे उपयुक्तानेव स्यादीन् अत्रेड्विधिवाक्ये आर्धधातुकपदेनापेक्षिष्यामह इति ।

स एवेति । न तु सिद्धान्तवादी हेयवादस्य पक्षस्येति भावः । तुल्यत्वान्न्यायस्येति । यथोदात्तेभ्यो नित्यत्वादयमेवेड् भवति तथा 'ऋद्धनोः स्ये' इत्यादिविषयेऽप्यनेनेद । तस्यापि वलादिलक्षणत्वादिति भावः । फलान्तरं दर्शयति—अपि चेदिति । अन्वाचये त्विति । असति तात्पर्यग्राहके एकचकारप्रयोगे समुच्चयस्यैव प्रतीतेः स युक्त इति भावः । ननु वलादिलक्षणे इटि सतीडादेः प्राप्नोत्यसति तद्रहितस्येति शब्दान्तरप्राप्त्यायमनित्योऽत आह—आकृतिपक्षे चेति । व्यक्तिपक्षे हि स न्याय इति भावः । वस्तुतोऽत्र लक्ष्यानुसारात्कृताकृतप्रसङ्गित्वमात्रेणानित्यत्वाङ्गीकार इति बोध्यम् । तस्यापि वलादित्वेति । अर्थकृतबहिरङ्गत्वस्यानाश्रयणाच्चेत्यपि बोध्यम् ।

---

* एकाच उपदेशेऽनुदात्तात् ७ । २ । १० । † आर्धधातुकस्येड्वलादेः ७ । २ । ३५ ।

कानि पुनरस्य योगस्य प्रयोजनानि ?

**वृद्धिश्चिण्वद्युक् च हन्तेश्च घत्वं दीर्घश्चोक्तो यो मितां वा चिणीति ।**

वृद्धिः‡ प्रयोजनम् । चेष्यते चायिष्यते ॥ युक् च § प्रयोजनम् । ग्लास्यते ग्लायिष्यते ॥ हन्तेश्च घत्वं¶ प्रयोजनम् । हनिष्यते घानिष्यते ॥ दीर्घश्चोक्तो यो मितां वा चिणीति* स च प्रयोजनम् । शमिष्यते शामिष्यते । तमिष्यते तामिष्यते ।

**इट् चासिद्धस्तेन मे लुप्यते णिर्नित्यश्चायं वलिनिमित्तो विघाती ॥**

इटोऽसिद्धत्वाण्णेरनिटि [ ६ । ४ । ५१ ] इति णिलोपो यथा स्यात् । कथं पुनरयं नित्यः ? कृताकृतप्रसङ्गित्वात् । कृतेऽपि तस्मिन्निटि साप्तमिक आर्धधातुकस्येड्वलादेः [ ७ । २ । ३५ ] इति पुनरयं भवति । अस्मिंस्तु विहिते वलादित्वस्य निमित्तस्य विहतत्वात्साप्तमिको न भवति ।

प्र०—कानि पुनरिति । किं प्रकरणाद्व्यवस्थाश्रयणादाङ्गान्येव कार्याणि प्रयोजनान्यथाविशेषेणेति प्रश्नः । इतर आङ्गान्येवोदाहरति—वृद्धिरिति । विघातीति । अस्मिन्निटि सति वलादिलक्षणस्येटो वलादित्वाभावादप्रवृत्तिलक्षणो विघातस्ततस्तस्यानित्यत्वमित्यर्थः । अथवा वलूनिमित्त इडविघाती अस्येटोऽप्रतिबन्धक इत्यर्थः ।

उ०—इतर इति । प्रकरणाद्व्यवस्थामाश्रित्येत्यर्थः । चिण्वदित्यस्य चिण्वद्भावप्रयोजनमित्यर्थः । विघातीत्यस्यानित्य इत्यर्थं दर्शयति—अस्मिन्निटीति । अथवेति । अकारप्रश्लेषः कार्य इति भावः । एवं चाद्ये 'वलूनिमित्त' इत्यस्यानित्य इति शेषः । तस्य हेतुर्विघातीति । अस्यायमिति शेषः । कर्तरि णिनिस्तद्वक्ष्यति क्वचिद्भाष्येऽयं तस्य निमित्तं विहन्तीति । अन्ये तु यतो वलूनिमित्तोऽस्याविघाती । एवं न विहन्तीत्यतोऽयं नित्य इत्यर्थः । तद्वक्ष्यति स त्वस्य निमित्तं न विहन्तीति । अन्यतरपदेऽन्यदार्यं बोध्यम् । अन्ये तु अत्रायं वार्तिकार्थः । वृद्धिः—अन्त्यवृद्धिरुपधावृद्धिश्च । इडिति । इट् च प्रयोजनं इत्यादौ ।

‡ अचो ञ्णिति ७ । २ । ११५ ।
§ आतो युक् चिण्कृतोः ७ । ३ । ३३ ।
¶ हो हन्तेर्ञ्णिन्नेषु ७ । ३ । ५४ ।
* चिण्णमुलोर्दीर्घोऽन्यतरस्याम् ६ । ४ । ९३ ।

अथोपदेशग्रहणं किमर्थम् ?

**चिण्वद्भाव उपदेशवचनमृकारगुणबलीयस्त्वात् ॥ १ ॥**

चिण्वद्भाव उपदेशवचनं क्रियत ऋकारगुणस्य बलीयस्त्वात् । कारिष्यते । परत्वाद्गुणे† कृते रपरत्वे चानजन्तत्वाच्चिण्वद्भावो न प्राप्नोति । उपदेशग्रहणाद्भविष्यति ।

**वधिभावात्सीयुटि चिण्वद्भावो विप्रतिषेधेन ॥ २ ॥**

वधिभावात्सीयुटि चिण्वद्भावो भवति विप्रतिषेधेन । वधिभावस्यावकाशः‡—वध्यात् वध्यास्ताम् वध्यासुः । चिण्वद्भावस्यावकाशः—घानिष्यते अघानिष्यत । इहोभयं प्राप्नोति—घानिषीष्ट घानिषीयास्ताम् घानिषीरन् । चिण्वद्भावो भवति

---

प्र०—ऋकारगुणस्येति । अन्येषां तु गुणोऽजन्तत्वं न विहन्तीति नित्यत्वाच्चिण्वद्भावः । सिध्यति चायिष्यते लाविष्यत इति भावः । परत्वादिति । द्वयोरप्यनित्यत्वात् ।

वधिभावादिति । ननु चा'र्धधातुके' इति विषयसप्तम्याश्रयणादन्तरङ्गो वधिभावः । नैतदस्ति । 'लिङी'ति विशेषनिर्देशात् परसप्तमी । तद्विशेषणत्वादार्धधातुक इत्यपि परसप्तमी । यत्र तु विशेषनिर्देशाभावोऽस्तेर्भूरित्यादौ तत्रैव विषयसप्तमीविज्ञानं भव्यादिसिद्धयर्थम् । 'एकाच उपदेशेऽनुदात्ता'दित्यत्र तु वक्ष्यति भाष्यकारः–'वधिषीष्टेत्यत्र निपातनस्वरं प्रत्ययस्वरो

---

उ०—चासिद्ध इत्यत्रोपस्थितत्वादिडेव गृह्यत इत्याहुः । 'ऋकारे'ति विशेषणकृत्यमाह—अन्येषामिति । ऋकारान्तगुणस्तु प्रसङ्गावस्थायामेव रपरत्वादजन्तत्वस्य विघातक इति भावः । न चोपदेशग्रहणे कृतेऽप्युपदेशे योऽच् तदन्तस्येत्यर्थे 'चायिष्यते' इत्यादावप्यनुपपत्तिः । उपदेशे योऽच् तदन्तत्वाभावात् । एवं 'कारिष्यते' इत्यादावपि दोषः । उपदेशे यदजन्तमित्यर्थस्तु ण्यन्तेऽनापत्त्या कर्तुमशक्यः । न च ण्यन्ते लोपप्रवृत्तावल्विधौ स्थानिवत्त्वाभावादुपदेशे योऽच् तदन्तत्वमपि दुरुपपादम् । णिलोपात्परत्वेनार्धधातुकस्येतीट्प्राप्त्या तं नित्यत्वेन बाधित्वा चिण्वदिट एव प्रवृत्तेरदोषात् । विप्रतिषेधे आभीयासिद्धत्वाभावेन णिलोपात्परत्वादस्यैव प्रवृत्तेश्चेति वाच्यम् । 'अतो लोप' इत्यत्रेवार्धधातुकोपदेशे यदजन्तमित्यर्थेनादोषात् । तत्रेवात्राप्यावृत्त्या सीयुटादिविशेषणत्वं चेत्यदोषात् । द्वयोरपीति । चिण्वत्त्वे कृते वृद्धया बाधादगुणोऽनित्यः ।

भव्यादिसिद्धयर्थमिति । भव्यं प्रवेयमाख्येयमित्यादौ । अन्यथास्त्यादीनामनजन्तत्वा'दचो य'दनापत्तिरिति भावः । प्रतिपदविधेरिति । चिन्त्यमिदम् । निरवकाशत्वे सत्येव तस्य बलवत्त्वात् । अत्र हन्तेरित्यंशः स्यादिविषये चरितार्थः । सीयुडंशोऽप्यज्ग्रहादिविषये चरितार्थः । किं च वधादेशोऽपि प्रतिपदविहित इति तस्मात्'स्यसिच्तासि'ष्वित्यपि विषयसप्तमीति भाष्याशयः । तद्विषये हनादीनां चिण्वत्कार्यं, कृतेषु तेषु तेषामिडिति सूत्रार्थः । वधिभावादित्युक्तेरन्यादेशविषयधातूनां चिण्वत्त्वविषयेऽनभिधानमिति दिक् ।

---

† सार्वधातुकार्धधातुकयोः ७ । ३ । ८४ । ‡ हनो वध लिङि २ । ४ । ४२ ।

विप्रतिषेधेन ॥ अथेदानीं चिण्वद्भावे कृते पुनःप्रसङ्गविज्ञानाद्वधिभावः कस्मान्न भवति ? सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति ।

हनिणिङादेशप्रतिषेधश्च ॥ ३ ॥

हनिणिङादेशानां* च प्रतिषेधो वक्तव्यः । हनिष्यते घानिष्यते । एष्यते आयिष्यते । अध्येष्यते अध्यायिष्यते । लुङीति हनिणिङादेशाः प्राप्नुवन्ति ।

अङ्गस्येति तु प्रकरणादङ्गशास्त्रातिदेशात्सिद्धम् ॥ ४ ॥

आङ्गं यत्कार्यं तत्प्रतिनिर्दिश्यते न च हनिणिङादेशा आङ्गा भवन्तीति ॥६२॥

आतो लोप इटि च ॥ ६ । ४ । ६४ ॥

अथेड्ग्रहणं किमर्थम् ?

---

प्र०—बाधिष्यते'। आर्धधातुकीयाः सामान्येन भवन्तीत्येवं ब्रुवता लिङीति विषयसप्तम्येवाभ्युपगता ततश्चान्तरङ्गत्वाद्वधिभावः प्राप्नोति । प्रतिपदविधेर्बलीयस्त्वाच्चिण्वद्भावो भवति ।

हनिणिङादेशप्रतिषेधश्चेति । लुङ्पर आर्धधातुके विधीयमाना हनिणिङादेशाश्चिणिनमित्ता भवन्तीति चिण्वद्भावात्प्राप्नुवन्ति । इह यस्य चिण्साक्षान्निमित्तं निर्दिष्टं तदप्यतिदिश्यते । यथा—युगागमः । यस्यापि प्रकारान्तरेण निमित्तं चिण् तदपि यथा—वृद्धिरिति हनिणिङादेशप्रसङ्गः ।

अङ्गस्येति तु प्रकरणादिति । अङ्गस्येति तु प्रकृत्य यत्कार्यं विहितं तदतिदिश्यते । तस्यैव प्राकरणिकत्वात् । न च हनिणिङादेशा 'अङ्गस्ये'ति प्रकृत्य विहिता इति तेषामप्रसङ्गः ॥ ६२ ॥

आतो लोप । इड्ग्रहणं किमर्थमिति । 'इहाचि विङत्यार्धधातुके इति त्रयाणां

---

उ०—भाष्ये-सकृद्गताविति । न चैवं चिण्वद्भावाभावेऽपि वधादेशानापत्तिरित्येकाच इति सूत्रस्थावधिबीध्येति भाष्यप्रयोगानुपपत्तिः । प्रवर्तमानेनैव बाधकेन बाध्यबाधो न तु स्वयमप्रवर्तमानेनापीति न दोष इति दिक् ।

ननु यच्चिण्याहत्य विहितं युगादि तदेव चिण्वद्भावाद्भवति । न च हनिणिङादेशास्तथा विहिता इति कथं तेषां प्रसङ्गोऽत आह—इहेति । यस्यापीति । चिणि दृष्टस्य सर्वस्यातिदेशादिति भावः । अङ्गस्येति । न तु वस्तुनोऽङ्गस्य विहितानामतिदेश इति भावः ॥ ६२ ॥

आतो लोप । इह बहूनां पक्षाणां संभवात्तेषामेकैकस्य परिग्रहे प्रयोजनभेद इड्ग्रहणस्य भवतीति प्रयोजनप्रश्नद्वारेण कतमः पक्षोऽत्र गृह्यत इति प्रश्नपर्यवसानं दर्शयितुमाह—इहाचीति । अन्यतमेन ।

---

* लुङि च; इणो गा लुङि; विभाषा लुङ्लृङोः २ । ४ । ४३; ४५; ५०

## इड्ग्रहणमक्ङिदर्थम् ॥ १ ॥

**इड्ग्रहणं क्रियतेऽक्ङिति लोपो यथा स्यात् । पपिथ तस्थितेति ।**

प्र०—प्रकृतत्वाद्विशेषणविशेष्यभावे कामचारात्तेषामन्यतमेनानुभूतविशेषणेनाननुभूतविशेषणेन वेटः समुच्चयसंभवादनेकपक्षसंभवः । तत्र यदि तावद्विशेषणसंबन्धात्प्रागेवाचेट् समुचीयतेऽङ्गाधिकाराच्चिप्रप्रत्ययविशेषणाच्चाजादौ प्रत्यय इति विज्ञायते । तत्रेड्ग्रहणमनजाद्यर्थं विज्ञायते । अजादेरिटोऽजादिना प्रत्ययेन समुच्चयाभावात् । तदा क्ङिदार्धधातुके अजादेरेव विशेषणे व्यवतिष्ठेते, नेटः । हलादेरिटः ङित्त्वासंभावादार्धधातुकत्वव्यभिचाराभावाच्च । ततश्च 'दासीये'त्यादावाल्लोपप्रसङ्गः । अथाजादेः प्रत्ययस्य क्ङिदार्धधातुकाभ्यां विशेषणाभ्यां प्राक् संबन्धः पश्चादिटा समुच्चयस्तदायमर्थः—अजादौ क्ङित्यार्धधातुक इटि चाकारलोप इति । तदेड्ग्रहणमनजाद्यर्थमक्ङिदर्थमनार्धधातुकार्थं च भवतीति । 'दासीय' 'पपिथ' 'व्यत्यरे' इति सर्वत्रेटयातो लोपः प्राप्नोति ।

अथ क्ङितानुभूतविशेषणेनेट् समुच्चीयते तदाच्यार्धधातुके इति विशेषणद्वयमविशेषाद्द्वावपि क्ङिदिटावुपनिपततीत्यक्ङिदर्थमेवेड्ग्रहणं विज्ञायते । तेन पपिथेत्यादावाल्लोपो भवति । 'दासीय' 'व्यत्यरे' इत्यनजादौ सार्वधातुके च न भवति । अनुभूतविशेषणद्वयसंबन्धेन तु क्ङितेटः समुच्चये पूर्ववत्सर्वत्रेटयाल्लोपप्रसङ्गः । अथ त्वार्धधातुकेनाननुभूतविशेषणेनेटः समुच्चय 'आर्धधातुके चेटि चे'ति तदा सार्वधातुकार्थमिड्ग्रहणं विज्ञायत इति 'व्यत्यरे' इत्यादावाल्लोपप्रसङ्गः । तदाचि क्ङितीति विशेषणद्वयमार्धधातुकस्यैव स्यान्न त्विटः । सार्वधातुकस्येटो ङित्त्वाजादित्वाव्यभिचारात् । अनुभूतविशेषणेनार्धधातुकेनेटः समुच्चये सर्वत्रेटयाल्लोपप्रसङ्गः । तदेवमनेकपक्षसंभवात्प्रश्नः ॥ इतरः क्ङितानुभूतविशेषणेनेटः समुच्चयं पश्चाद्द्वयोरपि विशेषणद्वयसंबन्धमाश्रित्याह—इड्ग्रहणमक्ङिदर्थमिति ।

उ०—अचा क्ङिता आर्धधातुकेन वा । तत्राननुभूतविशेषणेन केनचिदिटः समुच्चय इतरद्द्वयं यथासंभवं विशेषणत्वेन योज्यमित्याह—तत्र यदीति । अजादेरिट इति । भेदाधिष्ठानत्वात्समुच्चयस्येति भावः । अजादेरिटोऽजादिप्रत्ययान्तर्भावादिति तात्पर्यम् । इट्शब्देन चागमस्य प्रत्ययस्य सामान्येन ग्रहणमिति बोध्यम् । दासीयेति । दाधातोराशीर्लिङ्यात्मनेपदोत्तमपुरुषे सीयुटि च हलादिरिट् संभवति । तस्य क्ङित्त्वं नास्त्येव । आर्धधातुकत्वं चाव्यभिचारीति भावः । अथानुभूतविशेषणेनाजादिप्रत्ययेनेट्समुच्चय इतीमं पक्षं दर्शयति—अथाजादेरिति । व्यत्यरे इति । 'रा दाने' लिङि 'कर्तरि कर्मव्यतिहारे' इत्यात्मनेपदोत्तमपुरुषैकवचनमिदं, अदादित्वाच्छपो लुक् । तत्र मध्यमे इष्टो लोपः । आद्यन्तयोस्त्वनिष्टः प्राप्नोतीति दोषः । तदा सार्वधातुकार्थमित्येतदुपपादयति—तदाचीति । एषु तृतीयपक्षो लक्ष्यानुरोधात्सिद्धान्तितो भाष्ये तदाह—इतरः क्ङितेति ।

## सार्वधातुके चादीत्यार्धधातुकाधिकारादुपसंख्यानम् ॥ २ ॥

सार्वधातुके चादीत्यार्धधातुकाधिकारादुपसंख्यानं कर्तव्यम् । इषमूर्जमहमित आदि† ॥ ननु च क्ङितीति‡ वर्तमाने यथैवेड्ग्रहणमक्ङिदर्थमेवमार्धधातुके§ इत्यपि वर्तमान इड्ग्रहणं सार्वधातुकार्थं भविष्यति । न सिध्यति । किं कारणम् ? न हि क्ङिताज्विशेष्यते—अचि भवति, कतरस्मिन् ? क्ङितीति । किं तर्हि ? अचा क्ङिद्विशेष्यते—क्ङिति भवति, कतरस्मिन् ? अचीति । किं पुनः कारणमचा क्ङिद्विशेष्यते ? यथेडप्यज्ग्रहणेन विशेष्येत । अस्ति चेदानीं क्वचिदिडनजादिर्यदर्थो विधिः स्यात् । अस्तीत्याह । दासीय धासीय¶ ।

तत्तर्ह्युपसंख्यानं कर्तव्यम् ? न कर्तव्यम् । आर्धधातुकत्वात्सिद्धम् । कथमार्धधातुकत्वम् ? उभयथा छन्दसीति वचनात्* । अन्येऽपि धातुप्रत्यया उभयथा छन्दसि दृश्यन्ते ॥ ६४ ॥

## घुमास्थागापाजहातिसां हलि ६ । ४ । ६६ ॥

### ईत्त्वे वकारप्रतिषेधो घृतं घृतपावान इति दर्शनात् ॥ १ ॥

ईत्त्वे वकारे प्रतिषेधो वक्तव्यः । किं प्रयोजनम् ? घृतं घृतपावान इतिं दर्शनात् ।

प्र०—आदीति । दात्रः केवलादाङ्पूर्वाद्वा 'छन्दसि लुङ्लङ्लिट' इति लुङ्लङोरन्यतरः । केचिदत्र [1]पदकारा 'आ अदी'त्यवगृह्णन्ति । केचिच्चैकपद्यं मन्यन्ते । तेषामाडागम इति पक्षः । तत्र लुङि च्लेर्'मन्त्रे घसे'ति लुक् । लङि तु च्छान्दसत्वाच्छपो लुक् । श्लौ वा सति द्विर्वचनप्रकरणे 'छन्दसि वे'ति वक्तव्यमिति द्विर्वचनाभावः । सिद्धान्ते त्वार्धधातुकत्वाच्छबभावः । दासीयेति । इटः सीयुटि तस्य तद्भक्तत्वादजादित्वाभावः ॥ ६४ ॥

घुमास्था । ईत्त्व इति । वकारस्य निमित्तभावेन प्रतिषेधो वकारप्रतिषेधः । वकारादा-

उ०—दात्रः केवलादाङ्पूर्वाद्वेत्युपपादयति—आ अदीति । आदीत्युत्तमपुरुषैकवचने इटि रूपम् । तत्रावग्रहवादिनामादानमत्रार्थः । अन्येषां दानमर्थः । 'लुङ्लङोरन्यतर' इत्येतद्विशदयति— तत्र लुङीति ॥ ६४ ॥

घुमास्था । वकारस्य साक्षात्प्रतिषेधेन संबन्धायोगादाह—वकारस्येति । ह्रस्व इति । यद्यपि

† तिप्तस्झि ········ वहिमहिङ् ३ । ४ । ७८ 'आदीति' पा० ।

‡ दीडो युडचि क्ङिति ६ । ४ । ६३ § आर्धधातुके ६ । ४ । ४६

¶ लिङः सीयुट्, इटोऽत् ३ । ४ । १०२; १०६ * छन्दस्युभयथा ३ । ४ । ११७

१—पदकाराः—वेदसंहितानां पदपाठकाराः ।

इह मा भूत्—घृतं घृतपावानः पिबत वसां वसपावानः पिबतेति ।

यदि तर्हि वकारे प्रतिषेध उच्यते कथं धीवरी पीवरीति ?

धीवरी पीवरीति चोक्तम् ॥ २ ॥

किमुक्तम् ? नैतदीत्त्वम् । किं तर्हि ? ध्याप्योरेतत्संप्रसारणमितिः* ।

स तर्हि प्रतिषेधो वक्तव्यः ? न वक्तव्यः । वनिबेष भविष्यति न क्वनिबिति ॥ ६६ ॥

प्र०—वित्यर्थः। घृतपावान इति। 'आतो मनि'निति क्वनिप् । वसपावान इति । ङ्याপोः संज्ञाछन्दसोर्बहुल'मिति वसाशब्दस्य ह्रस्वः ।

धीवरी पीवरीति चोक्तमिति । 'जनसनखनां सञ्झलो'रित्यत्रोक्तम् । वनिबेष इति । क्वनिप् तु च्छन्दसि दृष्टानुविधानान्न भविष्यति । भाषायामपि 'अन्येभ्योऽपि दृश्यन्ते' इति दृशिग्रहणात्प्रयोगानुसरणार्थात्प्रयोगाभावात्पादिभ्यो नास्ति 'क्वनिबिति भाष्यकारस्याभिप्रायः। तत्र वार्तिकारम्भो ज्यायानित्याहुः । 'स्थः क च'ेति क्विपि 'संस्था' इत्यत्रेत्त्वस्यादर्शनात् । भाष्यकारमतेन त्वीत्त्वं प्राप्नोति प्रत्ययलक्षणेन, यथा'तृणे'डित्यत्रेमागमः ॥ ६६ ॥

उ०—पदमञ्जर्यां क्वचित्पुस्तकेषु सांप्रतं पठ्यमानमाध्यंदिनशाखायां च दीर्घः पठ्यते तथापि क्वचिच्छाखायां ह्रस्वपाठोऽन्वेषणीयः ।

ननु क्वनिप्यनिष्टरूपनिवृत्तये प्रतिषेध आवश्यकोऽत आह--क्वनिप् त्विति । भाष्यकारमतेन त्विति । प्रत्ययलक्षणसूत्रस्य विध्यर्थत्वे 'हलादौ क्ङिती'ति वर्णस्याप्राधान्येनाश्रयणादिति भावः । अत्रेदं चिन्त्यम् । प्रत्ययलक्षणसूत्रं नियमार्थमिति भाष्यमतेऽप्राप्तेः । वस्तुतस्तु क्विप्यपीत्त्वं भवत्येव । सूत्रे 'हली'त्यस्यानजादिपरत्वात् । अत एव 'ध्यायतेः संप्रसारण'मिति वार्तिके 'धीर्ध्यायतेर्दधातेर्वे'ति भाष्यं संगच्छते । 'शंस्था' इत्यत्राम्बाम्बेतिसूत्रस्य'सव्येष्ठा' इत्यत्र च विजेव । येन क्विबिति तत्सूत्रभाष्ये क्विप्पदेन सादृश्याद्विजेवोच्यत इति चिन्त्योऽयं कैयट इति । एवं च, 'ध्याप्योः संप्रसारण'मित्येकदेश्युक्तिरिति बोध्यम् । 'धियावित्यादावीत्त्वस्येयङ्यसिद्धत्वं तु न व्याश्रयत्वादिति 'जनसने'ति सूत्रे भाष्ये उक्तम् ॥ ६६ ॥

* ६ । ४ । ४२ वा० १ भाष्यम् ।

१—"वस्तुतस्तु वार्तिकप्रत्याख्यानयोः फलैक्यायेदृश्येभ्यः क्विपोऽनभिधानमिति 'दधातेर्वा' इति भाष्यमेकदेश्युक्तिः—इतीदमाद्यन्तांशरूपमयुक्तमेव । न च विनिगमनाविरहाद्वैपरीत्यमेव स्यादिति वाच्यम्, अस्य सूत्रद्वयस्योपपत्तिसहितत्वात्तस्य च विपरीतत्वादिति बोध्यम् ।" इत्युद्द्योतेऽधिकं क्वचित् ।

## न माङ्योगे ॥ ६ । ४ । ७४ ॥

कस्यायं प्रतिषेधः ? आटः† प्राप्नोति । अटोऽपीष्यते । तत्तर्ह्यटो ग्रहणं कर्तव्यम् । न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् ? लुङ्लङ्लृङ्क्ष्वडुदात्तः [ ६ । ४ । ७१ ] इति । यदि तदनुवर्तत 'आडजादीनाम्' [ ७२ ] अट् चेत्यडपि प्राप्नोति । अस्तु । अटि कृते पुनराड्भविष्यति । इहापि तर्ह्यटि कृते पुनराट् प्राप्नोति—अकार्षीत्

प्र०—न माङ्योगे । कस्यायमिति । यदि द्वयोरडाटोरिहानुवृत्त्या प्रतिषेधस्ततोऽजादीनामडपि प्राप्नोति । अथानन्तर्यादाटः प्रतिषेधस्तथा सति माङ्योगेऽनिष्यमाणोऽप्यट् प्राप्नोतीति मत्वा प्रश्नः । स एवानन्तर्यमाश्रित्याह—आटः प्राप्नोतीति । इतरः समुदायापेक्षायां दोषाभावेऽपि स्वरितत्वादधिकारेऽपि दोषप्रतिविधानसंभवादाह—न कर्तव्यमिति । अडपि प्राप्नोतीति । अडाटोर्युगपदेकागम्यपेक्षायामादित्वं न संभवतीति पर्यायप्रसङ्गो यथा लेटोऽडाटोः । ततः पक्षेऽटि सति 'ऐक्षिष्टे'त्यादि न सिध्यति । 'एक्षिष्टे'त्याद्यनिष्टं प्राप्नोति । इतरस्तु विकल्पेनाप्यडाटोः प्रवृत्तौ द्रव्ये पदार्थे कृतेऽप्यटि शब्दान्तरत्वान्निमित्तसद्भावाच्चाटा भाव्यमिति मत्वाह—अस्त्विति । इतरो यद्येकस्मिन्नागमे कृते परस्य प्रवृत्तिस्ततो हलादीनामप्यटि कृते आट्प्रसङ्ग इति मत्वाह—इहापीति । ननु चाटि कर्तव्येऽटोऽसिद्धत्वादजादित्वाभावः । यद्यपि शास्त्रापेक्षयासिद्धत्वं तथापि प्रयोगरूपमाश्रित्य चोद्यते यथोक्तं 'मार्थादीदाद्यर्थानां'मिति । परिहारान्तरस-

उ०—न माङ्योगे । यदि द्वयोरपीति । समुदायापेक्षाया 'मनन्तरस्ये'ति परिभाषानुपस्थानादिति भावः । अडपीति । मध्येऽपि संबन्धादिति भावः । स एवेति । न तु सिद्धान्तवादी । तत्तर्ह्यटो ग्रहणं कर्तव्यमित्यन्तं चोदकवचनमिति भावः । व्यवहितत्वादनुवृत्त्ययोगेनाड्ग्रहणं कर्तव्यमेवेति तात्पर्यम् । प्रकृतानुवृत्त्या सिद्धमिति वदतः सिद्धान्तिन आशयमाह—इतर इति । द्विविधा ह्यनुवृत्तिः—लौकिकी शास्त्रीया च । तत्राद्ये परिहारः—समुदायेति । अन्त्य आह—स्वरितत्वादिति । एकागम्यपेक्षयादित्वमिति पाठः । 'एकागम्यपेक्षायामादित्व'मिति पाठे एकागमिनोऽपेक्षायां संबन्धे तदपेक्षमादित्वं न संभवतीति कथंचिद्व्याख्येयम् । द्रव्ये पदार्थ इति । तत्र हि प्रतिलक्ष्यं लक्षणभेदाच्छब्दान्तरत्वे सत्याटा भवितव्यमित्यर्थः । यथोक्तमिति । 'अदसो मा'दित्यत्र । तत्र हीत्त्वादीनामसिद्धत्वात्प्रगृह्यत्वाभावेनायादिप्रसङ्गेनोदितोऽयं परिहारः । मार्थः—स्थानी मशब्देनोक्तः । ईदूदेदर्थश्चेदूदेच्छब्देन । न चास्यां कल्पनायामसिद्धत्वं भवति । शास्त्रीये ह्यसिद्धत्वमिति तद्भावः । प्रकृते'ऽप्य'-जादीनामित्यस्याजादिप्रयोगरूपाणामित्यर्थे प्रयोगरूपं न शास्त्रीयमिति तात्पर्यम् । ननु मा भूत्तत्रासिद्धत्वम् । इह त्व'जादेरङ्गस्ये'ति शास्त्रीयमेव रूपं गृह्यत इत्यसिद्धत्वं भवत्येवेत्यत आह—परिहारान्तरेति । सामर्थ्य

† आडजादीनाम् ६ । ४ । ७२

अहार्षीत् । अड्वचनान्न भविष्यति । इहापि तर्ह्यड्वचनान्न स्यात्—ऐहिष्ट ऐक्षिष्ट । आड्वचनाद्भविष्यति । इहापि तर्ह्याड्वचनात्प्राप्नोति—अकार्षीत् अहार्षीत् । अकृतेऽटि योऽजादिरित्येवमेतद्विज्ञास्यते । किं वक्तव्यमेतत् ? न हि । कथमनुच्यमानं गंस्यते ? अड्वचनसामर्थ्यात् । यदि कृतेऽटि योऽजादिस्तत्र स्यादड्ग्रहणमनर्थकं स्यात् ।

अथवोपदेश इति* वर्तते । अथवार्धधातुक इति† वर्तते । अथवा लुङ्लङ्लृङ्क्ष्वडिति द्विलकारको निर्देशः । लुङादिषु लकारादिषु योऽजादिरिति ।

सर्वथा ऐज्यत औप्यतेत्येतन्न सिध्यति‡ । एवं तर्हि—

प्र०—झ्वावाद्वासिद्धत्वं नोक्तम् । अड्वचनादिति । यदि हलादीनामप्यटि कृते आट् स्यात्तदा लुङ्लङ्लृङ्क्ष्वाडागममेव विदध्यात् । इहापि तर्हीति । यद्यटि कृते आएन भवति ततोऽत्रापि न स्यात् । आड्वचनादिति । यद्याएन स्यात्तद्विधानमनर्थकं स्यादित्यर्थः । ननु विकल्पितत्वादडाटोरऽभावे आट्कर्तव्य इत्यटि सति न प्राप्नोति । नैष दोषः । उत्तरार्थेन नान्तरीयकोपस्थानेन प्रवृत्तेनाप्यटा बाधितुमाटोऽशक्यत्वात् । अथवा संदिग्धप्रवृत्तिरडागमोऽसंदिग्धप्रवृत्तिनाटा बाध्यत इत्येष वाक्यार्थः । यथान्यत्रोक्तं'मन्यवचनाच्चकाराकरणात्प्रकृतस्यापवादो यथोत्सर्गेण प्रसक्तस्ये'ति । इतरस्त्वगृहीताभिप्रायो विशेषाभावं मत्वाह—इहापि तर्हीति । अकृतेऽटीति । अजादिग्रहणसामर्थ्यात्कृते ह्यटि सर्वस्याजादित्वादडाटोश्च भेदेन विधानसामर्थ्याद्विषयविभागावसायो हलादीनामेवाडजादीनां तु कृतेऽकृते वाऽटयाडिति । अथवेति । उपदेशे यान्यजादीनि तेषामाड् भवति । न च करोतिरुपदेशेऽजादिरित्याडभावः । अथवार्धधातुक इति वर्तत इति । तेनार्धधातुकसंज्ञकलकारोत्पत्तिकाले योऽजादिस्तस्याड्भवति । सर्वथेति । करोत्यादिवद्यजादीनामटि सत्याडभावादित्यर्थः । 'असिद्धवदत्राभा'दित्यत्रासिद्धत्वप्रत्याख्यानाय सर्व एवामी प्रकारा उक्ताः, इह तु स्थिते एवासिद्धत्वे एषामुपन्यासः ।

उ०—विशदयति—ननु विकल्पितेति । सामर्थ्यात्पर्याये विकल्पः फलतीत्याशयेनोक्तम्—उत्तरार्थेनेति । एवं चाटो दुर्बलत्वेन बाधकत्वायोग इति भावः । ननु यद्यडिह दुर्बलस्तदा बलवताटा तस्य बाधापत्तावट्प्रवृत्तिर्दुर्लभेत्यत आह—अथवेति । उत्तरार्थत्वादेव संदिग्धप्रवृत्तिकत्वं तस्य । एवं चाटोऽप्रवृत्तिरेवेति भाष्याशय इति भावः । अन्यत्र—इको 'गुणवृद्धी' इत्यादौ । ननु 'अकृतेऽटि' इति विशेषलाभः कथमत आह—अजादिग्रहणेति । भेदेनेति । अन्यथाटमेव विदध्यादिति भावः । न च करोतिरिति । उपलक्षणमेतत् । करोत्यादिवदिति । हलादीनामडेवेति व्यवस्थापनात् । स्थित एवेति । प्रतिपत्तिलाघवार्थमारब्धेऽपि सूत्रे इत्यर्थः । 'आटी'दित्युपलक्षणम्, 'आट'दित्यादिलिङ्गोऽपि ।

१—'अड्वचन' पा० । * स्यसिच्सीयुट्‌……चिण्वदिट् च ६ । ४ । ६२ ।
† आर्धधातुके ६ । ४ । ४६ । ‡ वचिस्वपियजादीनां किति ६ । १ । १५ ।

**अजादीनामटा सिद्धम्**

अजादीनामटैव सिद्धं नार्थ आटा ॥ एवं तर्हि वृद्ध्यर्थमाड्वक्तव्यः§ ।

**वृद्ध्यर्थमिति चेदटः ।**

अटो वृद्धिं वक्ष्यामि ॥ यदि तर्ह्यटो वृद्धिरुच्यते

**अस्वपो हसतीत्यत्र**

वृद्धिः प्राप्नोति रोरुत्वे कृते¶ ।

**धातौ वृद्धिमटः स्मरेत् ॥ १ ॥**

धातावटो वृद्धिं वक्ष्यामि ॥ तत्तर्हि धातुग्रहणं कर्तव्यम् ? न कर्तव्यम् । योगविभागः करिष्यते+ । अटोऽचि वृद्धिर्भवति । तत उपसर्गादृति वृद्धिर्भवति । ततो धातौ । धातावित्युभयोः शेषः ।

इह तर्हि आटीत्× आशीदित्यतो गुणे [ ६ । १ । ९७ ] इति पररूपत्वं प्राप्नोति ।

**पररूपं गुणे नाटः**

पररूपं गुणेऽटो नेति वक्ष्यामि ॥ तत्तर्हि वक्तव्यम् ?

**ओमाङोरुसि तत्समम् ।**

यद्यप्येतदुच्यतेऽथवैतर्ह्युस्योमाङ्क्ष्वाटः पररूपप्रतिषेधश्चोदितः* स न वक्तव्यो

प्र०—अस्वप इति । स्वपेर्लङ् सिप् 'अड्गार्ग्यगालवयो'रित्यट् । शब्लुक् । सकारस्य रुत्वं 'हशि चे'त्युत्त्वम् । तत्राद्गुणं बाधित्वा वृद्धिः प्राप्नोति । आटीदिति । नेटीति वृद्धौ प्रतिषिद्धायां परत्वाद्वृद्धिं बाधित्वा पररूपं प्राप्नोति ।

पररूपं गुणे नाट इति । अट उत्तरे गुणे पररूपं नेति वक्तव्यमित्यर्थः । ओमाङोरुसि तत्सममिति । औङ्कारीयदौढीयदौत्रीयदित्यत्र वृद्धिं बाधित्वा परत्वादोमाङोश्च उस्यपदान्तादिति पररूपं प्राप्नोति । तस्य प्रतिषेधो वक्तव्य इत्युक्तम् । यदा तु पररूपविधौ 'नाट' इत्युच्यते तदो-

उ०—न वक्तव्यमित्यस्य गौरवावहमेतद्वक्तव्यं न, यत ओमाङोरुसि यत्प्रतिषेधवचनं तेन तुल्यमेतद्वचनमिति योजनां दर्शयन्व्याचष्टे—औङ्कारीयदिति । 'अटश्चे'ति पुनर्विधानार्थेन चेन तस्यैवास्यापि सिद्धिरिति भावः । न तु गौरवप्रसङ्ग इति । 'आडजादीना'मित्यस्याकरणात् । 'अटश्चे'त्यत्र मात्राहानेर्ला-

§ आटश्च ६ । १ । ९० ।

¶ अड्गार्ग्यगालवयोः ७ । ३ । ९९; ससजुषो रुः ८ । २ । ६६; हशि च ६ । १ । ११४; ( वृद्धिरेचि ६ । १ । ८७ ) ।

+ उपसर्गादृति धातौ ६ । १ । ९१ ।

× नेटि ७ । २ । ४ ।

* ६ । १ । ९५ वा० १ ।

भवति ॥ छन्दोऽर्थं तद्यथा—ड्वक्नव्यः । आरैगु कृष्णा† । त्रित एनमायुनक् । सुरुचो वेन आवः ।

छन्दोऽर्थं बहुलं दीर्घम्

बहुलं छन्दसि दीर्घत्वं दृश्यते । तद्यथा—पूरुषः नारक इति ॥ एवं तर्हि आयन् आसन् इणस्त्योर्यण्लोपयोः‡ कृतयोरनजादित्वाद्वृद्धिर्न प्राप्नोति ।

इणस्त्योरन्तरङ्गत्वः ॥ २ ॥

अन्तरङ्गत्वाद्वृद्धिर्भविष्यति । तस्मान्नार्थ आड्ग्रहणेन ।

अजादीनामटा सिद्धं वृद्ध्यर्थमिति चेदटः ।
अस्वपो हसतीत्यत्र धातौ वृद्धिमटः स्मरेत् ॥ १ ॥

पररूपं गुणे नाट ओमाङोरुसि तत्समम् ।
छन्दोऽर्थं बहुलं दीर्घमिणस्त्योरन्तरङ्गतः ॥ २ ॥ ॥ ७४ ॥

## अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ॥ ६ । ४ । ७७ ॥

### इयङादिप्रकरणे तन्वादीनां छन्दसि बहुलम् ॥ १ ॥

प्र०—स्योमाङ्क्ष्वाटः पररूपप्रतिषेधो न वक्तव्य इति तुल्यमेतद्भवति, न तु गौरवप्रसङ्गः। अन्तरङ्गत्वादिति । यण्लोपौ हि बहिरङ्गौ । वृद्धौ कृताया'मिणो यण्' 'ए'रिति योगविभागाश्रयणाद्यणोऽभावः । रूपाश्रयत्व'दन्तादिवद्'त्वोऽपि नास्ति, ताद्रूप्यानतिदेशात् । 'श्नसोरल्लोप' इति तपरकरणाल्लोपाभावः । एतच्च वार्णादाङ्गं बलीय इत्यनाश्रित्योक्तम् । तदाश्रये हि वृद्धिं बाधित्वा यण्लोपौ स्याताम् । अटा सिद्ध आड्वचनमेव ज्ञापकमन्ये वर्णयन्ति । भवत्येषा परिभाषा 'वार्णादाङ्गं बलीय' इति । तस्यां हि सत्यां यणलोपयोर्वृद्धिं बाधित्वा प्रवृत्तयो'रायन्नासन्नि'ति न स्यादित्याड् विधीयते ॥ ७४ ॥

अचि० । तन्वमिति । 'वा छन्दसी'त्यधिकारादमि पूर्वत्वाभावाद्यणादेशः । तनुवमिति ।

उ०—घवमप्यस्ति । बहिरङ्गाविति । प्रत्ययाश्रयत्वात् । यणोऽभाव इति । ततश्चायादेशे रूपं सिद्धमिति भावः । ताद्रूप्येति । अन्तादिवर्णमात्रवृत्तिधर्मस्यानतिदेशादित्यर्थः । अनाश्रित्येति । लक्ष्यानुसारादनाश्रयणम्, अयुगपत्प्राप्तेर्वा । इङस्त्वध्यैयातामित्यादेर्लोकेऽनभिधानम्, पक्षयोः फलभेदापत्तेरित्याहुः । निरूपितं चेदं 'इङ्धातौ' शब्देन्दुशेखरे । अन्य इति । अत्रारुचिबीजं तु भाष्यविरोधः ॥ ७४ ॥

अचि० । ननूवङभावपक्षे पूर्वरूपं स्यादत आह—वा छन्दसीति । पूर्वसवर्णदीर्घोऽप्यत एव न ।

† ऋ० सं० १ । ११३ । २; साम० उ० ८ । ३ । १४ । २; निरु० २ । २० ।
‡ इणो यण्; श्नसोरल्लोपः ६ । ४ । ८१; १११ ।

इयङादिप्रकरणे तन्वादीनां छन्दसि बहुलमुपसंख्यानं कर्तव्यम् । तन्वं पुषेम । तनुवं पुषेम । विष्वं पश्य । विषुवं पश्य । स्वर्गं लोकम् । सुवर्गं लोकम् । त्र्यम्बकं यजामहे† । त्रियम्बकं यजामहे ॥ ७७ ॥

## एरनेकाचोऽसंयोगपूर्वस्य ॥ ६ । ४ । ८२ ॥

अथेह कस्मान्न भवति—ब्राह्मणस्य नियौ, ब्राह्मणस्य नियः ? अङ्गाधिकारात् । अङ्गस्येत्यनुवर्तते* ॥ एवमपि परमनियौ परमनिय इत्यत्र प्राप्नोति । गतिकारकपूर्वस्येष्यते ।

प्र०—अधातुत्वादप्राप्त उवङ् विधीयते । विष्वमिति । 'विसूते' इति 'सत्सूद्विषे'ति क्विप् । अत्र नित्य'मोः सुपी'ति यणि प्राप्ते पक्ष उवङ् विधीयते । सुवर्गमिति । अधातुत्वादनङ्गत्वाच्चाप्राप्त उवङ् विधीयते ॥ ७७ ॥

एरनेकाचो । ब्राह्मणस्य नियाविति । 'अन्येभ्योऽपि दृश्यत' इति ताच्छील्यादिषु नियो निरुपपदात्क्विप् । ततः कर्मणा संबन्धः । सत्यपि वा पूर्वं कर्मणा संबन्धे परत्वात्सोपपदं 'सत्सूद्विषे'ति क्विपं बाधित्वा ताच्छीलिकः क्विब् भवति । गतिकारकपूर्वस्येति । परमशब्दोऽत्र न गतिर्न च कारकम्, किं तर्हि ? उत्तरपदार्थस्य समानाधिकरणं विशेषणम् ।

उ०—तत्र बह्वृचानां यणादेशेन पाठः । यजुर्वेदिनामुवङ्विशिष्ट इति बोध्यम् । विसूत इति । क्विपि 'गतिकारकोपपदाना'मिति सुबुत्पत्तेः पूर्वं समासेऽपदादित्वा'दादेशप्रत्यययो'रिति षत्वं विष्वं विषुवमित्यत्रेति बोध्यम् ॥ ७७ ॥

एरनेकाचो । ननु 'सत्सूद्विषे'ति सोपपदे क्विप्युपपदसमासे 'ब्राह्मणनियौ'वित्येव स्यादत आह—अन्येभ्योऽपीति । परत्वादिति । ताच्छील्याद्यविवक्षायां सोपपदस्यावकाशः । निरुपपदस्य त्वन्यन्तरमवकाश इति भावः । 'गतिकारकपूर्वस्यैवे'ति नियमः । सपूर्वपदस्य चेद्गतिकारकपूर्वस्यैवेष्यते । न तु गतिकारकपूर्वभिन्नस्येष्यत इत्यर्थः । तेन 'निन्यतु'रित्यादि सिध्यति । एतेन यणाविध्येकवाक्यतापन्नत्वान्नायं नियम इत्यपास्तम् । एवकारस्यानन्वयापत्तेश्च । इयं भाष्यकृत इष्टिः ।

† ऋ० सं० ७ । ५९ । १२; यजु० ३ । ६०; तै० सं० १ । ८ । ६ । २; मै० सं० १ । १० । ४; का० सं० ९ । ७; शत० ब्रा० २ । ६ । २ । १२; तै० ब्रा० १ । ६ । १० । ५ ।

* अङ्गस्य ६ । ४ । १ ।

१—'पूर्वस्यैवेष्यते' पा० ।

## यणादेशः स्वरपदपूर्वोपधस्य च ॥ १ ॥

यणादेशः स्वरपूर्वोपधस्य पदपूर्वोपधस्य चेति वक्तव्यम्[1] । स्वरपूर्वोपधस्य—निन्यतुः निन्युः । पदपूर्वोपधस्य—उन्न्यौ उन्न्यः । उद्ध्यौ उद्ध्यः । [2]उभयकृतम्—ग्रामण्यौ ग्रामण्यः । सेनान्यौ सेनान्यः ।

## असंयोगपूर्वे ह्यनिष्टप्रसङ्गः ॥ २ ॥

असंयोगपूर्वस्येति ह्युच्यमानेऽनिष्टं प्रसज्येत । उद्ध्यौ उद्ध्यः । उन्न्यौ उन्न्यः । असंयोगपूर्वस्येति प्रतिषेधः प्रसज्येत ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । धातोरिति* वर्तते तत्र धातुना संयोगं विशेषयिष्यामः—धातोर्यः संयोगस्तत्पूर्वस्य नेति । उपसर्जनं वै संयोगो न चोपसर्जनस्य विशेषणमस्ति । धातोरित्यनुवर्तनसामर्थ्यादुपसर्जनस्यापि विशेषणं भविष्यति ।

प्र०—उद्ध्याविति । भावे कर्तरि वात्र क्विप् । ईकारः संयोगपूर्वः । धातोरिति । अविद्यमानधात्ववयवसंयोगपूर्वस्य यणित्यर्थः । उपसर्जनमिति । अन्यपदार्थं प्रति । न चोपसर्जनस्येति । संबन्धिशब्दादन्यदुपसर्जनं पदान्तरवाच्येनार्थेन संबन्धं नोपैतीत्यर्थः । अस्त्यन्यदिति । गुणप्रधानसंनिधौ प्रधानस्य सत्यर्थित्वे विशेषणसंबन्धेन भाव्यमनर्थित्वे प्रधानस्य गुणो विशेषणेन संबध्यते । यद्व्यधातोरिति । यथा कुमार्याविति । ननु 'मणी' 'पाणी' इत्यादावधातोः पूर्वसवर्णबाधनार्थो यण् मा भूदिति धातुनेवर्णस्य विशेषणे प्रयोजनमस्ति । एवं तर्हीयङ्बाध-

उ०—इदानीं वार्तिकं व्याचष्टे—स्वरपदेत्यादि । भावे इति । संपदादित्वात्कर्तरि 'क्विप् चे'त्यनेन । पश्चाद्विशेषणसमासः । 'पदपूर्वे'त्यत्र पदशब्देन धात्ववयवत्वानधिकरणस्य ग्रहो बोध्यते । तेनोन्नीशब्दादाचारक्विबन्तात्कर्तरि क्विपि न यण् । अत एव प्रत्याख्यानेन न विरोधः । तस्यानभिधानमेवेत्यन्ये । एतद्वचनारम्भेऽपि परमनियावित्यादावतिप्रसङ्गवारणाय भाष्यकारेष्टिरावश्यकी । तेन स्वरपूर्वग्रहणं प्रत्याख्यातप्रायमेव । पदपूर्वग्रहणमपि प्रत्याख्यातुमाह—तत्तर्हीत्यादि । संबन्धिशब्दादिति । गमकस्योपलक्षणम् । गुणप्रधानेति । इवर्णं प्रति प्राधान्येनान्वयसंभवे संयोगविशेषणत्वमन्याय्यमिति वक्तुं युक्तम् । भाष्यस्यापीवर्णं धातुं प्रति विशेष्यत इत्यर्थः । पूर्वसवर्णदीर्घबाधनार्थं इति । स तु 'ई ऊ' इत्यादौ चरितार्थः । इयङ्बाधनार्थत्वादिति । 'उत्सर्गसमानदेशा अपवादा' इति न्यायादिति भावः । न चायं न्यायः श्नमकज्जहुषु व्यभिचरितः । तेषु मित्त्वेन प्राक्टेरिति पदेन, पुरस्तादित्यनेन च तद्बाधेऽप्यन्यत्राप्रवृत्तौ मानाभावात् । वस्तुतस्तु तदभावे कस्यापि नाप्राप्यसंभवाद्बाध्यसामान्यचिन्तायां तदपवादत्वमपि संभाव्येत । तस्मादनुवृत्तिसामर्थ्यादिति भाष्यस्य निपातानामनेकार्थत्वादावृत्तिसामर्थ्यादित्यर्थः । उक्तार्थमजानानस्य

१—'स्वरपूर्वा च यस्योपधा पदपूर्वा च'-इत्यधिकं क्वचित् । २—'उभयपूर्वा' पा० ।

* अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ६ । ४ । ७७ ।

अस्त्यन्यद्धातोरित्यनुवर्तनस्य प्रयोजनम् । किम् ? इवर्णं विशेषयिष्यामः । [1]नैतदस्ति प्रयोजनम् । यद्ध्यधातोरिवर्णं भवितव्यमेव तस्य यणादेशेनेको यणचि [ ६ । १ । ७७ ] इत्येव ॥ ८२ ॥

## वर्षाभ्वश्च ॥ ६ । ४ । ८४ ॥

### वर्षाभूपुनर्भ्वंश्च ॥ १ ॥

वर्षाभू इत्यत्र पुनर्भ्वश्चेति वक्तव्यम् । पुनर्भ्वौ पुनर्भ्वः ।

अत्यल्पमिदमुच्यते । वर्षादृन्कारपुनःपूर्वस्य भुव इति वक्तव्यम् । वर्षाभ्वौ वर्षाभ्वः । दृन्भ्वौ दृन्भ्वः । कारभ्वौ कारभ्वः । पुनर्भ्वौ पुनर्भ्वः ॥ ८४ ॥

## हुश्नुवोः सार्वधातुके ॥ ६ । ४ । ८७ ॥

### हुश्नुग्रहणानर्थक्यमन्यस्याभावात् ॥ १ ॥

हुश्नुग्रहणमनर्थकम् । किं कारणम् ? अन्यस्याभावात् । न ह्यन्यत्सार्वधातुकेऽस्ति यस्य यणादेशः स्यात् ।

प्र०— नार्थत्वाद्यणादेशस्याधातोरियङोऽप्रसङ्गादधातुनिवृत्त्यर्था धातुग्रहणानुवृत्तिर्न भवति ॥८२॥

वर्षा० । वर्षासु भवति, वर्षा वा [2]भवते प्राप्नोतीति वर्षाभूरोषधिविशेषः । दृन्भूशब्दो-ऽन्दूदृन्भू' इति निपातितः । अत्र तु भूशब्दस्यानर्थक्यात् 'न भूसुधियो'रित्यत्र ग्रहणाभावा-द्यणादेशः सिद्धः ॥ ८४ ॥

हुश्नु० । अधिकारानुवृत्तिसामर्थ्यादतिप्रसङ्गाभावं मत्वाह—हुश्नुग्रहणानर्थक्यमिति ।

उ०—शङ्का—( भाष्ये ) अस्त्यन्यदिति । आचार्यदेशीयस्योत्तरम्—यद्ध्यधातोरिति ॥ ८२ ॥

वर्षा० । वर्षा वा भवत इति । वर्षा इति द्वितीयाबहुवचनान्तम् । ओषधिविशेष इति । भेके तु ह्रस्वान्तः । अत एव 'शिली गण्डूपदी भेकी वर्षाभ्वी कमठी डुलि'रिति स्त्रियामुकारान्तलक्षणङीषन्तं पठन्तीति नारायणः । उतो गुणवचनादेव ङीषो विधानेननात्र ङ्यर्थं बह्वादिस्वकल्पनारूपोपायान्तरस्यैवा-वश्यकत्वाद्भेकेऽपि दीर्घान्त इत्यन्ये । आनर्थक्यादिति । 'दृभी ग्रन्थे' इत्यतः कूप्रत्ययो निपात्यते, नुमाग-मश्चेति भावः । न भू इत्यादि । एवं च 'दृन्पूर्वस्ये'ति निष्फलमिति भावः । यणादेश इति । 'ओः सुपी'त्यनेन । इदं चिन्त्यम् । धातुत्वाभावादुवङोऽप्राप्ता'विको यणची'त्येव यणसिद्धेरिति । किं च दृन्निति नान्त उपपदे भुवः क्विपि निष्पन्नदृन्भूशब्दार्थं वार्तिके दृन्भूग्रहणस्यावश्यकत्वाच्चिन्त्यमिदम् । वार्तिके पूर्वग्रहणं परिभाषालब्धार्थानुवाद इति बोध्यम् ॥ ८४ ॥

१—'विशेष्यते' पा० । २—भू प्राप्तावात्मनेपदी, चुराद्यन्तर्गताधृषीयत्वेन णिजभावे रूपम् । तस्य च सकर्मकत्वाद् 'वर्षा' इति कर्मणि द्वितीया ।

ननु चायमस्ति—याति वातीति । क्ङितीत्यनुवर्तते* । इह तर्हि–यातः वात इति । अचीति वर्तते† । इह तर्हि–यान्ति वान्तीति । य्वोरिति वर्तते† । एवमपि धियन्ति पियन्तीत्यत्र प्राप्नोति । ओरिति वर्तते‡ । एवमपि सुवन्ति रुवन्तीत्यत्र प्राप्नोति । अनेकाच इति वर्तते§ । एवमपि असुवन् अरुवन्नित्यत्र प्राप्नोति । एतदप्यटोऽसिद्धत्वादेकाज्भवति । एवमपि प्रोर्णुवन्तीत्यत्र प्राप्नोति । असंयोगपूर्वस्येति§ वर्तते ।

यङ्लुगर्थं तर्हि हुश्नुग्रहणं कर्तव्यम् । यङ्लुगन्तमनेकाजसंयोगपूर्वमुवर्णान्तमस्ति तदर्थमिदम् । नदं योयुवतीनाम्[1] । वृषभं रोरुवतीनाम् ।

## यङ्लुगर्थमिति चेदार्धधातुकत्वात्सिद्धम् ॥ २ ॥

यङ्लुगर्थमिति चेत्तन्न । किं कारणम् ? आर्धधातुकत्वात्सिद्धम् । कथमार्धधातुकत्वम् ? उभयथा छन्दसीति वचनात्+ । अन्येऽपि धातुप्रत्ययाश्छन्दस्युभयथा दृश्यन्त इति ।

एवं तर्हि सिद्धे सति यद्धुश्नुग्रहणं करोति तज्ज्ञापयत्याचार्यो यङ्लुग्भाषायां भवतीति । किमेतस्य ज्ञापने प्रयोजनम् ? बेभिदीति चेच्छिदीत्येतत्सिद्धं भवति भाषायामपि ॥ ८७ ॥

प्र०—भाषायामपीति । ततो यङ्लुम्निवृत्त्यर्थं हुश्नुग्रहणमर्थवत् ॥ ८७ ॥

उ०—हुश्नु० । भाष्ये—असुवन्नित्यादि । एषैव सिद्धान्त्युक्तिः । असिद्धत्वानित्यत्वज्ञापकमिदम् । 'श्नसो'रिति तपरत्ववदिति तदाशयः । इत उत्तरमेकदेशिनोरुक्तिः । अत एवान्ते 'इत्येतत्सिद्धं भवती'त्युक्तिः । अन्यथा ज्ञापितेऽपि 'हुश्नुवो'रित्यस्य चारितार्थ्याद्योवर्णान्तेभ्योऽप्यस्य भाषायामावश्यकतयेत्यादि सिद्धं भवतीति वदेत् । एवं चैतत्प्रयोगद्वयातिरिक्तं यङ्लुगन्तं भाषायामसाध्वेव । अत एव 'क्ङिति चे'ति सूत्रे 'रोरवीती'त्यस्य छान्दसत्वमुक्तं भाष्यकृतेति ध्येयम् । किं च 'किमेतस्य ज्ञापने प्रयोजनमि'ति प्रश्नस्य लोके उवर्णान्तयङ्लुगन्तप्रयोगादर्शनमेव बीजम् । तत्र तत्प्रयोगादर्शनेनास्योत्तरस्यैकदेश्युक्तित्वमावश्यकम् । 'यङोऽचि चे'ति सूत्रे च लभ्यवाक्यभेदलभ्यस्यानैमित्तिकयङ्लुको बहुलग्रहणानुवृत्त्या यथाप्रयोगं लोकेऽपि लाभेन ज्ञापकानुपयोगाच्चेति बोध्यम् ॥ ८७ ॥

---

* दीङो युडचि क्ङिति ६ । ४ ।। ६३ । † अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ६ । ४ । ७७ ।
‡ ओः सुपि ६ । ४ । ८३ । § एरनेकाचोऽसंयोगपूर्वस्य ६ । ४ । ८२ ।
१—ऋ० स० ८ । ६९ । २ । साम० उ० ७ । १ । ६ । १ ।
+ छन्दस्युभयथा ३ । ४ । ११७ ।

## ऊदुपधाया गोहः ॥ ६ । ४ । ८९ ॥

अथ किमर्थं गुहेर्विकृतस्य ग्रहणं क्रियते न पुनर्गुह इत्येवोच्येत ?

**गोहिग्रहणं विषयार्थम् ॥ १ ॥**

गोहिग्रहणं क्रियते विषयार्थम् । विषयः प्रतिनिर्दिश्यते । यत्रास्यैतद्रूपं तत्र यथा स्यात् । इह मा भूत्—निजुगुहतुः निजुगुहुरिति ।

**अयादेशप्रतिषेधार्थं च ॥ २ ॥**

अयादेशप्रतिषेधार्थं च विकृतग्रहणं क्रियते ।

**ह्रस्वादेशे ह्ययादेशप्रसङ्ग ऊत्त्वस्यासिद्धत्वात् ॥ ३ ॥**

ह्रस्वादेशे हि सत्ययादेशः प्रसज्येत । प्रगूह्य गतः । किं कारणम् ? ऊत्त्वस्यासिद्धत्वात् । असिद्धमूत्त्वं तस्यासिद्धत्वाल्ल्यपि लघुपूर्वात् [ ६ । ४ । ५६ ] इत्ययादेशः प्रसज्येत ।

विषयार्थेन तावन्नार्थो गोहिग्रहणेन । प्रश्लिष्टनिर्देशात्सिद्धम् । प्रश्लिष्टनिर्देशोऽयम् । उ ऊत् ऊदिति । तत्र ह्रस्वस्यावकाशः—निजुगुहतुः निजुगुहुः । गुणस्यावकाशः—निगोढा निगोढुम् । इहोभयं प्राप्नोति—निगूहयति निगूहकः । परत्वाद्गुणो* कृत

प्र०—ऊदु० । किमर्थमिति । 'लघुं विहाय निर्देशं कस्माद्गौरवमाश्रित'मिति प्रश्नः । गोहिग्रहणमिति । कृतगुणस्योत्त्वं यथा स्यादकृतस्य मा भूदित्येवमर्थमित्यर्थः ।

अयादेशप्रतिषेधार्थं चेति । गुणे कृते तस्य स्थाने ऊत्त्वे कृते सत्यूत्त्वस्यासिद्धत्वे गुरुपूर्वादुत्तरो णिर्भवति न तु लघुपूर्वादिति ल्यप्ययादेशो न भवति । 'गुह' इति तु निर्देशे क्रियमाणे नित्यत्वाद्बाधित्वा गुणमुकारस्थाने ऊकारः प्राप्नोति । तस्य चासिद्धत्वाल्लघुपूर्वादुत्तरो णिर्भवतीत्ययादेशः स्यात् । उ ऊत् ऊदिति । ह्रस्वदीर्घावादेशौ सूत्रे निर्दिश्येते । स्थानेऽन्तरतमपरिभाषावशाद्ह्रस्वस्य ह्रस्वो दीर्घस्य दीर्घः । निजुगुहतुरिति । अत्र कित्वाद्गुणप्रतिषेधादुकारस्यादेश उकारः । निगोढेति । 'अची'त्यधिकारादुकारस्यात्राप्रसङ्गः । निगूहयतीति ।

उ०—ऊदु० । विषयं दर्शयति—कृतगुणस्येति । अकृतगुणस्येति । क्ङिद्विषय इत्यर्थः । नित्यत्वादिति । गुणस्त्वनित्यः । ऊत्त्वे लघूपधत्वाभावादप्राप्तेः । ह्रस्वदीर्घाविति । आदेशोऽपि ह्रस्व एवास्तु । भाव्यमानस्योकारस्य सवर्णग्राहकत्वाद्दीर्घस्य दीर्घसिद्धिरिति चेदुपायान्तरत्वाददोष इत्याहुः । परत्वाद्गुण इति । न च ह्रस्वे सावकाशेऽपि दीर्घोऽनवकाशः । ह्रस्वापेक्षयैव विप्रतिषेधविचारात् । दीर्घस्तु गुणाभावाकप्राप्नोत्येव

* पुगन्तलघूपधस्य च ७ । ३ । ८६ ।

आन्तर्यतो दीर्घस्य दीर्घो भवति ।

अयादेशप्रतिषेधार्थेनापि नार्थः । समानाश्रयवचनात्सिद्धम् । समानाश्रयमसिद्धं भवति व्याश्रयं चैतत् । कथम् ? णावूत्त्वं णेर्ल्यप्ययादेशः ॥ ८६ ॥

## दोषो णौ ६ । ४ । ९० ॥

अथ किमर्थं दुषेर्विकृतस्य ग्रहणं क्रियते न पुनर्दुष इत्येवोच्येत ?

### दोषिग्रहणं च ॥ १ ॥

किम् ? अयादेशप्रतिषेधार्थं विकृतग्रहणं क्रियते । ह्रस्वादेशे ह्ययादेशप्रसङ्ग ऊत्त्वस्यासिद्धत्वात् । ह्रस्वादेशे हि सत्ययादेशः प्रसज्येत । प्रदूष्य गतः । किं कारणम् ? ऊत्त्वस्यासिद्धत्वात् । असिद्धमूत्त्वं तस्यासिद्धत्वाल्ल्यपि लघुपूर्वादित्ययादेशः प्रसज्येत ॥ अत्रापि समानाश्रयवचनात्सिद्धमित्येव ॥ ९० ॥

## चिण्णमुलोर्दीर्घोऽन्यतरस्याम् ॥ ६ । ४ । ९३ ॥

चिण्णमुलोर्णिज्व्यवेतानां यङ्लोपे चोपसंख्यानं कर्तव्यम् । शमयन्तं प्रयोजितवान् अशमि अशामि, शमं शमम्, शामं शामम् । शंशमयतेः अशंशमि

---

प्र०—उकारस्य गुणश्च प्राप्नोत्युकारश्च । तत्र परत्वाद्गुणे कृत एकदेशविकृतस्यानन्यत्वादूकार आदेश इति नार्थो विकृतनिर्देशेन । 'दोषो णा'वित्यत्र तु लक्ष्यदर्शनवशादूकारोऽपेक्ष्यते न तु ह्रस्व इति तत्रापि न दोषः ॥ ८९ ॥

चिण्ण० । णिज्व्यवेतानामिति । चिण्णमुल्परे णौ मितामङ्गानां वा दीर्घ उच्यते । तत्र यदा ण्यन्ताद्यङन्ताद्वा णिज्विधीयते तदा पूर्वेण णिचा यङ्कारेण च व्यवधानाद्दीर्घो न प्राप्नोतीति वचनम् । प्रयोजितवानिति । यद्यपि चिण्विषयं कर्म प्रदर्शनीयं तथापि णिजुत्पत्तये हेतुव्यापारप्रदर्शनार्थं कर्तुरुपादानं न त्वत्र कर्ता विवक्षितः । शंशमयतेरिति । शमेर्यङि

---

उ०—न, तदन्तरतमस्थानिनोऽभावात् । उभयनिर्देशसामर्थ्येन स्वस्वसदृशस्थान्याक्षेपात् । 'गुणश्च प्राप्नोत्युकारश्चे'त्येव पाठः । नन्वेवं 'दोषो णा'वित्रापि तत्सूत्रवचयमाणरीत्या 'दुष' इति निर्देशे तेन पर्यायेणोभौ स्यातामत आह–दोषो णाविति । विकृतनिर्देशे तु तत्सामर्थ्यादेव गुणे कृत आदेशः । स चान्तरतम्याद्दीर्घ एवेति भावः ॥ ८६ ॥

दोषो० । अत्र विकृतनिर्देशस्य विषयार्थत्वं न फलम्, णावित्युक्तेः । अतो भाष्ये—अयादेशप्रतिषेधार्थमिति ॥ ९० ॥

चिण्ण० । भूतपूर्वगत्या वेति—प्रौढया । भाष्ये—दीर्घविधिं प्रतीति । यद्यपि तत्र त्रैपादिकदीर्घस्यैव साहचर्याद्ग्रहणम् । अत एव 'पूर्वत्रासिद्धीये' इत्यवष्टम्य वरेयलोपस्वरवर्जं द्विर्वचनादीनि न कर्त-

अशंशामि, शंशमं शंशमंम्, शंशामं शंशामम् । किं पुनः कारणं न सिध्यति ? चिण्णमुल्परे णौ मितामङ्गानां दीर्घो भवतीत्युच्यते यश्चात्र चिण्णमुल्परो न तस्मिन्निदङ्गं यस्मिंश्च मिदङ्गं नासौ चिण्णमुल्पर इति । लोपे† कृते चिण्णमुल्परो भवति । स्थानिवद्भावान्न चिण्णमुल्परः । ननु च प्रतिषिध्यतेऽत्र स्थानिवद्भावो दीर्घविधिं प्रति न स्थानिवदिति‡ । एवमप्यसिद्धत्वान्न प्राप्नोति ॥ एवं तर्हि—

चिण्णमुलोर्णिज्व्यवेतानां यङ्लोपे चान्तरङ्गलक्षणत्वात्सिद्धम् ॥ १ ॥

किमिदमन्तरङ्गलक्षणत्वादिति । यावद्ब्रूयात्समानाश्रयवचनात्सिद्धमित्येव । व्याश्रयं चैतत् । कथम् ? णेर्णौ लोपो णौ चिण्णमुल्परे मितामङ्गानां दीर्घत्वमुच्यते । तस्मान्नार्थ उपसंख्यानेनेति ॥ ९३ ॥

प्र०—'नुगतोऽनुनासिकान्तस्ये'ति नुकि कृते शंशम्यशब्दाण्णिच्यल्लोपयलोपौ । लोपे कृत इति । यद्यपि परस्यापि णिचो लोपस्तथापि प्रत्ययलक्षणेन भूतपूर्वगत्या वा चिण्णमुल्परो णिः । दीर्घविधिं प्रति नेति । एतदेव हि दीर्घग्रहणस्य प्रयोजनं स्थानिवत्त्वप्रतिषेधो यथा स्यात् । यदि तु प्रकृतो ह्रस्वो विकल्प्येत तदा णौ णिलोपस्य स्थानिवत्त्वाद्विकल्पो ह्रस्वस्य न स्यात् । यङ्कारलोपस्य स्थानिवद्भावान्नित्यं ह्रस्वः श्रूयेत । 'हेडृ वेष्टने' इत्यस्य च ह्रस्वाभावपक्षेऽहेडीति स्यात् । दीर्घे तु ह्रस्वस्य कृतेऽहीडीति सिध्यति ।

अन्तरङ्गलक्षणत्वादिति । णियङोर्लोपो णिमात्रापेक्षत्वादत्रान्तरङ्गः । दीर्घस्तु चिण्णमुल्परण्यपेक्षत्वाद्बहिरङ्ग इति समानाश्रयत्वाभावादसिद्धत्वाभाव इत्यर्थः ॥ ९३ ॥

उ०—व्यानीतिं तत्प्रत्याख्यातं भाष्ये 'न पदान्त'सूत्रे । तथापि लक्ष्यानुरोधात्साहचर्यानित्यत्वाच्च 'न पदान्त'-सूत्रस्थं वरेयलोपस्वरवर्जमित्युपलक्षणमिति भावः । ण्यन्ताण्णौ 'ण्याकृतिनिर्देशात्सिद्ध'मिति तु चिन्त्यम् । जातेः पौर्वापर्याभावेन चिण्णमुल्पर इति विशेषणासंगत्यात्र जातिग्रहणस्य वक्तुमशक्यत्वात् । स्पष्टं चेद'मार्धधातुक' इति सूत्रे द्वितीयाध्याये कैयटे भाष्ये च । दीर्घग्रहणस्य फलान्तरमपि दर्शयति—हेड वेष्टन इति । घटादिरयम् । केचित्तु कालसूत्रस्थस्य 'क्रमेर्णिङ्'सूत्रस्थस्य प्रकृतसूत्रस्थस्य च भाष्यस्य प्रामाण्याद् 'हेड वेष्टने' इत्यस्य घटादौ पाठोऽसांप्रदायिक इत्याहुः ॥ ९३ ॥

† णेरनिटि; अतो लोपः; यस्य हलः ६ । ४ । ५१; ४८; ४९ ।
‡ न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु १ । १ । ५८ ।

## छादेर्घेऽद्व्युपसर्गस्य ॥ ६ । ४ । ९६ ॥

अद्विप्रभृत्युपसर्गस्येति वक्तव्यम् । इहापि यथा स्यात्—समुपाभिच्छाद इति ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । यत्र त्रिप्रभृतयः सन्ति द्वावपि तत्र स्तस्तत्राद्व्युपसर्गस्येत्येव सिद्धम् ॥ न वा एष लोके संप्रत्ययः । न हि द्विपुत्र आनीयतामित्युक्ते त्रिपुत्र आनीयते । तस्मादद्विप्रभृत्युपसर्गस्येति वक्तव्यम् ॥ ९६ ॥

## घसिभसोर्हलि ॥ ६ । ४ । १०० ॥

### हल्ग्रहणमनर्थकमन्यत्रापि दर्शनात् ॥ १ ॥

हल्ग्रहणमनर्थकम् । किं कारणम् ? अन्यत्रापि दर्शनात् । अन्यत्रापि लोपो

प्र०—छादेः । अद्विप्रभृत्युपसर्गस्येति वक्तव्यमिति । इह संख्यान्तरोपजने आश्रयाविनाशेऽपि पूर्वसंख्याविनाशात्तद्वाचिशब्दाप्रवृत्तिः । यत्र त्रिप्रभृतय इति । वस्तुसद्भावमाश्रित्य परिहारः । 'अद्व्युपसर्गस्ये'ति च प्रसज्यप्रतिषेधो वाक्यभेदेनाश्रीयते । पर्युदासाश्रयणे ह्यनुपसर्गस्य ह्रस्वो न स्यात् । न वै एष इति । संख्याशब्दानामेष स्वभावो यत्संख्यान्तरस्य गौणस्य मुख्यस्य वा विषये न प्रवर्तन्ते । तथा चोक्तं 'एकाजनेकाज्ग्रहणेषु चावृत्तिसंख्यानात्सिद्धम्' इति । 'नैधेय' इति च पूर्वविधिग्रहणस्य प्रत्युदाहरणमुपन्यस्तं स्थानिवद्भावे त्र्यच्कत्वाद्द द्व्यच्कत्वाभावात्तदाश्रयो ढक् न स्यादिति ॥ ९६ ॥

घसि० । 'अची'त्यधिकाराद्धलि न प्राप्नोतीति हल्ग्रहणं क्रियते । तदुपादाने चाचि न प्राप्नोतीति चकारोऽच्संबन्धार्थः क्रियते । तत्राज्ग्रहणस्येहानधिकारादेव सर्वत्र लोपः सिध्यतीति 'हलि चे'ति न वक्तव्यम् । अन्यत्रापीति । वचनाद्वार्तिककारश्चकारं न पपाठेति लक्ष्यते ॥ बप्सतीति । एकवचने प्राप्ते व्यत्ययेन झिः, श्लौ द्विर्वचनम्, 'अदभ्यस्ता'दित्यदादेशः, उपधा-

उ०—छादेः । प्रसज्यप्रतिषेधे वाक्यभेदासमर्थसमासापत्तावपि लक्ष्यानुरोधात्स आश्रीयत इत्याह—पर्युदासाश्रयण इति । द्व्याद्युपसर्गसदृशस्य सोपसर्गस्यैव ग्रहणापत्तिरिति भावः । मुख्यस्योत्तरसंख्यान्तरस्य विषये पूर्वसंख्याया अप्रवृत्तौ भाष्ये दृष्टान्त उक्तः । गौणविषये दर्शयति—तथा चोक्तमिति । 'अइउण्'सूत्रे । तत्र ह्यकारादीनामेकत्वपक्षे 'घटेन तरति घटिक' इत्यत्र द्व्यच्लक्षणठनोऽप्राप्तिमाशङ्क्यायं परिहार उक्तः । स्थानिवद्भावे इति । निपूर्वाद्धाञः किप्रत्यय आतो लोपे तस्य स्थानिवत्त्वेनाच्त्वं स्यादिति भावः । तदाश्रय इति । द्व्यच्त्वाश्रय इत्यर्थः ॥ ९६ ॥

घसि० । हल्ग्रहणप्रत्याख्यातृवार्तिकाशयमाह—तत्रेति । अनधिकारादेवेति । व्याख्यानादेवाधिकारनिवृत्तिः सिद्धेति भावः । अन्यत्रापीति वचनादिति । सूत्रोक्तविषयादन्यत्रापीति तदर्थः । स च चकाराकरण एवोपपद्यत इत्यर्थः ॥ एकवचन इति । अग्नेरेकस्य कर्तृत्वादिति भावः । अन्तरङ्गत्वादिति । यद्यप्युपधालोपः परो नित्यश्च तथापि ह्रस्वमात्रापेक्षत्वाद्द्वित्वमन्तरङ्गम् । क्ङित्प्रत्ययापेक्षत्वाद्बहिरङ्गो लोप

दृश्यते । अग्निस्तृणानि बप्सति । शरावे बप्सति चरुः ॥ १०० ॥

## हुझल्भ्यो हेर्धिः ॥ ६ । ४ । १०१ ॥

इटः प्रतिषेधो वक्तव्यः । रुदिहि स्वपिहि* । झल इति धित्वं प्राप्नोति ।

### हेर्धित्वे हलधिकारादिटोऽप्रतिषेधः ॥ १ ॥

हेर्धित्वे हलधिकारादिटोऽप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः । धित्वं कस्मान्न भवति ? हलधिकारात् । प्रकृतं हल्ग्रहणमनुवर्तते । क्व प्रकृतम् ? घसिभसोर्हलि [ ६ । ४ । १०० ] इति । तद्वै सप्तमीनिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः । तद्वै तत्र प्रत्याख्यायते तत्र प्रत्याख्यातं सद्यया विभक्त्या निर्दिश्यमानमर्थवत्तया निर्दिष्टमिहानुवर्तिष्यते ।

अथवा हुझल्भ्य इत्येषा पञ्चमी हलीति सप्तम्याः षष्ठीं प्रकल्पयिष्यति तस्मादित्युत्तरस्य [ १ । १ । ६७ ] इति ।

प्र०—लोपः, खरि चेति चर्त्वम् । अत्र चान्तरङ्गत्वादुपधालोपात्पूर्वं द्विर्वचनं क्रियते । यदि तु झावेव पूर्वं लोपः स्यात्ततो द्विर्वचनं न स्यात् ।

हुझ० । रुदिहीति । शब्दान्तरप्राप्त्या द्वयोरप्यनित्यत्वात्परत्वादिटि पुनःप्रसङ्गविज्ञानाद्द्वित्वप्रसङ्गः । अथवेति । यद्यपि सप्तम्यचरितार्था तथापि 'हुझल्भ्य' इत्यनया पञ्चम्याऽचरितार्थया 'हे'रित्येतदनुगुणा षष्ठी प्रकल्प्यते । ननु षष्ठीप्रक्लृप्तौ तदादिविधेरभावः । 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति ह्युच्यते । नैष दोषः । हल्ग्रहणानुवृत्तिसामर्थ्याद्धलन्तत्वासंभवाच्च तदादिविधिर्विज्ञास्यते । अथवेति । यत्षष्ठ्या निर्दिश्यते तस्यैवादेशः । सागमकस्त्वागमानामव्य-

उ०—इत्यर्थः । द्विर्वचनं न स्यादिति । अनच्कत्वात् । लोपस्य द्वित्वनिमित्ताज्निमित्तत्वाभावेन स्थानिवत्त्वाभावाच्च । द्वित्वे कृते परत्वान्नित्यत्वाच्चादेश उपधालोपानापत्तिरिति भावः ॥ १०० ॥

हुझ० । तद्वै तत्र प्रत्याख्यायत इति । पूर्ववाक्ये 'हलीत्यस्यानुपयोगेन सप्तम्यर्थे सप्तम्यां प्रमाणाभावेन षष्ठ्यर्थे इयं सप्तमीति भावः । 'अथवे'ति पक्षेऽप्ययमेवार्थः । प्रकारान्तरेणोच्यत इत्याह—यद्यपीति । ननु द्वयोरप्यचरितार्थयोः पञ्चम्येव कल्पिका कुत इत्यत आह—हेरित्येतदनुगुणेति । हेरित्यस्य विशेषणाकाङ्क्षायां तेनैव हल्ग्रहणस्य संबन्धो युक्त इत्यर्थः । द्वयोरचरितार्थयोः परत्वा'त्तस्मादित्युत्तरस्ये'त्यस्यैव प्रवृत्तिरिति वक्तुं युक्तम् । हल्ग्रहणेति । हल्ग्रहणानुवृत्तेः फलान्तराभावाद्धेरित्यनेन संबन्धे तदन्तविध्यसंभवात्तदादिविधिसिद्धिरित्यर्थः । वस्तुतः स्वरूपसत्सप्तम्येव तन्निमित्तम् । अत एव 'तस्मान्नुडची'त्यादौ तदादिविधिः षष्ठीं प्रकल्पयिष्यतीत्यस्य षष्ठ्यर्थे सप्तमीं कल्पयिष्यतीत्यर्थ इत्याहुः । ननु सागमोऽपि

१—'अग्निर्वनानि' पा० ।

* रुदादिभ्यः सार्वधातुके ७ । २ । ७६ ।

अथवा निर्दिश्यमानस्यादेशा भवन्तीत्येवं न भविष्यति । यस्तर्हि निर्दिश्यते तस्य कस्मान्न भवति ? इटा व्यवहितत्वात् ।

यद्येवं छिन्द्धकि भिन्द्धकीत्यत्र धित्वं न प्राप्नोति । [ [1]एवं तर्हि ] धित्वे कृतेऽकज्भविष्यति* । इदमिह संप्रधार्यम्—धित्वं क्रियतामकजिति किमत्र कर्तव्यम् ? परत्वाद्धित्वम् । नित्योऽकच् । कृतेऽपि धित्वे प्राप्नोत्यकृतेऽपि । अकजप्यनित्यः । अन्यस्य कृते धित्वे प्राप्नोत्यन्यस्याकृते, शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति । उभयोरनित्ययोः परत्वाद्धित्वं धित्वे कृतेऽकज्भविष्यति ।

अथवा हकारस्यैवाशक्तिजेनेकारेण ग्रहणमिति ॥ १०१ ॥

प्र०—भिचाराच्छब्दान्तरे श्रूयमाणे प्रतीयते न तूच्चार्यत इति तस्यादेशाभावः । यस्तर्हीति । आगमं विहाय हिशब्दस्यादेशो भवत्वित्यर्थः । इटेति । 'तस्मादित्युत्तरस्ये'ति वचनादनन्तरस्यैव षष्ठ्या कार्येण वा भाव्यम् । तत्र यो निर्दिष्टो नासावनन्तरो यश्चानन्तरः सागमको नासौ निर्दिष्ट इति धित्वाभावः । यद्येवमिति । यदि निर्दिश्यमानस्यादेशस्तदाकचि कृते शब्दान्तरत्वाद्धित्वाभावः । धित्वे कृतेऽकजिति । पुनःप्रसङ्गविज्ञानाश्रयणात् । न ह्यन्यथाज्ञाताद्यर्थावगतिर्भवति । अथवा-ज्ञाताद्यर्थापेक्षत्वाद्बहिरङ्गोऽकजिति पूर्वं धित्वं पश्चादकच् । अथवेति इकारेणागन्तुना 'हे'रिति निर्देशः । हकारमात्रं तु स्थानित्वेन निर्दिश्यते । एवं 'धि'रिति धकारमात्रमादेशः । इकारस्तूच्चारणार्थः । व्यञ्जनस्य स्वररहितस्योच्चारयितुमशक्यत्वात् । ततश्च 'रुदिही'त्यत्र हकारस्येटा व्यवधानाद्धकाराभावः । स हि समुदायभक्तत्वात्तमेव न व्यवदध्यात् । अवयवं तु व्यवदधात्येव । तथा 'भिन्धकी'त्यत्र सत्यपि पूर्वमकचि हकारस्य धकारे कृते रूपं सिध्यति ॥ १०१ ॥

उ०—निर्दिश्यत एवेटस्तदवयवत्वादत आह—सागमकस्त्विति । शब्दान्तरे श्रूयमाणे सति 'यदागमा' इति परिभाषया प्रतीयत इत्यर्थः । अनन्तरस्यैव षष्ठ्येति । पञ्चमीनिर्देशेऽनन्तरस्यैव षष्ठी प्रकल्प्येति सूत्रार्थ इति भावः । पञ्चमीनिर्देशेऽनन्तरस्य कार्यं भवतीति सूत्रार्थमाश्रित्याह—कार्येण वेति । षष्ठ्या कार्येण भाव्यमिति पाठे षष्ठीनिर्दिष्टोचितकार्येणेत्यर्थः । पुनःप्रसङ्गविज्ञानाश्रयणे हेतुमाह—न हीति । अथवेति । इदं चिन्त्यम् । अर्थापेक्षत्वबहिरङ्गत्वस्यात्र शास्त्रेऽनाश्रयणादित्यसकृदावेदितम् । हकारमात्रस्य स्थाने 'धी'ति विशिष्टादेशे रूपं न सिध्येदत आह—एवं धिरितीति । अशक्तिजेनेत्येतद्व्याचष्टे—व्यञ्जनस्येति । यद्यपि विभक्त्यकारेण स्थानिन उच्चारयितुं शक्यत्वं तथाप्यादेशसाधारण्येनेदमेवोक्तम् । यद्वा तत्प्रक्रियावाक्याभिप्रायमिदम् ॥ १०१ ॥

१—क्वचिन्न । * अव्ययसर्वनाम्नामकच् प्राक्टेः ५ । ३ । ७१ ।

## चिणो लुक् ॥ ६ । ४ । १०४ ॥

चिणो लुकि तग्रहणं कर्तव्यम् । किं प्रयोजनम् ? इह मा भूत्—अकारितराम् अहारितरामिति ।

### चिणो लुकि तग्रहणानर्थक्यं संघातस्याप्रत्ययत्वात् ॥ १ ॥

चिणो लुकि तग्रहणमनर्थकम् । किं कारणम् ? संघातस्याप्रत्ययत्वात् । संघातस्य लुकस्मान्न भवति ? अप्रत्ययत्वात् । प्रत्ययस्य लुक्श्लुलुपो भवन्तीत्युच्यते† न च संघातः प्रत्ययः ॥ तलोपे तर्हि कृते परस्य प्राप्नोति ।

### तलोपस्य चासिद्धत्वात् ॥ २ ॥

असिद्धस्तलोपस्तस्यासिद्धत्वान्न भविष्यति ।

### कार्यकृतत्वाद्वा ॥ ३ ॥

अथवा कृतश्चिणो लुगिति कृत्वा पुनर्न भविष्यति लुक् । तद्यथा—'वसन्ते ब्राह्मणोऽग्नीनादधीते'ति सकृदाधाय कृतः शास्त्रार्थ इति कृत्वा पुनःप्रवृत्तिर्न भवति ।

प्र०—चिणो० । तग्रहणमिति । इदमस्मिन्नसिद्धमिति भेदनिबन्धनत्वाद्विषयविषयिभावस्य 'चिणो लु'गित्यस्य लक्षणस्य भेदाभावा'दकारितरा'मित्यत्र लोपस्याऽसिद्धत्वाभावात्तरपोऽपि लुक्प्राप्नोति । एवं च सति प्रत्ययत्रयात्मकस्य समुदायस्य लुक्प्रसङ्गः ।

इतरस्तु युगपत्प्रत्ययत्रयस्य लुक्प्रसङ्गोऽनेनोक्त इति मत्वाह—चिणो लुकीति । इतरः स्वाभिप्रायं प्रकाशयति—तलोप इति ॥ तलोपस्यासिद्धत्वादिति । प्रतिलक्ष्यं लक्षणभेदादस्ति विषयविषयिभावः । अभेदपक्षमाश्रित्याह—कार्यकृतत्वाद्वेति । एकस्मिन्विषये सकृत्प्रवृत्त्या लक्षणस्य चरितार्थत्वात्पुनः प्रवृत्त्यभावः । तद्यथेति । यथैकस्मिन्वसन्तेऽग्न्याधानं कृत्वा वसन्तान्तरे ब्राह्मणोऽग्न्याधानं न कुरुते शास्त्रार्थस्यानुष्ठितत्वात् । तथैकस्य लुकि कृते प्रत्ययान्तरस्य तरबादेर्लुक् न प्रवर्तते । युक्तं यत्तस्यैवेति । इहाभिन्नरूपमपि फलभेदाद्भिन्नमुच्यते । अग्न्याधानं तु कर्मान्तरेषु कर्तुर्योग्यतोत्पादनार्थमिति फलभेदाभावात्पुनर्न क्रियते । काम्यानां तु

उ०—चिणो० । समुदायस्य लुक्प्रसङ्ग इति । लक्ष्यभेदाद्वारं वारं प्रवृत्त्येति भावः । अभेदपक्षम् । निमित्तभूतानुपूर्व्यैक्येन लक्षणाभेदपक्षमिति भावः । अत्राधानाग्निष्टोमयोर्वैधर्म्ये हेतुं नु विद्म इति शङ्कां परिहरति—इहाभिन्नरूपमिति । ज्योतिष्टोमादीत्यर्थः । कर्मान्तरेषु । अग्निहोत्रादिषु । कर्तुरित्युपलक्षणम् ।

† प्रत्ययस्य लुक्श्लुलुपः १ । १ । ६१ ।

विषम उपन्यासः । युक्तं यत्तस्यैव पुनःप्रवृत्तिर्न स्याद्यत्तु तदाश्रयं प्राप्नोति न तच्छक्यं बाधितुम् । तद्यथा—'वसन्ते ब्राह्मणोऽग्निष्टोमादिभिः क्रतुभिर्यजेते'त्यग्न्याधाननिमित्तं वसन्ते वसन्त इज्यते । तस्मात्पूर्वोक्तावेव परिहारौ ।

अथवा क्ङितीति वर्तते । क्व प्रकृतम् ? गमहनजनखनघसां लोपः क्ङित्यनङि [ ६ । ४ । ९८ ] इति । तद् वै सप्तमीनिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः । चिण इत्येषा पञ्चमी क्ङितीति सप्तम्याः षष्ठीं प्रकल्पयिष्यति तस्मादित्युत्तरस्य [ १ । १ । ६७ ] इति ॥ १०४ ॥

## उतश्च प्रत्ययादसंयोगपूर्वात् ॥ ६ । ४ । १०६ ॥

कथमिदं विज्ञायते—उकारात्प्रत्ययादिति, आहोस्विदुकारान्तात्प्रत्ययादिति । किं चातः ? यदि विज्ञायत उकारात्प्रत्ययादिति सिद्धं तनु कुरु, चिनु सुन्विति न सिध्यति । अथ विज्ञायत उकारान्तात्प्रत्ययादिति सिद्धं चिनु सुनु, तनु कुर्विति न सिध्यति ॥ तथासंयोगपूर्वग्रहणेनैव पर्युदासः स्यात् तक्ष्णुहि अक्ष्णुहि, आप्नुहि शक्नुहीत्यत्र न स्यात् ।

प्र०—कर्मणां फलभेदात्पुनरनुष्ठानं भवति । तथेहापि तस्य लुकि कृते तरबादेर्लुक्प्रसङ्गः । अग्न्याधानं निमित्तमस्येति बहुव्रीहिः । क्रियाविशेषणं चैतत् । अनाहिताग्नेरनधिकारादग्न्याधानं निमित्तं यागस्योच्यते ॥ १०४ ॥

उतश्च । कथमिदमिति । 'उतश्च प्रत्यया'दित्यनयोर्विशेषणविशेष्यभावे कामचाराद्यदोकारः प्रत्ययेन विशेष्यते तदा तदन्तविधेरभावा'दुकारात्प्रत्यया'दिति पक्षोऽवतिष्ठते ।

उकारस्य विशेष्यत्वात्तेन नास्ति तदन्तता ।
न संभवति चोकारः प्रत्ययान्तो यदा पुनः ॥

विशेष्यत उकारेण प्रत्ययोऽतस्तदन्तता ।
आश्रीयते प्रत्ययस्य तस्मात्पक्षद्वयोद्भवः ॥

पक्षद्वयेऽपि दोषदर्शनात्प्रश्नः ॥ तथेति । तदन्तपक्षेऽयं दोषः । आद्ये तु पक्षे उकारस्याप्रत्ययत्वाल्लुक्प्रसङ्ग एवात्र नास्तीति दोषाभावः । ननूकारात्प्रत्ययादिति विज्ञायमाने उकारस्य

उ०—अग्नेश्चेत्यपि बोध्यम् । इहापि रूपान्तरप्राप्त्या फलभेद इत्याह—तथेति । अत्र यद्वक्तव्यं तत् 'संप्रसारणाच्चे'ति सूत्र उक्तम् । भाष्ये पूर्वोक्तावेवेति । तद्ग्रहणमसिद्धत्वं वा ॥ १०४ ॥

उतश्च । प्रत्ययस्य विशेषणत्वेऽप्यसंभवात्तेन तदन्तविधिर्नेत्याह—न संभवति चेति । द्वितीयं पक्षं दर्शयति—यदा पुनरिति । अङ्गविशेषणं स्यादिति । असंयोगपूर्वादङ्गादुत्तरो य उकाररूपः प्रत्ययस्त-

यथेच्छसि तथास्तु । अस्तु तावदुकारात्प्रत्ययादिति । कथं चिनु सुन्विति ? तदन्तविधिना* भविष्यति । अथवा पुनरस्तूकारान्तात्प्रत्ययादिति । कथं तनु कुर्विति ? व्यपदेशिवद्भावेन भविष्यति ।

यदप्युच्यते तथासंयोगपूर्वग्रहणेनेहैव पर्युदासः स्यात् तक्ष्णुहि अक्ष्णुहि, आप्नुहि शक्नुहीत्यत्र न स्यादिति नास्माभिरसंयोगपूर्वग्रहणेनोकारान्तं विशेष्यते । किं तर्हि ? उकारः । उकारो योऽसंयोगपूर्वस्तदन्तात्प्रत्ययादिति ।

**उतश्च प्रत्ययाच्छन्दोवावचनम् ॥ १ ॥**

उतश्च प्रत्ययादित्यत्र च्छन्दसि वेति वक्तव्यम् । अवं स्थिरा तनुहि यातुजूनाम्† । धिनुहि यज्ञं धिनुहि यज्ञपतिम् । तेन मा भागिनं कृणुहि‡ ।

**उत्तरार्थं च ॥ २ ॥**

केचित्तावदाहुश्छन्दोग्रहणं कर्तव्यमिति । अपर आहुर्वावचनं कर्तव्यमिति ।

प्र०—प्रत्ययस्य संयोगपूर्वत्वासंभवादसंयोगपूर्वग्रहणं किमर्थं स्यात् । उच्यते, अङ्गविशेषणं स्यात् । तथा च 'क्षिणु' इत्यत्र न स्यादित्ययमपि दोषो वक्तव्यः । तदन्तविधिनेति । ननूकारस्य विशेष्यत्वात्कथं तदन्तविधिः । विशेषणत्वात्तु तदन्तविधौ वक्ष्यमाणात्पक्षादस्य भेदो न प्राप्नोति । एवं तर्हि तन्त्रेण सूत्रद्वयमभ्युपगम्यैतदुच्यते । तत्रैकस्मिन्सूत्रे प्रत्ययेनोकारो विशेष्यते, द्वितीये तूकारेण प्रत्यय इति दोषाभावः । व्यपदेशिवद्भावेनेति । 'आद्यन्तवदेकस्मि'न्नित्यनेनेत्यर्थः । किं तर्ह्युकारो विशेष्यत इति । ननूकारस्य संज्ञात्वात्संज्ञिपरतन्त्रत्वादप्रधानस्य कथं विशेषणेन संबन्धः । नैष दोषः । यावदस्य विशेषणत्वं न विवृतं तावत्संज्ञात्वं नास्तीत्यप्राधान्याभावः ।

उ०—स्मादित्यर्थः । [१]क्षिणिवति । अङ्गविशेषणत्वेऽप्यसंभावात्तेन न तत् । चेणिवत्युचितः पाठः । 'संज्ञापूर्वको विधि'रनित्य इत्यस्य भाष्येऽदर्शनात् । अयमपि दोष इति । आद्ये पक्षे भाष्यानुक्तोऽप्ययं दोषो द्रष्टव्य इत्यर्थः । न प्राप्नोतीति । कर्मकर्तरि प्रयोगः । तत्रैकस्मिन्सूत्र इति । असंयोगपूर्वग्रहणं तु योग्यत्वाद्द्वितीयवाक्य एव संबध्यत इत्यर्थः । आद्यन्तवदेकेति । एवं व्याख्याने बीजं चिन्त्यम् । संज्ञिपरतन्त्रत्वादिति । संज्ञिनि तदन्ते विशेषणत्वादित्यर्थस्तदाह—अप्रधानस्येति । यावदस्येति । अस्यार्थतत्त्वं 'येन विधिरित्यत्र निरूपितम् । असंयोगपूर्व उकार इति । असंयोगपूर्वत्वविशिष्ट इत्यर्थः । 'उत्तरार्थ

* येन विधिस्तदन्तस्य १ । १ । ७२ ।　　१—'उकारो विशेष्यते' पा० ।

† ऋ० सं० ४ । ४ । ५; १० । ११६ । ५; यजु० १३ । १३; तै० सं० १ । २ । १४ । २; मै० सं० २ । ७ । १५ । का० सं० १६ । १५ ।　　‡ तेनं मा भागिनं कुरु ( अथर्व० ६ । १२६ । २ ); "तेन मा भागिनं कुरु" इत्यत्र Vedic Concordance पुस्तकोद्धृतः पाठः ।

२—"अङ्गविशेषणत्वेऽप्यसम्भवात्तेन न तत् ।" इत्युद्द्योतेऽधिकं क्वचित् ।

लोपश्चास्यान्यतरस्यां म्वोः [ १०७ ] इत्यत्रान्यतरस्यांग्रहणं न कर्तव्यं भवति ॥ १०६ ॥

## अत उत्सार्वधातुके ॥ ६ । ४ । ११० ॥

सार्वधातुक इति किमर्थम् ? इह मा भूत्—संचस्करतुः संचस्करुः ।

स्यान्तस्य प्रतिषेधो वक्तव्यः । करिष्यति करिष्यतः ।

**कृञ उत्त्व उकारान्तनिर्देशात्स्यान्तस्याप्रतिषेधः ॥ १ ॥**

कृञ उत्त्व उकारान्तनिर्देशात्स्यान्तस्याप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः । उत्त्वं कस्मान्न भवति ? उकारान्तनिर्देशात् ।

अशक्यः करोतावुकारान्तनिर्देशस्तन्त्रमाश्रयितुम् । इह संपरिभ्यां भूषणसमवाययोः करोतावितीहैव स्यात् संस्करोति, संस्कर्ता संस्कर्तुमित्यत्र न स्यात्* ।

न ब्रूमोऽस्मादुकारान्तनिर्देशाद्योऽयं करोतेरिति । किं तर्हि ? उकारप्रकरणादुकारान्तमङ्गमभिसंबध्यते । उत इति† वर्तते । यद्येवं नार्थः सार्वधातुकग्रहणेन । कस्मान्न भवति संचस्करतुः संचस्करुरिति ? उत इति वर्तते ।

---

प्र०—तत्रासंयोगपूर्व उकारः प्रत्ययस्य विशेषणमिति विशेषणेन संबन्धमनुभूय संज्ञात्वमुकारो लभते ॥ छन्दोग्रहणमिति । 'नित्यं करोते'रित्यत्र वाक्यभेदेन 'छन्दसि वे'ति संबध्यते ॥ १०६ ॥

अत० । सार्वधातुक इति किमर्थमिति । सत्यपि सार्वधातुकग्रहणे स्यान्तनिवृत्त्यर्थोऽवश्यं कर्तव्यो यत्न इति तेनैव यत्नेनार्धधातुके न भविष्यतीति भावः । स्यान्तस्येति । इह सार्वधातुके विकरणे कृते तेन व्यवधानात्सार्वधातुके परतः करोतेरित्यस्यार्थस्यासंभवात्सार्वधातुके परतो यदङ्गं तदवयवस्य करोतेरित्याश्रयणीयम् । एवं च स्यान्तस्यापि प्राप्नोति । स्यग्रहणमुपलक्षणं तास्यन्तस्यापि प्रसङ्गात् ।

कृञ उत्व इति । 'उत' इत्यनुवर्तनादिति भावः । इतरस्तु 'करोते'रित्युकारनिर्देशाश्रयेणानेनोक्तमिति मत्वाह–अशक्य इति । उत इति वर्तत इति । तेनोकारान्तस्याङ्गस्यावयवस्य करोतेरत उत्सार्वधातुके क्ङिति भवतीति सूत्रार्थः संपद्यते ।

---

उ०—छन्दोग्रहण'मित्यत्र यदुक्तं तद्व्याचष्टे—नित्यं करोतेरिति । तत्र छन्दोग्रहणमेव कार्यम् । तच्च वाक्यभेदेन छन्दसि विकल्पविधानार्थं नित्यस्य पूर्वेणैव सिद्धत्वादिति भावः ॥ १०६ ॥

अत० । कर्तव्यो यत्न इति । 'उत' इत्यनुवृत्तिरूपः । विकरणे कृत इति । अन्तरङ्गत्वादिति भावः । असंभवादिति । 'करोते'रिति धातुनिर्देश इत्यर्थः । भाष्ये–तन्त्रमाश्रयितुमिति । करोतिनिर्देश इत्यर्थः । नन्वभ्यस्तमाका-

---

* संपर्युपेभ्यः करोतौ भूषणे; समवाये च ६ । १ । १३७; १३८ ।

† उतश्च प्रत्ययादसंयोगपूर्वात् ६ । ४ । १०६ ।

उत्तरार्थं तर्हि सार्वधातुकग्रहणं कर्तव्यम्—श्नसोरल्लोपः [ १११ ] इति । श्नम्सार्वधातुक एव । अस्तेरप्यार्धधातुके भूभावेन भवितव्यम्‡ ।

उत्तरार्थमेव तर्हि—श्नाभ्यस्तयोरातः [ ११२ ] इति । श्ना सार्वधातुक एव । अभ्यस्तमप्याकारान्तमार्धधातुके नास्ति§ । ननु चेदमस्ति अप्सु यायावरः¶ प्रवपेत पिण्डानिति । नैतदाकारान्तम् । यकारान्तमेतत् ।

उत्तरार्थमेव तर्हि— ई हल्यघोः [ ११३ ] इति । तत्रापि श्नाभ्यस्तयोरित्येव ।

अतोऽप्युत्तरार्थमेव तर्हि— इद्दरिद्रस्य [ ११४ ] इति । वक्ष्यत्येतद्दरिद्रातेरार्धधातुके लोपः, सिद्धश्च प्रत्ययविधाविति* ।

अतोऽप्युत्तरार्थम्—भियोऽन्यतरस्याम् [ ११५ ] । अभ्यस्तस्येत्येव ।

अतोऽप्युत्तरार्थमेव—जहातेश्च [ ११६ ] । अभ्यस्तस्येत्येव ।

अतोऽप्युत्तरार्थम्—आ च हौ [ ११७ ] ॥ हावित्युच्यते । अभ्यस्तस्येत्येव ।

प्र०—अभ्यस्तमपीति । यत्र नेष्यते लोंप इति भावः । यत्र त्वस्ति तत्र भवत्येव लोपः—ययतुर्ययुरिति । यायावर इति । ननु चातो लोपस्य स्थानिवद्भावात्प्राप्ते आकारलोपे वरेऽजादेशस्य स्थानिवत्त्वं निषिध्यते । । यदि चात्र 'श्नाभ्यस्तयोरात' इत्यालोपः स्यात्स्थानिवत्प्रतिषेधोऽनर्थकः स्यात् । 'ई हल्यघो'रितीत्वमत्र प्राप्नोतीति चेद्वक्ष्यत्येव तत्प्राप्तिमिति वक्ष्यमाणाद्धेदाभावः । एवं तर्हि भाष्यकार आल्लोपप्राप्तिमभ्युपेत्य परिहारान्तरमाह—नैतदाकारान्तमिति । 'या य' इति स्थते सन्यङन्तस्य प्रथमस्यैकाचौ द्विर्वचनमिति 'याय्' इत्यस्य द्विर्वचनं ततो

उ०—रान्तं विद्यत एव ययतुरित्यादावत आह—यत्र नेष्यत इति । यत्र दोषः स्यादित्यर्थः । तत्र भवत्येवेति । 'आतो लोप इटि चे'त्यनेनेति भावः । ननु चातो लोपस्येति । यातेर्यङन्तात् ' यश्च यङः' इति वरचि परनिमित्ताल्लोपस्य स्थानिवत्त्वा'दातो लोप' इत्यालोपे प्राप्ते वरेऽजादेशस्य स्थानिवत्त्वं निषिध्यत इत्यर्थः । एवं तर्हि एवमिति । सत्यामप्याल्लोपाप्राप्ताविति शेषः । अभ्युपेत्येति । यद्यपि स्थानिवत्त्वनिषेधसामर्थ्यादाल्लोपाप्राप्तिरेव तथापि तत्प्राप्तिमभ्युपगम्य न्यायव्युत्पादनाय परिहारान्तरमुच्यत इत्यर्थः । वस्तुतस्तु 'ईहल्यघो'रित्येतत्प्राप्तिसाधारणं समाधानं वक्तुं तत्त्यागः । अत एव सांप्रतपुस्तकेषु 'ईहल्यघोरित्युत्तरं 'तत्रापि श्नाभ्यस्तयोरित्येव' इत्येवोपलभ्यते न तु 'ननु चेदमस्ति' अप्सु यायावर इत्यादिग्रन्थ इत्याहुः । यल्लोप इति । 'लोपो व्यो'रित्यनेन । उपदेशग्रहणानुवृत्त्येति । 'स्यसिच्सीयुट्तासी'त्यतः । वस्तुतोऽ-

‡ अस्तेर्भूः २ । ४ । ५२ ।　　§ आतो लोप इटि च ६ । ४ । ६४ ।

¶ यश्च यङः ३ । २ । १७६; अतो लोपः ६ । ४ । ४८; लोपो व्योर्वलि ६ । १ । ६६ ।

* ६ । ४ । ११४ वा० १; २ ।

अतोऽप्युत्तरार्थम्—लोपो यि [ ११८ ] । अभ्यस्तस्येत्येव ।

अतोऽप्युत्तरार्थम्—घ्वसोरेद्धावभ्यासलोपश्च [ ११९ ] इति । हावित्युच्यते ।

तदेव तर्हि प्रयोजनं श्नसोरल्लोप इति । ननु चोक्तं श्नम्सार्वधातुक एवास्तेरप्यार्धधातुके भूभावेन भवितव्यमिति ।

**अनुप्रयोगे तु भुवास्त्यबाधनं स्मरन्ति कर्तुर्वचनान्मनीषिणः ।**

अनुप्रयोगे तु भुवास्तेरबाधनमिष्यते । ईहामास ईहामासतुः ईहामासुरिति ।

किं च स्याद्यद्यत्र लोपः स्यात् ?

**लोपे द्विर्वचनासिद्धिः**

लोपे कृतेऽनच्कत्वाद्द्विर्वचनं न स्यात् ॥ स्थानिवद्भावाद्भविष्यति ।

**स्थानिवदिति चेत्कृते भवेद्द्वित्वे ।**

कृते द्वित्वे लोपः प्राप्नोति ॥ अस्तु तर्हि परस्य लोपः । अभ्यासस्य योऽकारस्तस्य दीर्घत्वं भविष्यति* ।

प्र०—'यायाय्' इत्यभ्यस्तमाकारान्तं न भवति । ननु 'यायाय्'शब्दस्याभ्यस्तसंज्ञायां यलोपे कृते भवत्येवावशिष्टस्याभ्यस्तसंज्ञा । एवं तर्ह्युपदेशग्रहणानुवृत्त्योपदेशे यदाकारान्तमभ्यस्तं तस्याल्लोपो न तु कृते यलोप इति मत्वा परिहार उक्तः—अभ्यस्तस्येत्येवेति । ननु च 'बिभीवा'नित्यत्र प्राप्नोति । एवं तर्हि 'छान्दसः क्सु'रिति भाष्यकारस्य दर्शनं छन्दसि च दृष्टमनुविधीयते ।

कृते द्वित्वे लोपः प्राप्नोतीति । ननु च नियतकालत्वात्स्थानिवद्भावस्य कृते द्विर्वचने लक्षणप्रवृत्तिमन्तरेण स्वत एवादेशरूपमवतिष्ठत इति लोपस्य कथं प्राप्तिरुच्यते । पुनः प्रवृत्तिर्लक्षणस्येति स्थानिवद्भावप्रकरणे प्रतिपादितम् ॥ अस्तु तर्हीति । 'अनन्त्यविकारेऽन्त्यसदेशस्ये'ति

उ०—ल्लोपासिद्धत्वेनापि यायावरः परिहर्तुं शक्यः । अत्रेदं चिन्त्यम् । जहाति ददातीत्यादावीत्त्वाल्लोपयोर्वारणाय 'श्नान्तीत्येतत्संबन्धावश्यकत्वेनैकदेश्युक्तिरियं ननु चेदमस्तीत्यादिः । ननु बिभीवानिति । 'भियोऽन्यतरस्या'मित्यत्रासति सार्वधातुकग्रहणे क्सावन्त्यस्येत्वविकल्पः स्यादित्यर्थः । छान्दस इति । बिभीवानित्यत्रेत्यर्थः । दृष्टमिति । ततश्चायमत्र विधिर्न भवतीत्यर्थः । भाष्ये—अतोऽप्युत्तरार्थम्—आ च हौ । हावित्युच्यतेऽभ्यस्तस्येत्येवेति च विनापि समुच्चयदर्शनादित्येव बोध्यत इत्यर्थः ।

नियतकालत्वादिति । द्विर्वचने एव कर्तव्ये इत्यवधारणान्नियतकालत्वं स्थानिवत्त्वस्योक्तम् । तत्र कृते द्वित्वे आदेशरूपमेव 'चक्नतु'रित्यादौ भवतीति पुनर्लोपाप्राप्तिरित्यर्थः । रूपातिदेश आह—पुनःप्रवृत्तिरिति । अत एव 'निन्यतु'रित्यादौ पूर्वं प्रवृत्तोऽपीयङ् द्विर्वचनकालेऽपहत इति पुनःप्रवृत्तौ प्राप्तायामनेकाच्त्वाद्यणा बाध्यत इत्यर्थः । परस्यैव लोप इति नियमः कथमत आह—अनन्त्येति । अथवेति । आद्यस्योत्तरेणाव्यवधानादिति भावः । अनर्थकत्वाच्चेत्यपि बोध्यम् ।

* अत आदेः ७ । ४ । ७० ।

**नैवं सिध्यति कस्मात्प्रत्यङ्गत्वाद्धवेद्धि पररूपम् ।**

नैवं सिध्यति । कस्मात् ? प्रत्यङ्गत्वात्पररूपं प्राप्नोति† ।

**तस्मिंश्च कृते लोपः**

पररूपे च कृते लोपः प्राप्नोति ।

**दीर्घत्वं बाधकं भवेत्तत्र ॥**

अत आदेः [ ७ । ४ । ७० ] इति दीर्घत्वं बाधकं भविष्यति ।

इदं तर्हि प्रयोजनं सार्वधातुके भूतपूर्वमात्रेऽपि यथा स्यात् । कुर्विति* ॥ ११० ॥

## श्नसोरल्लोपः ॥ ६ । ४ । १११ ॥

अथात्र तपरकरणं किमर्थम् ? इह मा भूत्—आस्ताम् आसन् ।

---

प्र०—वचनात् । अथवा क्ङित्यनन्तरस्याकारस्य लोपः । तत्र 'येन नाव्यवधान'मित्येकवर्णव्यवहितस्य लोपः । दीर्घत्वमिति । 'अत आदे'रित्यनेन ।

प्रत्यङ्गत्वादिति । वर्णाश्रयत्वात्पररूपमन्तरङ्गं तत्र कृतेऽल्लोपे च 'सतुः सु'रिति प्राप्नोति ।: दीर्घत्वमिति । येन नाप्राप्तिन्यायेन पररूपं बाधित्वा दीर्घत्वं भविष्यतीत्यर्थः । कुर्विति । अत्र 'न लुमताङ्गस्ये'ति प्रत्ययलक्षणप्रतिषेधादुत्त्वं न स्यादिति भूतपूर्वगत्यर्थात्सार्वधातुकग्रहणाद्भवति ॥ ११० ॥

श्नसो० । आस्तामिति । लङ् ताम् । अल्लोपे च कृते तस्यासिद्धत्वादाट् । नैतदस्तीति । अत्र प्रत्याख्यातं तपरकरणं परस्तात्तु ज्ञापकत्वमस्य 'वक्ष्यते—'श्नसोरत्वे तकारेण ज्ञाप्यते

---

उ०—प्रत्यङ्गत्वादित्यस्यान्तरङ्गत्वादित्यर्थ इत्याह—वर्णाश्रयत्वादिति । वार्णादाङ्गमित्यनाश्रित्येदम् । अतोऽन्तरङ्गस्य कथं बहिरङ्गं बाधकमत आह—येन नेति । ननु प्रत्ययलक्षणेन हेः परत्वसंभवे भूतपूर्वगत्याश्रयणमयुक्तमित्यत आह—अत्र नेति । न च 'सार्वधातुके' इत्यस्याभावे उकारान्ताङ्गावयवकरोतेरत उदित्यर्थेन तृज्वत्सूत्रे 'युवोरनाका'वित्यादौ च वक्ष्यमाणभाष्यरीत्याङ्गसंज्ञायाः प्रत्ययलक्षणेनाङ्गीकारेण कुर्वित्यत्र सिद्धमुत्वं सिद्धो लोपो हिलुक आभीयासिद्धत्वाच्चेति वाच्यम् । इदं तर्हीत्यादि 'कुर्वित्यन्तभाष्यस्यैकदेशयुक्तित्वात्सार्वधातुकग्रहणं स्पष्टार्थमेवेति दिक् ॥ ११० ॥

श्नसो० । तस्यासिद्धत्वादिति । न चैवं लक्ष्ये लक्षणस्येति न्यायेन पुनर्लोपाप्रवृत्त्या तपरत्वाभावेऽपि

---

† अतो गुणे ६ । १ । ९७ ।

* उतश्चप्रत्ययादसंयोगपूर्वात् ६ । ४ । १०६ । ( न लुमताङ्गस्य १ । १ । ६३ । ) ।

१–"यज् आयेजे वप् आवेपे दम्भ एत्वमलक्षणम् । श्नसोरत्वे तकारेण शाप्यते त्वेस्त्वशासनम् ।"

इति ६ । ४ । १२० भाष्यम् ।

नैतदस्ति प्रयोजनम् । आटो†ऽसिद्धत्वान्न भविष्यति ॥ १११ ॥

## इद्दरिद्रस्य ॥ ६ । ४ । ११४ ॥

### दरिद्रातेरार्धधातुके लोपः ॥ १ ॥

दरिद्रातेरार्धधातुके लोपो वक्तव्यः ।

### सिद्धश्च प्रत्ययविधौ ॥ २ ॥

स च सिद्धः प्रत्ययविधौ । किं प्रयोजनम् ? दरिद्रातीति दरिद्रः‡ । आकारान्तलक्षणः§ प्रत्ययविधिर्मा भूदिति ।

न दरिद्रायके लोपो दरिद्राणे च नेष्यते ।
दिदरिद्रासतीत्येके दिदरिद्रिषतीति वा ॥

### वाद्यतन्याम् ॥ ३ ॥

अद्यतन्यां वेति वक्तव्यम् । अदरिद्रीत् अदरिद्रासीत् ॥ ११४ ॥

प्र०—त्वेरत्वशासन'मिति ॥ १११ ॥

इद्द० । सिद्धश्चेति । 'आर्धधातुके' इति विषयसप्तमीत्यर्थः । आकारान्तलक्षण इति । 'यद्यार्धधातुके' इति परसप्तमी स्यात्तदा दरिद्रातीति दरिद्र इत्यत्र 'श्याद्व्यधे'ति णे कृते द्वयोरनित्ययोः परत्वाद्युक्स्यात् । लोपस्य शब्दान्तरप्राप्त्यानित्यत्वं युकस्तु लोपे कृतेऽप्राप्त्यानित्यत्वम् । अथाकृतिपक्षे नित्यत्वादाल्लोपस्तथाप्यदरिद्र इत्यत्रा'च्कावशक्ता'वित्यन्तोदात्तत्वं न स्यात् । ईषद्दरिद्रमिति 'आतोधु'जिति युच् प्रसज्येत । दिदरिद्रासतीति । 'तनिपतिदरिद्राणामुसंख्यान'मिति व्यवस्थितविभाषाविज्ञानाल्लोपपक्षे इडागमः । लोपाभावपक्षे त्विडभावः ॥ अदरिद्रासीदिति । 'यमरमेत्यत्र' 'एकाच' इत्यधिकारादेकाचः सगिटावित्येकीयमतमित्यनेकाचोऽपि भवतः । चिणि अदरिद्रि अदरिद्रायीति भवति ॥ ११४ ॥

उ०—न दोषः । लक्ष्यभेदात् ॥ १११ ॥

इद्द० । सौत्रो निर्देशः । द्वयोः—लोपयुकोः । शब्दान्तरेति । अकृते युक्याकारस्य, कृते यकारस्येत्यर्थः । अथाकृतीति । अत्र पक्षे व्यक्तिभेदाविवक्षणाच्छब्दान्तरप्राप्त्या नानित्यत्वम् । अचकावशक्ताविति । नञ उत्तरस्याजन्तस्य कान्तस्य चोत्तरपदस्याशक्तौ गम्यमानायामन्त उदात्त इति तदर्थः । युच् प्रसज्येतेति । खलिष्यत इति भावः । ननु लोपपक्ष इट् तदभावे नेति कुतोऽत आह—तनिपतीति । वस्तुतस्त्विट्पक्षे 'आतो लोप इटि चे'त्यालोपः । इडभावेऽनेन प्राप्तलोपस्य तु स निषेध इति व्यवस्थितविभाषात्वाङ्गीकारो वृथैवेति बोध्यम् । 'अद्यतनी'शब्देन पूर्वाचार्यप्रसिद्धया लुङुच्यते ॥ ११४ ॥

† आडजादीनाम् ६ । ४ । ७२ ।
‡ नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ३ । १ । १३४ ।
§ श्याद्व्यधास्रुसंस्रुवतीणवसावहृलिहश्लिषश्वसश्च ३ । १ । १४१, आतो युक् चिण्कृतोः ७ । ३ । ३३ ।

## अत एकहल्मध्येऽनादेशादेर्लिटि ॥ ६ । ४ । १२० ॥

### एकारषकारादेशादेरेत्ववचनं लिटि ॥ १ ॥

एकारषकारादेशादेरेत्वं लिटि वक्तव्यम् । नेमतुः नेमुः । सेहे सेहाते सेहिरे* । किं पुनः कारणं न सिध्यति ? अनादेशादेरिति प्रतिषेधः प्राप्नोति ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । लिटात्रादेशादिं विशेषयिष्यामः—लिटि य आदेशादिस्तदादेर्नेति ।

अस्त्यन्यल्लिड्ग्रहणस्य प्रयोजनम् । किम् ? इह मा भूत्—पक्ता पक्तुम् । नैतदस्ति प्रयोजनम् । क्ङितीति† वर्तते । एवमपि पक्वः पक्ववानित्यत्र प्राप्नोति । अभ्यासलोपसंनियोगेनैत्वमुच्यते न चात्राभ्यासलोपं पश्यामः । एवमपि पापच्यतेऽत्र प्राप्नोति । दीर्घत्वमत्र बाधकं भविष्यति‡ । नाप्राप्तेऽभ्यासविकार एत्वमारभ्यते तद्यथान्यानभ्यासविकारान्बाधत एवं दीर्घत्वमपि बाधेत । सत्यमेवमेतत् । अभ्यासविकारेष्वपि तु ज्येष्ठमध्यमकनीयांसः प्रकारा भवन्ति । तत्र ह्रस्वहलादिशेषावुत्सर्गौ+

---

प्र०—अत० । लिटि य आदेशादिरिति । नत्वसत्त्वयोरनैमित्तिकत्वाल्लिण्निमित्तकत्वाभावः । अभ्यासलोपसंनियोगेनेति । 'अभ्यासलोपश्चे'ति चशब्दः समुच्चये, न त्वन्वाचये । दीर्घत्वमत्रेति । 'अभ्यासविकारेषु बाधका न बाधन्ते' इत्येतत्तु यत्र सर्वेषां प्रवृत्तिस्तत्राश्रीयते । यद्यपि कृते दीर्घत्वे एत्वाभ्यासलोपप्रसङ्गस्तथाप्येत्वाभ्यासलोपयोः कृतयोर्दीर्घत्वाप्रसङ्ग इति विरुद्धत्वादबाधकत्वाभावः । नाप्राप्त इति । क्वचिद्ध्रस्वः क्वचिद्धलादिः शेषश्च प्राप्नोति । ज्येष्ठमध्यमकनीयांस इति । मध्यमापेक्षयोत्सर्गस्य प्रकर्षसद्भावात्कनीयानुत्सर्गोऽल्पतर इत्यर्थः । मध्यमौ

---

उ०—अत० । भाष्ये लिटि य इति । सौत्रत्वाच्च वृत्तिरिति भावः । समुच्चीयत इति । तस्य प्रसिद्धतरत्वादिति भावः । अन्वाचयस्तु गमके सत्येवेति तात्पर्यम् । भाष्ये दीर्घत्वमत्र बाधकमिति । परत्वादिति भावः । इत्येतत्त्विति । सर्वेषां प्रवृत्त्या यत्रोत्सर्गापवादयोरविरोधस्तत्रायं न्यायो यथा 'ननंर्ती'त्यादावुरदत्वे रुगादयः क्रियन्ते । इह तु विरोधादयं न्यायो नेति भावः । तमेव विरोधं दर्शयति—यद्यपीति । इदं चिन्त्यम् । नुकि कृतेऽजन्ताभ्यासाभावेन दीर्घाप्राप्त्या 'दीर्घोऽकित' इति धर्मिग्राहकमानविरोधान्मानादीनां दीर्घे कृते इत्वाप्राप्त्या 'मीमांसते' इति तदुदाहरणपरगुणो यङ्लुको 'मान्बधे'त्यादिसूत्रस्थभाष्यविरोधाच्च । क्वचिद्ध्रस्व तस्माज्ज्ञापकसिद्धस्यासार्वत्रिकत्वेनानित्यत्वात्तस्यात्रानाश्रयणमिति भगवतो भाष्यकारस्याभिप्रायः । इति । अभ्यासविकारेष्वेतौ द्वावुत्सर्गौ । तयोरन्येऽपवादा इति भावः । ननु विनावधिं ज्येष्ठत्वादिकं न

---

* णो नः, धात्वादेः षः सः ६ । १ । ६५; ६४ ।

† गमहनजनखनघसां लोपः क्ङित्यनङि ६ । ४ । ९८ ।

‡ दीर्घोऽकितः ७ । ४ । ८३ ।    + ह्रस्वः; हलादिः शेषः ७ । ४ । ५९; ६० ।

तयोर्दीर्घत्वमपवाद एत्त्वं च । अपवादविप्रतिषेधाद्दीर्घत्वं भविष्यति ।

इह तर्हि चभणतुः बभणुरित्यभ्यासादेशस्यासिद्धत्वादेत्त्वं प्राप्नोति† ।

**फलिभजिग्रहणं तु ज्ञापकमभ्यासादेशसिद्धत्वस्य ॥ २ ॥**

यदयं फलिभज्योर्ग्रहणं करोति‡ तज्ज्ञापयत्याचार्यः सिद्धोऽभ्यासादेश एत्त्व इति ॥ यद्येवं—

**प्रथमतृतीयादीनामादेशादित्वादेत्त्वाभावः ॥ ३ ॥**

प्रथमतृतीयादीनामपि§ तर्ह्यादेशादित्वादेत्त्वं न प्राप्नोति । पेचतुः पेचुः । देभतुः देभुः ।

**न वा शसिदद्योः प्रतिषेधो ज्ञापक रूपाभेद एत्त्वविज्ञानस्य ॥ ४ ॥**

न वैष दोषः । किं कारणम् ? शसिदद्योः प्रतिषेधो ज्ञापको रूपाभेद एत्त्वविज्ञानस्य । यदयं शसिदद्योः प्रतिषेधं शास्ति¶ तज्ज्ञापयत्याचार्यो रूपाभेदेन य आदेशादयो न तेषां प्रतिषेधो भवतीति ।

**दम्भ एत्त्वम्**

दम्भ एत्त्वं वक्तव्यम् । देभतु देभुः ॥ किं पुनः कारणं न सिध्यति ?

प्र०—यः कस्यचिद्बाधकः । कस्यचिद्बाध्यः । ज्येष्ठो—यो बाधकस्यापि बाधकः । असिद्धत्वादिति । 'पूर्वत्रासिद्ध'मिति लक्षणेना'ऽचकणतु'रित्यादावेव तु स्यात् ॥ पेचतुरिति । 'प्रकृतिचरां प्रकृतिचरः प्रकृतिजशां प्रकृतिजश' इत्यादेशादित्वम् । वचनं तु 'रेणतुर्येमतु'रित्यादौ सावकाशम् । 'अभ्यासे चर्चे'ति जश्चरोः प्राप्तयोः 'स्थानेऽन्तरतम' इति परिभाषाया व्यापारप्रदर्शनमिदं 'प्रकृतिचरां प्रकृतिचरः प्रकृतिजशां प्रकृतिजश' इति ।

उ०—संभवतीत्यत आह—मध्यमापेक्षयेति । प्रकर्षो दुर्बलत्वरूपबाध्यत्वमात्रकृतः । ज्येष्ठत्वमपि तत एवेत्याह—ज्येष्ठो य इति । तत्र दीर्घावकाशो—बाभाम्यते । एत्त्वस्य—पेचतुः । 'पापच्यते' इत्यत्रोभयप्राप्तौ दीर्घत्वेनायं विधिर्बाध्यते । नन्वनादेशादेरिति व्यर्थं स्यादत आह—चकणतुरिति । अत्र 'कुहोश्चु'रिति चुत्वं तच्च नासिद्धम् ।

रेणतुरिति । अत्र जश्त्वचर्त्वे न, झलोऽभावात् । ननु 'प्रकृतिचरा'मिति न सूत्रवार्तिकयोः पठ्यते तत्किमिदमत आह—अभ्यास इति ॥ एवं त्विति । छन्दसीत्यस्य संबन्ध इत्यर्थः । 'चेष्टा

† अभ्यासे चर्च ८ । ४ । ५४; पूर्वत्रासिद्धम् ८ । २ । १ ।
‡ तॄफलभजत्रपश्च ६ । ४ । १२२ । § अभ्यासे चर्च ८ । ४ । ५४ ।
¶ न शसददवादिगुणानाम् ६ । ४ । १२६ ।

नलोपस्यासिद्धत्वात् ॥ ५ ॥

असिद्धो नलोपस्तस्यासिद्धत्वादेत्त्वं न प्राप्नोति* ।

नशिमन्योरलिट्येत्त्वम्

नशिमन्योरलिट्येत्त्वं वक्तव्यम् ।

छन्दस्यमिपचोरपि ।

छन्दस्यमिपचोरपीति वक्तव्यम् ॥ किं प्रयोजनम् ?

अनेशं मेनकेत्येतद्व्येमानं लिङि पेचिरन् ॥ १ ॥

यज् आयेजे वप् आवेपे दम्भ एत्त्वमलक्षणम् ।

असिद्धत्वान्नलोपस्य दम्भ एत्त्वं न सिध्यति ।

श्नसोरत्त्वे तकारेण† ज्ञाप्यते त्वेत्त्वशासनम् ॥ २ ॥

अनित्योऽयं‡ विधिरिति ॥ १२० ॥

प्र०—अनेशमिति । लुङ्, मिपोऽम्भावः । पुषादित्वादङादेशः, 'छन्दसी'ति पूर्वेणापि संबन्धाद्भाषायामेत्त्वाभावः । एवं तु 'मेनके'त्यपि भाषायां न प्राप्नोति ? यदि त्विष्यते पृषोदरादित्वाद्भविष्यति । 'मनेराशिषि चे'ति वुन्प्रत्ययः । 'न यासयो'रित्यत्राशिषि चोपसंख्यानमितीत्त्वाभावः । व्येमानमिति । विपूर्वादमतेस्ताच्छील्यादिषु चानश् । छान्दसः शपो लुक् । पेचिरन्निति । पचेरन्निति प्राप्ते छान्दसे एत्वह्रस्वत्वे क्रियेते । आयेजे इति । लङ्, इट्, शप् । 'छन्दस्यपि दृश्यते' इत्याट् । दम्भ एत्त्वमलक्षणमिति । लक्षणेन न प्राप्नोति । नलोपस्यासिद्धत्वादित्यर्थः । श्नसोरत्त्व इति । असिद्धत्वस्यानित्यत्वज्ञापनाय तकारः कृतः । नित्ये ह्यसिद्धत्वे 'आस'न्नित्यादावाटोऽसिद्धत्वाल्लोपो न भविष्यतीति किं तन्निवृत्त्यर्थेन तकारेण तेनासिद्धत्वस्याभावाद्दम्भ एत्वं सिध्यतीत्यर्थः ॥ १२० ॥

उ०—'व्यनेशन्निखिलास्तदाऽस्याः' इति श्रीहर्षस्य तु प्रमादः । चानशिति । ननु शानच् । धातोः परस्मैपदित्वात् । लुक्—'बहुलं छन्दसी'त्यनेन । अत एव मुगभावः । लङिति । केचित्तु यजेराङ्पूर्वस्येदम् । अत एव 'मनुरायेजे' इत्यत्रावग्रहं कुर्वन्तीत्याहुः ॥ १२० ॥

* अनिदितां हल उपधायाः क्ङिति; असिद्धवदत्राभात् ६ । ४ । २४; २२ ।

† श्नसोरल्लोपः ६ । ४ । १११ । ‡ असिद्धवदत्राभात् ६ । ४ । २२ ।

# थलि च सेटि ॥ ६ । ४ । १२१ ॥

थल्ग्रहणं किमर्थम् ?

थल्ग्रहणमक्ङिदर्थम् ॥ १ ॥

थल्ग्रहणं क्रियतेऽक्ङिदर्थम् । अक्ङित्येत्वं यथा स्यात् । पेचिथ शेकिथ ॥ नैतदस्ति प्रयोजनम् । सेड्ग्रहणमेवात्राक्ङिदर्थं भविष्यति ॥ इदं तर्हि प्रयोजनं समुच्चयो यथा विज्ञायेत—थलि च सेटि क्ङिति च सेटीति । किं प्रयोजनम् ? पेचिव पेचिम । 'तत्र पचादिभ्य इड्वचन'मिति वक्ष्यति* तन्न वक्तव्यं भवति ।

इह कस्मान्न भवति—लुलविथ ? गुणस्यं प्रतिषेधात्[1]† । इहापि तर्हि न प्राप्नोति—

प्र०—थलि० । थल्ग्रहणमिति । क्ङिति सेटयत्त्वस्य सिद्धत्वात्सेड्ग्रहणमेवाक्ङिदर्थं भविष्यति थलेव च सेडक्ङिदिति प्रश्नः ॥ क्ङिति च सेटीति । यथा पेचिव पेचिमेति । इदं च न नियमार्थं 'सेटयेव क्ङिति' इति । नियमे हि पेचतुरित्यादौ न स्यात् । किं तर्ह्येत्त्वस्य कालावधारणं क्रियते,—यथा निष्ठायां सेटीत्यत्र । तेन पेचिवेत्यादाविटि कृते एत्त्वाभ्यासलोपौ भवतः । अन्यथैकाच इतीट्प्रतिषेधः प्रसज्येत । यदोपदेशग्रहणमनुदात्तविशेषणं नैकाज्विशेषणं तदा श्रूयमाणादेकाच इट्प्रतिषेधेन भाव्यमिति 'कृसृभृ' इति सूत्रं विध्यर्थं भवति, न तु नियमार्थम् । तत्र पचेरेत्त्वाभ्यासलोपयोः कृतयोरेकाच्त्वादिट्प्रतिषेधप्रसङ्गे 'पचादिभ्य इड्वचन'मिति वक्ष्यते । 'क्ङिति च सेटी'ति तु कालावधारणार्थे सति पूर्वमिट् ततः एत्त्वाभ्यासलोपावित्यानुपूर्व्या सिद्धं भवतीति नार्थो वचनेन ।

लुलविथेति । अवादेशे कृते एकहल्मध्यगतोऽकार इत्येत्त्वप्रसङ्गः । समुदायग्रहणे च लक्षणप्रतिपदोक्तपरिभाषोपतिष्ठते, न वर्णमात्रग्रहणे । न चायमकारो गुणशब्दाभिनिर्वृत्त इति

उ०—थलि० । ननु क्रादिसूत्रस्य नियमार्थत्वेन पेचतुरित्यादाविटः सिद्धत्वात्किमनेन वचनेनेत्यत आह—यदोपदेशग्रहणमिति । नाप्येकाच इति विहितविशेषणमित्यपि बोध्यम् । अनेनास्य ग्रन्थस्यैकदेश्युक्तिता सूचिता । एवं च थल्ग्रहणं स्पष्टार्थमिति तत्त्वम् । विध्यर्थमिति । निषेधविध्यर्थमित्यर्थः । आनुपूर्व्येति । पूर्वं द्वित्वे इट्, तत एत्त्वादीति क्रमेणेत्यर्थः । नार्थो वचनेनेति । 'पचादिभ्य इड्वचन'मित्यनेनेति भावः । नन्वस्याकारस्य लाक्षणिकत्वान्नायं दोषोऽत आह—समुदायेति । नन्वेवं सति 'ओत्' 'कृन्मेजन्त' इत्यादिसूत्रस्थभाष्यस्वग्रन्थविरोधोऽत आह—न वर्णमात्रेति । तत्रौदन्तो निपात एजन्तः कृदित्यर्थान्न वर्णमात्रग्रहणमिति भावः । तस्या अनित्यत्वादिति तत्त्वम् । ननु न 'शसदद' इत्यादिना प्रतिषेधो भविष्यतीत्यत आह—न चायमिति । तत्र गुणशब्दः स्वरूपपरः । 'गुण' इत्येवं योऽकार इति ।

* ७ । २ । ६३ वा० २ ।

† न शसददवादिगुणानाम् ६ । ४ । १२६ ।

१—'गुणस्य नेति प्रतिषेधात्' पा० ।

पेचिथ शेकिथ । गुणस्य योऽकार इत्येवमेतद्विज्ञास्यते । एवमपि शशरिथ अत्र प्राप्नोति । गुणस्यैषोऽकारः । कथम् ? वृद्धिर्भवति गुणो भवतीति रेफशिरा गुणवृद्धिसंज्ञकोऽभिनिर्वर्तते । अथवाचार्यप्रवृत्तिर्ज्ञापयति नैवंजातीयकानामेत्त्वं भवतीति यदयं तॄफलभजत्रपश्च [ ६ । ४ । १२२ ] इति तॄग्रहणं करोति ॥ १२१ ॥

## राधो हिंसायाम् ॥ ६ । ४ । १२३ ॥

### राधादिषु स्थानिनिर्देशः ॥ १ ॥

राधादिषु स्थानिनिर्देशः कर्तव्यः ॥ न कर्तव्यः । एकहलमध्य इति* वर्तते । यद्येवं त्रेसतुः त्रेसुः रशब्दस्यैत्त्वं प्राप्नोति । अस्तु । अलोऽन्त्यस्य† विधयो भवन्तीत्यकारस्य भविष्यति । अनर्थकेऽलोऽन्त्यविधिर्नेत्येवं न प्राप्नोति । नैतस्याः परिभाषायाः सन्ति प्रयोजनानि । अथवात इति* वर्तते । एवमपि राधेर्न प्राप्नोति । आकारग्रहणमपि प्रकृतमनुवर्तते । क्व प्रकृतम् ? श्नाभ्यस्तयोरातः [ ६ । ४ । ११२ ] इति । अथवा श्नसोरल्लोपः [ १११ ] इत्यत्र तपरकरणं प्रत्याख्यायते तत्प्रकृतमिहानुवर्तिष्यते । यदि तदनुवर्ततेऽत एकहल्मध्येऽनादेशादेर्लिटि [ १२० ] अस्य

प्र०—न 'शसदद' इति प्रतिषेधोऽपि नास्तीति प्रश्नः । गुणस्य योऽकार इति वैयधिकरण्येन संबन्ध आश्रीयते । 'लुलविथे'त्यादावोकारस्यावादेशविधानाद्गुणस्याकार इति प्रतिषेधः प्रवर्तते । 'पेचिथ' इत्यादौ तु गुण एवाकारो न तु गुणस्येति प्रतिषेधाभावः । एवमपीति । गुण एवात्राप्यकारो न तु गुणस्येति प्रतिषेधाप्रसङ्गः । गुणस्येति । अवयव इत्यर्थः । उः स्थानेऽण् प्रसज्यमान एव रपरो भवति पूर्वभक्तश्च रेफ इत्ययं गुणः ॥ १२१ ॥

राधो० । राधादिषु स्थानिनिर्देश इति । अलोऽन्त्यस्येति वचनादेत्त्वमन्त्यस्य प्राप्नोतीत्युपधाया इति वक्तव्यमित्यर्थः । अथवात इति । ततो ऽमादीनामेवैत्वमकारस्य

उ०—अन्यथा विधिप्रतिषेधयोरेकविषयत्वाद्विकल्पः स्यादिति भावः । वैयधिकरण्येनेति । गुणशब्दभावितसंबन्ध्यकार इत्यर्थः । अकारस्य गुणसंबन्धित्वं गुणस्थानिकावयवत्वेन बोध्यम् । व्याख्यानेन च साक्षात्परम्परया वा गुणशब्दभावितसंबन्ध्यकारग्रहणमिति भावः । अयं गुण इति । यदागमन्यायेन विशिष्ट एव गुणादिसंज्ञक इति भावः । एतच्च 'उरण्' इत्यत्रोपपादितम् । एतेन पेचिथेत्यादौ व्यपदेशिवद्भावेन गुणावयवत्वसत्त्वान्निषेधापत्तिरिति निरस्तम् । गुणशब्दभावितसंबन्धीत्यर्थकरणात् ॥ १२१ ॥

राधो । अमादीनामेवैत्वमकारस्येति । एवो भिन्नक्रमः । अकारस्यैवैत्वं नान्यस्येत्यर्थः ॥ १२३ ॥

* अत एकहल्मध्येऽनादेशादेर्लिटि ६ । ४ । १२० । † अलोऽन्त्यस्य १ । १ । ५२ ।

चेत्यवर्णमात्रस्यैत्त्वं प्राप्नोति । बबाधे । अकारेण तपरेणावर्णं विशेषयिष्यामः— अस्यात इति । इहेदानीमस्येत्यनुवर्ततेऽत इति निवृत्तम् ॥ १२३ ॥

**अर्वणस्त्रसावनञः ॥ ६ । ४ । १२७ ॥**

**मघवा बहुलम् ॥ ६ । ४ । १२८ ॥**

**अर्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि तत् ।**

अर्वणस्तृ मघोनश्च न शिष्यम् । किं कारणम् ? छान्दसं हि तत् । दृष्टानुविधिश्छन्दसि भवति ।

**मतुब्वन्योर्विधानाच्च**

मतुब्वनी खल्वपि च्छन्दसि विधीयेते* ।

**छन्दस्युभयदर्शनात् ॥**

उभयं खल्वपि च्छन्दसि दृश्यते । इमान्यर्वणः पदानि । अनर्वाणं वृषभं

प्र०—भवति । अकारेणेति । समुच्चयेऽत इत्यनर्थकं स्यादिति विशेषणविशेष्यभावाश्रयः ॥१२३॥

अर्वणस्तृ० । मघवा बहुलम् । छान्दसमिति । 'छन्दसीवनिपौ चे'ति वनिब्वस्ति, मतुप् चेति प्रत्ययद्वयेन रूपद्वयस्य सिद्धत्वान्नार्थः सूत्रद्वयेन । तत्रैतत्स्यात्सर्वत्र रूपद्वयप्रसङ्गोऽत आह—दृष्टानुविधिरिति । भाषाशब्दा अपि नियतविषयाः किं पुनश्छान्दसाः । तत्र 'ऋ' इत्यस्य विचि गुणे कृते 'अर्' इति रूपं तस्मान्मतुप्यर्वन्तावित्यादि भवति, वनिप्यर्वण इत्यादि भवति । मघशब्दादपि प्रत्ययद्वये यथाविषयं रूपद्वयं सिद्धम् । एवं चार्वच्छब्दस्य मघवच्छब्दस्य

उ०—अर्वणस्त्र० । ननु च्छान्दसत्वेन प्रत्याख्यानमयुक्तम् । छान्दसेऽपि साधुत्वान्वाख्यानस्य कर्तव्यत्वादत आह—छन्दसीति । वार्तिके 'मतुब्वन्योर्विधानाच्चे'ति चो हेताविति तात्पर्यम् । सर्वत्रेति । भाषायामपीत्यर्थः । यद्यपि भाषायामपि दृष्टमेवानुविधीयते तथापि कैमुतिकन्यायप्रदर्शनायेदमुक्तमित्याह—भाषाशब्दा अपीति । यथा वचेरन्तिपरस्य प्रयोगाभाव इति भावः । मघोन इत्यादौ 'यस्येति' लोपाभावस्तु च्छान्दसत्वाद्बोध्यः । 'श्वयुवमघोना'मिति निर्देशाद्वा । विचीति । 'अन्येभ्योऽपि दृश्यते' इति विच् । मघशब्दादपीति । मघशब्दो धननाम । अतिप्रसङ्गवारणायाह—यथाविषयमिति । भाषायां नास्ति प्रयोग इति । असिद्धवत् सूत्रेऽप्युक्तस्याव्युत्पन्नप्रातिपदिकरूपस्यापि भाषायां नास्ति प्रयोगः । नियतविषयत्वाच्छब्दानामित्यपि बोध्यम् । भाषायामपि क्वचिद्दृश्यमानप्रयोगास्त्वसाधव एव । सूत्रारम्भेऽप्यर्वन्शब्द 'इमान्यर्वण' इत्यादौ दृश्यमानत्रभावस्य च्छान्दसत्वेनैव साधनमावश्यकमिति वरं तदकरणमित्याह भाष्ये—

* ५ । २ । १०९ वा० २ पृ० १६८

मन्द्रजिह्वम्† ॥ १२७ ॥ १२८ ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठस्याध्यायस्य
चतुर्थे पादे तृतीयमाह्निकम्

## पादः पत् ॥ ६ । ४ । १३० ॥

### पाद उपधाह्रस्वत्वम् ॥ १ ॥

पाद उपधाह्रस्वत्वं वक्तव्यम् । द्विपदः पश्य ।

### आदेशे हि सर्वादेशप्रसङ्गः ॥ २ ॥

आदेशे हि सति सर्वादेशः प्रसज्येत । सर्वस्य द्विपाच्छब्दस्य त्रिपाच्छब्दस्य च पच्छब्द आदेशः प्रसज्येत येन विधिस्तदन्तस्य [ १ । १ । ७२ ] इति* ।

तत्तर्हि वक्तव्यम् ?

### न वा निर्दिश्यमानस्यादेशत्वात् ॥ ३ ॥

न वा वक्तव्यम् । किं कारणम् ? निर्दिश्यमानस्यादेशा भवन्तीत्येषा परिभाषा कर्तव्या ॥ कः पुनरत्र विशेष एषा वा परिभाषा क्रियेतोपधाह्रस्वत्वं वोच्येत ? अवश्यमेषा परिभाषा कर्तव्या । बहून्येतस्याः परिभाषायाः प्रयोजनानि । कानि ?

---

प्र०—च भाषायां नास्ति प्रयोग इत्युक्तं भवति ॥ १२७ ॥ १२८ ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे षष्ठस्याध्यायस्य
चतुर्थे पादे तृतीयमाह्निकम् ।

पादः पत् । आदेशे हीति । पादन्तस्याङ्गस्य पदादेशो विधीयमानोऽनेकाल्त्वात्सर्वादेशः प्राप्नोति ॥ न वेति । यद्यपि पाच्छब्देन तदन्तः समुदायः प्रत्याय्यते तथापि यो निर्दिश्यते यतः षष्ठी श्रूयते तस्यैव 'षष्ठी स्थानेयोगे'ति वचनादादेशो न तु प्रतीयमानस्य । यद्यप्युच्चार्य-

---

उ०—उभयं खल्वपीति । 'अनर्वाणं वृषभ'मिति तु दृष्टान्तार्थम् । मघवन्शब्दे सूत्रकृतोऽपि विकल्पस्येष्टत्वेनार्वञ्छन्दविषयकमेवोदाहरणदानमिति बोध्यम् ॥ १२७ ॥ १२८ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्योते षष्ठस्याध्यायस्य
चतुर्थे पादे तृतीयमाह्निकम् ।

पादः पत् । भाष्ये येन विधिरिति । तया परिभाषया समुदायस्य स्थानित्वादिति भावः । षष्ठी स्थान इति । इदं हि सूत्रं 'निर्दिश्यमानस्यादेशा' इत्यर्थकतया तत्रैव सूत्रे भाष्ये स्थापितम् । यद्यप्युच्चार्य-

---

† ऋ० सं० १ । १६० । ३ । * अनेकाल्शित् सर्वस्य १ । १ । ५५ ।

## प्रयोजनं सुप्तिङादेशे ॥ ४ ॥

सुप्–कुमार्याम् किशोर्याम् । खट्वायाम् मालायाम् । तस्याम् यस्याम् । आड्याट्स्याट्सु कृतेषु साड्याट्स्याट्कस्याम्प्राप्नोति† । निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति । इदमिह संप्रधार्यम्–आड्याट्स्याटः क्रियन्तामामिति किमत्र कर्तव्यम् ? परत्वादाम् । नित्या आड्याट्स्याटः । कृतेऽप्यामि प्राप्नुवन्त्यकृतेऽपि । अनित्या आड्याट्स्याटः । अन्यस्य कृत आमि प्राप्नुवन्त्यन्यस्याकृते शब्दान्तरस्य च प्राप्नुवन्तोऽनित्या भवन्ति । उभयोरनित्ययोः परत्वादाम् ।

इदं तर्हि –तस्यै यस्यै । स्याटि कृते सस्याट्कस्य स्मैभावः प्राप्नोति‡ । निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति । यस्तर्हि निर्दिश्यते तस्य कस्मान्न भवति ? स्याटा व्यवहितत्वात् । सुप् ।

प्र०—माणस्यादेशेन संबन्धाभावस्तथाप्यनुकार्यानुकरणयोर्भेदस्याविवक्षितत्वादेवमुक्तम् । तत्र यथा'ऽलोऽन्त्यस्ये'ति वचनात् 'रुहः प' इत्युक्तेरुहिहकारस्य पकारो भवत्येवं पाच्छब्दप्रत्यायिततदन्तसमुदायस्य पाच्छब्दस्य पदादेशः ।

न दोषो भवतीति । तत्रैवं वक्तव्यम्—'यो निर्दिश्यते तस्यागमैर्व्यवधानादाम् न प्राप्नोति' इति । अत एव परत्वाश्रयेणाव्यवधानं कर्तुमाह–इदमिहेति । आडादीनामवकाशः–खट्वायाः कुमार्याः सर्वस्या इति । आमोऽवकाशः कृतेष्वाडादिषु वचनाद्व्यवधानेऽपि प्रवर्तनात् । यदि तु प्राप्तेष्वाडादिष्वादेश आरभ्यत इत्युच्यते ततोऽपवादत्वादामा तेषां बाधः

उ०—माणस्येति । किं तु तत्प्रत्यायितस्यानुकार्यस्येत्यर्थः । भेदस्याविवक्षितत्वादिति । सादृश्यमूलिका च तदविवक्षेति । समुदायस्य पाच्छब्दस्येति । तदवयवस्य पाच्छब्दस्येत्यर्थः । क्वचित्तथैव पाठः ।

तत्रैवमिति । निर्दिश्यमानपरिभाषया दोषाभावे कथितेऽयमपरो दोषः प्राप्नोतीत्यर्थः । अत्रैवमिति क्वचित्पाठः । प्रतिवाद्यन्तरेणैवं वक्तव्यम् । अतः परिभाषया दोषनिरासोऽसिद्धोऽतः प्रकारान्तरेण परिहारः कथ्यत इत्याह—अत एवेति । 'कृते'ष्विति युक्तेर्न्यायविरुद्धत्वमाह–यदि त्विति । एष्टव्य इति । इष्टिरूपेण पठितव्य इत्यर्थः । अत एव 'क्रियाया'मित्यादिनिर्देशाः संगच्छन्ते । निर्दिश्यमानत्वाभावाद्विशिष्टस्य न व्यवधानात्केवलस्य नेत्येवमामो निरवकाशत्वाद्वचनसामर्थ्येन पूर्वं प्रवृत्तिस्ततः स्याडादय इति न दोषो भवतीत्यन्तभाष्यस्याशयः । इदमिहेत्यादिनैकदेशिना परत्वादामित्युक्ते परेण तस्यै इत्यादौ परिभाषा-

† आण्नद्याः; याडापः; सर्वनाम्नः स्याड्ढ्रस्वश्च; ङेराम्नद्याम्नीभ्यः ७ । ३ । ११२; ११३; ११४; ११६ । ‡ सर्वनाम्नः स्मै ७ । १ । १४ ।

तिङ्—अरुदिताम् अरुदितम् अरुदितेति । इटि कृते सेट्कस्य ताम्तम्तामादेशाः प्राप्नुवन्ति§ । निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति । इदमिह संप्रधार्यम्—इट् क्रियतां ताम्तम्ताम इति किमत्र कर्तव्यम् ? परत्वादिडागमः । अन्तरङ्गस्ताम्तम्तामः ।

इदं तर्हि—क्रियास्ताम् क्रियास्तम् क्रियास्त । यासुटि* कृते सयासुट्कस्य ताम्तम्तामः प्राप्नुवन्ति । निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति ।

ल्यब्भावे च ॥ ५ ॥

ल्यब्भावे च प्रयोजनम् । प्रकृत्य प्रहृत्य । क्त्वान्तस्य ल्यप्प्राप्नोति† । निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति ।

त्रिचतुर्युष्मदस्मत्त्यदादिविकारेषु च ॥ ६ ॥

त्रिचतुर्युष्मदस्मत्त्यदादिविकारेषु च प्रयोजनम् । अतितिस्रः अतिचतस्रः । त्रिचतुरन्तस्य तिसृचतसृभावः प्राप्नोति× । निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति ।

प्र०—प्राप्नोतीत्यागमानामादेशस्य चात्र समावेश एष्टव्यः । सेट्कस्येति । 'प्राग्लादेशेभ्यो धात्वधिकार' इत्यस्मिन्पक्षेऽवध्यनुपादानाद्व्यवधानात्तामादीनामप्रसङ्ग इति नोच्यते । अन्तरङ्गा इति । प्राग्लादेशेभ्यो धात्वधिकारात्तामादयोऽन्तरङ्गाः । क्रियास्तामिति । परत्वादन्तरङ्गत्वाद्वा यासुटि कृते तामादयः ।

क्त्वान्तस्येति । प्रत्ययग्रहणपरिभाषया धातुप्रत्ययसमुदायस्य ल्यपः प्रसङ्गः । 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहण'मित्येषा तु परिभाषा'ऽनञ्पूर्वे' इति वचनान्नोपतिष्ठते । सामान्यशब्दस्यापि ल्यपः प्रकरणाद्यपेक्षस्य विशेषावसायहेतुत्वं स्यात् । अतिस्य इति । शोभनः स्य

उ०—प्रयोजने प्रदर्शिते उभयसाधारण्येनाह—यस्तर्हीति परे । ननु निर्दिश्यमानपरिभाषाङ्गीकारेऽपि निर्दिश्यमानतसादीनामिटा व्यवधानान्न प्राप्नुवन्तीत्यत आह—प्राग्लादेशेभ्य इति । तमभिव्याप्य 'धातो'रित्यधिकारेऽपि विहितपञ्चम्याश्रयणान्न दोषः, निर्दिष्टपरिभाषानपेक्षणाच्च । तामादीनामन्तरङ्गत्वमित्यपि बोध्यम् । अन्तरङ्गत्वाद्वेति । 'आद्युदात्तश्चे'ति भाष्यरीत्या लावस्थायां यासुडिति तत्त्वमिति भावः । धातोर्विहिततसादीनामित्यर्थात्तेन व्यवधानादप्रसङ्ग इति न शङ्क्यम् ।

क्त्वान्तस्य ल्यप्प्राप्तिमुपपादयति—प्रत्ययग्रहणेति । ननु कृद्ग्रहणपरिभाषया सोपसर्गस्य समुदायस्य ल्यप्प्राप्तिर्वक्तुमुचितेत्यत आह—कृद्ग्रहणेति । गत्याद्यसमभिव्याहारे केवलस्य ग्रहणं तत्समभिव्याहारे तु तद्विशिष्टस्य ग्रहणमिति परिभाषार्थ इति भावः । वचनादिति । तत्प्रवृत्तौ हि नञ्पूर्वे प्राप्त्यभावात्तदनर्थ-

§ रुदादिभ्यः सार्वधातुके ७ । २ । ७६; तस्थस्थमिपां ताम्तम्तामः ३ । ४ । १०१ ।

* यासुट् परस्मैपदेषूदात्तो ङिच्च; किदाशिषि ३ । ४ । १०३; १०४ ।

† समासेऽनञ्पूर्वे क्त्वो ल्यप् ७ । १ । ३७ । × त्रिचतुरोः स्त्रियां तिसृचतसृ ७ । २ । ९९ ।

युष्मद् अस्मद्—अतियूयम् अतिवयम् । युष्मदस्मदन्तस्य यूयवयौ प्राप्नुतः‡। निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति ।

त्यदादिविकार—अतिस्यः उत्तमस्यः । अत्यसौ उत्तमासौ । त्यदाद्यन्तस्य त्यदादिविकाराः प्राप्नुवन्ति§ । किमन्तस्य कादेशः प्राप्नोति¶ । अतिकः परमकः । निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति ।

उदः पूर्वत्वे ॥ ७ ॥

उदः पूर्वत्वे प्रयोजनम् । उदस्थाताम् । अटि कृते साट्कस्य पूर्वसवर्णः प्राप्नोत्युदः स्थास्तम्भोरिति* । निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति । यस्तर्हि निर्दिश्यते तस्य कस्मान्न भवति ? अटा व्यवहितत्वात् ।

सा तर्ह्येषा परिभाषा कर्तव्या ? न कर्तव्या । उक्तं षष्ठी स्थानेयोगा [ १ । १ । ४९ ] इत्येतस्य योगस्य वचने प्रयोजनं षष्ठ्यन्तं स्थानेन यथा युज्येत यतः षष्ठ्यु-

प्र०—इत्युत्तरपदार्थप्रधानस्तत्पुरुषो द्रष्टव्यः । उपसर्जने तु त्यदाद्यत्वाभावः । अत्र 'पदाङ्गधिकार' इति वचनात्तदन्तस्य समुदायस्यातिशब्दतकारस्यापि 'तदोः सः सा'विति सत्वप्रसङ्गः । अत्वं 'त्वलोऽन्त्यस्ये'ति वचनादन्त्यस्यैव भवतीति तत्र विशेषाभावः । परमक इति । अनेकाल्वात्सर्वादेशः कः प्राप्नोति । ननु न सत्वविधौ 'त्यदादीना'मिति स्थानषष्ठी । का तर्हि ? 'तदो'रित्येषेति कथं सत्वमतिशब्दतकारस्य परिह्रियते । एवं तर्हि त्यदादीनां गणसंनिविष्टानां यौ

उ०—कमिति तस्या अत्राप्रवृत्तिं ज्ञापयतीत्यर्थः । अत एव तत्सूत्रे भाष्ये वक्ष्यति प्रत्ययग्रहणे यावद्ग्रहणं तावद्भवितुमर्हतीति । अत्रेदं ज्ञापकं चिन्त्यम् । गतिकारकसमभिव्याहारे तद्विशिष्टस्य ग्रहणात्तदसमभिव्याहारे नञ्पूर्वे प्राप्त्या तस्य चारितार्थ्यादित्यन्ये । नन्वेवं सर्वत्र यशब्दमात्रश्रवणेऽर्थविशेषावसायो न स्यादत आह-सामान्यशब्दस्यापीति । ननु न सत्वविधाविति । तकारदकारावेव स्थानिनौ तद्विशेषणं च त्यदादीनामिति त्यदाद्यन्ते स्थितयोरपि तदोः सत्वप्रसङ्गः परिभाषया न निवारितः । स्थानषष्ठीनिर्दिष्टविषयैव हि सा परिभाषेति शङ्कार्थः । एवं तर्हीति । परिभाषोपस्थानसामर्थ्यान्निर्दिश्यमानत्यदाद्यवयवतदोरेव सत्वमित्यर्थान्न दोष इति भावः । निर्दिश्यमानस्येत्यस्य निर्दिश्यमानं निर्दिश्यमानावयवं च षष्ठ्यन्तं स्थानेन युज्यते इत्यर्थ इति

‡ यूयवयौ जसि ७ । २ । ९३ । § तदोः सः सावनन्त्ययोः ७ । २ । १०६ ।
¶ किमः कः ७ । २ । १०३ ।

१—इदं वार्तिकं निर्णयसागरीयभाष्ये न विद्यते । एवं तत्र पठ्यते—"उदः स्थास्तम्भोः पूर्वत्वे प्रयोजनम् । उदस्थात्, उदस्थाताम् ।"

* शुक्लृल्लुङ्क्ष्वङ्क्षुदात्तः ६ । ४ । ७१; उदः स्थास्तम्भोः पूर्वस्य ८ । ४ । ६१ ।

च्चारितेति† ॥ १३० ॥

## वाह ऊठ् ॥ ६ । ४ । १३२ ॥

ऊडादिः कस्मान्न भवति । आदिष्टिद्भवतीत्यादिः प्राप्नोति‡ । संप्रसारणमित्यनेन यणः स्थानं ह्रियते§ । यद्येवं

प्र०—निर्दिश्येते तकारदकारौ तयोः सत्वविधानादतिप्रसङ्गाभावः ॥ १३० ॥

वाह० । ऊडादिरिति । यद्यपि 'च्छ्वोः शू'डित्यत्रास्य ठित्वं प्रतिपादितं तथापि यथाश्रुतं गृहीत्वा प्रश्नः । संप्रसारणमित्यनेनेति । वाक्यस्य भाविवर्णस्य वा संप्रसारणसंज्ञायां विज्ञायमानायां यणः स्थान ऊड्भवति । अथ यण आदिरूट् कस्मान्न भवति । संप्रसारणप्रदेशान्तरेषु 'यण' इति स्थानषष्ठ्याश्रयणादिहापि स्थानषष्ठ्येव युक्ता । यथोक्तं 'सप्तदशादेशाः स्थानेयोगत्वं प्रयोजयन्ती'ति । ठिद्ग्रहणं तु वृद्ध्यर्थम् । यद्येवमिति । 'प्रष्ठवाह् अस्' इति स्थिते वकारस्य संप्रसारणे पूर्वैकादेशे च कृते गुण ओकारो ण्विप्रत्ययाश्रयः । ततो 'वृद्धिरेची'ति वृद्धौ कृतायां प्रष्ठौह इत्यादि सिध्यति । अनकारान्ते चोपपदे छन्दसि ण्विनं दृश्यत इति 'शाल्यूह' इत्यादिसिद्ध्यर्थमप्यूड्विधानं नोपपद्यते । सत्यपि वा प्रयोगे वह्यर्थे वर्तमानस्योहतेः क्विपि 'शाल्यूह' इत्यादि भविष्यति । उपसर्गेऽप्युपपदे वहेर्ण्विश्छन्दसि नास्ति यतो वृद्धेर्बाधकं पररूपं प्रसज्येतेत्यूड्विधानं सार्थकं स्यात् ।

उ०—तात्पर्यम् ॥ १३० ॥

वाह ऊट् । यथाश्रुतमिति । यथाश्रुताष्टाध्यायीपाठेन टित्वेऽपि दोषो नावतरतीति प्रदर्शनार्थेति भावः । 'संप्रसारणमित्यनेन यणः स्थानं ह्रियते' इति भाष्ये पाठः । ह्रियते-प्राप्यते । 'यणः स्थाने क्रियते' इति पाठस्तु सुगम एव । अथ यण आदिरिति । एवं च संप्रसारणग्रहणानुवृत्तिष्ठित्त्वं चोभयमपि सप्रयोजनं भवतीति भावः । यथोक्तमिति । 'तिप्तस्झि'इत्यत्र तिबादयः सप्तदश 'लस्ये'त्यस्य स्थानषष्ठीत्वं प्रतिपादयन्तीति । एक इद तस्यावयवषष्ठीत्वमापादयितुं नालम् । 'त्यजेदेकं कुलस्यार्थे' इति न्यायादेवमिहापीत्यर्थः । किमर्थं तर्हि ठित्त्वमत आह—ठिद्ग्रहणं त्विति । 'एत्येधत्यूठ्'स्विति विशेषणार्थमित्यर्थः । ण्विप्रत्ययेति । वह'श्चे'ति ण्विः । छन्दसि ण्विरिति । वस्तुतस्तु 'विभाषा पूर्वाह्णे'तिसूत्रस्थभाष्यप्रामाण्याच्छन्दसीत्यत्र न संबध्यते । तस्मादनभिधानात्तद्विषये ण्विर्नेति वक्तुं युक्तम् ।

† १ । १ । ४६ वा० ४ ।   ‡ आद्यन्तौ टकितौ १ । १ । ४६ ।
§ वसोः सम्प्रसारणम् ६ । ४ । १३१; इग्यणः सम्प्रसारणम् १ । १ । ४५ ।

**वाह ऊड्वचनानर्थक्यं संप्रसारणेन कृतत्वात् ॥ १ ॥**

वाह ऊड्वचनमनर्थकम् । किं कारणम् ? संप्रसारणेन कृतत्वात् । संप्रसारणेनैव सिद्धम् । का रूपसिद्धिः ? प्रष्ठौहः पश्य ।

**गुणः प्रत्ययलक्षणत्वात् ॥ २ ॥**

प्रत्ययलक्षणेन गुणो* भविष्यति ।

**एज्ग्रहणाद्वृद्धिः ॥ ३ ॥**

एज्ग्रहणाद्वृद्धिर्भविष्यति† ।

एवं तर्हि सिद्धे सति यद्वाह ऊठं शास्ति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषासिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षण इति । किमेतस्य ज्ञापने प्रयोजनम् ? पचावेदम् पचामेदम् । असिद्धत्वाद्बहिरङ्गलक्षणस्याद्गुणस्यान्तरङ्गलक्षणमैत्वं न भवतीति‡ ॥ १३२ ॥

## श्वयुवमघोनामतद्धिते ॥ ६ । ४ । १३३ ॥

**श्वादीनां प्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थम् ॥ १ ॥**

श्वादीनां संप्रसारणे नकारान्तग्रहणं कर्तव्यम् । किं प्रयोजनम् ? अनकारान्तप्रतिषेधार्थम् । अनकारान्तस्य मा भूत् । मघवता मघवते ।

प्र०—एवं तर्हीति । संप्रसारणं यजादिप्रत्ययनिमित्तभसंज्ञाश्रयत्वाद्बहिरङ्गमन्तरङ्गे गुणाश्रये कर्तव्येऽसिद्धमिति गुणो न स्यात्तदभावे रूपं न सिध्येदित्यूड्विधानमसिद्धपरिभाषां ज्ञापयति । ननु नैतज्ज्ञापकसाध्यम्, लोकतः सिद्धत्वात् । प्रत्यङ्गवर्ती हि लोकः । नैतदस्ति । यत्र युगपदन्तरङ्गबहिरङ्गयोः प्राप्तिस्तत्र लौकिकन्यायाश्रयणाद्भवत्वन्तरङ्गम् । इह तु बहिरङ्गनिमित्तमन्तरङ्गमिति लौकिकन्यायानवतारः ॥ १३२ ॥

श्वयुव० । श्वादीनामिति । 'मघवा बहुल'मिति त्रादेशे कृते एकदेशविकृतस्यानन्यत्वा-

उ०—प्रत्यङ्गवर्तीति । तथा चा'ऽचः परस्मि'न्नित्यत्र भाष्ये उक्तम्—'पुरुषोऽयं प्रातरुत्थाय प्रथमं शरीरकार्याणि करोति ततः सुहृदां ततः संबन्धिना'मिति । इह त्विति । यथा पचावेद'मित्यत्रोभयोरेकप्रत्ययनिमित्ताङ्गकार्यत्वाभावादङ्गवृत्तपरिभाषाया नात्र विषयः । तस्या अभावाच्च ॥ १३२ ॥

श्वयुव० । भाष्ये 'नकारान्तग्रहणं कर्तव्यमुक्तं वे'ति वार्तिकम् । तत्रोक्तं वेत्यंशमवतारयति—

* पुगन्तलघूपधस्य च ७ । ३ । ८६ † वृद्धिरेचि ६ । १ । ८८

‡ आद् गुणः ६ । १ । ८७; एत ऐ ३ । ४ । ९३

तथा प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीति यथेह भवति यूनः पश्येत्येवं युवतीः पश्येत्यत्रापि स्यादिति ।

यत्तावदुच्यते नकारान्तग्रहणं कर्तव्यमिति न कर्तव्यम् ।

**उक्तं वा ॥ २ ॥**

किमुक्तम् ? 'अर्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि त'दिति* ।

यदप्युच्यते तथा प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीति यथेह भवति यूनः पश्येत्येवं युवतीः पश्येत्यत्रापि स्यादिति लिङ्गविशिष्टग्रहणे चोक्तम् । किमुक्तम् ? 'न वा विभक्तौ लिङ्गविशिष्टाग्रहणा'दिति† ।

अथवोपरिष्टाद्योगविभागः करिष्यते‡ । श्वयुवमघोनामद्धिते । ततोऽल्लोपः । अकारस्य च लोपो भवति । ततोऽनः । अन इत्युभयोः शेषः ॥ १३३ ॥

प्र०—मघवतेत्यादौ संप्रसारणप्रसङ्गः । अर्वणस्त्रिति । मघवच्छब्दो मतुबन्त इत्यर्थः । न वा विभक्ताविति । यद्यपि विभक्तिमाश्रित्य संप्रसारणं न विधीयते तथापि विभक्तौ विधीयत इति लिङ्गविशिष्टपरिभाषानुपस्थानम् । अन इत्युभयोः शेष इति । समुदायापेक्षणात् । न च आदेशे कृतेऽनन्तत्वमस्ति । एकदेशविकृतस्यानन्यत्वेनाप्यनन्तत्वं नास्ति । सामान्यातिदेशे विशेषानतिदेशात् । युवतिशब्दोऽप्यनन्तो न भवतीति तस्यापि संप्रसारणाभावः ॥ १३३ ॥

उ०—यत्तावदिति । 'प्रातिपदिकग्रहणे' इत्यादिना नग्रहणस्य फलान्तरमुक्तम् । छान्दसमिति । अत एव वनिबन्ते संप्रसारणे 'यस्येति' लोपाभावः । तत एव तान्ते संप्रसारणाभावोऽपीत्यर्थः । युक्त्यन्तरमप्याह—मतुबन्त इति । ततश्च शब्दान्तरत्वात्संप्रसारणाभाव इत्यर्थः । तथापि विभक्ताविति । भस्य विधानाद्भत्वं च विभक्तौ परत इति यथाकथंचिद्विभक्तौ विधानेऽपि परिभाषानिषेधाङ्गीकारादित्यर्थः । नन्वनन्तरस्येति न्यायादनन्तरस्यैव शेषो न्याय्योऽत आह—समुदायेति । लक्ष्यानुरोधादिति भावः । सामान्यातिदेश इति । अनन्तत्वं हि मघवच्छब्दस्य विशेषधर्मः, 'मघवते'त्यादावभावादिति भावः । यस्य स आदेशस्तत्त्वेन तद्ग्रहणं न्याय्यम् । आदेशश्चायं नस्य मघवच्छब्दस्य वा न त्वनः । छिन्नपुच्छदृष्टान्तमूलको लौकिकन्यायोऽप्यत्र नास्ति । अर्धविकारेण प्रत्यभिज्ञानाभावादिति तात्पर्यम् । आभीयासिद्धत्वं त्वेतत्सूत्रविषये न, अनित्यत्वात् । अन्यथा 'मघवत' इत्यसिद्धिरिति बोध्यम् ॥ १३३ ॥

* ६ । ४ । १२७ श्लो० वा० पृ० ७७२ † ७ । १ । १ वा० १३

‡ अल्लोपोऽनः ६ । ४ । १३४

## षपूर्वहन्धृतराज्ञामणि ॥ ६ । ४ । १३५ ॥

अथ किमिदं षपूर्वादीनां पुनर्वचनमल्लोपार्थमाहोस्विन्नियमार्थम् । कथं चाल्लोपार्थं स्यात्कथं वा नियमार्थम् ? यद्यविशेषेणाल्लोपटिलोपयोः स प्रकृतिभावस्ततोऽल्लोपार्थम्* । अथ ह्यणि टिलोपस्यैव प्रकृतिभावस्ततो नियमार्थम् । अत उत्तरं पठति—

**षपूर्वादीनां पुनर्वचनमल्लोपार्थम् ॥ १ ॥**

षपूर्वादीनां पुनर्वचनं क्रियतेऽल्लोपार्थम् । अविशेषेणाल्लोपटिलोपयोः प्रकृतिभावः ।

**अवधारणे ह्यन्यत्र प्रकृतिभाव उपधालोपप्रसङ्गः ॥ १ ॥**

अवधारणे हि सत्यन्यत्र प्रकृतिभाव उपधालोपः प्रसज्येत । कथम् ? यदि तावदेवं नियमः स्यात्षपूर्वादीनामेवाणीति भवेदिह नियमान्न स्यात् सामनः वैमन इति, ताक्ष्णय इति प्राप्नोति । अथाप्येवं नियमः स्यात्षपूर्वादीनामण्येवेत्येवमपि भवेदिह नियमान्न स्यात् ताक्ष्णय इति, सामनः वैमन इति तु प्राप्नोति । अथाप्युभयतो नियमः स्यात्षपूर्वादीनामेवाण्यण्येव षपूर्वादीनामित्येवमपि सामन्यः वेमन्य इति प्राप्नोति । तस्मात्सुष्ठूच्यते षपूर्वादीनां पुनर्वचनमल्लोपार्थमवधारणे

षपूर्व० । अथेति । किमिदं विध्यर्थमथ नियमार्थमिति प्रश्नः । यद्यविशेषेणेति । 'प्रकृत्यैका'जित्यादिः प्रकृतिभावः प्राकरणिकविध्यपेक्षो न तु वृद्धिगुणापेक्षः । तत्र प्राकरणिकानि कार्याणि भेदेनापेक्ष्येरन्नभेदेन वेति पक्षद्वयोपपत्तिः ॥ अविशेषेणेति । अल्लोपटिलोपसमुदायमपेक्ष्य प्रकृतिभावो विधीयते । ताक्ष्णय इति । तक्ष्णोऽपत्यमिति 'सेनान्तलक्षणे'ति ण्यः । 'ये चाभावकर्मणो'रिति प्रकृतिभावाट्टिलोपाभावः । अस्मान्नियमादल्लोपाभावः । सामन इति । 'सास्य देवते'त्यण् । अत्र 'अन्' इति प्रकृतिभावाट्टिलोपाभावेऽल्लोपप्रसङ्गः । अथापीति । तन्त्रस्या

उ०—षपूर्व० । न तु वृद्धीत्यादि । तेन 'सांराविणं' 'सांकौटिन'मित्यादौ गुणवृद्धयोः इन्नन्तस्य विधीयमानप्रकृतिभावेन न निवृत्तिः । एतत्प्रकरणस्थत्वाभावादिति भावः । भेदेनेत्यादि । भेदेनापेक्षायामनन्तरस्येति न्यायाट्टिलोपस्यैव प्रकृतिभाव इति पक्षः । तत्राद्ये नियमार्थम्, द्वितीये विध्यर्थम् । अल्लोपटिलोपेति । अत एव 'नैका'जिति नासूत्रीति भावः । ततश्चाल्लोपस्यापि प्रकृतिभावादप्राप्तावनेन विधिरिति तात्पर्यम् । भाष्ये—अन्यत्र प्रकृतिभाव इति । एतदतिरिक्ते प्रकृतिभावविषय इत्यर्थः । सेनान्तेति । कारिलक्षणो ण्य इत्यर्थः । कथं पुनरेकेन वाक्येन नियमद्वयलाभोऽत आह—तन्त्रेति । अत्र प्रयोक्तुरत-

१—क्वचिन्न । * अल्लोपोऽनः; नस्तद्धिते; अन् ६ । ४ । १३४; १४४; १६७

ह्यन्यत्र प्रकृतिभाव उपधालोपप्रसङ्ग इति ॥ १३५ ॥

## आतो धातोः ॥ ६ । ४ । १४० ॥

### आतोऽनापः ॥ १ ॥

आतोऽनाप इति वक्तव्यम् । इहापि यथा स्यात्—समासेऽनञ्पूर्वे क्त्वो ल्यप् [ ७ । १ । ३७ ] इति । अनाप इति किमर्थम् ? खट्वायाम् मालायाम् ।

यद्यनाप इत्युच्यते कथं क्त्वायाम् ? निपातनादेतत्सिद्धम् । किं निपातनम् ? 'क्त्वायां वा प्रतिषेध' इति* ।

यद्येवं नार्थोऽनाप इत्यनेन । कथं समासेऽनञ्पूर्वे क्त्वो ल्यबिति । निपातनादेतत्सिद्धम् । कथं हलः श्नः शानज्झौ [ ३ । १ । ८३ ] इति । एतदपि निपातनात्सिद्धम् ।

अथवा योगविभागः करिष्यते । आतः । आकारलोपो भवति । ततो धातोः । धातोश्चाकारस्य लोपो भवतीति ॥ १४० ॥

प्र०—वृत्तेर्वाश्रयणात् । सामन्य इति । 'तत्र साधु'रिति यत् ॥ १३५ ॥

आतो० । समास इति । ननु सौत्रोऽयं निर्देश इति किं तदर्थेन योगविभागेन । एवं तर्हि यदा वैयाकरणा अनुकरणशब्दैर्व्यवहरन्ति तदर्थो योगविभागः । ते हि साधुभिर्व्यवहरमाणा अभ्युदयभाजो भवन्ति ॥ क्त्वायामिति । निपातनाल्लोपाभावः, याडागमश्च । सामान्यापेक्षं च निपातनं न सप्तम्यपेक्षमिति कृत्वा 'क्त्वाया' इत्यपि भवति । ततो धातोरिति । इदं नित्यार्थं सत्पूर्वेण विकल्पं ज्ञापयति । सा च व्यवस्थितविभाषेति—आबन्तस्याल्लोपाभावोऽन्यस्य यथा प्रयोगं विकल्पः । केचित्स्त्रीलिङ्गपुंलिङ्गाश्रयं क्त्वायाः क्त्व इत्यादि रूपद्वयं व्याचक्षते ॥ १४० ॥

उ०—न्त्रेण प्रयोगः । बोद्धुरावृत्त्या बोधो वाशब्दश्चार्थे इति बोध्यम् ॥ १३५ ॥

आतो धातोः । वैयाकरणा इति । सूत्रकारादिभ्योऽन्य इत्यर्थः । साधुभिरिति । शास्त्रानुगमेनैव हि साधुत्वमिति भावः । अत्रानाप इति वार्तिककारोक्तेस्तस्य च 'क्त्वो ल्य'बिति सौत्रप्रयोगे एव च भगवतोदाहरणदानात्, तदनुकरण एव च कैयटेनोदाहरणदानादाकारान्तधातुप्रकृतिकातिरिक्ताकारान्तप्रातिपदिकाभाव इति लभ्यते । धातुग्रहणव्यावर्त्यं क्वावन्ता एवेति बोध्यम् ॥ याडागमश्चेति । सोऽपि 'याडाप' इति वचनान्न प्राप्नोतीति भावः । नन्वात इत्यनेनैव सिद्धे 'धातोरिति व्यर्थमत आह—नित्यार्थं सदिति । इदं पूर्वस्य क्वाचित्कत्वं ज्ञापयतीति वक्तुं युक्तम् । यथाप्रयोगमिति । आबन्तप्रकृतिकाचारक्विबन्तप्रकृतिककर्तृक्विबन्ता न सन्त्येव । अनभिधानादिति भावः । विकल्प इति । क्त्वाश्राविषयमेतत् । स्त्रीलिङ्गेति । क्त्वायां श्रुताविति स्त्रीलिङ्गस्य विशेष्यत्वेऽजादित्वाट्टाबिति भावः ॥ १४० ॥

* ६ । २ । २ वा० ४

## मन्त्रेष्वाङ्यादेरात्मनः ॥ ६ । ४ । १४१ ॥

### मन्त्रेष्वात्मनः प्रत्ययमात्रप्रसङ्गः ॥ १ ॥

मन्त्रेष्वात्मनः प्रत्ययमात्रे लोपः प्रसङ्क्तव्यः । इहापि यथा स्यात्—त्मन्या समञ्जन्† । त्मनोरन्तरस्थ इति ।

यदि प्रत्ययमात्रे लोप उच्यते कथमात्मन एव निर्मिमीष्वेति । तस्मान्नार्थः प्रत्ययमात्रे लोपेन । कथं त्मन्या समञ्जन्, त्मनोरन्तरस्थ इति । छान्दसत्वात्सिद्धम् । छान्दसमेतत् । दृष्टानुविधिश्छन्दसि भवति ।

### आदिग्रहणानर्थक्यं चाकारप्रकरणात् ॥ २ ॥

आदिग्रहणं चानर्थकम् । किं कारणम् ? आकारप्रकरणात् । आत इति* वर्तते ॥ १४१ ॥

## ति विंशतेर्डिति ॥ ६ । ४ । १४२ ॥

तिग्रहणं किमर्थं न विंशतेर्डिति लोप इत्येवोच्येत ? नैवं शक्यम् । विंशतेर्डिति लोप इतीयत्युच्यमानेऽन्त्यस्य प्रसज्येत× । सिद्धोऽन्त्यस्य यस्येति‡ लोपे-

प्र०—मन्त्रे० । आङिति पूर्वाचार्यप्रक्रियया तृतीयैकवचनग्रहणादव्याप्तिं मत्वाह—मन्त्रेष्विति । त्मन्येति । सप्तम्येकवचनस्य स्थाने याशब्द आदेशः । छान्दसत्वादिति । यथा 'शिवा रुद्रस्ये'ति प्राप्ते 'शिवा उद्रस्ये'ति रेफलोपः । एवमिहाकारलोपः । एवं च ब्रुवता सूत्रमेव प्रत्याख्यातम् । सति त्वारम्भे नार्थ आदिग्रहणेन । 'आतो धातो'रित्यत 'आत' इत्यनुवर्तनात् ॥ १४१ ॥

ति विं० । कुतो नु खल्विति । वचनसामर्थ्यादलोऽन्त्यपरिभाषाया अनुपस्थानात्समुदायस्यैव षष्ठीनिर्देशाल्लोपः प्रसज्येत न त्वसंशब्दितस्य तिशब्दस्य । तिग्रहणे तु सति तेर्लोपो भवति । निर्दिश्यमानस्यादेशा भवन्तीति । नानेन परिभाषाया व्यापारः कथ्यते । न हि

उ०—मन्त्रेष्वाङ्यादेः । ननु च्छान्दसत्वेऽपि लक्षणाभावे कथं साधुत्वमत आह—यथेति । उद्रस्येत्यादिवदस्यापि साधुत्वमिति भावः ॥ १४१ ॥

ति विंशतेः । न त्वसंशब्दितस्येति । शब्देन साक्षादनिर्दिष्टस्येत्यर्थः । भाष्ये—निर्दिश्यमानस्येति । द्वयोर्दशतोर्विन् आदेशः शतिश्च प्रत्यय इति पक्षेऽनर्थकत्वा'दलोऽन्त्यस्ये'त्यस्याप्राप्तावनया

† यजु० २० । ४५; मै० सं० ३ । ११ । १; का० सं० ३८ । ६
* आतो धातोः ६ । ४ । १४०
× अलोऽन्त्यस्य १ । १ । ५२
‡ यस्येति च ६ । ४ । १४८

नैव, तत्रारम्भसामर्थ्यात्तिशब्दस्य भविष्यति । कुतो नु खल्वेतदनन्त्यार्थ आरम्भे तिशब्दस्य भविष्यति न पुनरङ्गस्येति । तस्मात्तिग्रहणं कर्तव्यम् ।

अथ क्रियमाणेऽपि तिग्रहणेऽन्त्यस्य कस्मान्न भवति ? निर्दिश्यमानस्यादेशा भवन्तीत्येवं न भविष्यति ॥ १४२ ॥

## टेः ६ । ४ । १४३ ॥

अभस्योपसंख्यानं कर्तव्यम् । इहापि यथा स्यात्—उपसरजः मन्दुरज इति§ । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । कथमुपसरजः मन्दुरज इति ?

[1]डित्यभस्याप्यनुबन्धकरणसामर्थ्यात् ॥ १ ॥

अभस्याप्यनुबन्धकरणसामर्थ्याद्भविष्यति ॥ १४३ ॥

## नस्तद्धिते ॥ ६ । ४ । १४४ ॥

नकारान्तस्य टिलोपे सब्रह्मचारिपीठसर्पिकलापिकुथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसंख्यानम् ॥ १ ॥

नकारान्तस्य टिलोपे सब्रह्मचारिन् पीठसर्पिन् कलापिन् कुथुमिन् तैतिलिन्

प्र०—निर्दिश्यमानपरिभाषा 'अलोऽन्त्यस्यादेः परस्ये'त्येतयोर्बाधिका, एतयोर्निर्विषयत्वप्रसङ्गात् । तस्मात्तिग्रहणसामर्थ्या'दलोऽन्त्यस्ये'त्यस्यानुपस्थाने सर्वस्य तेर्लोपो भवतीत्ययमस्य भाष्यस्यार्थः ॥ १४२ ॥

टेः । डित्यभस्यापीति । 'चुटू' इति वचनादित्संज्ञा तावड्डकारस्य प्रवर्तते । 'दीर्घकाशतुषभ्राष्ट्रवटं जे' इति निर्देशात् । ततश्चानुबन्धकरणसामर्थ्याद्धस्येति प्रकरणमिह बाध्यते ॥ १४३ ॥

नस्तद्धिते । नकारान्तस्येति । 'इनण्यनपत्ये,' 'अ'न्निति च प्रकृतिभावे प्राप्ते वचनम् । सब्रह्मचारिण इमे इति 'तस्येद'मित्यण् । पीठेन सर्पतीति पीठसर्पी, पूर्ववदण् । कलापिना

उ०—परिभाषया सर्वस्येत्यर्थः । अव्युत्पन्नप्रातिपदिकपक्षेऽप्यनर्थकत्वमेव । व्युत्पन्नत्वपक्षेऽपि शुद्धरूदत्वादनर्थकत्वमेवेत्यन्ये ॥ १४२ ॥

टेः । ननु श्रवणार्थो डकारः स्यादत आह—चुटू इतीति । इत्संज्ञाशास्त्रबाधे मानाभावेनानुपजातविरोधन्यायेन पूर्वमित्त्वं प्रवर्तत इति भावः । अत्रैवार्थे लिङ्गमप्याह—दीर्घकाशेति । बाध्यत इति । सिद्धेन प्रकरणबाधस्यौचित्यादिति भावः । अत्रापि पूर्वोक्तं लिङ्गं बोध्यम् ॥ १४३ ॥

नस्तद्धिते । ततोऽध्येत्रिति । 'छन्दोब्राह्मणानी'ति तद्विषयता । ननु प्रोक्ताण्ण सिद्धे किमुपचा-

§ सप्तम्यां जनेर्डः ३ । २ । ९७

१–निर्णयसागरीये भाष्य इदं नास्ति ।

जाजलिन् लाङ्गलिन् शिलालिन् शिखण्डिन् सूकरसद्मन् सुपर्वन्नित्येतेषामुपसंख्यानं कर्तव्यम्*। सब्रह्मचारिन्—साब्रह्मचाराः। सब्रह्मचारिन्[1]। पीठसर्पिन्—पैठसर्पाः। पीठसर्पिन्। कलापिन्—कालापाः। कलापिन्। कुथुमिन्—कौथुमाः। कुथुमिन्। तैतिलिन्—तैतिलाः। तैतिलिन्। जाजलिन्—जाजलाः। जाजलिन्। लाङ्गलिन्—लाङ्गलाः। लाङ्गलिन्। शिलालिन्—शैलालाः। शिलालिन्। शिखण्डिन्—शैखण्डाः। शिखण्डिन्। सूकरसद्मन्—सौकरसद्माः। सूकरसद्मन्। सुपर्वन्—सौपर्वाः। सुपर्वन्।

चर्मणः[2] कोशे ॥ २ ॥

चर्मणः कोश उपसंख्यानं कर्तव्यम्। चार्मः कोशः।

अश्मनो[2] विकारे ॥ ३ ॥

अश्मनो विकार उपसंख्यानं कर्तव्यम्। अश्मनो विकार आश्मः।

शुनः[2] संकोचे ॥ ४ ॥

शौवः संकोचः।

प्र०—प्रोक्तमधीयते कालापाः। 'कलापिनोऽ'ण्णित्यण्। ततोऽध्येतृवेदित्रोरणः 'प्रोक्ताल्लु'गिति लुक्। कुथुमिना प्रोक्तमधीयते, 'तेन प्रोक्त'मित्यण् पूर्ववत्। द्वितीयस्याणो लुक्। तैतिलिजाजलिलाङ्गलिप्रोक्तमध्ययनं साहचर्यात्तैतिल्यादिशब्दैरुच्यते। तेभ्य'स्तदधीते तद्वेदे'त्यण्प्रत्ययः। 'तेन प्रोक्त'मित्यत्र तु शैषिकेऽर्थे 'वृद्धाच्छ' इति च्छः प्रसज्येत। केचित्तु तितिलिशब्दमत्राधीयते। चार्म इति। 'तस्य विकार' इत्यण्। शौव इति। 'तस्येद'मित्यण्। 'स्वे ग्रामजनपदमनुष्येभ्य' इत्येतत्तु प्रत्याख्यातम्। अत्र परत्वाद्वृद्धौ प्राप्तायां 'द्वारादीनां चे'ति तत्प्रतिषेधे ऐजागमे च कृते टिलोपः क्रियते। संकोचादन्यत्र शौवन इति। विकारावयवयोस्तु प्राण्यत्रि प्रकृतिभावाभावाच्छौव इत्येव भवति।

उ०—राश्रयणेनेत्यत आह—तेन प्रोक्तमित्यत्र स्विति। तस्मिञ्शैषिकेऽर्थे वेत्यर्थः। अत्र तैतिलित्वेनैवाध्ययनबोध इति बोध्यम्। चार्म इति। कोशोऽत्र शस्त्रादिस्थापनार्थश्चर्ममयो भाषायां 'म्यान' इति प्रसिद्धः। ननु 'तस्येद'मित्यत्र स्वे ग्रामेत्यादिपरिगणनाच्छ्रुवन्—शब्दात्संकोचेऽण् दुर्लभोऽत आह—स्वे ग्रामेत्यादि। 'स्वेऽर्थे एव' ग्रामादिवाचकेभ्य एव चे'ति द्विविधो नियमस्तदर्थ इति भावः। नन्वत्र टिलोपे वृद्धिविषयाभावेन तन्निषेधसंनियोगशिष्ट ऐज् न स्यादत आह—अत्र परत्वादिति। संकोचादन्यत्र सर्वत्र शौवन इत्येवेति न बोद्धव्यमित्याह—विकारेत्यादि। इदं तु वचनमणि प्रकृतिभावे प्राप्ते संकोचे

* इनण्यनपत्ये; अ० ६। ४। १६४; १६७

१—"सब्रह्मचारिण इमे—साब्रह्मचाराः।" पा०

२-वार्तिकं क्वचिन्न।

अव्ययानां च

अव्ययानां चोपसंख्यानं कर्तव्यम् । किं प्रयोजनम् ?

सायंप्रातिकाद्यर्थम् ॥ ५ ॥

सायंप्रातिकः पौनः पुनिकः ।

शाश्वतिके प्रतिषेधो वक्तव्यः । न वक्तव्यः । निपातनादेतत्सिद्धम् । किं निपातनम् ? येषां च विरोधः शाश्वतिक [ २ । ४ । ९ ] इति । एवं तर्हि शाश्वते प्रतिषेधो वक्तव्यः । शाश्वतम् ॥ १४४ ॥

यस्येति च ॥ ६ । ४ । १४८ ॥

इवर्णान्तस्येति किमुदाहरणम् ? हे दाक्षि दाक्ष्या दाक्षेयः । हे दाक्षि इति— यदि लोपो न स्यात्परस्य ह्रस्वत्वे कृते सवर्णदीर्घत्वं प्रसज्येत । दाक्ष्या इति—

प्र०—सायंप्रातिक इति । सायंप्रातःशब्दाद्द्वन्द्वात्कालाट्ठञिति ठञ्प्रत्ययः । यथाकथंचित्कालशब्दादपि ठञ् भवतीति कालसमुदायवाचिनोऽपि ठञ् भवति । पौनःपुनिक इति । पूर्ववट्ठञ् । आदिशब्दः प्रकारे । टिलोपदर्शनेन च सादृश्यमाश्रीयत इत्यारातीयः शाश्वतिक इत्यत्र च टिलोपाभावः । निपातनादिति । अत एव निपातना'त्तान्ता'दिति कादेशाभावः । शाश्वतमिति । भाष्यकारवचनप्रामाण्यादण्प्रत्ययः ॥ १४४ ॥

यस्येति च । सवर्णदीर्घत्वे लोपे वा नास्ति विशेष इति मत्वा पृच्छति—इवर्णस्येति । हे दाक्षीति । दाक्षिशब्दा'दितो मनुष्यजाते'रिति ङीषि कृते तस्य संबुद्धौ ह्रस्वे कृते सवर्णदीर्घत्वे सति सवर्णदीर्घस्य श्रवणप्रसङ्गः । ननु चान्तरङ्गत्वात्सवर्णदीर्घत्वे कृते ह्रस्वो भविष्यति । एवं तर्हि 'वार्णादाङ्गं बलीय' इति ह्रस्वत्वं मन्यते । 'दाक्षि ई आ' इति स्थिते शब्दपरविप्रतिषेधात्परस्य यणादेशे कृते पूर्वस्य श्रवणप्रसङ्गः । सवर्णदीर्घस्यापूर्वविधित्वात्तत्र कर्तव्ये परयणा-

उ०—टिलोपविध्यर्थमिति भावः । ननु कालसमुदायवाचकस्य कथं कालवाचकत्वमत आह—यथाकथंचिदिति । सायंप्रातिकादिगणपाठाभावादादिशब्दार्थमाह—आदिशब्द इति । ठञा बाधादण् दुर्लभोऽत आह—भाष्यकारेति । तत्प्रामाण्यात्संधिवेलादिगणे 'शश्वतो वे'ति पाठानुमानमिति भावः ॥ १४४ ॥

यस्येति च । ह्रस्वे कृत इति । 'दाक्षि-ई-सु' इति स्थिते शब्दपरविप्रतिषेधेन दीर्घात्पूर्वं ह्रस्वत्वं ततो दीर्घ इत्याशय इति भावः । ननु चान्तरङ्गेति । अग्रे भाष्ये एवास्य वक्ष्यमाणत्वात्तद्दशानेनैवास्य ग्रन्थस्य प्रवृत्तेः शङ्केयं निर्दला । ननु यणादेशस्य स्थानिवत्त्वात्सवर्णदीर्घे कथं पूर्वस्य श्रवणप्रसङ्गोऽत आह—अपूर्वविधित्वादिति । किं तु पूर्वपराश्रय इति भावः । ननु पूर्वस्य यणि कार्ये स्थानिवत्त्वप्रवृत्त्या रूपं सिद्धमत आह—यणादेशेऽपीति । वर ई इति । इदमप्यत्रत्यपूर्वपक्षभाष्याशय-

१—क्वचिदिदं वार्तिकं भाष्यं चैकत्रैव मुद्रितमुपलभ्यते ।

यदि लोपो न स्यात्परस्य यणादेशे कृते पूर्वस्य श्रवणं प्रसज्येत। दाक्षेय इति— यदि लोपो न स्यात्परस्य लोपे कृते पूर्वस्य श्रवणं प्रसज्येत।

नैतानि सन्ति प्रयोजनानि। सवर्णदीर्घत्वेनाप्येतानि सिद्धानि।

इदं तर्हि—अतिसखेरागच्छति। अतिसखेः स्वम्। यदि लोपो न स्यादुपसर्जनह्रस्वत्वे कृतेऽसखीति प्रतिषेधः प्रसज्येत† ।

प्र०—देशस्य नास्ति स्थानिवत्त्वम्। यणादेशेऽपि कर्तव्ये 'वर ई' इतीकारप्रश्लेषादीविधिं प्रति स्थानिवत्वप्रतिषेधः। 'दाक्षि ई' इति स्थिते 'स्त्रीभ्यो ढ'गिति ढकि कृते परस्य लोपे कृते पूर्वस्य श्रवणप्रसङ्गः। परलोपस्य स्थानिवद्भावात्तद्धितनिमित्तस्य लोपस्याप्रसङ्गात्। नैतानीति। यत्राङ्गवार्णयोर्युगपत्प्रसङ्गस्तत्र 'वार्णादाङ्गं बलीयो भवती'ति भावः। यण्ढकौ त्वाङ्गात्रेव न भवतः।

इदं तर्हीति। सखिशब्दात्'सख्यशिश्वीति भाषाया'मिति ङीषि कृते सखीमतिक्रान्त इति प्रादिसमासे कृते लिङ्गविशिष्टपरिभाषाया अनित्यत्वादसति टचि 'गोस्त्रियो'रिति ह्रस्वः। तत्रासतीकारलोपे एकादेशस्य पूर्वं प्रत्यन्तवद्भावाद्घिसंज्ञाप्रतिषेधः स्यात्। प्रसज्यप्रतिषेधे चायं दोषो न तु पर्युदासे, तदन्तस्य सखिशब्दादन्यत्वात्संज्ञायाः सिद्धत्वात्। ङीषि तु लोपे कृते ह्रस्वत्वे लाक्षणिकत्वात्सखिरूपस्य घिसंज्ञायाः प्रतिषेधाभावः।

उ०—वर्णनमात्रम्, न स्वयं सिद्धान्तः, फलाभावात्। पद्व्या अपत्यं पाद्वेय इत्याद्यसिद्धयापत्तेश्च। 'पद्व्या मृद्व्ये'त्यस्य मूर्धाभिषिक्तोदाहरणत्वपर 'अचः परस्मि'न्निति सूत्रस्थभाष्यविरोधापत्तेश्चेति निरूपितमन्यत्र। यत्राङ्गेति। 'अन्तरङ्गं बलीय' इत्येतदपवादस्येति भावः। यद्यपि 'हे दाक्षी'त्यत्र पदस्य विभज्यान्वाख्यानेऽस्ति युगपत्प्रसङ्गस्तथापि क्रमेणान्वाख्यान इदं सिध्यतीति तात्पर्यम्। यण्ढकौ त्विति। अत्र ढग्रहणं प्रत्ययमात्रोपलक्षणमित्याहुः।

ननु लिङ्गविशिष्टपरिभाषया राजाहःसखिभ्यष्टच् दुर्वारोऽत आह—लिङ्गविशिष्टेति। पूर्वान्तवद्भावेन प्राप्तस्य समासान्तविधेरनित्यत्वादभाव इति बोध्यम्। पूर्वं प्रतीति। प्रतिषेधे पूर्वस्याश्रयणादन्तवद्भावप्राप्तेरिति भावः। प्रसज्येति। वस्तुतः पर्युदासेऽपि दोषः। वर्णसंज्ञापक्षे लक्षणाया आवश्यकत्वेन सख्यंशे एव लक्षणाङ्गीकारे सख्यवयवभिन्नेवर्णस्येत्यर्थात्। तदन्तसंज्ञापक्षेऽप्यनुभूतविशेषणेवर्णेनैव तदन्तविधिस्वीकारेण सख्यवयवभिन्नेवर्णान्तस्येत्यर्थात्। अतिदेशे चातिदिश्यमानधर्मविरुद्धस्वाश्रयकार्याभावस्य लोकव्युत्पत्तिसिद्धतया न स्वाश्रयसख्यवयवभिन्नत्वमादाय दोषः। पर्युदासे प्रतिषेधस्यापि गम्यमानतया पूर्वान्तवत्त्वेन सखिशब्दत्वे समुदाय आगत इवर्णे सख्यवयवत्वमार्थसमाजग्रस्तमेव। किं च तव प्रसज्यप्रतिषेधेऽपि न दोषः। अतिसखीति समुदायनिष्ठघिसंज्ञायास्तेन वारयितुमशक्यत्वाच्च। संज्ञाविधौ तदन्तग्रहणे मानाभावादिति दिक्। न च लोपेऽपि लिङ्गविशिष्टपरिभाषया दोषः, तस्या

† सख्यशिश्वीति भाषायाम् ४।१।६२; कुगतिप्रादयः २।२।१८; गोस्त्रियोरुपसर्जनस्य १।२।४८; शेषो घ्यसखि १।४।७

## यस्येत्यादौ श्यां प्रतिषेधः ॥ १ ॥

यस्येत्यादौ श्यां प्रतिषेधो वक्तव्यः । काण्डे कुडचे । सौर्ये* नाम हिमवतः शृङ्गे ॥ स तर्हि प्रतिषेधो वक्तव्यः ? न वक्तव्यः । इह श्यामित्यपि प्रकृतं नेत्यपि† तत्राभिसंबन्धमात्रं कर्तव्यम्—यस्येत्यादौ लोपो भवति श्यां न ।

## इयङुवङ्भ्यां लोपो विप्रतिषेधेन ॥ २ ॥

इयङुवङ्भ्यां लोपो भवति विप्रतिषेधेन । इयङुवङोरवकाशः‡—श्रियौ श्रियः । भ्रुवौ भ्रुवः । लोपस्यावकाशः—कामण्डलेयः माद्रबाहेयः§ । इहोभयं प्राप्नोति—वात्सप्रेयः लैखाभ्रेयः¶ । लोपो भवति विप्रतिषेधेन ।

## गुणवृद्धी च ॥ ३ ॥

गुणवृद्धी चेयङुवङ्भ्यां भवतो विप्रतिषेधेन । गुणवृद्ध्योरवकाशः—चेता× गौः+ । इयङुवङोः स एव । इहोभयं प्राप्नोति—चयनम् चायकः । लवनम् लावकः । गुणवृद्धी भवतो विप्रतिषेधेन ।

प्र०—काण्डे इति । 'यचि भ'मिति भत्वाल्लोपः प्राप्नोति । सौर्ये इति । सूर्येण एकदिगित्यण् । तत्र 'यस्येति चे'त्यकारलोपः प्राप्नोति । 'सूर्यतिष्ये'ति यलोपश्च । यथा तु वक्ष्यते 'सूर्यमत्स्ययोर्ङ्या'मिति तथात्र यलोपस्याप्रसङ्गः । इह श्यामिति । 'विभाषा ङिश्यो'रित्यतः शीग्रहणं न 'संयोगाद्वमन्ते'त्यतो नेति चानुवर्तते । तेन वाक्यभेदेन श्यां कार्यं निषिध्यते ॥ कामण्डलेय इति । 'चतुष्पाद्भ्यो ढ'ञिति ढञ् । एवं वात्सप्रेय इति । लैखाभ्रेय इति ।

उ०—अनित्यताया उक्तत्वात् । कार्यकालपक्षे विभक्तौ लिङ्गविशिष्टग्रहणाच्च । ख्यत्यात्सूत्रस्थभाष्यं तु तत्सूत्रे एव योजितम् । एवं च सखायमतिक्रान्तोऽतिसखेत्यादौ घित्वं न भवत्येवेति भाष्यस्वरसः ।

भत्वादिति । 'अनपुंसकस्ये'ति सर्वनामस्थानत्वप्रतिषेधादित्यर्थः । अकारलोप इति । अणकारलोप इत्यर्थः । यलोपश्चेति । एवं चोभयोरपि निषेधो वक्तव्य इत्यर्थः । तत्र यलोपप्रतिषेधवचनं न कार्यमित्याह—यथा त्विति ॥ भाष्ये—लोपावकाशः कामण्डलेय इति । अयं 'ढे लोप' इत्यस्यावकाशः । 'यस्येति'लोपस्यावकाशस्त्वतिसखेरित्युक्त एवेति बोध्यम् । वात्सप्रेय इति । वत्सं प्रीणातीति वत्सप्रीः ।

* तेनैकदिक् ४।३।११२; यस्येति च; सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः ६।४।१४८; १४९

† विभाषा ङिश्योः; न संयोगाद्वमन्तात् ६ । ४ । १३६; १३७

‡ अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ६ । ४ । ७७ १–'माद्रवाहेयः' पा० ।

§ चतुष्पाद्भ्यो ढञ् ४ । १ । १३५; ढे लोपोऽकद्र्वाः ६ । ४ । १४७

¶ शुभ्रादिभ्यश्च ४ । १ । १२३ × सार्वधातुकार्धधातुकयोः ७ । ३ । ८४

\+ गोतो णित् ७ । १ । ९०; अचो ञ्णिति ७ । २ । ११५

## न वेयङुवङादेशस्यान्यविषये वचनात् ॥ ४ ॥

न वार्थो विप्रतिषेधेन । किं कारणम् ? इयङुवङादेशस्यान्यविषये वचनात् । इयङुवङादेशोऽन्यविषय आरभ्यते । किंविषये ? यणादेशविषये । स यथैव यणादेशं बाधत एवं गुणवृद्धी अपि बाधेत ।

## तस्मात्तत्र गुणवृद्धिविषये प्रतिषेधः ॥ ५ ॥

तस्मात्तत्र गुणवृद्धिविषये प्रतिषेधो वक्तव्यः ॥ न वक्तव्यः । मध्येऽपवादाः पूर्वान्विधीन्बाधन्त इत्येवमियङुवङादेशो यणादेशं* बाधिष्यते, गुणवृद्धी न बाधिष्यते ॥ १४८ ॥

# सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः ॥ ६ । ४ । १४९ ॥

## सूर्यादीनामणन्तेऽप्रसिद्धिरङ्गान्यत्वात् ॥ १ ॥

सूर्यादीनामणन्तेऽप्रसिद्धिः । सौरी† बलाका । किं कारणम् ? अङ्गान्यत्वात् । अणन्तमेतदङ्गमन्यद्भवति । लोपे‡ कृते नाङ्गान्यत्वम् । स्थानिवद्भावादङ्गान्यत्वं भवति ।

प्र०—'शुभ्रादिभ्यश्चे'ति ढक् ॥ इयङुवङादेश इति । आदेशनमादेशो विधानम् । इयङुवङोरादेश इति षष्ठीसमासः । यथेयङुवङौ सर्वत्रान्यपूर्वकौ नैवं गुणवृद्धी इति विप्रतिषेधानुपपत्तिरित्यर्थः ॥ १४८ ॥

सूर्य० । सौरीति । 'तेनैकदि'गित्यण् । तदन्तान्ङीप् । ईकारे परतोऽत्र सूर्यशब्दोऽङ्गं न भवति किं तर्ह्यणन्तमिति यकारलोपाप्रसङ्गः । पुंयोगविवक्षायां तु देवतायां चाब्विधानादन्यत्र ङीषि कृते सूर्यशब्दोऽङ्गमीकारे भवतीति तत्रैव लोपः स्यात्—सूरीति । अङ्गान्यत्वादिति ।

उ०—लैखाभ्रेये 'ढे लोपोऽकद्र्वा' इत्युलोपः । नन्वियङुवङादेशाविति वाच्य एकवचननिर्देशोऽयुक्तोऽत आह—आदेशनमिति । नैवं गुणेत्यादि । चेता गौरित्यादौ सावकाशत्वादिति भावः ॥ १४८ ॥

सूर्यतिष्यागस्त्य० । अङ्गं न भवतीति । सूर्यादीनामङ्गानां भसंज्ञकानामीत्युपधालोप इति सूत्रार्थादिति भावः । नन्वेवं सूर्यांशे निरवकाशो लोपोऽत आह—पुंयोगेति । अन्यत्र कुन्त्यादौ । भाष्ये—स्थानिवद्भावादङ्गान्यत्वमिति । अल्लोपस्याचः परस्मिन्निति स्थानिवत्त्वादङ्गभेद इत्यर्थः । प्रत्ययविधावेवेति ।

---

* इको यणचि ६ । १ । ७७

† तेनैकदिक् ४ । ३ । ११२

‡ यस्येति च ६ । ४ । १४८

## सिद्धं तु स्थानिवत्प्रतिषेधात् ॥ २ ॥

सिद्धमेतत् । कथम् ? स्थानिवत्प्रतिषेधात् । प्रतिषिध्यतेऽत्र स्थानिवद्भावो-यल्लोपविधिं प्रति न स्थानिवद्भवतीति§ ॥ एवमपि न सिध्यति । किं कारणम् ? शब्दान्यत्वात् । अन्यो हि सूर्यशब्दोऽन्यः सौर्यशब्दः । नैष दोषः । एकदेशविकृतमनन्यवद्भवतीति भविष्यति ।

## उपधाग्रहणानर्थक्यं च ॥ ३ ॥

स्थानिवद्भावे चेदानीं प्रतिषिद्ध उपधाग्रहणमनर्थकम् । किं कारणम् ? अन्त्य एव हि सूर्यादीनां यकारः* । किं यातमेतद्भवति ? सुष्ठु च यातं साधु च यातं यदि प्राग्भादसिद्धत्वम् । अथ हि सह तेनासिद्धत्वमसिद्धत्वाल्लोपस्य नान्त्यो यकारो भवति । यद्यपि सह तेनासिद्धत्वमेवमपि न दोषः । नैवं विज्ञायते सूर्यादीनामङ्गानां यकारलोप इति । कथं तर्हि ? अङ्गस्य यलोपो भवति स चेत्सूर्यादीनां यकार इति ।

एवमपि सूर्यचरी अत्र प्राप्नोति । तस्मादुपधाग्रहणं कर्तव्यम् ।

## विषयपरिगणनं च ॥ ४ ॥

विषयपरिगणनं च कर्तव्यम् ।

प्र०—राजदन्तादित्वात्परनिपातः । यल्लोपविधिमिति । 'उपधाविधिं प्रति ने'ति तु प्रतिषेधः प्रत्ययविधावेव । स्थानिवत्त्वनिषेधे चावशिष्टस्याङ्गसंज्ञायामेकदेशविकृतस्यानन्यत्वाद्यलोपः सिध्यति । अन्त्य एवेति । अकारद्वयलोपे सति यकारस्यान्त्यत्वात् । तत्र यान्तानां सूर्यादीनां लोपो भवतीत्युच्यमानेऽलोऽन्त्यस्येति यकारस्यैव भविष्यति । यग्रहणं तु न प्रत्याख्यायते । तदन्तरेण यान्तत्वाभावादुत्तरार्थत्वाच्च यग्रहणस्य । यातमिति । गतं ज्ञातं सिद्धमित्यर्थः । साधु च यातमिति । अनेन सिद्धे दाढर्यं प्रतिपाद्यते । यदि प्रागिति । अकारद्वयलोपस्य सिद्धत्वादन्त्यो यकारो भवति । अथेति । ईत्यकारलोपस्य समानाश्रयस्यासिद्धत्वाद्यान्तत्वाभावः । ततश्चोपधाग्रहणं कर्तव्यम् । यद्यपीति । न चोपधाग्रहणं क्रियते नापि सूर्यादीन्यङ्गत्वेन विशेष्यन्त इत्यर्थः ।

उ०—अतोऽत्र स नोक्त इति भावः । तत्र यान्तानामिति । य इत्यनेन सूर्यादयो विशेष्यन्ते । य इति च बहुवचनस्थाने सौत्रमेकवचनमिति भावः । तदन्तरेणेति । विशेषणाभावे यान्तानां सूर्यादीनामित्यर्थासंभवादिति भावः । ननु तदभावेऽपि सूर्यादीनां तद्धिते लोप इत्येव यान्ते प्राप्तिः पर्यवस्यतीत्यरुचेराह—उत्तरार्थत्वाच्चेति । 'हलस्तद्धितस्यापत्यस्य चे'त्यादौ । नन्वकारद्वयलोपे यान्तत्वमस्त्येवेत्यत आह—ईत्यकारलोपस्येति । अणि यो यस्येतिलोपस्तस्य व्याश्रयत्वादसिद्धत्वाभाव इत्यर्थः । एवं चेदमेवोपधाग्रहणं सह तेनासिद्धत्वे ज्ञापकमिति भावः ।

§ न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु १ । १ । ५८

* अलोऽन्त्यस्य १ । १ । ५२

## सूर्यमत्स्ययोर्ङ्याम् ॥ ५ ॥

सूर्यमत्स्ययोर्ङ्यामिति वक्तव्यम् । सौरी मत्सी ।

## सूर्यागस्त्ययोश्छे च ॥ ६ ॥

सूर्यागस्त्ययोश्छे च ङ्यां चेति वक्तव्यम् । सौरी सौरीयः । आगस्ती आगस्तीयः ।

## तिष्यपुष्ययोर्नक्षत्राणि ॥ ७ ॥

तिष्यपुष्ययोर्नक्षत्राणि* लोपो वक्तव्यः । तैषम् [1]पौषः ।

## अन्तिकस्य तसि कादिलोप आद्युदात्तत्वं च ॥ ८ ॥

अन्तिकस्य तसि† कादिलोपो वक्तव्य आद्युदात्तत्वं च वक्तव्यम् । अन्तितो न दूरात् ।

## तमे तादेश्च ॥ ९ ॥

तमे तादेश्च कादेश्च लोपो वक्तव्यः । अग्ने त्वं नो अन्तमः । अन्तितमोऽवरोहति ।

प्र०—ईति तद्धिते च यदङ्गमनाश्रितरूपविशेषं तस्य यकारस्य लोपः स चेद्यकार सूर्याद्यवयवो भवतीति सूत्रार्थः । सूर्यचरीति । सूर्यस्य स्त्री सूरी । सा भूतपूर्वेति चरट्प्रत्ययः । तसिलादिष्विति पुंवद्भावः ।

सूर्यमत्स्ययोरिति 'मत्स्यस्य ङ्याम्' 'सूर्यागस्त्ययोश्छे चे'त्येव सिद्धेऽर्थप्रदर्शनपरत्वाल्लाघवेऽनादरः कृतः ॥ सौरीय इति । सौर्यस्यायमिति वृद्धाच्छः । अगस्त्यस्यापत्यमिति ऋष्यण् । तदन्तान्ङीप् छश्च । नक्षत्रसंबन्धिन्यणीत्यर्थः । तिष्यपुष्ययोरित्युभयोपादानात्सिध्यशब्दस्य यलोपाभावः । अन्तित इति । 'अपादाने चाहीयरुहो'रिति तसिः । तादेश्चेति । चकारात्कादेश्च । यदा तादेस्तदाऽन्तमः, कादिलोपे त्वन्तितमः ।

उ०—इत्येव सिद्ध इति । सूर्यशब्दस्य द्विरपाठाल्लाघवं भवतीति भावः । छश्चेति । आगस्त्यापत्यमित्यर्थ इति भावः । नक्षत्रसंबन्धिनीति । नक्षत्रवाचकाद्योऽण् स सर्वोऽपि गृह्यते । अत एव तिष्ये पुष्ये च भवस्तैषः पौष इत्यत्रापि लोपः । [1]इदमेव ध्वनयता भगवता तैषं पौष इति लिङ्गभेदेनोदाहृतम् । आद्यस्य तिष्येण युक्तमहरित्यर्थः । अन्त्यस्य पुष्ये भव इत्यर्थः । व्याचक्ष्यं तु तिष्यसंज्ञकपुरुषस्येदं तैष्यमित्याहुः । तत्र तिष्यस्य प्राप्ते नियमार्थं पुष्यस्य त्वप्राप्ते विधिः । सूत्रेऽर्थग्रहणमस्तु किमुभयोपादानेन तत्राह—

* नक्षत्रेण युक्तः कालः ४ । २ । ३ १–'पौष'मिति कीलहार्नपाठस्तु नागेशव्याख्याविरुद्ध एव ।
† अपादाने चाहीयरुहोः ५ । ४ । ४५

तसीत्येष न वक्तव्यो दृष्टो दाशतयेऽपि हि ।
घौ लोपोऽन्तिषदित्यत्र

अन्तिपत् ।

तथाघौ येऽन्त्यथर्वसु ॥

अन्ति ये च दूरके ॥ १४६ ॥

## बिल्वकादिभ्यश्छस्य लुक् ॥ ६ । ४ । १५३ ॥

छग्रहणं शक्यमकर्तुम् । इह कस्मान्न भवति—बिल्वकेभ्यः* ? भस्येति† वर्तते ॥ एवमपि बिल्वकाय अत्र प्राप्नोति । तद्धितस्येति‡ वर्तते ॥ एवमपि बिल्व-

प्र०—तसीत्येष इति । कादिलोपो बहुलमित्येव विषयमनुपादाय पठितव्यमित्यर्थः । दाशतय इति । दशावयवा यस्य दशतयः । तत्र भवो दाशतयः । चतुःषष्ट्याख्यो ग्रन्थः[1] । घौ लोप इति । घुशब्देनोत्तरपदं पूर्वाचार्यप्रसिद्धयोच्यते । अन्तिके सीदतीति 'सत्सूद्विषे'ति क्विप् । पूर्वपदादिति षत्वम् । अघाविति । अनुत्तरपद इत्यर्थः । ये यत्प्रत्यये परतोऽन्तीति कृतकादिलोपोऽन्तिकशब्दो गृह्यतेऽथर्ववेदे । अन्तिके भव इति 'भवे चच्छन्दसी'ति यति कृते'ऽन्तिय' इति भवति । कादिलोपस्यासिद्धवदत्राभादित्यसिद्धत्वाद्यस्येति लोपो न भवति ॥ १४९ ॥

बिल्व० । छग्रहणमिति । कृतकुगागमस्य निर्देशाच्छ एव ग्रहीष्यत इति भावः । बिल्वकेभ्य इति । बिल्वशब्दादल्पादावर्थे कप्रत्यये, असति छग्रहणे कुगागमनिर्देश एव न निश्चीयेतेति कप्रत्ययान्तादपि परस्य भ्यसो लुक्प्रसङ्गः । भस्येति । वर्तत इति । तत्रार्थाद्विभक्तिविपरिणामे सति भसंज्ञकेभ्यः परस्य लुग्भवति । बैल्वक इति । 'अनुदात्तादेश्चे'त्यत्र । तद्धित

उ०—उभयोपादानेति । ननु तसीत्यस्याभावे सर्वत्र कादिलोपः स्यादत आह—कादिलोपो बहुलमिति । एवं चेष्टविषये लोपसिद्धिरिति भावः । चतुःषष्ट्याख्य इति । चतुःषष्ट्यध्याययुक्तत्वाच्च 'बह्वृचानां संहिता तथोच्यते । सैव दशमण्डलाख्यावयवसत्त्वाद्दाशतयशब्दवाच्या । ननु कादिलोपे यस्येति लोपेऽन्तिय इत्यसंगतमत आह—कादिलोपस्येति ॥ १४६ ॥

बिल्वका० । कृतकुगिति । नडाद्यन्तर्गणबिल्वादयः कृतकुकोऽत्र गृह्यन्त इति ततः परश्छ एव संभवतीति भावः । ननु कृतकुगागमनिर्देशे कथं 'बिल्वकेभ्य' इत्यत्र प्राप्तिरत आह—असतीति ।

१–दाशतयः ऋग्वेद उच्यते । तत्राष्टावष्टकानि चतुःषष्ट्यध्यायाश्च विद्यन्ते ।
२–'द्यौ'पाठभेदः । ७ । ३ । ३ सूत्रभाष्ये टिप्पणी द्रष्टव्या ।
३–'तथाद्यौ' पा० । ७ । ३ । ३ सूत्रभाष्ये टिप्पणी द्रष्टव्या ।
४–अरसासं इहाहयो ये अन्ति ये च दूरके । घनेन हन्मि वृश्चिकमाहिं दण्डेनागतम् ॥ (अथर्व० १० । ४ । ६)

* अल्पे ५ । ३ । ८५
† भस्य ६ । ४ । १२६
‡ हलस्तद्धितस्य ६ । ४ । १५०

कस्य विकारोऽवयवो वा बैल्वकः+ अत्र प्राप्नोति । तद्धिते तद्धितस्येति¶ वर्तते ॥ एवमपि बिल्वकीयायां भवो बैल्वकः बैल्वकस्य किंचिद् बैल्वकीयम्× अत्र प्राप्नोति । न स बिल्वकात् । बिल्वकादिभ्यो यो विहित इत्युच्यते न चासौ बिल्वकशब्दाद्विहितः । किं तर्हि ? बिल्वकीयशब्दात् ।

एवं तर्हि सिद्धे सति यच्छग्रहणं करोति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा 'संनियोगशिष्टानामन्यतराभावे उभयोरप्यभाव' इति । तस्माच्छग्रहणं कर्तव्यं छस्यैव

प्र०—इति । 'नस्तद्धिते' इत्यतस्तद्धिते इति वर्तते । तेन च बिल्वकादिभ्यो भसंज्ञकेभ्यः परस्य तद्धितस्य तद्धिते परतो लुग्भवतीति सूत्रार्थः संपद्यते । एवमपीति । बिल्वा विद्यन्तेऽस्यामिति 'उत्करादिभ्यश्छः' 'नडादीनां कुक् चे'ति छः कुगागमश्च । ततः 'तत्र भव' इत्यण् । तस्मिन्परतश्छस्य लुक् । ततो वृद्धाच्छः । असति च्छग्रहणे छे परतोऽणो लुक्प्रसङ्गः । ततश्च 'न लुमताङ्गस्ये'ति प्रत्ययलक्षणप्रतिषेधाद्वृद्ध्यभावे रूपं न सिध्येत् । न स बिल्वकादिति । विहित इति शेषः ।

बिल्वकादिभ्यो यो विहित इति । बिल्वकादिभ्य इत्यागन्तुनाकारेण कृतकुगागमनिर्देशः । तेनायमर्थः—भाविकुगागमेभ्यो बिल्वादिभ्यो यो विहितः प्रत्ययस्तस्य तद्धिते लुग्भवति । न च च्छादन्यो भाविकुगागमेभ्यो बिल्वादिभ्यः प्रत्ययो विधीयत इति नार्थश्छग्रहणेन ।

एवं तर्हीति । छग्रहणं छमात्रस्य लुग्यथा स्यात्कुगागमो मा निवृतदित्येवमर्थं क्रियते । यदि चैषा परिभाषा न स्यात्तदा कुको नैव निवृत्तिः प्राप्नोतीति किं तदभावार्थेन च्छग्रहणेन । कचित्त्वेषा परिभाषा नाश्रीयते । यथा 'श्यैनेय' इत्यादौ 'यस्येति'लोपेन निवृत्तेऽपीकारे तत्संनियुक्तो नकारो न निवर्तते । तथा च 'स्त्रियाः पुंव'दित्यत्रोक्तम्—'एतभार्य' इत्यत्र पुंवद्भावेन स्त्रीप्रत्ययमात्रस्य

उ०—नन्वनुवर्तमानमपि भस्येत्यन्वयायोग्यमत आह—तत्रार्थादिति । अनुदात्तादेश्चेति । अपवादत्वेन कोपधत्वादणिति वक्तुमुचितम् । तद्धितस्येति । 'हलस्तद्धितस्ये'त्यतस्तदनुवृत्तेरिति भावः । नन्वणो लुका लोपेन वा निवृत्तौ विशेषाभावोऽत आह—ततश्चेति । व्याश्रयत्वाच्च पूर्वलुको नासिद्धत्वम् । ननु कप्रत्ययान्तबिल्वकप्रकृतिकविकाराद्यर्थकाणन्तबैल्वकशब्दादिदमर्थे छे 'बैल्वकीय' इत्यादौ लुक् स्यात् । तस्याणो बिल्वकाद्विहितत्वादत आह—कृतकुगागमेति । गणपाठस्य शीघ्रोपस्थितिकत्वेन तेषामेव ग्रहात् । न हि कान्तानां क्वचित्पाठोऽस्ति । गणपाठसत्त्वेनैव च प्रकारवाचिता नादिशब्दस्येति भावः । भाविकुगागमेभ्य इति । कुक्संनियोगेन प्रत्ययविधानादिति भावः ।

छग्रहणेनेति । न च ज्ञापितेऽपि कथं चारितार्थ्यं कुग्विशिष्टानुवादसामर्थ्येनैव तदनिवृत्तेः । अन्यथा 'बिल्वादिभ्य' इत्येव वदेत् । बिल्वादय एव हि नडादौ पठिताः । न च बिल्वादिभ्यो भवाद्यर्थाणादीनामपि

+ अनुदात्तादेश्च ४ । ३ । १४० ¶ नस्तद्धिते; हलस्तद्धितस्य ६ । ४ । १४४; १५०
× नडादीनां कुक् च ४ । २ । ९१; तत्र भवः ४ । ३ । ५३; वृद्धाच्छः ४ । २ । ११४
१—'मन्यतरापाय' पा० । द्रष्टव्यम् ४ । १ । ३६ वा० ४ पृ० ४६५ पं० ६ ।

लुग्यथा स्यात्कुको मा भूदिति+ ॥ १५३ ॥

## तुरिष्ठेमेयःसु ॥ ६ । ४ । १५४ ॥

तुः सर्वस्य लोपो वक्तव्योऽन्त्यस्य† लोपो मा भूदिति । स तर्हि वक्तव्यः ? न वक्तव्यः ।

**तुः सर्वलोपविज्ञानमन्त्यस्य वचनानर्थक्यात् ॥ १ ॥**

तुः सर्वलोपो विज्ञायते । कुतः ? अन्त्यस्य वचनानर्थक्यात् । अन्त्यस्य लोपवचने प्रयोजनं नास्तीति‡ कृत्वा सर्वस्य भविष्यति ।

अथवा लुक्प्रकृतः§ सोऽनुवर्तिष्यते । अशक्यो लुगनुवर्तयितुम् । किं कारणम् ? विजयिष्ठकरिष्ठयोर्गुणदर्शनात् । विजयिष्ठकरिष्ठयोर्गुणो दृश्यते* । विजयिष्ठः । आसुतिं करिष्ठः ॥ १५४ ॥

प्र०—निवृत्तिः क्रियतेऽर्थस्य त्वनिवृत्तत्वान्नकारस्य श्रवणं प्रसज्येतेति । तथा 'श्रोत्रियस्य घलोपश्चे'ति घे निवृत्तेऽपि श्रोत्रभावो न निवर्तत इति तत्रानित्या परिभाषेति प्रतिविधेयम् ॥ १५३ ॥

तुरि० । तुः सर्वस्येति । सर्वस्य तृशब्दस्य लोपो न त्वलोऽन्त्यस्येत्यर्थः । अन्त्यस्य लोपवचन इति । 'टे'रित्येवान्त्यलोपस्य सिद्धत्वात् । विजयिष्ठ इति । विजेतृशब्दात् 'तुः छन्दसी'तीष्ठन्प्रययः । तस्य लुकि सति 'न लुमताङ्गस्ये'ति प्रत्ययलक्षणप्रतिषेधाद्गुणो न स्यात् । पूर्वं तु गुणो न प्रवर्तते । 'अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते' इति वचनात् । करिष्ठ इति । तृन्नन्तादिष्ठन्प्रत्ययः ॥ १५४ ॥

उ०—लुगापत्तिः । लक्षणप्रतिपदोक्तपरिभाषया बिल्वादिपुरस्कारविहितप्रत्ययस्यैव लुग्विधानादिति वाच्यम् । ततोऽपि प्रतिपदोक्तत्वेन बिल्वादिभ्योऽणिति विकारार्थस्य लुगापत्तिवारणार्थं तत्सार्थक्यादिति भाष्याशयात् । नकारो न निवर्तत इति । 'अचः परस्मि'न्निति स्थानिवत्त्वेनैव सिद्धेरिदं चिन्त्यम् । श्रोत्रियस्येत्यादि त्वनित्यत्वफलमेव ॥ १५३ ॥

तुरिष्ठेमे० । प्रयोजनाभावं दर्शयति—टेरित्येवेति । 'आसुति'मिति द्वितीयादर्शनादाह—तृन्नन्तादिति । एवं च 'न लोके'ति निषेधात्षष्ठ्यभाव इति भावः ॥ १५४ ॥

+ नडादीनां कुक् च ४ । २ । ९१ ।　† अलोऽन्त्यस्य १ । १ । ५२ ।
‡ टेः ६ । ४ । १५५　§ बिल्वकादिभ्यश्छस्य लुक् ६ । ४ । १५३ ।
* न लुमताङ्गस्य १ । १ । ६३ ।

## टेः ॥ ६ । ४ । १५५ ॥

### णाविष्ठवत्प्रातिपदिकस्य

णौ प्रातिपदिकस्येष्ठवद्भावो वक्तव्यः । किं प्रयोजनम् ?

**पुंवद्भावरभावटिलोपयणादिपरार्थम् ॥ १ ॥**

पुंवद्भावार्थम्—एनीमाचष्ट एतयति । श्येतयति† । रभावार्थम्—पृथुमाचष्टे प्रथयति । म्रदयति× । टिलोपार्थम्—पटुमाचष्टे पटयति । यणादिपरार्थम्—स्थूलमाचष्टे स्थवयति । दवयति* ।

किं पुनरिदं परिगणनमाहोस्विदुदाहरणमात्रम् । उदाहरणमात्रमित्याह प्रादयोऽपि दृश्यन्ते—प्रियमाचष्टे प्रापयतीति‡ ।

प्र०—टेः । णाविति । प्रातिपदिकग्रहणं प्रत्ययकार्याणामतिदेशो मा भूदित्येवमर्थम् । तेन बहून्याचष्टे भावयतीति णिचो यिण्न भवति । तदभावे भूभावेनापि न भवितव्यं संनियोगशिष्टत्वादिति बहयतीति भवितव्यमिति केचित् ॥ एतयतीति । तसिलादित्वादिष्टे पुंवद्भावो विहित इति णावपि भवति । टिलोपेनैव संनियोगशिष्टत्वान्नकारनिवृत्तौ सिद्धायां पुंवद्वचनं संनियोगशिष्टपरिभाषाया अनित्यत्वज्ञापनार्थम् । तेन 'श्यैनेय' इत्यादिसिद्धं भवति । विन्मतोरिति । स्रग्विण-

उ०—टेः । इत्येवमर्थमिति । इदमुपलक्षणम् । तेन चकासादिभ्यो हेतुमण्णावेतदप्रवृत्तिरपि तत्फलम् । एतेन णावित्युपश्लेषे सप्तमीदर्शनेनेष्ठवदित्यत्रापि सप्तम्यन्ताद्वतिसत्त्वेनेष्ठनि पूर्वकार्यस्यैवातिदेशेन सिद्धे प्रातिपदिकग्रहणं व्यर्थमित्यपास्तम् । भावयतीति । न च संनियोगशिष्टन्यायाद्भूभावो दुर्लभः । 'भू च बहो'रित्यत्र पुनर्बहुग्रहणसामर्थ्येन संनियोगशिष्टत्वाभावात् । प्रत्ययादेशत्वभ्रमस्तु व्याख्यानात्सुपरिहर इत्याशयः । इदमेव केचिदित्यत्रारुचिबीजम् । 'एतयती'त्यत्र पुंवत्त्वं आभीयासिद्धत्वानित्यत्वाट्टिलोपो भवत्येव । अन्यथा वृद्धौ पुक्येतापयतीत्यापत्तिः । तसिलादित्वादिति । 'भस्याढे' इति तत्रोक्तेरिति भावः । तेन श्यैनेय इति । इदं चिन्त्यमिति 'बिल्वकादिभ्य' इति सूत्रे निरूपितम् । किं च ज्ञापकमप्यसंगतम् । 'दरदमाचष्टे दारदयतीत्याद्यर्थं पुंवद्भावस्यावश्यकत्वात् । स्रक्शब्दा'दस्मायामेधे'ति विनिः, णिच्, विन्मतोर्लुक् । नन्वत उपधाया इति वृद्धिः प्राप्नोतीत्यत आह—अङ्गवृत्तेति । अत एव 'वृत्तवत् करोतीत्याष्टमिकभाष्यप्रयोगः संगच्छते । यत्र त्वनिष्ठितमिति । तस्या अनित्यत्वात्क्वचिदप्रवृत्तिरिति भावः । परे तु लक्ष्यविशेषे लक्ष्यानुरोधाद्भाष्यानुरोधाच्चेष्ठवदित्यभावातिदेशोऽपि । तेन 'दवयती'त्यादौ वृद्धिर्न ।

† तसिलादिष्वाकृत्वसुचः ६ । ३ । ३५ । × र ऋतो हलादेर्लघोः ६ । ४ । १६१ ।

* स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः ६ । ४ । १५६ ।

‡ प्रियस्थिर..........द्राघिवृन्दाः ६ । ४ । १५७; अचो ञ्णिति ७ । २ । ११५; अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णौ ७ । ३ । ३६ ।

भारद्वाजीयाः पठन्ति—णाविष्ठवत्प्रातिपदिकस्य पुंवद्भावरभावटिलोपयणादिपरप्रादिविन्मतोर्लुक्कन्विध्यर्थमिति‡ ॥ १५५ ॥

## इष्ठस्य यिट् च ॥ ६ । ४ । १५९ ॥

किमयं यिशब्द आहोस्विद्यकारः । किं चातः ? यदि लोपोऽप्यनुवर्तते* ततो यिशब्दः । अथ निवृत्तं ततो यकारः ॥ १५६ ॥

## ज्यादादीयसः ॥ ६ । ४ । १६० ॥

किमर्थं ज्यात्परस्येयस आत्त्वमुच्यते न लोपः प्रकृतः* सोऽनुवर्तेत । का रूपसिद्धिः ज्यायान् ? अकृद्यकार इति दीर्घत्वं भविष्यति† ।

प्र०—माचष्टे स्रजयति । 'अङ्गवृत्ते' इति वृद्धिरत्र न भवति । यत्र त्वनिष्ठितमङ्गं तत्र वृद्धिर्भवत्येव—प्रापयति स्थापयतीति । युवानमाचष्टेऽल्पमाचष्टे कनयति ॥ १५५ ॥

इष्ठ० । किमयमिति । किमिकारान्तः समुदाय आगमोऽथ यकारमात्रमिकारस्तूच्चारणार्थ इति प्रश्नः । किं चात इति । उभयथा दोषाभाव इत्यर्थः । तत्प्रतिपादयति—यदीति ॥ १५६ ॥

ज्यादा० । ज्यात्परस्येयस 'आदेः परस्ये'त्याकारः क्रियते । तत्रोच्यते—किमर्थमिति । अकृद्यकार इति । 'क्ङिती'ति तत्र नानुवर्तत इति भावः । 'उरुये'त्यादौ छान्दसत्वाद्दीर्घाभावः । अङ्गवृत्त इति । अङ्गे वृत्तं निष्पन्नं यत्कार्यं तस्मिन्सति पुनरन्यस्याङ्गकार्यस्य प्रवृत्तावविधानं भवति । 'ज्ञाजनोर्जे'त्यत्रापीयं परिभाषा ज्ञापिता । तत्रास्मिन्स्थिते ज्ञापके 'जे'त्यादेशविधानं

उ०—प्रापयतौ च भवत्येव । एवं चाङ्गवृत्ते इत्यस्य लक्ष्यासाधकत्वम् । अत एव भाष्ये सिद्धान्ते तत्परिभाषाया ज्ञापकोत्तरं पित्रेर्गुणप्रतिषेधश्चोदितः स न वक्तव्य इत्येव प्रयोजनमुक्तम् । न तु दवयतीत्यादिसिद्धिरितीदं चिन्त्यमित्याहुः । प्रापयतौ वृद्धौ पुक्, युवाल्पयोरिति कन् । उदाहरणमात्रत्वादेव भसंज्ञाप्रकृतिभावादीनामप्यतिदेशः । उदाहरणत्वे एव भारद्वाजीयवच उपष्टम्भकं न तु तदपि परिगणनमिति बोध्यम् । तत्र प्रातिपदिकाण्णिच्यपि स्रग्विणं स्रजयतीत्याद्यर्थं भत्वमावश्यकमिति बोध्यम् ॥ १५५ ॥

इष्ठस्य । 'किं चात' इत्यस्य सर्वत्र यादृगर्थस्तादृगत्र नेत्याह—उभयथेति । लोपानुवृत्तावयमर्थः—बहोः परस्येष्ठस्य लोपो यिडागमश्चेति । अत्रान्त्यः पक्षो युक्तः । प्रक्रियालाघवात् ॥ १५६ ॥

ज्यादा० । नन्वकृदित्यत्र 'क्ङिती'त्यननुवृत्तावुरुयेत्यादौ टा इत्यस्य याटि दीर्घः स्यादत आह—

‡ विन्मतोर्लुक्; युवाल्पयोः कनन्यतरस्याम् ५ । ३ । ६५; ६४ ।
* बहोर्लोपो भू च बहोः ६ । ४ । १५८ । † अकृत्सार्वधातुकयोर्दीर्घः ७ । ४ । २५ ।

एवं तर्हि सिद्धे सति यज्ज्यात्परस्येयस आत्त्वं शास्ति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषाङ्गवृत्ते पुनर्वृत्तावविधिरिति । किमेतस्य ज्ञापने प्रयोजनम् ? पिबेर्गुणप्रतिषेधश्चोदितः‡ स न वक्तव्यो भवति ।

अथ किमर्थं ज्यात्परस्येयसो दीर्घ उच्यते न अकार एवोच्येत । का रूपसिद्धिः ज्यायान् ? आन्तर्यतो दीर्घस्य दीर्घो भविष्यति ।

एवं तर्हि सिद्धे सति यद्दीर्घग्रहणं करोति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा 'भाव्यमानेन सवर्णानां ग्रहणं ने'ति ॥ १६० ॥

## र ऋतो हलादेर्लघोः ॥ ६ । ४ । १६१ ॥

कथमिदं विज्ञायते—हलादेरङ्गस्येति, आहोस्विद्धलादेर्ऋकारस्येति । युक्तं पुनरिदं विचारयितुम् । नन्वनेनासंदिग्धेनाङ्गविशेषणेन भवितव्यम् । कथं ह्यृकारस्य

प्र०—दीर्घश्रवणार्थम् । तस्मिंश्च ज्ञापके सति ज्यायानिति सिद्धयर्थमाद्वचनम् । अन्यथादिलोपे कृते परिभाषावशाद्दीर्घो न स्यात् । पिबेरिति । 'पाघ्रादि'सूत्रेण यदा पिबादेशो हलन्तः क्रियते तदा गुणप्रसङ्गः । यदा त्वदन्तस्तदा गुणप्राप्त्यभावः ॥ १६० ॥

र ऋतो । कथमिदमिति । इहाङ्गस्येति प्रकृतमृत इति च श्रुतं, तत्र विशेषणविशेष्यभावे कामचारात्प्रश्नः । युक्तं पुनरिति । 'धात्वादे'रित्यादाववयववाचिन आदिशब्दस्य दर्शनादवयव्यपेक्षत्वाच्चावयवस्यावयवान्तरेण संबन्धाभावादिति भावः । अन्यस्यान्य इति । अत्यन्तभेदादसंबन्धं परस्परस्यावयवयोर्दर्शयति । यत्र भेदाभेदविवक्षा 'वृक्षाणां वनं' 'वृक्षाः वन'मिति

उ०—उत्पत्त्येत्यादाविति । अङ्ग इति । अङ्गाधिकार इत्यर्थः । भाष्ये न अकार एवेति । 'ज्याद ईयस' इति सूत्रं पाठ्यमिति भावः । इयं शङ्का नाणुदित्सूत्रमादाय, सूत्रशेषेण विरोधात् किं । च तथा सत्युक्तमित्येव वदेत् । न त्वेतज्ज्ञापयतीति । तस्माज्जातिपक्षाश्रयेणेयं शङ्का । उत्तरं तु स्पष्टमेव जातिपक्षेऽपि भाव्यमानविषयो नेति ॥ १६० ॥

र ऋतो । तत्रेति । आदिशब्दस्य प्रसिद्धावयवार्थपरिग्रहे प्रकृतविशेषणत्वम् । अप्रसिद्धपूर्ववृत्तिसमीपार्थपरिग्रहे श्रुतविशेषणत्वमिति भावः । अवयववाचिन इति । प्रथमावयववाचिन इत्यर्थः । नन्ववयवावयविनोरपि भेदादन्यस्यान्य इति हेतुरनैकान्तिकोऽत आह—अत्यन्तेति । अवयवयोरिति । समुदायावयवयोर्हल्ऋकारयोः परस्परस्यासंबन्धमित्यन्वयः । अवयवावयविनोस्तु नात्यन्तं भेद इत्याह—यत्रेति । न चैवं

‡ पिबेर्गुणप्रतिषेधः ७ । ३ । ७८ वा० १ ।

नाम हलादिः स्यादन्यस्यान्यः । अयमादिशब्दोऽस्त्येवावयववाची । तद्यथा—ऋगादिः अर्धर्चादिः श्लोकादिरिति । अस्ति सामीप्ये वर्तते । तद्यथा—दधिभोजनमर्थसिद्धेरादिः, दधिभोजनसमीपे । घृतभोजनमारोग्यस्यादिः, घृतभोजनसमीपे । यावता सामीप्येऽपि वर्तते जायते विचारणा हल्समीपस्यर्कारस्य स्यादथवा हलादेरङ्गस्येति । किं चातः ? यदि विज्ञायते हलादेरङ्गस्येति अप्रथीयान् अत्र न प्राप्नोति । अथ विज्ञायते हलादेर्ऋकारस्येति अनृचीयान् अत्रापि प्राप्नोति । उभयथा स्रुचीयानित्यत्र प्राप्नोति । यथेच्छसि तथास्तु ।

अस्तु तावद्धलादेरङ्गस्येति । कथमप्रथीयान् ? तद्धितान्तेन समासो भविष्यति । न प्रथीयानप्रथीयानिति । भवेत्सिद्धं यदा तद्धितान्तेन समासो यदा तु खलु समासात्तद्धितोत्पत्तिस्तदा न सिध्यति । नैव समासात्तद्धितोत्पत्त्या भवितव्यम् । किं कारणम् ? बहुव्रीहिणोक्तत्वान्मत्वर्थस्य । भवेद्यदा बहुव्रीहिस्तदा न स्याद्यदा तु खलु

प्र०—तत्रावयवावयविभावो नान्यत्रेत्यर्थः । दधिभोजनमिति । यदृच्छोपनतं दधिभोजनं कार्यसिद्धेः सूचकत्वात्समीपमित्यर्थः । अप्रथीयानिति । अपृथुशब्दात्पृथुसदृशगुणवचनादीयसुन्प्रत्ययः । अनृचीयानिति । न सन्त्यृचो येषां तेऽनृचा माणवकास्ते सन्ति यस्मिन्देशे सोऽनृचवांस्तत ईयसुन् 'विन्मतो'रिति मतुब्लुक् । अत्राङ्गं हलादि न भवति । ऋकारस्तु हलादिरिति रादेशप्रसङ्गः । स्रुचीयानिति । स्रुग्वच्छब्दादीयसुन् मतुपो लुक् । यथेच्छसीति । वक्ष्यमाणपरिगणनादतिप्रसङ्गनिरासादिति भावः ।

न वै समासादिति । प्रकृताभिप्रायेणैतदुच्यते । ईदृशात्समासादीदृशस्तद्धितो नोत्पद्यते । तथा हि—अपृथुशब्दस्तत्पुरुषो बहुव्रीहिर्वा गुणवचनो न भवतीति तत ईयसुन्न भवत्येव । अथ मत्वन्तादीयसुन उत्पत्तिः, तन्न, बहुव्रीहिणोक्तत्वान्मतुपोऽभावात् । नापि तत्पुरुषान्मतुबुत्पत्तिः, लाघवाद्बहुव्रीहेर्न्याय्यत्वात् । भवेद्यदेति । स ह्यन्यपदार्थप्रधानत्वाद्गुणवचनो न भवति ।

उ०—'दिदीये' इत्यादौ युट एकारावयवत्वं न स्यात् । आद्यन्ताविति वचनेनावयवसदृशत्वबोधनेनावयवप्रयुक्तकार्यबोधनाददोषः । ननु दधिभोजनानन्तरमर्थसिद्धिर्न दृश्यते इति कथमत आह—यदृच्छेति । कार्यारम्भे इति शेषः । भाष्ये दधिभोजनसमीप इति । यतो दधिभोजनसमीपेऽर्थसिद्धिरतस्तदर्थसिद्धेरादिः समीपमित्यर्थः । एवमन्यत्रापि बोध्यम् । ननु नञ्समासस्य गुणवचनत्वाभावात्कथमीयसुनत आह—अपृथुशब्दादिति । अनृचा इति । 'ऋक्पू'रिति समासान्तः । विन्मतोर्लुग्विधानादेवागुणवचनादपीयसुन् । स्रुग्वच्छब्दादिति । 'न पूजना'दिति समासान्तनिषेधः ।

ननु समासात्तद्धितोत्पत्तेर्बहुश उपलम्भान्नैवेत्ययुक्तमत आह—प्रकृतेति । तदभिप्रायेण भाष्यं योजयति—तथा हीति । गुणमुक्तवानिति । बाहुलकात्कर्तरि भूते ल्युट् । ननु पृथुशब्दोऽपि सदा

तत्पुरुषस्तदा प्राप्नोति । न पृथुरपृथुः अयमप्यपृथुः अयमप्यपृथुः अयमनयोरप्रथीयानिति । न समासादजादिभ्यां भवितव्यम् । किं कारणम् ? गुणवचनादित्युच्यते* न च समासो गुणवचन इति । यदा तर्हि समासाद्विन्मतुपौ विन्मतुबन्तादजादी तदा प्राप्नुतः† । अविद्यमानाः पृथवोऽपृथवः अपृथवोऽस्य सन्त्यपृथुमान् अयमप्यपृथुमान् अयमप्यपृथुमान् अयमनयोरप्रथीयानिति । नैष दोषः । अपृथव एव न सन्ति कुतो यस्यापृथव इति ।

प्र०—यदा त्विति । यथाब्राह्मण इति ब्राह्मणसदृशः क्षत्रियादिरुच्यते तथापृथुरिति पृथुसदृशगुणान्तरयुक्तोऽभिधीयते । **न च समास** इति । गुणमुक्तवान् गुणवचनः । यः शब्दो गुणमभिधाय गुणोपसर्जने द्रव्ये वर्तते तस्मादजादिभ्यां भाव्यम् । न च समासः केवले गुणे कदाचित्प्रयुज्यते, नित्यं द्रव्यवाचित्वात् । अथवापृथुशब्दः पृथुसदृशगुणवाचित्वेऽपि विशिष्टगुणवचनो न भवति । पृथुशब्दवत् । **अपृथव एव न सन्तीति** । मतुपः प्रकृतय इति शेषः । समानेऽर्थे बहुव्रीहिणा भाव्यं न तु मत्वर्थीयार्थेन तत्पुरुषेण । भिन्नार्थत्वे तु भाव्यमेव—'गौरखरवदरण्यं' 'कृष्णसर्पवान् वल्मीक' इति । अत्र हि जातिविशेषेण तद्वत्ताप्रतिपिपादयिषिता नान्तरेण तत्पुरुषं मत्वर्थीयार्थं बहुव्रीहिमात्रेण प्रतिपादयितुं शक्यते । अन्ये त्वाहुः—अविद्यमाना ये पृथवस्ते सन्तीति विरोधादस्त्युपाधिकत्वाभावान्मतुब्न भवतीति । एतदपरे न क्षमन्ते । पृथुत्वगुणरहिताः स्वरूपेण विद्यमानाः पृथव एवापृथव उच्यन्ते इति कथं सत्त्वोपाधिकत्वं न स्यात् । ननु च यथानृचीयानित्यत्र बहुव्रीह्यर्थेन तद्वत्ताविवक्षायां मत्वन्तादीयसुन् भवति तथापृथुशब्दादपि मतुपा तदन्तात्रेयसुना भाव्यम् । एवं तर्ह्यनभिधानाद्बहुव्रीहेः कुतश्चिन्मतुपा न भवितव्यमिति मन्यते । तदेव'मप्रथीया'निति तद्धितान्तेन समास इति स्थितम् ।

उ०—गुणिवचनो न कदाचिदपि शुक्लादिवद्गुणवचन इति ततोऽप्युत्पत्तिरेवं सति न स्यादत आह—**अथवेति** । येषां विशेषरूपेण गुणः प्रवृत्तिनिमित्तं ते गुणवचना इत्यभिमानः । वस्तुत आकडारसूत्रोक्तरीत्या समाससंज्ञया गुणवचनसंज्ञाया बाधाभिप्रायेणेदं भाष्यं व्याख्येयम् । **अपृथव एव न सन्तीति** भाष्यमपि प्रकृताभिप्रायेणेत्याह—**मतुप इति** । तदुपपादयति—**समान इति** । गौरखरादिशब्दा जातिविशेषवचना न तु यौगिका इत्याह—**अत्र हीति** । मत्वर्थीयार्थं मत्वर्थीयफलकम् । शक्यते इत्यस्य जातिविशेषवतेति शेषः । **पृथव एवेति** । आरोपित पृथुत्ववन्त एवेत्यर्थः । **तथापृथुशब्दादपीति** । माणवादिपरबहुव्रीहेरित्यर्थः । **कुतश्चिन्मतुपेति** । क्वचिद्बहुव्रीहिणा न भाव्यमिति वक्तुमुचितम् । अपृथव एव न सन्तीति भाष्यात् ।

* अजादी गुणवचनादेव ५ । ३ । ५८ । † विन्मतोर्लुक् ५ । ३ । ६५ ।

इह कस्मान्न भवति—मातयति भ्रातयति ? लोपो‡ऽत्र बाधको भविष्यति । इदमिह संप्रधार्यम्—टिलोपः क्रियतां रभाव इति किमत्र कर्तव्यम् ? परत्वाद्रभावः ।

यदि पुनरत्रशिष्टस्य रभाव उच्येत । नैवं शक्यम् । इहापि प्रसज्येत—कृतमाचष्टे कृतयतीति ।। एवं तर्हि परिगणनं कर्तव्यम् । पृथुमृदुकृशभृशदृढपरिवृढानामिति वक्तव्यम् ।। १६१ ।।

## प्रकृत्यैकाच् ।। ६ । ४ । १६३ ।।

प्रकृत्यैकाजिति किमिष्ठेमेयःस्वाहोस्विदविशेषेण । किं चातः ? यद्यविशेषेण स्त्री स्त्री* शौवम्† अधुनेत्यत्रापि+ प्राप्नोति । स्त्रिस्त्रिनावेव न स्तः । कथम् ? उक्तमेतदेकाचरात्कृतो जातेः सप्तम्यां च न तौ स्मृतौ§ । स्ववान् खवानित्येव भवितव्यम् ।

प्र०—स्वृचीयानित्येतस्यापि परिहाराय चोद्यमुपन्यस्यति—इह कस्मादिति । मातयतीति । 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानी'ति पक्षाश्रयणा'त्तुरिष्ठेमेयः'स्वितीष्ठवद्भावात्तृशब्दस्य लोपाभावः । यदि पुनरिति । टिलोपोऽप्यनुवर्तते ततश्चान्त्यस्य ऋशब्दस्य टिलोपोऽनन्त्यस्य तु रभाव इति 'मातयती'त्यादौ रादेशाभावः । कृतयतीति । अत्रानन्त्य ऋकारोऽस्तीति रभावप्रसङ्गः । एवं 'स्वृचीया'नित्यत्रापि । एवं तर्हीति । परिगणने च सति 'हलादेर्लघो'रिति न कर्तव्यम् ।। १६१ ।।

प्रकृ० । किमिष्ठेमेयःस्विति । किं प्रत्यासत्त्याश्रयेणेष्ठेमेयसोऽपेक्ष्यन्तेऽथ व्याप्त्याश्रयेण तद्धित इति प्रश्नः । स्त्रीति । स्वशब्दादिनि कृते प्रकृतिभावा'द्यस्ये'ति लोपो न प्राप्नोति । शौवमिति । शुनो विकारावयवयोः प्राण्यत्रि कृते 'नस्तद्धिते' इति टिलोपो न प्राप्नोति ।

उ०—ननु मातयतीत्यत्र 'तुरिष्ठेमेयः'स्विति प्राप्नोतीत्यत आह—उणादय इति । ननु लोपं बाधित्वा रभावप्रवृत्तेरुक्तत्वात्कथमवशिष्टस्य रभाव आशङ्क्यते तत्राह—टिलोपोऽपीति । ऋकाररूपायाष्टेर्लोपो भवतीत्युक्ते सामर्थ्यादनन्त्यस्य रभावः फलतीति भावः । तृशब्दस्यान्त्यस्य टिलोप इत्यन्वयः । तस्यैव टित्वादिति भावः । मातयतीत्यादाविति । अनन्त्यऋकारस्याभावादित्यर्थः । न कर्तव्यमिति । ऋजिष्ठकृशिष्ठादौ प्रसङ्गाभावादिति भावः ।। १६१ ।।

प्रकृत्यै० । तद्धित इति । 'नस्तद्धिते' इत्यतस्तदनुवृत्तेरिति भावः । विकारावयवयोरिति । अर्थान्तरे तु 'तस्येद'मित्यणि 'अन्' इति प्रकृतिभावाच्छौवनमिति भाव्यम् । संकोचे तु 'शुनः संकोच'

‡ टेः ६ । ४ । १५५ * अत इनिठनौ ५ । २ । ११५; यस्येति च ६ । ४ । १४८

† प्राणिरजतादिभ्योऽञ् ४ । ३ । १५४; नस्तद्धिते ६ । ४ । १४४

+ अधुना ५ । ३ । १७; यस्येति च ६ । ४ । १४८

§ ५ । २ । ११५ श्लोकवार्तिकम् ।

शौवमिति परत्वादैजागमे¶ कृते टिलोपेन भवितव्यम् । अधुनेति सप्रकृतिकस्य सप्रत्ययकस्य स्थाने निपातनं क्रियते ।। इह तर्हि प्राप्नोति—द्रव्यम्* ।

यस्येत्यादौ प्रकृतिभावः । यस्येति† यस्य लोपप्राप्तिस्तस्य प्रकृतिभावो न चैतानि यस्येत्यादौ ।। एवमपि श्रिये हितः श्रीयः‡ ज्ञा देवतास्य स्थालीपाकस्य ज्ञः§ स्थालीपाक इत्यत्र प्राप्नोति । तस्मादिष्ठेमेयःसु प्रकृतिभावः ।

अथेष्ठेमेयःसु प्रकृतिभावे किमुदाहरणम् ? प्रेयान् प्रेष्ठः× । नैतदस्ति । प्रादीनामसिद्धत्वान्न भविष्यति ।। इदं तर्हि—श्रेयान् श्रेष्ठः+ ।

प्र०—अधुनेति । इदमोऽधुनाप्रत्यये परत इशादेशस्तस्य 'यस्येति' लोपो न प्राप्नोति । शौवमिति । टिलोपं बाधित्वा परत्वाद्वृद्धिः प्राप्ता 'द्वारादीनां चे'ति प्रतिषिध्यते । ऐजागमश्च क्रियते । तत्रैकाच्त्वाभावात्प्रकृतिभावाभावः । अधुनेति । इदमोऽशभावोऽधुनाप्रत्ययश्च निपात्यते । द्रव्यमिति । द्रोर्विकारो 'द्रोश्चे'ति यत्प्रत्ययः । 'ओर्गुण' इति गुणोऽत्र न प्राप्नोति । यस्येत्यादाविति । 'यस्ये'त्यादीनि कार्याण्यपेक्ष्य प्रकृतिभावो विधीयते । ओर्गुणस्तु तेभ्यः पूर्व इति प्रकृतिभावाभावः । श्रिये हित इति । 'प्राक्क्रीताच्छ' इति च्छः । तत्र 'यस्येति' लोपो न प्राप्नोतीतीयङः प्रसङ्गः । प्रादीनामिति । असिद्धत्वादेवैकाच्त्वाभावात्प्रकृतिभावोऽप्यत्र

उ०—इत्यनेन टिलोपेन भाव्यमिति भावः । तत्रेति । ऐजागमे कृते पुनःप्रसङ्गविज्ञानाट्टिलोप इति भावः । भाष्ये प्रतिषेधशब्देन प्रकृतिभावोऽभिसंहित इत्याह—प्रकृतिभाव इति । क्वचित्तु भाष्येऽपि तथैव पाठः । तत्र यस्येत्यादीत्यादिग्रहणं प्रकारार्थं, लोपत्वेन च सादृश्यमत एवाग्रे 'न चैतानि यस्येत्यादा'वित्युक्तं भाष्ये । 'एतानी'ति बहुवचनं तु प्रयोगभेदेन 'ओर्गुण' इत्यस्य भेदमाश्रित्य । 'यस्येति यस्य लोपप्राप्ति'रित्येतत् । 'यस्येती'त्येवमादिना यस्य लोपप्राप्तिरिति व्याख्येयम् । अत एव कनयति कनिष्ठ इत्यादा'वल्लोपोऽन' इति लोपो न । न च तत्रोच्चारणसामर्थ्यादल्लोपाभावः । एवमपि 'नस्तद्धिते' इत्यस्यापत्तेः । उच्चारणं तु सर्वादेशत्वसंपादनेन चरितार्थम् । 'इनण्यने'त्यादिसाहचर्याल्लोपविषय एव प्रकृतिभावः । एतेनानन्तरत्वाट्टेरित्यस्यैवायं बाधक इति निरस्तम् । षपूर्वेति सूत्रस्थभाष्यप्रामाण्येन 'अन्' इत्यस्याल्लोपबाधकताया आवश्यकत्वेन तत्साहचर्यादर्थानुरोधाच्चैतद्विषयेऽपि न्यायाप्रवृत्तेरेवोचितत्वात् । नैकाजिति वक्तव्ये प्रकृतिग्रहणाच्च । अत एवोपक्रमे शौवमित्यत्राविशेषेणेति पक्षे 'नस्तद्धिते' इति न प्राप्नोतीति कैयटोक्तिः संगच्छते । स्थान्याश्रय इति । शास्त्रासिद्धत्वाश्रयणादिति भावः । विप्रतिषेधे तावदिति ।

¶ द्वारादीनां च ७ । ३ । ४ * द्रोश्च ४ । ३ । १६१; ओर्गुणः ६ । ४ । १४६

† यस्येति च ६ । ४ । १४८ ‡ प्राक्क्रीताच्छः ५ । १ । १ यस्येति च ६ । ४ । १४८

§ सास्य देवता ४ । २ । २४; यस्येति च ६ । ४ । १४८

× प्रियस्थिर·········द्राघिवृन्दाः ६ । ४ । १५७

+ प्रशस्यस्य श्रः ५ । ३ । ६०

प्रकृत्यैकाजिष्ठेमेयःसु चेदेकाच उच्चारणसामर्थ्याद्वचनात्प्रकृतिभावः ॥ १ ॥

प्रकृत्यैकाजिष्ठेमेयःसु चेत्तन्न । किं कारणम् ? एकाच उच्चारणसामर्थ्यादन्तरेणापि वचनं प्रकृतिभावो भविष्यति ।

विन्मतोस्तु लुगर्थम् ॥ २ ॥

विन्मतोस्तु लुगर्थं प्रकृतिभावो वक्तव्यः* । स्रग्वितरः स्रजीयान् । स्रग्वितमः स्रजिष्ठः । स्रुग्वत्तरः स्रुचीयान् । स्रुग्वत्तमः स्रुचिष्ठः ।

ननु च विन्मतोर्लुक्टिलोपं† बाधिष्यते ॥ कथमन्यस्योच्यमानमन्यस्य बाधकं स्यात् ? असति खल्वपि संभवे बाधनं भवत्यस्ति च संभवो यदुभयं स्यात् । यथैव खल्वपि विन्मतोर्लुक्टिलोपं बाधत एवं नस्तद्धिते [ १४४ ] इत्येतमपि बाधेत ।

प्र०—नास्ति नापि टिलोपः । स्थान्याश्रयष्टिलोपः प्राप्नोतीति चेत्, विप्रतिषेधे तावदसिद्धत्वाभावस्य ज्ञापितत्वात्परत्वात्प्रादिषु कृतेषु तेषामसिद्धत्वेनाविद्यमानत्वान्न स्वाश्रयो नापि पराश्रयष्टिलोपः प्राप्नोति । श्रेयानिति । असिद्धाधिकाराद्बहिः आदिविधानादसिद्धत्वाभावः ।

एकाच उच्चारणसामर्थ्यादिति । अकार उच्चारणार्थो न प्रतिज्ञातोऽपि तु श्रवणार्थः ।

विन्मतोस्तु लुगर्थमिति । लुक्यर्थो यस्य तल्लुगर्थम्, लुकि कृते टिलोपाभावार्थमित्यर्थः । कथमन्यस्येति । विन्मतुबन्तस्य टिलोपं लुग्बाधतां तस्मिंस्तु कृते यष्टिलोपः प्राप्नोति तं कथं बाधते । न हि तस्मिन्प्राप्ते लुगारभ्यते इत्यर्थः । यथैवेति । लुको बाधकत्वाभ्युपगमेऽ-

उ०—अत्र विषये स्थानिनो निवर्तनात्स्थानिकार्याप्राप्तिरिति भावः । न स्वाश्रय इति । असिद्धत्वादिति भावः । पराश्रय इति । तस्याभावादिति भावः । अनयोर्यौगपद्यासंभवरूपो विरोधः । आदेशे प्रियशब्दस्येष्ठाद्यानन्तर्यविघातात्, टिलोपे च प्रियशब्दस्यादेशनिमित्तानन्तर्यविघातात् । स्थानिवद्भावस्त्वादेशप्रवृत्त्युत्तरं न तत्प्रवृत्तिसमये, कृते च टिलोपे प्रादीनां चारितार्थ्यमिति वार्तिकमतेनेदं बोध्यम् । वस्तुतस्तु पूर्वप्राप्तटिलोपं बाधित्वा परत्वात्प्राद्यादेशे कृते पुनस्तन्निमित्तटिलोपः सकृद्गतिन्यायेन न भवति । आदेशनिमित्तस्त्वसिद्धत्वादेव नेति भाष्याशयः ।

श्रवणार्थं इति । न च लोपेऽपि एग्‌न्ताच्छि 'अशश्र'दित्यादावकारश्रवणाय तदुच्चारणं चरितार्थम् । ईदृशेऽपि विषये 'द्विर्वचनेऽचीत्यादेः प्रवृत्त्यभावस्य तत्रैवोपपादितत्वात् । ननु प्रकृतिभावस्य विन्मतोर्लुक् न प्रयोजनमत आह—लुगर्थमिति । ननु विन्मतुबन्तस्य लुक्टिलोपौ प्राप्नुत इति किमुच्यतेऽन्यस्येतीत्यत आह—विन्मतुबन्तस्येति । भाष्ये दोषान्तरमाह—यथैव खल्वपीति । तदाशयमाह—

* विन्मतोर्लुक् ५ । ३ । ६५　　† टेः ६ । ४ । १५५

यतरो नौ ब्रह्मीयान् । ब्रह्मवत्तर इति ।

यत्तावदुच्यते कथमन्यस्योच्यमानमन्यस्य बाधकं स्यादितीदं तावदयं प्रष्टव्यः—यदि तर्हि विन्मतोर्लुग्नोच्येत किमिह स्यादिति । टिलोप इत्याह । टिलोपश्चेन्नाप्राप्ते टिलोपे विन्मतोर्लुगारभ्यते स बाधको भविष्यति । यदप्युच्यतेऽसति खल्वपि संभवे बाधनं भवत्यस्ति च संभवो यदुभयं स्यादिति सत्यपि संभवे बाधनं भवति । तद्यथा—दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्यायेति सत्यपि संभवे दधिदानस्य तक्रदानं निवर्तकं भवति । एवमिहापि सत्यपि संभवे विन्मतोर्लुक् टिलोपं बाधिष्यते । यदप्युच्यते यथैव खल्वपि विन्मतोर्लुक् टिलोपं बाधत एवं नस्तद्धित इत्येतमपि बाधेतेति न बाधते । किं कारणम् ? येन नाप्राप्ते तस्य बाधनम् । नाप्राप्ते टिलोपे विन्मतोर्लुगारभ्यते नस्तद्धित इत्येतस्मिन्पुनः प्राप्ते चाप्राप्ते च । अथवा पुरस्तादपवादा

प्र०—तिप्रसङ्ग इत्यर्थः । ब्रह्मीयानिति । अतिशयेन ब्रह्मवानितीयसुनि मतुप्लुकि च 'नस्तद्धिते' इति टिलोपः ।

नाप्राप्त इति । यद्यपि विषयभेदेन टिलोपो भिन्नस्तथाप्यनपेक्षितविषयभेदं टिलोपशास्त्रं येन नाप्राप्तिन्यायेन लुका बाध्यते तेन स्रजीयानित्येतस्मिन्नङ्गे सांप्रतिकी भाविनी च टिलोपप्राप्तिः पटिष्ठादौ सावकाशा लुका बाध्यते, तत्र विन्नन्तस्य नान्तत्वा'न्नस्तद्धिते' इत्ययमपि टिलोपो लुका बाध्यते । मतोस्तु लुका 'नस्तद्धिते' इति टिलोपो न बाध्यते । ननु किमुच्यते 'नस्तद्धिते' इत्यस्मिन् पुनःप्राप्ते चाप्राप्ते चेति, यावता मतोर्नान्तत्वाभावादप्राप्त एव 'नस्तद्धिते' इति टिलोपः । नैष दोषः । मतुप्प्रत्ययो नकारान्तादनकारान्ताच्च विधीयते । तत्र यद्यप्यकृते मतुब्लुकि 'नस्तद्धिते' इति टिलोपो न प्राप्नोति तथापि मतुब्लुकि कृते प्राप्नोति । 'एकदेशविकृतं चानन्यव'दिति यदेवाङ्गं ब्रह्मवदिति तदेव ब्रह्मन्निति । तदेवमभेदाश्रयेणेदमुक्तं 'प्राप्ते चाप्राप्ते चे'ति । अथवेति । ननु 'विन्मतोर्लु'गित्येतस्य 'नस्तद्धिते' इत्ययमेव योगोऽनन्तरः,

उ०—लुक इति । टिलोप इति । इष्यते इति शेषः । तथा चारण्यके 'तस्माद्वा ब्राह्मणं ब्रह्मिष्ठं कु'र्वीति । प्रयोगः ।

अनपेक्षितविषयभेदमिति । तन्न्यायस्य तथैव स्वरूपादिति भावः । अनयापि युक्त्या प्रेष्ठादौ टिलोपवारणं श्रेष्ठज्येष्ठादौ च । एवं भूयानित्यादौ भ्वादेशस्य गुणापवादत्वान्नादेशस्य गुणः । असिद्धत्वायुक्तिस्तु भाष्ये वार्तिकमतेनैकदेशिन इति बोध्यम् । स्रजीयानित्येतस्मिन्नङ्ग इति । अनेनाभिन्नविषयत्वं लुग्लोपयोर्दर्शयति—नस्तद्धित इत्ययमपीति । फलोदाहरणमस्य चिन्त्यम् । क्व तर्हि नान्तस्य टिलोपे येन नाप्राप्तिन्यायाभाव उक्तोऽत आह—मतोस्त्विति । ननु कृते मतुब्लुकि शब्दान्तरस्य टिलोपः प्राप्नोति न तु मत्वन्तस्येति कथं लुको 'नस्तद्धिते' इत्यस्मिन्प्राप्ते आरम्भोऽत आह—एकदेशेति । तदेवमभेदेति । नान्तमत्वन्तयोरभेदाश्रयेणेति भावः । नन्विति । 'विन्मतो'रिति लुक् पञ्चमाध्यायस्थः । अयंक्रमः ।

अनन्तरान्विधीन्बाधन्त इत्येवं विन्मतोर्लुक् टिलोपं बाधिष्यते, नस्तद्धित इत्येतं न बाधिष्यते ।

यदि तर्हि विन्मतोर्लुक् टिलोपं बाधते पयिष्ठ इति न सिध्यति, पयसिष्ठ इति प्राप्नोति । यथालक्षणमप्रयुक्ते ।

प्रकृत्याके राजन्यमनुष्ययुवानः ॥ ३ ॥

राजन्यमनुष्ययुवानोऽके प्रकृत्या भवन्तीति वक्तव्यम् । राजन्यकम्* मानुष्यकम्*

प्र०—'टे'रित्ययं तु व्यवहितः । तत्र केचिदाहुः—'पाठक्रमादर्थक्रमो बलीया'न्निति । 'टे'रित्येष योगः सर्वविषयस्य व्यापनादनन्तरो भवति । यद्येवं पूर्वमेवायमर्थ उक्तो 'येन नाप्राप्ते' इति किमर्थं पुनरुच्यते । पूर्वमुत्सर्गापवादन्याय उक्त इदानीं त्वर्थक्रमप्रतिपत्त्याश्रयेणोच्यते, येन हि सर्वो विषयो व्याप्तः स एव बाधितुं युक्तः । यस्तु विषयविशेषे प्रवर्तते तस्य बाधा न युक्ता । सामान्ये हि पूर्वं प्रतिपत्तिरुदेति पश्चाद्विशेषेषु । अन्ये तु न्यासभेदाश्रयेण व्याचक्षते—'टे'रित्यस्य पश्चा· 'न्नस्तद्धिते' इति पठितव्यम् ।

पयिष्ठ इति । 'पयस्विन् इष्ठ' इति स्थिते विनो लुकि कृतेऽसो लोपो न प्राप्नोति । यथालक्षणमिति । न भवति टिलोप इत्यर्थः । ततश्च रजस्विनमाचष्टे रजसयति । आयुष्मन्तमाचष्ट आयुषयतीति भवितव्यम् । राजन्यकमिति । समूहेऽर्थे 'गोत्रोक्षोष्ट्रे'ति वुञ् । 'आपत्यस्य च तद्धितेऽनाती'ति यलोपाभावार्थं प्रकृतिभावविधानं 'यस्येति' लोपे सत्यसति वा विशेषाभावान्न

उ०—बुद्ध्यारोहविषयः क्रमः । सर्वविषयव्यापनादिति । यद्बाधकं तस्य बहुषु बाध्येषु किं बाध्यमिति विशेषचिन्तायां येन तस्य सर्वोऽपि विषयो व्याप्तस्तद्बाधेन विनास्य प्रवृत्त्ययोगात्तत्रावश्यबाधनीये तेन चारितार्थ्यादन्यबाधने मानाभाव इत्ययं न्यायो'ऽथवे'त्यनेन दर्शित इत्यर्थः । अत्रार्थे पौनरुक्त्यं शङ्कते—यद्येवमिति । सर्वविषयव्यापनेन बाधकोपस्थितिकाले झटिति बुद्धिसंनिधानादनन्तरत्वमिति । अनेनापि न्यायेन तस्यैव बाध इति भाष्यार्थं इत्युत्तरम् । टेरित्यस्य पश्चादिति । इदं चिन्त्यम् । एवं न्यासे 'ओर्गुण' इत्यादौ 'तद्धित' इत्यस्य लाभे 'स्थूलदूरे'त्यादौ चेष्ठेमेयःस्वित्यस्य लाभे क्लेशात् । अत्र केचित्—इदं भाष्यं न सूत्रप्रत्याख्यानपरं किंतु वृत्त्याद्युक्तोदाहरणेष्वन्यथासिद्धिप्रतिपादनपरम् । अत एव कनिष्ठ इत्यादौ 'नस्तद्धिते' इति टिलोपो नेति बोध्यम् । केचित्तु कन इत्यदन्त आदेशः, सूत्रे शकन्ध्वादित्वात्पररूपमित्याहुः । तन्न । 'यस्ये'त्यादिलोपेऽवश्यं प्राप्तेऽस्यारम्भाद्विन्मतोर्लुङ्न्यायेन पुनस्तदनापत्तौ 'कनिष्ठ' इत्याद्यसिद्ध्यापत्तेः । एवं नेदसाधावपि हलन्तावेव । अकारस्तूच्चारणार्थः । परे तु किमुदाहरणमिति प्रश्ने परोक्तोदाहरणानामन्यथासिद्धिं प्रदर्श्योदाहरणान्तरानुक्तेरस्योदाहरणाभाव एव । विन्मतोर्लुगिव प्रादयः आदयः कनादयश्च टिलोपे नाप्राप्ते आरभ्यमाणास्तद्बाधका एव । कनिष्ठ इत्यादौ 'नस्तद्धिते' इति तु न । अनुच्चारणसामर्थ्यात् । सर्वादेशः 'क' इत्यादेशेनापि सिद्धः । 'टे'रिति लोपस्य तु येन

* गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद् वुञ् ४ । २ । ३९ ( आपत्यस्य च तद्धितेऽनाति ६ । ४ । १५१ )

यौवनिका† ॥ १६३ ॥

## न मपूर्वोऽपत्येऽवर्मणः ॥ ६ । ४ । १७० ॥

### मपूर्वात्प्रतिषेधे वा हितनाम्नः ॥ १ ॥

मपूर्वात्प्रतिषेधे वा हितनाम्न इति वक्तव्यम् । आरोहितो वै हैतनामः । आरोहितो वै हैतनामनः । समानो हैतनामः । समानो हैतनामन इति च ॥ १७० ॥

## ब्राह्मोऽजातौ ॥ ६ । ४ । १७१ ॥

अथ किमिदं ब्राह्मस्याजातावनो लोपार्थं वचनमाहोस्विन्नियमार्थम् । कथं च लोपार्थं स्यात्कथं वा नियमार्थम् ? यदि तावदपत्य इति* वर्तते ततो नियमार्थम् ।

प्र०—तदर्थः प्रकृतिभावः । यौवनिकेति । यूनो भाव इति मनोज्ञादित्वाद्वुञ् । तत्र 'नस्तद्धिते' इति टिलोपः प्राप्तः प्रकृतिभावान्न भवति ॥ १६३ ॥

न मपूर्वो । हैतनामन इति । हितनाम्नोऽपत्यमित्यण् । 'अ'न्निति प्रकृतिभावात्पक्षे टिलोपाभावः ॥ १७० ॥

ब्राह्मो० । ब्राह्मशब्दोऽपत्येऽनपत्ये चेष्यते—'ब्राह्मो नारदः', 'ब्राह्मो मुहूर्तः', 'ब्राह्मः स्थालीपाक' इति । जातौ त्वपत्ये ब्राह्मण इतीष्यते । अनपत्ये तु जातौ ब्राह्मी औषधिरिति टिलोप इष्यते । एतच्च यथाभिधानं न सिध्यतीति मत्वा पृच्छति—अथ किमिदमिति । यदि तावदिति ब्रह्मणोऽपत्यमित्यण् । 'अल्लोपोऽन' इत्यकारलोपः प्राप्तो 'न संयोगाद्वमन्ता'दिति प्रतिषिद्धः । 'नस्तद्धिते' इति टिलोपे प्राप्तेऽन्निति प्रकृतिभावः प्राप्तो 'न मपूर्वोऽपत्येऽवर्मण' इति प्रतिषिद्धस्ततष्टिलोपे प्राप्ते नियमार्थमिदमजातावेवापत्ये टिलोपो भवति ब्राह्मो नारद

उ०—नाप्राप्तिन्यायेन कनादेशेन बाधादप्रवृत्तिरित्याहुः । न भवतीति । वस्तुतो नास्त्येवेदृशः प्रयोग इति बोध्यम् । इति भवितव्यमिति । यद्यभिधानमस्तीति बोध्यम् । विशेषाभावादिति । असत्यपि 'यस्येति' लोपे पररूपेण रूपस्य सिद्धत्वादिति भावः ॥ १६३ ॥

न मपूर्वो० । पक्ष इति । प्रतिषेधाभावपक्ष इत्यर्थः ॥ १७० ॥

ब्राह्मोऽजातौ । ब्राह्मो नारद इति । क्रमेण 'तस्यापत्यं' 'तस्येदं' 'सास्य देवते'त्यण् । एतच्चेति । उक्तं रूपजातं विधिपक्षे नियमपक्षे च यथेष्टं न सिध्यतीति भावः । 'अपत्य' इत्यस्यानुवृत्तौ नियमार्थत्वमुपपादयति—ब्रह्मणोऽपत्यमिति । नियमपक्षे दोषं स्फोरयति—अनपत्ये त्विति । अनन्तरापत्ये जातित्वा-

† द्वन्द्वमनोज्ञादिभ्यश्च ५ । १ । १३३; ( नस्तद्धिते ६ । ४ । १४४ )
* न मपूर्वोऽपत्येऽवर्मणः ६ । ४ । १७०

अथ निवृत्तं ततो लोपार्थम् ॥ अत उत्तरं पठति—

ब्राह्मस्याजातौ लोपार्थं वचनम् ॥ १ ॥

ब्राह्मस्याजातौ लोपार्थं वचनं क्रियते । अपत्य इति निवृत्तम् ।

तत्राप्राप्तविधाने प्राप्तप्रतिषेधः ॥ २ ॥

तत्राप्राप्तस्य टिलोपस्य विधाने प्राप्तस्य† प्रतिषेधो वक्तव्यः । ब्राह्मणः ।

न वा पर्युदाससामर्थ्यात् ॥ ३ ॥

न वा वक्तव्यः । किं कारणम् ? पर्युदाससामर्थ्यात्पर्युदासोऽत्र भविष्यति ।

अस्त्यन्यत्पर्युदासे प्रयोजनम् । किम् ? या जातिरेव नापत्यम् । ब्राह्म्योषधिरिति ॥ न वा अत्रेष्यते । अनिष्टं च प्राप्नोतीष्टं च न सिध्यति ।

प्र०—इति । जातौ त्वपत्ये न भवति ब्राह्मण इति । एवमपत्ये सिध्यति व्यवस्था । अनपत्ये त्वन्निति प्रकृतिभावाद्ब्राह्मशब्दो न सिध्यति । अथ निवृत्तमिति । अपत्यग्रहणे निवृत्ते विधिनियमसंभवे विधिरेव ज्यायानित्यनपत्येऽन्निति प्रकृतिभावे प्राप्तेऽजातौ टिलोपार्थं निपातनं भवति । तत्र 'ब्राह्मो मुहूर्तः', 'ब्राह्मः स्थालीपाक' इति सिध्यति । 'ब्राह्मी औषधि'रिति तु न सिध्यति, अजाताविति प्रतिषेधात् । 'ब्राह्मणी औषधि'रिति प्राप्नोति । अपत्ये जातौ 'ब्राह्मण' इति न सिध्यति, 'न मपूर्वोऽपत्येऽवर्मण' इति प्रकृतिभावप्रतिषेधाट्टिलोपप्रसङ्गात् ।

न वेति । वक्ष्यमाणोऽभिप्रायः । इतरस्त्वेतमभिप्रायमबुद्ध्वाह—अस्त्यन्यदिति । ब्राह्मी औषधि'रित्यत्र कृतार्थः पर्युदासो 'ब्राह्मण' इत्यत्र पूर्वसूत्रविहितप्रकृतिभावप्रतिषेधप्राप्तं टिलोपं न निवर्तयेत् । न वा अत्रेष्यत इति । अजाताविति पर्युदासः । न चानिष्टार्थे शास्त्रप्रक्लृप्तिरिति पर्युदाससामर्थ्याद्ब्राह्मण इत्यत्र टिलोपो न भविष्यतीत्यर्थः । इतरस्तु लक्षणमुपालब्धुमाह—अनिष्टं च प्राप्नोतीति । 'ब्राह्मणी' औषधि'रिति प्राप्नोति, 'अजाता'विति पर्युदासात् ।

उ०—भावादजाताविति विशेषणमपत्यस्य युज्यते–तन्निवृत्तौ किमिदमपत्ये नियमार्थमुतानपत्ये विध्यर्थमिति [1]विशये विधिरेव युक्त इत्याह—अनपत्य इति । अत्र पक्षे प्राप्तस्य प्रतिषेधो वक्तव्य इति भाष्योक्तं दोषं स्फोरयितुं स्वयं दोषान्तरमप्याह—ब्राह्मीति वक्ष्यमाण इति । नात्रापत्य इत्यादिना वक्ष्यमाणं योगविभागं मनसिकृत्यैतदुक्तमित्यर्थः । अजाताविति पर्युदास इति । जातिं वर्जयित्वा ब्राह्म इति टिलोप इति सूत्रार्थः । तत्र मनुष्यजातिविशेषे ब्राह्मणशब्दप्रयोगस्येष्टत्वात्तत्रैव पर्युदासः फलतीति तात्पर्यम् । इष्टिमात्रमेतत् । न तु लक्षणेनायमर्थो लभ्यत इति । उत्तरभाष्यार्थमाह—इतरस्त्विति । ब्राह्मण इतीति ।

† न मपूर्वोऽपत्येऽवर्मणः; नस्तद्धिते ६ । ४ । १७०; १४४

१–संशये इत्यर्थः ।

एवं तर्ह्यनुवर्ततेऽपत्य इति, न त्वपत्य इत्यनेन निपातनमभिसंबध्यते—ब्राह्म इति निपात्यतेऽपत्येऽजाताविति। किं तर्हि? प्रतिषेधोऽभिसंबध्यते—ब्राह्म इति निपात्यतेऽपत्ये जातौ नेति ॥ १७१ ॥

## कार्मस्ताच्छील्ये ॥ ६ । ४ । १७२ ॥

किमर्थमिदमुच्यते न नस्तद्धिते [ १४४ ] इत्येव सिद्धम्? न सिध्यति। अनणीति* प्रकृतिभावः प्रसज्येत। अणीत्युच्यते णश्चायम्†।

एवं तर्हि सिद्धे सति यन्निपातनं करोति तज्ज्ञापयत्याचार्यस्ताच्छीलिके णेऽणकृतानि भवन्तीति। किमेतस्य ज्ञापने प्रयोजनम्? चौरी तापसीत्यणन्तादितीकारः सिद्धो भवति‡ ॥ १७२ ॥

---

प्र०—इष्टं च न सिध्यति 'ब्राह्मण' इति। एवं तर्हीति। योगविभागः क्रियत इति भावः। तत्र 'ब्राह्म' इत्यत्र सामर्थ्या'दपत्ये' इति न संबध्यते। अपत्ये टिलोपस्य सिद्धत्वात्। तेनानपत्ये सर्वत्र जातावजातौ च 'ब्राह्म' इति निपात्यते। अपत्येऽपि 'ब्राह्मो नारद' इत्यत्र परत्वाद्'ब्राह्म' इत्यनेनैव टिलोपो भवति। ततोऽजाताविति, तत्रापत्य इत्यनुवर्तते। तेनायमर्थो भवति—अपत्ये जातौ ब्राह्मणशब्दे टिलोपो न भवति। 'अजाता'विति प्रसज्यप्रतिषेधो भवतिना नञः संबन्धादिति सर्वेष्टसिद्धिः ॥ १७१ ॥

कार्मस्ताच्छील्ये। किमर्थमिति। कर्म शीलमस्य 'च्छत्रादिभ्यो ण' इति णे कृते सिद्धष्टिलोप इति भावः। ताच्छीलिक इति। एवं च 'च्छत्रादिभ्योऽ'णिति लाघवाय कर्तव्यम्, णवचने प्रयोजनाभावात्। 'प्रज्ञाश्रद्धे'ति 'ज्वलितिकसन्तेभ्य' इति 'तदस्यां प्रहरण'मिति णवचने ङीबभावः प्रयोजनम् ॥ १७२ ॥

---

उ०—पूर्वसूत्रेण प्रकृतिभावप्रतिषेधेन टिलोपप्राप्तेरिति भावः। अनेनैवेति। न तु 'नस्तद्धिते' इत्यनेनेति भावः। इदं वस्तुस्वरूपकथनमात्रम्। प्रसज्यप्रतिषेध इति। अन्यथापत्य इत्यनुवृत्तस्यानन्वयः स्यात्। अजातावपत्ये इत्यर्थे विधेयानिर्देशादिति भावः। तदुक्तं भाष्ये'ऽपत्ये जातौ ने'ति ॥ १७१ ॥

कार्मस्ता०। भाष्येऽणन्तादितीकार इति। 'अणो द्व्यच' इति फिञपि फलान्तरं बोध्यम्। अत एवोपक्रमभाष्ये'ऽणकृतानि भवन्ती'ति बहुवचनप्रयोग इत्याहुः। एवं चेति। ज्ञापके हि ज्ञापकसिद्धस्यासार्वत्रिकत्वात् 'छात्रा' इति सिध्यतीति चिन्त्यमिदमित्यन्ये। अन्यत्र णवचने प्रयोजनमस्तीत्याह—प्रज्ञेत्यादि ॥ १७२ ॥

---

* अन् ६ । ४ । १६७ † छत्रादिभ्योणः ४ । ४ । ६२

‡ छत्रादिभ्योणः ४ । ४ । ६२; टिड्ढाणञ्.........कञ्क्वरपः ४ । १ । १५

**दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवासिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि ॥§४।१७४॥**

अत्र भ्रौणहत्ये किं निपात्यते ? यकारादौ तद्धिते तत्वं निपात्यते ।

**भ्रौणहत्ये तत्वनिपातनानर्थक्यं सामान्येन कृतत्वात् ॥ १ ॥**

भ्रौणहत्येऽ तत्वनिपातमनर्थकम् । किं कारणम् ? सामान्येन कृतत्वात् । सामान्येनैवात्र तत्वं भविष्यति हनस्तोऽचिण्णलोः [ ७ । ३ । ३२ ] इति ।

**ज्ञापकं तु तद्धिते तत्वप्रतिषेधस्य ॥ २ ॥**

एवं तर्हि ज्ञापयत्याचार्यो न तद्धिते तत्वं भवतीति । किमेतस्य ज्ञापने प्रयोजनम् ? भ्रौणघ्नः वार्त्रघ्न इत्यत्र तत्वं न भवति ।

**ऐक्ष्वाकस्य स्वरभेदान्निपातनं पृथक्त्वेन ॥ ३ ॥**

ऐक्ष्वाकस्य* स्वरभेदान्निपातनं पृथक्त्वेन कर्तव्यम् । ऐक्ष्वाकः ऐक्ष्वाकः ।

**एकश्रुत्या निर्देशात्सिद्धम् ॥ ४ ॥**

---

प्र०—दाण्डि० । यकारादाविति । भ्रूणघ्नो भाव इति ब्राह्मणादित्वात्ष्यञ् ॥ ज्ञापकं त्विति । 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञान'मित्यनपेक्ष्य ज्ञापकमुक्तम् । तदपेक्षायां तत्वस्याप्रसङ्गात् । ननु टिलोपाभावार्थं निपातनं स्यादिति सति प्रयोजने ज्ञापकमनुपपन्नम् । नैष दोषः । उभयोरनित्ययोः परत्वाट्टिलोपं बाधित्वा तत्वं भविष्यति । अनेकप्रयोजनत्वाद्वा निपातनानाम् । अत एव कुत्वप्रतिषेधार्थमपि निपातनम् ।

ऐक्ष्वाक इति । इक्ष्वाकोरपत्यमिति 'जनपदशब्दा'दित्यञ् । उकारलोपो निपात्यते । ञित्वादाद्युदात्तत्वम् । इक्ष्वाकुषु जात इत्यणि प्राप्ते 'ओर्देशे ठ'ञिति ठञि प्राप्ते तं परत्वाद्बाधित्वा 'जनपदतदवध्योश्चावृद्धादपि बहुवचनविषया'दिति वुञि प्राप्ते 'कोपधा'दित्यण् । तत्रान्तोदात्तत्वम् ।

---

उ०—दाण्डिनायन० । भाष्ये—सामान्येनेति । ष्यञि परतो 'नस्तद्धिते' इति टिलोपं बाधित्वा परत्वात् 'हनस्त' इति तत्वं भविष्यतीति भावः । अनपेक्ष्येति । वस्तुतः स एवार्थोऽनेन ज्ञाप्यत इति शब्दान्तरेण भाष्य उक्तमिति बोध्यम् । तत्वस्य—तकारस्य । अत एवेति । अनेकप्रयोजनत्वादेवेत्यर्थः । भाष्ये—एकश्रुतिनिर्देशादिति । ननु सूत्रे द्वन्द्वसत्त्वेन समासान्तोदात्तत्वे तन्निमित्तशेषनिघातेन निर्देशा-

---

§ गुणवचनब्राह्मणादिभ्यः कर्मणि च ५ । १ । १२४

* जनपदशब्दात् क्षत्रियादञ् ४ । १ । १६८; ञ्नित्यादिर्नित्यम् ६ । १ । १९७; कोपधादण् ४ । २ । १३२; आद्युदात्तश्च ३ । १ । ३　　१—'एकश्रुतिनिर्देशात्' पा० । इदं भाष्यमित्यन्ये ।

एकश्रुतिः स्वरसर्वनाम, यथा नपुंसकं लिङ्गसर्वनाम ।

अथ मैत्रेये किं निपात्यते ?

मैत्रेये ढञि[1] यादिलोपनिपातनम् ॥ ५ ॥

मैत्रेये ढञि यादिलोपो निपात्यते ।

इदं मित्रयुशब्दस्य चतुर्ग्रहणं क्रियते । गृष्ट्यादिषु प्रत्ययविध्यर्थं पाठः क्रियते* । द्वितीयेऽध्याये यस्कादिषु लुगर्थं ग्रहणं क्रियते† । सप्तमेऽध्याय इयादेशार्थम्‡ । इदं चतुर्थं यादिलोपार्थम् । द्विर्ग्रहणं शक्यमकर्तुम् । बिदादिषु§ प्रत्ययविध्यर्थं पाठः कर्तव्यः । तत्र नैवार्थो लुका नापि यादिलोपेन¶ । इयादेशेनैव सिद्धम् ।

नैवं शक्यम् । इह हि मैत्रेयकः+ संघ इति संघाङ्कलक्षणेष्वञ्यञिञामण् [ ४ । ३ । १२७ ] इत्यण्प्रसज्येत ।

प्र०—तत्र भिन्नस्वरयोरेकस्मिन्निपात्यमानेऽपरस्यासंग्रहादुभयमपि निपात्यम् । एकश्रुतिनिर्देशादिति ।स्वरभेदप्रत्यस्तमयेन निपातनं सर्वस्वरलौकिकप्रयोगसंग्रहार्थमित्यर्थः। यथा नपुंसकमिति। सामान्यस्थितावाविर्भावतिरोभावस्थितिविशेषाणामन्तर्भावात् । मैत्रेय इति । मित्रयोरपत्यमिति 'गृष्ट्यादिभ्यश्चे'ति ढञ् । 'मित्रयु एय' इति स्थिते ओर्गुण' इति गुणापवादे 'ढे लोपोऽकद्र्वा' इति लोपे प्राप्ते 'केकयमित्र'य्विति यादेरियादेशे प्राप्ते लोपो निपात्यते। तल्लोपस्यासिद्धत्वाद्द 'यस्येति' लोपाभावा'दतो गुणे' इति पररूपमेकारः । द्वितीय इति । मित्रयव इति बहुषु लुगर्थः पाठः । सप्तम इति । ढञोऽन्यत्रेयादेशः—मित्रयोरिदं मैत्रेयमिति । मैत्रेयक इति । मित्रयूनां संघ इति 'गोत्रेऽलुगची'ति लुकि प्रतिषिद्धे ढञन्ताद्गोत्रचरणाद्वुञिति वुञ् । यदि तु 'संघाङ्के'त्यत्र

उ०—नाद्युदात्तस्य नाप्यन्तोदात्तस्य निर्देश इति शङ्कैवायुक्तेति चेन्न । तदीयविग्रहवाक्याभिप्रायेण शङ्कोत्तरयोः सत्वात् । एकश्रुतेः स्वरसर्वनामत्वं दर्शयति—स्वरभेदेति । प्रत्यस्तमयस्त्यागः । यथा 'तस्यापत्य'मित्यादावुपगुप्रभृतीन् विशेषानभेदेन सर्वनाम प्रतिपादयति तथैकश्रुतिरप्युदात्तादीन् विशेषानिति सर्वस्वरसंग्रहसिद्धिरित्यर्थः । नपुंसकस्य लिङ्गसामान्यत्वमाह—सामान्यस्थिताविति । परिणाम इत्यर्थः । आविर्भावतिरोभावप्रागवस्थात्र स्थितिविशेषः । ननु 'यस्येति' लोपाभावे 'वृद्धिरेची'ति स्यादत आह—अतो गुण इति । भाष्ये—नैवार्थो लुकेति । 'यञञोश्चे'त्येव सिद्धत्वादिति भावः । न मैत्रेयादिति । अणि निषिद्धे वुञ्

1—'ढञि' इति क्वचिन्न ।

* गृष्ट्यादिभ्यश्च ४ । १ । १३६

† यस्कादिभ्यो गोत्रे २ । ४ । ६३

‡ केकयमित्रयुप्रलयानां यादेरियः ७ । ३ । २

§ अनृष्यानन्तर्ये बिदादिभ्योऽञ् ४ । १ । १०४; यञञोश्च २ । ४ । ६४

¶ यस्कादिभ्यो गोत्रे २ । ४ । ६३; दाण्डिनायन······मैत्रेयहिरण्मयानि ६ । ४ । १७४

\+ गोत्रचरणाद्वुञ् ४ । ३ । १२६

हिरण्मये किं निपात्यते ?

हिरण्मये यलोपवचनम् ॥ ६ ॥

हिरण्मये यलोपो निपात्यते । हिरण्मयं कलशं बिभर्षि ।

अथ हिरण्यये किं निपात्यते* ?

हिरण्ययस्य छन्दसि मलोपवचनात्सिद्धम् ॥ ७ ॥

हिरण्यये छन्दसि मलोपो निपात्यते । हिरण्ययी नो नयतु । हिरण्ययाः पन्थान आसन् । हिरण्ययमासनम् ॥ १७४ ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठस्याध्यायस्य चतुर्थे पादे चतुर्थमाह्निकम् । पादश्च समाप्तः ।

॥ षष्ठोऽध्यायः समाप्तः ॥

---

प्र०—'न मैत्रेया'दित्युच्यते तदा त्रीणि ग्रहणानि स्युरितीह निपातनं न कर्तव्यं स्यादिष्टस्य सिद्धत्वात् ॥ १७४ ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे षष्ठस्याध्यायस्य चतुर्थे पादे चतुर्थमाह्निकम् । पादश्चतुर्थोऽध्यायश्च षष्ठः समाप्तः ।

---

उ०—सिद्ध एवेति भावः । तदा त्रीणीति । त्रिदादिष्वेकम्, इयादेशार्थमपरम् । अणूनिषेधार्थं तृतीयमित्यर्थः । नञा सहात्रापि न्यासे चत्वारि ग्रहणानीति पदलाघवाभावान्नोक्तमिदं भगवतेति सर्वेष्टसिद्धिः ॥ १७४ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते षष्ठस्याध्यायस्य चतुर्थे पादे चतुर्थमाह्निकम् । पादश्चाध्यायश्च समाप्तः ।

---

* आर्त्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि ६ । ४ । १७५

भाष्याब्धिः क्वातिगम्भीरः क्वाहं मन्दमतिस्ततः । सन्तीर्णो दुस्तरं यस्मादुडुपेनेव सागरम् ॥ १ ॥

गुरूणां कृपयैवैषा विमर्शाभिधटिप्पणी । समग्रे हि महाभाष्ये मयाकारि यथामति ॥ २ ॥

ब्रह्मशिवव्योमनेत्राब्दे आषाढस्य सिते दले । चतुर्दश्यां गुरौ वारे टिप्पणी पूर्णतां गता ॥ ३ ॥

[ आषाढशुक्ला १४ सं० २०२१ वि० । १ श्रावण १८८६ शक० । २३ जुलाई १९६४ ई० ]

अज्ञानाद्दृष्टिदोषाद्वा मुद्राकरकृतोऽपि । संदृश्येत क्वचिद्दोषः स संशोध्यो मनीषिभिः ॥ ४ ॥

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः । हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ॥ ५ ॥

राजस्थानप्रान्तान्तर्गत'चिड़ावा'तहसीलस्थित'घासीकाबास'ग्रामवास्तव्यस्य श्रीमतो ज्ञानारामस्य पुत्रेण वेदविमर्शादिपुस्तकलेखकेनानेकग्रन्थसम्पादकानुवादकेन, 'सुधारक' मासिकपत्र—सम्पादकेन, गुरुकुलझज्जरस्योपाचार्येण, सद्यःकृतोपयमनेन, वेद-व्याकरण-साहित्य-दर्शन-आयुर्वेदाचार्येण, वेदव्रतशास्त्रिणा विहितविमर्शटिप्पण्यां षष्ठोऽध्यायः पूर्तिमगात् ।

# गुरु-परम्परा

प्रज्ञाचक्षुर्महातेजा वेदवेदाङ्गकोविदः ।
यतीन्द्रो विरजानन्द आर्षविद्याप्रसारकः ॥ १ ॥

मथुरायामुवासासौ दयानन्दगुरुर्महान् ।
तस्यासन् शिष्यमालायां छात्ररत्नान्यनेकशः ॥ २ ॥

उदयप्रकाशो जज्ञे शिष्यमण्डलमण्डनः ।
शुद्धचेता महाविद्वान् ज्योतिर्विद्याविशारदः ॥ ३ ॥

उदयस्य विनेयोऽभूद् गङ्गादत्तो महाद्युतिः ।
शुद्धबोधाभिधो धीमान् व्याकरणारुणो यतिः ॥ ४ ॥

शुद्धबोधस्य विप्रस्य गुणवान् प्रतिभानवान् ।
अन्तेवासी ऋषेर्भक्तो राजेन्द्रोऽयं विराजते ॥ ५ ॥

वेदविद्यालयनाम्ना दिल्लीस्थयमुनातटे ।
आश्रमो निर्मितो येन वेदज्ञानप्रसारकः ॥ ६ ॥

राजेन्द्रस्य च विज्ञस्य विनेयौ भाग्यशालिनौ ।
भगवान्देवो वर्णीन्द्रो विश्वप्रियो बुधस्तथा ॥ ७ ॥

अनयोर्विज्ञयोस्तावन्नानाशास्त्रविचक्षणाः ।
सन्त्यस्मद्विधा बहवः शिष्या विद्याप्रसारकाः ॥ ८ ॥

येषाममोघयत्नेन ज्ञानज्योतिर्विवर्धते ।
प्रचलन्ति चानेकानि गुरुकुलानि भारते ॥ ९ ॥

मुख्यं गुरुकुलं तेषु झज्जरमस्ति साम्प्रतम् ।
आर्षपाठविधेः केन्द्रं विद्यातीर्थं मनोहरम् ॥ १० ॥

एषा यथाक्रमं दिष्टा गुरुपरम्परा शुभा ।
व्याकरणाद्याचार्येण वेदव्रतेन शास्त्रिणा ॥ ११ ॥

# व्याकरणमहाभाष्य-परिशिष्टम्

## पञ्चमषष्ठाध्यायस्थश्लोकवार्तिकसङ्ग्रहः

### * अथ पञ्चमोऽध्यायः *

**आर्हादगोपुच्छसंख्यापरिमाणाट्ठक् ॥ ५ । १ । १९ ॥**

१. ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः ।
आयामस्तु प्रमाणं स्यात् संख्या बाह्या तु सर्वतः ॥ १ ॥

२. भेदमात्रं ब्रवीत्येषा नैषा मानं कुतश्चन ॥

**प्रमाणे द्वयसज्दघ्नञ्मात्रचः ॥ ५ । २ । ३७ ॥**

३. प्रमाणं प्रत्ययार्थो न, तद्वति, अस्येति वर्तनात् ।
प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम ॥ १ ॥

४. प्रमाणे लो द्विगोर्नित्यं डट् स्तोमे शच्शनोर्डिनिः ।
प्रमाणपरिमाणाभ्यां संख्यायाश्चापि संशये ॥ २ ॥

**यत्तदेतेभ्यः परिमाणे वतुप् ॥ ५ । २ । ३९ ॥**

५. डावतावर्थवैशेष्यान्निर्देशः पृथगुच्यते ।
मात्राद्यप्रतिघाताय भावः सिद्धश्च डावतोः ॥

**तदस्मिन्नधिकमिति दशान्ताड्डः ॥ ५ । २ । ४५ ॥**

६. अधिके समानजाताविष्टं शतसहस्रयोः ।
यस्य संख्या तदाधिक्ये डः कर्तव्यो मतो मम ॥

**संख्याया गुणस्य निमाने मयट् ॥ ५ । २ । ४७ ॥**

७. ....................निमेये चापि दृश्यते ।

**तस्य पूरणे डट् ॥ ५ । २ । ४८ ॥**

८. प्रकृत्यर्थाद्बहिः सर्वा वृत्तिः प्रायेण लक्ष्यते ।
पूरणे स्यात् कथं वृत्तिर्वचनादिति लक्ष्यताम् ॥ १ ॥

९. तस्याः पूर्वा तु या संख्या तस्या भवतु तद्धितः ।
आदेशश्चोत्तरा संख्या तथा न्याय्या भविष्यति ॥ २ ॥

१०. न्यूने वा कृत्स्नशब्दोऽयं पूर्वस्यामुत्तरा यदि ।
सामर्थ्यं च तया तस्यास्तथा न्याय्या भविष्यति ॥ ३ ॥

११. अन्योऽन्यं वा व्यपाश्रित्य सर्वस्मिन् द्व्यादयो यदि ।
प्रवर्तन्ते तथा न्याय्या वृत्तिर्भवति पूरणे ॥ ४ ॥
१२. बहूनां वाचिका संख्या पूरणश्चैक इष्यते ।
अन्यत्वादुभयोर्न्याय्या वार्त्ती शाखा निदर्शनम् ॥ ५ ॥

तदस्यास्त्यस्मिन्निति मतुप् ॥ ५ । २ । ९४ ॥

१३. शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः ।
सरूपः प्रत्ययो नेष्टः सनन्तान्न सनिष्यते ॥ १ ॥
१४. भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥ २ ॥
१५ .................. सन्मात्रे चर्षिदर्शनात् ।

अत इनिठनौ ॥ ५ । २ । ११५ ॥

१६. एकाक्षरात् कृतो जातेः सप्तम्यां च न तौ स्मृतौ ।

व्रीह्यादिभ्यश्च ॥ ५ । २ । ११६ ॥

शिखादिभ्य इनिर्वाच्य इकन् यवखदादिषु ॥

अतिशायने तमबिष्ठनौ ॥ ५ । ३ । ५५ ॥

१७. शेत्यर्थः कारितार्थो वा निर्देशोऽयं समीक्षितः ।
शेत्यर्थे नास्ति वक्तव्यं कारितार्थं ब्रवीमि ते ॥ १ ॥
१८. गुणी वा गुणसंयोगाद् गुणो वा गुणिना यदि ।
अभिव्यज्येत संयोगात् कारितार्थो भविष्यति ॥ २ ॥
१९. पूर्वेण स्पर्धमानोऽयं मध्यमो लभते सितः ।
परस्मिन् न्यूनतामेति न च न्यूनः प्रवर्तते ॥ ३ ॥
२०. अपेक्ष्य मध्यमः पूर्वमाधिक्यं लभते सितः ।
परस्मिन् न्यूनतामेति यथाऽमात्यः स्थिते नृपे ॥ ४ ॥
२१. अस्तु वापि तरस्तस्मान्नापशब्दो भविष्यति ।
वाचकश्चेत् प्रयोक्तव्यो वाचकश्चेत् प्रयुज्यताम् ॥ ५ ॥

कुत्सिते ॥ ५ । ३ । ७४ ॥

२२. स्वार्थमभिधाय शब्दो निरपेक्षो द्रव्यमाह समवेतम् ।
समवेतस्य च वचने लिङ्गं वचनं विभक्तिं च ॥ १ ॥

२३. अभिधाय तान् विशेषानपेक्षमाणश्च कृत्स्नमात्मानम् ।
प्रियकुत्सनादिषु पुनः प्रवर्ततेऽसौ विभक्त्यन्तः ॥ २ ॥

ठाजादावूर्ध्वं द्वितीयादचः ॥ ५ । ३ । ८३ ॥

२४. चतुर्थादनजादौ च लोपः पूर्वपदस्य च ।
अप्रत्यये तथैवेष्ट उवर्णाल्ल इलस्य च ॥

पञ्चमोऽध्यायः समाप्तः ।

## * अथ षष्ठोऽध्यायः *

एकाचो द्वे प्रथमस्य ॥ ६ । १ । १ ॥

२५. तावेव सुप्तिङौ यौ ततः परौ सैव च प्रकृतिराद्या ।
आदिग्रहणं प्रकृतं समुदायपदत्वमेतेन ॥

बन्धुनि बहुव्रीहौ ॥ ६ । १ । १४ ॥

२६. मातज्मातृकमातृषु ष्यङ् प्रसार्यो विभाषया ।

इको यणचि ॥ ६ । १ । ७७ ॥

२७. जश्त्वं न सिद्धं यणमत्र पश्य यश्चापदान्तो हलचश्च पूर्वः ।
दीर्घस्य यण् ह्रस्व इति प्रवृत्तं सम्बन्धवृत्त्या गुणवृद्धिबाध्यः ।१।

२८. नित्ये च यः शाकलभाक् समासे तदर्थमेतद् भगवांश्चकार ।
सामर्थ्ययोगान्न हि किञ्चिदस्मिन् पश्यामि शास्त्रे यदनर्थकं स्यात् ।२।

आद् गुणः ॥ ६ । १ । ८७ ॥

२९. आदेकश्चेद्गुणः केन स्थानेऽन्तरतमो हि सः ।
ऐदौतौ नैचि तावुक्तावृकारो नोभयान्तरः ॥ १ ॥

३०. आकारो नर्ति धातौ स प्लुतश्च विषये स्मृतः ।
आन्तर्यात् त्रिचतुर्मात्रास्तपरत्वान्न ते स्मृताः ॥ २ ॥

तस्माच्छसो न पुंसि ॥ ६ । १ । १०३ ॥

३१. नत्वं पुंसां बहुत्वे चेत् पुंशब्दादिष्यते स्त्रियाम् ।
नपुंसके तथैवेष्टं स्त्रीशब्दाच्च प्रसज्यते ॥ १ ॥

३२. पुंशब्दादिति चेदिष्टं स्थूरापत्यं न सिध्यति ।
कुण्डिन्या अररकायाः पुंस्प्राधान्यात् प्रसिध्यति ॥ २ ॥

